हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़्पुस्तकमालायाः

५

व्याकरणविभागे (१) प्रथमपुष्पम् ।

॥ श्रीः ॥

# लघुशब्देन्दुशेखरः ।

महामहोपाध्याय नागोजीभट्टविरचितः ।

( अव्ययीभावान्तः )

महामहोपाध्यायपण्डितप्रवरभैरवमिश्रविरचितया
चन्द्रकलया टीकया समेतः ।

राजकीयप्रधानपाठशालाध्यापक व्याकरणाचार्य 'मोकाटे' इत्युपनामक-
गणपतिशास्त्रिणां शिष्येण 'पेण्डसे' इत्युपनामकेन विष्णुतनूजेन
नरहरिशर्मणा बृहद्भूमिकया टिप्पण्यादिभिश्च संपूरितो
जगन्नाथशास्त्रिनिर्मितटिप्पणीसहितश्च संशोधितः ।

( भागः १ )

प्रकाशकः—
जयकृष्णदास—हरिदासगुप्तः—
चौखम्बा संस्कृत सीरीज आफिस, विद्याविलास प्रेस,
गोपालमंदिर के उत्तरफाटक, बनारस सिटी ।
१९८३

श्रीगणेशाय नमः ॥

# लघुशब्देन्दुशेखरस्य

# भूमिका

मैथिलीमिलितो रामो लक्ष्मणादिसमन्वितः ।
राज्यसिंहानासीनः पातु मां जगदीश्वरः ॥

अथ परमकारुणिको लोकहितैषी सच्चिदानन्दघनः सर्वज्ञः सर्वशास्त्रयोनिः सत्यसङ्कल्पः सकलजगदाधारो भगवान् आधिदैविकाध्यात्मिकाधिभौतिकदुःखैर्दुःखितानां जनानामुद्धाराय धर्मादिस्थापनाय च कृतविविधावतारः सकलदुःखोपशमनाय यदृच्छया ब्रह्माणं सृष्ट्वा तस्मै कर्मोपासनब्रह्मैक्यज्ञानयाथार्थ्यप्रतिपादकान् आदर्शस्थानीयान् सकलविद्योपबृंहितान् पूर्वपूर्वयुगस्थान ऋग्यजुःसामाथर्वाख्यान् (शिक्षा-व्याकरणं-छन्दो-ज्योतिषं-निरुक्तं-कल्पश्चेति) षडङ्गकाँश्चतुरो वेदानुपदिदेश। "यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्वेताश्वतरोपनिषच्छ्रुतेः । ब्रह्मापि तदुपदेशक्रमेणैव जगत्सृष्ट्वा वेदोक्तान्येव नामानि तज्जात्यनुगुणानि निर्माय प्रजाभ्य उपदिदेश। तत्रेयं स्मृतिः—"सर्वेषां स तु नामानि कर्माणि च पृथक् पृथक् । वेदशब्देभ्य एवासौ पृथक् संस्थाश्च निर्ममे" इति । तत्र "मुखं व्याकरणं स्मृतम्" इति मुखस्थानीयं वेदाङ्गं व्याकरणं तावदधिकृत्य विचारयामः ।

तत्र व्याकरणं नाम—अर्थविशेषमाश्रित्य स्वरप्रकृतिप्रत्ययादीन् विशेषेण संस्कारविशेषेण, आ—समन्तात्—वैदिकां लौकिकांश्च शब्दान् करोति तथाभूतः पाणिन्यादिमहर्षिप्रणीतो ग्रन्थसमूहः ।

तस्य च व्याकरणशास्त्रप्रणेतारोऽष्ट नव वा आचार्या बभूवुः ।

केचित्तु—

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ॥
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥ १ ॥ इत्याहुः ।

अन्ये तु—

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् ॥
सारस्वतं चापिशलं शाकलं पाणिनीयकम् ॥ इत्याहुः ।

वाल्मीकीयरामायणेऽपि 'सोऽयं नव व्याकरणार्थवेत्ता' इति नवेति विशेषणदानेन व्याकरणस्य नवविधत्वं स्पष्टमुक्तम् । न चेदमप्रमाणम्, हनुमतः समये पाणिन्यादेरनुत्पत्तेरिति वाच्यम् । पूर्वपूर्वयुगीनपाणिन्यादिव्याकरणस्य सत्त्वान्न दोषः । "धाता यथा पूर्वमकल्पयत्" इत्यादिना साङ्गानां वेदानां नित्यताया उक्तत्वाच्च । अत एव "शताच्च ठन्यताव-

शते" इतिसूत्रे शाकल-काशकृत्स्नव्याकरणस्थं "शताच्च ठन्यतावग्रन्थे" इति सूत्रमुपन्यस्य तन्मते शत्यः शतिको वा गोसंघः साधुः, पाणिनिमते तु शतको गोसङ्घः इत्येव साधुरिति व्याकरणयोर्विरोधमुपन्यस्य "नियतकालाश्च स्मृतयो व्यवस्थाहेतवो भवन्ति" इत्युक्तं भाष्ये।

कृते तु मानवा धर्मास्त्रेतायां गौतमस्मृताः।
द्वापरे शंखलिखिताः कलौ पाराशरस्मृताः॥

इति युगभेदेन यथा धर्मप्रतिपाद्याचारव्यवस्थापका भिन्नास्तथा शब्दसाधुत्वासाधुत्वयोर्मुनित्रयमतेनैव साध्वसाधुप्रविभाग इत्यर्थिका "यथोत्तरं मुनीनां प्रामाण्यमिति" परिभाषोक्ता कैयटेन। अत एव "न बहुव्रीहौ" इति सूत्रस्थभाष्ये "त्वकत्पितृकः" इत्यस्यैव साधुत्वं, न तु त्वत्कपितृकः इत्यस्येत्युक्तं संगच्छते। महेश्वरोपदिष्टचतुर्दशसूत्रस्थलण्सूत्रघटकणकारेणोत्तरोत्तरमुनिप्रतिपादितोऽर्थः साधुरित्यर्थो ध्वनित इति व्यवस्थापकानामनेकेषां सत्त्वेऽपि वेदाङ्गभूतस्यास्य व्याकरणस्य न नित्यताहानिः।

तत्र ऐन्द्रं व्याकरणं श्रुत्याऽनुमीयते। तथा हि-"वाग्वै पराच्यव्याकृताऽवदत्, ते देवा इन्द्रमब्रुवन्, इमां नो वाचं व्याकुरु" "तामिन्द्रो मध्यतोऽपक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुच्यते' इति श्रुतिरिन्द्रस्य व्याकरणकर्तृत्वे नियामिका।

"चान्द्रास्तु आत्मोदर कुक्षिष्विति पेठुः" इति वचनाच्चान्द्रव्याकरणमपि प्रागासीदित्यनुमातुं शक्यते।

काशकृत्स्नं व्याकरणं भगवता भाष्यकारेण पतञ्जलिना "शताच्च ठन्यतौ" इत्यत्र नाम्ना निर्दिष्टम्।

अग्निपुराणेऽन्त्यभागे कौमारव्याकरणस्योल्लेखो दृश्यते।

सारस्वत-शाकटायन-कातन्त्राख्यानि व्याकरणानि चाधुना मुद्रितानि समुपलभ्यन्ते सर्वत्र।

आपिशल-शाकलयोश्च पाणिनिसूत्रेषु तत्र तत्र नाम्नोरनुवादात् तावपि व्याकरणकर्तारौ बभूवतुरित्यनुमीयते।

पाणिनीयं व्याकरणं च मुद्रितं सर्वत्रोपलभ्यत एव।

एवम् "अवङ् स्फोटायनस्य" इत्युक्तेः स्फोटायनं व्याकरणम्। कात्यायनेन "पौष्करसादेः" इत्युक्तत्वात् पौष्करसादिव्याकरणम्, "विन्दतिश्चान्द्रदौर्गादेः" इत्युक्तेर्दौर्गव्याकरणम्, "व्याघ्रभूत्यादयस्त्वेनम्" इत्युक्तत्वात् व्याघ्रभूतेर्व्याकरणमित्यादीनि व्याकरणानि आसन्नित्यनुमीयते।

एवमाशुबोधव्याकरणं जैनेन्द्रव्याकरणं मुग्धबोधव्याकरणं कलापव्याकरणमित्यादि संस्कृत-प्राकृतभाषायाश्चानेकानि व्याकरणानि सन्ति।

नन्वेवं सत्स्वेतेषु व्याकरणेषु अन्यतमस्य यस्य कस्य वा वेदाङ्गत्वमास्तामिति चेत्? न । इच्छया नियममन्तरा कस्याप्यर्थनिर्णयस्यायुक्तत्वात्। एकस्यैव शब्दस्य साधुत्वासाधुत्वयोरनौचित्याच्च। तस्मात्सार्वलौकिकवैदिकशब्दानां व्युत्पादकस्यास्य पाणिनीयव्याकरणस्यैव वेदाङ्गत्वाभ्युपगमः स्यात्। व्याकरणान्तरे तु सर्वेषां लौकिकालौकिकशब्दानां न व्युत्पादनम्। इदमेवाभिप्रेत्य "इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं यथाचार्या ऊचुः, ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः, तं खल्विममक्षरसमाम्नायमित्याचक्षते न भुक्त्वा न नक्तं प्रब्रूयात् ब्रह्मराशिः" इति ऋक्तन्त्रव्याकरणेऽस्य चतुर्दशसूत्रकदम्बकस्याम्नायत्वमुक्तं तन्मूलकत्वादस्यैव व्याकरणस्य वेदाङ्गत्वं युक्तम्। अत एवास्य ज्ञाने सर्ववेदपारायणजं पुण्यमित्युक्तं शेखरे। छान्दाग्योपनिषदि व्याकरणमुपक्रम्य "वेदानां वेदः" इत्युक्तम्। अत एव पराशरोपपुराणे—

> पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।
> सर्वोपकारकं ग्राह्यं कृत्स्नं, त्याज्यं न किञ्चन ॥ १ ॥

इत्युक्तं संगच्छते।

तस्यास्य व्याकरणस्य को विषयः, किं प्रयोजनम्, कश्चाधिकारी, कः सम्बन्धः, इति चेत्? अत्राहुः। लौकिका वैदिकाश्च शब्दा विषयः। तज्ज्ञानं प्रयोजनम्। तच्चाष्टादशप्रकारकं महाभाष्ये प्रपञ्चितम्। तथाहि—

१ वेदरक्षा। २ ऊहः। ३ आगमः। ४ लाघवम्। ५ असंदेहः। ६ म्लेच्छताऽसम्पत्तिः। ७ स्वरवर्णदोषराहित्यम्। ८ सार्थकवेदज्ञानम्। ९ सुशब्दापशब्दयोर्धर्माधर्मज्ञानम्। १० प्रत्यभिवादे नाम्नि प्लुतज्ञानम्। ११ विध्यादिवाक्यघटकविभक्तिपदार्थादिज्ञानम्। १२ पदाक्षरादिविभागज्ञानम्। १३ चतुर्विधपदजातकालव्यङ्ग्यव्यञ्जकविभक्तिस्थानभेदज्ञानम् (यद्वा-सकलपदजातज्ञानम्), १४ वाग्विस्तारसम्पत्तिः, १५ असाधुशब्देभ्यो विविच्य सुशब्दज्ञानम्, १६ अपशब्दप्रयोगजन्यप्रत्यवायपरिहारकप्रायश्चित्ताभावः। १७ नामकरणेषु विहितनामस्वरूपज्ञानम्, १८ सर्वविभक्त्यन्तानां सम्यगुच्चारणम्। एतेषां व्याख्यानं महाभाष्ये विस्तरेण निरूपितं, तच्च स्वल्पतो दर्शयामः। तद्यथा—

(१) भद्रं कर्णेभिरित्यादौ लोकविलक्षणस्य कर्णेभिरित्यस्य "बहुलं छन्दसि" इति सूत्रात् साधुत्वं व्याकरणेन बोधितम्।

(२) "अग्नये त्वा जुष्टं निर्वपामि" इत्यादौ सूर्योद्देश्यताकत्वविवक्षायां "सूर्याय त्वा जुष्टं निर्वपामि" इत्याद्यूहो व्याकरणेन सिध्यति। इति च जैमिनीये शास्त्रेऽपि प्रसिद्धम्।

(३) "विश्वेदेवासः" इत्यादौ "आज्जसेरसुक्" इत्यसुगागम इत्यादिकं व्याकरणेन सिध्यति।

(४) ब्राह्मणस्याध्यापनं धर्मः। तच्चाध्यापनं वैदुष्यायत्तम्। तच्च शब्दार्थादिषु साध्वसाधुत्वप्रतियोगिकभेदज्ञानाधीनम्। तच्च शब्दादीनां प्रतिपदपाठादिना दुःशकम्। शब्दादीनामानन्त्यात्। तस्मादुत्सर्गापवादाद्यनुगमकलक्षणेनैव तज्ज्ञानं साध्यम्। तेन लाघवमपि। अत एव महाभाष्ये "बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिवेदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, नान्तं जगाम। इन्द्रश्चाध्येता, बृहस्पतिश्च वक्ता, दिव्यं वर्षसहस्रं चाध्ययनस्य कालः; न चान्तं जगाम" इत्युक्तम्। शब्दपारायणम् योगरूढ्या तदाख्यशास्त्रविशेष इति कैयटः। एवञ्च प्रतिपदपाठस्य दुःशकत्वप्रतिपादकोऽयमर्थवादः।

(५) "स्थूलपृषतीमनड्वाहीमालभेत" "इन्द्रशत्रुर्वर्धस्व" इत्यादौ बहुव्रीहिस्तत्पुरुषो वेति सन्देहे पूर्वपदप्रकृतिस्वरेण बहुव्रीहिरिति तु व्याकरणेन सिध्यति। इदमुदाहरणं जैमिनीये तृतीयाध्याये विस्तरेण प्रपञ्चितम्। अत्र तैत्तिरीयसंहितास्थाऽऽख्यायिका चेत्थम्—"पुरा किल त्वष्टुर्ब्रह्मणो विश्वरूपे पुत्रे इन्द्रेण निहिते तद्वधात् कुपितेन त्वष्ट्राऽऽरब्धे वीन्द्रे सोमेऽनपहूतेनैवेन्द्रेण पीतस्य सोमस्यावशेषं दृष्ट्वा क्रुद्धस्त्वष्टेन्द्रहन्तृवृत्राख्यपुत्रोत्पादनायाभिचारकं यियक्षमाण आहवनीयमुपप्रावर्तयत् स्वाहेन्द्रशत्रुर्वर्धस्व" इति। ततो वृत्र उदभूदिति श्रूयते। तदेतच्छ्रुत्वा भीत इन्द्रो ब्रह्मलोकं गत्वा सरस्वतीं तुष्टाव। ततोऽनुकम्पया सरस्वती त्वष्टुर्मुखादन्तोदात्ते इन्द्रशब्दे प्रयोक्तव्ये तद्वैपरीत्येन पूर्वपदप्रकृतिस्वरवदिन्द्रः शातयिता यस्येत्यर्थकमिन्द्रशत्रुपदमेवोच्चारयामास। ततश्चोत्पन्नो वृत्र इन्द्रेण हत इति।

(६) "नानृतं वदेत्" इतिश्रुत्या, "विहितस्याननुष्ठानात् निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" इति स्मृत्या चापशब्दोच्चारणे शास्त्रातिक्रमात् प्रत्यवीयात्। ततः सुशब्दोच्चारणेन प्रत्यवायाविषयतासम्पत्तिर्व्याकरणेन सिध्यति। अत्र विनिगमनाविरहादर्थानृतमिव शब्दानृतमपि अनृतपदेन गृह्यते। अत एव हेरयो हेशब्दं हेरय इति च प्रयोक्तव्ये हेलयो हेलय इति हे३ इति प्लुतं विहाय केवलं रेफे विहाय लकारमेव वा कुर्वन्तः पराबभूवुः। तस्मात् "न म्लेच्छितवै नापभाषितवै म्लेच्छोह वा एष यदपशब्दः" इत्युक्तं भाष्ये।

(७) "शब्दो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्"। इत्युक्तरीत्यैहिकदुःखपरिहारोऽपि फलमनेन ज्ञायते।

(८) "स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्। योऽर्थवित् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा"॥ इति। "यदधीतमविज्ञातं निगदेनैव शब्द्यते। अनग्नाविव शुष्केधो न

तज्ज्वलति कर्हिचित्" "अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः" इति च भाष्यादावुक्तरीत्याऽर्थज्ञानमन्तरा वेदानुपूर्वीज्ञानस्य निरर्थकत्वोक्तेरर्थज्ञानमावश्यकम्। तच्च व्याकरणाध्येतुः प्रकृतिप्रत्ययार्थज्ञानेन सुसाध्यं नान्यस्य। अत एव "वेदार्थज्ञो जपं जप्त्वा तथैवाध्ययनं द्विजः। कुर्वन् स्वर्गमवाप्नोति नरकं तु विपर्यये" इतिव्यासदेवैरुक्तं संगच्छते।

(९) एकस्यापशब्दस्य भूयांसोऽपशब्दाः। संस्कृततदतिरिक्तभाषाशब्दा इति यावत् तत्प्रयोगेण दुष्यति। एकस्य सुशब्दस्य प्रयोगे तु न तथा दुष्यति। अनन्तफलमाप्नोति तद्दोषपरिहारो व्याकरणेनैव सिद्ध्यत्यनन्तफलप्राप्तिश्च। तदेतदुच्यते "यस्तु प्रयुंक्ते कुशलो विशेषे शब्दान्यथावत् व्यवहारकाले। सोऽनन्तमाप्नोति जयं परत्र वाग्योगवित् दुष्यति चापशब्दैः" इति।

(१०) 'प्रत्यभिवादे गुर्वादिभिः स्त्रीभिन्नैः प्लुतः कार्यः' इति विधिरस्ति सच व्याकरणज्ञानाधीनः।

(११) "प्रयाजाः सविभक्तिकाः कार्याः" इति विधिवाक्यानुसारेण तत्र वाक्येषु तत्तद्विभक्त्यन्तघटिततयोच्चारणं व्याकरणज्ञानेनैव सिद्ध्यति।

(१२) साचकव्यञ्जनरूपाक्षरज्ञानं पदज्ञानं वाक्यज्ञानं च व्याकरणज्ञानाधीनम्।

(१३) यत्र नामाख्यातोपसर्गनिपातरूपचतुर्विधपदज्ञानं, भूतभविष्यद्वर्तमानतदवान्तराद्यतनानद्यतनकालज्ञानं, व्यङ्ग्यव्यञ्जकशब्दज्ञानं सप्तविभक्तिज्ञानं तत्तद्वर्णिनामुरःकण्ठशिरोरूपस्थानत्रयज्ञानं तत्र मनुष्ये शब्दः प्रविश्य तथा प्रकाशमापेदे इति ज्ञानं व्याकरणज्ञानाधीनम्। तत्रेयं श्रुतिः—"चत्वारिवाग् परिमिता पदानि" इत्यादि। अथ वा "परा पश्यन्ती मध्यमा वैखरी" इति चतस्रो वाचः। तत्र तिस्रो गुहायां मूलाधारस्वाधिष्ठानमणिपूरकाख्येषु स्थानेषु क्रमेण सन्ति। तुरीयां वैखरीं वाचं मनुष्या मुखेनोच्चारयन्तीत्यर्थः। एवञ्च वर्णानामुत्पत्तिर्वृद्ध्यादिक्रमो व्याकरणाधीनः।

(१४) बहूनामपि समानं पृषोदरपाणिपादानां वेदवेदाङ्गादिकमधीयमानानां स्वभ्यस्ताध्ययनोऽपि सूक्ष्मबुद्धिरपि कश्चित् पदशः प्रकृतिप्रत्ययविभागेन विगृह्यार्थेनैनां न पश्यति न जानाति वाचम्। अर्थपरिज्ञानमेव हि वाचां फलम्। एकः श्रृण्वन्नपि न श्रृणोत्येनाम्। य एव हि सम्यगर्थं जानाति स एवैनां वाचं जानाति श्रृणोति च। तत्रेयं श्रुतिः—"उत त्वः पश्यन्न ददर्श वाचमुत त्वः श्रृण्वन् न श्रृणोत्येनाम्। उतो त्वस्मै तन्वां ३ विसस्रे जायेव पत्य उशती सुवासाः"। इति। अर्थो हि वाचः शरीरम्, प्रातिपदिकाद्धातोश्चार्थादौ प्रत्ययानां विधानात्। तच्च ज्ञानं व्याकरणाधीनम्।

(१५) सुशब्दापशब्दसमूहात् परिशोध्यापशब्दान् विहायैव सुशब्द-

सम्पत्सम्पादनं व्याकरणज्ञानाधीनम् । तदाह-श्रुतिः—"सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत । अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि" इति ।

( १६ ) आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्ती स्यात् । तदनिष्टपरिहारश्च व्याकरणज्ञानाधीनः ।

( १७ ) दशम्युत्तरकालं जातस्य पुत्रस्य नामविदध्याद्घोषवदाद्यन्तरन्तःस्थमवृद्धं तत्सम्बन्धि त्रिपुरुषान्यतमाभिधायि, शत्रोर्मनुष्यस्य वा यन्नाम न भवति, किन्तु देवतादेस्तथाभूतं द्व्यक्षरं चतुरक्षरं वा कृदन्तं नाम कार्यम् । न तद्धितान्तमिति विधिविहितरीत्या नामकरणज्ञानं व्याकरणज्ञानाधीनम् ।

( १८ ) यो व्याकरणज्ञः स शब्दान् यथेच्छं विनियोक्तुं शक्नोति, नान्य इति । तदेतदपि व्याकरणज्ञानाधीनमिति च महाभाष्ये स्पष्टम् ।

अपि च लौकिकवैदिकशब्दान् विना शक्तिग्रहात् बालको न व्यवहरेत् । व्यवहारश्च—"अयं शब्द इममर्थमवगमयति" "अस्य वा शब्दस्यास्मिन्नर्थेऽभिधाशक्तिः" इत्याकारकज्ञानायत्त एव । तज्ज्ञानं च व्याकरणाधीनम् तदुक्तम्—"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यात् व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः" इति सुगममपि प्रयोजनं सम्भवति ।

तज्जिज्ञासुरधीतकाव्यकोशादिद्विजातिरधिकारी । प्रतिपाद्यप्रतिपादकभावसम्बन्धश्च प्रसिद्ध एव ॥

के ते पाणिन्यादयः ? के च तेषां ग्रन्थाः ? कुत्रत्याश्चैते इत्येवं संशये किञ्चित् विचारयामः । आसीत् किल पणिनामा कश्चिन्महर्षिः । अवाप स पाणिनं नाम कुमारम् । स पाणिनः दाक्षीं नाम्नीं कन्यकामुदूह्य तस्यां पाणिनिनामानं तनूजमजनयत् । अतिक्रान्तबाल्यो पाणिनिः कृतमौञ्जीको विद्याग्रहणाय पुण्यस्थलमुपवसन्तमुपवर्षनामानं पण्डितवरिष्ठं विद्यागरिष्ठमुपजगाम । तत्रास्य सहपाठिनौ ब्रह्मचारिणौ वररुचिव्याडिनामानावास्ताम् । कदाचित् समये विवदित्सु तेषु पराजितः पाणिनिः पराजयजन्यनिर्वेदस्य परां काष्ठां जिगमिषुः व्याकरणविद्यासाम्राज्यलाभाय सर्वविद्याधीशमीशानं तपसा समाराद्धुं निश्चित्य प्रयागक्षेत्रं गत्वाऽक्षयवटतले तीव्रतरं तपश्चक्रे । तस्मिन्नेव काले सनकादिसिद्धा अपि ब्रह्मज्ञानावाप्तये नातिदूरे चाश्रमे तेपुः । चिरात् कदाचित् कठोरतरतत्तपश्चर्यापरितुष्टस्तत्तदभीष्टान् वरान् प्रादित्सुर्भगवान् नटराजराजो नाट्यतरङ्गतलमधिष्ठाय नृत्यं, नादयामास नवपञ्चवारं ढक्काम् । स नादः श्रवणपथेन सनकादिसिद्धैर्यथा स्वाभीष्टफलप्रापकवरदानामृतत्वेन परिपीतस्तथा पाणिनिनापि स्वेन करिष्यमाणाष्टाध्याय्यात्मकव्याकरणग्रन्थ-

विशेषस्योपयोगिनं योग्यं वरं मत्वाऽङ्गीकृतः 'अइउण्' इत्याद्यो 'हल्' इत्यन्तश्चतुर्दशसूत्रकदम्बरूपः। शुश्रुवाँश्च "स्वाभीष्टं लभस्व" इति। एतच्च नंदिकेश्वरकृतकाशिकायां स्पष्टम्—"नृत्तावसाने नटराजराजो:" इत्यादिना। पाणिनिरपि हृष्टान्तःकरणः प्रातः सुस्नातो दर्भपाणिः कृतमहेश्वरस्मरणः "वृद्धिरादैच्" इत्याद्यम् "अअ" इत्यन्तमष्टाध्यायात्मकं ग्रन्थं जग्रन्थे। सगणामष्टाध्यायीं विरचय्याध्यापनादिना तां प्रचारयन् कालक्रमेण सर्वत्र प्रसारयामास। कुत्रत्योऽयं निवासीति न ज्ञायते नाप्यनुमीयते सूत्रविशेषेण, तत्कृतान्यग्रन्थैर्वा। पाणिनिकृता ग्रन्थाश्च—एकादशगणाष्टाध्यायी, धातुपाठः, यजुर्वेदस्य प्रातिशाख्यम्, दशदण्डात्मिका शिक्षा; जाम्बवतीपरिणयाख्यं काव्यं च।

ततो गुरुनिवासस्थानं समागत्य स्वकृतं व्याकरणशास्त्रं स्वगुरुभ्यः उपवर्षाचार्येभ्यः श्रावयामास। तत्र कौशाम्बिनगरनिवासिनः सोमदेवशर्मणो वसुदत्तायामुत्पन्नस्तनूजोऽभ्यस्तसकलशास्त्रः कात्यायनस्तदुपश्रुत्य चित्रितहृदयोऽसूयामाश्रित्येशानानुग्रहेण तादृशविचित्रग्रन्थरचनापर्युत्सुकः स्वयमपि कश्चिदाश्रमङ्गत्वा तपसा परमेश्वरं समाराधयामास। ततस्तदनुग्रहेण वार्तिकाख्यं पाणिन्युक्तार्थपरिपूरकं दुरुक्तपुनरुक्ताद्यर्थनिरासकं च ग्रन्थमकरोत्।

तमुपश्रुत्य पाणिनिः स्वव्याकरणन्यूनताप्रदर्शकवार्तिकग्रन्थनिर्मितिममृष्यन् कात्यायनमहर्षेराश्रममाजगाम। आगत्य च तमर्घ्यपात्रेण प्रत्युद्गच्छन्तं कात्यायनमविगणय्य "यतो महेश्वरानुभूतेन मया कृते शास्त्रेऽनुक्तदुरुक्तपुनरुक्तादिदुश्चिन्ताकुलेन त्वया वार्तिकानि कृतानि तेनापराधेन त्वमचिरात्पतिष्यसि" इति शशाप। कात्यायनोऽपि "महादेवप्रसादपरिणामरूपमिमं ग्रन्थमजानन् यतो मह्यं शप्तवान् अतस्त्वमपि झटित्येव पञ्चत्वं गमिष्यसि" इत्युक्तवान्। ततस्तस्यामेवागामिन्यां त्रयोदश्यां तिथौ पाणिनिस्तत्रैवारण्ये सिंहेन व्यापादितः कैलासं जगाम। तदुक्तं विष्णुमित्रेण—

सिंहो व्याकरणस्य कर्तुरहरत् प्राणान् प्रियान् पाणिनेः॥ इति।

कात्यायनोऽपि तस्मिन्नेव काले पञ्चत्वमगमत्। तत आरभ्य सवार्तिकं पाणिनिव्याकरणं पाणिनिशिष्येण व्याघ्रभूतिना कात्यायनशिष्येण श्वोभूतिना चाध्यापनद्वारा प्रकटितं जगद्विख्यातं बभूव।

ततो महता कालेन कलिकठोरकुटिले जगतीतले वेदवेदाङ्गाध्ययनपराङ्मुखे ब्राह्मणवृन्दे प्राक्तनं सुगममपि व्याकरणसूत्रजालं दुर्गमतामवाप। परमदयालुना विष्णुना व्याकरणोद्धारायाऽऽज्ञप्तः सहस्रमुखः शेषोऽशेषांशेनावतरितुं स्वयोग्यं स्थानमन्विष्यन् गोनर्ददेशान्तर्गते आश्रमे प्राज्ञपुत्रार्थं चिरात् सवितरं प्रार्थयन्तीं गोणिकानाम्नीं काञ्चित् तपस्विनीं सौशील्यादिगुणयुक्तां तां स्वमातरं परिकल्प्य तस्याः सूर्यार्घ्यदानसमये

सजलेऽञ्जलौ प्राविशत्। ततः सा यदा भानवेऽर्घ्यमुपनिन्ये, तत्क्षणे एव धृततापसाकृतिः सोऽनन्तो जलेन सह भूमौ न्यपतत्। दृष्ट्वा च तं नवार्कमिव दक्षिणं भयात् "कोर्भवान्" इति पप्रच्छ। सोऽपि चातुर्येण "सर्पोऽहम्" इति प्रत्युवाच। तथा तेन वाक्येन चित्रितहृदयया तया सर्पोऽहमिति वाच्ये रेफरहितोच्चारणे किं कारणमित्याशयेन "क्व गतो रेफः" इति पृष्टः त्वयापहृत इति प्रत्यब्रवीत्, इति केचित्।

शेखरे तु पाणिनिनाऽन्येन वा केनचिन्मुनिना दीयमानार्घ्यसमये इदं वृत्तं समजनि, इत्युक्तम्।

ततः कियता कालेन पाणिनिवाक्यग्रन्थस्य महभाष्यनिर्मित्यै धृतावतारो लोकहितैषी भगवान् पतञ्जलिः प्रागुक्तां तादृशीं व्याकरणशास्त्रस्यातिजीर्णामवस्थामसहमानः "यद्विस्मृतमदृष्टं वा सूत्रकारेण तत्स्फुटम्। वाक्यकारो ब्रवीत्येव तेनादृष्टं च भाष्यकृत्" इत्युक्तलक्षणलक्षितं महाभाष्यं चकार।

ततः कियता कालेन विदुषा भर्तृहरिणा व्याकरणन्यायमिश्रितपदावलीमध्यगतार्थप्रतिपादनसाधकं वाक्यपदीयमपि प्राणायि। जैयटात्मजकैयटेनापि हरिकारिकारूपां नावमवलम्ब्य भाष्याब्धिमुन्मन्थयितुं प्रदीपाख्या सुव्याख्या कृता। परन्तु नैतावतापि करालकलिकालफुत्कृतिविक्षिप्तधियां व्याकरणतन्त्रे धीषणासमुद्रेक इति वामन—जयादित्याभ्यां सरलगत्या सूत्रार्थतदुदाहरणप्रकाशिका काशिकापि प्रकाशिता। माधवाचार्यैर्मन्त्रिवर्यैरपि धातुवृत्तिर्विरचिता विद्यार्थिनामानन्दाय। हरदत्तादिभिः पण्डितवर्यैः काशिकार्थप्रकाशिकापदमञ्जर्यादयो विस्तृताष्टीका अपि विरचिताः। परं चैतस्यामपि काशिकायां नैतादृशं प्रकरणसौष्ठवं येन प्रवर्तमानो मानवोऽनयासेन झटिति व्युत्पत्तिमनुविन्देत्। एकस्यापि शब्दस्य व्याकृतिमार्गमार्गणेऽनेकस्थलावलोडनापेक्षया नितान्तं गौरवावहा च। तेन सूत्रोदाहरणमात्रप्रतिपादिका नेयमपि निरतिशयं लोकोपकारिणीत्यवगत्य सकलन्यूनतानिरासबद्धपरिकरेण मनीषिणा श्रीरामचन्द्रेण व्याकरणार्वपारगमनसेतुरूपः प्रक्रियाकौमुदीग्रन्थोऽपि संजग्रन्थे। तस्य च शेषकृष्णाचार्यः प्रक्रियाप्रकाशनाम्नीं टीकां व्यरचयत्। अव्याख्याताखिलसूत्रत्पदस्य ग्रन्थस्य नोपकारभूयस्त्वमुपकल्प्य एतद्ग्रन्थगतामेव च प्रणालिमवलम्ब्य शेषकृष्णशिष्येण सुधिया भट्टोजीदीक्षितेन भाष्यार्णवं प्रमथ्य सिद्धान्तकौमुदी समुल्लासिता, या सांप्रतमखिलायामिलायां कौमुदीवाज्ञानतमःप्रसारमपसारयन्ती प्रसरन्ती रात्रिन्दिवं विद्वज्जनमनःकुमुदमोदिनी मोदतेतराम्।

भट्टोजीदीक्षितः दाक्षिणात्यदेशनिवासी इति तादृशतद्देशस्थ 'जी' इत्यन्तनामप्रणाड्याऽनुमीयते। ऋग्वेदस्याश्वलायनसूत्रशाकलशाखा-

ध्यायी ब्राह्मण इति चेतिहासप्रसिद्धम्। अनेनापि पण्डितवरेणानेके ग्रन्था विरचिताः। तत्पुत्रो भानुदीक्षितेत्यपरनामा वीरेश्वरशास्त्री रामाश्रम्या अमरकोशस्य व्याख्यायाः कर्ता बभूव। तस्य च हरिदीक्षितः।

एतेषां विद्यायोनिसम्बन्धतो वर्धितवंशवृक्षश्चेत्थम्।




प्राचां खण्डनाय कौमुदीग्रन्थस्याक्षेपदूरीकरणाय च प्रौढमनोरमा भट्टोजीक्षितेन स्वयं विरचिता। तदुक्तदोषान् प्रदर्शयितुं कुचमर्दिनीं नाम्नीं टीकां विरचितवान् पण्डितराजो जगन्नाथः। पण्डितराजमतमुक्तानुक्तदुरुक्तचिन्तनेन खण्डयन् हरिदीक्षितः शब्दरत्नेन तां भूषयामास। ततो हरिदीक्षितशिष्येण शिवभट्टसुतेन नागोजीभट्टेन शब्दरत्नोक्तन्यूनतापरिहाराय स्वमतप्रदर्शनाय च कौमुद्या व्याख्यानभूतो लघुशब्देन्दुशेखरः प्राणायि।

व्याकरणशास्त्रे सन्त्येव बहवो निबन्धग्रन्थाः। परन्तु लघुशब्देन्दुशेखरसदृशो विदुषामन्तःकरणसमुल्लासक एकोऽपि नास्तीति सकलविद्वज्जनविश्रुतमेव। तथाचानेन धीमता नागेशभट्टेन लघुशब्देन्दुशेखरे प्राचां काशिकाकारादीनां नूतनानां भट्टोजीदीक्षितानां मतं तत्र तत्र सूत्रविशेषे सुस्पष्टं व्याख्याय तत्र भाष्यस्य पौर्वापर्यालोचनेनोक्तयुक्तीनां युक्तायुक्तत्वं च विचार्य प्राचीनैर्दर्शितयुक्तीनामयुक्तत्वञ्च प्रदर्श्य भाष्योक्तगूढार्थं सम्प्रकाश्य प्राक्केनापि न प्रकटितं भाष्याविरुद्धं स्वतन्त्रं स्वमतं परेतु इत्यादिना प्रतिपादितम्।

अनेन पातञ्जलमहाभाष्यं समुन्मथ्य ततःसकलकलापूर्णमिन्दुमिवैनं लघुशब्देन्दुशेखरं समुद्धृत्य लोकमोदिनी कौमुदी प्रकाशितेति विद्वज्जनोक्तिरपि नातिशय्यते। तथा च ग्रन्थारम्भे "मनोरमोमार्धदेहम्" इति प्रतिज्ञाय

प्रौढमनोरमाव्याख्यानभूते शब्दरत्ने यो विषयो विस्तरेण विवेचितः स तु शेखरे स्वमतसिद्धान्तप्रतिपादकशब्दादधिकाक्षरेण नोक्त इत्यपि विशेष एव। अपि च ग्रन्थद्वये लेखकलेखनपरिपाटीसादृश्यात् मनोरमोमार्धदेहमिति विशेषणदानाच्च तेनैव धीमता नागेशेन शब्दरत्नं विलिख्य गुरुचरणहरिदीक्षितनाम्ना लोके प्रसिद्धिं नीतम् तदिति विभाव्यते।

केचित्तु नागेशेन शब्दरत्नं विरचय्य गुरुपूजनसमये गुरवे समर्पितं तत आरभ्य हरिदीक्षितनाम्ना प्रसिद्धिं जगामेत्याहुः।

अन्येतु गुरुशिष्याभ्यां सहैव संमील्य ग्रन्थाविमौ लिखितौ। अत एव शब्दरत्नोक्तविस्तरोऽत्र शेखरे नोक्त इति तु सम्यगेवेत्याहुः। परन्तु इदं तावद्विचारणीयम्। ग्रन्थद्वयेऽपि प्रसङ्गात् परिभाषाव्याख्यालेखनसमये परिभाषेन्दुशेखरस्याक्षरानुपूर्वीसादृश्यादेककर्तृकत्वं त्रयाणामपि ग्रन्थानामस्तीति निश्चिन्वन्ति ग्रन्थान्तरङ्गपरीक्षकाः। अस्तु वैकानेककर्तृकत्वं तथापि लघुशब्देन्दुशेखरो नागेशेनैव कृत इत्यत्र न विवादः कस्यापि। तथाच "लघुशब्देन्दुशेखरं तनुते" इति प्रतिज्ञातवान् ग्रन्थारम्भे इत्यास्तां तावत्।

यद्यपि पूर्वा बालार्कमिव सती देवी कस्मिन् सुमुहूर्ते विद्वदग्रणीमेनमजनयत् इति न ज्ञायते, तथापि तत्कृतग्रन्थतो लब्धज्ञानेन तज्जीवनवृत्तान्तं किञ्चित् विचारयन्ति ऐतिहासिकाः।

नागोजीभट्टविरचिते भाष्यव्याख्यानभूते विवरणे "काळे इत्युपनामकशिवभट्टसुतेन सतीदेवीगर्भसमुद्भवेन नागोजीभट्टेन विरचिते" इति हस्तलिखितेषु बहुषु विवरणपुस्तकेषूपलम्भात् काळेकुलावतंसशिवभट्टसुतः सतीदेव्याः पुत्र आसीत् नागेशः। काळे इत्युपनाम महाराष्ट्रीयब्राह्मणेषु प्रसिद्धम्, अतोऽयं महाराष्ट्रीयः। तथा च "जी" इत्यन्ता नामशैली महाराष्ट्रीयेष्वेव प्रसिद्धा। ततोऽयं महाराष्ट्रीयो ब्राह्मण इत्यपि निश्चीयते।

"शोडषवर्षपर्यन्तमनधीयानो मल्लविद्यावित्तोऽतिमत्तो बभ्राम च काश्यामनासक्तमनसा नागोजीभट्टः। एकदा पण्डितमण्डितपरिषदि सहसाऽनाहूतोऽपि गत्वाऽग्रासने उपविष्टः। ततस्तत्रत्यैः पण्डितैर्निन्दाप्रचुरशब्दैः सहार्धचन्द्रं दत्वाऽपसारितोऽपमानस्य परां काष्ठां जिगमिषुः "अहमपि स्वल्पेनैव कालेन सर्वान् पराभविष्यामि" इति उच्चैः स्वरेण प्रतिज्ञातवान्। ततोऽरण्यं गत्वा वागीश्वरीं सप्तदिनपर्यन्तमनशनः सन् ध्यात्वा तया दत्तवरेण वर्धितधिषणो कृताध्ययनो हरिदीक्षितगुरुवर्यैरपि प्रशंसितो विद्वत्सभायां स्वल्पेनैव कालेन संमानितोऽभूत्" इति नागोजीभट्टस्य जीवनवृत्तान्तविषयिणी आख्यायिका श्रूयते।

शृङ्गवेरपुराधीशात् रामसिंहनृपालादयं लब्धजीविक आसीत्। कदा खलु वसुधातलमलञ्चकार इति विचारे न ज्ञायते समीचीनतया समयस्त-

थापि क्षत्रियकुलावतंसो जयपुराधीशो जयसिंह अश्वमेधसमये नागेश-भट्टायामन्त्रणपत्रं प्राहिणोत्, तदा नागेशभट्टेन "वाराणस्यां गृहीतक्षेत्रसंन्यासोऽस्मि, अतो विश्वेश्वरपुरीं परित्यज्याऽन्यत्र गन्तुं न शक्नोमि" इत्युत्तरं प्रहितम्। एषा किंवदन्ती जयपुरे अधुनापि प्रसिद्धास्ति। वैक्रमे १७७१ तमेऽब्दे जयसिंह अश्वमेधं कृतवान् इति तु इतिहासप्रसिद्धम्। तदाऽस्य नागेशस्य वृद्धाऽवस्थाऽऽसीदित्यनुमीयते।

अपि च पण्डितराजा जगन्नाथो मोहमदधर्मीयस्य शहाजाननाम्नो दिल्लीश्वरस्य सभां स्वसाहित्यरसेन रंजयामास वैक्रमे १७२३ तमे वर्षे इति प्रसिद्धम्। तेनैव रसगङ्गाधरः प्रणीतः। नागेशोऽपि तं गङ्गाधरं टीकारूपेण भूषयामास। ततोऽश्वमेधसमयात् प्राक् जगन्नाथपण्डितादूर्ध्वमष्टादशशतकस्य द्वितीये तृतीयेंऽशे नागेशस्य समय इति निर्णीयते।

कन्यापुत्ररहितो नागेशो लघुशब्देन्दुशेखरनामानं पुत्रं लघुमञ्जूषानाम्नीं कन्यकां च समुत्पाद्य कन्यादानफलावाप्तये तां विश्वेश्वराय समर्पयामास। इति ग्रन्थान्ते तेनैव लिखितं तत अवगम्यत इदमुदन्तम्।

नागोजीभट्टप्रणीता लब्धा ग्रन्थाः।

१ भाष्यप्रदीपोद्योतः।
२ बृहच्छब्देन्दुशेखरः।
३ परिभाषेन्दुशेखरः।
४ प्रायश्चितेन्दुशेखरः।
५ बृहन्मञ्जूषा।
६ लघुमञ्जूषा।
७ परमलघुमञ्जूषा।
८ परमार्थसारविवरणम्।
९ काव्यप्रकाशोद्योतः।
१० रसतरङ्गिणीटीका।
११ रसगङ्गाधरमर्मप्रकाशः।
१२ त्रिंशत्श्लोकी (आशौचनिर्णयः)।
१३ योगसूत्रवृत्तिः।
१४ सापिण्ड्यनिर्णयः।
१५ रसमञ्जरीटीका।
१६ वृत्तिसंग्रहः।
१७ वेदान्तसूत्रवृत्तिः।
१८ सप्तशतीटीका।
१९ सांख्यसूत्रवृत्तिः।
२० ( शब्दरत्नः। )
२१ रामनृपालनाम्ना प्रकाशिता वाल्मिकीयरामायणस्य तिलकाख्या व्याख्या

एते नागेशभट्टप्रणीता ग्रन्थाः संप्रति समुपलभ्यन्ते।

तस्य महाभाष्यगूढार्थप्रकाशकस्य व्याकरणशास्त्रशेखरीभूतस्यास्य लघुशब्देन्दुशेखरस्य भट्टी-विषमी--शांकरी--श्रीधरी-नागेशोक्तिप्रकाशिका-चन्द्रकला-चेत्यादिमुद्रिता अमुद्रिताश्च सन्त्येव बह्वयः पाण्डित्यप्रचुरास्तमतखण्डिका मण्डिका वा टीकास्तथापि विद्यार्थिनामज्ञानतिमिरसन्ततिसमूहभेदिका विदुषामन्तःकरणमोदिका पण्डितप्रवरभैरवमिश्रविरचिता चन्द्रकला शेखरायते सरलतया। स च भैरवमिश्रः कदाऽजनि कदा वा टीकामिमां व्यरचीत् तत्सर्वं टीकायामेवान्ते तेनैव निवेदितमिति नात्र किञ्चित् विचारयामः।

तया च पण्डितमान्यया चन्द्रकलया सहितस्याव्ययीभावान्तस्य समारब्धमुद्रणस्य लघुशब्देन्दुशेखरस्य मुद्रिते च पञ्चसन्धिभागे सहजसंजातस्मरणेन मया कै० परमपूज्यतात्याशास्त्रिमोकाटे इत्युपाह्वगणपतिशास्त्रिगुरुचरणमुखाच्छ्रुतानि संगृहीतानि वाक्यानि अजन्तपुल्लिङ्गप्रकरणादारभ्य आकारकान्तानि स्मारंस्मारं बालभाषया टिप्पणीरूपेण स्थापितानि। अपि च आशास्येऽहं पञ्चसन्धिभागस्थान्यपि वचनानि स्वल्पेनैव कालेन विद्यार्थिनां दृष्टिपथं नेष्यामीति। मित्रगणप्रोत्साहितेन संस्करणकार्यनियुक्तेन मया प्रियवरपाठकगणसौलभ्याय प्रतिसूत्रोपन्यासेऽष्टाध्यायीस्थसूत्राङ्कं दत्वा कौमुदीस्थप्रतीकाक्षराणां झटिति प्रतीत्यै स्थूलाक्षरतां च कृत्वा द्वितीयवारं यथामति संस्कृत्य संशोधितोऽयं लघुशब्देन्दुशेखरः।

अस्मिन्नेव मुद्रणसमये आजमगडपुरस्थसनातनधर्मसंस्कृतपाठशालाप्रधानाध्यपकैः पण्डितकुलावतंसैर्जगन्नाथशास्त्रिमिश्च स्वनिर्मितटिप्पणीसंग्रहोऽपि प्रकाशयितुं दत्तः। सोऽपि प्रकाशकैर्जयकृष्णदासमहाशयैः "अन्यसंगृहीतटिप्पणीसंग्रहः" इत्यवतरणदनेन—अजन्त—हलन्त—अव्यय—स्त्रीप्रत्यय-कारक-प्रकरणानुक्रमेणसंमुद्र्य ग्रन्थान्ते स्थापितः।

मुद्रणसमये काशीस्थराजकीयपाठशालाध्यक्षैर्विविधविद्याविनोदमेदुरितमानसैरनेकानवद्यविद्यालङ्कृतिभिः कविराजकुलतिलकैः गोपीनाथमहाशयैः, सरस्वतीभवनाधिपतिभिः पण्डिप्रवरनारायणशास्त्रिमिश्च सदयतया भवनस्थानि हस्तलिखितपुस्तकानि दत्त्वा यत्सहाय्यं दत्तं तथाचान्यैर्मित्रवर्यैर्यदुपकृतं तान् सर्वानपि धन्यवादाः।

कृतेऽपि यत्ने "गच्छतस्खलनम्" इति न्यायात् मतिमान्द्यात् सीसकाक्षरयोजकप्रमादाद्वा जातं स्खलनं समुपेक्ष्य हंसक्षीरन्यायेन सफलयन्तु मत्परिश्रमं गुणैकपक्षपातिनः प्राज्ञवरा इति भूयोभूयः प्रार्थयते—

चौखम्बा-संस्कृत-सिरीज आफिस,
विद्याविलास प्रेस,
गोपालमन्दिर, के उत्तर फाटक बनारस सिटी।

विद्वज्जनकृपाकाङ्क्षी
नरहरिशर्मा,
व्याकरणशास्त्री।

# लघुशब्देन्दुशेखरस्थप्रकरणानां सूची ।





॥ श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥

# * अथ लघुशब्देन्दुशेखरः *

पातञ्जले महाभाष्ये कृतभूरिपरिश्रमः ॥

॥ श्रीगणेशाय नमः ॥

सीताचर्चितपादपद्मयुगलं ध्यात्वाऽद्वितीयं विभुं
मुद्रां ज्ञानमयीन्दधानमपरं हस्ताम्बुजं जानुनि ।
कुर्वे चन्द्रकलां शिवां शिशुहितां टीकामजं राघवं
सुग्रीवाङ्गदमारुतिप्रभृतिभिः संस्तूयमानम्परम् ॥ १ ॥
शब्देन्दुशेखरस्येयं टीका चन्द्रकलाभिधा ।
रच्यते भैरवेणात्र क्षमध्वन्दयया बुधाः ॥ २ ॥
मान्यान् प्रणम्य विज्ञप्तिं करोमि यदिदं वचः,
दूष्यं विचार्य्य मात्सर्यं विहाय विबुधाः परम् ॥ ३ ॥

धीमत्त्वे हेतुभूतानर्थान् स्वीयग्रन्थे शिवसादृश्यं स्वस्य कुलशुद्धत्वञ्च व्यञ्जनया शब्दतो वा दर्शयन् विघ्नविघताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति *पातञ्जल* इत्यादिना । प्रथमं पातञ्जलशब्दोपादानं बलवत्तरमङ्गलाय । (१)महाभाष्यमात्रोक्तौ शारीरकसूत्रभाष्यस्यापि बोधस्स्यादतः पातञ्जलपदम् । तावन्मात्रोक्तौ (२)चरकेऽतिव्याप्तिरतो महाभाष्येति । महत्पदानुपादाने पतञ्जलिप्रणीतसूत्रसम्बन्धिभाष्ये व्यासकृतेऽप्यतिव्याप्तिरतो महत्पदम् । न च पातञ्जलपदस्य प्रोक्तार्थकाणन्ततया तदभेदस्य व्यासकृते विरहान्नातिव्याप्तिरिति वाच्यम् । इष्टिघटितत्वादिरूपमहत्त्वस्य भाष्यान्तरे विरहादनेनैव सकलातिप्रसङ्गनिरासे पातञ्जलपदमत्र योगभाष्यसङ्ग्रहार्थमेवेत्याशयात् । विनापि चकारमहरहर्नयमानो गामश्वम्पुरुषम्पशुमित्यत्र समुच्चयस्य दृष्टत्वात् । एतेन "(३)शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" ( यो० सू० ) इति पात-

---

( १ ) केचित् पातमितिछेदं कृत्वा महाभाष्यरूपे जले पातं कृत्वेत्यर्थं वर्णयन्ति । ग्रन्थारम्भेऽमङ्गलबोधकशब्दोपादानेन तन्न सम्यक् प्रतिभाति ।

( २ ) चरकेऽतिव्याप्तीति । चरकप्रणयनं महर्षिणा पतञ्जलिना कृतम् । तत्संस्करणं चाग्निवेशमुनिना कृतम् । अतोऽतिव्याप्तिदानं नासङ्गतम् । अत एव श्रीभोजेन "योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन" इत्युक्तम् ।

( ३ ) "प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" । एताः पञ्चवृत्तयः । तद्घटकविकल्पस्यैतल्लक्षणबोधकं सूत्रम् । शब्दज्ञानानु । अस्यार्थस्तु— शब्दज्ञानादनुपतितुं शीलं यस्य सः शब्दज्ञानानुपाती । अर्थात् पदार्थाभावेऽपि शब्दश्रवणानन्तरं जायमानः । यथा नरविषाणम् । वन्ध्यापुत्र इत्यादिकम् ।

शिवभट्टसुतो धीमान् सतीदेव्यास्तु गर्भजः ॥ १ ॥
याचकानां कल्पतरोररिकक्षहुताशनात् ॥
शृङ्गवेरपुराधीशाद् रामतो लब्धजीविकः ॥ २ ॥
नत्वा फणीशं नागेशस्तनुतेऽर्थप्रका(१)शकम् ॥
मनोरमोमार्द्धदेहं लघुशब्देन्दुशेखरम् ॥ ३ ॥

ञ्जलसूत्रमादाय वक्ष्यमाणं सिद्धान्तार्थकथनमसङ्गतं, पातञ्जलभाष्यार्थानवबोधादिति शङ्कया नावकाश इति सूचितम् ।

*कृतभूरिपरिश्रम इति* । सापेक्षत्वेऽपि गमकत्वात्समासः । न च "चैत्रस्य गुरुकुलम्' इत्यत्रेव नित्यसापेक्षत्वादेव न दोष इति वाच्यम् । नित्यसापेक्षत्वाभावेऽपि 'सक्त्वाढकमापणीयानाम्' 'किमोदनः शालीनाम्' इत्यादौ समासदर्शनेन गमकत्वस्यैव प्रयोजकत्वात् । गमकत्वं च विग्रहवाक्यजन्यशाब्दबोधसमानप्रकारकशाब्दबोधप्रयोजकत्वमेव । कृतभूरिपरिश्रम इत्यनेन पातञ्जलमहाभाष्यप्रभावादेव सर्वतन्त्रार्थज्ञानजननबोधनेनान्यत्र परिश्रमाभावो ध्वनितः । पितृकीर्त्यर्थन्तन्नामोल्लिखति *शिवभट्टसुत इति* । *धीमान्* । ऊहापोहकुशलः । एतेन स्वस्य विवेचकत्वं ध्वनितम् । *सतीदेव्या इति* । इयं संज्ञा । सतीति भाषितपुंस्कत्वाभावान्न पुंवद्भावः । न च संज्ञापूरण्योश्चेति सूत्रेण संज्ञायाः पुंवत्त्वनिषेधसामर्थ्याद्भाषितपुँस्कत्वन्तस्यास्तीति वाच्यम् । योगरूढस्य दत्तादिशब्दस्य तत्र ग्रहणात् । देवीत्युपादानं तदन्तन्नामेति सूचनाय । सतीं दीव्यति पातिव्रत्येन जिगीषतीति वा । दुष्टान्नभक्षणे बुद्धिमान्द्यसम्भवात्कथं धीमत्त्वमत आह-*याचकानामित्यादि* अभेदरूपकद्वयम् । *अरिकक्षेति* । अरय एव कक्षाः शुष्ककाननं तत्र हुताशनः । एतेन महाशूरत्वन्ध्वनितम् । *रामतः* । रामसिंहनामकक्षत्रियात् ।

*नागेश इति* । एतेन व्याकरणसिद्धान्तज्ञानवत्त्वं सूचितम् । ननु मनोरमयैव मूलार्थज्ञानसम्भवात्प्रयासवैयर्थ्यमत आह-* मनोरमोमार्द्धदेहमिति * । एतेन तदुक्तानामर्थानां प्रायः कथनाभावो ध्वनितः । *लघुशब्देन्दुशेखरमिति* । शब्द इवेन्दुः, शब्देन्दुः । लघुश्चासौ शब्देन्दु-

(१) केचित् 'अर्थप्रकाशकम्' 'मनोरमोमार्धदेहं' 'लघुशब्देन्दुशेखरं' इति विशेषणत्रयं पतञ्जलिपरतया वर्णयन्ति। तद्यथा फणीशं-पतञ्जलिम्, अर्थप्रकाशकम्-व्याकणरूपपदार्थस्य भाष्यकरणेन प्रकाशकत्वादर्थप्रकाशकम्, मनोरमोमार्धदेहं- मनोरमारूपोमाया अर्धं द्यति-खण्डयति सा मनोरमोमार्धदा सा इहा-चेष्टा यस्य तम् । अर्धनारीनटेश्वरस्यार्धमुमारूपम्, यज्ञोपवीतरूपेण नागेन च तदर्धं विभक्तमिवभवतीति । लघुशब्देन्दुशखरम्—इन्दु इव लघुशब्दः लघुशब्देन्दुः स शेखरे यस्य तम्। प्रतिपच्चन्द्र इव ॰ इत्याकारकलघुशब्द इवाकृति नागस्य शेखरः—शिरोभूषणं वर्तते इति ।

ग्रन्थसमाप्तिग्रन्थप्रचारादिप्रतिबन्धकदुरितप्रशमाय समुचितमुनित्रयनमस्काररूपं मङ्गलमाचरन् शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च निबध्नाति ॥ मुनित्रयमिति ॥ कारकविभक्तेर्बलवत्त्वाद् द्वितीया ॥ परिभाव्येति ॥ तच्छब्दस्य बुद्धिस्थपरामर्शकत्वात् प्राचामुक्तीस्तिरस्कृत्येत्यर्थः । मुनित्रयोक्तीर्विचार्येत्यर्थो वा । "परीभावस्तिरस्क्रिया" इति कोशात्तिरस्कारार्थकस्य धातोर्विचारार्थकत्वेऽपि न बाधकत्वम् । धातूनामनेकार्थत्वात् । अत एव, "परौ भुवोऽवज्ञाने" ( पा० सू० ३।३।५५ ) इति सङ्गच्छते । एतेन स्वग्रन्थस्य प्राचीनग्रन्थैरगतार्थता समूलत्वञ्च ध्वनितम् । भाविनोऽपि बुद्ध्या विषयीकरणादियमिति निर्देशः । सिद्धान्तप्रकाशकत्वेनातिश्च लघुशब्देन्दुः कलात्मकश्चन्द्रः स शेखरे यस्य । यद्वा लघवः शब्दा यस्मिन्स लघुशब्दः स इन्दुशेखर इवेत्यर्थः । शब्दो व्याकरणाभिव्यङ्ग्यः । स इन्दुरिव शब्देन्दुः । तस्मिन्निन्दुतादात्म्यमर्थप्रकाशकत्वेन, दोषरहितत्वेन वा विवक्षितम् । स एव शेखरः शिरोभूषणं यस्येति वा । न चेन्दुसादृश्यादेवार्थप्रकाशकत्वे लब्धेऽर्थप्रकाशकमित्यस्य पृथग्भूतस्योपादानं व्यर्थमिति वाच्यम् । मनोरमादिना यादृशार्थस्य प्रकाशो न तस्यापि प्रकाशकमित्यर्थात् ॥

---

*ग्रन्थप्रचारादीति* । आदिना तदध्येतृव्याख्यातृणां श्रद्धातिशयादिपरिग्रहः । *समुचितेति* । त्रयाणामपि शास्त्रप्रणेतृत्वात् । *अनुषङ्गत इति* । कुल्या इवान्यार्थं कृतस्यानुद्देश्यफलप्रयोजकत्वात् । नमः स्वस्तीति चतुर्थीमाशङ्क्याह–*कारकविभक्तेरिति* । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति न्यायादित्यर्थः । कृधातूपस्थाप्यक्रियानिरूपितकर्मत्वात् केवलनमःशब्दयोगे चतुर्थीविधानं चरितार्थम् । 'इदमस्तु संनिकृष्टम्' इत्यभियुक्तवचनेन सन्निकृष्टस्यैवेदमा परामर्शो युक्तः । कौमुद्यास्तु सिद्धत्वाभावादेतदनुपपन्नमत आह–*भाविन इति* । यथा भाविघटविषयेऽत्र घटो भविष्यतीति व्यवहारस्तथेयमिति निर्देशः । सत्कार्यवादसिद्धान्ताश्रयणेन वा इयमितिनिर्देश इति भावः । स्त्रीलिङ्गनिर्देशोऽपि ग्रन्थे उपमानकौमुदीगतलिङ्गस्यारोपेणोपपन्न एव । बुद्धिसत्तासमाविष्टस्य शाब्दबोधविषयत्वमितिसिद्धान्त इति भावः । कौमुदीसादृश्यप्रयोजकधर्ममाह–*सिद्धान्तेति* । अत्रोपमालङ्कारो व्यङ्ग्यः ॥

संज्ञा च परिभाषा च विधिर्नियम एव च ।<br>
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम् ।

दुरूहग्रन्थान्तरेभ्यः सिद्धान्तज्ञाने जायमानस्य क्लेशरूपसन्तापस्य शामकत्वेन च कौमुदीसादृश्यम्। अनेन वैयाकरणसिद्धान्ता विषयाः, तज्ज्ञानं प्रयोजनं, तज्जिज्ञासुरधिकारीत्यादि सूचितम्॥

अइउण्॥ एषां क्रमबोधकत्वेऽप्यादिरन्त्येनेत्यनेनैकवाक्यतया वृत्तिपरिच्छेदकत्वेन संज्ञासूत्रत्वम्। क्रमस्य सञ्ज्ञाद्वारैवोपयोगात्। एकवाक्यता चादिरकारादिरन्त्येनेता सदृशेन णकारादिना सहोच्चार्यमाण आद्यन्ताक्षिप्तानां (१)सञ्ज्ञेति। "स्वौजस्" (पा०सू० ४।

---

इति-प्राचीनपठितसूत्रलक्षणेषु यस्य सत्त्वं तदाह * एषामिति *॥

* क्रमबोधकत्वेऽपीति *। अत्र क्रमपदमर्श आद्यजन्तम्। क्रमेण बोधकत्वेऽपीति वार्थः। एतेन क्रमे शक्त्यभावेन क्रमबोधकत्वेऽपीत्यनुपपन्नमित्यपास्तम्। एषां क्रमेण बोधकत्वादेव यमां यमीतियथासङ्ख्यविज्ञानस्य, इणादिप्रत्याहारे उकारादिग्रहणस्य च सिद्धिः। वृत्तिपरिच्छेदकत्वञ्च शक्तिग्राहकत्वम्। ननु वृत्तिपरिच्छेदकत्वन्न संज्ञासूत्रत्वसाधकम्। "कर्त्तरिक्वत्"इत्यादौ व्यभिचारात्। "आदिरन्त्येन सह"इतिसूत्रैकवाक्यतापन्नत्वे सति वृत्तिपरिच्छेदकत्वमपि न। "कृञ्चानुप्रयुज्यते" इतिसूत्रघटककृञ्पदस्यादिरन्त्येनेत्येतदेकवाक्यतया शक्तिग्राहकत्वेऽपि संज्ञासूत्रत्वाऽव्यवहारात्। उक्तहेतोः "वृद्धिरादैच्" इत्यादावसत्त्वेन संज्ञासूत्रसामान्यावृत्तितया परिभाषाद्यन्यतमभिन्नत्वविशिष्टसूत्रत्वरूपपक्षतावच्छेदकाव्यापकतया स्वरूपासिद्धत्वाच्चेति चेन्न। संज्ञास्वरूपावच्छिन्नशक्तिग्राहकत्वमात्रस्यैव हेतुत्वात्। तादृशहेतोः पक्षेष्वेषु सूत्रेषु सत्त्वमादिरन्त्येनेतिसूत्रैकवाक्यतयेति सूचयितुमादिरन्त्येनेत्येतदेकवाक्यतयेति तृतीयान्तोल्लेखः। एकस्योभयार्थत्वमत्राविरुद्धमित्याह-*क्रमस्येति*। *इतासदृशेनेति*।

अयम्भावः "प्रत्याहारेऽनुबन्धानाङ्कथमज्ग्रहणेषु न" इति पूर्वपक्षे, "आचारादप्रधानत्वाल्लोपश्च बलवत्तर" इत्युत्तरोक्तरीत्यान्त्येनेता सहोच्चारणासम्भवेनेत्पदस्येत्सदृशे लक्षणाया आवश्यकत्वात्। प्रसङ्गादाह- * स्वौजसित्यादि *। आदिना "तिप्तस्झि" इत्यस्य "कृञ्चानुप्रयुज्यते"

---

(१) आद्यन्ताक्षिप्तानामिति—

अवयवबोधकाद्यन्तशब्दाभ्यामाक्षिप्तसमुदायः संज्ञीत्यर्थः। अवयवीसमुदायाक्षेपश्च अर्थापत्त्या। अर्थापत्तित्वं च विरुद्धत्वेनावभासमानधर्मद्वयघटितहेतुसाध्यानुमितित्वम्। तत्प्रकारश्च-सूत्रघटकपदप्रयोज्य आदित्वावच्छिन्नाऽन्त्यत्वावच्छिन्ना च विषयता; सूत्राघटकपदप्रयोज्यावयवित्वावच्छिन्नाविषयतानिरूपिता भवति, सूत्रघटकपदप्रयोज्यावयवित्वावाच्छिन्नविषयत्वानिरूपितत्वे सति-अवयवित्वावाच्छिन्नविषयतानिरूपितत्वात् इति बोध्यम्।

१।२ ) इत्यादीनामप्येतदेकवाक्यतया सुबादिसञ्ज्ञासूत्रत्वं स्वादिविधायकत्वञ्चेति बोद्ध्यम् । एषु संहिताया अविवक्षया न संहिताकार्यम् । अनुकरणत्वेन सौत्रत्वाच्च वर्णेभ्यो न विभक्त्युत्पत्तिः । कारप्रत्ययोऽपि न । बाहुलकात् ।

---

इत्यस्य च सङ्ग्रहः । एतेषु सन्धिकार्यमाशङ्क्याह—*एष्विति* । अनुकरणत्वेनेति* । अनुकार्यानुकरणयोरभेदविवक्षायामित्यर्थः । भेदविवक्षायान्त्वाह—* सौत्रत्वाच्चेति * । अयम्भावः । यदानुकार्यानुकरणयोरभेदविवक्षापक्षस्तदा शब्दजन्यशाब्दबोधे प्रकारतया यदनुकरणभानं तदेवानुकार्यस्यापि भानं भेदाभावाद् इति नानुकार्ये शक्तिरित्यनुकरणशब्दस्य वृत्त्यार्थबोधकत्वरूपार्थवत्त्वाभावात्प्रातिपदिकत्वाभावेन विभक्त्यनुत्पत्तिः ।

वस्तुतस्त्वभेदो निरूपयितुमशक्यः । 'पटत्' इत्यादिध्वन्यनुकरणस्थलेऽनुकार्यस्य ध्वनिमयत्वादनुकरणस्य वर्णमयत्वाद्विरुद्धधर्मयोरेकत्रासमावेशात् । घटपटादिशब्दानुकरणस्थलेऽप्यर्थपदार्थकत्वशब्दपदार्थकत्वाभ्यां भेदस्य न्याय्यत्वात् । न च तयोर्भेदेऽनुकार्योपस्थितिप्रयोजिका तत्र वृत्तिरुपेयेति प्रातिपदिकत्वमनुकरणस्य प्राप्नोतीति वाच्यम् । सादृश्यसम्बन्धेनोपस्थितस्याप्यनुकार्यस्य शाब्दबोधे व्युत्पत्तिवैचित्र्येण भानसम्भवात् । यदि वृत्त्यनुपस्थाप्यस्य शाब्दबोधे भानानङ्गीकारः । तदा तत्रानुकरणशक्तिसत्त्वेऽपि सौत्रत्वाद्विभक्त्यभाव इति ।

न च

> संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
> नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥

इत्यनेन वाक्य एव संहिताया विवक्षाधीनत्वं बोधितम् । प्रकृते विभक्त्यभावेन वाक्यत्वस्यैवानुपपत्तिरिति वाच्यम् । यत्र कारकान्विता क्रिया प्रतीयते तत्रैवैतादृशवाक्यत्वाङ्गीकारात् । प्रकृते तु शक्तपदसमुदायस्य वाक्यपदेन ग्रहणम् । यथा 'गवित्ययमाह' इत्यस्य वाक्यत्वात्समासग्रहणनिवर्त्यत्वोपपत्तिः । न चैतादृशवाक्यत्वस्य, 'वाक्ये तु सा' इत्यत्र ग्रहणे 'चक्रतुः' इत्यत्र कदाचिद्यण्रहितप्रयोगोऽपि स्यादिति वाच्यम् । संहितैकपद इत्यनेन तत्र संहिताया नित्यत्वबोधनात् । स्वरसन्धिस्तु न प्रवर्तते । वर्णोपदेशकालेऽजादिसंज्ञानामनिष्पादादिति कैयटः कथितवान् । तच्च कौस्तुभे मूलकारो 'वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे निष्पन्ने प्रवर्त्तमानानां यणादीनां सुध्युपास्य इत्यादौ तटस्थ इवोद्देश्यतावच्छेदकरूपाक्रान्ते वर्णोपदेशादावपि प्रवृत्तेरावश्यकत्वाद्, अन्यथा "तुल्यास्यप्रयत्नम्"

यत्तु 'उपजीव्यविरोधात् सन्धिर्न तथा ह्यजादिसञ्ज्ञाग्रहकाले "आद्गुण" ( पा० सू० ६।१।८१ ) इत्यादीनामनिष्पत्त्या तदप्रवृत्ताववविकृतरूपाकारादिषु गृहीताजादिपदशक्तिः पश्चादचप्रत्याहारे ज्ञाते उपेन्द्र इवात्रापि तत्प्रवृत्तौ विरुद्ध्येत। न हि सन्धिकार्ये कृतेऽविकृतरूपश्रवणं भवति' इति। तन्न। पुनरच्पदस्यार्थान्तरे शक्त्यग्रहेण तद्विरोधाभावात्। न च सन्धौ सन्देहः। व्याख्यानतो निर्णयसम्भवात्।

ननु चतुर्दशसूत्र्यामक्षरसमाम्नाय इति व्यवहाराऽनुपपत्तिराम्नायसमाम्नायशब्दयोर्वेद एव प्रसिद्धेरिस्त आह–माहेश्वराणीति। महेश्वरादागतानीत्यर्थः। महेश्वरप्रसादलब्धानीति फलितम्। एवञ्चैवमानुपूर्वीका श्रुतिरेवैषा तत्प्रसादात्पाणिनिना लब्धा। श्रुतिमूलकत्वादस्यैव वेदाङ्गत्वम्। अत्र प्रमाणं, 'येनाक्षरसमाम्नायमधिगम्य महेश्वरात्। कृत्स्नं व्याकरणं प्रोक्तम्' इति शिक्षावचनम्। लण्सूत्रे 'णकारविषयाचार्यप्रवृत्तिर्ज्ञापयति–व्याख्यानत' इति, इत्यादावाचार्यपदेन महेश्वरः। अनुबन्धाश्च महेश्वरकृता एवेत्यनुपदं स्फुटीभविष्यति। ञमङणनमित्यत्र मकारप्रत्याख्यानपरं भाष्यं तु, किं-

---

इत्यादौ सवर्णदीर्घो न स्यादिति रीत्या दूषितवान्। तदुद्धारः सिद्धान्तरत्नाकरे कृतः। तन्दूषयितुमुपन्यस्यति–* यत्त्विति *।

अयम्भावः। अविकृताकारादिविषयताविशिष्टशक्तिज्ञानस्य "आद्गुण"इत्यादिवाक्यजन्यशाब्दबोधहेतुतया तदुत्तरं तादृशविषयताविशिष्टशक्तिग्रहासम्भव इति। एतद् दूषयति। * तन्न पुनरित्यादिना *। अर्थान्तरेविकृताकारादौ सन्धौ सतीति शेषः। *व्याख्यानत इति*। शिष्टकृतादित्यादि। पाणिनिपठितप्राथमिकशिष्यज्ञानपरम्परया निर्णयसम्भवादिति भावः। *समाम्नाय इति व्यवहार इति*। अस्य भाष्ये कृत इत्यादिः। *अस्यैव वेदाङ्गत्वमिति*। एवकारेणेतरव्याकरणानां व्यवच्छेदो, न त्वङ्गानाम्। सजातीयत्वात्। नन्वेषां महेश्वरप्रसादलब्धत्वे 'लण्सूत्रे आचार्यप्रवृत्तिः' इत्यत्राचार्यैत्यसङ्गतम्। आचार्यपदेन तत्र तत्र पाणिनेर्व्यवहारादत आह *लण्सूत्रे णकारविषयेति*। नन्वनुबन्धानां पाणिनिकर्तृकतया कथम्महेश्वरग्रहणमत आह *अनुबन्धाश्चेति*। *अनुपदम्*। नृत्तावसान इत्यादिना। नन्वनुबन्धानां महेश्वरकृतत्वे 'ञमङणनम्' इत्यत्र मकारप्रत्याख्यानपरभाष्यविरोध इत्यत आह *ञमङणनमित्यत्रेति*।

मदृष्टाऽर्थमेव तदुच्चारणमुत दृष्टार्थमपीत्येवं विचारपरम्। सर्वत्र प्रत्याख्यानमेवम्परमेव। अन्यथाङ्गानामपि पारायणे धर्मश्रवणेन तत्र तत्र पाणिनिन्यासप्रत्याख्यानस्याप्यसङ्गतिः स्यात्। तदुक्तम्। "इको यणचि" (पा० सू० ६।१।७७) इति सूत्रे।

'सामर्थ्ययोगान्नहि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यादिति'

किञ्चिद्दृष्टादृष्टार्थवत्, किञ्चिच्छुद्धादृष्टार्थवत्, सर्वथानर्थकं न किञ्चिदिति तदर्थः। वृद्धिसूत्रस्थे, वर्णेनाप्यनर्थकेन न भवितव्यम्' इति भाष्यग्रन्थेऽनर्थकत्वं बोद्ध्यार्थराहित्यरूपमिति न निष्प्रयोजनत्वरूपानर्थक्येन तत्र तत्र प्रत्याख्यानपरभाष्यासङ्गतिः। अत एव 'सोऽयमक्षरसमाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो ब्रह्मराशिः' इति भाष्यमुपादायोक्तं भर्तृहरिणा 'यथैवेदमव्युच्छिन्नं चन्द्रतारकादि, "एवमस्याऽक्षरसमाम्नायस्य न कश्चिद् आधुनिकः कर्त्तास्त्येवमेव वेदपारम्पर्येण स्मर्यमाणम्" इति। आधुनिकः शरीरी। पुष्पितत्वं तन्मूलकशब्दशास्त्रद्वारेण। शब्दप्रयोगेण च फलितत्वम्। उक्तञ्चैतच्चतुर्दशसूत्रव्याख्यायां नन्दिकेश्वरकृतकाशिकायाम्—

नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्च[१४]वारम्।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्॥

---

*एवम्परम्*। एवं विचारपूर्वकशुद्धादृष्टार्थत्वप्रतिपादनपरम्। *इको यणचीतिसूत्र इति*। तत्सूत्रस्थभाष्य इत्यर्थः।

*सामर्थ्ययोगादिति*। "ल्यब्लोप" इति पञ्चमी। फलजननसामर्थ्ययुक्तं विहायेत्यर्थः। तच्च फलं बहुषु दृष्टादृष्टोभयम्। क्वचिच्छुद्धादृष्टमेव। ननु "नाञ्झलौ" इत्यादिसूत्रप्रत्याख्यानपरभाष्यासङ्गतिः। वृद्धिसूत्रभाष्ये "प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म, तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुं, किं पुनरियता सूत्रेण" इत्युक्तत्वादत आह *वृद्धिसूत्रस्थ इति*। *अत एव*। वर्णसमाम्नायस्य श्रुतित्वादेव। *प्रतिमण्डित इति*। शोभित इत्यर्थः। *ननाद*। अन्तर्भावितण्यर्थतया नादयामासेत्यर्थकम्। *एतत्* ढक्कानादरूपं शिवसूत्रजालं चतुर्दशसूत्रीरूपेण परिणतं। बभूवेति शेषः। *इत्येतद्विमर्शे* विचारयामि। आर्षमेतत्। अथ वा सप्तम्यन्तमेतत्।

अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम् ।
धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये ॥ इति ।

धात्वर्थम् । धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थम् । अत एव 'अनुबन्धकरणार्थश्च वर्णानामुपदेश' इत्युक्तं भाष्ये । अत्र करणशब्दप्रयोगेणानुबन्धानां सादित्वं सूचितम् । तत्करणश्चोपदेशकर्तृकर्तृकमेव(१) । प्रत्यासत्तेः । तेन तद्व्यतिरिक्तस्य सर्वस्यानादित्वं सूचितम् । अत्र सनकाद्युद्धरणेच्छयास्य ब्रह्मोपदेशरूपत्वं सूचितम् । तच्च श्रुतित्वाभावे न सङ्गच्छते । 'श्रोतव्यः श्रौतवाक्येभ्य' इत्युक्तेः(२) । ऋक्तन्त्रव्याकरणे शाकटायनोऽपि "इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं, यथाचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्रायेन्द्रो भरद्वा-

---

विमर्शो विचारे कृते सति । प्रतीम इति सर्वशेषः । एतेन मृशतेः परस्मैपदित्वाद्व्यत्ययेनात्मनेपदेऽप्युत्तमपुरुषैकवचनस्येटो ङित्त्वाद् गुणानुपपत्तिः, सर्वकार्यांशे छान्दसत्वकल्पने गौरवमिति परास्तम् । *अत्र सर्वत्रेति* । ढक्कानादरूपसूत्रेष्वित्यर्थः । *अन्त्यं वर्णचतुर्दशमिति* । वर्णानाञ्चतुर्दशमितिसमासः । चतुर्दशत्वञ्च चतुर्दशसङ्ख्यापूरकत्वं, तच्च सर्वेषामस्ति । यथा भाष्ये 'यदा "समर्थः पदविधिः" इत्येषोऽध्यायश्चरमं गण्यते, तदा सोऽष्टमो भवति' इत्युक्तम् । क्वचित्तु अन्त्यवर्णचतुर्दशमिति पाठः । अन्त्या वर्णाश्चतुर्दश यस्मिन्नित्यर्थः । 'वर्णानामुपदेश' इत्यत्रोपदेशशब्दो बोधनपरः । *अक्षरच्छन्द इति* । अक्षरबोधको वेद इत्यर्थः । *वर्णश इति* । वीप्सायां शस् । वर्णं वर्णं समनुक्रान्तम् सम्यगनुक्रमेण दर्शितम् । मयेति शेषः । पूर्वोक्तं छन्दस्त्वं दृष्टान्तप्रदर्शनेन द्रढयति *य-

---

(१) तच्चश्रुतित्वाभावे नसंगच्छते इति । केचित्तु—इदंमन्दम् । श्रुतित्वाभाववता गीतादिना वेदान्तशास्त्रादिना च ब्रह्मोपदेशानुपपत्तेः । न च "श्रोतव्यः श्रुतिवाक्येभ्यः" इतिस्मृतिविरोध इति वाच्यम् । तत्र श्रुतिवाक्येभ्यः इत्यस्य श्रुतिप्रतिपाद्यर्थंप्रतिपादकवाक्येभ्य इत्यर्थात्—इत्याहुः । तच्चिन्त्यम् श्रुतिवाक्येभ्य इत्यस्य लक्षणायां प्रमाणाभावात् । न च गीतादिना वेदान्तशास्त्रादिना च ब्रह्मोपदेशदर्शनमेवप्रमाणमिति वाच्यम् । न । श्रुतिवाक्येभ्यस्तु अपूर्वविशिष्टब्रह्मोपदेशोभवति । तादृशस्तु नगीतादिना । अपूर्वविशिष्टब्रह्मोपदेशश्चेत्तर्हि श्रुतिवाक्यभ्ये एव श्रोतव्य इत्यर्थात् । सनकादिकानामपूर्वविशिष्टब्रह्मोपदेशश्रवणेच्छासीत उपदेशश्च तैः सूत्रैः कृतः । साचेच्छा सूत्राणां श्रुतित्व एव संगच्छते नान्यथेत्याकूतम् ।

(२) तत्करणं च उपदेशकर्तृकमेवेति । केचित्तु—अनुबन्धाः पाणिनिकृता एव । "धात्वर्थं समुपादिष्टम्" इतिवाक्यघटकसमुपादिष्टमित्यस्यानुबन्धा एवमासक्त्या इति महेश्वरेणोपदिष्टमित्यर्थः । अतएव भाष्यकारकृतमकारप्रत्याख्यानं सङ्गच्छते । अन्यथासर्वविश्वेश्वरमहेश्वरकृतानुबन्धखण्डनमसङ्गतं स्यात् इत्याहुः ।

जाय भरद्वाज ऋषिभ्य ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्ना-यमित्याचक्षते, न भुक्त्वा न नक्तं प्रब्रूयात् ब्रह्मराशिः" इति। ब्रह्मराशिरित्यस्य ब्रह्मप्रतिपादको वर्णराशिरित्यर्थः। तत्त्वञ्च नन्दि-केश्वरकाशिकायां स्पष्टम्।

अत एव 'वृत्तिसमवायार्थो वर्णानामुपदेशः कर्तव्य' इति भाष्ये उक्तम्। पाणिनेर्लाघवेन शास्त्रप्रवृत्तिफलको यः समवायो वर्णानां क्रमेण सन्निवेशस्तदर्थ इति तदर्थः। स चाणादिप्रत्याहारद्वारा शा-स्त्रप्रवृत्त्यर्थः। एवञ्चायमुपदेशः पाणिनेरन्यकृत इति स्पष्टमेवोक्तम्। मन्त्रोपदेश इतिवच्चात्रोपदेशपदप्रयोगः। अत एवास्य ज्ञाने सर्ववेद-पारायणजं पुण्यं फलमिति भाष्य उक्तम्। व्याकरणमुपक्रम्य 'वेदा-नां वेद' इति छन्दोगश्रुतिरप्येतत्परैवेति दिक्।

तत्प्रयोजनमाह। सञ्ज्ञार्थानीति। एतच्चोपपादितम्। सञ्ज्ञा-प्रणयनञ्च लाघवेन शास्त्रप्रवृत्त्यर्थमिति बोध्यम्। संज्ञार्थत्वोपपत्तये आह एषामिति। अकारश्चेति। तेन रप्रत्याहारसिद्धिः। अनन्त्यत्वा-त्पृथगुक्तिः। इदं तुल्यास्यसूत्रस्थकैयटानुरोधेन।

परे त्वस्याऽनुनासिकत्वे "अतोल्रा" (पा० सू० ७।२।२) इति सूत्रे पाणिनिर्लकारं नोच्चारयेत्। प्रत्याहारेणैव निर्वाहात्। किञ्चा-

---

श्वेति*। पाणिनिकर्तृकत्वशङ्कां वारयति *अत एवेति*। अन्यकर्तृक-त्वादेवेत्यर्थः। एतेन पाणिनिकर्तृकशास्त्रबहिर्भूतत्वमस्य स्पष्टमेव लभ्यते। अत एव 'मङ्गलार्थमादितो वृद्धिशब्दं प्रयुङ्क्ते' इति भाष्यं सङ्गच्छते। *एतच्चोपपादितमिति*। एतेषां क्रमबोधकत्वेऽपीत्यपिनेति शेषः। संज्ञा-प्रयोजनमाह *संज्ञेति*। *रप्रत्याहारेति*। "उरण्रपर" इतिसूत्रनिर्दि-ष्टेति शेषः। कैयट इत्युक्तिसूचितामरुचिम्प्रकाशयति *परेत्वित्यादिना*।

ननु "अतोल्रा" इति सूत्रेऽपि रप्रत्याहारनिर्देशो "रदाभ्यां" "वनो र च" इति सूत्रेऽपि रप्रत्याहारग्रहणापत्तिः। अतस्तथा निर्देशो रप्रत्या-हारानित्यत्वज्ञापनार्थः। न च "रदाभ्याम्" इत्यत्र फलाभाव इति वाच्यम्। "प्रफुल्तम्" इत्यत्र नत्वापत्तेः सुवचत्वात्। "वनो र च" इत्यत्र तु पक्षे ल-त्वप्राप्तिः स्फुटैव। किञ्च प्रत्याहारसिद्धिरित्स्वाधीना, तच्चानुनासिकत्व-प्रतिज्ञासमधिगम्यमिति, "अतोल्रा" इतिसूत्रेऽनुवाद्यसमर्पकेऽतोल्रिति पदेऽ-नुनासिकत्वप्रतिज्ञाया अकल्पनेऽपि न क्षतिरित्यरुचेराह *किञ्चास्येति*।

स्येत्सञ्ज्ञकत्वे बहुषु यणघटितसूत्रेष्वर्द्धमात्रालाघवानुरोधेन यमप्रत्याहारेणैव व्यवहरेत्। किञ्चानुबन्धानामच्प्रत्याहारे ग्रहणाभावे, 'आचारादप्रधानत्वाल्लोपश्च बलवत्तर' इति भाष्योक्तस्य तृतीयहेतोरव्यापकत्वापत्तिः। तव लोपस्य बलवत्त्वेऽपि हल्प्रत्याहारसिद्धेः प्रागच्पदार्थनिष्पत्त्यभावेनोपदेशेऽजित्यस्य वाक्यार्थाभावेन लणित्यका-

---

हशब्दशक्तिग्रहश्च रशब्दस्येव पाणिनीयव्यवहाराद्भविष्यतीति भावः।

ननु "अतोल्रा" इतिसूत्रे लकारोच्चारणेनानुनासिकमजनुबन्धमादाय प्रत्याहारः क्वचिदेवेति कल्प्यते। अत एव "रात्सस्य," "योचि" इत्यादौ न दोषः। यणशब्दे णकारोच्चारणञ्च चरितार्थमित्यरुचेराह *किञ्चानुबन्धेति*। अत्राच्प्रत्याहार इत्यज्घटितपाठः प्रत्याहारेऽनुबन्धाना मित्यस्य सूत्रचतुष्टयानन्तरं पाठेन भाष्यकृतोपन्यासात् कृतः। वस्तुतस्तु 'अइउण्' इत्यादिसूत्रघटकानुबन्धानां तत्तद्व्यक्तित्वेन पक्षत्वे पक्षतावच्छेदकानां नानात्वापत्तिः। अतोऽनुबन्धपदव्यवहारविषयतात्वावच्छिन्नविषयता पक्षतावच्छेदिका बोध्या। प्रत्याहारघटकत्वाभावः साध्यः। आचारादिति हेतुः। सचाचारः पाणिनेः कृतिरेव। न चाचार्यकृतेः पक्षसमवायेनासत्वात् स्वरूपासिद्धिरिति वाच्यम्। तादृशकृतेः स्वसाध्यप्रत्याहारप्रयोज्यकार्यजनकत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्सदृशत्वसम्बन्धेन हेतुत्वात्। 'सुध्युपास्य' इत्यत्रेकारे स्वसाध्ययणूरूपकार्यजनकत्वसम्बन्धेन स्थितायाः कृतेस्तत्सम्बन्धावच्छिन्नाभाव "तृपिमृषि कृषेः" इति सूत्रघटके कृषिशब्दावयवककारेऽनुबन्धसदृशेऽस्तीति हेतोः पक्षसत्त्वोपपत्तेः। वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वं हेतुतावच्छेदकसम्बन्धाप्रसिद्धिरिति हेत्वन्तरमाह *अप्रधानत्वादिति*। अत्र प्रधानत्वं प्रत्याहारग्रहणफलकमहेश्वराभिप्रायविषयत्वम्। तदभावः स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको हेतुः। हेत्वन्तरमाह *लोपश्च बलवत्तर इति*। लोपस्य बलवत्त्वञ्च प्रत्याहारसिद्धिप्राक्कालिकप्राप्तिकर्तृत्वम्। बलवत्तरलोपप्रतियोगित्वं हेतुरिति फलितम्। *तृतीयहेतोरव्यापकत्वापत्तिरिति*। न च हेतोः साध्यव्याप्यत्वमेवानुमापकत्वप्रयोजकं, नतु व्यापकत्वमित्येतदसङ्गतमिति वाच्यम्। पक्षतावच्छेदकाव्यापकत्वापत्तिरित्यर्थात्। पक्षतावच्छेदकावच्छेदेनानुमितौ हेतौ पक्षतावच्छेदकव्यापकत्वावगाहिपरामर्शस्यैव हेतुत्वादिति भावः। तदेतदुपपादयति *तवेत्यादि*। मत इति शेषः। एतदुपपादनमित्संज्ञालोपयोरभावेनेत्यन्तेन। नन्वेवमपि यस्यानुनासिकत्वं तस्य लक्ष्येऽसत्वादेव न दोष इत्यत आह

रस्येत्सञ्ज्ञालोपयोरभावेन प्रत्याहारेषु जातिग्रहणपक्षस्यैव भाष्यकृता सिद्धान्तितत्वेन हलप्रत्याहारे लणित्यकारप्रवेशे "मामाँस्त्रायस्वे"इत्यत्रा-नुनासिकपक्षेऽनुस्वारापत्तिर्दुर्वारा । सोऽस्तीत्यादौ सुलोपाद्यापत्तिश्च । अत एव, 'प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न'इत्यनेन प्रत्याहारे वर्णसमाम्नाये य एतेऽक्षु अज्बोधकसूत्रेषु प्रत्याहारार्था अनुबन्धाः क्रियन्ते तेषामज्ग्रहणेन ग्रहणं कस्मान्नेत्यर्थकेनाचप्रत्याहारे शङ्का कृ-

---

*प्रत्याहारेष्विति* । अत एव सर्वतकाराणां झल्पदबोध्यत्वोपपत्तिः । अनुनासिकत्वसमानाधिकरणजातिविवक्षायामप्याह *मामाँस्त्रायस्वेति* । अनितेः क्विबन्तस्य 'आन्' इति सम्बुद्ध्यन्तम् ।

ननु तर्हि ह्रस्वत्वविशिष्टजातिनिर्देश एवास्तामत आह *सोऽस्तीति* । ननु यण्घटितसूत्रेष्वित्यादिनोपपादितलाघवन्न सार्वत्रिकम् । "इणो यण्" "इग्यण" इत्यादौ तदभावात् । किञ्च "इको यणचि" इतिसूत्रे यप्रत्याहारेण निर्देशे प्रक्रियागौरवम् । कचिन्मात्रालाघवसत्त्वेऽपि "जातेरस्त्रीविषयादयोपधात्," "ङ्य्र्यः," "योचि" इत्यादीनां विषयविभागानुपपत्तिः। तथा सति "जातेः" इतिसूत्रे प्रत्याहारग्रहणे 'महाशूद्री' इत्यत्र ङीषभावापत्तिः । "ङ्य्र्य" इत्यत्र प्रत्याहारनिर्देशे वकारादेरण्यादेशत्वप्रसङ्गः । एवं "योचि" इत्यत्राप्यनिष्टं बोध्यम् । एवञ्च तृतीयहेतोरव्यापकत्वापत्तिरित्यसङ्गतम् । पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वादिति चेन्न । "उदात्तस्वरितयोः," "संयोगादेरातः" "उदात्तयणोहल्पूर्वादि" त्यादौ लाघवाय प्रत्याहारेणैव निर्दिशेदित्याशयात् । यत्र तु न लाघवं तत्रान्यार्थं लणित्यत्र कृतेन णकारानुबन्धेनैव निर्देशोऽस्तु । "जातेः" इतिसूत्रे प्रत्याहारग्रहणन्तु न शङ्कास्पदम् । तादृशप्रत्याहारग्रहणस्य भाष्येऽदर्शनात् । "कष्टाय" इतिनिर्देशस्यैव सत्त्वान्न "ङ्य्र्य" इत्यत्रापि तथा शङ्का । "योचि" इत्यत्रापि न प्रत्याहारसम्भावना । पूर्वोत्तरसूत्रयोः प्रत्याहारबोध्याविधायकतयात्रापि तत्साहचर्येण तथा कल्पनात् । पक्षतावच्छेदकसामनाधिकरण्येनेत्यादि तु न शङ्कास्पदम् । अपितु "अइउण्" इत्यादिसूत्रचतुष्टयनिर्दिष्टानामनुबन्धानामुक्तानुगतधर्मपुरस्कारेणैव पक्षतावच्छेदकावच्छेदेनैव साध्यसिद्धेर्भाष्याभिप्रेतत्वात् । न च "सोस्यादिः" इति निर्देशेनाकारे सुलोपाभावज्ञापनात्सोस्तीत्यस्य सिद्धिरिति वाच्यम् । तेन निर्देशेनानेकक्लिष्टकल्पनापेक्षया लण्सूत्राकारस्यानुनासिकत्वाभावकल्पने लाघवसम्भवात् । *अतएव* । लण्सूत्राकारस्यानित्संज्ञकत्वादेव । *प्रत्याहार इ-

ता, न हल्प्रत्याहारे। भाष्ये चाइउणित्यादिसूत्रचतुष्टयोपादानेनै-वास्य प्रवृत्तिर्दर्शिता तत्र प्राधान्यं प्रत्याहारेषु ग्रहणार्थत्वरूपं। हल्षु च तथोपदेशस्तेषाम्। अक्षु तु स्वराणामेव तथोपदेश इति प्राधान्या-त्तेषामेव सञ्ज्ञित्वमिति भाष्ये स्पष्टम्।

न च हशादिप्रत्याहारे टग्रहणस्यापत्तिरिति वाच्यम्। हकारा-दिषु पुनः पुनरकारोच्चारणेन उच्चारणार्थवर्णरहितहलां तद्घटितप्र-त्याहारे ग्रहणाभावस्य वक्तुं शक्यत्वात्। तद्विषयप्रयोगाणामनभिधा-नाच्च। तस्मादस्यानुनासिकत्वमप्रामाणिकम्। "उरण्रपर" (पा०सू० १।१।५१) इत्यत्र लग्रहणं कर्त्तव्यमेव ऋलृवर्णयोः सावर्ण्यवदित्याहुः।

ननु हयेत्यादावकारोच्चारणेन तस्य हल्त्वप्रसङ्गोऽत आह—ह-कारादिष्विति। न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति इति' उच्चैरुदात्त (पा०सू०१।२।२९) इति सूत्रस्थभाष्यात्। 'एषा ह्याचार्यस्य शैली लक्ष्यते, यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति, अचोऽक्षु ह-लो हल्ष्विति प्रत्याहारेऽनुबन्धानाम्' इत्यत्र भाष्याच्चेति भावः। स्यादेतत्। "न विभक्तौ" (पा०सू०१।३।४) इत्यादेः सार्थक्याय "ह-

---

ति*। व्याख्यातमेतत्। *न हल्प्रत्यहार इति*। अन्यथा, अकारानुबन्ध-स्याविजातीयत्वात्तस्यापि हल्प्रत्याहारे ग्रहणशङ्कासमाधानयोः कर्तुमुचित-त्वादिति भावः। *टग्रहणस्यापत्तिरिति*। तथा च' रामष्टीकत' इत्या-दौ "हशि च" इत्युत्वापत्तिः। *पुनः पुनरकारोच्चारणेनेति*। न चा-कारोच्चारणाभावे व्यञ्जनोच्चारणासम्भव इति वाच्यम्। हयादिवर्णानां संयुक्तानामुच्चारणसम्भवात्(१)। *तद्घटितेति*। उच्चारणार्था-वर्णसहितहल्घटितेत्यर्थः। न च 'को यष्टिकष्टीकत' इत्यादिकवि-प्रयोगदर्शना तद्विषयप्रयोगाणामदर्शनादित्यनुपपन्नमिति वाच्यम्। 'तं पालयाम्प्रथममासपपात पश्चात्' इत्यादिमाहकविप्रयोगतुल्ययोगक्षेमत्वा-त्। उपसंहरति *तस्मादिति*। अस्य लण्सूत्रस्थाकारस्य। न चो-च्चारणार्थानामित्संज्ञाया वक्ष्यमाणत्वादिदमसङ्गतमिति वाच्यम्; हकारा-दिस्थाकारवदस्याप्युच्चारणमात्रफलकत्वान्निवृत्त्यभावेऽपि क्षत्यभावात्। प्रत्याहारे हकारादिघटिते ग्रहणापत्तिस्तु न। पुनः पुनरुच्चारणात्। अप्रधानत्वाद्वा। तदेतद्वक्ष्यति। *न पुनरन्तरेणाचमित्यादिना*।

लन्त्यम्" (पा०सू० १।३।३) इत्यस्योपदेशेऽन्त्यं हलिदित्यर्थस्यावश्यकत्वेन 'हलन्त्यम्' 'आदिरन्त्येन' (पा०सू० १।१।७१) इत्यनयोः परस्परापेक्षत्वेनान्योन्याश्रयाल्लकारे इत्सञ्ज्ञामबोधयित्वा हलामित्सञ्ज्ञाबोधनं पाणिनेरयुक्तम् । न च हयवरेत्यादेरावृत्त्या शषसरित्यन्तं समुदायमुद्दिश्य हलित्यनेन हल्सञ्ज्ञापि विधेयेति वाच्यम् । दशसूत्रावृत्तौ गौरवात् ।

ननु उपदेशे इदन्त्यम्, अच्, अनुनासिक, इति सूत्रत्रयमस्तु । अजित्यनन्त्यार्थम् । तृतीयेऽजित्यनुवृत्तिसामर्थ्यादचेदिद्भवति तर्ह्यनुनासिक एवेति नियमाश्रयणाद्रुमभृतौ न दोषः । योगविभागसामर्थ्याच्चानन्तरस्येति न्यायं बाधित्वा व्यवहितस्यापि तेन नियमः । "मिदचोऽन्त्यात्" (पा०सू० १।१।४७) इति ज्ञापकाच्च न विपरीतनियमः । एवञ्च हल्ग्रहणमपि व्यर्थमन्योन्याश्रयश्च न । न च पाणिनिसूत्रभेदे पारायणादावदृष्टहानिः। तथा च तत्र तत्र भाष्यं—'अपाणिनीयन्तु भवति' इति वाच्यम् । कल्प्यमानन्यासस्य लघुत्वेऽस्यादोषत्वात् । "सूत्रभेदं तमुपाचरन्ति यत्र तदेवाऽन्यत् सूत्रं क्रियते भूयो वा, यदि तदेवोपसंहृत्य क्रियते नासौ सूत्रभेद" इति "अच उपसर्गात्तः" (पा०सू० ७।४।४७) इति सूत्रभाष्यात् । 'नासौ सूत्रभेद' इत्यस्य दोषायेति शेषः । सति सम्भवे दृष्टद्वारैवाङ्गानामदृष्टार्थत्वमिति तदाशयः अत एव तत्र तत्र ज्ञापकपरसकलभाष्योच्छेदो नेति चेन्न ।

योगविभागनियमज्ञापकाश्रयणेऽतिगौरवात् । न हि वर्णाभिव्यक्तिजनककण्ठाद्यभिघातगौरवमेवाऽऽदर्त्तव्यं, न तु ज्ञानजनकमनोव्या-

---

*न विभक्तावित्यादेरिति* । आदिनाजादिपदघटितविधिसूत्राणाम्परामर्शः। अन्योन्याश्रयाभावाय शङ्कते *नन्विति* । रुप्रभृताविति 'रुशब्द' इति निर्दिष्टधातुप्रभृतिष्वित्यर्थः। अशोकवनितान्यायेनैतदुक्तिः। अनुनासिकश्चेद्भवति तर्ह्यजेवेति विपरीतनियमशङ्कां वारयति *मिदचोन्त्यादितीति* । *अस्यादोषत्वादिति* । अपाणिनीयत्वस्यादोषत्वादित्यर्थः अत्रैव भाष्यसम्मतिमाह *सूत्रभेदमिति* । *उपाचरन्ति* वर्णयन्ति । *तदेव* । तदर्थकमेव । *भूयः* । तदपेक्षयाधिकम् । *तदाशयः* । पूर्व-

पारगौरवमिति राजाज्ञास्ति। न च सह—आसमन्ताद् एति—गच्छतीति सहेता—मध्यमो वर्ण इत्यर्थ इति, अतो नान्योन्याश्रय इति वाच्यम्। अन्योन्याश्रयतत्परिहारादीन् वदता भाष्यकारेण कटी, वी, इत्यत्र प्रश्लिष्टात्, ईङ्गतौ इत्यत, इणगतौइत्यतश्च सहाऽऽङ्पूर्वात्तृजभावबोधनात्। किञ्च योगमर्यादया तत उक्तर्थालाभः। आसमन्तादिसस्यानन्विता-र्थत्वं व्यर्थत्वञ्च। रूढौ तु न मानम्। अतः सूत्रावृत्त्या तं परिहरति-हलन्त्यमिति।

भाष्येऽप्यन्योन्याश्रयमाशङ्क्य "हलन्त्यमित्सञ्ज्ञं भवति लकारश्चे-द्भवतीति वक्तव्यम्' इत्युक्त्वा एकशेषनिर्देशाद्वा सिद्धम्। हल् च हल् च हल्, हलन्त्यम् इत् इत्युक्तम् । तस्यायं भावः=कृतेकशेषेण हलपदेन सम्बन्धसामान्यषष्ठ्याः समासः। अन्त्यशब्दस्य च द्वन्द्वान्ते श्रूयमाणस्येवोभयत्रान्वयः ' एवञ्च हल्सूत्रान्त्यं, हलरूपान्त्यं चेति बोधः। अन्त्ये 'राहोः शिर' इतिवत् षष्ठीति। अत्रोच्चारयितुरेकशेषनिर्देशो बोद्धुस्त्वावृत्त्या बोधः। हसमीपो लकार इत्, हलरूपान्त्यश्चेति कैयटोक्तव्याख्यायां तु, हल् इत्सञ्ज्ञम्भवति हलन्त्यश्चेदिति वदेदित्यूह्यम्।

नन्वेवमपि "न विभक्तौ" (पा०सू०१।३।४) इति विभक्तिपद-

---

पक्षाशयः। *राजाज्ञास्तीति*। एवञ्च पूर्वोक्तव्याख्याने गौरवमिति भावः कस्यचिन्मतं दूषयति। *न चेति*। अत्र सहेताशब्द उद्देश्यबोधकः। एवञ्च सहेतो मध्यमो वर्णः। 'अन्त्येन सहितो य आदिस्तदभिन्न' इति वाक्यार्थः। अत्र सहेताशब्दो योगरूढः। सह युगपत् एति बुद्धिविषयो भवतीत्यर्थः। *मध्यम इति*। रूढ्यर्थप्रदर्शनम्। मतं खण्डयति। *अन्योन्याश्रयेत्यादिना*। अत्र, 'इण् गतौ' इत्यतश्चेत्यपपाठः। "एत्येधत्यूठ्सु" इतिवृद्ध्यापत्तेः। एतद्धि बाध्यसामान्यचिन्तया पररूपमात्रस्य बाधकम्। अत एव 'अवैहि' इति वृद्धिघटितस्य तेन साधुत्वमुक्तम्। तच्च बाध्यविशेषचिन्तामाश्रित्य दीक्षितैर्दूषितमिति त्वन्यत्। संज्ञापूर्वकविधेस्तेनानित्यत्वस्वीकारात्तद्रीत्या वा एतदभिधानम्। एवञ्च योगरुढिसद्भावे मानाभाव इति भावः। अत्र भाष्यमपि साधकमित्याह *भाष्येऽपीति*। कैयटकृतं भाष्यव्याख्यानं दूषयति। *हसमीप इत्यादिना*। *इत्यूह्यमिति*। सामीत्यस्य षष्ठ्यर्थत्वाभाव इत्यपि बोध्यम्। *नन्वेव-

बोध्यसुप्तिङ्बोधो हलन्त्यमिति वाक्यार्थबोधोत्तरं, तद्बोधश्चापवादवाक्यार्थबोधोत्तरं, इत्यन्योन्याश्रयस्तदवस्थ एवेति चेन्न । अपवादवाक्यार्थबोधात्पूर्वं पदपदार्थोपस्थितावुत्सर्गवाक्यार्थबोधे प्रतिबन्धकाभावात् । न ह्यभावज्ञाने प्रतियोगिज्ञानस्येव प्रतियोगिज्ञानेऽभावज्ञानस्य कारणता कस्यापि सम्मता । प्रतियोगिज्ञानं विना निषेधवाक्यार्थाऽसम्भवाच्च ।

"पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गा" इत्यस्य त्वयं भावः। लक्षणैकचक्षुष्कस्य(स्तु) उद्देश्यतावच्छेकावच्छिन्ने सर्वत्रोत्सर्गकृतसंस्कारबुद्धावुत्सर्गापवादयोर्विषयव्यवस्थानापत्त्या 'भुक्तवन्तम्प्रति मा भुङ्क्था' इति वाक्यस्येवापवादशास्त्रवैयर्थ्यापत्त्या चापवादशास्त्रपर्यालोचनेन तद्विषयलक्ष्यसंस्कारं निर्णीय तदविषयं तत्तल्लक्ष्यं तत्तद्विषयवाक्योपप्लवद्वारोत्सर्गेण संस्करोति, अन्यथा विकल्पापत्तिरिति ।

यद्यपि 'भुक्तवन्तं प्रति' इति न्यायो लुगादिना जातनिवृत्तेर्व्यभिचरितः । तथापि तत्राप्यनुत्पत्तिरेवेति न दोषः । न्यायानङ्गीकारेऽपि विकल्पापत्तेः सत्त्वाच्च । 'अभिनिविशन्त' इत्यस्य बुद्ध्यारूढा भवन्तीत्यर्थः । लक्ष्यैकचक्षुष्कस्तु तत्तच्छास्त्रपर्यालोचनं विनापि अपवादविषयं परित्यज्योत्सर्गेण लक्ष्यसंस्कारञ्जानीते । तस्यापिशास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्तेः । तदुक्तम् "प्रकल्प्य चापवादविषयं तत उत्सर्गः प्रवर्तत" इति । प्रकल्प्य=परित्यज्य ।

यत्तु प्रकल्प्य चेत्यस्यायमर्थो यथा "न संप्रसारण" (पा०सू०६।

---

मिति* । पूर्वोक्तान्योन्याश्रयपरिहारेऽपि । *अभावज्ञाने प्रतियोगिज्ञानस्यैवेति* । विशेषणतावच्छेदकप्रकारकज्ञानस्य कारणत्वादिति भावः । ननु 'पूर्वं ह्यपवादा' इति भाष्योक्त्याऽपवादवाक्यार्थज्ञानस्य कारणतां ब्रूम इत्यत आह *पूर्वमिति* । *अपवादशास्त्रपर्यालोचनेन* अपवादशास्त्रार्थबोधेनेत्यर्थः । *तदविषयमिति* । अपवादशास्त्राविषयमित्यर्थः एतेन लक्ष्यसंस्कारे क्रमापेक्षा न तु वाक्यार्थबोधापेक्षाऽइति भाव । *यत्त्विति* । यथा "न सम्प्रसारणे सम्प्रसारणम्" इत्यपवादशास्त्रप्रवृत्तिः स्वयोग्यविषये भवति, तथा "परिचिन्त्य पूर्वमुत्सर्गः "इग्यणः" इत्यादिः प्रवर्त्तते" इत्यर्थः । एतेनान्त्यस्य सम्प्रसारणमिति फलितम् । एतत्कैयटोक्तव्याख्यां

१।३७)इति वचनात् परस्य यणः पूर्वं सम्प्रसारणं पूर्वस्य तु तन्निमित्तः प्रतिषेध' इति अभ्यस्तसञ्ज्ञासूत्रे कैयटः। तन्न। "न सम्प्रसारण" इति सूत्रस्थभाष्यविरोधात्। तत्र हि, 'एतदेव ज्ञापयति परस्य न पूर्वस्येति। यद्वा सम्प्रसारणाश्रयस्य(१)प्रतिषेध' इत्याद्युक्तम्। न हि न्यायेन सिद्धे एवमुक्तिरुचिता। तस्मान्न्यायस्य मदुक्त एव विषय इति बोद्ध्यम्। यदपि 'अपवादवाक्यार्थं विना नोत्सर्गवाक्यार्थ' इति तदर्थः। तदपि न। उक्तयुक्तेः। "न विभक्तौ तुस्माः" इति शास्त्रे तुस्मपदार्थज्ञानमात्रेण पादीनामेव तद्विषयत्वाभावबुद्ध्या तेषु हलन्त्यसूत्रप्रवृत्त्या सुप्तिङ्रूपविभक्तिपदार्थज्ञानं सुलभमिति दिक्। अत्राप्युपदेश इति सम्बद्ध्यते तद्बललभ्यमाह- सूत्र इति॥

आदिरन्त्येन। आदिरिति किम्? अन्त्यशब्देन पूर्वेषामाक्षेपादिगादिप्रत्याहारेऽकारादिग्रहणं मा भूदिति। एवमादिशब्देन परेषामाक्षेपादिणादिप्रत्याहारेषु ञादीनाङ्ग्रहणं मा भूदिति। आदिः, अन्त्येन,इत्युभयोपादाने तु अयमादिरन्त्यो वेत्युक्तेऽवशिष्टमपि किञ्चिदस्तीति नियमेन प्रतीतेः। 'परस्मिन् सति यस्मात्पूर्वो नास्ति स आदिः' 'पूर्वस्मिन् सति यस्मात्परो नास्ति सोऽन्त्य' इति अकारादिग्रहणे इकारणकारादीनामाद्यन्तत्वस्यैवानापत्तेः।

---

खण्डयति *तन्नेति*। भाष्यविरोधमुपपादयति। *न हीति*। *न्यायेन*। पूर्वं हीति न्यायेन। पूर्वोटङ्कितान्योन्याश्रयासम्भवमुपपादयति *न विभक्ताविति*। *पदार्थज्ञानमात्रेणेति*। मात्रपदेन वाक्यार्थज्ञानव्यवच्छेदः। अत्रापीति*। आवृत्तहलन्त्यमिति सूत्रे इत्यर्थः।

*आदिरिति किमिति*। अन्त्यपदेन तल्लाभः सम्भवतीति भावः। न चाक्षिप्तस्य शाब्दबोधविषयत्वं पदानुपस्थितत्वान्न सम्भवतीति वाच्यम्, 'प्रविश पिण्डीम्' इत्यत्रेव सम्भवात्। आदेरेवाक्षेप इत्यत्र माना-

---

(१) सम्प्रसारणाश्रयस्येति। सम्प्रसारणं निमित्तत्वेनाऽऽश्रयो यस्य सः संप्रसारणाश्रयः। संप्रसारणनिमित्तकपूर्वरूपस्येत्यर्थः।

अयं भावः "संप्रसारणाच्च" इतिसूत्रं न कर्तव्यं किन्तु तत्स्थाने "संप्रसारणादसंप्रसारणे" इति सूत्रं कर्तव्यम्। एवञ्च "नसंप्रसारणे" इति सूत्रमपि न कर्तव्यं भवति। अर्थश्च संप्रसारणात्संप्रसारणरूपाज्भिन्नेऽचिपरे पूर्वरूपमेकादेशो भवति। संप्रसारणरूपेऽचि तु यथायणादिकं प्राप्नोति तत्सर्वं भवति। एवञ्च युवन् अस् इत्यत्र वकारस्य संप्रसारणे पूर्वरूपे सवर्णदीर्घेकृते पुनः यकारस्य संप्रसारणे इकारस्य याणि च यून इति सिध्यति। एष यूनः पश्येत्यत्र फलभेदवारणायतस्यानभिधानं कल्पनीयमिति।

अत्राद्यन्ताभ्यामवयवत्वेन बोधकाभ्यां स्वघटितः समुदाय आक्षिप्तः सञ्ज्ञी। तस्य च लक्ष्ये प्रयोगाभावात्प्रत्येकं सञ्ज्ञित्वम्। अन्त्यस्य तु न तत्कार्यम्। तस्येत्सञ्ज्ञालोपाभ्यामपहारात्। एतत्फलितकथनमेव भाष्ये, मूले, च 'स्वस्य च रूपस्य' इति। स्वमित्यनुवृत्तिपरत्वेन व्याख्यानन्तु हेयमेव। अनुवृत्तौ फलाभावात्। इतेति किम्? ञमङणनेति णकारादिभिः प्रत्याहारो मा भूदिति। सहग्रहणाच्च समुदाय एव सञ्ज्ञेति समुदायादेवेक इत्यादौ विभक्त्युत्पत्तिर्नादिमात्रात्। न चान्त्यस्येत्सञ्ज्ञालोपाभ्यामपहारादादिरन्त्येनेत्यसङ्गतम्। सूत्रेष्वित्सञ्ज्ञायामपि इगादिशब्देषु तदभावात्। अन्त्येनेत्यस्येदन्त्यसदृशेनेत्यर्थात्। व्यक्तिपक्षे एवमेवौचित्यात्। सादृश्यमूलिकैव चात्र तत्त्वप्रत्यभिज्ञेत्याहुः। "अचि श्नुधातु" (पा० सू०६।४।७७) इति सूत्रे इण इत्येव सिद्धे य्वोरिति निर्देशादिण् परेणैवेति लणसूत्रे भाष्ये स्पष्टम्।

हलन्त्यम्। अत्र पदद्वयं। समासेऽन्त्यशब्दस्य पूर्वनिपातापत्तेः। कर्मधारययोग्यपदानां समासाभावस्य सूत्रकारशैलीसिद्धत्वाच्च। यद्यपि सर्वोऽपि हल् तं तं समुदायं प्रत्यन्त्यो भवति, तथाप्यन्त्यपदोपदेशपदाभ्यां प्रत्यासत्त्याऽज्ञातस्वस्वरूपज्ञापकोच्चारणविषयसमुदायं प्रत्यन्त्य इह गृह्यते। अत एव मकारेत्सञ्ज्ञापरित्राणार्थः स्थमोरुकारश्चरितार्थः। समुदायोपदेश एव सर्वत्र ऋषितात्पर्येणाऽवयवानां नान्तरीयकतया तेषामज्ञातस्वस्वरूपज्ञापकत्वाभावात्। उपदेशेऽन्त्यमिति। तत्र विद्यमानमन्त्यमित्यर्थः। तेन "अइउण्" इत्यादौ णादीनां

---

भाव इत्युत्तराभिप्रायः। अन्यतरानुपादाने इदन्त्यसहितः पूर्वः परसहित आदिरित्यपि सम्भाव्येत। स्वरूपमित्यनुवृत्तिपरव्याख्यानं निष्प्रयोजनमित्याशयेनाह *अत्राद्यन्तेति*। प्रत्याहारप्रसङ्गादाह *अचिश्नुवेति*।

*पूर्वनिपातापत्तेरिति*। विशेषणत्वात् *सूत्रकारशैलीसिद्धत्वादिति*। प्रायोवादोऽयम्। "अपृक्त एकाल्" निपात एकाच्" इत्यादौ समासदर्शनात्। *अत एवेति*। समुदायान्त्यग्रहणादेव। *इत्संज्ञापरित्राणार्थमिति*। इत्संज्ञायाः परित्राणार्थमित्यर्थः। "सुप्सुप" इति पञ्चम्यन्त-

हल्प्रत्याहारसिद्ध्युत्तरं तत्सिद्धिः। अन्यत्र त्वन्तरङ्गत्वात्प्राय उ-च्चारणेनाभिव्यक्तस्य तदव्यवधानेनैवेत्सञ्ज्ञा। पदार्थोपस्थितिरनुब-न्धविनिर्मुक्तस्यैव(१)। 'उपदेशोत्तरकालेत्सञ्ज्ञा' इति "नाज्झलौ" (पा०सू०१।१।१०) इति सूत्रभाष्यात्। 'घुट्' इत्यादौ सानुबन्धाद्वि-भक्तिस्तु तेनैवानुबन्धविनिर्मुक्तोपस्थितेस्तस्यैवार्थवत्त्वात्सुलभा। इत्स-ञ्ज्ञाकार्यं तु यत्र सञ्ज्ञा तत्राऽऽनर्थक्यात् तदुपस्थाप्य एव। स्पष्टञ्चेदं "तित्स्वरितम्"। (पा०सू०६।१।१८) इत्यत्र कैयटे।

वैयाकरणे चित्स्वरस्तु न। तस्येच्चकारसदृशत्वेऽपि तत्त्वाभावा-त्। विभक्त्यादिसञ्ज्ञापि सूत्रान्तर्गतानामेवेति तत्रैव, "न विभक्तौ" इत्यादीनां प्रवृत्तिः। अत एव "इदम इश्" (पा०सू०५।३।३) इत्यादा-वणत्वात्सवर्णग्रहणं प्राप्तम्, "अप्रत्यय" इत्यनेन निषिध्यत इति

पूर्वपदकः समासः। *तत्सिद्धिरिति*। इत्संज्ञासिद्धिरित्यर्थः। अत्रा-द्योच्चारणकाले विद्यमानस्यापि णकारस्येत्संज्ञाविधायकशास्त्रजन्यवा-क्यार्थबोधान्न प्राप्तिरिति भावः। *अन्यत्र*। सनादिप्रत्ययावयवनादौ। *पदार्थोपस्थितिरिति*। अनुबन्धविनिर्मुक्तस्यैव पदार्थस्योपस्थितिरि-त्यर्थः। चैत्रस्य गुरुकुलमितिवत् सापेक्षत्वेऽपि समासः। एतादृशे विषये प्रायःपदं "जसःशी" इत्यादिस्थले विलम्बेनैव सेति सूचनाय। यद्यपि "नाज्झलौ" इति सूत्रे उत्तरत्वमात्रमुक्तम्। तथापि तदव्यवहितत्वसहितं ज्ञेयम्। अधिककालव्यवायसाधकाभावात्। ननु तदुपस्थाप्ये चेदित्कार्यं तदा 'वैयाकरण' इत्यत्र चिदुपस्थाप्यैकारस्य चित्कार्यप्रसङ्गोऽत आह *वैयाकरण इति*। नन्वनुबन्धविनिर्मुक्तस्य पदार्थस्योपस्थितिस्वीकारे सुब्विषयेऽन्तरङ्गत्वादित्संज्ञा स्याद्। एवञ्च जसादावित्संज्ञायां लोपे च कृते जकारमात्रस्य विभक्तिसंज्ञाप्रसङ्गः। "न विभक्तौ" इति सूत्रस्य प्रा-ग्दिशीये चारितार्थ्यादत आह *विभक्त्यादिसंज्ञापीति*। आदिना प्रत्य यादिसंज्ञापरिग्रहः। अत्रार्थे भाष्यसम्मतिमाह *अत एवेति*। अनुबन्ध विनिर्मुक्तोपस्थितिस्वीकारादेव। तत्सूत्रभाष्ये 'अप्रत्यय' इति किमर्थम्। "सनाशंसभिक्ष उः" अत्यल्पमिदमुच्यते 'अप्रत्ययादेशटित्किन्मित' इति वक्तव्यम् इत्युक्त्वा, आदेशोदाहरणम् "इदम इश्" इत्युपन्यस्तम्। न चानुबन्धविनिर्मुक्तपदार्थोपस्थितिस्वीकारे णित् कर्मण्यण्सूत्रघटकः स

(१) पदार्थोपस्थितिरनुबन्धविनिर्मुक्तस्यैवेति। ननु 'उपदेशोत्तरकालेत्संज्ञा' इति नाज्झलीय-सूत्रभाष्यात् उपदेशाऽनन्तरमित्संज्ञायाः सत्वेऽपि लोपकर्तव्यत्वे प्रमाणाभावेन पदार्थोपस्थित्यादिकथन-मसगतमिति चेत्। न। एति गच्छतीति इत् इत्यन्वर्थसंज्ञयैव लोपसिद्धिः। किंच इत्संज्ञोत्तरं 'प्रत्याहार' इति भाष्यात्प्रत्याहारकरणात्प्रागेवानैमित्तिकत्वेनान्तरङ्गत्वाल्लोपे न पदार्थोपस्थित्यादिकथनं संगच्छते इति।

भाष्योक्तं सङ्गच्छते। यत्तु "अनेकाल्" (पा०सू०१।१।५५) सूत्रे 'इशि शिद्ग्रहणाभावेऽपि शित्करणादेव सर्वादेशत्वम्' इति भाष्ये उक्तम्। तस्येत्सञ्ज्ञकशकारकरणाद् भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्वमिसर्थ इति न तद्विरोधः।

अत्र केचिद्। अनुबन्धा अनेकान्ताः अनवयवाः। यो ह्येकान्तः स कदाचित्तत्रोपलभ्यत एव। अयन्तु न तथा, तदर्थभूते विधेये कदाप्यदर्शनात्। "हलन्त्यम्" (पा०सू०१।३।३) इत्यत्रान्त्यशब्दः परसमीपबोधकः। 'चुटू' इत्यादावादिशब्दः पूर्वसमीपबोधकः। "अनेकाल् शित्" (पा०सू०१।१।५५) इत्यादौ समीपे सामीप्यमूलकावयवत्वारोपेण बहुव्रीहिः। स्पष्टश्चेदम् "उपदेशेऽच्" (पा०सू०१।३।२) इति सूत्रे भाष्ये, "मपर्यन्तस्य" (पा०सू०७।२।९१) इति सूत्रे कैयटे च। तेन डाणलादाविशादौ च न दोषः। अत एव "उपदेशेऽच्" इति सूत्रे उपदेशग्रहणं चरितार्थम्। तद्धि 'अभ्र आं अटित' इत्यादावादितिश्चेतीट्प्रतिषेधाभावाय। अनेकान्तत्वे हि तत्प्राप्तिरित्याहुः।

---

न प्रत्ययो, यश्चैतदुपस्थाप्यः प्रयोगस्थः प्रत्ययो न स णिदिति कुम्भकार इत्यादिरूपासिद्धिरिति वाच्यम्। यथा द्वौ रेफौ यस्मिन्निति व्युत्पत्त्या भ्रमरपदस्य द्विरेफपदव्यवहार्यत्वेऽपि शब्दार्थयोस्तादात्म्यान्मधुव्रतेऽपि द्विरेफपदप्रवृत्तिस्तथोपस्थापकस्य सूत्रघटकस्य णित्त्वादुपस्थाप्येऽपि णित्त्वमित्याशयात्। यद्यनुबन्धरहितस्य पदार्थस्योपस्थितिस्तदाऽऽदेशस्यापि शकाररहितस्योपस्थितिः स्याद्। तथा च शिद्ग्रहणस्य ज्ञापकत्वोपपादनपरभाष्यविरोध इत्यत आह। *यत्त्विति*। अनुबन्धप्रसङ्गादाह *अत्र केचिदित्यादि*। अत्र अनुबन्धविषये। एकाऽन्तशब्दोऽवयववाची। तत्रावयववति, कदाचिच्छेदनानन्तरम्, तत्रानुपलम्भात्। तथा च यस्यावयवित्वमभिप्रेतं तत्र कदाप्यनुपलम्भेन नावयवत्वमिति भावः। तथाच अनुबन्धा अवयवत्वाभाववन्तः, अवयवित्वाभिमतविषयितासमानाधिकरणविषयिताकत्वाभावादिति पर्यवसन्नम्। ननूपस्थापकस्यापि णित्त्वन्न स्यादन्त्यशब्दस्य तत्राप्रवृत्तौ 'हलन्त्यम्' इति सूत्रप्रवृत्त्यसम्भवादत आह *हलन्त्यमित्यत्रेति*। अत्र पक्षे ज्ञापकमाह *अत एवेति*। अनुबन्धानामनेकान्तत्वादेव। *तत्प्राप्तिरिति*। "आदितश्च" इत्यत्रापि

परे त्वेकान्ता एव । शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्च । अनवयवो हि काकादिरेकजातीयसम्बन्धेन गृहवृक्षादिषूपलभ्यते । नैवमयम् । किञ्चानवयवत्वे णशकप्रसयादौ णादेरित्वानापत्तिः । प्रत्ययादित्वाभावात् । एवमन्त्यत्वाभावादिशादेः शस्येत्वानापत्तिः । उक्तार्थलाक्षणिकत्वे तु लक्षणैव दोषः। किञ्च दध्नचश्चकारवैयर्थ्यापत्त्याऽवयवत्वमेव न्याय्यम् । अत एव "वुञ्छण्कठच्" (पा० सू० ४।२।८०) इति सूत्रविहितके णित्त्वप्रयुक्तवृद्धिर्न । "तस्य लोप" (पा० सू० १। ३।९) इति भाष्ये एकान्तत्वमेव न्याय्यमित्युक्तेश्च । "उपदेशोऽच्" इतिसूत्रे उपदेशग्रहणन्तु स्पष्टार्थमेवेत्याहुः ।

सर्वत्रानुबन्धसहितनिर्देशे गुणविधौ "गुप्तिज्किद्"(पा० सू० ३।१। ५) इत्यादौ नकारेत्संज्ञकः सो भवतीत्यादिक्रमेण बोधः । अनुवादे "सन्यत" इत्यादौ च नकारेत्संज्ञके सशब्दे परे इत्यादिक्रमेण बोधः ।

---

समीपेऽवयवत्वारोपेणैव बहुव्रीह्युपपादनात् । सिद्धान्तमाह *परे त्वित्यादिना* । नन्वनवयवत्वसाधकहेतोरुक्तत्वात्कथमवयवत्वमिति वाच्यम् शास्त्रे तत्रोपलम्भादित्यनेनोक्तहेतोः स्वरूपासिद्धत्वोपपादनात् । *तत्र* । बोधके । एवञ्च वाच्यवाचकयोस्तादात्म्याद्वाचकविषयितासामानाधिकरण्यानुबन्धविषयितायां सत्त्वेन पक्षे हेतुतावच्छेदकावच्छिन्नाभावसत्त्वमक्षतमिति भावः । *अन्यत्र* । बोध्ये । अनवयववैधर्म्यमाह *अनवयवो हीति* । *एकजातीयेति* । संयोगेनेत्यर्थः । अनवयवत्वे बाधकमाह *किञ्चेति* । दोषान्तरमाह–*किञ्चेति* । नन्ववयवत्वे 'अभ्र आं अटित' इत्यत्रोक्तप्रयोजनोपपत्त्यभावादुपदेशग्रहणमनर्थकमत आह–*उपदेशोऽजितीति* । *स्पष्टार्थमिति* । ननूत्तरसूत्रेण 'अग्निचित्' इत्यादौ, तुक आगत्येत्यादौ चरितार्थस्येत्संज्ञाप्रवृत्त्यर्थमुपदेशग्रहणमस्त्विवति चेन्न । वक्ष्यमाणरीत्योत्तरसूत्रेऽप्यस्यानावश्यकत्वात् । न चावयवत्वसाधनावसरे यदवयवत्वमभिप्रेतं तदन्यस्मिन्ननुपलम्भस्य हेतुत्वं सूचितं तच्चायुक्तम् कर्मशब्दावयवककारस्य करणशब्दे उपलम्भादिति वाच्यम् । ककारव्यक्तिभेदेन यस्य ककारस्य कर्मशब्दावयवत्वन्तस्य करणशब्देऽसत्त्वात् । 'अनुबन्धविनिर्मुक्तस्य पदार्थस्योपस्थितिः' इति सिद्धान्ते विधिवाक्यस्य यादृशबोधजनकत्वन्तदाह–*सर्वत्रेति* । यत्त्वनवयवत्वपक्षे "माङो व्यतीहार" इति निर्देशो ज्ञापकः । लाघवं चात्र पक्षे । यत एतत्पक्षे 'नानुबन्धकृतमनेजन्तत्वम्' 'नानुबन्धकृतमसारूप्यम्' 'नानुबन्धकृतमनेका-

स्पष्टश्चेदं निष्ठासञ्ज्ञासूत्रे भाष्ये। अत एव "आटश्च"(पा०सू०६।७९०) इत्यत्यादेर्नासङ्गतिः। अन्यथा, 'यत्राट् सूत्रे तत्र नाच्परो, (१) नेष्यते चतत्र वृद्धिः यत्रप्रयोगे इष्यते वृद्धिस्तत्र नाऽऽडिति तदसङ्गतिः' स्पष्टैव। अन्त्यङ्किम् ? वाचालः । हलिकम् ? चिरिणोतीत्यादौ धातोरन्त्यस्य माभूत् ।

आद्योच्चारणमिति। आद्यमुच्चारणमित्यर्थः। भावे घञिति भावः। तच्च प्रत्यासत्त्यैतच्छास्त्रप्रवर्त्तकाचार्याणामेव । आद्यत्वञ्चाज्ञातस्वस्वरूपज्ञापकत्वम् । उपस्याऽऽद्यर्थत्वाद्दिशेरुच्चारणक्रियत्वात्। अत एव, एकाच उपदेशे इति सूत्रे कैयटेनोक्तमित्सञ्ज्ञाविधौ उच्चारणवचन उपदिशिर्गृह्यते इति । आदेच इति सूत्रेऽपि येषां स्वरूपज्ञापनायापूर्वमुच्चारणन्तेषामेवोपदेशव्यवहार इति । तत्र सूत्रे भाष्येऽपि, 'उद्देशश्च प्रातिपदिकानां नोपदेश' इति । प्रकृतसूत्रे भाष्येऽपि, 'प्रत्यक्षमाख्यानमुपदेश' इत्युक्तम् । तस्य चोक्त एवार्थः ।

---

त्वम्' इति परिभाषाणामनारम्भादिति । तन्न । दम्नचश्चकारवैयर्थ्यापत्त्या एकान्तत्वपक्षस्यैव पाणिनिसम्मतत्वात् । 'उभयमिदमनुबन्धेषूक्तमेकान्ता अनेकान्ता, इति, किं पुनरत्र न्याय्यम्, एकान्ता इत्येव न्याय्यम्' इति भाष्योक्तेश्च । "माङ" इति निर्देशेन श्रूयमाणोऽप्यनुबन्ध एजन्तत्वाविघातक इति कल्पनात् । "अनेकाल्शित" इति सूत्रे शिद्ग्रहणेनानुबन्धानामल्व्यवहारविषयत्वाभावकल्पनेन सर्वेष्टसिद्धेः ।अत एवानुबन्धकार्ये'ऽनल्विधौ" इति निषेधो न प्रवर्त्तत इति प्रवादस्याप्युपपत्तिः । टित्किदित्यादिबहुव्रीहेरप्युपपत्तिः । *स्पष्टश्चेदमिति* । तत्र हि "निष्ठासंज्ञायां समानशब्दप्रतिषेधो "लोतो गर्त" इति, 'निष्ठासंज्ञायां समानशब्दानाम प्रतिषेधः, निष्ठासंज्ञा कस्मान्न भवति, अनुबन्धोऽन्यत्वकर, इति चेन्न 'लोपात्', इति शङ्कायां 'यद्यपि लुप्यते, जानाति त्वसौ सानुबन्धकस्येयं संज्ञा कृता' इत्युक्तम् । एतेनानुबन्धलोपेऽपि विधिसूत्रे तत्तदनुबन्धोपादानात्तदुपलक्षिते कार्यं भवतीति स्पष्टमेवोक्तम् । *वाचाल इति* । अत्र लस्येत्वे लित्स्वरापत्तिरन्तरङ्गत्वात् । चित्त्वङ्किमर्थमिति चेत् । पर्यायार्थं स्यात् । अथवा 'वाचाल' इत्येतत्साधकसूत्रसाध्य'वाचाट' इत्यास्योपलक्षणम् । अत्र हि टस्येत्वे ङीबापत्तिः । *अत एवेति* । दिशेरुच्चारणार्थत्वादेव । हलन्त्यमिति सूत्रे भावघञन्तोपदेशपदानुवृत्तिं सूचयन् सिद्धान्तमाह—

---

(१) तत्र नाच्पर इति । ननु "आणूनयाः" इत्यत्राटः परे अच्त्वाभावेऽपि "आडजादीनाम्" इत्यत्राटः परे अच्त्वस्य सत्वेन कथं वृद्धिर्न इत्यत आह—नेष्यते च तत्र वृद्धिरिति ।

परे तु, 'उपदेश इति किमर्थम् ?' अभ्रआं अपः, कः पुनरुद्देशोपदशयोर्विशेष' इति भाष्ये उक्तम्। यदि प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देशस्तर्हि "लृटः सद्वा" (पा०सू०३।३।१४) निष्ठा इति विहितानां शतृशानच्क्तक्तवतूनामवयवस्येत्सञ्ज्ञानापत्तिः ; तथा, "राजसूयसूर्य"(पा०सू०३।१।११४) चित्याग्निचित्य" (पा०सू०३।१।१३२) इत्यादिनिपातनानुमितक्यबादीनां पादेरित्त्वानापत्तिः। "वदः सुपि" (पा०सू०३।१।१०६) इत्यत्रोच्चारितस्तु नैतत्संबन्धी। अत एव 'तस्यापत्यमत इञ्' इति न्यासेऽन्यशब्दसंबद्धाऽपत्यार्थस्यानुक्तरूपं शेषत्वमुक्तमाकरे। तस्मादत्र सूत्रे उपदेशशब्देनोद्देशस्यापि ग्रहणं वक्तव्यम्। एवम् 'अभ्रआंअपः' इत्यादावपि प्राप्नोतीति तेषां संग्रहोऽस्य व्यावृत्तिर्येन भवति स विशेषः क इति प्रश्नः। तत्संग्रहार्थमेव लोकव्यवहारेणापि तयोः सङ्कीर्णत्वमुपपाद्यैतद्व्यावृत्तये तत्सङ्ग्रहाय च "उपदेशनेऽजनुनासिक इति वक्तव्यं, किं पुनरुपदेशनं शास्त्रम्" इत्युक्तं वार्त्तिककृता। तत्र शास्त्रपदेन प्रयोगशासनकरणभूता 'धातुप्रातिप-

---

*परे त्वित्यादिना*। *उपदेशे किमिति*। पूर्वसूत्र एव किमर्थमिति प्रश्नः। अत एव सूत्रद्वयविषये उपदेशपदस्य प्रत्यक्षाख्यानपरत्वे दूषणाभिधानसङ्गतिः। *प्रत्यक्षमाख्यानमिति* । अत्राख्यानं शब्दोच्चारणम्। तत्र प्रत्यक्षत्वाव्यभिचार इतीन्द्रियजन्यतावच्छेदकविषयताश्रयविषयकत्वम्। विषयता च व्यापारानुबन्धिनी। तथा चेदृशार्थस्य यदाख्यानं स उपदेशः। *लृटः सद्वेत्यादि*। अत्र सदादिशब्दजन्योपस्थितिविषये तादृशविषयत्वाभावः स्पष्ट एव। सदादिसंज्ञानुबन्धविनिर्मुक्तस्येति यदि ब्रूयात्तदाप्याह-*तथा राजसूयेत्यादि*। अत एव *एकसम्बन्धिनोऽन्यसम्बन्धित्वाभावादेव। न च राजसूयेत्यादिनिपातनेनैवानुबन्धलोपो भविष्यतीति वाच्यम्। निपातनेनापूर्वेत्सञ्ज्ञाकल्पनापेक्षया हलन्त्यमित्यत्रोपदेशपदासम्बन्धकल्पने लाघवमिति भावः। *लोकव्यवहारेणेति* । अनुवाकप्रश्ने इषेत्वाद्यनुवाकाख्याने उद्दिष्टो मेऽनुवाक इति । मार्गप्रश्नेऽमुष्मिन्नवकाशे हस्तदक्षिणो ग्राह्य इत्याद्याख्याने उपदिष्टो मे पन्था इति व्यवहारादिति यावत्। एतेन सर्वेषु पूर्वोक्तेष्वित्त्वसिद्धिः, अनिष्टे तदभाव इति विषयविभागालाभः सूचितः। वार्त्तिके 'उपदेशने' इत्यनन्तरमुच्चारित इत्यध्याहारो बोध्यः। *प्रयोगशासनकरणेति*। अत्र करणशब्दोपादानेन परिनिष्ठितभिन्नस्य ग्रहणमिति सूचितम्। "लृटः सद्वा" इत्यादिषु सञ्ज्ञास-

दिकप्रत्ययनिपाताऽऽगमादेशा' हलन्त्यसूत्रे व्यवसितपदार्थत्वेन भाष्ये उक्ता गृह्यन्ते । एवञ्च तत्सङ्ग्रहः, 'अभ्रआं' इत्येतद्व्याावृत्तिश्च सिद्धा । तस्य च वार्तिकस्य बाहुलकात्करणे घञा प्रत्याख्यानं भगवता कृतम् ।

किञ्च हलन्त्यसूत्रे भावघञन्तोपदेशपदानुवृत्तौ "भवतष्ठक्छसौ" (पा०सू० ४।२।११५) इत्यादिविहितेष्वित्सञ्ज्ञानापत्तिः । परस्य सत्त्वेन कादेरन्त्यत्वाभावात् । यदि तूपदेशे प्रत्ययत्वादिविशिष्टान्त्य इत् इत्यर्थ उच्यते तदोपदेश इति व्यर्थम् । अन्त्यपदसामर्थ्येनैव तल्लाभात् । अत एवात्र सूत्रे उपदेशग्रहणस्यानुबन्धा अनेकान्ता इत्यस्थितपक्षे 'अभ्र आं अटित' इति प्रयोजनमुक्तं, न तूत्तरार्थमित्युक्तम् । न च करणसाधनोपदेशशब्दानुवृत्त्या सिद्धे हलन्त्यसूत्रे "व्यवसितान्त्यमिति वक्तव्यं, के पुन र्व्यवसिता धातुप्रातिपदिकप्रत्ययनिपातागमादेशा" इति वार्तिकानुत्थानमिति वाच्यम् । समुदायद्वाराऽन्यत्रस्यांप्युपदेशकरणत्वात्तदन्त्यस्यापि लोपापत्तिरित्याशयात् । भाष्यकृता चान्त्यग्रहणसामर्थ्येन प्रत्याख्यातम् ।

तत्रानुबन्धविशिष्टानां धातुत्वादि तु धातुत्वादियोग्यघटितत्वाद् बोध्यम् । निपातानां द्योतकत्वेन ब्राह्मणवसिष्ठन्यायेन च पृथग् ग्रहणम् । 'व्यवसितत्वञ्च धातुत्वादिना परिच्छिन्नत्वात्' इति कैयटः ।

---

ञ्जिभावबोधकेऽनुबन्ध उच्चारित एव । राजसूयेत्यादिष्वनुन्धरहितानुमानमिति भावः । *हलन्त्यसूत्रे व्यवसितपदार्थत्वेनेति* एतेन तत्सूत्रे उपदेशपदासम्बन्धः सूचितः । तत्सम्बन्धे दोषमप्याह-*किञ्चेति* । *अत एव* । हलन्त्यसूत्रे उपदेशपदप्रयोजनाभावादेव । *अत्र सूत्रे* । उपदेशेऽजिति सूत्रे । *व्यवसितान्त्यमिति* । धातुत्वादिना परिच्छिन्नान्त्यमित्यर्थः । *अन्त्यग्रहणसामर्थ्येनेति* । अत्त्वादिव्यावृत्त्यर्थमन्त्यग्रहणं चरितार्थमिति चिन्त्यमेतदिति । तदेव चिन्त्यम् । "षः प्रत्ययस्य, चुटू" इति सूत्रारम्भेणादेर्हलो यदीत्त्वं भवति तदोक्तस्थलेष्वेवेति कल्पनात् । ननु न धातुलोपसूत्रभाष्ये, 'धातुग्रहणं किम् ? लूञ् लविता, पूञ् पविता' इत्यनेनानुबन्धलोपोत्तरमेव धातुसञ्ज्ञेत्यस्य लाभाद्धातुत्वादिना परिच्छिन्नान्त्यस्येत्त्वमित्यनुपपन्नमत आह-*तत्रानुबन्धेति* । पूर्वोक्तार्थे वार्तिकान्तर-

एवञ्चोदश्विदादिप्रातिपदिकान्त्यस्यापि लोपः प्राप्नोतीति "प्रातिपदिकानां प्रतिषेधो वाच्योऽकृत्तद्धितान्तानाम्" इति वार्त्तिककृतोक्तम्। कुम्भकार इत्यादौ अपवादविषयपरिहारेणोत्सर्गप्रवृत्तेः पूर्वं प्रातिपदिकत्वे णादिलोपो न स्यादिति अकृदित्यादि । तच्च 'फलाभावान्नेत्सञ्ज्ञा' इत्यादिना भाष्ये प्रत्याख्यातम् । अत्राद्योच्चारणार्थकोपदेशपदानुवृत्तौ त्वस्य वार्त्तिकस्यानुत्थानमेव स्यात् । 'उद्देशश्च प्रातिपदिकानां नोपदेश' इति "आदेच" (पा०सू० ६।१।४५) इति सूत्रभाष्ये उक्तेः । एतद्भाष्यैकवाक्यतया पस्पशाह्निकान्तस्थे 'अग्रहणप्रातिपदिकानामुपदेशः कर्त्तव्यो मञ्चको मञ्जक इति मा भूत्' इति भाष्ये उपदेशशब्दो ग्रहणं कर्त्तव्यमित्यर्थकः। तच्चानुवादरूपमेव सन्देहनिवर्त्तकमिति बोद्धव्यम् ।

नन्वेवं "तस्मिन्निति निर्दिष्टे" (पा०सू० १।१।६६) इति सूत्रे षष्ठीप्रकल्पकत्वं तस्येति पक्षे "गुप्तिज्किद्भ्य" इत्यादावपि षष्ठीप्रक्लृप्त्यापत्तिः, । न च 'सनः सनेवादेशो भविष्यतीति बाधकाभाव' इति वाच्यम् । 'उपदेशे इत्युच्यमाना इत्सञ्ज्ञा न प्रकल्पते' इत्युक्तं भाष्ये, तद्विरुद्ध्येतात्रोपदेशपदाननुवृत्ताविति चेन्न । तस्यैकदेश्युक्तित्वेनासाधकत्वात् । तथा हि । तत्र, "ङमो ह्रस्वादचि" (पा०सू० ८। ३।३२)इत्यादौ यत्र सप्तमी पञ्चमी चेत्युभयं निर्दिश्यते, तत्र किं पूर्वस्य कार्यमथ परस्येति सन्देहे 'परत्वानवकाशत्वाभ्यां पञ्चमीनिर्दे-

---

सम्मतिमाह-*एवञ्चेति*। *उदश्विदादीति*। आदिना 'शकृत्' इत्यस्य सङ्ग्रहः। एतावव्युत्पन्नाविति कैयटः । *कुम्भकार इत्यादाविति*। ननु पूर्वमित्सञ्ज्ञा ततः प्रातिपदिकसञ्ज्ञेति क्रमात्कथमत्र प्रतिषेधप्राप्तिरत आह-*अपवादेति*। यदि चोदकेन श्वयति वर्द्धते इति व्युत्पत्तिसिद्ध उदश्विच्छब्द इत्युच्यते तदापि द्वितीयस्याव्युत्पन्नत्वमेव । न चास्यापि "शकेर्ऋतिन्" इत्युणादिसूत्रनिष्पन्नत्वमिति वाच्यम्। तथाप्युपदेशेऽन्त्यत्वं तकारस्य नेत्यभिप्रायात् । *प्रत्याख्यातमिति*। न चोणादिप्रत्ययान्तानामव्युत्पत्तिपक्षे राजन्नित्यादौ नकारस्येत्त्वव्यावृत्त्यर्थमस्यवार्तिकस्यावश्यकत्वम् । न च फलाभावः। नित्स्वरस्यैव फलत्वादिति वाच्यम् । "भीह्री" इति सूत्राल्लितीत्यत्रेव प्रत्ययादित्यस्यानुवृत्त्या सप्तम्या विपरिणामेन चेष्टसिद्धेः । *अग्रहणेति*। गणादावपठितानामित्यर्थः । उपदेशपदना-

शो बलवान्' इति सिद्धान्तिनोक्तम्। तत एकदेशिना 'यथार्थं वा षष्ठीनिर्देशः कर्त्तव्य' इति समाधानान्तरमुक्तम्। यथाविषयं प्रागुक्तेषु कार्यिणः षष्ठ्या निर्देष्टव्या इति तदर्थः। तेषु सप्तमीनिर्देशस्य क्वचित् पूर्वत्र क्वचिदुत्तरत्राऽऽवश्यकत्वेनोभयनिर्देशे गौरवेणैवैकदेश्युक्तिः।

ततः परेणैकदेशिना षष्ठीपदानुवृत्त्या तस्मिन्नित्यादेरेव षष्ठीप्रकल्पकत्वमाश्रित्य 'यथार्थं वा षष्ठी'इत्येकदेश्युक्तिः प्रत्याख्याता। षष्ठीपदानुवृत्तौ गौरवादुभयोः प्रकल्पकत्ववारणाय परत्वानवकाशत्वयोः "एकः पूर्वपरयोः" (पा०सू० ६।१।८४) इति पूर्वपरग्रहणस्य युगपत्प्रकल्पकत्वाभावे ज्ञापकस्य चावश्यकत्वाच्चेयमप्येकदेश्युक्तिः। ततः पूर्वेणैकदेशिना तत्पक्षे 'गुप्तिज्'इत्यादौ दोषः शङ्कितः। ततः षष्ठीप्रक्लृप्तिवादिनैकदेशिनोक्तम्। 'स्यादेष दोषो यदीत्सञ्ज्ञा आदेशं प्रतीक्षेत'। तत्र खलु कृतायामित्सञ्ज्ञायां लोपे च कृते आदेशो भविष्यति, उपदेश इति हीत्सञ्ज्ञोच्यते इति। एवञ्च त्वदुक्तिर्व्याहतेत्याशयः। तदग्रे उपदेशपदाननुवृत्तिमभिप्रेत्य "अथवा नानुत्पन्ने सनि षष्ठी प्रक्लृप्त्या भवितव्यम्, यदा चोत्पन्नः सन् तदा कृतसामर्थ्या पञ्चमीति प्रक्लृप्तिर्न भविष्यति" इति समाधानान्तरं कृतं। तत्र 'परत्वविशिष्टस्य सन उत्पादने पञ्चम्या उपक्षयात् प्रवृत्त्यन्तराभावान्नास्ति तस्याः प्रकल्पकत्वम्' इति तदर्थं कैयट आह। एवञ्च प्रकृतसूत्रस्थस्य सूत्रार्थप्रतिपिपादयिषया प्रवृत्तस्य भाष्यवार्त्तिकस्यैकदेश्युक्तत्द्भाष्यबलेन प्रौढिवादत्वकल्पनं नोचितं लक्ष्यासिद्धेश्च।

"अइउण्" इत्यादीनामपि क्रमबोधकत्वेनार्थवत्वात् प्रातिपादकत्वम्। चित्रङः "चोः कुः" (पा०सू०८।२।३०) इत्यादेरपि प्रातिपदिकत्वम्। "लोपश्च" इत्यत्रापि शकारस्य स्वरूपेणार्थवत्त्वात्

---

नुवृत्तौ भाष्यविरोधमाशङ्कते-*नन्विति*। *क्वचित्पूर्वत्रेति*। "इतोत्सर्वनामस्थाने" "गोतोणित्" इत्यादौ। *क्वचिदुत्तरत्र*: "ङमो ह्रस्वादचि ङमुण्नित्यम्" "मय उञो वोवा" इत्यादौ। *उभयोः प्रकल्पकत्वेति*। पर्यायेणेत्यादिः। "एकः पूर्वपरयोः" इत्यस्य युगपत्प्रकल्पकत्वाभावे ज्ञापकत्वाश्रयणम्। *लक्ष्यासिद्धेरिति*। "ठक्छसौ" इत्यादिविहितेत्यर्थः। स्वरीत्या व्यवसितान्त्यग्रहणे सूत्रस्य तत्राग्रहणात्कथं तदन्त्यस्येत्सञ्ज्ञेत्यत आह-*अइउणित्यादीनामिति*। *लोपश्चेति* तत्र लोप इति भिन्नं

प्रातिपदिकत्वम् । अनुबन्धानामेकान्तत्वे तु "लोपो वि" (पा०सू० ६।४।१।१८।) इत्यतो लोपग्रहणेऽनुवर्त्तमाने पुनर्लोपग्रहणात् सर्वादेशत्वं बोद्धव्यम् । 'एकाच उपदेश' इत्यत्रत्यः कैयटोऽपि चिन्त्य एव । अन्योऽपि तज्जातीयश्चिन्त्य एव । "एकाच उपदेशे" (पा.सू.७।२।१०) "आदेच उपदेशे" (पा०सू० ६।१।४५) इत्यादौ तु भावसाधन एवेति सुधियो विभावयन्त्वित्याहुः ।

ननु शास्त्रेऽनुनासिकोच्चारणाभावात् तत्त्वज्ञानं दुर्लभमत आह= प्रतिज्ञेति । प्रतिज्ञाविषयानुनासिकयत्नन्त इत्यर्थः । पाणिनीया इत्यस्य पाणिनिप्रभृतिप्रोक्ता वर्णा इत्यर्थः । प्रतिज्ञा चायमेवमिति कथनं वर्णानां तत्वज्ञापको व्यवहारश्च । ताभ्यां तज्ज्ञानं सुलभमिति भावः । प्रतिज्ञातारश्च प्रत्यासत्त्यैतच्छास्त्रकर्त्तार एवेति दिक् ।

निर्देशादिति । तेषां तत्र ग्रहणे हि नासिकादौ यणापत्तिरिति भावः।(१)न चेत्त्वविधानसामर्थ्याद् यणभावः सिद्धः।'तस्यापि प्रत्याहारेष्वनुबन्धाग्रहणज्ञापनद्वारैव यणभावकल्पकत्वौचित्यात्साक्षाच्छास्त्र-

---

पदं श् इति च भिन्नम् । पूर्वस्य विभक्तिसकारस्य श्चुत्वेन च शकारे द्विशकारको निर्देशः । व्यपदेशिवद्भावेन शकारस्य प्रातिपदिकान्तत्वादित्सञ्ज्ञा । अनेकान्तत्वपक्षे समीपेऽवयवारोपेण बहुव्रीहिस्वीकाराल्लोपस्य शित्त्वम् । मुख्यपक्षे त्वाह- *अनुबन्धानामिति* । ननु "एकाच उपदेश" इति सूत्रस्थस्येत्सञ्ज्ञाविधावुच्चारणवचन उपदिशिर्गृह्यत इति कैयटस्य का गतिरित्यत आह-*एकाच उपदेश इति* । *अन्योऽपि* । "उपदेशेत्वत" इतिसूत्रस्थः । वस्तुतोऽयमेव ग्राह्यः । "एकाच उपदेश" इति सूत्रस्थस्य कर्मणि व्युत्पन्नत्वात् ।

तत्त्वेति* । अनुनासिकत्वादित्यर्थः । *व्यवहारश्चेति* । "इदितो नुम्" इत्यादिव्यवहारश्चेत्यर्थः । *यणापत्तिरिति* । न च ककारस्याच्त्वेऽनुना-

---

(१) नच "इत्वविधानसामर्थ्यात्" इति सामर्थ्यवर्णनमयोग्यम् । साहचर्यपरिभाषयैव यण्वारणसम्भवात् ।

तथाहि—अनुबन्धककारादेः प्रत्याहारे ग्रहणेऽपि यणाद्यापादानमशक्यम् । यण्विधायकसूत्रे अच्त्वहल्त्व एतदुभयधर्मानाक्रान्तयण्साहचर्यात् यण्निमित्तभूतोऽप्यच् तादृशोभयधर्मानाक्रान्त एव गृह्यते । ककारस्य च उभयधर्माक्रान्तत्वेन ग्रहणाभावेन यणापत्त्यभावेन सामर्थ्यवर्णनं कथमिति चेत् । न । प्राचीनमते लण्सूत्रघटकाऽकारस्येत्संज्ञासत्वेन हल्प्रत्याहारे ग्रहणसम्भवेन 'यण् अच्त्वहल्त्वेतदुभयधर्मानाक्रान्त एव लभ्यत' इति वक्तुमशक्यत्वेन सामर्थ्यं विना यण् वारणासम्भवात् इति भावः ।

बाधकल्पनापेक्षयाऽस्यार्थस्यौचित्यात् । निर्देशादित्यस्य तन्मूलभूते-त्वविधानसामर्थ्यादित्यर्थ इति तात्पर्यम् । आदिना "तृषिमृषिकृषेः" (पा०सू० १।२।२५) एकः पूर्व (पा०सू०६।१।८४) इत्यादिसङ्ग्रहः ।

ननु "प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न" इति वार्त्तिके प्रत्याहारशब्दस्य वर्णसमाम्नाये प्रसिद्धेः प्रत्याहारेष्वितामित्यनुपपन्नमत आह=आदिरन्त्येनेतीति । वार्त्तिके तादर्थ्यात्ताच्छब्द्यमिति भावः ।

ऊकालोऽज्झ्रस्वदीर्घप्लुतः । (पा.सू.१।२।२७) कुक्कुटरुते उकारे एकद्वित्रिमात्रत्व-प्रसिद्धेरकारादयो नोक्ताः । ऊ इति एकद्वित्रिमात्राणां क्रमेण प्रश्लेषनिर्देशो व्याख्यानात् । तेन स्वोच्चारणकालसदृशो लक्ष्यते । स कालो यस्येति बहुव्रीहिः । तत्फलितमाह—उश्च ऊश्च उ३श्चेति । ननु उकालो ह्रस्व इति वाक्येऽणत्वात्सवर्णग्रहणे द्वित्रिमात्रयोरपि ह्रस्वसञ्ज्ञायां 'प्रदाय' 'प्रलूय' इत्यादौ "ह्रस्वस्य" (पा० सू० ६।१।७१) इति तुक् स्यादिति चेन्न । ऊ अच् इत्येवाज्ग्रहणसामर्थ्यात् उसदृशोऽजित्यर्थे सादृश्यस्य व्याख्यानात् कालकृतस्यैव ग्रहणमिति सिद्धे अधिकं कालग्रहणमुच्चारितसम्बन्धिकालसदृशकालस्यैव सञ्ज्ञी, न तु तेन गृहीत-सम्बन्धिकालसदृशकालस्यापीत्यर्थेनादोषात् । तदुक्तं भाष्ये—'यावत्त-

---

सिकशब्दावयवे ककारे यणादेशं बाधित्वा "यस्येति" लोप एव वक्तुमुचित इति वाच्यम् । यण्पदस्याज्निमित्तकार्यसामान्योपलक्षणत्वात् । यण्मात्रो-पादानन्तु "तृषिमृषिकृषेः" इत्यत्रादिपदग्राह्ये यण एव प्राप्तिरित्यभिप्रायेण । *तन्मूलभूतेति* । निर्देशमूलभूतेत्यर्थः ।

ननु वर्णसमाम्नाये अकारस्य प्राथम्यात् 'आकाल'इत्युचितमत आह—कुक्कुटेति* । *व्याख्यानादिति* । "विभाषा पृष्ट" इति हेः प्लुतविधाना-न्न मात्रिकस्यान्ते, "अतो दीर्घो यञि" इति दीर्घविधानान्न मध्ये प्रवेशः । द्वित्रिमात्रयोर्न द्विमात्रस्यान्ते प्रयोगः । "ओमभ्यादाने" इति लिङ्गादित्या-दिः । *सदृशो लक्ष्यत इति* । न चैवमुकारोच्चारणकालस्य स्वसदृशत्वाभा-वादुकारे एतत्सूत्रविधेयसंज्ञा न स्यादिति वाच्यम् । 'नञिवयुक्तम्' इति वाक्येऽन्यशब्दोपादानसामर्थ्येन सादृश्यस्य भेदाघटितत्वात् । वक्ष्यमाणा 'तुल्यस्य' इतिसूत्रव्याख्याकालिकी रीति र्वा बोध्या ।

ननूकाल इति वाक्ये उकारस्योद्देश्यत्वात् "अणुदित्"इतिसूत्रप्रवृत्तौ प्रथमसदृशस्य संज्ञात्रयप्रसङ्ग इत्याशङ्कते—*नन्विति* । अधुना यथास-ङ्ख्यन्तु "स्यतासी लृलुटोः" इतिवच्छब्दतः साम्यात् । न च स्वविषये

परकरणन्तावदत्र कालग्रहणम्' इति । न चाजिति वर्णग्रहणे जातिग्रहणस्य दुर्वारत्वात् 'तितउच्छत्रम्' इत्यत्र "दीर्घात्" (६।१।७५) "पदान्ताद्वा" (पा०सू०६।१।७६) इति तुगापत्तिरिति वाच्यम् । ज्ञापकसिद्धत्वेन तस्यासार्वत्रिकत्वात् । अन्तरङ्गत्वेन ह्रस्वत्वनिमित्तनित्यतुक एव प्राप्तेश्च । अज्ग्रहणं 'प्रतक्ष्य' इत्यादौ ह्रस्वस्येति तुग्व्यावृत्त्यर्थम् ।

उच्चैरु।(पा.सू.१।२।२९) नात्र श्रुतिकृतमुच्चैस्त्वमुपांशुप्रयोगेऽव्याप्तेः। श्रुतिप्रकर्षस्याव्यवस्थितत्वाच्च। किन्तु स्थानकृतम् । उच्चैरित्यधिकरणशक्तिप्रधानम् । अधिकरणत्वञ्चोच्चारणं प्रति । तच्च ताल्वादीनां सभागत्वे एवेत्याशयेनाह=ताल्वादीति । इदं प्राचामनुरोधेन । वर्णसमाम्नायेऽकारस्य प्राथम्यात् कण्ठादीति वक्तुमुचितम्(१) । एवमन्यत्रापि बोध्यम् । प्रयत्नप्रेरितो वायुर्यदोर्ध्वभागे प्रतिहतोऽचं व्यञ्जयति तदा स उदात्त इति भावः । अजिति । ऊकाल इत्यतस्तदनुवर्त्तते । उदात्तत्वादीनामज्धर्मताया एव लोकप्रसिद्धत्वेन हल्स्वरप्राप्तौ व्य-

---

दीर्घप्लुतसंज्ञाभ्यां बाधः । आकडारीयसंज्ञातिरिक्तत्वात् । न चैवमभ्यासस्य ह्रस्वविधाने दीर्घप्लुतयोरप्यापत्तिरिति वाच्यम् । "आपोऽन्यतरस्याम्" इति सूत्रेण विकल्पेन ह्रस्वविधानात् । प्लुतापत्तिस्तु न । 'प्लुतश्च विषये स्मृत' इति न्यायात् । 'वर्णग्रहणे जातिग्रहणम्' इति, "निपात एकाजनाङ्" इति सूत्रस्थैकग्रहणेन ज्ञापितत्वात् । *अन्तरङ्गत्वेन* । उकारमात्रस्य कार्यित्वात् ।

अव्यवस्थितत्वादिति* । नीचैरपि रोगार्त्तस्योच्चैः । उच्चैरपि कर्णापाटवयुक्तस्य नीचैः । एवं हि स वदति 'किमन्तर्दन्तकेमाधीशो' इति । *प्राचामनुरोधेनेति* । पस्पशास्थभाष्ये 'अनुक्षरन्ति काकुदम्' इत्युक्तत्वात्तदनुरोधेनेत्यर्थः । *लोकप्रसिद्धत्वेन* । यथात्रैव भाष्ये । ननु न केवलमत्र व्यवहार एव प्रयोजकः । किन्तु राजदृषदित्यादौ समासान्तोदात्तत्वमन्त्यहलोऽज्ग्रहणाननुवृत्तौ प्राप्नोतीत्यत आह *हल्स्वरेति* । "यतोनाव" इति सूत्रे नौप्रतिषेधाल्लिङ्गात् । अन्यथा यः स्वरयोग्यो नासावादिरिति तद्व्यर्थं स्यात् । नकारस्य स्वरस्तु वक्तुमशक्यो निमित्तस्य द्व्यच्कत्वस्य विनाशापत्तेः ।

---

(१) केचित्तु समासद्वयमत्र विवक्षणीयम् । एकः—तालुनः आदिः ताल्वादिः नाम कण्ठस्थानम् । तालुः आदि येषामित्यपरश्च । पुनश्चोभयोरेकशेषः ताल्वादिश्च ताल्वादिश्च ताल्वादि इत्याहुः । तन्न समीचीनम् । एवं रीत्या कथंचित् सम्भवेऽपि स्पष्टार्थत्वात् कण्ठादिसभागेषु इत्येव वक्तुमुचितमितिशेखराशयः ।

अनस्याविद्यमानत्वाच्चेदं स्वरूपकथनपरं बोद्धव्यम् । आये इति । यच्छब्दः "फिषोऽन्त" (फि० सू० १।१) इत्यन्तोदात्तः । जसस्सुप्त्वादनुदात्तः । "एकादेश उदात्तेन" (पा० सू० ८।२।५) इत्येकार उदात्तः ।

अर्वाङिति । अभिमुखवाच्यव्युत्पन्नं, फिषोऽन्त इत्यन्तोदात्तम् । आद्यस्य शेषनिघातेनानुदात्तत्वम् । अर्वन्तमञ्चतीत्यर्थे कृदुत्तरपदप्रकृतिस्वरेण वाऽन्तोदात्तत्वम् ।

एकस्मिन्नच्युदात्तानुदात्तयोर्धर्मिणोर्मेलनविरोधादाह=वर्णधर्माविति । बाहुलकादधिकरणे घञ् । अर्शआद्यजित्यन्ये । इयं त्रिसूत्री स्पष्टार्था लोकवेदयोरुदात्तादिव्यवहारस्य प्रसिद्धत्वात् ।

ह्रस्वग्रहणमिति । ह्रस्वपदघटितग्रहणमित्यर्थः । अतन्त्रमिति । स्वशास्त्रसङ्केतितरूपेणाबोधकमित्यर्थः । किन्त्वर्धमात्रारूपार्थबोधकमिति भावः । एवञ्च दीर्घादिष्वप्यर्धमात्रैवोदात्ता । इत आरभ्य नवसूत्र्या "अ अ" (पा० सू० ८।४।६८) इत्यतः प्रागुत्कर्षेणास्य त्रि-

---

*मेलनविरोधादिति* । न चोदात्तानुदात्ततादात्म्यं सम्भवत्येवेति वाच्यम् । धर्मिद्वयतादात्म्यस्य क्वाप्यदृष्टत्वात् । धर्मद्वयसमावेशस्तु सम्भवत्येव । यथा नानाजातीयरसवदवयवारब्धेऽवयविनि स्वाश्रयसमवेतत्वसम्बन्धेनावयवगतस्य रसस्यैव भानन्न तु चित्ररसाङ्गीकारस्तथात्रापि । अत एव "तस्यादित उदात्तमर्द्धह्रस्वम्" इति सूत्रं स्वरसतः सङ्गच्छते । तेनानुवर्त्तमानयोरुदात्तानुदात्तशब्दयोर्भावप्रधाननिर्देशपरत्वमावश्यकमिति भावः । न चानुवर्त्तमानयोरुदात्तानुदात्तपदयोर्लक्षणया धर्मपरत्वे तयोर्द्वन्द्वे ततो भावप्रत्यये उदात्तत्वानुदात्तत्वशब्दाद्वर्णधर्मवृत्तिधर्मबोधापत्तिरिति वाच्यम् । इतरेतरयोगद्वन्द्वेऽपि समूहस्यैव प्राधान्यस्य स्वीकारात्तं प्रति समूहिनो विशेषणतया द्वन्द्वोत्तरत्वप्रत्ययेन धर्मस्यैव प्रतिपादनसम्भवात् ।

"तस्यादित" इति सूत्रस्थार्द्धह्रस्वशब्दस्य ह्रस्वस्यार्द्धमित्यर्थकत्वे दीर्घप्लुतस्वरितयोरसङ्ग्रह इत्यत आह-*ह्रस्वपदघटितेति* । स्वशास्त्रसङ्केतितरूपेण,=अवयवव्युत्पत्त्या पूर्वोपदर्शितरीत्या लब्धेन धर्मेण । *अर्द्धमात्रारूपेति* तदुक्तम्भाष्ये 'अर्द्धह्रस्वशब्दोऽर्द्धमात्रायां रूढ' इति । हरिरप्याह—

प्रमाणमेव ह्रस्वादावनुपात्तं प्रतीयते इति ॥

*इत आरभ्येति* । "इमं मे गङ्गे यमुने' इति मन्त्रे मेशब्दमाश्रित्य

पाद्यामपि प्रवृत्तिः। सर्वश्चेदं भाष्ये स्पष्टम्। अर्धमुदात्तमिति वृत्तिस्तु सत्या सत्यभामेतिवद् व्याख्येया। उत्तरार्धमित्यस्य चार्धमात्रातोऽवशिष्ट उत्तरो भाग इत्यर्थः। वेद तु यथाप्रयोगं प्रातिशाख्यादृस्माच्च व्यवस्था।

तस्य चेति। अनुदात्तस्येत्यर्थः। उदात्तेति। उदात्तस्वरितयोः परत्वे सतीत्यर्थः। तयोः परत्वञ्चोपस्थितानुदात्तापेक्षयैव। अन्यत्र। उदात्तस्वरितयोः परत्वाभावे। प्रातिशाख्ये इति। लोके त्वनुदात्त एवेति भावः। ह्रस्वस्वरितमुदाहरति=क्वेति। "किमोऽत्" (पा०सू०५।३।१२) इत्यत् "क्वाति" (पा०सू०७।२।१०५) इति क्वादेशे, "तित्स्वरितम्" (पा०सू०६।१।१८५) इति स्वरितः। दीर्घं तमुदाहरति=रथानामिति। येऽरा इति।"स्वरितो वाऽनुदात्ते पदादौ" (पा०सू०१।२।६) इत्येकारः स्वरितः। "नोदात्तस्वरितोदयम्" (पा०सू०८।४।६७) इति निषेधस्तु "उदात्तादनुदात्तस्य स्वरित" (पा०सू०८।४।६६) इत्यस्यैवानन्तरस्येति न्यायात्। स्वरितपरमुदाहरति=शतचक्रमिति। अहेरित्यर्थेऽह्यः। वृत्रस्येत्यर्थः। "छन्दसि वा वचनं भाङ् णौ चङ्युपधायाः" इति वचनाद् गुणाभावः। उदात्तस्वरितयो-

---

सर्वेषां निघातः। इममित्युदात्तात्परस्यानुदात्त-मे-शब्दावयवैकारस्य स्वरितत्वे "स्वरितात्संहितायाम्" इति गङ्ग प्रभृतीनां प्रचयो यथा स्यादिति "देवब्रह्मणोरनुदात्त" इत्यनेन ज्ञापकेनैतत्काण्डस्य "अअ" इत्यतः प्राक् पाठस्य कल्पनमावश्यकम्। अन्यथा 'देवा ब्रह्माण' इत्यत्रामन्त्रिताद्युदात्तत्वे शेषनिघातेनानुदात्तस्य "उदात्तादनुदात्तस्य स्वरित" इतिसूत्रेण स्वरितस्य "देवब्रह्मणोरनुदात्त" इत्यनुदात्तत्वे कर्तव्ये सिद्धत्वात्तदसङ्गतिः स्पष्टैव।

*गुणाभाव इति*। अहिशब्दे "घेर्ङिति" इति सूत्रेण प्राप्तगुणाभाव इत्यर्थः। 'अहिरिव भोगैः' इत्यत्राद्युदात्तत्वेन पठ्यमानतया ग्रामादित्वाद् वृषादित्वाद्वा आद्युदात्तत्वं भवति। ततः शेषनिघातेनेकारस्यानुदात्तत्वे, उदात्तादनुदात्तस्य स्वरितत्वे तस्य यणि स्वरितस्थानिकयणः परत्वाद्विभक्त्यकारस्य स्वरितत्वम्। न च "उदात्तादनुदात्तस्य" इत्यस्यासिद्धत्वात्पूर्वमेव यणि न स्वरितस्थानिकत्वम्। छान्दसत्वेनासिद्धत्वाभावस्य कल्पनात्। यद्वा तत्राद्युदात्तपाठेऽपि प्रवृत्ते घृतादित्वादन्तोदात्ते तस्य यण्।

रिति स्वरितः । "उदात्तयणो हल्पूर्वात्" (पा०सू०६।१।१७४) इति तु न । छान्दसत्वात् । यच्छब्दः फिष इत्यन्तोदात्तस्तदेकादेशश्च वा स्वरितः । स इति । उदात्तादि ह्रस्वादिसञ्ज्ञक इत्यर्थः ।

मुख (पा०सू१।१।८) उच्यतेऽसौ वचनः । बाहुलकात् कर्मणि ल्युट् । मुखसहिता नासिकेति विग्रहः । तया वचन इति । साधनं कृतेति समासस्तदाह=मुखसहितेत्यादि । मुखेति किम् । यमानुस्वाराणामेव प्रसज्ज्येत । एवञ्च "आङोऽनुनासिक" (पा०सू०६।१।१२६) इत्यनुस्वारः स्यात् । नासिकेति किम् ? शक्तेत्यादावनुदात्तोपदेशेत्यादिना कलोपो मा भूत् । अष्टादशेति । यद्यपीदं न व्यक्तिपक्षे व्यक्तीनामानन्त्यात् । तथाप्यष्टादशधर्मवत्त्वमकारजातीयादेरित्यर्थः । ह्रस्वत्वादीनां तत्तत्समानाधिकरणोदात्तत्वानुनासिकत्वादीनाञ्च भेदमाश्रित्येदम्बोध्यम् । एवमग्रेऽपि ।

ऌवर्णस्येति । विवृतस्येत्यर्थः तेन "ऌति ऌवा" इति विधेयस्येषत्स्पृष्टस्य दीर्घत्वेऽपि न क्षतिः । दीर्घाभावादिति । अत एव "तुल्यास्य" (पा०सू०१।१।९) इति सूत्रे भाष्ये ऌतिसवर्णे इत्यनेन पक्षे द्विलकाराभावे "अकः सवर्णे" (पा०सू०६।१।१०१) इति दीर्घत्वे होतॄकार इति ऋकारघटितप्रयोगः सङ्गच्छते । ह्रस्वाभावादिति ।

---

यद्वा 'योऽह्य' इत्यत्र यच्छब्दः 'फिष' इत्यन्तोदात्तस्ततस्सो रुत्वोत्वे उदात्तानुदात्तयोरेकादेशस्योदात्तत्वे पूर्वरूपे स्वरितोऽन्यस्य वैकल्पिकत्वात्तदभावे "एकादेशउदात्तेन" इति पुनरुदात्तत्वे अहिशब्देकारस्य स्वरितत्वे तस्य यणि कृते स्वरितयणः परस्य सुपः स्वरितत्वसिद्धिः ।

*उदात्तयण इति* । स्वरिते उदात्तभागसत्त्वाभिप्रायेणेदम् । यदि च "उदात्तस्वरितयोः" इति सूत्रे स्वरितशब्दस्य पृथगुपादानात्स्वतन्त्रोदात्तस्यैवादेशो यण् उदात्तयण्पदेन गृह्यत इत्युच्यते तदा, नैतत्सूत्रप्राप्तिरिति बोध्यम् । किं बहुनात्र शास्त्रे यद्यदुदात्तसम्बन्धि कार्यं तत् स्वतन्त्रोदात्तसम्बन्ध्येव । अत एवात्र मूले 'तस्य चोदात्तस्वरितपरत्वे श्रवणं स्पष्टम्' इत्यत्रोदात्तात्पृथक् स्वरितशब्दोपादानं सङ्गच्छते । *यमानुस्वाराणामेवेति* ।

अनुस्वारयमानाञ्च नासिकास्थानमिष्यते ॥

इति शिक्षोक्तेः । स्वोक्तमष्टादशत्वं धर्मे व्युत्पादयति—*ह्रस्वत्वादी-

इदम् 'एओङ्'इत्यादौ भाष्ये स्पष्टम्। गानरोदनादौ चतुर्मात्रार्धमात्रादीनामुपलम्भेऽपि शास्त्रीयकार्ये उपयोगाभावाल्लोके प्रयोगेष्वप्रयोगाच्च नोक्ताः। अत एवानुदात्ततरस्यानुक्तिः। एकश्रुतेः स्वरान्तरत्वे इदमुपलक्षणं तस्या लोकेऽपि सत्त्वात्।

तुल्यास्य।(पा.सू.१।१।९) तुल्यावास्यप्रयत्नौ यस्येत्यर्थः। आस्ये भवमास्यं व्याख्यानात्। तच्च वर्णोपयोगित्वात्स्थानमेव। प्रयत्नस्य पृथगुपादानात्। प्रकृष्टो यत्न आभ्यन्तरः। तस्य वर्णोत्पत्त्यव्यवहितप्राग्भावित्वरूपप्रकर्षवत्त्वात्। जनकत्वं षष्ठ्यर्थः। तत्तत्कार्यगतभेदं स्थानेष्वारोप्य भेदघटिततुल्यत्वस्य निर्वाहः। वस्तुतः सादृश्यन्न भेदघटितमिति न कश्चिद्दोषः। स्पष्टञ्चेदं भाष्ये। तदाह—ताल्वादीति। शिक्षायाङ्कण्ठादीनाङ्कण्ठत्वादिनैव स्थानतोक्त्या तद्रूपेणैवाऽऽस्यभवशब्देन ग्रहणमिति तद्भागभेदमादाय नोदात्तादिषु सावर्ण्यभङ्ग इति बोद्ध्यम्।

यस्यैतद्द्वयं येन यदीयेनैतद्द्वयेन तुल्यमित्यर्थः। "यजुष्येकेषाम्" (पा०सू०८।३।१०४) इति निर्देशात् यावदास्यभवतुल्यत्वं ग्राह्यम्। अत एवैचोः सावर्ण्यमाशङ्क्य 'नैतौ तुल्यस्थानौ' इति भाष्ये समाहितम्। अत एव वलयोर्न सावर्ण्यम्। तेन, तद्वानासामित्या-

---

नामित्यादिना*। *अत एवेति*। दीर्घाभावादेवेत्यर्थः। *अत एवानुदात्ततरस्येति*। लौकिके प्रयोगेऽनुपलम्भादेवेत्यर्थः। *एकश्रुतेः स्वरान्तरत्व इति*। किमियमेकश्रुतिरुदात्ता आहोस्विदनुदात्ता इति विचारे "नोदात्ता" "यदयम् उच्चैस्तरां वा वषट्कार" इत्याह, अतन्त्रतरनिर्देशः; नानुदात्ता यदयम् 'उदात्तस्वरितपरस्य सन्नतर' इत्याह, अतन्त्रतरनिर्देश' इति भाष्ये स्पष्टम्।

*व्याख्यानादिति,* वायुसंयोगस्य ग्रहणे ह्रस्वदीर्घयोः सावर्ण्याभावापत्तौ "तुल्यास्य" इति रूपस्यैवानुपपत्तिरिति भावः। *भेदघटितेति*। लोके भिन्ने वस्तुनि सदृशव्यवहारस्य सुप्रसिद्धत्वात्। इदं सादृश्यस्योपाभानत्वाभिप्रेतप्रतियोगिभेदविशिष्टसाधारणधर्मरूपत्वमतेन। वस्तुतः सादृश्यमतिरिक्तमखण्डोपाधिः। अत एव केन धर्मेण सादृश्यम्? आह्लादकत्वेन, मुखे चन्द्रसादृश्यमिति व्यवहारः सङ्गच्छते। *यजुष्येकेषामितीति*। यत्किञ्चिदास्यभवग्रहणे इकारैकारयोस्तालव्य-

दौ "तोर्लि" (पा०सू०८।४।६०) इति न । अत एव प्रयत्नशब्देन यत्नमात्रग्रहणमिति पक्षे यत्किञ्चित्प्रयत्नैक्यमादाय सवर्णसञ्ज्ञेसर्थो "झरो झरि सवर्णे" (पा०सू०८।२।३९) इति सवर्णग्रहणेन ज्ञापकेन साधितो भाष्ये । तेन स्थानांशे यावत्स्थानसाम्ये इत्येव स्वारसिकोऽर्थ इति प्रतीयते ।

न च यावदास्यभवतुल्यत्वविवक्षणे प्रयत्नग्रहणं व्यर्थम् । प्रयत्नस्याप्यास्यभवत्वादिति वाच्यम् । ह्रस्वदीर्घयोः सावर्ण्यानापत्तेः । तयोर्जनकानामास्यभवानां वायुसंयोगानामतुल्यत्वात् । तस्मादास्यभवानाङ्कण्ठादीनामेव ग्रहणमिति बोधनाय तत्सार्थक्यात् । आस्येति किम् ? तप्ता । झरो झरीति लोपो मा भूत् । प्रयत्नेति किम् ? वाक्श्च्योतति । प्रेति किम् ? शचयोः श्वासाघोषविवाराख्यबाह्यप्रयत्नसाम्येन तत्रैव दोषात् । कस्य किं स्थानमित्याशङ्कायामाह-अकुहेति । यद्यपि सर्ववर्णोच्चारणे कण्ठव्यापार आवश्यकस्तथापि चकाराद्युच्चारणे ताल्वादिव्यापारोऽपि, तथा अकारादीनामुच्चारणे तु नेति भावः । कचयोस्तु न सावर्ण्यम् । यावत्स्थानसाम्याभावात् । भिन्नस्थानकथनवैयर्थ्यापत्तेश्च ।

अत्र कण्ठपदं कण्ठस्थानतत्समीपजिह्वामूलस्थानोभयपरम् । तेन, "कण्ठ्यावहौ" "जिह्वामूले तु कुः प्रोक्त" इति शिक्षया न विरोधः । जिह्वामूलीयपदस्य च वर्णविशेषे रूढिरिति न व्यवहारातिप्रसङ्गः । अत एवायोगवाहेषु जिह्वामूलीयगणनं भाष्ये । तत्तद्वर्णोत्पत्तेः प्राक् तत्तत्स्थानादौ जिह्वास्पर्शाद्यनुभवेन तत्तद्वर्णानां तत्तत्स्था-

---

त्वाविशेषात्सवर्दीर्घापत्तिरिति भावः । *सवर्णग्रहणेन ज्ञापकेनेति* । "हलो यमां यमि" इत्यत्रेव यथासङ्ख्यनिरासाय सवर्णग्रहणम् । तेन 'शिण्ढ' इत्यत्र डकारस्य ढकारे परे लोपसिद्धिः । प्रयत्नांशेपि चेत् यावत्तौल्यन्तदा डकारढकारयोर्यावत्प्रयत्नतौल्याभावाद्रूपासिद्धिः स्फुटैव । *अकाराद्युच्चारणे तु नेति* । एतेन यदुच्चारणे यद्व्यापार आवश्यकस्तत्तस्य स्थानमिति सूचितम् ।

'जिह्वामूले तु कुः प्रोक्त' इति शिक्षाविरोधं परिहरति-*अत्र कण्ठेति*। *अत एव*। रूढिस्वीकारादेव । यदि कवर्गोपि जिह्वामूलीयः स्या-

त्वनिर्णयेऽप्यकुहेत्यादिकथनं साधारणधर्मबोधनायाऽनुवादकम्। न त्वेतदेव कण्ठादिस्थानविधायकमिति भ्रमितव्यम् । विसर्जनीयपदेनात्र साहचर्यादकाराश्रयस्य ग्रहणम् । अत एव—

॥ अयोगवाहा विज्ञेया आश्रयस्थानभागिनः ॥

इति शिक्षया न विरोधः। दन्ता इति। दन्तसंयुक्तदेशा इत्यर्थः। अतो भग्नदन्तस्याप्युच्चारणं भवत्येव। उश्च पश्च ध्मायेते अनेन "तत्र भव" इति योगेनोपध्मानीयस्यौष्ठ्यत्वमित्याह–उपूपेति । रूढत्वाच्च न व्यवहारातिप्रसङ्गः । नासिका चेति । चेन स्वस्ववर्गानुकूलं ताल्वादि गृह्यते। अत एवैषां प्रातिशाख्ये नासिकायां भव इत्यर्थकनासिक्यशब्देन व्यवहारः। यत्तु—

"अनुस्वारयमानां च नासिकास्थानमिष्यते"

इति शिक्षोक्तेरेषां नासिकाकरणम्। किञ्च स्थानत्वे कङयोः सावर्ण्यानापत्तिः यावत्स्थानैक्याभावत्। यत्किञ्चित्स्थानैक्येन तत्त्वे तु ञमामपि परस्परं सावर्ण्यापत्तिरिति। तन्न। कण्ठादीनामपि करणत्वस्यैव "अस्यन्त्यनेन वर्णान्"इति भाष्यात्प्रतीतेः। स्थानत्वव्यवहारस्तु वर्णाभिव्यक्तिजनकताल्वादौ वर्णजनकवायुसंयोगाधारे वर्णाधारत्वारोपेण। तत्तत्स्थानजिह्वाग्रादिसम्बन्धेन वर्णोपत्त्या जिह्वाग्रादौ तत्सम्बन्धजनकप्रयत्नविशेषे स्पृष्टतादौ च करणत्वव्यवहारः। वर्णाभिव्यक्त्यनन्तरभावी सावर्ण्यानुपयुक्त आन्तरतम्यपरीक्षोपयुक्तश्च कण्ठविवरादिनिष्ठविकासा-

---

त्तदा तस्याक्षरसमाम्नाये प्रयोगसत्त्वाज्जिह्वामूलीयानान्तेषु गणनं विरुध्येतेति भावः। उश्चपश्चेतियोगेनोपध्मानीयपदस्य पवर्गेऽपि प्रसङ्ग इत्यत आह *रूढत्वाच्चेति*। *अत एव*। नासिकायाः स्थानत्वादेव । परमतं खण्डयितुं तन्मतमनुवदति–*यत्त्विति*। नासिकाकरणमिति शिक्षायां स्थानत्वोक्तिकरणत्वादेवेति तद्भावः। अस्यन्त्यनेनेति भाष्यीयव्यवहारात् स्थानमात्रे करणत्वं प्राप्नोति । कण्ठादौ स्थानत्वव्यवहारे यत्प्रयोजकं तन्नासिकायामपि समानमित्याशयेन खण्डयति–*तन्नेति*। वर्णानां नित्यत्वादाह–*वर्णाभीति*। वर्णजनकेत्यपि तदर्थकमेव।

*तत्सम्बन्धजनक इति*। एतेन व्यापारवत्त्वसूचनात्करणत्वव्यवहारो नानुपपन्न इति भावः। बाह्यप्रयत्नेषु यो व्यवहारस्तमुपपादयति–*वर्णाभीति*। 'भेदकत्वाद्गुणस्य' इति भाष्यीयव्यवहारात् यत्न इवानुना-

देशास्यबाहिर्देशावच्छिन्नकार्यस्य जनको यत्नो गुणशब्देनोच्यते। अकारादिनिष्ठानुनासिक्यस्य, भेदकत्वाद् गुणस्येत्यादौ गुणत्वेन व्यवहारस्तु कण्ठाद्यवच्छिन्नवायुसंयोगेनोत्पन्नेषु नासावच्छिन्नवायुसंयोगेन तद्रूपधर्मोत्पत्त्या। एवञ्च नासिकायास्तत्र गुणजनकत्वादनुनासिकाकारादीनां नोक्तं मूले। 'एकोऽयमात्मोदकन्नाम तस्यगुणभेदादन्यत्वं भवति। अन्यदिदं शीतमन्यदिदमुष्णम्' इति दृष्टान्तपरभाष्येण तथैव प्रतीतेः। आत्मात्र द्रव्यम्। उदात्तत्वादीनां गुणत्वव्यवहारस्तु सावर्ण्यानुपयुक्तत्वान्तरतम्यपरीक्षोपयोगित्वरूपसादृश्येनेति बोध्यम्।

ङादीनान्तु तद्गुणरहितस्वरूपानुपलम्भेन उभयावच्छेदेन वायुसंयोगोत्तरमेव स्वरूपोत्पत्त्या विनिगमनाविरहेणोभयोः स्थानत्वम्। "अनुस्वारयमानाञ्च" इति शिक्षायाञ्चेन ङादीनामपि सङ्ग्रह इति युक्तम्। अत एव कण्ठ्योऽकार इत्याद्युक्त्वा "नासिक्यान्नासिक्ययमानुस्वारानिति स्थानानि" इत्युक्तं प्रातिशाख्ये। 'नासिक्या ङञणनमा' इति तद्व्याख्यातारः। कङयोः सावर्ण्यन्तु भवत्येव। "आस्ये तुल्यदेशप्रयत्नम्" इति वार्त्तिके किमास्योपादाने प्रयोजनमिति प्रश्ने प्रयत्नविशेषणमास्योपादानमित्युक्त्वा तद्व्यावर्त्यत्वेन बाह्यप्रयत्नान् प्रदर्श्य, 'यथा तृतीयास्तथा पञ्चमा आनुनासिक्यमेषामधिको गुण' इति भाष्येण तस्य बाह्यप्रयत्नत्वोक्त्यात्र सूत्रे नासिकाया आस्यशब्देन, तत्रत्यप्रयत्नस्य च प्रयत्नशब्देनाऽग्रहणबोधनात्। नासिका आस्यबाह्येति वदतां मते तद्ग्रहणाभावाच्च। अत एव बाह्यप्रयत्नानुपक्रम्य—

---

सिक्यमपि। यथा गुणस्तथोपपादयति। *अकारादीति*। तथाच—यथा पटादौ गुणः पश्चादुत्पद्यते तथैतस्यापि पश्चादुत्पत्त्या गुणत्वव्यवहार इति भावः। ननूदात्तत्वादौ गुणव्यवहारस्य भाष्यादिस्थस्य का गतिरत आह *उदात्तत्वादीनामिति*। ङादीनामुभयं स्थानमित्युपपादयति। *ङादीनामिति*। नन्वेवं कङादीनां सवर्णसञ्ज्ञा यावत्स्थानसाम्याभावान्न प्राप्नोतीत्यत आह *कङयोः सावर्ण्यन्त्विवति*। इदमुपलक्षणञ्च आदीनाम्। आस्ये तुल्यदेशप्रयत्नमिति वार्त्तिककारीयन्यासे यद्यास्यशब्दः प्रयत्नविशेषणम्। तदा सौत्रत्वाद् द्वन्द्वो बोध्यः।

अमो ऽनुनासिका न ह्रौ नादिनो हझषः स्मृताः ।
ईषन्नादा यणश्चैव श्वासिनस्तु खफादयः ॥
ईषच्छ्वासांश्चरो विद्याद्

इत्युक्तं शिक्षायाम् । नादेति संवारघोषयोरुपलक्षणं । श्वासेति विवाराघोषयोः, । न ह्रावित्युपलक्षणम् ऐचः सर्वस्य प्लुतलृकारस्य च अनुनासिकस्यादर्शनादित्यलम् । एदैतोरित्यादौ । लोकानुभवसिद्धार्थनुवादकेऽत्र तपरशास्त्राप्रवृत्त्या प्लुतानामपि तत्स्थानत्वं बोध्यम् । तथा च पाणिनीयशिक्षा—

कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू ।
स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥
जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः ।
ए ऐ तु कण्ठ्यतालव्यावो औ कण्ठोष्ठजौ स्मृतौ ॥
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च ॥
हकारं पञ्चमैर्युक्तमन्तथाभिश्च संयुतम् ।
उरस्यन्तं विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥ इति ।

यत्तु दन्तोष्ठादि समुदितं स्थानमिति । तन्न शिक्षायां दन्त्योष्ठ्यः कण्ठ्यतालव्यावित्यादौ "तत्र भव" (पा०सू०४।३।५३) इत्यधिकारविहित-यतः प्रत्येकमनुत्पत्त्यापत्तेः । दन्तोष्ठ्यमित्यादि त्वसङ्गतमेव । स्वाङ्गसमुदायस्य स्वाङ्गत्वाभाववच्छरीरावयवसमुदायस्य

---

*वदताम्मत इति* । इदमन्यत्रोपपादितम् । *ऐचः सर्वस्येति* । हसेदि 'हसने,' 'टुओश्वि' इत्यादावेङ्विषयेऽनुनासिकपाठदर्शनादेच इति नोक्तम् । यवयोरनुनासिकत्वं "युवोरनाकौ" इतिसूत्रभाष्येऽनुनासिकयणोह-रिति भाष्यीयव्यवहारादस्त्येव । कस्याचिदुक्तिं खण्डयति *यत्त्विति* दमून्तोष्ठादिसमुदितमिति* । अत्र समुदितपदोपादानेनोभयपर्याप्तद्वित्वमधिकरणतावच्छेदकमिति सूचितम् । *प्रत्येकमनुत्पत्त्यापत्तेरिति* । स्थानतावच्छेदकधर्मविशिष्टवाचकप्रातिपदिकात्-यतः शिक्षायां दर्शनेनोभयत्वस्य स्थानतावच्छेदकत्वे केवलदन्तादिप्रातिपदिकस्योभयत्वावच्छिन्ना

शरीरावयवत्वाभावात् । एतेन दन्तोष्ठरूपमतिरिक्तं स्थानमित्यपास्तम् । 'अष्टौ स्थानानि' इति प्रतिज्ञाविरोधाच्चेति दिक् । सूत्रे प्रशब्देन विलक्षणार्थबोधेऽपि लोके यत्नप्रयत्नयोः पर्यायतेति ध्वनयन्नाह—प्रयत्नो द्विधेति । क्वचिद् यत्न इत्येव पाठः । चतुर्धेति । यत्तु—

स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम् ।

तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥

इति शिक्षावाक्याद्विवृततरविवृततमयोः प्रतीत्या "नाज्झलौ" (पा० सू० १।१।१०) इति सूत्रभाष्यादूष्मणामीषद्विवृतत्वस्य प्रतीत्या चतुर्धेत्यसङ्गतमिति । तन्न । नाज्झलाविति सूत्रेण विवृतत्वव्याप्यानामेषां सवर्णसञ्ज्ञाऽनुपयुक्तत्वबोधनमित्याशयात् । भाष्यमते तु सन्तु सप्तप्रयत्नाः । एवञ्चैदैतोश्च न सावर्ण्यप्रसक्तिः । प्रयत्नभेदादिति बोद्धव्यम् । नाज्झलाविति सूत्रमपि प्रयत्नभेदप्राप्तसावर्ण्याभावानुवादकं सत्तस्यैव बोधकम् । अत एव भाष्ये तन्न वक्तव्यमिति नोक्तम् ।

स्पृष्टादीनामाभ्यन्तरत्वन्त्वोष्ठप्रभृतिकाकलकपर्यन्तरूपास्यान्तर्गततत्तत्स्थानेषु जिह्वाऽदीनां स्पर्शेषत्स्पर्शदूरावस्थानसमीपावस्थानरूपाभ्यन्तरकार्यकारित्वाद्वर्णोत्पत्त्यव्यवहितप्राग्भावित्वाच्च बोद्धव्यम् । तत्र बहूनामेकस्थानत्वेऽपि कस्य चिदुच्चारणे सम्यक्स्पर्शः कस्यचिदीषदिति शिक्षाकारोक्तिमनुभवं चानुसृत्य विवेक्तव्यम् । प्रयतनमिति नपुंसके भावे ल्युट् । प्रयत्नमित्यपपाठः । नङन्तस्यपुंस्त्वात्

---

वाचकतया प्रत्येकमनुत्पत्तिर्यतः स्यादिति भावः । *एतेन* । समुदायाद्यतः सम्भवाभावेन । *दन्तोष्ठरूपमिति* । व्यासज्यवृत्त्युभयत्वं स्थानतावच्छेदकम् । अपि तु एकविशिष्टापरत्वरूपम् । विशिष्टञ्च केवलादन्यदिति वादिनो मतेनेदमभिहितमिति न पूर्वकल्पादभेद इति भावः ।

प्रयत्नशब्दस्याभ्यन्तरप्रयत्नबोधकत्वेऽपि मूलोक्तं द्वैविध्यमुपपादयितुमाह—*सूत्र इति* । *नाज्झलाविति सूत्रेणेति* । एवञ्च सूत्रकारमताभिप्रायेण मूलमिति भावः । यथोत्तरमितिन्यायेनाह—*भाष्यमत इति* । स्पृष्टादीनामाभ्यन्तरत्वमुपपादयति—*स्पृष्टादीनामिति* । प्रयत्नमित्यपपाठ इत्येतत्खण्डनाभिप्रायेण जानीयादित्यस्याध्याहार इति तु न युक्तम् । प्रयत्नो द्विधेत्युपक्रमे प्रथमाया एव दर्शनेन द्वितीयाया विरुद्धत्वादित्याशयेनाह—*नपुं-

तथा च शिक्षा 'स्वराणामूष्मणाञ्च' इत्याद्यनन्तरम्॥

अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलः स्मृताः।
शेषाः स्पृष्टा हलः प्रोक्ता, इति।

अचोऽस्पृष्टाः स्पर्शाभावरूपविवृतत्ववन्तः। यणस्त्वीषदित्यने तेषामीषत्स्पृष्टत्वमीषद्विवृतत्वञ्च बोधितम्। नेम इत्यर्धे। तेन शलामी षद्विवृतत्वं यणपेक्षयाधिकविवृतत्वं चेति बोध्यम्।

अत्र शिक्षोक्तव्याप्यधर्मवतां व्यापकधर्ममादाय न सावर्ण्यमिति यणाञ्चवर्गादिभिर्न सावर्ण्यम्। तेन 'अश्वित' इत्यादौ न यादिः पर सवर्णः। विवृतमेवेति। प्रक्रियादशायां विवृतत्वम्प्रतिज्ञेयमित्यर्थः तेन दण्डाढकादौ दीर्घसिद्धिः। अन्यथा संवृतस्य ह्रस्वाकारस्य वि वृतेन दीर्घेण सावर्ण्याभावात्स न स्यादिति भावः। दीर्घाकारस्य विवृततरत्वन्तु पाणिनिशिक्षानुक्तत्वान्नैतच्छास्त्रप्रक्रियोपयोगीति दिक्।

तस्य प्रयोगे संवृतत्वे मानमाह अ अ (पा०सू०८।४।६८) प्रयत्नभेदा दीर्घाभावः। अत्रोद्देश्ये सवर्णग्रहणं जातिनिर्देशो वा न व्याख्यानात्।

अधिकारत्वे फलमाह—त्रिपाद्यामपीति। अन्यथा 'गोधुक्पा

---

सके भाव इति*। मूलोक्तं यस्य यस्य यद्यत्स्थानं तत्र मानमाह-*तथ चेति*। पाणिनीयेति शेषः। *स्पर्शाभावरूप इति*। एतेन दूरावस्था लाभः। यणस्त्वीषदिति*। अत्रेषदित्यस्य विशेष्यानुपपादानेऽपि मध्यमपि न्यायेन विवृतत्वं स्पृष्टत्वञ्चास्य विशेष्यमित्याशयेनाह-*यणस्त्वीषदित्य नेनेति*।

यत्तु 'स्वराणामूष्मणाम्' इत्यनेनाचां विवृतत्वस्योक्ततया 'अचोस्पृष्ट इति वाक्येन पुनस्तद्बोधनं किमर्थमिति चिन्त्यमिति। तन्न। 'ताभ्यां मैचौ' इति पूर्ववाक्येन विवृततमत्वस्योक्ततया 'यणस्त्वीषद्' इत्य विशेष्याकाङ्क्षायां तस्यैव परामर्शापत्तेः। *दीर्घाकारस्य विवृततरत्व न्त्विति*। अत एव "अइउण्" सूत्रे "अकारस्य विवृत्तोपदेश आका ग्रहणार्थं" इति वार्तिकं सम्यगुपपद्यते।

*व्याख्यानादिति*। यथोद्देशत्वेऽस्य सूत्रस्यासिद्धत्वाद् व्यापकज तिनिर्देशोऽपि न 'तपरनिर्देशादेकशेषनिर्देशाद्वा सिद्धम्' इति भाष्यमू काद्व्याख्यानादिति। अतिदेशस्य फलं मनोरथादिसिद्धिरूपं मनोरमाय मेव स्फुटमिति सूत्रस्याधिकारत्वे फलमाह-*अधिकारत्व इत्यादिना* *गोधुङ्मानिति*। अयम्भावः। सिद्धान्ते हस्य झय्भिन्नत्वेनादौ निर

म्' इत्यत्र घत्वजश्त्वानुनासिकेषु भष्भावानापत्तिरिति भावः। वस्तुतो घत्वे कृते 'झय' इति वत्वापत्तिर्दोषः। न च ततः परत्वाज्जश्त्वानुनासिकत्वयोस्तदप्राप्तिरिति वाच्यम् "विप्रतिषेधे परम्" (पा०सू०१।४।२) इत्यस्य यथोद्देशत्वेन त्रिपाद्यामप्रवृत्तेः। 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इत्यनेन तस्या यथोद्देशत्वस्यैव बोधनात्। अन्यथा परस्यासिद्धत्वे विप्रतिषेधसूत्रस्य सिद्धत्वात्परिभाषान्तराणामिवास्यापि कार्यकालपक्षे तेनाकर्षणापत्तेः। अत एव भाष्ये वत्वमेवापादितम्। अधिकारत्वादेव "श्चुत्वं धुटि सिद्धं वाच्यम्" इत्यादि चरितार्थम्। एवं च यत्रानुवृत्तिस्तस्यासिद्धत्वम्।

पूर्वत्वञ्च क्वचित्सपादसप्ताध्याय्याः। क्वचित्सूत्रान्तरसहितायाः। तत्रायमर्थः। "होढः" (पा०सू०८।२।३१) इत्यादावस्योपस्थितौ वाक्यभेदेनान्वयः। हस्य ढो भवति इदश्च शास्त्रं पूर्वत्रासिद्धमिति। अत एव "न मुने" (पा०सू०८।२।३) इत्यादिभिस्तन्निषेध उपपद्यते। 'पूर्वत्र' इति सङ्ग्राहकमेव, शृङ्ग्राहिकयैव तु

---

काशत्वेन जश्त्वापवादत्वाद् घः, ततो जश्त्वानुनासिकयोरसिद्धत्वाद्भष्भावेऽनुनासिकस्यासिद्धत्वाज्जश्त्वे ततोऽनुनासिके तेषामसिद्धत्वाद्धत्वाप्राप्त्या गोधुङ्मानित्यस्य सिद्धिः। अधिकारत्वाभावे तु निरवकाशत्वेन जश्त्वात्पूर्वं घः ततोऽन्तरङ्गत्वेनानुनासिकात्परत्वेन तु भष्भावादादौ जश्त्वम्। एवं सति झषन्तत्वविरहाद्भष्भावानापत्तिरिति। ननु प्रागुक्तरीत्या जश्त्वात्पूर्वं घत्वेऽपि तदुत्तरमनुनासिकत्वजश्त्वाभ्यां पूर्वं निरवकाशत्वेन 'येन नाप्राप्तिन्यायेन' वा बाधकयोर्वत्वभष्भावयोरेव प्राप्तिः।। यद्यपि "तसौ" इतिभत्वविषये तडित्वानित्यादौ वत्वस्य चारितार्थ्यम्, तथापि प्रत्याहारनिर्देशसामर्थ्याद्धत्वस्य जश्त्वबाधकत्वम्। तयोश्च वर्णमात्रापेक्षत्वेनान्तरङ्गत्वाद्धत्वमेवोचितमिति चेत्तत्रैवाह—*वस्तुत इति*।

उक्ताशयानभिज्ञः शङ्कते-*न चेति*। परोक्तमङ्गीकृत्यापि समाधत्ते-*विप्रतिषेध इति*। यथोद्देशपक्षे दोषाभावेऽपि कार्यकालपक्षे दोष एवेति चेत्तत्राह—*पूर्वत्रासिद्धे नास्तीति*। अधिकारत्वे सति तत्र तत्र यथा वाक्यार्थस्तन्दर्शयति-*तत्रायमर्थ इति*। तत्र—अधिकारत्वे सति। *अत एवेति*। विधेयभेदे वाक्यभेदस्वीकारादेवेत्यर्थः। इत्यादिभिरित्यादिना "न मुटादेश" इति वार्तिकसङ्ग्रहः।

*तन्निषेधः*। शास्त्रासिद्धत्वनिषेधः। यदि पदैकवाक्यता स्यात्तदा

तत्तच्छास्त्रं प्रति तस्यासिद्धत्वं प्रतिपाद्यते। तेनापवादस्य यं प्रत्यपवा दत्वं तत्रासिद्धत्वाभावेऽप्यन्यत्रासिद्धत्वं भवत्येव । असिद्ध मिति। सिद्धं निष्पन्नं प्रवृत्तम् 'सिद्धश्च प्रत्ययविधौ' इत्यादौ त था दर्शनात्। तद्भिन्नमसिद्धमनिष्पन्नमप्रवृत्तम्। यद्यपि लोकेऽनाहा र्यज्ञानस्यैव प्रवर्त्तकत्वं दृष्टं, तथापीह शास्त्रप्रामाण्यादाहार्यारोपोऽ शास्त्रप्रवृत्तात्प्रवृत्तौ च नियामक इति बोध्यम्।

अत्र कार्यासिद्धत्वेऽमू इत्याद्यसिद्धिः। अद् अ औ इति स्थि ते परत्वान्मुत्वे तस्य सपादसप्ताध्यायीस्थकार्यदृष्ट्याऽसिद्धत्वेऽपि दे वदत्तहन्तृहतन्यायेनाकाराभावेन पररूपाद्यनापत्तिः। अतिदेशस्यारोप पत्वान्निरधिष्ठानारोपासम्भवेन कार्यप्रवृत्तेरत्र पक्षे आवश्यकत्वात् शास्त्रासिद्धत्वे तु यत्राप्यन्तरङ्गत्वात्त्रैपादिकं प्रवृत्तं तत्रापि तत्तच्छा स्त्रे एवाभावारोपेण तन्निवृत्तिबुद्धेरभाव, आदेशबुद्ध्यभावो, लक्ष्ये जा

---

"होढ" इति सूत्रस्य पूर्वत्र कर्त्तव्ये सिद्धत्वविशिष्टो ढो भवतीति यथार्थ स्तथा "अदसोसेः" इतिसूत्रस्यापि पूर्वत्र कर्तव्येऽसिद्धत्वविशिष्टो मूभावो भवतीति पर्य्यवसितार्थः स्याद्। एवञ्च "न मुने" इति सूत्रस्यापि ना- भावे कर्त्तव्येऽसिद्धत्वविशिष्टो मूभावो न भवतीत्यर्थः स्याद्। तथा च 'अमुना' इति रूपासिद्धिः स्यादिति भावः। न चैवं वाक्यभेदेऽपि कार्या सिद्धत्वस्यैव लाभः स्यादिति शङ्क्यम्। पूर्वत्रेतिशब्देन पूर्वशास्त्रस्य पु रःस्फूर्त्तिकतया प्रत्यासत्त्या पूर्वशास्त्रे कर्त्तव्ये एतत्कार्यविधायकशास्त्रम सिद्धमित्यर्थस्य लाभादिति मनोरथादिसिद्धिसम्भवात्। *सङ्ग्रहकारि ति*। उपस्थितानां सूत्राणामेकेन शब्देन बोधकमित्यर्थः।

इह-व्याकरणे। *शास्त्रेति*। पूर्वत्रेति शास्त्रेत्यर्थः। *यत्राप्यन्तरङ्गत्वा दिति*। अत्रान्तरङ्गत्वं सपादसप्ताध्यायीशास्त्राप्राप्तिकालिकप्राप्तिकत्वमा म्। न त्वन्तरङ्गपरिभाषायाः प्रवृत्तिः। त्रिपाद्यां सर्वथा तदप्राप्तेर्ग्रन्थकारस म्मतत्वात् यथा-ऊढमाख्यदिति विग्रहे णिजन्ताल्लुङि च्लेश्चङि ढत्वादि द्वित्वे कर्त्तव्येऽसिद्धम्भवति, तथा च हतशब्दस्यैव द्विर्वचनम्। न चैवमर्थ 'घटायोन्मीलितं चक्षुः पटं न हि न पश्यति' इतिन्यायेनास्य सार्वत्रिकत्वेऽ हतशब्दबुद्ध्या जायमानं द्वित्वं वस्तुगत्या ढकारविशिष्टस्यैव स्यादि 'औजिढत्' इत्यस्यासिद्धिरिति वाच्यम्। द्वित्वविधायकशास्त्रदृष्ट्या था ढत्वादीनामसिद्धत्वं भवति तथा 'कुहोश्चुः' इत्येतद्दृष्ट्याप्यसिद्ध त्वाड्ढकारबुद्ध्या श्चुत्वस्य प्रवृत्तिसम्भवात्।

तत्त्वबुद्ध्यभावश्च, ।जायमानं कार्यं त्वादेश एव स्थानिबुद्ध्या प्रवर्त्तते । 'न हि रजतभ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयति'? इति न दोषः । यत्र तु सह प्रसङ्गस्तत्राप्रवृत्तिरेवाभावारोपात् ।

न च 'पूर्वत्र न' इत्येव सूत्रमस्त्विति वाच्यम् । पूर्वशास्त्रप्राप्तौ निषेध इत्यर्थे "न लोपः सुब्" (पा०सू०८।२।२)इति सूत्रासङ्गतेः । तद्धि नियमार्थम् । त्वद्रीत्या राजन् अश्व इत्यस्यां दशायां कस्यापि पूर्वशास्त्रस्याप्राप्त्यैतन्निषेधाप्रवृत्तौ नलोपे जाते 'भुक्तवन्तम्' इति न्यायेनैतदप्रवृत्तौ राजाश्वेति दीर्घसिद्ध्या नियमानुपयोगात् 'राजभ्याम्' इत्यादावपि दीर्घापत्तेश्च । पूर्वशास्त्रविषयसम्भावनायामित्यर्थे राजभ्यामित्यादौ नलोपे सुब्विधिदीर्घविषयसम्भावनया सर्वथा नलोपानापत्तेरिति दिक् ।

बाह्यप्रयत्न इति । काकलकाधस्ताद्गलविवरसङ्कोचविकासश्वासोत्पत्तिध्वनिविशेषरूपनादतद्विशेषरूपघोषाल्पघोषप्राणाल्पत्वमहत्त्वरूपकार्यकरत्वमेषाम् । तथाहि—

आत्मा बुध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।

---

*यत्र त्विति* । 'अमू अमी' इत्यत्र । *पूर्वत्र नेति*। पूर्वत्र कर्त्तव्ये जातं तत्कालप्राप्तिकञ्च परन्न भवतीत्यर्थो भविष्यतीति भावः। अत्र पूर्वशास्त्रप्राप्तावित्यर्थो वा पूर्वशास्त्रविषयत्वसम्भावनायामित्यर्थो वोभयथापि न सम्भवतीत्याह *पूर्वशास्त्रेत्यादिना* । *एतन्निषेधाप्रवृत्ताविति* । पूर्वत्रेति निषेधस्याप्रवृत्तावित्यर्थः । ननु जातस्यापि सत्ता तेन निषिध्यत इत्यत आह—*भुक्तवन्तमितीति* । एतदप्रवृत्तौ=पूर्वत्र नेत्यस्याप्रवृत्तौ । न चैवमुक्तौ पौनरुक्त्यमिति वाच्यम् । पूर्वत्राप्राप्तिशास्त्रस्य स्वोद्देश्यतावच्छेदकाभावात्, पुनस्तु भुक्तवन्तमिति न्यायहेतुकाप्राप्तिरुक्तेत्याशयात् । ननु नियमानुपयोगे तदकरणं लाघवमेवेत्यत आह—*राजभ्यामित्यादावपीति* । द्वितीयमर्थं दूषयति—*पूर्वशास्त्रेति* ।

*दिगिति* । अत्रासिद्धमित्यस्यानिष्पन्नमिति व्याख्यानेन जातस्यासिद्धत्वमेव लभ्यत इति न शङ्क्यम् । पूर्वशास्त्रप्राप्तिकालिकाभावप्रतियोगीत्यर्थेन सर्वसामञ्जस्यं स्यादित्यादिकमनेन सूचितम् । *ध्वनिविशेषरूपनादे

वर्णाञ् जनयते ।

इति शिक्षायामुक्तम् ॥ आत्मा—अन्तःकरणं संस्काररूपे-
ण स्वगतानर्थान् बुध्या—स्ववृत्त्या समेत्य—एकबुद्धिविषयान् कृत्वा
तद्बोधनेच्छया मनो युक्तं करोति । तदिच्छावन्मनः कायाग्निम् जा-
ठरमाग्निमभिहन्ति, सकायाग्निः सोदीर्णः स मारुत ऊदीर्ण उर्ध्वं
प्रेरित इत्यादिस्तदर्थः । एवञ्च शब्दप्रयोगेच्छयोत्पन्नयत्नाभिहताग्नि-
नाभिप्रदेशात्प्रेरितो वायुर्वेगान्मूर्धपर्यन्तङ्गत्वा प्रतिनिवृत्तो वक्त्रं प्रा-
प्य उक्तयत्नसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकतत्तत्स्थाना-
न्याहत्य वर्णानभिव्यनक्ति । ततो यत्नविशेषेण गलविवरविकासादी-
न्करोति । तत्र ये तत्तत्स्थानाभिघातका यत्नास्ते आस्यान्तर्गततत्त-
त्कार्यकारित्वादाभ्यन्तरा इत्युच्यन्ते । गलविवरविकासादिकराश्चा-
स्यबहिर्भूतदेशे कार्यकरत्वाद् बाह्या इति ।

मात्राकालिकत्वादिरूपे ह्रस्वत्वादिकन्तु वाय्वल्पत्वमहत्वकृतमि-
नाभिप्रदेशात्प्रेरकयत्न एव कश्चिद्विलक्षणोऽल्पं वायुं प्रेरयति कश्चिदधि-
कमिति तस्य वायुप्रेरणारूपङ्कार्यमास्यबाह्यदेशमिति तदपि बाह्यमेव।
अत एव "अइउण्" सूत्रे भाष्ये ह्रस्वत्वादिजनकयत्नस्याऽऽस्यविशेष-
णेन सवर्णसूत्रेऽग्रहणमित्युक्तम् । यद्यपि 'एक एव यत्नः सर्वकार्य-
जनको वर्णनाशकश्च' इति "परः–सन्निकर्ष" (पा० सू० १।४।१०९) इ-

---

ति*।एतद्विशेषपदोपादानेनोत्तरत्राभिहितेन पौनरुक्त्यम् । *आत्मेति* आ-
त्मा=अन्तःकरणं बुध्या=स्वसमवेतबुद्ध्यात्मकवृत्तिविशेषेणार्थान्समेत्य प-
तस्यैव परिणामविशेषो मनः तत्कर्म इच्छया स्वीयवृत्तिविशेषेण यु-
करोति । उभयत्रात्मनः कर्तृत्वमिति समानकर्तृकत्वोपपत्तिः । *संस्कार-
रूपेण स्वगतानिति* । संस्कारस्यापि मनःपरिणामतया परिणामपरि-
मिनोरभेदाद्विषयाणां संस्कारविषयत्वे स्वविषयकसंस्कारपरिणामित्वस-
म्बन्धेन विषयाणामन्तःकरणगतत्वमिति भावः । युङ्क्ते इत्यन्तर्भावितण्य-
र्थम् । अत एव युक्तं करोतीति विवरणं सङ्गच्छते ।
*आस्यान्तर्गततत्तत्कार्यैति* । स्पर्शादिरूपकार्यैरित्यर्थः । *बहिर्भूतदे-
इति* । काकलकाधस्तादेश इत्यर्थः । ह्रस्वत्वादीनाञ्चात्रैवान्तर्भाव इत्य-
शयेनाह । *मात्राकालिकत्वादिति* । *सर्वकार्यजनक इति* । स्वो-
त्पादितवर्णनिष्ठह्रस्वत्वादिजनक इत्यर्थः । *वर्णनाशक इति* । त-

सूत्रे भाष्ये उक्तम् । तथापि तत्तत्कार्येणोपाधिना एकस्मिन्नपि भेद-
मारोप्य तथा व्यवहार इति बोद्धव्यम् । उदात्तादिजनकयत्नस्याभ्य-
न्तरकार्यकरत्वेऽपि उदात्तादिशब्दैर्विना बोधितानां तेषाम् "अननुदा-
त्त" इत्यनेनाविवक्षाबोधनात् सवर्णसञ्ज्ञानुपयुक्तत्वान्तरतम्यपरीक्षो-
पयुक्तत्वरूपसादृश्येन बाह्येषु गणनम् । इदं ह्रस्वत्वादेरानुनासिक्यस्य
चोपलक्षणम् ।

शर इति । शषसाः । अनुप्रदानं बाह्यप्रयत्नः । विवृण्वते इति ।
तदभिव्यक्त्युत्तरजायमाने कण्ठविवरविकासे तेषाङ्कर्तृत्वविवक्षा बो-
ध्या । विवार एषां प्रयत्न इति भावः । अन्ये त्विति । वर्गतृतीयच-
तुर्थपञ्चमास्तद्यमा हकारानुस्वारो यरलवा इत्यर्थः । नादभागिनस्त-
त्प्रयत्नकाः । यद्यपि खयादिषु घोषाघोषान्यतरप्रयत्नमात्रेणापि प्रक्रि-
यांशनिर्वाहस्तथापि शिक्षानुरोधेनान्येषामुक्तिः । अल्पासवाः अल्प-
प्राणाः । यत्र एतदुच्चारणोत्तरं प्राणानामल्पत्वमिव भवति । वर्गे-
ष्विति । विद्यमानानामिति शेषः । चतुर्णामिति । निर्धारणे ष-
ष्ठी । अन्यतमादिति शेषः ।

पूर्वदृश इति । सादृश्यं यत्नकृतम् । अत एवायोगवाहेषु य-
मानां गणनं भाष्ये "चत्वारश्च यमाः स्मृता" इति पाणिनिशिक्षा
च सङ्गच्छते । अथर्ववेदे एव तदाह—प्रातिशाख्ये इति । अन्ये-
षामिति । अचामुक्तान्यहलाञ्चेत्यर्थः । यरलवाश्चेति । चेनाचा-
मपि ग्रहणम् "सुपां सुलुक्" (पा०सू०७।१।३९) इति सूत्रे 'इकार-
स्यान्तर्यतो दकार' इति भाष्यात् । घोषसंवारनादाल्पप्राणत्वमचाम्

---

यत्नस्य वर्णनाशकत्वे मानाभाव इति वाच्यम् । 'येनैव यत्नेनैको वर्ण
उच्चार्यते तेनैव विच्छिन्ने तस्मिन्वर्णे तं यत्नमुपादाय द्वितीयः प्रवर्तत'
इति 'परः सन्निकर्ष' इति सूत्रभाष्यस्यैव मानत्वात् । न्यूनत्वं मूलस्य परि-
हरति *इदमिति* । एवञ्चात्र प्रकरणे मूलोक्तं न नियमपरमिति भावः
पूर्वसदृश इति मूले पूर्वेणैव सदृश इत्यर्थः । किञ्च पूर्वसदृश एव न तु पूर्व
इत्यप्यर्थः । तत्रोभयत्र प्रमाणमाह । * अत एवेति * । एवञ्च वर्णान्तरत्वं
स्पष्टमेवेति भावः ।

*इति भाष्यादिति* । तत्र ह्येवमुक्तम् , "लुकि किमुदाहरणम् 'आर्द्रे-

अन्यथा तदौ पर्यायेण स्याताम् । अल्पप्राणत्वानङ्गीकारे दधौ पर्यायेण स्याताम् । अचां घोषत्वं "परः सन्निकर्षः" (पा०सू०१।४।१०९) इति सूत्रे भाष्ये ऽपि स्पष्टम् ।

अन्ये इति । द्वितीयचतुर्थौ तद्यमौ शषसहा अयोगवाहाश्चेत्यर्थः । जिह्वामूलीययमादीनां स्थानबाह्यप्रयत्नकथनं तु स्वरूपनिर्णयाय न तु सावर्ण्यान्तरतम्यपरीक्षादावुपयोगीति बोद्धव्यम् । अनुपयुक्ता इति । तुल्यास्यसूत्रे प्रशब्दग्रहणात् । उपयुक्तत्वं हि शछयोरपि सावर्ण्यं स्यादिति भावः । आन्तरतम्यपरीक्षा च घोषवत इत्यादिना तत्र स्फुटीभविष्यति । स्पर्शाः—तत्पदव्यवहार्याः । अन्तस्थाशब्द आदन्तः । स्पर्शोष्मणोरन्तर्मध्ये तिष्ठन्तीति तदर्थः ।

ऊष्माण इति । ऊष्मा वायुस्तत्प्रधाना इत्यर्थः । एवं सोष्माण इत्यस्य वायुना सह वर्त्तन्त इत्यर्थ इति प्रातिशाख्यभाष्ये स्पष्टम् । यद्यपि वर्गद्वितीयचतुर्थयोरपि स्थानेऽन्तरतमसूत्रभाष्यादूष्मत्वं तथापि विवृतमूष्मणामित्यत्रैते एव गृह्यन्ते । अन्यथा कण्ठादीनां सावर्ण्यापत्तौ "नाऽऽज्झलौ" (पा०सू०१।१।१०) इत्यादिनिर्देशासङ्गतिरिति भावः । अचः स्वरा इति । उदात्तादिभिः स्वयमेव राजन्त इति व्युत्पत्तेः । तद्धर्मत्वादुदात्तादयो ऽपि स्वरा इत्युच्यन्ते ।

---

चर्मन्' 'लोहितचर्मन्,' नैतदस्ति पूर्वसवर्णेनाप्येतत्सिद्धम्, न सिद्ध्यति यद्यत्र पूर्वसवर्णः स्यादान्तर्य्यतो दकारः स्याद्" इति । *जिह्वामूलीययमादीनामिति* । आदिनाऽनुस्वारविसर्गपरिग्रहः । आन्तरतम्यपरीक्षादाविति* । आदिना सावर्ण्यकार्यपरिग्रहः । *शच्छयोरपीति* । तत्त्वे हि 'शार्ङ्गिञ्छिन्धि' इत्यत्रानुस्वारपक्षे "झरो झरि" इति लोपापत्तिः । अन्तस्थाशब्द आदन्तः । 'हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतमिति' शिक्षावचनमत्र प्रमाणम् । एवञ्चायं विजन्तः । यद्वा बाहुलकात् "आतश्चोपसर्गे" इति कर्त्तर्यङि कृते ततष्टाप्ययं साधुः । अत एव सामान्येनोक्तम् । *आदन्त इति* । न त्वाबन्त इति ।

*ऊष्मा वायुरिति* । एवञ्चोष्माण इत्यत्र "विनापि" इत्यनेनोत्तरपदलोपो बोध्यः । एवं हि प्रातिशाख्येनाविरोधसूचनायाह *एवं सोष्माण इति* । *भाष्यादूष्मत्वमिति* । तत्र ह्येवमुक्तम् 'वर्गे वर्गे च प्रथमावघोषौ युग्मौ सोष्माणौ, इति । *कण्ठादीनामिति* । यावदाभ्यन्तरप्रयत्नतौल्याभावादिति भावः । *तद्ध

कपाभ्यामिति खफयोरप्युपलक्षणम्, 'अं अः' इत्युपलक्षणमिकारादेरपि तदाह—अचः पराविति ।

ऋलृवर्णयोरिति । आ च लृवर्णश्चेति विग्रहः । "ऋत्यक" (पा०सू०६।१।१२८) इति प्रकृतिभावः । एतदर्थमेव वर्णोपदेशे लृकारपाठः । अन्यथा तस्यासत्त्वशङ्कयाऽस्य वचनस्यैवाशक्यत्वं स्यात् । ध्वनितञ्चेदम् "एओङ्" इति सूत्रशेषे भाष्ये । तत्र हि—'सँय्यन्ता' इत्यादौ "हलोऽनन्तरा" (पा०सू०१।१।७) इति सूत्रे प्रत्याहारघटकेऽपि ग्रहणकशास्त्रप्रवृत्त्या मात्राकालिकस्य यद्वयादेरणुदित्सूत्रेण यादिग्रहणेन ग्रहणाद् "द्विव्यञ्जनाश्रयो विधिर्न प्राप्नोति"इत्याशंक्य मात्रिकव्यञ्जनानुपदेशात् अनुपदिष्टस्यासत्वात् असत्प्रतिपत्तेरशक्यत्वात् न अणुदित्सूत्रे तद्ग्रहणम्' इत्युक्तम् । न च 'क्लृप्तशिखा' इत्यादौ 'अनृत'इति निषेधात् प्लुतानापत्तिः । ऋलृवर्णयोः पृथगनुबन्धत्वकरणेन क्वचित्परस्पराग्राहकत्वकल्पनेनादोषात् (१) । अकारहकारयोरिति। एकारस्य तालव्यत्वमोकारस्यौष्ठ्यत्वमिति मते एकारशकारादीनामप्युलक्षणमिदम् । एतेन "नाज्झलौ" इत्येवसूत्रयितुमुचितमित्यपास्तत्वादिति* । तात्स्थ्यात्ताद्धर्म्यमिति भावः । ननु ऋलृवर्णयोः परस्परसावर्ण्ये ईकारादीनामिकारादिनेव ऋकारेण लृकारग्रहणसिद्धौ लृकारोपदेशो व्यर्थ इत्यत आह । *एतदर्थमेवेति* । ऋकारलृकारयोः सवर्णसंज्ञाबोधनार्थमेवेत्यर्थः । अन्यथा लृकारोपदेशाभावे ।

*ध्वनितञ्चेदमेओङितीति* । वर्णसमाम्नायानुपदिष्टस्यासत्त्वम्भाष्ये ध्वनितमित्यर्थः । *द्विव्यञ्जनाश्रय इति* । संयोगसंज्ञारूपः । वर्णैकदेशानां वर्णग्रहणेन ग्रहणाभाव इति भावः । अत्र यद्यप्येवमाकारादिष्वप्यसत्त्वशङ्का भवति, तथापि "पथिमथि" इत्याद्विधानादिना सा यथापनीयते तथा लृकारविषयेऽपि गम्लृधातौ लृकारोपदेशेन लृदित इत्यनुवादाच्च सा निवर्त्तनीयेति बोध्यम् । अत एव शङ्कापदोपादानम् । न्यूनताभङ्गायाह *एकारस्येति* । *इति मत इति* । 'तालव्यावेकारचवर्गाविकारैकारौ यकारः शकारः शेष ओष्ठोपपाद्य' इति बह्वृचप्रातिशाख्यं येषां तेषां मत इत्यर्थः ।

(१) ननु 'पृथगनुबन्धकरणेन ऋदित्प्रयुक्तं कार्यं लृदिति लृदित्प्रयुक्तं कार्यं ऋदिति वा न भवति'इति ज्ञापनसम्भवात् क्लृप्तशिख इत्यत्र कथं प्लुतवारणमिति चेन्न ।

"असति बाधके प्रमाणानां सामान्ये पक्षपातः" इति न्यायेन सामान्योर्थ एव ज्ञायते क्वचिदृकारेण लृकारस्य ग्रहणं न भवतीति ।

स्तम् । "हशिच" (पा०सू०६।१।११४) इत्येव सिद्धे "अतोरोः"(पा० सू०६।१।११३) इत्याकारे व्यावृत्त्यर्थम् ।

सूत्रे द्विवचनोपपत्तये मध्यमपदलोपिसमासं दर्शयति-आकार सहित इति । अत एव "वेलासु" इतिनिर्देश उपपद्यते । समाहारद्वन्द्वे तु टच्प्रसङ्गोऽज्झलिति समाहारद्वन्द्वं कृत्वा आपदेन द्वन्द्वे अज्भिरप्याकारस्य सावर्ण्यं न स्यादिति भावः । अत एव आभ्यन्तर प्रयत्नभेदेनैषां सावर्ण्याभावः साधितः ।

एतेषु परेष्विति । इदमुपलक्षणम् । एतेषु विद्यमानस्वेत्यर्थो बोध्यम् (१)तेन हकारादीनामकारादिषु परतो दीर्घादिसञ्ज्ञः अच्त्वं स्यादिति । अच्पदबोध्यत्वं स्यादित्यर्थः । इदं प्रत्याहारघटकेष्वपि ग्राहकशास्त्रप्रवृत्तिरिति मते, व्यक्तिपक्षे च बोध्यम् ।

---

एकारादीनां शादिभिः सावर्ण्ये 'कटे शेते' 'एधावहै' 'शक्त्या' 'गोयानं' 'भानो याति' इत्यादावेचोयवायाव' इत्यस्यापत्तिः । ननु हकाराकारादिवर्णयोः परस्परं सवर्णसंज्ञायां "हशिच" इत्येव सिद्धे 'अतोरोः' इति व्यर्थमित्यनेनैव ज्ञापकेनाऽज्झलोः सावर्ण्याभावे सिद्धे नाज्झलाविति व्यर्थमत आह *हशि चेति* । अत एव *आकारप्रश्लेषादेव । समासान्तरशङ्कां वारयति- *अज्झलिति समाहारद्वन्द्वं कृत्वेति* । *अज्भिराकारस्येति* । अत्रे ष्टापत्तिं वारयति । *अत एवेति*। अज्झलेरिव सावर्ण्याभावसाधनादेव यद्यकाराकारयोरपि सवर्ण्याभावः सूत्रकाराभिप्रेतः स्यात् तदाऽज्झलोः प्रयत्नभेदेनैव तयोरपि सावर्ण्याभावः प्रकारान्तरेण साधितः स्यादिति भावः *अच्त्वं स्यादिति* । नन्वच्छब्दस्य सञ्ज्ञाशब्दत्वेनात्र शब्दरूपस्यैव प्रवृत्तिनिमित्तत्वेन भावप्रत्ययान्तेऽनन्वयापत्तिरत आह-*अच्पदबोध्यत्वमिति*।एवञ्चाच्त्वमच्पदं हकारादिसंम्बन्धीस्यादित्यभिप्रेतमिति भावः।

ननु 'उच्चारितः शब्दः प्रत्यायको न त्वनुच्चारित' इतीकारस्याच्पदबोध्यत्वेऽपि तस्यानुच्चारितत्वात्प्रत्यायकता नोपपद्यते इति हकारादीनामित्यादिपदानुपपत्तिरत आह—*इदं प्रत्याहारघटकेत्यादि* । मते "अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात" इति वदतो वार्त्तिककारस्य मते । जातिपक्षे ग्रहणकशास्त्रस्यैवाभावादाह—*व्यक्तिपक्षे चेति* ।

---

(१) वस्तुतस्तु मुख्यं दोषापत्तिस्थलं तु "दधि शीतलम्" दधि हरति"इत्यादिकम् । एतेषु विद्यमानस्येत्यर्थो नाभिप्रेतो मूलकारस्य' शीङ् शये" "शीङो रुट्" "हरतेर्दृतिनाथयोः पशौ" इत्यादिनिर्देशादे विद्यमानेषु वारणसम्भवादिति ।

अणुदि (पा०सू०१।१।६९)अणमुद्दिश्य सवर्णबोधकतात्र विधीयते। सवर्णस्येत्यस्य बोधक इति शेषः। आदेशादौ सवर्णग्रहणवारणायाह- प्रतीयन्ते इति । परे तु प्रत्ययग्रहणमेकदेशानुमत्या "भाव्यमानेन सवर्णानां ग्रहणं न" इति परिभाषां ज्ञापयतीति युक्तम् । प्रत्ययपद- स्य तदर्थत्वन्तु न युक्तं । वार्त्तिककृता टित्किन्मित्सूपसंख्यानोक्तेः । भाष्यकृता चाप्रत्ययग्रहणमेतत्परिभाषाज्ञापकमित्युक्तेः । "ज्यादादी- यस"(पा०सू०६।४।६०)इति सूत्रे भाष्ये ध्वनितमिदम् ।तत्र हि'किमर्थमा- दित्युच्यते ।ज्याद इत्येवोच्यतां, का रूपसिद्धिः । आन्तर्यतो दीर्घस्य

---

*अणुदित्सवर्ण* । कुक्कुटादौ तु नैतत्सूत्रप्रवृत्तिरुकारस्योच्चारण- मात्रफलकत्वात् । अस्य सूत्रस्य मूलोक्तसञ्ज्ञासंज्ञिभावबोधकत्वं समाना- धिकरणपदोपादानाभावादयुक्तमत आह—*अणमुद्दिश्य सवर्णबोधकते- ति* । स्वसिद्धान्तमाह—*परे त्विति* । प्रत्ययस्यापि भाव्यमानतया भाव्यमानसामान्यस्य प्राचीनसम्मतपरिभाषाविषयत्वसिद्धौ प्रत्ययस्या- पि तत्त्वं सिद्धमेव । स्थालीपुलकन्यायेनेतिभावः । तदर्थत्वम्* । यौगिका- र्थपरत्वम्—*वार्त्तिककृतेति* । तदुक्तम्भाष्ये—'अप्रत्यय इति किमर्थम्' "सनाशंसभिक्ष उः" "असाम्प्रतिके" अत्यल्पमिदमुच्यते, "अप्रत्ययादे- शटित्किन्मित इति वक्तव्यम्" इति ।

यत्त्वत्राप्रत्ययग्रहणमित्यस्य व्यर्थं सदिति शेषः । प्रत्ययसंज्ञाया अन्व- र्थत्वात्सनाशंसेत्युकारबोध्यदीर्घस्याप्रत्यायकत्वेन विधातुमशक्यत्वादिति। तन्न । उपक्रमस्थभाष्येऽप्रत्ययपदस्य यौगिकार्थपरत्वन्नाभिप्रेतम् । अ- न्यथा वार्त्तिकोत्थानस्यैवासम्भवापत्तेः । एवञ्चोकाराकारप्रत्यययोर्ग्राहक- त्वव्यावृत्त्यर्थमप्रत्ययग्रहणचारितार्थ्येन शेषपूरणासङ्गतेः । किञ्चात्र सूत्रे अप्रत्ययग्रहणाभावे ऽण्सामान्यस्य सवर्णबोधकत्वमुद्देश्यतावच्छेदकाव- च्छेदेन विधेयान्वयबोधकत्वं व्युत्पत्तिसिद्धमित्युकाराकारयोरपि दीर्घ- ग्राहकत्वं स्यादेव । अन्वर्थसञ्ज्ञया तु न व्यावृत्तिः । अत्यन्तस्वार्थिकानां यथा कनादीनां तत्र प्रत्ययपदोपस्थितिसामर्थ्यादर्थाभावेऽपि प्रत्ययसंज्ञा, तथाऽण्त्वरूपोद्देश्यतावच्छेदकाक्रान्तयोरुकाराकारयोर्ग्राहकसूत्रोपस्थिति- सामर्थ्यादन्वर्थाभावेऽपि दीर्घयोः प्रत्ययसंज्ञा स्यादेवेत्याशयात् । उद्देश्य- तावच्छेदकसंकोचे तु न मानमिति भावः ।

*ज्ञापकमिति* । न तु सूत्राक्षरमर्यादया भाष्यकृतायमर्थः साधितः । प्रत्ययशब्दस्य प्रत्ययसञ्ज्ञकपरत्वे भाष्यान्तरमपि साधकमाह—*ज्या- दादीयस इतीति*। भाव्यमानेनेति परिभाषाया इहाश्रयणे फलान्तरमप्या-

दीर्घो भविष्यति, एवन्तर्हीदमेव ज्ञापयति 'भवत्येषा परिभाषा भाव्य-
मानेन' इत्यादि । त्वदुक्तव्याख्याने हि पूर्वपक्षसिद्धान्तयोरुभयोरपि
निर्दलत्वापत्तिः । जातिपक्षेऽप्यनयैव परिभाषया सवर्णग्रहणं वारणी-
यम् । व्यक्तिपक्षे गुणाभेदकत्वप्राप्तञ्च वारणीयम् । तेन घटवादित्या-
दौ नानुनासिको वकारः । एतेनाणुदित्येव सिद्धेऽण्ग्रहणेन यणसु गु-
णभेदकत्वं ज्ञाप्यते इति परास्तमित्याहुः ।

ननु चोरित्यादावनुवादे कथमुदित्त्वमिति चेन्न । व्याकरणोक्तानां
एषामुदित्सञ्ज्ञकत्वेनादोषात् । उपदेशशब्दस्य करणसाधनत्वेन
शास्त्रपरत्वेऽस्यापि शास्त्रत्वेनत्वप्रवृत्तेः सुलभत्वाच्च । चोभिन्नव्या-
ख्यानमाह—उदिच्चेति । यद्यपि समुदायसवर्णिनो ऽप्रसि-
द्धास्तथापि तदवयवचादिसवर्णा एवात्र तत्सवर्णा बोद्ध्याः
ह्रस्वाकाराद्योरपि कालपुरुषाद्युपाधिभेदेन स्थानेषु भेदमारोप्य तुल्य-
स्थानत्वं सूपपादम् । अत्रेति । ग्राहकसूत्रे एवेत्यर्थः । व्याख्या-
नादिति भावः । "उपसर्गादृति" (पा०सू०६।१।९१) इत्यादि तपर-

---

ह *जातिपक्ष इति* । भाव्यमानेनेति परिभाषाया अस्वीकारे प्रत्ययप-
दस्य योगिकत्वेऽपि यत्राणुदित्सूत्रेण ग्रहणप्रसङ्गस्तत्रैव निषेधप्रसङ्गः
स्यान्न तु जातिपक्षे एवञ्च व्यापकत्वात्परिभाषास्वीकार एवावश्यक इति
भावः । *व्यक्तिपक्षे इति* । अस्मिन्पक्षेऽण्ग्रहणसत्त्वेऽपि यौगिकार्थाश्रयणे-
ऽपि सूत्रप्राप्तस्यैव सवर्णग्रहणस्य 'अप्रत्यय' इत्यनेन वारणं कर्तुं शक्यं न तु
गुणाभेदकत्वात्प्राप्तस्येति भावः

*वकार इति* । वकारस्यानुनासिकत्वात् "मादुपधायाः" इत्यनेनान्तर-
तम्यादनुनासिकः स्यादिति भावः । कौस्तुभोक्तिं खण्डयति *एतेनेति*
"भाव्यमानेन" इति परिभाषाया व्यापकत्वसूचनेनेत्यर्थः । विधेयविषये गुणाभे-
दकत्वप्रयुक्तदोषस्यानया परिभाषयैव व्यावर्त्तनेनोद्देश्यविषये भेदकत्वस्य प्र-
योजनाभावेनाऽण्ग्रहणस्य स्वविषये चारितार्थ्याभावेन ज्ञापनासम्भवादिति
भावः । *अनुवादे कथमिति* विधेये तूपदेशसत्त्वादुपदेशे इत्संज्ञया सिद्ध-
मिति भावः । अस्यापि=चोरित्याद्यनुवादविषयस्यापि । न चोच्चारणा-
र्थानामित्सञ्ज्ञां विना निवृत्त्यभावेन कुक्कुटगादौ सवर्णग्राहकत्वं दुर्वारमिति
वाच्यम् । उदित्पदेऽवधारणगर्भबहुव्रीह्याश्रयणेनादोषात् ।

*व्याख्यानादिति* । "उरृत्" इति सूत्रे तपरकरणमूलकादिति भावः ।

करणादिति तु न युक्तम् । लृकारग्रहणेन चारितार्थ्यात् । एवमिणपि परेणैव । "अचि श्नु" (पा०सू०६।४।७७) इति सूत्रे इण इत्येव सिद्धे "य्वोः" इति गुरुनिर्देशाद् व्याख्यानाच्चेति लण्सूत्रे भाष्ये स्पष्टम् ।

नन्वेवम् "अस्यच्वौ"(पा०सू०७।४।३२)इत्यादौ सवर्णग्रहणं न प्राप्नोति । अणूग्रहणेन वर्णसमाम्नायस्थानामेव ग्रहणेन णकारादिचिह्नेन प्रत्याहारे तत्प्रत्यभिज्ञानेन तत्रत्याद्यवर्णोपस्थितेषु उच्चारिताभेदेन गृहीतेषु सूत्रस्य चारितार्थ्येन व्यक्तिपक्षे तत्रत्याऽत्रत्यव्यक्त्योर्भेदेन प्रकृते प्रत्याहारघटकद्वितीयवर्णादौ चोच्चारितस्यैव ग्राहकत्वादप्रवृत्तेरिति चेन्न । जातिपक्षाश्रयणेनादोषात् । अत एवानेकतकारादीनां झल्त्वादिसिद्धिः । तुसूत्रेऽण्ग्रहणं च न कार्यम् । "ऋलृवर्णयोः सावर्ण्यम्" इत्यनेन समानजातित्वस्यैवातिदेशेन "उपसर्गादृति"(पा०सू०६।१।९१)इत्यादौ न दोषः । एतद्व्यतिरिक्तऋवर्णे समानजातित्वसत्त्वात् । पृथगनुबन्धकरणाच्च न ऋदिल्लृदित्प्रयुक्तकार्यसङ्करः ।

अत्र पक्षे'अइउण्' सूत्रशेषोक्तभाष्यरीत्या तपरसूत्रस्य जातिग्रहणप्राप्तसवर्णग्रहणनियामकत्ववत्"अप्रत्यय"इत्यस्य योगविभागेन तत्प्राप्तसवर्णग्रहणनिषेधकत्वात् "त्यदादीनाम"(पा०सू०७।२।१०२)इत्यादौ

---

तुरतत्स्वरूपमन्यत्रोक्तम् । *लृकारग्रहणेनेति* । इदं तपरसूत्रस्य विधायकत्वमते । यत्तु सूत्रकारमते ऋकारलृकारयोस्सावर्ण्याभावेन वार्त्तिककारमतेऽण्ग्रहणस्यैवाभावेन तत्र ज्ञापकानुपयोगाच्चिन्त्यमेतदिति । तन्न । लृकारग्रहणेनेत्यस्य सवर्णसंज्ञाज्ञापनद्वारेत्यादिपूरणेन "ऋकारलृकारयोः सवर्णविधिः" इति वार्त्तिकोक्तार्थस्यापि क्रोडीकारसम्भवात् । एवञ्च तद्वार्तिकन्नापूर्वमिति भावः । *इणपि परेणैवेति* । अस्य सर्वत्रेति शेषः । *व्याख्यानादिति* । अत्र ज्ञापकातिरिक्तं व्याख्यानमुपदेशपरम्परारूपं बोध्यम् ।

व्यक्तिपक्षाभिप्रायेण शङ्कते *नन्विति* । *एतद्व्यतिरिक्तेति* । लृकारव्यतिरिक्ते दीर्घऋकारे । *अत्र पक्षे* । जातिपक्षे । *योगविभागेनेति* । अत्र पक्षे सूत्रे अण्ग्रहणाभावेनोदिद्घटितवाक्ये "अप्रत्यय" इत्यस्य प्रयोजनाभावेन योगविभाग इति भावः । *तत्प्राप्तेति* । जातिपक्षप्राप्तेत्यर्थः ।

विधेये न दोषः। एवं गुणाभेदकत्वप्राप्तसवर्णग्रहणनिषेधकत्वमप्य-स्य बोद्ध्यम्। अत एव घटवादित्यादौ मतोर्मस्य नानुनासिको वकारस्य सामर्थ्यादिति।"एचोऽयवायावः"(पा०सू०६।१।७८)इत्यादौ स्था-न्तरतमसूत्रेणैव निर्वाह इति वक्ष्यते।"न य्वाभ्याम्"(पा०सू०७।३।३) इत्यत्र 'ऐऔ' स्वरूपेण पाठ्यौ। "वृद्धिरादैच्"(पा०सू०।१।१।१) इत्य-त्राप्येङित्येव पाठ्यम्। तत्र गुणसूत्रे च परस्परसवर्णसञ्ज्ञावादिमते च-तुर्णां ग्रहणसत्त्वात्। अत्रैतत्सूत्रवैयर्थ्योपन्यासेन तत्मूलकस्य गुण-वृद्धिसञ्ज्ञाविधौ प्रत्याहारद्वयग्रहणवैयर्थ्यस्य "प्लुतावैच," "एचोऽ-गृह्यस्य"इत्यत्र तद्ग्रहणवैयर्थ्यस्य च सङ्ग्रहो बोध्यः। प्रयत्नभेदेनाप्य-सावर्ण्यमेतयोः प्रागुक्तन्न विस्मर्त्तव्यम्।

यद्यपीति। इदं व्यक्तिपक्षे। "वर्णानामुपदेशस्तावदुपदेशोत्त-रकालेत्सञ्ज्ञा तदुत्तरकालमादिरन्त्यनेति प्रत्याहारस्तदुत्तरकाला स-वर्णसञ्ज्ञा तदुत्तरकालमणुदिति, एतेन सर्वेण समुदितेन वाक्येना-न्यत्र सवर्णानाङ्ग्रहणं भवति। न चालेकारः शकारं गृह्णाति" इति"नाज्झलौ" (पा०सू०१।१।१०) इति सूत्रभाष्योक्तवाक्यापरिसमाप्तिन्या-यादित्यर्थः।

अयं भावः। "आदिरन्त्येन"(पा०सू०१।१।७१)इति प्रत्याहार-सिद्धौ"नाज्झलौ"इत्येतद्वाक्यार्थबोधे सति निर्णीतैतद्विषयपरिहारेण स-वर्णसञ्ज्ञाबोद्ध्यनिश्चये अणुदित्सूत्रेण तावतां ग्रहणं बोधनीयम्। अन्य-था बाधकसम्भावनया तुल्यास्यसूत्रजशक्तिग्रहेऽप्रामाण्यसन्देहेना-णुदिच्छास्त्रजबोधानापत्तिः। न चैतद्वाक्यार्थबोधात्प्राक्तन्निश्चय इति

---

पूर्वोक्तमपि दार्ढ्याय पुनराह-*गुणाभेदकत्वेति*। ननु "ऐऔच्" इतिसू-त्राभावे "एचोऽयवायाव" इत्यादौ यथासंख्यानुपपत्तिरत आह-*एव इति*। ननु यत्रैच्प्रत्याहारनिर्देशस्तत्रानुपपत्तिरत आह-*नय्वाभ्यामि-त्यादि*। मूले 'नाज्झलाविति निषेधो यद्यपि' इत्यादिनोक्तमयुक्तम्, हका-राऽऽकारयोस्सावर्ण्येऽप्यत्वजातेस्तत्राभावेन दोषाभावादत आह-*इदं व्यक्तिपक्ष इति*।

*एतेन सर्वेणेति*। पूर्वोक्तसमूहयुक्ताणुदित्सूत्रेणेत्यर्थः। समूहघट-केषु पूर्वेषु तत्तदुपकारकत्वं स्पष्टमेवेति भावः। *बाधकसम्भावनयेति*

होढ इति। हकारेणाऽऽकारग्रहणे सति यद्यत्प्राप्नोति तस्य सर्वं-स्याऽप्युपलक्षणमिदम्। ननु यण्सवर्णिनामप्रसिद्धेरज्ग्रहणेनैव सिद्धेऽ-ण्ग्रहणं व्यर्थमत आह–यवला इति। "अमोऽनुनासिका नह्रौ" इति शिक्षोक्तेर्यण इति नोक्तम्। तेन 'सय्यँन्ता' इत्यादौ परसवर्णनिष्प-न्नानुनासिकयवलानाम् "अनचि च" (पा०सू०८।४।४७) इति द्वित्वं सिद्ध्यति। "हलो यमाम्" (पा०सू०८।४।६४) इति लोपस्तु वैकल्पिकः। अत्रेदं बोद्ध्यम्। व्यक्तिः पदार्थो गुणा भेदका इत्यभिमानेनात्र सूत्रेऽ-ण्ग्रहणमिति।

"अतो भिस" (पा०सू०७।१।९) इत्यादौ तपरकरणात् "सहिवहो:" (पा०सू०६।३।११२) इति सूत्रस्थवर्ण(१)ग्रहणाद्व्याख्यानाच्च तपरपदे ब-हुव्रीहिपञ्चमीतत्पुरुषावित्याह—तः पर इत्यादिना। वर्णग्रहणे तु त-

---

अयम्भावः। विधिनिषेधयोः पर्युदासन्यायेनैकवाक्यता अनुभवसिद्धा। सा च निषेधवाक्यार्थग्रहात्पूर्वं न सम्भवति। विधिवाक्यार्थमात्रस्य ज्ञानं यद्यपि सम्भवति, तथाऽप्येतस्य बाधकमपि सूत्रमस्तीति ज्ञानेन एतज्ज्ञानं प्रमा न वेति सन्देहो जन्यते। तथा चाप्रामाण्यज्ञानानास्कन्दितसवर्ण-पदशक्तिग्रहाभावेन सवर्णपदार्थानुपस्थितावणुदित्सूत्रजन्यवाक्यार्थबो-धासम्भव इति।

ननु 'विश्वपाभिः' इत्यत्र ढत्वसंयोगान्तलोपयोः प्राप्तौ ढत्वस्यासिद्ध-त्वात्संयोगान्तलोप एव स्यादिति ढत्वमित्यनुपपन्नमत आह *हकारेणेत्या-दि* ननु 'अइउण्' सूत्रभाष्ये 'यणस्सानुनासिका निरनुनासिकाश्च' इत्युक्तमि-ति तद्वदत्रापि यणो द्विधा इति कुतो नोक्तमत आह-*अम इति*। *नह्रावि-ति*। अत्र च हयवरट्सूत्रस्थं "रेफस्यानुनासिकपरसवर्णद्विर्वचनप्रतिषेधो वक्तव्य" इति प्रघट्टकस्थभाष्यम्मानम्। *अनुनासिकयवलानामिति*। 'वा पदान्तस्य' इति सूत्रेण सवर्णपदेनैव विधानं, न विशिष्याणबोधकशब्देने-ति "भाव्यमानेन" इति निषेधो न शङ्क्यः। *हलो यमामितिलोप इति*। अस्य वैकल्पिकत्वे इदमेवाण्ग्रहणम्मानमिति भावः। *अभिमानेनेति*। अस्य भाष्यसिद्धान्तासम्मतत्वादिति भावः।

*बहुव्रीहिपञ्चमीतत्पुरुषाविति*। इदं "पञ्चमीभयेन" इति सूत्रे पञ्चमीतियोगविभागेन तत्पुरुषसंज्ञाविधायकमितिमतेन। वस्तुतस्तु तत्पु-रुषपदमाचारक्विबन्तम्। तेन 'सुप्सुपेति' समाससङ्ग्रह इति। *वर्णग्रहणे

---

(१) "तपरस्तत्कालस्य" अस्मिन्सूत्रे "अतोभिस्" इति सूत्रे तपरकरणात् तत्पुरुषासंभवादेव बहुव्रीहिराश्रयितुं शक्यते। तत्पुरुषस्तु कथम्? इत्याशंकायामाह—वर्णग्रहणादिति। अयमभिप्रायः तपरसूत्रे

त्सामर्थ्यादत्वावच्छिन्नसर्ववर्णग्रहणबोधनेन तपरसूत्राप्रवृत्तिः । आद्योदाहरणम् "अतो भिस" इति, अन्त्योदाहरणं "वृद्धिरादैच्" इति। यद्यप्यत्र सञ्ज्ञा तात्परा, न च तत्समकालस्तत्सवर्णो वा प्रसिद्ध-स्तथापि तपरकरणाद् भाष्यप्रामाण्याच्च तात्परशब्दबोध्यो वर्णः समकालग्राहक इत्यर्थेनादोषः । इदं च विद्ध्यर्थमेवाण्ग्रहणाननुवृत्तेर्गुणानां भेदकतयानणि विधित्वेऽपि वृद्धिरादैजित्यादावाकारांशे सावकाशेनानेन "अतोभिस" इत्यादौ परत्वेनाणुदित्सूत्रबाधः। संख्याकृतव्यवहारस्य परस्परपरिहारेणैव दृष्टतयेह विरोधस्य सत्त्वात्। गुणानामभेदकत्वे त्वनवकाशत्वाद्बाध इति बोद्ध्यम् । अत्रावद्ध्यवधिमतोः साम्य...

---

त्विति* । यथा "सहिवहोरोदवर्णस्य" इत्यादौ । तेन 'उदवोढाम्' इत्यादौ वकाराकारस्य वृद्ध्युत्तरमप्योत्त्वसिद्धिः । *सञ्ज्ञेति* । ऐजित्यर्थः यथा । *तपकरणादिति* । न चायमाकारार्थो गुणाभेदकत्वेनैव सङ्ग्रहसम्भवात् । ननु तपरकरणस्यासन्देहार्थतया पूर्वार्थत्वं सम्भवत्येवेत्यत आह । *भाष्यप्रामाण्यादिति* । 'एओङ्' 'ऐऔच्' इतिसूत्रस्थभाष्यप्रामाण्यादित्यर्थः । तत्र हि 'खट्वेन्द्रः' 'खट्वैलका' इत्यादौ 'त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रादेशाः प्राप्नुवन्ति' इत्याशङ्क्य 'तपरे गुणवृद्धी' इत्यादिना समाहितम् ।

*इदञ्चेति* । तपरसूत्रञ्चेत्यर्थः । इदं वार्तिककारमतम् । विधिपक्षे "अतोभिसऐस्" इत्यादावष्टादशानां ग्रहणं वारयति । *गुणानां भेदकतयेत्यादि* । परत्वं विरोधे सत्येव बलवत्त्वे प्रयोजकमतोऽविरोधमुपपादयति-* संख्याकृतेति* । नहि 'त्रिपुत्रो द्विपुत्रव्यपदेशं लभते' इति भाष्यकारोक्तिः । *अनवकाशत्वादिति* । अनणि "वृद्धिरादैच्" इत्यादौ यत्नेन साध्यन्तद्गुणाभेदकत्वेनैव साधितमिति तपरत्वम् "अतो भिसऐस्" इत्यर्थं, तच्चानवकाशमिति भावः । ननु तद्गुणसंविज्ञानबहुव्रीहिणा संज्ञात्वन्तान्ते विश्राम्यति, तत्समकालवर्णश्चाप्रसिद्ध इत्यत आह *अत्रावध्यवधिमतोरिति* । तथा च पञ्चम्यर्थेऽतद्गुणसंविज्ञानबहुव्रीहिणा वर्णमात्रस्यैव संज्ञात्वं बोध्यते । तत्समकालश्च प्रसिद्ध एवेति भावः । एवं सति विशिष्टाद् 'अत' इत्यादौ विभक्त्युत्पत्तिः कथमत आह

---

बहुव्रीहिः क्लस एव । "सहिवहोरोत्" इतिसूत्रे बहुव्रीह्याश्रयणे अकारस्य समकालप्राप्तवर्णप्राप्त्यभावेन 'सहिवहोरोदकारस्य' इत्येव सूत्रे कर्तव्ये कृतं वर्णग्रहणं पञ्चमीसमासं तपरसूत्रे ज्ञापयति । ज्ञापितेऽकारस्य समकालवर्णग्रहणवारणार्थं तच्चरितार्थमिति ।

त्येन वर्णस्यैव सञ्ज्ञात्वेऽपि विशिष्टाद्विभक्त्युत्पत्तिः सौत्रत्वाद्बोद्ध्या । तत्कालस्येत्यस्य तदुच्चारणकालसमकालस्येत्यर्थस्तदाह=समकालस्यैवेति । एवकारो न्यायसिद्धबाध्यबाधकभावस्यानुवादक इति भावः । जातिपक्षे तु नियमार्थमेव सवर्णग्रहणानुवृत्तेः । एवं गुणानामभेदकत्वमिति "वृद्धिरादैच्" इति सूत्रभाष्यसम्मतसिद्धान्तपक्षेऽपि नियमार्थमेव । इदम् "आद्गुण" (पा०सू०६।१।८७)इत्यादौ विभक्तितकारे न प्रवर्तते । "उपसर्गादृति"(पा०सू०६।१।९१) इति तपरकरणात् । "ऋदोरप् (पा०सू०३।३।५७) इत्यादौ दकार एवेति न दोषः । स च पञ्चमीसमासाभावे तकार इवोच्चारणार्थो मुखसुखार्थो वा । तपरसूत्रे दकारप्रश्लेषपक्षे तु धकारादिस्थानिको दकारो बोद्ध्यः ।

---

*सौत्रत्वादिति* ।

भाष्यकारमतमाह—*जातिपक्ष इति* । *सवर्णग्रहणानुवृत्तेरिति* । तपरः सवर्णस्य चेद्ग्राहकस्तदा समकालस्यैव नान्यस्येति नियमः पर्यवसन्नः । एवंविधनियमः सवर्णग्रहणानुवृत्तिमन्तरा न सम्भवतीति, अत्र पक्षे सवर्णग्रहणानुवृत्तेरित्युक्तमिति भावः । व्यक्तिपक्षेऽप्याह—*एवं गुणानामिति* । ननु तात्परत्वाद् "ऋदोरप्" इतिसूत्रेणाप् 'यव' 'स्तव' इत्यादावेव स्यान्न तु 'लवः' 'पव' इत्यादावित्यत आह—*ऋदोरबिति* । *पञ्चमीसमासाभाव इति* । नेदम्पञ्चमीसमासस्याकर्त्तव्यत्वाभिप्रायेण । किन्त्वादौ यदा बहुव्रीहिसमासो दर्शितः, तदा तकारो मुखसुखार्थ एवेतिभावः ।

*तपरसूत्रे दकाप्रश्लेषपक्षे त्विति* । अयं भावः । 'किरति' 'गिरति' इत्यादौ स्वरितत्ववारणाय "तिति प्रत्ययग्रहणं कर्त्तव्यम्" इत्युक्तम् । ततो ऋत इत्यत्र 'नैष तकारः कस्तर्हि दकारः, यदि दकारो दीर्घस्य ऋकारस्य दीर्घः प्राप्नोति' इति शङ्काम्भाव्यमानत्वेन परिहृत्य 'यदि भाव्यमानो न ग्राहकस्तदा "अदसोसे" इत्यादौ दोष' इत्याशङ्क्य भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति । यदयम् "दिव उत्"इति तपरकरणङ्करोति' इत्युक्तम् । ततो 'दिवउत्' इत्यत्र 'वकारस्यार्द्धमात्रिकस्यान्तर्यतो मात्रिक एवोकारो भविष्यति' इत्याशङ्क्य 'द्युभ्याम्' इत्यादौ परत्वात्ङ्किद्ग्रहणाननुवृत्तिपक्षे ऊठि कृतेऽपि द्विमात्रस्योकारस्य पुनः प्रसङ्गविज्ञानात् मात्रिकाकारो यथास्यादित्येवमर्थं तपरत्वमेव भाव्यमानोकारस्य सवर्णग्राहकत्वे ज्ञापकमुक्तम् । एवञ्च प्रत्ययग्रहणाभावे स्वरितत्वं 'द्युभ्याम्' इत्यादौ प्राप्नोतीति दकारस्तपरसूत्रे प्रश्लिष्यत इति । चर्त्वस्यासिद्धत्वं तु न भवति

वृद्धिरा (पा०सू०१।१।१)॥ वृद्धिः आत् ऐच् इति इदं पदत्रयमि न समासान्तादि(१)प्रवृत्तिशङ्का। तपरकरणमसन्देहार्थतया पूर्वार्थम् प्रकृतसूत्रे भाष्ये ऽत्र शास्त्रे गुणानामभेदकत्वज्ञापकादाश्रित्य सवर्ण ग्रहणार्थत्वाभावस्योक्तत्वात्। 'कृष्णौत्कण्ठ्यं' 'गङ्गौघ' इत्यादौ त्रिमात्र व्यावृत्तये परार्थमपि। वृद्धिशब्दो ऽत्र पदपरो ऽर्थपरत्वासम्भवात्। आदैचो वृद्धिपदाभिन्ना इति वाक्यार्थः। पदपदार्थयोस्तादात्म्यस्या ङ्गीकारात्।

रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः॥

इत्यादौ तयोरभेदप्रतीतेरनुभवसिद्धत्वादित्यन्यत्र विस्तरः। वृ द्धिशब्दस्य सञ्ज्ञात्वं तु व्याख्यानात्। विधेयत्वेऽपि तस्य पूर्वपाठ

सौत्रत्वात्। अत्र दकारप्रश्लेषपक्षे त्विति तुनाऽरुचिः सूचिता। सा द्युभ्यामित्यादौ स्रंसनधर्मिणो वकारस्यान्तरतमेऽनुदात्ते उकारे कृते दका रेकारस्योदात्तस्य यणि "उदात्तस्वरितयोः" इति सूत्रेणोकारस्य स्वरितत्वं प्राप्नोतीत्युकारस्योदात्तत्वन्निपातनीयम्। एवञ्च तेनैव निपातनेन "तित् स्वरितम्" इत्यस्यापि बाधसिद्धौ दिवउदस्तान्तत्वेऽपि न क्षतिरिति। तदेतद्वक्ष्यति 'अयमुकारोऽन्तोदात्तो निपात्यते, तेन द्युभिरक्तुभिरित्य त्रान्तोदात्तत्वं पठ्यमानं न विरुध्यते' इति।

*वृद्धिरादैच्*। *इदम्पदत्रयमिति*। वृद्धिः आत् ऐजिति भाष्ये पदविभागप्रदर्शनात्। वृद्धिशब्दोऽत्र पक्षे आवृत्त्योद्देश्याभ्यामन्वेति *असन्देहार्थतयेति*। एतेनाकारार्थत्वमस्य नेति ध्वनितम्। तदेतदुप पादयति *प्रकृतसूत्रइति*। *परार्थमपीति*। 'तात्पर' इति पञ्चमी समासाश्रयणात्। भेदाभेदरूपतादात्म्यस्य स्वीकारे यादृशो वाक्यार्थ बोधोऽन्यत्र प्रसिद्धस्तं दर्शयति *रामेतीति*।

रामेति द्व्यक्षरन्नाम मानभङ्गः पिनाकिनः।
शौर्यभङ्गो रावणस्य मदभङ्गश्च वालिनः॥ इति।

अत्र। भेदाभेदयोर्मध्ये भेदो व्यावहारिको,ऽभेदः प्रातिभासिकः। न द्वौ समसत्ताकौ, विरोधात्। अभेदस्य प्रातिभासिकत्वादेवैतादृशशुक्ति जतेन कटकादिवन्न मुखादिदाहः। शब्दार्थयोस्तादात्म्यादेव सर्वेषु सञ्ज्ञा शब्देषु सञ्ज्ञासञ्ज्ञिनोः सामानाधिकरण्येन निर्देशः सङ्गच्छते। त तत्तत्संज्ञासूत्राधीनोऽभेदबोध एव। संज्ञासंज्ञिभावस्तु फलितः। *संज्ञा त्वन्तु व्याख्यानादिति*। एकस्यानेकाः समानफलिकाः संज्ञा न प्रमाण

(१) आदिपदेन द्विवचनस्य ग्रहणम्।

मङ्गलार्थः। "अपृक्त एकाल्" (पा०सू० १।२।४१) इत्यादौ तथाकरणं विधेयस्य प्रथमं प्रयोगे ऽसाधुत्वभ्रमवारणायेति भाष्ये स्पष्टम्। सर्वशब्दानां सर्वार्थवाचकत्वेऽपि वाचकत्वस्य गृहीतस्यैव बोधजनकतया सञ्ज्ञासूत्राणामज्ञातशक्तिज्ञापकतया विधित्वम्।

किञ्च "सर्वे सर्वार्थाः" इत्यभ्युपगमो योगिदृष्ट्या, नास्मदृष्ट्या। सर्वशब्दानामर्थानाञ्च विशिष्य ज्ञानाभावात्। सामान्यतस्तथा ज्ञानञ्च न बोधोपयोगि। शास्त्रं त्वस्मदाद्युद्देशेनैव प्रवृत्तमिति

---

सिद्धाः। एतच्च 'अनाकृतिः सञ्ज्ञा' इत्यादिना भाष्ये एव स्पष्टम्। ननु वृद्धिशब्दस्य सञ्ज्ञात्वे विधेयता वाच्या, सा च न सम्भवति। उद्देश्यस्य पूर्वमप्रयोगादत आह *विधेयत्वेऽपीति*।

*मङ्गलार्थ इति*। "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते" इति भाष्योक्तेः। सञ्ज्ञासूत्राणां नियमार्थत्वम् प्राचीनोक्तम् कटाक्षयन्नाह *सर्वशब्दानामिति*। योगिदृष्ट्या तेषां सर्वशब्दार्थज्ञानात्। *सामान्यतः* सामान्यरूपेण। तच्च रूपं केवलान्वयि प्रमेयत्वादिकम्। तथा च सामान्यलक्षणया सर्वशब्दार्थानां ज्ञानसम्भवेऽपि यावच्छक्यतावच्छेदकस्याखिलशक्ततावच्छेदकस्य चाज्ञानात्तत्तद्धर्मावच्छिन्नविशेष्यकस्य शक्तिग्रहस्याभावेन तत्तद्धर्मावच्छिन्नविषयकशाब्दबोधासम्भव इति भावः। एतेन सामान्यत इति प्रतीकमुपादाय इदञ्चिन्त्यम् 'घटा' इति सामान्याकारस्य तस्य बोधोपयोगित्वदर्शनात्। 'सर्वं विष्णुमयञ्जगत्' इत्यादौ गत्यन्तराभावादिति यत्तत्परास्तम्।

समानधर्मप्रकारकबोधे तु तद्धर्मावच्छिन्नविशेष्यकशक्तिग्रहस्य 'सर्वे घटा रूपवन्त' इत्याकारकवाक्यजन्यशब्दबोधहेतुताया अनुभवसिद्धत्वात् सर्वशब्दस्य चोद्देश्यतावच्छेदकव्यापकविधेयव्याप्यपर्याप्तिको धर्मः प्रवृत्तिनिमित्तम्। उद्देश्यतावच्छेदकव्यापकत्वञ्च=तत्समानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वम्। विधेयव्याप्यत्वञ्च=स्वाभाववदवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकतत्तद्विधेयतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववत्त्वम्। अतो न 'सर्वे घटाः प्रमेयत्ववन्त' इत्यादौ विधेयतावच्छेदकावच्छिन्ननिरूपितस्य स्वाभाववदवृत्तित्वरूपव्याप्यत्वस्योद्देश्यतावच्छेदकव्यापकधर्मेऽप्रसिद्धावपि क्षतिः। व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य सुलभत्वात्। इत्थञ्च तादृशो धर्मः, सर्वे घटा इत्यादौ घटनिष्ठयावत्त्वमेव। एवमेव 'सर्वं विष्णुमयं जगत्' इत्यत्राप्युपपत्तिः। अत्र जगत्पदम्प्रागभावप्रतियोगिपरम्। विष्णुमयपदार्थस्य विष्णुसमेतकृतिप्रयोज्यपरतया प्रागभावप्रतियोगित्वव्यापकम् तादृशं यावत्त्वं सुलभमेव।

बोद्ध्यम् । तत्रैव 'सङ्केतग्राहकशास्त्रकरणं स्वेच्छयैव' इत्येषां यदृच्छा-शब्दत्वेन व्यवहारः 'स्वेच्छया सञ्ज्ञाः क्रियन्ते' इति च । एतदुपदेशरूपसङ्केतात्प्राक् तत्र सञ्ज्ञात्वाग्रहेण तासामनित्यत्वव्यवहारः। अत एव तत्तत्सञ्ज्ञाकरणज्ञानरूपप्रकरणादन्यार्थाग्रहणरूपनियमः कृत्रिमाकृत्रिमन्यायमूलतयोक्तः संख्यासञ्ज्ञासूत्रे भाष्ये । आर्थिकमेवामुं नियममादाय संज्ञासूत्रेषु नियमत्वव्यवहारः ।

"व्यवहाराय नियमः सञ्ज्ञायाः सञ्ज्ञिनि क्वचित्"

इत्यादिना कृतः । वाचकताबोधकत्वे ऽपि तदनुत्पादकत्वान्न शब्दार्थसंबन्धनित्यताहानिः । आसाञ्च शिष्टप्रयुक्तत्वात्साधुत्वमित्यन्यत्रविस्तरः ।

कार्यकालपक्षे ऽपि "मृजेर्वृद्धिः"(पा० सू०७।२।११४)इत्यादौ वृद्धिपदार्थजिज्ञासायां "वृद्धिरादैच्" इत्युपस्थितया तदर्थबोधरूपे शक्तिग्रहे वृत्ते विधिवाक्यार्थबोधः । अत एव "ष्यङः संप्रसारणम्" (पा०सू० ६।१।१३)इति सूत्रे भाष्ये "कार्यकालं सञ्ज्ञापरिभाषं' 'भस्य' इत्युपस्थितमिदं भवति "यचि भम्," इति इत्युक्तम् । "ईदूदेद्" (पा०सू० १।१।११) इतिसूत्रे भाष्ये ऽपि 'कार्यकालं सञ्ज्ञापरिभाषं

---

तत्तत्स्थाने प्रसिद्धानां व्यवहाराणामेकवाक्यतामाह—*तत्रैवत्यादिना* । एषामिति* । सञ्ज्ञाशब्दानामित्यर्थः । *तासामिति* । स्वेच्छया कृतानां सञ्ज्ञानामित्यर्थः । अत एव नित्यत्वादेव । एतेन नियमार्थत्वम् फलितम् । न तु शब्दमर्यादालब्धम् । किन्तु यस्य सञ्ज्ञा कृता तस्यैवोपस्थितिर्नान्यस्येति । *कृतः* । अस्य हरिणेति शेषः । ननु पाणिनिकृतसञ्ज्ञानामनादित्वाभावाच्छास्त्रविषयता न स्यादसाधुत्वादत आह—*आसाञ्चेति* । *शिष्टेति* । शब्दतत्त्वविद्भिः । एतेन भाषानुसारेण क्रियमाणानां लौकिकसञ्ज्ञानामसाधुत्वमिति सूचितम् ।

केचित्तु सञ्ज्ञाविषये यदि यथोद्देशपक्षस्तदा स्वप्रदेश एव वाक्यार्थबोधस्तस्मिन्काले चाविधीयमानत्वात्त्रिमात्रादीनामपि तपरत्वाभावे वृद्धिसञ्ज्ञा स्यात्तदा खट्वेन्द्रादौ त्रिमात्रादिव्यावृत्त्यर्थन्तपरत्वं परार्थमपि सम्भवति । कार्यकालपक्षे तु विधिशास्त्रैकवाक्यतया "मृजेर्वृद्धिः" इत्यादिशास्त्रैकवाक्यतया सञ्ज्ञासूत्राधीनो बोधो वाच्यः । एवञ्चैचो विधेयतया न सवर्णग्राहकतासंभव इति न तपरकरणम्परार्थमित्याहुस्तान्दूषयितुमुपक्रमते *कार्यकालपक्ष इत्यादिना* ।

प्रगृह्यः प्रकृत्येत्युपस्थितमिदं भवति ईदूदेद्द्विवचनं प्रगृह्यम्' इति । "निष्ठा" (पा०सू० ३।२।१०२)इति सूत्रे कैयटोऽपि 'निष्ठेत्युक्ते सञ्ज्ञावाक्यं "क्तक्तवतू निष्ठा"(पा०सू०१।१।२६)इति स्मर्यते'इत्याह ।

अत्र पक्षे एकत्र शक्तिग्रहे वृत्तेऽपि तत्प्रदेशस्यैव तत्रार्थे शक्तिरिति सम्भावनया प्रदेशान्तरस्थे बोधो न स्यादिति सर्वप्रदेशेषु तत्तत्पदशक्तिग्रहपूर्वकं विधिवाक्यार्थबोधः । यथोद्देशे तु एकदैव शक्तिग्रहात्सर्वत्र बोध इति विशेषः । एतेन "कार्यकालपक्षे तपरत्वं स्पष्टार्थमेव । आदैच्पदार्थस्य वृद्धिविशेषणतया विधेयत्वेन सवर्णग्रहणाप्रसक्तेः । यत्र वृद्धिपदं तत्रादैजित्युपतिष्ठत इति क्रमेण सञ्ज्ञासूत्राणामर्थात्"इत्यपास्तमित्यन्यत्रविस्तरः । अत्रातद्भावितानामपि आदैचां ग्रहणम् । तेन शालीयादिसिद्धिः ।

भूवादयो(पा०सू०१।३।१)क्रियावाचिनःकिम्?(१)विकल्पार्थकवाशब्दस्य निपातस्य धातुत्वे ऽप्रातिपादकत्वात्सुबभावे पदत्वानापत्तेः । तदुक्तौ तु न दोषः । वार्थस्य विकल्पस्य भूतभविष्यत्कालसंबन्धाभावेन क्रियात्वाभावात् । अस्त्याद्यर्थस्यापि तत्त्वं भूतभविष्यत्कालसम्बन्धात् । भ्वादयः किम् ? 'आणवयति' 'वट्टयति' इत्यादीनां धातुत्वे शास्त्र-

---

अत एव । सञ्ज्ञासूत्रस्य सम्पूर्णस्योपस्थितिसत्त्वादेव । *अत्र पक्षे* । कार्यकालपक्षे । एतेन वाक्यैकवाक्यता विधिसूत्रैरिति सूचितम् ।

*वाशब्दस्येति*।धातुसूत्रेष्वर्थनिर्देशस्यापाणिनीयत्वेन 'वा'इत्यानुपूर्व्याश्चोभयत्र समानत्वेन विकल्पार्थकवाशब्दस्यापि भ्वादित्वमिति भावः । *पदत्वानापत्तेरिति* । अत्र केचित् । "निपातस्यानर्थकस्य" इति वार्त्तिकेऽनर्थकग्रहणमकृत्वा निपातसामान्यस्य तेन प्रातिपदिकत्वेऽस्यापि प्रातिपदिकत्वसम्भव इत्याहुः । तन्न । सूत्रारम्भकारके वार्त्तिकाभावे तद्रीत्यैतत्प्रयोजनकथनात् । भाष्यरीत्या दिवशब्दे एवाव्युत्पन्ने क्रियावाचिन इत्यस्य प्रयोजनमस्तु(?) । *क्रियात्वाभावादिति* । कालपरिच्छेद्यत्वस्य क्रियात्वव्यापकत्वात् "क्रियाभेदाय कालस्तु" इति हर्युक्तेः । सौत्राणां

---

(१) असत्ववाचक वा साहचर्यादसत्ववाची भू गृह्यते । तादृशभूश्च क्रिया वाच्येव लभ्यते । तद्भूसाहचर्याच्च वाऽपि क्रियावाच्येव गृह्यते इति परस्परसाहचर्याद् क्रियावाचित्वप्राप्त्या 'क्रियावाचिनः कि ?' इतिप्रश्नः "क्रियावाचिनो भ्वादय" इति कौमुदीग्रन्थश्च सङ्गच्छते, अत एव सूत्रे वाग्रहणं कृतमान्यथा भ्वादय इत्येववदेत् ।

विषयतया साधुत्वापत्तेः। सूत्रशेषे भाष्ये स्फुटमेतद्। स्तम्भ्वादीना- मुदित्वेन धात्वधिकारविहितकार्योद्देश्यत्वादिना स्थितपाठभ्रंशानुमा- नान्न तेषु दोषः।

प्राग्रीश्व (पा० सू० १।४।५६) "अधिरीश्वरे" इत्यभि- व्याप्य प्राग्निपाता इत्यधिकारः। प्राक्निपाताः सन्तो गत्यादि- सञ्ज्ञाका इत्यर्थः। तेन ताभिः समावेशः। "अधिरीश्वरे" (पा० सू० १।४।९७) "विभाषा कृञि" (पा० सू० १।४। ९८) इत्यत्र निपातपदसम्बन्धश्च सिद्धः। एषां द्योतकत्वा-

---

धातुत्वमुपपादयति *स्तम्भ्वादीनामिति*।

*प्राग्रीश्वरादिति*। रीश्वरादिति ल्यब्लोपे पञ्चमी। रीश्वरशब्द- मभिव्याप्येत्यर्थबोधनाय। *एषामिति*। प्रादीनां चादीनाञ्चेत्यर्थः। *द्योतकत्वमिति* अत एव 'प्रजयति' इत्यत्र प्रकर्षस्य प्रशब्दद्योत्यस्य धात्वर्थविशेषणत्वसिद्धिः द्योतकत्वञ्च समभिव्याहृतपदशक्त्युद्बोधकत्वम् पदमत्र शक्तम्। तच्च प्रादिसमभिव्याहारज्ञानस्य तत्तत्पदजन्यतत्तदु- स्थितौ सहकारित्वकल्पनयोपपद्यते। अत एव 'अनुभूयते सुखम्' 'सा- क्षात्क्रियते गुरुः' इत्यादौ कर्मणि लकारस्य 'ईश्वरमनुभवति' इत्यत्र क- र्मणि सुपश्चसिद्धिः। न चैतेष्वनुभवादिरन्वादिनिपातानामेवार्थः। स्वस- युक्तनिपातार्थफलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वमिति, नानुपपत्ति- रिति वाच्यम्, अनुगच्छतीत्यादितोऽप्यनुभावानुकूलव्यापारबोधापत्तेः संयोगात्मकफलावरुद्धव्यापारेऽनुशब्दार्थान्वयासम्भवेन गम्धातोर्व्याप- रसामान्यार्थकत्वस्य स्वीकार्यत्वात्। अनुभ्वादिनिष्ठविशिष्टानुपूर्वी शक्तता- वच्छेदिकेति चेन्न, गौरवात्। धातोः फलव्यधिकरणव्यापारवाचकत्व- सकर्मकत्वानुपपत्तितादवस्थ्याच्च।

न च धातोर्न तादृशार्थवाचकत्वं, किं तु लक्षणया तत्तदर्थबोधकत्वम् लाक्षणिकार्थमादायैव चेष्टपूर्वोक्तप्रयोजनसिद्धिरिति वाच्यम्। प्रादी- तात्पर्यग्राहकतां विना विलक्षणार्थावगमासम्भवेन द्योतकत्वस्यैव सिद्धि- सम्भवात्तात्पर्यग्राहकत्वस्यैव द्योतकत्वात्। "उपसर्गाः क्रियायोगे" इति सूत्रस्यापि 'प्रादयः' क्रियाविशेषणीभूतार्थतात्पर्यग्राहकत्वे उपसर्गसंज्ञाः स्युरित्यर्थसम्भवात्। एवं 'प्रतिष्ठते' इत्यत्र द्योतकतां विना न निर्वाहः प्रशब्दस्याभावबोधकत्वे धातोरनेकार्थत्वेन गतिबोधकत्वेऽपि गत्यभाव एव प्रतीयेत। यदि स्थाधातुर्गतिनिवृत्त्यर्थक एव प्रशब्देन चाभाव- प्रतिपाद्यत इत्युच्यते, तदा गत्यभावत्वावच्छिन्नाभावो ज्ञायेत न

विलक्षणगतित्वेन । अतो धातोरेव तादृशार्थकत्वं, प्रशब्दस्तात्पर्यग्राहकः । एवं 'चैत्रमिव पश्यति' इत्यादौ चैत्रपदस्य चैत्रसादृश्यविशिष्टे लक्षणा । इवशब्दस्तात्पर्यग्राहकः एवं 'साक्षात्क्रियते' 'अलं क्रियते' 'नमस्क्रियते', 'ऊरीक्रियतेः' गुरुः, इत्यादौ तत्तदर्थे वर्तमानात्कृञो लकारस्य कर्मणि सिद्ध्यर्थन्तस्य तत्तद्वाचकत्वमभ्युपेयम्, तात्पर्यग्राहकत्वममीषामस्तु ।

न च कृञः सकर्मकत्वात्कर्मणि लकारो नानुपपन्न इति वाच्यम् । साक्षात्काराद्यर्थे न स्यात्, क्वचित्सकर्मकत्वात्कर्मणि लकारे 'विकुरुते वायुः' इत्यत्रापि स्यात् । साक्षात्कारादेरधात्वर्थत्वे तु धात्वर्थफलाश्रयत्वरूपकर्मत्वाविशिष्ट एव तत्तद्धातूत्तराख्यातस्य विधानान्न स्यात् । न च साक्षात्कारादेः साक्षात्पदादिशक्यत्वमस्तु । तदनुकूलव्यापारस्तु धात्वर्थ इति वाच्यम् । स्वार्थफलव्यधिकरणव्यापारावाचकतया धातोः सकर्मकत्वाभावापत्तेः ।

किञ्च साक्षात्पदार्थस्य नामार्थतया धात्वर्थे भेदसम्बन्धेनान्वयोऽपि न स्यात् । विशेष्यतासम्बन्धेन भेदसम्बन्धावच्छिन्ननामार्थप्रकारताकशाब्दबोधे प्रत्ययजन्योपस्थितेर्हेतुत्वस्य 'ओदनः पचति' इति वाक्यात् कर्मत्वसंसर्गकबोधवारणाय स्वीकरणीयत्वात् । एवं 'पटो घटश्च' इत्यादौ समुच्चयोपि द्योत्य एव । अन्यथा 'शोभनः समुच्चय' इतिवत् 'शोभनश्च' इत्यस्याप्यापत्तिः । न च चशब्दार्थसमुच्चयस्य नित्यपरतन्त्रतया न विशेषणान्वय इति वाच्यम्, किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधे इतराविशेषणतया पदजन्योपस्थितेर्हेतुत्वेन वाचकत्वस्वीकारे तथोपस्थितेः सत्त्वाच्छाब्दबोधे शोभनादिविशेषणान्वयसम्भवात् । एवं चकारशक्यार्थस्य समुच्चयस्य षष्ठीं विनाऽन्वयापत्तिश्च स्यात् । विभक्त्यर्थमद्वारीकृत्य नामार्थयोर्भेदेनान्वयबोधायोगात् । अन्यथा 'राजा पुरुष' इत्यत्रापि तदापत्तेः । 'धवखदिरयोः समुच्चय' इतिवत् 'धवस्य च खदिरस्य च' इत्यपि वाचकत्वं पक्षे स्यात् । यदि च समुच्चिताभिधायकत्वं चकारस्योपेयते, एवं च भेदाभावान्न घटादिपदेभ्यः षष्ठी शब्दशक्तिस्वाभाव्यात्तस्यासत्त्वरूपतैव धातूपस्थाप्यार्थस्यैवोपेयत इति मन्यसे, तदा घस्यैशास्यान्यलभ्यत्वात्तत्र पुनश्चस्य शक्तिकल्पने गौरवम् ।

न च षष्ठीवारणान्यथानुपपत्त्या फलमुखत्वेन नायं दोष इति वाच्यम् । घटः पटश्चेत्यत्र पटपदार्थस्य समुच्चये प्रतियोगितासम्बन्धेनान्वयो वाच्यः, स च पदार्थैकदेशत्वान्न स्यादिति द्योतकत्वस्वीकारस्यावश्यकत्वात् । एवम् 'शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव' इत्यत्रापि वाचकत्वेऽगतिः । उस्रपदोत्तरतृतीययोस्रपदार्थस्य करणत्वम् प्रतिपादनीयम् । तच्च न संभ-

वाचकत्वञ्च यथाकार्यं यथाप्रयोगं बोद्धयमित्यन्यत्र विस्तरः ।

असत्त्वे इति पर्युदासो लाघवादित्याह—अद्रव्येति । विशेष्यतया द्रव्याभिन्नार्था इत्यर्थः । तेन क्रियाविशिष्टद्रव्यवाचिनां विप्रादिघटकप्रा-

---

वति । उदीच्यकर्मकोद्धारे उस्राणामकरणत्वात् । इवशब्दस्य सदृशार्थकत्वेऽप्यसत्त्वार्थकतया तदुत्तरतृतीयाया अभावेनोस्रसदृशाभिन्नैः शरैरिति धासम्भवात् । यदितु "अव्ययात्" इति ज्ञापकात्सर्वविभक्त्युत्पत्तिः स्वीक्रियते, तदोस्रपदोत्तरतृतीयानन्वयप्रसङ्ग इति समभिव्याहृतपदार्थे उपमानत्वस्याभेदान्वयस्य द्योतक इवशब्द इति स्वीकार्यमिति न क्षतिः । एवमेव 'वागर्थाविव सम्पृक्तौ' इत्यत्राप्यूह्यमिति दिक् ।

*वाचकत्वञ्चेति* । अयम्भावः । यथा घटमानयेत्यादिवाक्यात्प्रथमबोधः प्रयोज्यवृद्धस्येति, बालस्य यद्यप्यन्यान्वितः शक्तिग्रहस्तथाप्यवापोद्वापाभ्यां घटादिपदस्यैव वाचकत्वम् कल्प्यते । तथेहापि निपातानामन्वयव्यतिरेकाभ्यां सिध्यति । न च 'प्रतिष्ठते' इत्यादावुक्तानुपपत्तिरिति वाच्यम् । प्रकारतासम्बन्धेन धात्वर्थविशेष्यकबोधे कारकविभक्तिनिपातान्यतरजन्योपस्थितेर्हेतुत्वस्य कल्पनात् । निपातातिरिक्तत्वविशेषणम् नामार्थधात्वर्थयोरभेदान्वयबोधप्रयोजकव्युत्पत्तौ देयम् । नामार्थयोरभेदान्वयप्रयोजकव्युत्पत्तावप्येवम् । वाचकत्वादेव 'नञ' इत्युक्तेऽभावमात्रप्रतीतिः सार्वजनीना निर्वहति ।

न च प्रसज्यप्रतिषेधार्थकनञः क्रियान्वयनियमभङ्ग एवं सति स्यादिति वाच्यम् । गम्यमानक्रियामादाय 'कस्मात्त्वं नद्या' इत्यात्रेव तदुपपत्तेः । अथवा प्रकृष्टादिधर्माः प्राद्यर्थस्तथा च "स्तोकं पचति" इत्यादिस्थलवदभेदान्वयसम्भवः । न च निपातानां वाचकत्वे घटादिपदानामिव केवलानामपि प्रयोगः स्यादिति वाच्यम् । केषाञ्चिन्नञादीनां तथात्वस्येष्टत्वात् । कुत्र चित्तु "ते प्राग्धातोः" इति सूत्रस्य नियामकत्वात् । कुत्र चित्तु प्रकृतिप्रत्यययोरिव स्वभावतः केवलाप्रयोगस्वीकारात् । एवं सति यद्वि द्योतकतां विना न गतिस्तत्र द्योतकत्वस्यैव स्वीकार उचित इति नास्माकमेकतरपक्षाग्रह इत्याशयेनाह *यथाकार्यं यथाप्रयोगमिति ॥

*विशेष्यतयेति* । द्रव्यावृत्तिविशेष्यताकोपस्थितिजनका इत्यर्थः । अत्र द्रव्यपदं न गुणाश्रयपरम् । किन्तु वस्तूपलक्षणम् । यत्र सर्वनाम प्रयुज्यते द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षित इति लक्षणलक्षितमेव गृह्यते । वस्तूपलक्षणम् वस्तूपलक्ष्यते परामृश्यते येन तत्सर्वनाम यत्र परामर्शाय प्रयुज्यते सोऽर्थो द्रव्यमित्युच्यते । अथवा भेद्यत्वेन लिङ्गसंख्यानिरूपितविशेष्यत्वेन विवक्षित इत्यर्थः । *क्रियाविशिष्टेति*

दीनां न । चादयः किम् ? स्वरादिपठितानामसत्त्ववृत्तित्वे आद्युदात्तत्वं मा भूदिति ।

उपसर्गाः (पा०सू०१।४।५९) योगग्रहणं यदर्थे प्रादीनामन्वयस्तं प्रत्येवोपसर्गत्वादीत्यर्थबोधनाय । तेन विगताः सेचको अस्मात् 'विसेचको ग्राम' इत्यादौ षत्वन्न ।

गतिश्चेति (पा०सू० १।४।६०) 'च' उपसर्गसञ्ज्ञासमावेशार्थः । तेन 'प्रतिप्रणीतम्' इत्यादौ गतित्वात् "गतिरनन्तरः" (पा० सू०६।२।४९) इति स्वर, उपसर्गत्वात् णत्वञ्च सिद्ध्यति । प्रादय इति योगविभागस्तु क्रियायोगाभावे ऽपि निपातत्वाय । एतत्सिद्धमेवोपसर्गप्रतिरूपकस्य निपातत्वमुक्तं चाद्यन्तर्गणसूत्रेणेति दिक् ।

प्रपरेत्यादावनुकार्यानुकरणयोरभेदविवक्षया सुबनुत्पत्तिः । निस्दुसिति । अत्रेदं बोद्ध्यम् । सान्तग्रहणे रान्तस्याग्रहणमेव । यत्र तु रुत्वमसिद्धं तत्र रान्तग्रहणे ऽपि न सान्तग्रहणं, तद्दृष्ट्या रुत्वस्यासिद्धत्वात् । यत्र तु रुत्वस्य सिद्धत्वं यथा षत्वणत्वयोस्तद्विषयो-

---

प्रकर्षविशिष्टपूरणादिक्रियेत्यर्थः । अद्रव्यार्थाः किम् ? पशुः ॥

*इत्यर्थबोधनायेति* । क्रियायामित्येवास्तु । अन्वेतीत्यस्याध्याहारेण क्रियायोग इत्यर्थलाभसम्भवादिति भावः ॥

*समावेशार्थ इति* । अन्यथा आकडारीयत्वात्स न स्यात् । *निपातत्वायेति* । तेन 'प्रगत आचार्यः प्राचार्य' इत्यादावव्ययपूर्वपदप्रकृतिस्वरसिद्धिः । नन्वेतन्निपातसञ्ज्ञाया न फलम् । उपसर्गप्रतिरूपकत्वादेवाव्ययत्वसिद्धेरत आह—*एतत्सिद्धमेवेति* । योगविभागसिद्धमेवेत्यर्थः ।

*अनुकार्यानुकरणयोरिति* । इदम्प्राचामनुरोधेन । अनुकरणमनुकार्याद्भिन्नमेवेति सिद्धान्तिमते सुबुत्पत्तावपि प्रकृतिवदित्यतिदेशेनाव्ययत्वाद्विभक्तेर्लुक् अनुकार्यस्वरूपभङ्गभिया च पदान्तत्वप्रयुक्तं कार्यन्न ।

*सान्तग्रहण इति* । यथा "निसस्तपतावनासेवने" इत्यत्र । *यत्र तु रुत्वमसिद्धन्तत्र* । यथा "न सुदुर्भ्याम्" "निरः कुषः" "सुदुरोरधिकरणे" इत्यत्र । *यत्र तु रुत्वस्य सिद्धत्वमिति* । "स्फुरतिस्फुलत्योर्निर्निविभ्य" इत्यत्र । *यथा षत्वणत्वयोः* । अत्र छेदः । तद्विषयोपसर्गत्वप्रतिषेधपरे *वार्तिक इति* । इदं वार्तिकं यद्यपि "गतिश्च" इति सूत्रे पठितं तथाप्युपसर्गसञ्ज्ञायाः कार्यकालत्वेन प्रतिषेधवचनस्य रुत्वापेक्षया परत्वं बोध्यम् । एतच्च 'इह णत्वं मा भूत्' इति भाष्यकारोक्त्या

पसर्गत्वप्रतिषेधपरे "दुरः षत्वणत्वयोः" इति वार्त्तिके कृतरेफसा-
स्यापि ग्रहणम् ।

"षत्वणत्वयोः" इत्यस्य तद्विधायकशास्त्रयोरित्यर्थात् । अ-
एव सुषामादिषु दुष्ठुशब्दपाठः सार्थकः । स हि "अपदुः-
स्थः कुः" इति दुस्पूर्वकस्थाधातोः कुप्रत्यये साधुः । अन्य-
दुस्पूर्वकात्कुप्रत्यये 'उपसर्गात्' इत्येव षत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमे-
न चास्य रूढत्वेनावयवार्थाभावादुपसर्गत्वाभावः । अत्यन्तरूढेषु प्रति-
ष्ठानिष्ठादिषु षत्वानापत्तेः । अर्थवत्त्वारोपेण चेत्प्रकृते ऽपि । दुसः-
ठस्तु 'दूरयते' इत्यादौ रुत्वासिद्ध्या लत्वाभावार्थ इति दिक् ।

न वेति ( पा० सू० १।१।४४ ) इतिर्लोके ऽर्थपदार्थका-
शब्दपदार्थकत्वकृत् । यथा 'गवित्ययमाह' इत्यादावनुकरणे ।
तु "स्वं रूपम्" ( पा० सू० १ । १ । ६८ ) इति परिभाषणाच्छ-
ब्दपदार्थकस्यार्थपदार्थकत्वकृत् । क्वचिदितेर्न पदार्थविपर्यासकृत्

---

'दुःस्थितम्' इत्यस्यार्थे 'दुःष्ठितम्' इत्याप्तप्रयोगादर्शनाच्चाध्यवसी-
ते । *सान्तस्यापि ग्रहणमिति* । तेन 'दुःसेधति' इत्यत्र कदापि षत्व-
न्न । अत एव वार्तिके उभयोर्ग्रहणादेव । यदि रेफान्तस्यैव ग्रहणं स्यात्
तदा सान्तपूर्वकस्य षत्वे सिद्धे सुषामादिषु षत्वार्थं तत्पाठो व्यर्थः स्या-
दिति भावः ।

*उपसर्गत्वाभाव इति* । क्रियाविशेषणीभूतार्थद्योतकत्वाभावात्
न च यदा दुर्पूर्वकात् कुः तदा वार्तिकेन निषेधे प्राप्ते षत्वार्थं पाठस्याव-
कत्वेन 'अत एव'इत्यसङ्गतमिति वाच्यम्, उणादिव्युत्पन्नानां सञ्ज्ञाशब्द-
या तस्यानभिधानादिति । न च निस् निर् इत्यनयोस्स्वीकारे "स्वरा-
सूति" इति विकल्पानन्तरम् "निरः कुषः" इत्यस्य वैयर्थ्यम् । "एका-
उपदेश" इति सूत्रानन्तरं रेफान्तनिर्घटितं "निरः कुषोऽनिष्ठायाम्"
पठनीयम् । तेन सान्तोपपदे रुत्वस्यासिद्धत्वादिड् न भविष्यतीति
द्वयसिद्धौ लाघवसम्भवादिति वाच्यम्, अनिष्ठायामित्यस्य पर्युदास-
कृत्स्वेव प्रवृत्त्यापत्तेः । प्रसज्यप्रतिषेधे तु न लाघवं वः ॥

*लोकेऽर्थपदार्थकस्येति* । यथा घटः पट इत्यादौ घटादिपदा-
ब्दप्रकारिकार्थोपस्थितिर्यद्यपि भवति तथापि इति शब्दसमभिव्याहारे
इत्यादौ न शब्दप्रकारिकोपस्थितिः, तथाऽत्र शास्त्रे "अग्नेर्ढक्" इत्या-
"स्वं रूपम्" इति परिभाषणाच्छब्दस्यैव प्राधान्येन भानम् । इतिशब्द-

यथा ऽनुवादवाक्ये। स च नवाशब्दाभ्यां प्रत्येकं सम्बध्यते व्याख्यानात्। तेन नवाशब्दयोरर्थौ संज्ञिनौ। "स्वंरूपम्" इत्यस्य प्रत्याख्याने त्वितिशब्दो व्यर्थ एव। अर्थे कार्यस्याबाधात्। तयोरेव संज्ञित्वे तु "विभाषाश्वेः" (पा०सू०६।१।३०) इत्यादौ नवाशब्दावादेशौ स्याताम्। प्राप्तविभाषासु नास्योपयोगः, तासां पक्षे निवृत्तिमात्रफलकत्वात्। अप्राप्तविभाषास्वपि न। तासां पक्षे विधिमात्रार्थत्वात्, अप्राप्तत्वेन निषेधासंभवाच्च। तस्मादुभयत्र विभाषार्थमिदम्।

"विभाषाश्वेः" इत्यादौ एतदभावे यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव विकल्पः स्यात्। कित्सु तु नित्यमेव संप्रसारणं स्यात्। निषेधमुखेन प्रवृत्तौ कित्स्वेव प्रवर्त्तेत न पित्सु। उभयथा प्रवृत्तिस्तु वैरूप्याद्वाक्यभेदापत्तेश्चाशक्या। संज्ञाकरणे तु श्रुतक्रमानुरोधात्पूर्वं कित्सु निषेधस्ततः किदकिद्रूपे सर्वस्मिन् लिटि ऐकरूप्यं प्रापिते सति पक्षे भवतीत्येकरूपेण विधिमुखेनैव विकल्पः।

---

भिव्याहारे तु शब्दप्रकारिकैवोपस्थितिः, इत्येव पदार्थविपर्यासकृत्त्वम्। यद्यपि शब्दार्थौ द्वावपि पदार्थौ तथापि तयोर्या विषयता तद्विपर्यासकृत्त्वमेव पदार्थविपर्यासकृत्त्वमिति भावः। *अनुवादवाक्य इति*। यथा—

'आः किमेतदिति क्रोधादाभाष्य महिषासुरः'।

इत्यत्र, 'इति हेतुस्तदुद्भव' इत्यत्र च 'जयेति देवाश्च मुदा' इत्यादौ च। निषेधविकल्पयोर्विभाषासञ्ज्ञाविधानोपयोगं दर्शयितुमुपक्रमते-*प्राप्तविभाषास्विति*। *वैरूप्याद्वाक्यभेदापत्तेश्चेति*। यतो नैकत्रोभयरूपेण प्रवृत्तिः किन्त्वेकत्र विधिमुखेनापरत्र निषेधमुखेन। एवञ्च वैरूप्यमिति। सूत्रावृत्त्या क चिद्विधिमुखेन क चिन्निषेधमुखेन प्रवृत्तौ वाक्यभेदापत्तिरिभावः। प्राप्तविभाषा यथा "तिरोऽन्तर्द्धौ" इतिसूत्रादन्तर्द्धावित्यनुवर्त्तमाने "विभाषा कृञि" इति। अत्र भावांशस्य सिद्धत्वात् पक्षे निवृत्तिफलिकैवास्य प्रवृत्तिरित्यादि। अप्राप्तविभाषा यथा "विभाषोपयमने"। अत्रोपयमनं गन्धनाङ्गं विवक्षितम् यदा तदा "यमो गन्धने" इति नित्यमेव शास्त्रम्पूर्वविप्रतिषेधेन प्रवर्त्तत इति तत्सूत्राविषये एवैतत्सूत्रप्रवृत्तिर्वाच्या। तत्राभावांशस्य सिद्धत्वाद्विधिमुखेनैवास्य प्रवृत्तिः। 'विभाषा श्वेः" इत्यादावुभयत्र विभाषासु उभयमुखेनैव प्रवृत्तिर्वाच्या सा पूर्वोक्तरीत्या न सम्भवतीति सूत्रस्यावश्यकतेति भावः।

भाष्यकृतस्तु, एवं हि "हृक्रोरन्यतरस्याम्" (पा०सू०१।४।५३) इत्यादावनुपपत्तिर्विभाषापदाभावात् । इतिशब्दस्य विभाषेत्यत्रा सम्बन्धात् विभाषापदार्थः सञ्ज्ञेति तु न युक्तम् । अर्थे सञ्ज्ञात्वस्या दृष्टत्वात् । अर्थाक्षिप्तशब्दमात्रं सञ्ज्ञेत्यपि न युक्तम्, एकस्यार्थस्य समानफलकानेकसञ्ज्ञाकरणस्य "अनाकृतिः सञ्ज्ञा" इति वृद्धिस ञ्ज्ञासूत्रस्थभाष्येण तिरस्कारात् । तस्मात्तत्र लक्ष्यानुसारेणैवोभयमुखे न प्रवृत्तिर्वाच्येति विभाषा पदघटितेऽपि तथैवास्तु, किं सूत्रेणे जातिव्यक्तिपक्षयोरुभयोरपि सूत्रं प्रत्याचख्युः ।

स्वं रूपं श ॥ स्वरूपमित्यस्य बोद्ध्यमिति शेषो व्याख्यानात्

"काकाक्षिगोलकन्यायेनोभाभ्यामितिशब्दः सम्बध्यते" इति प्राचा किं खण्डयति-*इति शब्दस्येति*। *जातिव्यक्तिपक्षयोरिति*। जा तिपक्षे क्वचिदेकरूपेण प्रवृत्तावपि चारितार्थ्येन सूत्रं सार्थकमिति वैरूप मेकस्य "विभाषाश्वेः" इत्यस्योभयरूपेण प्रवृत्तौ सम्भाव्यत इति "न वेति सूत्रमावश्यकम् । व्यक्तिपक्षे तु प्रतिलक्ष्यं लक्षणभेदात्कचिन्निषेधमुखेनै स्य क्वचिद्विधिमुखेनापरस्य प्रवृत्तिर्भविष्यतीति नार्थः सूत्रेणेति प्राचामु क्तिः, सा न युक्तेतिभावः ।

यत्त्वत्रेदश्चिन्त्यम् "अशिष्यो वा विदितत्वात्" इति प्रत्याख्यानभा वाशब्दस्वारस्येन तस्य पाक्षिकत्वलाभाज्जातिव्यक्तिपक्षमाश्रित्यारम्भा नारम्भाभिप्रायेणैव व्याख्यानमुचितमिति । तन्न । 'अशिष्य' इत्यक्षरस्वा रस्यभङ्गापत्तेः । सूत्रस्य प्रयोजनकथनसमये एकस्यैव सूत्रस्य प्राप्तिवि येऽप्राप्तिविषये चोपयोगाभावमुपपाद्योभयविभाषायां "विभाषा श्वेः" इत्य विधिप्रतिषेधयोर्युगपद्वचनानुपपत्तिरित्यनेनाप्येकस्यैव वैरूप्येणावृत्ति ङ्का कृत्वा 'सिद्धं तु पूर्वेणोत्तरस्य बाधितत्वात्' इत्यनेन श्रुतक्रमानुरो सञ्ज्ञिनोर्निषेधविकल्पयोर्विधिप्रदेशे उपस्थित्या सञ्ज्ञिभेदेन वाक्य व्युत्पाद्य सा शङ्का परिहृता । एवञ्च यथारम्भपक्षे शङ्कासमाधानाभ्या कस्यैव लक्षणस्य निर्दिष्टत्वं प्रतिपादितं तथैव 'अशिष्योवा' इतिप्र ख्यानभाष्येऽपि व्याख्यानमुचितम् न तु व्यक्तिपक्षेऽनावश्यकत्वाभिप्रा णेति दिक् ॥

ननु "स्वं रूपम्" इतिसूत्रस्य सञ्ज्ञास्वरूपबोधकत्वं न सम्भव सामानाधिकरण्येनोभयोरनिर्देशात् । नापि स्थान्यादेशभावबोधकत्व सूत्रस्यैव वैयर्थ्यात् । नाप्यागमागमिभावः तस्य लिङ्गानुपलम्भात् । स्सूत्रारम्भसार्थक्याय बोध्यमित्यस्याध्याहार एवेत्याशयेनाह *व्या

दाह–सञ्ज्ञीति । "राज्ञो यत्" इत्यादौ लौकिकव्युत्पत्त्योपस्थितार्थस्य प्रत्ययेन पौर्वापर्यासम्भवात्प्रातिपदिकादित्यनेनान्वयासम्भवाच्च तदर्थकशब्दमात्रग्रहणापत्तौ नियमार्थं सूत्रम् । तत्रस्वशब्द आत्मीयत्वेनार्थमाह । रूपशब्देन शब्दस्वरूपमेतदुभयं सञ्ज्ञीत्यर्थः । तत्रार्थो न विशेष्य, उक्तयुक्तेः । किंतु शब्दविशेषणम् । एवञ्चार्थविशिष्टः शब्दः सञ्ज्ञीत्यर्थवद्ग्रहणपरिभाषा सिद्धा । अत्र चार्थः कल्पितान्वयव्यतिरेककल्पितः प्रकृतिप्रत्ययादिबोध्यः शास्त्रीयोऽपि । स च मुख्यः प्रसिद्धश्चेति गौणमुख्यन्यायो 'अभिव्यक्तपदार्था ये' इति न्यायश्च सिद्धः । अत एवेयं विशिष्टरूपोपादान एव, इदं सूत्रञ्च । तत्रैवार्थोपस्थितेस्तत्रैवानियमप्रसक्तेश्च, न तु वर्णग्रहणे इत्याकरे स्पष्टम् ।

"दाधाघु" (पा०सू०१।१।२०) इत्यस्य "ईहल्यघोः" (पा०सू०६।४।११३) इत्यादौ चारितार्थ्येन "उपसर्गे घोः" (पा०सू०३।३।९२) इत्यादौ स्वरूपमित्यनेन परत्वाद्बाधशङ्कावारणार्थम्–अशब्दसञ्ज्ञेति। नात्र षष्ठीतत्पुरुषः। कर्मसञ्ज्ञादेरर्थसञ्ज्ञात्वेन निषेधाप्रवृत्तौ "क-

---

नादिति* । *नियमार्थमिति* । स्वं रूपमेव बोध्यमित्यर्थः । *उभयं सञ्ज्ञीति* । रूपग्रहणसामर्थ्यात् । *प्रकृतिप्रत्ययादीति* । आदिना निपातपरिग्रहः । उपपादितमेतत् । *शास्त्रीयोपीति* अपिना लौकिकपरिग्रहः । तत्र प्रकृते शास्त्रीयार्थग्रहणात् 'अदो जग्धिः' इति जग्धादेशो 'मदीहषे' इतिधात्ववयवाच्छब्दस्य न । अर्थवतः प्रत्ययस्य ग्रहणात् "सन्यङोः" इति द्वित्वम् "ऋतेरीयङ्" इतिविहिते याङि न प्रवर्त्तते । उपसर्गस्यार्थवतो ग्रहणात् "उदः स्थास्तम्भोः" इति पूर्वसवर्णो 'गत्स्थानार्मुम्' (?)इत्यादौ न ।

*मुख्यः प्रसिद्धश्चेतीति* । अत्र शीघ्रोपस्थितिकत्त्वेनान्तरङ्गत्वं बीजम् । मुख्य इत्यस्य मुखमिव प्राथमिकोपस्थितिविषय इत्यर्थो न तु प्रकारतानात्मकविशेष्यताश्रय इत्यर्थः । तत्र मुख्य इत्यनेन गौणलाक्षणिकस्य व्यावृत्तिः । एतेन 'अग्निसोमौ माणवकौ' इत्यत्र 'ईदग्नेः' इति न । अप्रसिद्धत्वमित्यनेन सञ्ज्ञाशब्दव्यावृत्तिः । तेन सञ्ज्ञाश्वशुरस्यापत्यमित्यत्र 'राजश्वशुरात्' यदिति न । *न तु वर्णग्रहण इति* । तेन "इको यणचि" इत्यादौ न परिभाषाप्रवृत्तिः । अन्यथा 'दध्यत्र' इत्यादावेव यणादिः स्यान्न तु पचत्यत्र' इत्यादौ । "तस्मादित्युत्तरस्य" इत्यादिनिर्देशोऽप्यत्र मूलम् ।

*"ईहल्यघोः" इत्यत्र चारितार्थ्येनेति* । आत इत्यनुवृत्त्येति भावः ।

मण्यण्" (पा०सू०३।२।१) इत्यादौ स्वरूपग्रहणापत्तेः। किन्तु सप्त
तत्पुरुषः। शब्दपदेन च शब्दशास्त्रं तदाह—शब्दशास्त्रे इति
भाष्ये तु अर्थे कार्यस्य बाधेऽप्युपस्थितत्वात् 'राज्ञ' इत्यादौ तज्जन्य
प्रकारतयाभासमानस्य राजन्शब्दस्यैव ग्रहणं भविष्यतीति व्यर्थं सूत्र
उपस्थितार्थत्यागे मानाभावेन तस्य विशेषणतया ऽन्वयसम्भवेन
र्थवत्परिभाषापि सिद्धा। लक्ष्यानुसारात् तत्तत्संज्ञाकरणज्ञान
प्रकरणाच्च षान्तसंख्यावाचकषष्शब्दस्य षट्सञ्ज्ञाकरणेन शब्द
स्त्रीयसञ्ज्ञायां स्वरूपाग्रहणज्ञापनाच्च 'उपसर्गे घोः' इत्यादावदोष
शब्दसञ्ज्ञेत्यापि व्यर्थमित्युक्तम्।

अत एव जनपदापत्यपशुदेवतादिशब्देषु न दोषः। अत
वृक्षादिषु विशेषाणां ग्रहणं "स्वे पुष" इत्यत्र पर्यायाणां विशेषा
स्वरूपस्य च ग्रहणम्, "सभाराजा" (पा०सू०२।४।२३) इत्यत्र पर्
याणामेव ग्रहणम्, "पक्षिमत्स्यमृगान्हन्ति" (पा०सू०४।४।३५) इत्या
दौ मृगपक्षिणोः पर्यायाणां विशेषाणां स्वरूपस्य च ग्रहणम्, मत्स्यप
देन स्वरूपस्य विशेषाणां मीनरूपपर्यायस्य च ग्रहणम् सिद्ध्यति।
अन्यथा तदर्थं यत्नः कर्त्तव्यः "परश्च घाङ्कयोः" (पा०सू०८।२।२
इत्यत्र घशब्देन स्वरूपग्रहणं "नदीपौर्णमासि" (पा०सू०५।४।११०
इत्यत्र नदीपदेन स्वरूपग्रहणं सिद्ध्यति। लक्ष्यानुसारिव्याख्याने
च मम सर्वेष्टसिद्धिः। ज्ञापकपक्षे ऽपि ज्ञापकासिद्धस्यासर्वत्रिकत्वा
दोषः। अत एव भगवता ज्ञापकेन सिद्धम् वचनम् प्रत्याख्याता

---

पूर्वोक्तं सूत्राशयवर्णनमात्रमित्याशयेनाह—*भाष्ये त्विति*। द्वितीयप्रयो
जनान्यथासिद्धिमाह—*उपस्थितार्थेति*। अशब्दसञ्ज्ञेत्यपि व्यर्थ
त्याह—*लक्ष्यानुसारादिति*। *अत एव*। सूत्राभावादेव। *वृक्षादि
ति*। "विभाषावृक्ष" इति सूत्रे। *यत्नः कर्त्तव्य इति*। तदुक्तं भा
'सित्तद्विशेषाणां वृक्षाद्यर्थम् पित्पर्यायवचनस्य च स्वाद्यर्थम्'। चेन
शेषाणां स्वरूपस्य च सङ्ग्रहः। 'जित्पर्यायवचनस्यैव राजाद्यर्थम्'। झि
स्य च तद्विशेषाणां च मत्स्याद्यर्थम्। अस्यैकस्य पर्यायवचनस्येष्यते
नान् हन्ति मैनिक' इति। ननु यदा षष्शब्दस्य सञ्ज्ञात्वकरणेन ज्ञाप
स्वरूपाग्रहणमिति स्वीक्रियते तदा 'नदीपौर्णमासी' इत्यत्र नदीपदेन स्व
ग्रहणन्न प्राप्नोतीत्यत आह—*ज्ञापकपक्षेऽपीति*। *अत एव*। ज्ञापका

ति दिक् ।

येन वि (पा०सू०१।१।७२)॥ येनेति करणे तृतीया विधिरिति भावे किः । कर्मात्र विधेयम्, कर्त्ता चाचार्यः प्रसिद्धत्वाल्लभ्यत एव यत्तु करणम् कर्तृपरतन्त्रमिति तृतीयया पारतन्त्र्यम् लक्ष्यते, तच्च शब्दानां विशेषणत्वेनेति विशेषणमिति लब्धमिति तन्न । सुब्विभक्तौ न लक्षणेत्यस्य सर्वसम्मतत्वात् । किं बहुना येषां प्रत्ययानामन्येषां वा शब्दानामर्थे विधानम् कृतं शास्त्रेण तेषामन्यत्रार्थे तदर्थे चान्येषां लक्षणया ऽपि साधुत्वाभावस्य "प्रत्ययः" (पा०सू०३।१।१) "पुंयोगात्" (पा०सू०४।१।४८) इत्यादिभाष्यतो लाभात् ।

---

द्धस्यासार्वत्रिकत्वादेव ॥

*येनेति करणे तृतीयेति* । कर्त्तरि तु, न सम्भवति। षष्ठ्या बाधात्। नापि हेतौ, करणतृतीयायाः कारकविभक्तित्वेन प्राबल्यात् । *न लक्षणेति* । "कर्तृकर्मणोः कृति" इति सूत्रारम्भात् । यदि सुब्विभक्तावपि लक्षणा स्यात्तदा तद्विषये "शेषे षष्ठी" विधाय लक्षणया कर्तृत्वकर्मत्वाभ्यामेव बोधस्याप्युपपत्तिं कृत्वा "कर्तृकर्मणोः" इति सूत्रस्यानारम्भ एव कार्यः । न केवलं सुब्विभक्तावेव न लक्षणा, किन्त्वन्यत्रापीत्याह-*किम्बहुनेति* ।

*प्रत्ययः पुंयोगादिति* । आद्ये प्रत्ययेति महासंज्ञाकरणेन प्रत्याययतीति प्रत्यय इत्यनेन यस्मिन्नर्थे शास्त्रेण विधानं कृतं तत्रैव साधुत्वं भवति, नान्यत्रेत्यनेन लभ्यते । साधुत्वविधानपर्यन्तं शास्त्रव्यापारात् । एव "परश्च" इति सूत्रे तस्य प्रयोगनियमार्थत्वं व्यवस्थापितम् । प्रत्ययः परो भवत्येवेति हि नियमस्तस्मात्कल्प्यः । एतेन प्रकृतेः प्रत्ययासमभिव्याहारेऽसाधुत्वमुक्तप्रायम् । "पुंयोगात्" इति सूत्रेऽपि "किं पुनरिहोदाहरणम् ? प्रष्ठी प्रचरी' कथम् पुनरयं प्रष्ठशब्दोऽकारान्तः स्त्रियां वर्तते।"तस्येदम्" इत्यनेनाभिसम्बन्धेन, यद्येवं पुंयोगादाख्यायां तद्धितलुग्वचनं कर्त्तव्यम्, तस्येदमिति प्राप्नोति न तर्हिदानीमिदम्भवति, प्राष्ठ्य इमाः प्राचार्य इमाः, भवति च विभाषा लुग्वक्तव्यः, यदा लुक् तदा प्रष्ठी, यदा न लुक् तदा प्राष्ठी, यद्येवं नार्थो लुका विभाषा तद्धितोत्पत्तिः । यदा तद्धितोत्पत्तिस्तदा प्राष्ठी यदा न तद्धितोत्पत्तिः, तदा प्रष्ठी । एवमपि लुग्वक्तव्यः । न ह्यन्तरेण लुकं परार्थे शब्दो वर्त्तते । अत्र "परार्थे शब्दो न वर्त्तते" इति सामान्यतोऽभिधानेन प्रकृतेः प्रत्ययस्य प्रसिद्धस्वार्थम्परित्यज्यान्यत्र वृत्तिर्नास्तीति स्पष्टमेव लभ्यते । ततो 'यदि पुन-

करणस्य व्यापारवत्त्वनियमादन्येषाञ्च व्यापाराभावाद्विशेषणमे
वात्र करणतृतीयान्तेनोच्यते । तस्य चेतरव्यावृत्तिकरणमेव व्यापा
तदुक्तं भाष्ये—"येनेति करणे एषा तृतीया ऽन्येन चान्यस्य विधिर्भ
ति। यथा चैत्रस्य सङ्ग्रामं हस्त्यश्वादिभिर्विधत्ते। एवम् "अचो यत्" इ
अचा धातोर्यतं विधत्ते" इति । अन्येन चान्यस्येत्यनेन यस्य का

---

स्तस्यामेव प्रष्ठशब्दो वर्त्तते कथं पुनस्तस्यामप्रतिष्ठमानायाम् प्र
शब्दो वर्त्तते, यथैव ह्यसावकुर्वती किञ्चित्पापं तत्कृतान् वधबन्धनक्लेशा
नुभूयते, एवम्प्रष्ठशब्दमपि लभते' इत्युक्तम्।

एतेन भाष्यप्रघट्टकेन न ह्यन्तरेणेत्येतत्स्वारस्येन प्रकृतिमात्रस्य लु
कमन्तरा तद्धितार्थे वृत्तिर्नास्तीति प्रतिपादितमिति लक्षणया वृत्तिर्ना
स्पष्टमेव लभ्यते । अग्रिमस्य यदि पुनरित्यस्य प्रस्थानादिक्रियाया यथ
कथञ्चित्समर्थाचरणादिना कर्त्तृत्वात्प्रष्ठशब्दप्रवृत्तिर्भविष्यतीत्यभिप्रायः
यथा 'पञ्चभिर्हलैः कृषति' इत्यत्र प्रतिविधानात्कर्त्तृत्वमिति, कथं पुनस्तस्या
मिति यदा प्रतिविधानमपि नेति भावः। तत्कृतान् भर्त्तृपापकृतान्। तथ
च भर्त्तृसम्बन्धाद्दाम्पत्यरूपात् यथा वधबन्धनादिजनितक्लेशानुभवस्त
स्यास्तथा तच्छब्दस्यापि तत्सम्बन्धादेव प्रवृत्तिरिति भावः । सा च त
प्रष्ठत्वरूपप्रवृत्तिनिमित्तारोपरूपा । एवञ्चारोपितप्रष्ठत्वप्रवृत्तिनिमित्तको
ऽत्र प्रष्ठशब्दः स्वार्थ एव प्रवर्त्तते । शक्यतावच्छेदकारोपात्मिका लक्षणा
यत्र शास्त्रेण यस्य साधुत्वमन्वाख्यायते ततोऽन्यत्रापीष्यते एव ।

लक्षणया साधुत्वाभाव इत्यस्य त्वयम्भावः । शक्यतावच्छेदकाति
रिक्तधर्मप्रकारकबोधफलिकान्यधर्मावच्छिन्ने शक्यसम्बन्धप्रयोज्या लक्षणा
नास्त्येवेति गौणमुख्यविभागस्यापि शब्दस्य स्वीयप्रवृत्तिनिमित्तप्रकारक
प्रतीतिविशेष्यप्रसिद्धार्थकत्वं मुख्यत्वम् तद्धर्म्मप्रकारकप्रतीतिविशेष्याप्र
सिद्धार्थत्वञ्च गौणत्वमित्युपपत्तिरिति दिक् ।

*इतरव्यावृत्तिकरणम्* । विशेष्यप्रकारकेतरभेदानुमितिकरणज्ञान
विषयीभवनमित्यर्थः । *अन्येन चान्यस्येति* । अन्यशब्दसम्बन्धी यो
विधिः सोऽन्येन भवति तत्र दृष्टान्तः । *चैत्रस्येति* । चैत्रसम्बधी यः स
ग्रामस्तं हस्त्यश्वरथपदातिभिर्विधत्त इत्यन्वयः । एवञ्च विशेषणसम्ब
न्धाभावे उद्देश्यसामान्यसम्बन्धित्वेन सम्भाव्यमानं विधेयं विशेषणेन प
रिच्छिन्नविशेष्यसम्बन्धित्वेन बोधयति । एवञ्च विशेषणस्य करणत्वमु
पपन्नम् । अत्र दृष्टान्ते व्यापारान्तरस्यापि सन्धीभवनादिरूपस्य करणा
भिप्रेते हस्त्यश्वादौ यद्यपि सम्भवस्तथापि करणत्वमात्रे दृष्टान्ततेति बो

यस्मिन्परतश्च तयोरकरणत्वम् दर्शितम्। अन्यस्येत्यन्यस्मिन्नित्यस्या-प्युपलक्षणम्। तत्र शब्दोपस्थितविशेष्यस्य तादृशं विशेषणमेव तद-न्तग्राहकम्। क्वचित्सति गमकेऽतादृशं शब्दरूपं विशेष्यमादायापि त-दन्तविधिः। तच्चान्तरङ्गत्वात्समानाधिकरणमेव।

तत्र तदन्तविधौ सति तथाविशेषणत्वयोग्यताप्येतत्प्रवृत्तौ निमि-त्तम्। अत एव "इन्हन्" (पा०सू०६।४।१२) इत्यादौ इनंशे तदन्त-विधिः। न हि 'इनङ्ग'मित्यन्वयो भवति। तदन्तस्येत्यस्य तदन्तशब्दस्येत्य-र्थः। नन्वेवम् "एरच्" (पा०सू०३।३।५६) इति 'अय' इत्यत्र न स्यादत आह–स्वस्य चेति। स्वमित्यनुवृत्तं षष्ठ्या विपरिणम्यत इति भावः। स्वं रूपमित्यस्य प्रत्याख्याने तु तदन्तस्य चेति पाठ्यमिति बोद्ध्यम्। स-मासप्रेति। विशेषणविशेष्यभावव्यत्यासे तात्पर्यग्राहकमिदम्। एवञ्च "द्वितीयाश्रित" (पा०सू०२।१।२४) इत्यादौ श्रितादयोऽधिकारप्रा-प्तसमर्थैरित्यस्य विशेष्यभूता इति न तदन्तविधिः। तस्य तत्प्रकृतिके लक्षणया सुपेत्यनेनान्वयः। तेन कृष्णं परमाश्रित इत्यत्र न समासः। "नडादिभ्यः फक्" (पा०सू०४।१।९९) इत्यादावपि नडादि विशेष्यं, प्रातिपदिकं विशेषणमिति सौत्रनाडिरित्यत्र न फक्।

---

ष्यम्। *तत्र*। विशेष्येषु। *तादृशम्*। शब्दोपस्थितम्। यथा "पा-दः पत्" इत्यत्र। *क्वचित्सति गमक इति*। यथा "सर्वादीनि सर्वना-मानि" इत्यादौ। *तच्चेति*। विशेषणश्चेत्यर्थः। *अन्तरङ्गत्वादिति*। इतरसम्बन्धानवच्छिन्नविशेषणविशेष्यमात्रस्य तत्र सम्बन्धत्वात्। नन्वे-वम् "इन्हहन्" इत्यत्रोपात्तेनशब्दस्याङ्गविशेषणस्य तदन्तग्राहकतेष्यते। सा च नोपपद्यते, नहि 'इनङ्गम्'इति सम्भवतीत्यत आह *तत्र तदन्तविधा-विति*। एवञ्चेदृशेविषये सूत्रघटकशब्दजन्यप्रथमोपस्थितस्य विशेष्याभि-न्नत्वं स्वस्वरूपात्मकवाच्यमादाय यद्यपि न सम्भवति तथापि तदन्तोप-स्थितौ विशेष्याभिन्नत्वं सम्भतीत्येतादृशयोग्यताया अप्येतच्छास्त्रप्रवृत्ति-नियामकत्वं ग्राह्यमिति भावः।

*पाठ्यमिति*। लोकप्रसिद्धव्यपदेशिवद्भावस्य शास्त्रेणाबाधायेति शेषः। समासेतिवचनाङ्गीकारे गौरवं स्यादत आह–*विशेषणेति*। *स मर्थैरित्यस्येति*। इदं विभक्तिविपरिणामेन निर्दिष्टम्। *तस्य*। विशे-ष्यस्य। *सुपेत्यनेन*। अन्यथा सर्वत्रान्वयासम्भवः। यद्यपि स्त्रियां स-

उगिदिति। तेन 'अतिभवती' इत्यत्रोगितश्चेति ङीप्, दाक्षिरि "अत इञ्" (पा०सू-४।१।९५) च सिद्धः। एवञ्चोक्तनिषेधः प्रत्यय शे गृह्यमाणप्रातिपदिकविषये, प्रत्ययविधिविषयेण "गृह्यमाणप्राति पदिकेन तदन्यविधिर्नास्ति" इत्यनेनैकवाक्यत्वलाभात्। "उगिदु" इति त्वेकदेशानुवाद इति बोद्ध्यम्। अत एव "वनोरच" (पा०सू ४।१।७) इत्यादौ प्रत्ययग्रहणे तदन्तग्रहणमित्यस्य नायम् निषेध इ दिक्।

विराम (पा०सू०१।४।१०) भावे घञ्। शब्दानुशासनप्रस वादाह–वर्णानामिति। उच्चारणाभाव इत्यर्थः। स च व्याख्यानाति चिद्वर्णोच्चारणानन्तरकालिक एव गृह्यते। प्रदेशा "वावसाने" (पा

---

म्बुद्धौ च सम्भवस्तथापि शास्त्रस्यान्यत्रापि 'कष्टं श्रितः कष्टश्रित' इत यथा स्यात्। कष्टम्परमश्रित इत्यत्र मा भूदितिभाष्यप्रामाण्यात्प्रवृत्तिरि वेति भावः। *उगिदिति*। उगिता वर्णेन च यत्र विशेष्यते, तत्र तदन विधिर्भवत्येवेति फलितम्। *अतिभवतीति*। सर्वादिपठितभवतुः ब्दान्तमेतत्।

*उगितश्चेति*। सूत्रे उगिदन्तप्रातिपदिकग्रहणात्। *एवञ्च*। र्णग्रहणे तदन्तविधिस्वीकारे च। *गृह्यमाणप्रातिपदिकेति*। प्रातिपा कमात्रवृत्तिधर्मप्रकारकप्रतीतिजनकतावच्छेदकरूपेणोपात्तप्रातिदिकं त्रेत्यर्थः। *नायं निषेध इति*। न चास्य निषेधेऽपि वन्मात्रस्याप्रातिपा कत्वात्सामर्थ्यात्तदन्तविधिः स्यादिति वाच्यम्, एवमपि वन्नन्तान्तामि र्थलाभो न स्यादित्यत्र तात्पर्यात्। "समासप्रत्यय" इति वचनस्य प्रत यविधिविषयत्वस्वीकारात् "अप्तृन्" इत्यादौ गृह्यमाणप्रातिपदिकविषये तदन्तविधिर्भवत्येव।

वर्णानां सिद्धान्ते नित्यत्वात्तत्सामान्याभावाप्रसिद्धिरत आह–* च्चारणाभाव इति*। *स च*। वर्णोच्चारणाभावश्च। *व्याख्यानाि ति*। "र ऋतो हलादेर्लघोः" इति सूत्रे तद्व्याख्यानभाष्ये च रेफ विसर्गाकरणमूलकादित्यादिः। न च पूर्वकालिकोच्चारणाभावस्याव नसञ्ज्ञायामपि नास्ति रेफस्य प्रकृते प्राप्तिः। रेफस्य पदान्तत्वविरहा ति वाच्यम्। अवसाने यत्र रेफस्य विसर्गाप्राप्तिस्तत्र पदान्तत्वं रेफस्या श्यमस्त्येवेति तद्घटितवाक्ये पदान्त इत्यस्यासम्बन्धात्।

किञ्च तद्घटितवाक्ये तत्सम्बन्धेपि "र्वोरुपधाया दीर्घ" इत्येतस्य य आर्द्रो रेफस्तस्य पदान्ततया विसर्गापत्तिः, दुर्वारा च सञ्ज्ञा। न

सू० ८।४।५६) इत्यादयः। अभवास्यापि बुद्धिकृतं पौर्वापर्यं वर्णवत्।

परशब्दो नान्यार्थोऽन्यत्वस्याव्यभिचरितत्वादत आह—अतिशयित इति। स्वभावसिद्धार्धमात्रातिरिक्तकालव्यवायेन रहितः। तेन तद्व्यवायेन वाक्योच्चारणे सञ्ज्ञा न। सन्निकर्षश्च प्रायः परेण, क्वचित्पूर्वेणापि। अत एवावसानकार्याणां संहिताधिकारे पाठः। न चावसानसञ्ज्ञया परत्वे सावकाशायाः संहितासञ्ज्ञाः 'सत्यपि संभवे बाधनं भवति' इतिन्यायेन विषयभेदे ऽपि बाधः स्यादिति तदसङ्गतिरेवेति वाच्यम्। तदधिकारे तेषां पाठेनाऽऽकडारसूत्रस्य स्वशास्त्रीयसंज्ञामात्रविषयत्वकल्पनात्। एते तु न तथा, लोके ऽपि सत्त्वात्। तदुक्तं वार्तिककृता। "संहितावसानयोर्लोकविदितत्वात्" इति।

न चावसानकार्येषु संहिताधिकारासम्बन्ध एवास्तु अग्रे च मण्डूकप्लुतिरस्त्विति वाच्यम्। सत्यामुपपत्तौ मण्डूकानुवृत्तेरयुक्तत्वा-

---

त्वमपि "तस्मिन्" इतिपरिभाषयाऽवसानपरत्व एव विसर्गप्रवृत्त्या न तत्र विसर्गप्राप्तिरिति वाच्यम्। तस्मिन्निति सूत्रे दिशोरुच्चारणार्थकस्य सत्त्वेन यस्योच्चारणसम्भवस्तद्विषये एव तत्परिभाषाप्रवृत्तिः। अवसानस्य तु वर्णोच्चारणाभावरूपतयाऽभावस्योच्चारणासम्भवेन नात्र परिभाषाप्रवृत्तिः। किन्तु बौद्धोपश्लेषसत्त्वाद्विसर्गापत्तिः (वादिभिः उत्तरपदस्य विशेषणादितिभावः। *तस्मादिति* । संज्ञाविधौ प्रत्ययग्रहण इति) (१) इत्याशयात्। *वर्णवदिति*। यथा वर्णानामुच्चरितप्रध्वंसितया नोपश्लेषसम्भवः। उपश्लेषस्य स्थिरपदार्थनिष्ठत्वात्। किन्तु बौद्ध एव सः। तथाऽभावस्यापि वाच्यः।

*पूर्वेणापि*। अवसानविषये। *अवसानकार्याणाम्*। "वावसाने" इत्यादीनाम्। *तदधिकारे*। संहिताधिकारे। *सावकाशायास्संहितासञ्ज्ञाया इति*। एतेनावसानसंज्ञा तु निरवकाशेति सूचितम्। यदि त्वेषापि 'हे ए' इत्यादौ सम्बोधने सावकाशेति मन्यते, तदा परत्वादवसानसंज्ञया संहितासञ्ज्ञाया बाधः स्यादिति शङ्काभिप्रायः। अग्रे "तोर्लि" इत्यादौ, 'अग्निचिल्लुनाति' इत्यत्र संहिताभावे परसवर्णो माभूदित्यर्थमिति भावः।

*ध्वनितमिति*। तत्र हि अनवकाशत्वाद्बाधपक्षे पूर्वपरसन्नि-

---

(१) क्वचित्पुस्तके कोष्ठकान्तर्गतोऽयंपाठः। परञ्च पूर्वापरसंदर्भ्या असम्बद्ध इति प्रतिभाति।

तु । ध्वनितश्चेदं "विसर्जनीयस्य सः" (पा०सू०८।३।३४) इति सू
भाष्ये । सन्निकर्षः सामीप्यम् ।

सुप्तिङ् (पा०सू०१।४।१४) सुबिति सुपः पकारेण प्रत्याहा
व्याख्यानात् । "यद्यपि प्रत्ययग्रहणे तदन्तग्रहणम्" इत्युक्तेः शब्द
रूपम् विशेष्यमादाय तदन्तग्रहणम् सिद्धम् । प्रत्ययेन स्वप्रकृत्यवय
कसमुदायस्याक्षेपात्तद्विशेषणत्वेन तदन्तविधिरिति न युक्तम् । 'इया
न्' इत्यादौ तस्य तादृशसमुदायेन व्यभिचारेणाक्षेपासम्भवात् । आश्रि

---

कर्ष एव संहितासञ्ज्ञेति पक्षे च "अणोऽप्रगृह्यस्य" इत्यत्रोभयसम्बन्धे
दोषोद्भावनेन । एतेन मण्डूकप्लुतिरयुक्तेति स्पष्टमेव लभ्यत इति भावः
सन्निकर्षः संयोगादिर्वर्णानान्नसम्भवतीत्यत आह—*संनिकर्षः सामी
प्यमिति* । *व्याख्यानादिति* । न कपो नापि सप्तमीबहुवचनमेव
किन्तु तिङ्साहचर्यात्सुपः पकारेण प्रत्याहार इत्यर्थकात् । अन्त
ग्रहणवैयर्थ्यं शङ्कते—*यद्यपीति* *अयुक्तत्वादिति* । एतेन य
वर्णानां विरामस्तत्र 'राम' इत्यादौ द्वयोस्सञ्ज्ञयोस्समावेश इति सूचित
म् । यत्तु इदं प्रकृतसूत्रभाष्यकैयटविरुद्धम् । तत्र वर्णाद्वर्णान्तरोच्चारणे
प्रतिवर्णं विरामसद्भावादवसानसञ्ज्ञया संहितासञ्ज्ञाबाधः प्राप्नोतीत्याश
ङ्क्य 'वृक्ष' इत्यादौ वर्णान्तरानुच्चारणे सावकाशामवसानसञ्ज्ञां संहितास
ञ्ज्ञा बाधते, यद्युभयोः समावेशस्तर्हि बाधकथनासङ्गतिरिति । तन्न । द्व
योः संज्ञयोर्लौकिकत्वेपि बाध्यबाधकभावः । यथा राज्ञा स्वल्पाधिकारदा
नसमये एका सञ्ज्ञा क्रियते, पुनस्तदपेक्षयाऽपि महतोऽधिकारस्य दा
नसमये ऽपरा सञ्ज्ञा क्रियते । तयैव च सञ्ज्ञया लोके लौकिकैर्यावज्जी
वनं स व्यवह्रियते । तथाऽत्रापि संहितासञ्ज्ञाया लौकिकत्वेऽप्यनयाऽव
सानसञ्ज्ञया बाधो भविष्यतीत्यभिप्रायेणात्र बाधकथनात् ।

अयञ्च बाध्यबाधभावो न युक्त इत्यभिप्रायेण, "अथवाऽवसानसञ्ज्ञा
यां प्रकर्षगतिर्विज्ञास्यते, साधीयो यो विराम इति, कश्च साधीयः
शब्दार्थयोर्विरामः" । 'अथवेति सर्वत्र विरामसद्भावात्पुनः श्रुत्याविशेष
श्रीयते अन्यत्र तु सत्यपि शब्दाविरामे पदार्थस्य वाक्यार्थस्य वा विरा
मान्न भवत्यवसानसञ्ज्ञा' इति भाष्यकैयटयोरुक्तम् । अत्र शब्दस्य विरा
मः श्रवणकृतोऽर्थस्य बोधकृत इति भावः । अन्यत्रत्विति । वर्णान्तर
वर्णोच्चारणे मध्यमकाल इत्यर्थः । एतेन पूर्वभाष्यमभ्युपेत्यवादेनेति स्प
ष्टमेव ।

प्राचामुक्तिं खण्डयति-*प्रत्ययेनेति* । प्रकृतिं विना प्रत्यय
त्पादासम्भवादिति भावः । *आक्षेपासम्भवादिति* । प्रत्ययो

प्तस्य शाब्दे ऽनन्वयाच्च । तथापि संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभावज्ञापनार्थमन्तग्रहणम्(१) । तेन घसञ्ज्ञा तरप्तमपोरेव न तदन्तस्य । तेन 'गौरीब्राह्मणितरा' इत्यत्र न ह्रस्वः । एतन्निषेधसामर्थ्यादेव प्रदेशेष्वपि न तदन्तविधिः । न च ज्ञापिते ऽपि व्यर्थम् , पदप्रदे-

त्तौ प्रकृतेरपेक्षासत्त्वेऽपि तस्य स्थितौ व्यभिचारेण प्रकृतेराक्षेपासम्भवादिति भावः *आक्षिप्तस्य शाब्देऽनन्वयादिति* । पदजन्यपदार्थोपस्थितेः शाब्दबोधे कारणत्वात् , आक्षिप्तार्थस्य मानसज्ञानविषयत्वेऽपि तद्वाचकशब्दानुच्चारणेन, "उच्चारितः शब्दः प्रत्यायको नानुच्चारित" इति भाष्यसंवादेन तस्यार्थस्य वृत्त्या पदजन्यपदार्थोपस्थितेरभावादिति भावः ।

*गौरी ब्राह्मणितरेति* । इदन्न परिनिष्ठितम् । किन्तु लौकिकं समासार्थवाक्यम् । अत्र गौरीशब्दस्य न ह्रस्व इत्यर्थः कल्प्यः । अत्र तु पुंवद्भावेन गौरब्राह्मणितरेति भवति । तदन्तस्य सञ्ज्ञायान्तु परत्वात्पुंवद्भावस्य बाधकं ह्रस्वत्वं गौरिशब्दस्य स्यादिति गौरिब्राह्मणितरेति स्यादिति भावः । *एतन्निषेधसामर्थ्यादिति* । "संज्ञाविधौ" इति निषेधसामर्थ्यादित्यर्थः । *प्रदेशेषु* । घरूपकल्पेत्यादिषु । घादेः प्रत्ययस्य तदन्तग्राहकता यद्यपि प्राप्ता, संज्ञाविधाविति वचनेन तस्मिन् प्रदेशे निषेधस्तु कर्त्तुमशक्यः । संज्ञाविधावित्यत्र 'सञ्ज्ञाया विधाविति' कर्मषष्ठ्या समासात् ।

ननु सञ्ज्ञाविधाविति समासाभिप्रायेण "प्रत्ययग्रहणे चापञ्चम्या" इत्यस्य व्याख्याऽवसरे कैयटेन 'रदाभ्या मित्यत्र रेफदकाराभ्यामुत्तरो यो निष्ठान्तस्तस्य यः तकारस्तस्य नत्वम्' इति व्याख्याने यच्छङ्कितम् 'न च सञ्ज्ञाविधाविति निषेधावतार' इति, तत् कर्मषष्ठ्या समासे विरुध्यत इति चेन्न । तृतीयासमासे कैयटस्यापि 'यत्र हि सञ्ज्ञाविधानं तत्रायन्निषेध' इत्यादिलेखनेन सम्मतिर्नास्तीतिकल्पनात् । तदग्रे पुनस्तेनैव शङ्कितं 'सञ्ज्ञाविधावितिनिषेधस्य तर्हि किं प्रयोजनम्' । तर्हीति । प्रदेशेषु तदन्तग्रहणं यदि तर्हीत्यर्थः । उच्यते । 'यदि सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तस्य सञ्ज्ञा स्यात्प्रदेशे पुनस्तदन्तविधिस्यादिति प्रत्ययान्तान्तं गृह्येत । तस्मात्सञ्ज्ञाविधावपि तदन्तविधेः

(१) कस्यचिच्छंका—अन्तग्रहणम् सार्वकालिकी पदसञ्ज्ञा अन्तशब्दस्य भवतु इत्येतदर्थं सूत्रकारेण कृतम् । तत्फलञ्च अन्तशब्दस्य तद्धितप्रत्यये परतो भसञ्ज्ञाऽभावेन लोपाभावेन 'अन्तयासु सुखमेधते जन' इति कविप्रयोगः सङ्गच्छते । अत्र अन्तयासु अवस्थासु नाम वृद्धत्वे । सा चात्यन्ताऽनादरणीया भाष्यविरोधात् । "हलन्त्यम्" इति सूत्रकारप्रयोगविरोधाच्च । तस्य प्रयोगस्य प्रमाणिकत्वे अन्तं यातीति विचि कथंचित् साधु । न तु अन्ते भवाऽन्तयेति तद्धिते याति साधु ।

शे प्रत्ययग्रहणे तदन्तग्रहणेनैव सिद्धेरिति वाच्यम्। पदत्वस्य प्रकृ
तिसाधारणतया पदग्रहणे प्रत्ययग्रहणस्यैवाभावात्। यस्मात्प्रत्ययवि
धिरित्याद्यनुवृत्तेः पदसमुदायस्य न पदत्वम्।

---

प्रतिषेधो रदाभ्यामित्यत्र च'। एतच्चोद्योते व्याख्यातम्। "घादिभि
त्तरपदस्य विशेषणादितिभावः'। तस्मादिति 'संज्ञाविधौ प्रत्ययग्रहण'इ
'प्रत्ययग्रहणे चापञ्चम्या' इति वचनाभ्यामिति भावः"। एवं शङ्कासमाधा
भ्यां षष्ठीसमासस्यैव तदभिप्रेतत्वं लभ्यते। न च तद्व्याख्यावसरे
न्निषेधसामर्थ्यादिति नोद्भावितं, किन्तु तदन्तविधिद्वयप्रसक्तिरेवो
विता, तेनास्य विरोध इति वाच्यम्। तत्र कैयटेन प्रौढ्या तथाभिधाना
उद्योतेऽपि 'स्वरूपव्याक्रियैव परा क्रिया' इत्याशयेन निषेधसामर्थ्यं नो
मित्येव युक्तम्। न हि तदन्तविधिद्वयप्रसक्तिभिया प्रत्ययग्रहणपरिभा
या अप्रवृत्तिः। किन्तर्ह्यन्तग्रहणज्ञापनबलेनैव। तच्च ज्ञापनं प्रदेशे पुनस्त
दन्तग्रहणेनैव निर्वहतीति बोध्यम्।

न च लेखग्रहणज्ञापितेन 'उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्त
णम्' इति वचनेनैव 'घरूप'इति सूत्रे तदन्तविध्यभावोपपत्तौ निषेधसाम
त्तत्र तदन्तविध्यभावोपपादनमयुक्तमिति वाच्यम्। उत्तरपदेतिवचनस्
"रात्रेः कृति" इति सूत्रस्थभाष्यप्रामाण्येनानित्यत्वात्। तत्र हि। तत्
स्य रात्रिमटो 'रात्र्यट' इत्युदाहरणमुक्तम्। रात्रिशब्दात्कृतोऽसम्भवात्
न च रात्रिशब्दप्रकृतिकाचारक्विबन्तात्कृतस्सम्भव इति वाच्यम्। 'अ
व्यक्तपदार्थाये' इति न्यायेन तत्रैतत्सूत्राप्रवृत्तेः। यद्वा। 'उत्तरपदाधिका
प्रत्ययग्रहण' इति वचनस्थं प्रत्ययपदं प्रत्ययसञ्ज्ञाशक्यतावच्छेदका
पूर्व्यवच्छिन्नपरम्। तथा च तादृशानुपूर्व्यवच्छिन्नस्योपादानं यत्र तत्र
त्ययग्रहणेन तदन्तग्रहणमित्यर्थः। यथाऽणिति। "रात्रेः कृति" इति
तु कृत्त्वेनैवोपादानमिति निषेधाप्रवृत्तिवद् घरूपेति सूत्रेऽपि घशब्देन
दुपादानम्। तच्च न तच्छक्यतावच्छेदकम् इति 'उत्तरपदे'इति वचनाप्रस
घशब्देन पुनस्तदन्तविधौ सञ्ज्ञाविधावितिवचनसार्थक्यानुपपत्ति
निषेधसामर्थ्यात्तत्राप्रवृत्तिरित्युपादानं सार्थकम्। अत्र "रात्रेः कृति"
सूत्रमेव मानमिति दिक्।

*पदप्रदेश इति*। सुप्तिङ्मात्रपदसञ्ज्ञायामपीत्यादिः। न चात्र
वोक्तं 'सामर्थ्यान्न तदन्तविधिः'इति समाधानं सम्भवति; सुप्तिङ्मात्र
पदसञ्ज्ञाविधानसामर्थ्यात्तदन्तग्रहणसम्भवात्। पदान्ते एव प्रवर्त
"दश्च" इतिसूत्रमेव तदन्तग्रहणे ज्ञापकं भविष्यतीत्यपि बोध्यम्। *
तिसाधारणतयेति*। स्वादिष्वित्यनेन प्रकृतेरपि पदसञ्ज्ञाविधानात्

'इयान्' इत्यादौ यस्मात्प्रत्ययविधिस्तदादितद्धितान्तत्वं व्यपदेशिवद्भावेन बोद्धव्यम्। तेनाशास्त्रीयस्याप्येकाच्त्वादेरतिदेशात्। विशिष्टनिष्ठव्यवहारनिमित्तकार्याणि असहाये ऽपि कर्त्तव्यानीति तदर्थात्। अत एवेयन्मात्रमित्यादौ वत्वन्तात्स्वार्थे इति मात्रच्सिद्धिः। 'हरिषु' इत्यादौ सोस्तु नैवं पदत्वम्(१) हलि सर्वेषाम्" (पा०सू० ८।३।२२) इति निर्देशेन ससहाये तदप्रवृत्तेः "निजौ चत्वार एकाच" इति भाष्यन्त्वभ्युपेत्यवादेन। ध्वनितश्चेदम् "आदेच उपदेशे (पा०सू० ६।१।४५) "तास्यानुदात्तेत्" (पा०सू०६।१।१८६) इत्यादौ भाष्ये। तत्र हि-'ढौकते' इत्यौकारस्य 'हत' इत्यादावकारस्यैजन्तोपदेशत्वमकारान्तोपदेशत्वम् व्यपदेशिवद्भावेनाऽऽशङ्क्य 'अर्थवता व्यपदेशिद्भाव' इत्युक्तम्। यो वर्णोऽर्थवांस्तेन व्यपदेशिवद्भावः। वर्णस्यार्थवत्त्वञ्च 'इयाय' इत्यादावसहाये एव। न तु प्रकृते इति तदर्थः। एवञ्चैकस्मिन्नित्यस्यार्थोऽर्थवतेत्यनेनोक्त इति दिक्।

हलो ऽनन्तराः (पा०सू०१।१।७)। 'गर्गाः शतं दण्ड्यन्ताम्' इत्यत्र समुदाये शतदण्डनवदत्र समुदायस्यैव संज्ञा, न प्रत्येकम्। अ-

---

दसञ्ज्ञाविधायके शास्त्रे "यस्मात्प्रत्ययविधिः" इत्यनुवृत्त्या व्याख्याने यस्मादिति परिभाषायाः स्मरणात्तदेकवाक्यतया "कृत्तद्धित" इति सूत्रेणापि प्रातिपदिकत्वमियानित्यादौ साधनीयं तच्च प्रकृतेरभावान्नोपपद्यते इत्याशंकयाह-*इयान् इत्यादाविति*।

*अशास्त्रीयस्यापीति*। व्यपदेशिवद्भावस्य लौकिकत्वात्। नन्वसहाय एव व्यपदेशिवद्भावप्रवृत्तौ 'निजौ चत्वार एकाच' इति भाष्यमिकारमात्रे एकाच्त्वोपपादनासम्भवेनानुपपन्नमत आह-*निजौ चत्वार इति*। *ध्वनितश्चेदमिति*। असहाय एव व्यपदेशिवद्भाव इत्येतत्। *असहाय एवेति*। एवञ्चार्थवतेति नापूर्वमिति भावः। *दिगिति*। 'अर्थस्य त्यागोपादानाभ्यां व्यपदेशिवद्भाव' इति कैयटोक्तन्न युक्तम्। तथोपपादने मुख्यस्यैव व्यवहारस्य भाष्यरीत्या सम्भवः इत्यादिरन्यत्र प्रपञ्चितम्।

*विशेषणताया एवौचित्यादिति*। एवञ्चानन्तर्य्यं संयोगपदशक्यतावच्छेदकघटकमिति सूचितम्। 'अनन्तरा' इत्यत्राविद्यमानमन्तरम् वर्णशून्यकाल एषामिति, अविद्यमानमन्तरा येषामिति, वा समासः। उभयथा

---

(१) पदत्वे च सकारस्य पदादित्वेन "अपदान्तस्य मूर्धन्य" इत्यस्य प्राप्त्यभावेन षत्वानापत्तेः। 'सर्वेषाम्' इति निर्देशासङ्गतेश्च।

नन्तरा इत्युक्तेश्च । तस्य विशेषणताया एवौचित्यात् । यत्तु 'संयुज्य वर्णा यत्र, इत्यन्वर्थसञ्ज्ञाबलात् न प्रत्येकं संज्ञा' इति तन्न । घटपटौ संयुज्यते यत्र इत्यादौ संयुज्यमानपदार्थातिरिक्तस्यैवान्यपदार्थतया प्रतीते र्व्युत्पन्नत्वेन तदतिरिक्ततद्घटितपदवाक्यरूपसमुदायस्य संज्ञापत्तावनिष्टापत्तेः । महासंज्ञा तु प्राचामनुरोधादेव । तेन 'सुषद्धाति' इत्यत्र संयोगान्तलोपो नेत्यन्यत्र विस्तरः । 'हल' इति बहुवचनं सौत्रम् ।

यद्वा—हलौ च हलश्चेत्येकशेषः । "स्वरितात् संहितायाम्" (पा० सू० १।२।३९) इति सूत्रे अनुदात्तानामिति पदे तथैकशेषस्य भाष्ये करणात् तेन द्वयोरपीति 'शिक्षा' इत्यादौ "गुरोश्च हलः" (पा० सू० ३।३।१०३) इत्यप्रत्ययः सिद्ध्यति । यत्रापि बहवः श्लिष्टास्तत्रापि द्वयोर्द्वयोरेव न बहूनाम् । झलि परे संयोगादिलोपविधानाद् बहूनामपीति चिन्त्यमेव फलाभावात् । तत्र तत्राङ्गपदधात्ववयवसंयोगस्यैवाश्रयणेन तादृशस्य च त्रयाणां संयोगस्याभावादिति भाष्ये स्पष्टम् ।

---

समुदायस्यैव लाभः, द्वयोश्चैव मध्यसम्भवात् । कैयटोक्तिं खण्डयति *यत्त्विति* । *अनिष्टापत्तेरिति* । भवदुक्तरीत्या विप्रेतिसमुदायस्य सञ्ज्ञायां शोभनविप्रशब्दावयवनकाराकारस्य गुरुसञ्ज्ञापत्तौ तस्य प्लुतापत्तिरूपानिष्टापत्तेरित्यर्थः । नन्वेवं महासञ्ज्ञाकरणम् व्यर्थमत आह *महासञ्ज्ञाकरणन्त्विति* । *तेन* । समुदायसञ्ज्ञाकरणेन । *सौत्रमिति* । द्वयोर्द्विवचनस्य न्याय्यत्वात् । सौत्रत्वकल्पने गौरवप्रसङ्गादाह

*यद्वेति* । नन्वेवमपि भिन्नवचनोपादानेन सहविवक्षाप्रदर्शनमक्रमन्यत्रादर्शनादत आह *स्वरितादिति* । *तथैकशेषस्य* । अनुदात्तस्यानुदात्तयोश्चानुदात्तानाञ्चानुदात्तानामित्येवम्प्रदर्शनेनैकशेषस्य तत्र यथाऽनुदात्तयोरित्यत्रानुदात्तानामित्यत्र चैकशेषङ्कृत्वा पुनरेकशेषस्तद्वत् । अत्रैवं विग्रहप्रदर्शनेन 'विभक्त्यन्तानामेकशेष' इति न भ्रमितव्यम् । एवं प्रदर्शनस्यानेकार्थत्वप्रदर्शनमात्रतात्पर्यकत्वात् तच्च तन्त्रेण । एकशेषस्तर्हि व्यर्थ इति चेत्, एकशेषशब्दस्य तत्परत्वस्यैव कल्पनात् । *द्वयोरपीति* । न चापिशब्दसङ्ग्राह्याणां बहूनां संयोगसञ्ज्ञायाः फलाभावात् न सेत्यपिशब्दोपादानमनर्थकमिति वाच्यम् । बहुस्थलयितादृशसमुदायसमुच्चायकत्वात् । ननु बहूनां संयोगसञ्ज्ञायाः फलन्द्वयोः सञ्ज्ञाव्यावृत्तिरेव भविष्यतीत्यत आह *तत्र तत्रेति*

आनन्तर्यं व्यवधानाभावो व्यवधानञ्च विजातीयेनैवेत्याशयेनाह–अज्भिरिति । अत्र कुत्वं न्याय्यम् । अत एव हयवरट्सूत्रे 'अचो ऽक्षु' इति भाष्यप्रयोगे कुत्वं दृश्यते । 'स्वरैरव्यवहिता' इति तूचिता वृत्तिः । हलः किम् ? 'तितउ देव'। अत्र "गुरोः" (पा० सू० ८ । २ । ८६) इति प्लुतः स्यात् । अनन्तराः किम् ? द्रप्सम् । अत्र सकारमकारयोः संयोगत्वे "स्कोः" (पा०सू०८।२।२९) इति लोपः स्यात् ।

संयोगे गुरु(१)(पा०सू०१।४।११) भेत्ता इत्यादौ गुणस्तु क्नोःक्त्विसामर्थ्येन भूतपूर्वलघूपधग्रहणाद् बोध्यः ।

---

तथा च शास्त्रबोधस्य तत्फलस्यासम्भवेन बहूनां निष्फलत्वान्न भविष्यतीति भावः ।

*कुत्वंन्याय्यमिति* । पदान्तत्वात् । परन्तु सञ्ज्ञास्वरूपभङ्गापत्त्या न कृतम् । *उचितेति* । सन्देहस्यैव तत्रानुदयादिति भावः । *तितउदेवेति* । तितउना दीव्यतीति विग्रहः । अत्र तकाराकारावयवकस्य 'त' इति समुदाय संयोगसञ्ज्ञायां 'ति'इतीकारस्य गुरुसञ्ज्ञास्यात् । न चैवं 'घट'इत्यादावप्यापादनसम्भवात् विशिष्यात्रैतस्योपादानमनर्थकमिति वाच्यम् ।अशोकवनिकान्यायेनास्योक्तेः । यदि तु विजातीयव्यवहितभिन्ना सजातीया वर्णा एव गृह्यन्ते तदा 'तितउभ्याम्' इत्यत्र संयोगान्तलोपापत्तिर्बोध्या । अज्झलोऽपि लोपविधानात् । एवं 'हे नर अउ इति कुरु' इत्यत्रप्लुतापत्तिः । *द्रप्समिति* । 'द्रप्सन्दधि घनेतरत्' । अत्र सकारमकारयोः संयोगसञ्ज्ञायां संयोगादिलोपापत्तिः । यद्यपि भाष्ये पनसमित्येतदेतद्व्यावर्त्यमुक्तंतथापि पञ्चम्यन्तस्य 'झल' इत्यस्य 'स्को' इतिसूत्रे ऽनुवृत्तिं कृत्वापि सकारलोपाभावशङ्का स्यादित्यस्योपन्यासः । वस्तुतस्तु तत्र न झल इत्यस्य सम्बन्धः । 'भ्रष्टा' इत्यादौ सकारलोपानापत्तेः ।

ननु 'संयोगे गुरुसञ्ज्ञा' यदि ह्रस्वस्य लघुव्यवहाराभावसाधिका, तदा नित्यत्वात्तासि गुरुसञ्ज्ञायां गुणो न स्यादत आह *भेत्तेत्यादाविति* । यत्तु समप्रवृत्तया गुरुसञ्ज्ञया लघुसञ्ज्ञाया बाधेपि पूर्वं प्राप्ताया अन्तरङ्गायास्तस्या बाधे मानाभाव इति । तन्न । परसंयोगनिमित्तिकाया गुरुसञ्ज्ञाया 'येन नाप्राप्ति'न्यायेन लघुसञ्ज्ञापवादत्वात् । न चाऽऽक्षेत्यादावाकारादौ "संयोगे गुरु" इति चरितार्थमिति वाच्यम्, शास्त्रीयसञ्ज्ञा-

---

(१) "संयोगे गुरु" तस्मिन्निति परिभाषोपस्थित्या संयोगाऽव्यवहितपूर्वस्य लघोर्गुरुसंज्ञा भवतीत्यर्थान्न सुहस्तीत्यत्र सकारोत्तरोकरस्य न गुरुसञ्ज्ञा । अत्र "गुणः कृतात्म" इतिन्याय आश्रीयते नतु गुणानाश्रेति ।

इति सञ्ज्ञेति । प्रथमाध्यायस्थानां सन्धिकार्योपयोगिनी-
सञ्ज्ञानां प्रकरणमिति समाप्तमित्यर्थः। तेनाऽऽम्रेडित-प्रगृह्य-भसञ्ज्ञा
लोपसंज्ञा द्यनुपन्यासे ऽपि न क्षतिः । "अ अ" इत्याद्युपन्यास-
प्रासङ्गिकः ।

॥ इति सञ्ज्ञाप्रकरणम् ॥

---

मात्रस्यान्यासाध्यतत्तत्फलजनकत्वस्य क्लृप्तत्वेनैतादृशेषु "दीर्घं
इति सूत्रेणैव सिद्धतया प्रकृतसूत्रस्य तदविषयकत्वात् ।

न च "ह्रस्वं लघु" इति सूत्रे सति आकडारीयत्वाद्गुरुसञ्ज्ञया लघुस-
ञ्ज्ञाबाधः प्रसज्यते, तदेव न। "ऊकालोऽज्झ्रस्वदीर्घप्लुत" इति सू-
ह्रस्वग्रहणमपनीय तत्स्थाने लघुग्रहणस्यैव करणेन लघुसञ्ज्ञाया अना-
कडारीयत्वात् । यत्र यत्र ह्रस्वग्रहणं तत्र सर्वत्रलघुग्रहणेनैव निर्वाहादि-
वाच्यम् । "संयोगे गुरु" इति सूत्रेऽनुवृत्त्यर्थं ह्रस्वग्रहणस्यावश्यकत्वात्
न च 'संयोगो लघु गुरु' इत्येव सूत्रमस्त्विति वाच्यम् । तथा सत्यत्र सू-
लघोरुद्देश्यतया लघुगुरुसञ्ज्ञयोः समावेशापत्तेः । न चेष्टापत्तिः । 'अचि-
क्षमत' इत्यत्र "दीर्घो लघोः" इति सूत्रेण दीर्घापत्तेः । न च तस्मिन् सू-
लघुग्रहणस्यैवं सति वैयर्थ्यपत्तिरिति वाच्यम् । स्वाभाविकस्य लघो-
परिग्रहार्थत्वात्। तथा कल्पने सूत्रस्य प्रवृतिः 'अततक्षत' इत्यत्र स्यात् अ-
प्रवृत्तिश्च 'अबीभवत्' इत्यत्र स्यात् । अनिष्टफलस्यापि सूत्रे लघु-
ग्रहणेन कल्पनासम्भवः । एवम् 'अततक्षत्' इत्यादौ । सन्वद्भावे सति
"सन्यत" इतीत्वस्यापत्तिः ।

*प्रथमाध्यायेत्यादि* । अत्राऽऽद्यविशेषणेनाभ्याससञ्ज्ञाऽऽम्रेडितस-
ञ्ज्ञयोः,द्वितीयेन प्रगृह्यसञ्ज्ञाया व्यावृत्तिः।नच टिसञ्ज्ञायाः"शकन्ध्वादि-
पररूपम्" इति वार्त्तिकसाध्यसन्धिकार्योपयोगित्वेनात्रप्रकरणे तदनु-
दानान्न्यूनतापत्तिरिति वाच्यम् । तत्र शकन्ध्वादिसिध्यनुगुणं पररू-
मिति व्याख्यानेनेष्टसिद्धा टेरित्यनुपादानेऽपि क्षतिविरहात् । मूले यत्तु
टेरिति तत्फलितार्थकथनमित्याशयः । ननु कथं सञ्ज्ञानुक्रमे "अ अ"
इत्यस्य पूर्वत्रासिद्धमित्यस्य चोपादानमत आह *अअ इत्याद्युपेति*
*प्रासङ्गिक इति* । न तु प्राधान्येनेति शेषः ॥

इति सञ्ज्ञाप्रकरणम् ॥

# परिभाषाप्रकरणम् ।

इको गुण (पा०सू०१।१।३) ॥ परिभाषेयम्, व्याख्यानात् । गुणवृद्धिशब्दाभ्यामिति । गुणवृद्धिग्रहणानुवृत्त्यैव सिद्धे पुनर्गुणवृद्धिग्रहणसामर्थ्यादिति भावः । अनुवर्त्तमानश्च सञ्ज्ञिपरमेव स्यात् । सञ्ज्ञाकरणेनान्यत्र सञ्ज्ञिपरत्वात् । यद्वा तदप्यनुवर्त्य गुणो वृद्धिरिति योजनयैतल्लाभः । "स्वादिषु (पा०सू०४।१।१७) इतिसूत्रे ऽनुवृत्तपदपदस्य सञ्ज्ञापरताया एव दृष्टत्वात् । "ष्णान्त" (पा०सू०१।१।२४) इति सूत्रे संख्यापदस्य तदन्तत्वासम्भवादर्थपरतेति बोद्धव्यम् ।

लक्षणप्रतिपदोक्तपरिभाषया तु नात्र निर्वाहः । तत्र प्रतिपदोक्तस्येत्यस्य साक्षादुच्चारितस्येति साक्षात्तत्तच्छब्दानुवादेन विहि-

---

*इको गुणवृद्धी* । *परिभाषयमिति* । न तु विधिः । तत्तद्विधायकशास्त्राणां वैयर्थ्यापत्तेः । नापि नियमः । प्रकरणोत्कर्षेण करणेन लाघवतात्पर्यकत्वात् । नाप्यधिकारः । पृथक् पाठसामर्थ्यादित्याशयेनाह—*व्याख्यानादिति* । *सामर्थ्यादिति भाव इति* । एवञ्चैतत्सूत्रघटको गुणवृद्धिशब्दो गुणवृद्धिशब्दबोध्याकारादिलाक्षणिकः । ननु पूर्वसूत्रस्थयोर्गुणवृद्धिशब्दयोः स्वरूपपरतया 'ऽनुवृत्त्यैव सिद्धे' इत्यनुपपन्नमत आह-*अनुवर्त्तमानमिति* । "ष्णान्ता षड्" इत्यत्र यथा । तथा च शब्दाधिकारेण सङ्ख्याशब्दो यथा स्वस्वरूपबोधकसूत्राभिन्नसूत्रान्तरैकवाक्यतापन्नत्वादर्थपरस्तथाऽयमपि स्यात् । अनुवर्त्तमानगुणवृद्धिशब्दोभयं पक्षः । सञ्ज्ञिबोधकत्वं साध्यम् । स्वस्वरूपबोधकसूत्रभिन्नसूत्रैकवाक्यतापन्नत्वं हेतुरित्यूह्यम् ।

स्पष्टप्रतिपत्तये वक्ष्यमाणदोषाच्च पक्षान्तरमाह—*यद्वेति* । यो यत्सूत्रोपात्तश्शब्दः स ततोऽन्यत्रार्थान्तरपर इति सामान्यतो न नियमः "स्वादिषु" इति सूत्रे ऽनुवृत्तपदशब्दे व्यभिचारादित्याशयेनाह-*स्वादिष्विति*। सिद्धान्तरत्नाकरोक्तिं खण्डयति । *लक्षणेति* । *साक्षादुच्चारितस्येति* । यथा "गातिस्थ" इति सूत्रे पाशब्देन 'पा पाने' इत्यस्य धातुषु पठितस्य । *तत्तच्छब्दानुवादेनेति* । "विभाषा दिक् समासे"

तस्येति वाऽर्थात् । ध्वनितश्चेदमत्रैव भाष्ये । अस्याश्च विधेयसमर्प
गुणवृत्तिपदश्रुतिर्लिङ्गं तदाह–विधीयेते इति । अत एव "अ
गुणे" (पा०सू०६।१।९७) "वृद्धिर्यस्य" (पा०सू०१।१।७३) इत्या
न दोषः । एतेन शब्दपरयोः पूर्वयोर्गुणवृद्धिपदयोरनुवृत्त्या 'यत्र
पदे तत्रेदमुपतिष्ठते' इत्यर्थेन "त्यदादीनामः" (पा०सू०७।२।१०
इत्यादिव्यावृत्तौ सिद्धायामिह गुणवृद्धी इति व्यर्थमित्यपास्तम्
एतन्मूलक एव "विधौ परिभाषोपतिष्ठते नानुवादे" इत्युद्घोषः ।

एवञ्च पदोपस्थापकपरिभाषाविषये 'विधीयते' इत्यस्यैवाध्या
हारो बोध्यः । एवञ्च "तस्मिन्निति निर्दिष्टे" (पा०सू०१।१।६६
"षष्ठीस्थाने" (पा०सू०१।१।४९) इत्यादेरनुवादेऽपि प्रवृत्तिः । ते
"प्रत्ययस्थात्कात्पूर्वस्य" (पा०सू०७।३।४४) "उदात्तस्वरितयोर्यणः"
(पा०सू०८।२।४) इत्यादौ न दोषः । "उदीचामातः स्थाने" (पा०
सू०७।३।४६) इतिस्थाने ग्रहणन्तु स्पष्टार्थमेव । तत्र विधिवाक्
प्रथमाया विधेयविभक्तित्वेन तदन्तस्य विधेयसमर्पकत्वनिर्णयः । अ
एव गुणादिपदानामिक्पदोपस्थापनेन चरितार्थामपि वाक्यार्था
यिता । तदर्थस्य तदनन्वयित्वे विधेयत्वाभावेन उपस्थापकत्वस्य

---

इत्यत्र 'दिङ्नामान्यन्तराले' इति सूत्रकृतबहुव्रीहिसञ्ज्ञाविशिष्टस्य य
शीघ्रोपस्थितिकत्वमेवोभयत्र हेतुर्बोध्यः । *ध्वनितमिति* । लक्षणप्र
पदोक्तपरिभाषया विवक्षितार्थकथनाभावेन ध्वनितमित्यर्थः । *विधेयस
मर्पकेति* । विधेयतात्पर्यकतयोपात्तगुणवृद्धिपदश्रवणसिद्धमित्यर्थः ।
च "वृद्धिर्यस्य" इत्यत्र वृद्धिपदस्य प्रथमान्ततया प्रथमायाश्च विधेयवा
तात्पर्यकतया तत्रापि परिभाषोपस्थितिस्स्यादिति वाच्यम् । तत्सूत्रे तच्छ
ब्दयुक्तस्य वृद्धिपदस्यैव विधेयबोधकत्वात् । वृद्धिशब्दस्तु यच्छब्दयुक्त
श्यबोधकवाक्यार्थप्रधानार्थविशेषणबोधक एव । एवाञ्चात्र सूत्रे विधीय
इति पदाध्याहारो बोध्यः । एतेन विधीयेते इति पदाध्याहारेण वाक्या
पर्यवसानकरणेन एतत्सूत्रे गुणवृद्धिपदश्रवणमेव तदध्याहारे लिङ्गम् ।

*एतन्मूलक एवेति* । अध्याहारमूलक इत्यर्थः । *उद्घोष इति*
एतेन तस्या "उदीचामाते" इतिसूत्रोक्तस्थानशब्दज्ञापितत्वं नेति सू
तम् । *प्रथमाया इति* । "वृद्धिरेचि" इत्यादौ । *अत ए
विधेयसमर्पकत्वादेव । *वाक्यार्थान्वयितेति* । स्वार्थसमर्पणद्वा

भङ्गापत्तेः। इदश्च 'एधिता' इत्यादौ व्यञ्जनानां गुणव्यावृत्त्यर्थं 'भिन्नम्' इत्यादौ निषेधप्रवृत्तये इग्लक्षणत्वसंपत्त्यर्थश्चेति दिक् ।

प्लुतशब्दैरिति । "ऊकाल" (पा०सू०१।२।२७) इति सूत्राद् ह्रस्वदीर्घप्लुत इति अजिति चानुवर्त्तते, ह्रस्वेत्यादिपदश्च तृतीयया विपरिणतमिति भावः । तेन "दिव उत्" (पा०सू०६।१।१३१) "अष्टन आ विभक्तौ" (पा०सू०७।२।८४) इत्यदावेतदनुपस्थितिः । शेषं प्राग्वत् ।

---

एतत्सूत्रप्रयोजनमाह-*इदश्चेति* । ननु टुकः कित्त्वादिज्ञापकेनाकारादेर्गुणो न भविष्यतीत्यत आह—*भिन्नमित्यादाविति* । आदिना 'न्यधुवि' इत्यादि सङ्ग्रहः ।

केचित्तु "विधौ परिभाषोपतिष्ठते" इति परिभाषाज्ञापनार्थम् 'उदीचा'मिति सूत्रे स्थानेग्रहणमावश्यकमेव । अत एव 'प्रतिदीव्न' इत्यत्र व्यवहिताकारस्य "अचः परस्मिन्" इति स्थानिवत्त्वाद्वलोपाभावः । किन्त्वेषा विधाविति परिभाषा पुनर्गुणवृद्धिपदोपादानेनानित्येति ज्ञायते । तेन 'उदात्तस्वरितयोः' इत्यनुवादे न दोष इत्याहुः

अत्रेदं चिन्त्यते । परिभाषासत्त्ववादिनः कोऽर्थोऽभिमतः साक्षादनूद्यमानविशेषणनियामिका, परम्परया वा यद्विशेषणन्तन्नियामिका, साक्षात्परम्परासाधारणविशेषणनियामिकेति वा,। नाद्यः। "इकोयणचि" इत्यस्य व्यवहितेपि प्रवृत्त्यापत्तेः "तस्मिन्" इति सूत्रवैयर्थ्यापत्तेश्च । न द्वितीयः स्थानेग्रहणस्य ज्ञापकत्वासङ्गतेः । न तृतीयः । "इको यणचि" इत्यादौ दोषतादवस्थ्यात् । प्रतिदीव्नेत्यत्रस्थानिवद्भावस्तु "न पदान्त" इतिसूत्रे दीर्घग्रहणेन ज्ञापकेन 'अचः परस्मिन्' इत्यत्र पूर्वत्वस्य व्यवहिताव्यवहितसाधाण्येन कल्पनेन सिद्धः । परिभाषाभावादेव "उदात्तस्वरितयोः" इत्यत्र 'उदात्तस्थाने यण्' इत्यस्य "षष्ठीस्थान" इति परिभाषया लाभः।

न च विधाविति परिभाषाभावे 'अचः परस्मिन्' इत्यस्य व्यवहितेपि प्रवृत्त्यर्थम् दीर्घग्रहणस्य ज्ञापकत्वं कल्पनीयमिति गौरवमिति वाच्यम्। परिभाषासत्त्वे तत्र स्थानेग्रहणस्य ज्ञापकत्वं तदनित्यत्वे च प्रकृतसूत्रस्थगुणवृद्धिग्रहणस्य ज्ञापकत्वं कल्पनीयमिति भवन्मत एव गौरवात् ।

*शेषमिति* । तत् अत्रापि विधीयते इत्यस्याध्याहारः तस्मिन् सति यत्र विधेयसमर्पकहस्वादिपदोपादानन्तत्र 'अच' इत्यस्योपस्थितौ 'सम्भवति सामानाधिकरण्ये' इति न्यायेन "ह्रस्वो नपुंसक" इत्यादौ सामानाधिकरण्येन "शमामष्टानाम्" इत्यादौ वैयाधिकरण्येन सम्बन्ध इति लक्ष्यानुसारिव्याख्यानात्कल्पनीयमिति भावः ।

आद्यन्तौ (पा०सू०१।१।४६) ॥ यद्यप्यत्र मिलितस्य नैका
न्वय इति द्वन्द्वो न प्राप्नोति, तथापि समूहयोरन्वयबोधोत्तरं "यथा
ख्यम्" (पा०सू०१।३।१०) इति सूत्रारम्भसामर्थ्यात्पुनः प्रत्येका
यः। लोके त्वेवम् रीत्या प्रयोगो ऽसाधुरेवेति भाष्ये स्पष्टम्।
वैव 'यथासंख्य'सूत्रोपन्यासो युक्तः। द्वन्द्वान्ते श्रूयमाणस्येच्छब्द
प्रत्येकम् सम्बन्धः। पुरस्तादपवादन्यायेन स्थानेयोगत्वस्याय
वादः। प्रत्ययपरत्वन्तु परत्वादमुं बाधते। तेन चरेष्टादयः परा एव भ
न्ति। अत एव यत्रैतदभावे स्थानषष्ठीसम्भावना तत्रैवेदं प्रवर्त्तते तदा
यस्योक्ताविति। आद्यन्ताक्षिप्तोऽवयवी यच्छब्दार्थः। यथासंख्य
सिद्धमर्थमाह-क्रमादिति। इताविति किम्? टुक् पर्यायेणाद्यन्त
योर्मा भूत्।

मिदचो (पा०सू०१।१।४७)। अयम् बाध्यसामान्यचिन्तया

---

*नैकत्रान्वय इति*। यत्रैको धर्मोऽन्वयितावच्छेदकस्तत्रैव साहि
व्यवहारस्य प्रसिद्धत्वादिति भावः। *समूहयोरिति*। साहित्यस्यो
श्यतावच्छेदकत्वं विधेयतावच्छेदकत्वञ्च प्राथमिकबोधे, ततो 'यथासंख्य
सूत्रसहायेन लक्ष्यसंस्कारसिद्ध्यर्थन्द्वितीयोपि बोधः कल्प्यत इति भाव
*लोक इति*। "अजाविधनौ देवदत्तयज्ञदत्तौ' इत्युक्तेन ज्ञायते कस्याजा
कस्यावय" इति भाष्यात्। तत्र गमकाभावेन प्रत्येकमन्वयः। इह तु यथा
सङ्ख्यसूत्रमेव गमकमिति भावः। 'अत एवाह—*अत्रैवेति*।

*द्वन्द्वान्त इति*। यदि द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकमन्वयस्तदैव सा
हित्यस्योपपत्तिः। एवं द्वन्द्वादौ श्रूयमाणस्यापि समन्वयो बोध्यः। *पु
रस्तादिति*। बाध्यविशेषचिन्तयेति भावः। *चरेष्टादय इति*। आ
दिना ल्युडादिसङ्ग्रहः। *अत एव*। स्थानेयोगत्वमात्रापवादत्वादेवं
प्रकृतार्थलाभायाह—*आद्यन्ताक्षिप्त* इति। एतेन आक्षेपः प्र
युक्त एव। आद्यन्तावयववाचकपदस्यावयविनि नित्यसाकाङ्क्षत्वा
शब्दाध्याहारो बोध्यः। *इताविति किमिति*। टकावित्येवार्श आद्य
न्तमस्त्वित्यभिप्रायेण प्रश्नः। न चैकेन ककारेण कुकोऽन्त्यावयवत्वे ज्ञा
द्धे ककारद्वयोच्चारणमेवेत्सञ्ज्ञकेन परावयवत्वबोधनं नान्येनेत्यत्र ज्ञाप
स्भविष्यतीति प्रकृतमिद्ग्रहणं व्यर्थमिति वाच्यम्। ककारांश एव विशे
क्षज्ञापकत्वसम्भवात्।

स्थानेयोगत्वप्रत्ययपरत्वयोरपवादः । "तृणह" (पा०सू०७।३।९२) इति निर्देशात् । निर्धारणे इति । यस्य समुदायस्य मिद्विहितस्तस्यावां मध्ये इत्यर्थः । सौत्रमेकवचनमिति भावः । तस्यैवेति । यस्य विहितस्तस्यैवेत्यर्थः । अत एव "समुदायभक्तोऽसौ नोत्सहते ऽवयवस्येगन्ततां विहन्तुम्" इति भाष्यम् सङ्गच्छते । अन्तावयव इति । पूर्वसूत्रात्समस्तमप्यन्तपदमेकदेशे स्वरितत्वप्रतिज्ञाबलादनुवर्तते इति भावः । 'मुञ्चति' इत्यादिविषये तु फलाभावादयोग्यत्वाच्चान्तावयव इत्यंशाप्रवृत्तिः ।

परिभाषाणामनियमे नियमकारिणीत्वादाह–अनिर्धारितेति । तेन "ऊदुपधाया गोह" (पा०सू०६।४।८९) इत्यत्र स्थानेयोगत्वम् न। उपधापदसन्निधानेनावयवषष्ठीत्वनिर्णयात् । "स्थाने योगा" इत्यस्य

---

"मिदच" इति सूत्रविषये बाध्यसामान्यचिन्तायां ज्ञापकमाह–*तृणाहेति* । *अत एव* । समुदायवयवत्वस्वीकारादेव । एवञ्च 'पञ्चारत्नीनि' इत्यत्र नुमः समुदायभक्तत्वात् "इगन्तकाल" इति स्वरसिद्धिस्तदाह *समुदायेत्यादि* । *इत्यंशाप्रवृत्तिरिति* । परत्वांशस्तु प्रवर्तत एव । तेन "मुचादीनाम्" इत्यस्य स्थानषष्ठीत्वसम्भावनयाऽलोन्त्यपरिभाषाप्रवृत्तिः । परशब्देन चात्र न परावयवत्वबोधनं किन्तु यस्य मिद्विहितस्तस्य योऽन्त्याच् ततः परत्वमात्रम् । अन्यथा 'पञ्चारत्नीनि' इत्यत्र स्वरासिद्धिस्स्यात् । 'अमुञ्चत्' इत्यादौ मुमि कृते विशिष्टस्याङ्गत्वन्तु तन्मध्यपतितन्यायेन ।

न चावयवावयवस्य समुदायावयवत्वेन यस्य "आर्द्धधातुक" इति सूत्रविहितेट् तस्य टित्त्ववृद्धिस्स्यात् । एवञ्च 'कारिता' 'सद्बुद्धिः' इत्यादौ टित्वान्ङीबापत्तिरिति वाच्यम् । तुटष्टित्त्वेनैव सिद्धे ट्युट्युलोष्टित्वेनाऽऽगमे तत्तद्व्यवहारसम्पादकानुबन्धस्य न स्वीयागमस्य यदागमत्वं तद्घटितसमुदाये तद्व्यवहारप्रयोजकत्वमिति स्वीकारात् । न चावयवानुबन्धस्य समुदायोपकारकत्वाभावे तुल्यन्यायेन धेटष्टित्त्वात् 'स्तनन्धयी' इति प्रयोगस्यासिद्धिरेवं सति स्यादिति वाच्यम् । टित्त्वस्य धातावुपकाराभावेन समुदायोपकारसम्भवात् । आगमविषय एव पूर्वोक्तज्ञापककल्पनाच्च । इत्थञ्च यदवयवसम्बन्ध्यनुबन्धोऽवयवस्योपकारं करोति स समुदायानुबन्धो न भवति, यत्र तु नावयवोपकारस्तत्र समुदायोपकारकत्वं कल्प्यते इति दिक् ।

स्थानपदार्थनिरूपितसबन्धार्थिकेत्यर्थः । स्थानेन योगो यस्या
विग्रहे निपातनात्साधुत्वस्य भाष्ये उक्तत्वात् । 'अस्तेरनन्तरे'
देरपि अनन्तरादिनिरूपितसम्बन्धे इत्येवार्थः । षष्ठीमात्रोच्चारणे
नपदाध्याहार इत्यन्यत्र विस्तरः ।

प्रसङ्ग इति । 'दर्भाणां स्थाने शरैः प्रस्तरितव्यम्' इत्या
तथा दर्शनात् । भावे ल्युट् स्थानशब्दे । प्रसङ्गश्च सति सम्भवे
एव । अर्थप्रत्यायनार्थं शब्दप्रयोगात् । "इको यण्"(पा०सू०६।१।
इत्यादेरच्परेकारघटितशब्दस्यार्थबोधनाय प्रसङ्गे तत्परयकारघ
प्रयोक्तव्य इत्यर्थः । "एरुः" (पा०सू०३।४।८६) इत्यादेश्च तेस्तु
तिः; अतो न शब्दनित्यताहानिः । किंच इकारबुद्धिप्रसङ्गे यकारबु

---

*स्थानपदार्थेत्यादि* । स च सम्बन्ध आदेश्यादेशभावरूपः । *
पातनादिति* । तृतीयासमासे निपातनादेत्वमिति भावः । स्थान
सम्बन्धो न षष्ठ्यर्थः । स्थानं योगस्सम्बन्धो यस्या इत्यर्थकस्थानयो
पादानेन सिद्धे 'तृतीयाया एत्वं निपातनात्' इति भाष्येण तथा बोध
देव व्यधिकरणबहुव्रीहिकरणमिति ज्ञापकमिति बोध्यम् ।

नन्वेवम् "अस्तेर्भूः"इति सूत्रघटकषष्ठ्यंशे "अस्तेरनन्तरे समीपे
इत्यादिभाष्ये अनन्तरादिपदोपादनेन तेषां षष्ठ्यर्थत्वं कल्प्यते । तथा
स्थानात्मक एव सम्बन्धः षष्ठ्यर्थो भविष्यतीत्यत आह-*अस्तेरनन्त
इति* । एवञ्च यद्यनन्तरपदाध्याहार स्यात्तदाऽनन्तरपदार्थनिरूपितो
ऽव्यवहितदेशवृत्तित्वरूपस्सम्बन्धः स भूशब्दे प्रतीयेत । परन्तु प्र
"षष्ठीस्थानेयोगा" इति शास्त्रबलात् स्थानपदार्थनिरूपितसम्बन्धार्थ
षष्ठी बाध्या । परिभाषाया अनियमे नियमकारकत्वस्वभावत्वाद्यत्र प
मात्रोच्चारणेनानेकसम्बन्धसम्भावना तत्र षष्ठ्याः स्थानपदार्थनि
तसम्बन्धार्थकत्वमनया षष्ठ्या बोध्यत इति निष्कर्षः । *अन्यत्र*
द्योतादौ ।

*प्रसङ्ग इति* । ननु स्थानपदस्य प्रसङ्गार्थकत्वमन्यत्र न दृष्टमत आ
*दर्भाणामिति* । *सति सम्भव इति* । एतेन "इको यणचि" इत्यादौ "त
दित्युत्तरस्य" इत्यादिनिर्देशादनर्थकस्य स्थानित्वेऽपि न क्षतिः । शब्दा
न्नित्यत्वसमर्थनाय कल्पनायामप्याह-*इको यणचीति* । *अर्थबोध
प्रसङ्ग इति* । आनुमानिकस्थान्यादेशभावकल्पकं वाक्यं स्थान्यर्थबो
समर्थमेव कल्प्यते इति भावः । "कार्यविपरिणामात्सिद्धम्" इति
करोतीत्याह-*किञ्चेकारेति* । कार्यस्य=सम्प्रत्ययस्य विपरिणाम इति

रित्यर्थः । अत एव "अचः परस्मिन्" (पा०सू०१।१।५७) इत्यादि सङ्गच्छते । स्पष्टश्चेदम् "दाधाधु (पा०सू०१।१।२०) इति सूत्र'स्थानिवत्'सूत्रयोर्भाष्ये ।

स्थानेऽन्त (पा०सू०१।१।५०) षष्ठीत्यनुवृत्त्या यत्र स्थानषष्ठी तत्रेदमुपतिष्ठते इति विध्येकवाक्यतयैवास्य नियामकत्वम्, न तु विहितानां नियमः । 'भुक्तवन्तम्' इति न्यायविरोधात् । फलितमाह–प्रसङ्ग इति । सदृशतम इति । अर्थात्प्राप्यमाणानां मध्ये एव । अतएव 'गङ्गोदकम्' इत्यादौ त्रिमात्रो न । तमप् किम् ? 'वाग्घरिः' इत्यादौ महाप्राणत्वसाम्येन जायमानः पूर्वसवर्णो वर्गाद्वितीयो मा भूत् । किं तु नादवान् महाप्राणश्चतुर्थो घ एव यथा स्यादिति । स्थाने ऽन्तरतमे इति सप्तम्यन्तपाठस्तु दीर्घेषु यणसिद्ध्या दुष्ट इति भाष्ये स्पष्टम् ।

यत्रानेकेति । स्थानेग्रहणे एकदेशानुवृत्त्या ऽनुवर्त्तमाने पुनः स्थानेग्रहणं तृतीयया विपरिणामेन वाक्यभेदमाश्रित्य प्रसङ्गे सति सम्भवे स्थानत एवान्तरतम, इत्यर्थमिति भावः । स्थानत इति । स्थानेनेत्यर्थः । तत्र स्थानत–"इको यणचि" (पा०सू०६।१।७७) इति ।

---

र्थः । एवञ्च विषयिबुद्ध्युन्मज्जननिमज्जनयोर्विषये आरोपेण तयोः स्थान्यादेशभावव्यवहारः सङ्गच्छत इति । अन्यथा सर्वत्र समुदायादेशत्वे ऽजादेशाप्रसिद्धिरेव स्यादिति भावः ॥

*दाधाध्विति सूत्रइति* । तत्र हि 'प्रनिदारयति' इत्यत्र णत्वाभावार्थं कृतस्य "समानशब्दानाम्प्रतिषेध" इति वार्तिकस्यार्थात्परिभाषाखण्डनं कृत्वा प्रणिदापयति' इत्यत्र णत्वाप्राप्तिमाशङ्क्य 'न चार्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते' इत्युक्त्वा 'नित्येष्वागमविधानमनुपपन्नम्' इत्याशङ्क्य नित्येष्वादेशशासनं यथा बुद्धिविपरिणामेन तथात्रापीत्याशयेन-'आदेशास्तर्हि भविष्यन्ति, अनागमकानां सागमका आदेशाः, कथं सर्वे सर्वपदादेशा" इत्युक्तम् । स्थानिवत्सूत्रे तु "कार्यविपरिणामात्" इति स्पष्टमेवाभिप्रेतम् । *अत एव* । प्राप्यमाणानामित्यर्थकरणादेव । *त्रिमात्रो नेति* । "अदेङ्गुण" इति सूत्रे तपरकरणात् ।

*स्थानेऽन्तरतम इति* । "स्थानेऽन्तरतम उरण्रपर" इतिसंहितापाठेऽन्तरतमशब्दस्सप्तम्यन्तः प्रथमान्तो वेति सन्देहः, सप्तम्यन्तपाठे आदेशानुरोधेन स्थानिसङ्कोचः । प्रथमान्तत्वे स्थान्यनुरोधेनाऽऽदेशसङ्कोचः । तत्र सप्तम्यन्तच्छेदो न युक्तः । दीर्घेषु यणोऽसिद्ध्यापत्तेस्तत्र स्थानि-

अर्थतः—"तृज्वत्क्रोष्टुः" (पा०सू०७।१।९५) इति । इह क्रोष्टु
स्थाने पक्तृशब्दो नादेशः । गुणतस्तु 'वाग्घरिः' इत्यादौ । प्र
तो "अदसो ऽसेः" (पा०सू०८।२।८०) इत्यादौ ।

तस्मिन्निति (पा०सू०१।१।६६)। अत्र 'तस्मिन्' इति
'तस्मात्' इति सप्तम्यन्तपदपञ्चम्यन्तपदार्थकःस्वतन्त्रस्य सर्वनाम्नो
देशो व्याख्यानात्, बहुलक्ष्यसंस्कारानुरोधाच्च । न तु तत्त
परम् । अन्यथा "तस्मिन्नणि च" (पा०सू०४।३।२) "तस्मान्नुडां
(पा०सू०६।३।७४) "तस्माच्छसो नः" (पा०सू०६।१।१०३) इत
प्रवर्त्तेयाताम् । सप्तमी तु सप्तम्यन्तानामेव तच्छब्दार्थत्वमिति बोध
तद्बोध्यार्थस्य निर्दिष्टे इत्यनेन सामानाधिकरण्याय च । इतिशब्दः
नस्तस्य तदर्थपरत्वं बोधयति । निःशब्दो नैरन्तर्ये दिशिरुच्चारं
एवञ्च सप्तम्यन्तार्थे ऽव्यवहितोच्चारिते उपश्लिष्टस्य पूर्वस्य कार्यि
वाच्योऽर्थः । एवञ्चैतत्परिभाषाद्वयोपस्थितौ सप्तम्यन्तपदस्य पञ्चम

---

नोऽत्यन्तविलक्षणत्वात् । *तृज्वत्क्रोष्टुरितीति* । यदि तु "तृज्वत्क्रो
इति त्रिसूत्री प्रयोगनियमार्थेति नायमादेश इति विभाव्यते तदा "
सर्वपदादेशा" इति पक्षे "एरुः" इत्यत्र श्रुतयोः स्थान्यादेशबोधकपदयो
दन्तपरतया इवर्णान्तस्योवर्णान्तादेश इति कल्पनायामपि 'भवतु' इत्यत्र
शब्दस्य तुशब्द एव, न तु, तुशब्द इत्यत्रार्थत आन्तरतम्यमेव नियामक

*व्याख्यानादिति* । "तस्मिन्नणि च युष्माकास्माकौ" इति सू
'यौष्माकीण 'अस्मभ्यन्देहि' इत्यत्र परस्यादेशनिवृत्तिः पूर्वसूत्रस्य 'अ
त' 'आनुपलभत' इत्यत्रोत्तरसूत्रस्य पूर्वशसवयवसकारेऽप्रवृत्तिश्च प
यद्यपि स्वसमानानुपूर्वीकानुकार्यग्रहणं सम्भाव्यते तथापि "तस्मि
च" इत्यत्र निर्दिष्टयोः प्रत्ययत्वात् ताभ्यां "यस्माद्विहितस्तदादेः" इत्या
क्षेपेण "तस्माच्छसो नः" "तस्मान्नुड्" इत्यनयोः "परस्य" इत्यपा
वा दोषाभावस्सूत्रद्वयानारम्भेऽपि साधयितुं शक्य इत्याशयमूलकाद्
लक्ष्यसंस्कारानुरोधाच्चेत्यर्थस्तदाह–व्याख्यानादित्यादि ।

*सप्तम्यन्तानामिति* । तत्तत्सूत्रावयवानामचि हलीत्यादीनाम् ।
मितिशब्दो व्यर्थ इत्यत आह–*इति शब्दइति* इति शब्दाभावे सप्त
न्तपदानामेव सप्तमीप्रकृतिवाच्यत्वं स्यात्तथा च तस्य लक्ष्यस्य नि
रोच्चरितत्वासम्भव इतिभावः । *तस्य* । सप्तम्यन्तार्थीत्यादिपद
*तदर्थपरत्वम्* । सप्तम्यन्तपदार्थपरत्वम् ।

पदस्य चार्थो लिङ्गम् ।

अत्र सूत्रे उपश्लिष्टपदाद्ध्याहारेण निर्दिष्टे इति औपश्लेषिके ऽधिकरणे सप्तम्येवोचिता, "उपपदविभक्तेः" इति न्यायात् । न तु सतिसप्तमीति "तत्र च दीयते" ( पा०सू०५।१।९६) इति सूत्रे कैयटे स्पष्टम् । "स्तुक्रमोः" (पा०सू०७।२।३६) इति सूत्रे च कैयट आह–'तस्मिन्निति परिभाषायां सत्यां सत्सप्तम्याश्रयणमशक्यम्' इति । उपश्लेषः समीपवृत्तित्वं तच्च वर्णयोर्बौद्धं द्रष्टव्यम् । एवं "इको यणचि" इत्यादावपीयमेवेति "संहितायाम्" (पा०सू०६।१।७२) इति सूत्रे भाष्ये । तत्रोपश्लेषः पूर्वस्येव परस्याव्यवहितस्येव व्यवहितस्य चेति पूर्वस्यैवेति नियमार्थमिदमव्यवहितस्यैवेति च । अत एव लक्ष्यानुसारात् क-

---

न च "नेड्वशि कृति" "ङसिस" इत्यादिषष्ठ्यर्थसप्तमीनिर्देशो यत्र तत्रापि "तस्मिन्निति" सूत्रप्रवृत्तिस्स्यादिति वाच्यम् । तदर्थपरत्वमित्यस्य सप्तम्यर्थविशिष्टप्रकृत्यर्थपरत्वमित्यर्थः । "नेड्वशि" इत्यादौ तु न सप्तम्यर्थ इति भावः । *पदस्य चार्थ इति* । सप्तम्यर्थविशिष्टप्रकृत्यर्थो लिङ्गमित्यर्थः । न च "सप्तमीनिर्दिष्टे पूर्वस्य" इति कुतो न सूत्रितमिति वाच्यम् । तथा सप्तमीपदं यत्रोच्चरितं तत्र "सप्तम्याञ्जनेर्डः" इत्यादावेव प्रवृत्त्यापत्तेः । *बौद्धमिति* । शब्दयोरुपश्लेषो न संयोगः । द्रव्ययोरेव संयोगात् । नापि स्वोत्पत्त्यधिकरणक्षणाव्यवहितक्षणोत्पत्तिकत्वम् । वर्णस्य नित्यत्वात् । किन्तु स्वज्ञानाधिकरणाव्यवहितक्षणावृत्तितत्समानाधिकरणज्ञानविषयत्वम् । एवञ्चोपश्लेषो बुद्धिकृत एव पर्यवसन्न इति भावः ।

न चायमुपश्लेषः पूर्वपरसाधारणो यद्यव्यवधानगर्भस्तदा तस्य व्यवहितसाधारण्यं नोपपद्यत इति निर्दिष्टपदं व्यर्थमिति शङ्क्यम् । ज्ञानस्य द्विक्षणवृत्तितया सुद्ध्युपास्य इत्यत्रोपशब्दावयवोकारविषयकज्ञानाव्यवहितक्षणवृत्तिज्ञानविषयत्वं यथा धकारेकारे तथा ईकाराधिकरणाव्यवहितधकारज्ञानोत्पत्त्यधिकरणक्षणवृत्तिज्ञानाविषयत्वं सु इत्युकारविषयकज्ञानेऽपीति सुशब्दावयवोकारस्य यणभावार्थं निर्दिष्टपदोपादानात् । यदि च स्वविषयकज्ञानोत्पत्त्यधिकरणक्षणाव्यवहितक्षणोत्पन्नज्ञानविषयत्वमेवोपश्लेषः, सः च स्वाभाविकार्द्धमात्राकालव्यवधानेनोच्चारणे एव न तु तदधिककालेनोच्चारणे इति कल्प्यते । तदा निर्दिष्टपदं व्यर्थमेव । तदेतद्वक्ष्यति–यदि त्वर्द्धेत्यादि ।

*नियमार्थमिदमिति* । एतेनैतयोः परिभाषात्वं ध्वनितम् । *इना-

चित्सतीत्यध्याहारात् सत्सप्तम्याश्रयणेनास्याः प्रवृत्तिरिति "श्न
लोप" (पा०सू०६।४।२३) इत्यत्र भाष्ये उक्तम् । अत एव "कर्तृ
णोः कृति" (पा०सू०२।३।६५) इत्यत्र नास्याः प्रवृत्तिः, कृति
प्रत्यासत्त्या तत्प्रकृत्यर्थः कर्तृकर्मणोः षष्ठीति तदर्थात् ।

"तस्मात्" (पा०सू०१।१।६७) इति सूत्रे निर्दिष्टे इति निर्दिष्ट
त्यर्थकं विभक्तिविपरिणामात् । सा चोत्तरस्येति दिग्योगलक्षणा
दिग्योगलक्षणपञ्चम्यामेव तत्प्रवृत्तिः । "उदः स्था"(पा०सू०८।४।
इत्यादौ च 'उद' इति दिग्योगलक्षणा पञ्चमी । तत्रानियतदिक्श
ध्याहारे प्रसक्ते परशब्दस्यैवाध्याहार इति 'तस्मात्' इत्यनेन नियम
अव्यवहितोच्चारितात्पञ्चम्यन्तात्परस्येति तदर्थः । तत्फलितमा
सप्तमीनिर्देशेनेत्यादि ।

यदि तु अर्धमात्राधिककालेन वर्णान्तरेण वा व्यवधाने
श्लेष एव नेत्युच्यते तदा, निर्दिष्टपदं संहिताधिकारश्च विफल
"संहितायाम्" (पा०सू०६।१।७२) इति सूत्रे भाष्ये स्पष्टम् । अत्र
च संप्रदाय एव शरणमिति आनङादिविषये आदेशोत्तरमेवावग्र
न्यत्र ततः प्राक् । अकृतव्यूहपारिभाषा त्वनित्या, नास्त्येव वा । "
लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्त्यम्" इ
भाष्येण तदनुरोधेन शास्त्रासङ्कोचस्य शास्त्रकरणाभावस्य च स
मुक्तत्वाच्च ।

एतेन संहिताधिकारस्तद्बहिर्भूतानामर्धमात्राधिककालव्यव

---

श्नलोप इति सूत्रे भाष्ये उक्तमिति* । तत्र हि "किमर्थं श्नमः शका
ग्रहणं क्रियते' इति प्रश्ने 'नन्दिता" नन्दक' इत्यत्रापि प्राप्नोति' इति
कथिते 'क्ङितीति वर्त्तते', एवमपि 'हिनस्ति" इत्यत्र न प्राप्नोति ।
परसप्तमी, का तर्हि ?सत्सप्तमी, क्ङिति सति, एवमपि 'नन्दमान' इत्य
पि प्राप्नोति एवन्तर्हि नशब्द एव क्ङित्त्वेन विशिष्यते क्ङिन्नशब्दो
भवति' इत्युक्तम् । एतेन प्रघट्टकेनैवौपश्लेषिकाऽऽधारे यत्र सप्तमी
"तस्मिन्" इति परिभाषाप्रवृत्तिरिति लभ्यते ।

ननु व्यवहितेऽर्द्धमात्राधिककालेन वा व्यवधानेऽप्युपश्लेषस्तदा
ग्रहेप्यानङ् भवति भवदुक्तनियमे स न स्यादत आह-*अवग्रह इति
*तदनुरोधेन* । अवग्रहानुरोधेन । *एतेन* । पूर्वोक्तव्याख्यानेन ।

प्रवृत्तिज्ञापनार्थम्, तेन 'अग्नाविष्णू' इत्यादावग्रहे आनङादिसिद्धिरित्यपास्तम्। "प्रत्ययः" (पा०सू०३।१।१) "परश्च" (पा०सू०३।१।२) इत्यादौ तूत्तरांशविकला "तस्मात्" इति परिभाषा प्रवर्त्तते । तेन न प्रत्यया व्यवहिताः। अत एव "छन्दसि परेऽपि" (पा०सू०१।४।८१) "व्यवहिताश्च" (पा०सू०१।४।८२) इति सूत्रं सार्थकम् ।

आगमविधावपि "आने मुक्" (पा०सू०७।२।८२) इत्यादौ "तस्मिन्" इति परिभाषया पूर्वसंबन्धित्वनिर्णयः । अत एवात्र पूर्वस्येत्यादि न स्थानषष्ठी । तत्तद्विधिभिरेव संबन्धस्य निर्णीतत्वेन "षष्ठी स्थाने" (पा०सू०१।१।४९) इत्यस्याप्रवृत्तेः । "गाङ्कुटादिभ्यः" (पा०सू०१।२।१) इत्यादावपि षष्ठ्यंशविकलैतत्परिभाषाप्रवृत्तिर्बोद्ध्या। परिभाषाणां नियमत्वन्तु यदि परिभाषासूत्रं न स्यात्तदा व्यवहितादावपि प्रवृत्तिः स्यादित्येतावतेति दिक् ।

अलोऽन्त्यस्य(पा०सू०१।१।५२)षष्ठीस्थाने इत्यनुवर्त्तते; तदाह-षष्ठी इत्यादि। स्थाने विधीयमानः स्थानषष्ठीनिर्दिष्टान्त्यस्येत्यर्थः।स्थाने त्यादि किम्? इट् तृच ऋकारात्पूर्वो मा भूदिति। अन्त्यस्येति साहचर्यादल इति षष्ठ्यन्तम्, अन्त्यस्याल इत्यर्थः। अल इति किम्? पदस्येति विधीयमानं "वसुस्रंसु" (पा०सू०८।२।७२) इति दत्वं 'स्वनडुद्भ्याम्'

त्तरांशविकलेति*। "परश्च" इत्यस्य नियामकत्वे तु षष्ठ्यंशविकलेति बोध्यम। *अत एव*। तदंशरहितस्याप्युपस्थितिस्वीकारादेव। *अत एव*। आगमविषयेऽपि परिभाषाप्रवृत्तिस्वीकारादेव। अतिदेशविषये प्याह—*गाङिति*। *एतत्परिभाषाप्रवृत्तिरिति*। तस्मादितिपरिभाषाप्रवृत्तिरित्यर्थः।

ननु परिभाषात्वम् "अनियमे नियमकारकत्वम्" इति शिष्टसमाचारस्स नोपपद्यते, परिभाषात्वमभिमतवाक्यैकवाक्यतया विधिसूत्रैर्लक्ष्यसाधनादिति शङ्कापरिहारार्थमाह-*परिभाषाणान्नियमत्वन्त्विति*। सूत्रमित्येकवचन्तु जातौ, एवञ्चार्थिको नियमत्वव्यवहार इति भावः।

"षष्ठीस्थाने" इत्यनुवृत्तौ यथा वाक्यार्थस्तथा दर्शयति-*स्थान इति*। निर्दिष्ट इत्यध्याहारलब्धम्। *स्थानेत्यादि किमिति*। अनुवृत्तेः प्रश्नः। *षष्ठ्यन्तमिति*। न तु जसन्तम्। लोपात्सकारादेशविष-

इत्यादावन्त्यस्य पदस्य मा भूत् । स्थाने विधीयमान इति प्रत्या-
त्तिलभ्यम् । एवञ्चाल एवेति अन्त्यस्यैवेति नियमद्वयमत्र । अलसमु-
दायबोधकपदोत्तरं स्थानषष्ठी अस्या लिङ्गम् । अत एव "इतोत्" (पा०
सू०७।१।८६) इत्यादौ नास्याः प्रवृत्तिः । पथ्यादीनामित्यस्यावयवष-
ष्ठीत्वात्, इत इत्यस्यालसमुदायोत्तरत्वाभावाच्च ।

ङिच्च (पा०सू०१।१।५३) अनेकालर्थमिदम् ।

आदेरिति । आदेरल इत्यर्थः । तेन 'द्वीपम्' इत्यादौ पान्
समुदायस्य नेत्वम् । अत्र परस्येत्यावर्त्तते । तेन परबोधकशब्देन ष-
परस्य स्थाने विधानं तत्रैवेदम् । तेन "नित्यं ङितः"(पा०सू० ३।४।९९)
इत्यादौ न दोषः । तत्र विकरणव्यवधाने प्रवृत्तये "धातोः" इत्यस्य
विहितविशेषणत्वात् ।

अनेकाल् शित् (पा०सू०१।१।५५) शित उदाहरणम्
"इदम इश्" (पा०सू०५।३।३) । ननु शकारोच्चारणसामर्थ्याद्
भूतपूर्वानेकालत्वमादाय सर्वादेशत्वे सिद्धे शिदिति व्यर्थम् । किंच
सानुबन्धकनिर्देशे यथा नालः स्थानित्वं "भोभगो"(पा०सू०८।३।१७)
इति सूत्रे भाष्ये उक्तम्, तथाऽऽदेशत्वमपि सूत्रोपात्तस्यैवेति तद्व्यर्थम्

---

ये "अरुर्मनश्चक्षुः"इत्यादौ परिभाषाप्रवृत्त्यनापत्तेः । *अन्त्यस्य पदस्येति*
अधिकारलब्धस्येत्यादिः । *लिङ्गमिति* । एवञ्चालसमुदायबोधकपदो-
त्तरं यत्र स्थाने षष्ठी तत्रान्त्यस्याल इत्युपतिष्ठत इति वाच्योऽर्थः । अ
मानंतु परिभाषाया नियमकारकत्वमेव । यत्रालसमुदायोत्तरं स्थानष
तत्रैवैतत्परिभाषाभावेऽनियमप्रसक्तेः ।

*आदेरलइति* । अल्ग्रहणानुवृत्त्याऽयमर्थः फलति । *तेन* । अल्
हणानुवर्तनेन । अन्यथाऽलोन्त्यसूत्रात् "ङिच्च" इत्यत्रान्त्यपदानुवृत्तेः कृतत्वा
दन्त्यस्यादेरित्यर्थापत्त्योपात्तसमुदायस्यापत्तिः । अल्ग्रहणानुवृत्तौ तूप
त्तशब्दस्यादेरलोऽन्त्यादित्वासम्भवेन तदनुवृत्तिः । *धातोरित्यस्य वि
तेति* । इदञ्च धातोरित्यस्य फलाभावेऽप्यनुवृत्तिशङ्कायाम् । वस्तुतस्
स्यानुवृत्तिरेव युक्ता ।

ननु विधेयत्वाख्यविषयताया विशिष्टे स्वीकारे "अणुदित्" सूत्रे "
प्रत्ययादेशटित्किन्मित इति वक्तव्यम्" इति वार्तिकव्याख्यावसरे आ
शोदाहरणम् "इदम इश्" इत्युक्तम्भाष्ये तन्नोपपद्यते विधेयत्वाख्यवि
तापर्याप्तिर्यादृशसमुदाये तस्य नाण्त्वम् यस्य चाण्त्वं तस्य न ताद

विधौ निर्दिष्टो योऽनेकाल् स सर्वस्येति सूत्रार्थः । उद्देश्यत्वविधेयत्वाख्य-विषयतया बोधविषयता तु अनुबन्धविनिर्मुक्तस्येति न 'अणुदित्' सूत्र-भाष्यविरोधः ।"घ्वसोः" (पा०सू०६।४।११९) इति लोपस्य "लोपो यि" (पा०सू०६।४।११८) इति प्रकृते पुनर्लोपग्रहणसामर्थ्यात्सर्वादेश-त्वसिद्धिः । अनुबन्धानामेकान्तत्वमेव न्याय्यमित्युक्तमिति चेन्न ।

"नानुबन्धकृतमनेकाल्त्वम्" इति ज्ञापनेन चारितार्थ्यात् । तेन "दिव औत्" (पा०सू०७।१।८४) इत्यादिना न सर्वादेश-त्वम् । अस्य च यथेत्सञ्ज्ञा तथा वक्ष्यते । 'नानेकाल् शित्' इति तु नोक्तम् । "अनन्तरस्य" इति न्यायेन "आदेः परस्य" (पा०सू० १।१।५४) इत्यस्यैव निषेधापत्तेः । परत्वादिति । 'आदेः परस्य' इत्य-स्यावकाशः । "द्व्यन्तरुपसर्गेभ्यो (पा०सू० ६।३।९७) "द्वीपम्" । शित्सर्वस्य "इदम इश्" (पा०सू०५।३।३) । एवम् 'अतो भिस' (पा०सू० ७।१।९) इत्यादिविषये "अनेकाल्" इत्यनेन 'आदेः पर-स्य' इति परत्वाद् बाध्यते । एतेन "ङिच्च" इत्यत्र ङिदेवानेकालन्त्यस्य इति नियमेन सिद्धे ऽनेकाल्ग्रहणं व्यर्थम्' इत्यपास्तम् ।

---

विषयत्वाधिकरणत्वमिति शङ्कायामाह *उद्देश्यत्वेति* ।

ननु शिद्ग्रहणाभावे "घ्वसोः" इति विहितलोपस्य सर्वादेशत्वार्थं यद्वि-शकारको निर्देश इत्युक्तन्तद्विरोध इत्यत आह—*घ्वसोरितीति* । नन्व-नुबन्धानामनेकान्तत्वेनेशो नानेकाल्त्वमित्यत आह—*अनुबन्धानामिति* । *नानुबन्धकृतमिति* । अनुबन्धत्वयोग्यकृतमित्यर्थः । एवञ्चात्र सूत्रे शित्पदस्येत्सञ्ज्ञायोग्यशकारवत्त्वमेवार्थः ।

नन्वौतस्तकार उच्चारणार्थ इति कथमस्येत्सञ्ज्ञेत्यत आह—*अस्य चेति* । उच्चारणार्थानामित्सञ्ज्ञां विना निवृत्त्यसम्भवादिति वक्ष्यत इत्य-र्थः । मात्रालाघवाभिप्रायकशङ्कायामाह—*नानेकालित्यादि* । *निषेधा-पत्तेरिति* । न च 'अन्त्यस्यादेः' इत्युभयानुवृत्त्योभयव्यावृत्तौ दोषाभाव इति वाच्यम् । पारिशेष्यान्मध्यगस्यैवेत्यपि सम्भावनापत्तेः । एतेन "ङि-च्च" इत्यत्र ङिदेवानेकालिति, अत्रानेकालिति पदाभावात्कथमस्य लाभ इति नाशङ्कनीयम् । "ङिच्च" इति सूत्रस्यानङाद्यादेशार्थमेवारम्भेण तेषा-मनेकाल्त्वात् । *अपास्तमिति* आदिरित्येतद्बाधकतयाऽनेकालित्यस्या-वश्यकत्वात् ।

स्वरितेन ॥ (पा०सू०११।३।११) इत्थंभूतलक्षणे तृतीया स्वरितत्वज्ञाप्योऽधिकारो विनियोग इत्यर्थः । स्वरितत्वञ्चेदं दो विशेषरूपमङ्गलसाधारणं स्वरूपमधिक्रियमाणपदघटकाज्निष्ठं वा तच्चानुनासिक्यवत्प्रतिज्ञागम्यम् । विनियोगश्च प्रायेणोत्तरत्रोपस्थितिः क चित्पूर्वत्रापि । कियद् दूरमधिकार इत्यत्रासति गमके व्याख्या नमेव शरणम् ।

किं च, स्वरितेनाधिकारगतिः । तेन "गोस्त्रियो" (पा०सू० १।२।४८) इत्यादौ स्त्र्यधिकारस्थप्रत्ययग्रहणमित्याद्याकरादवसेयम् एतेन 'व्याख्यानादेव निवृत्तिवदनुवृत्तिरपि भविष्यति, आकाङ्क्षा यान्तु सत्यामश्रुतकल्पनाया अन्याय्यत्वाच्छ्रुतापेक्षणस्य न्याय्यत्वा किं सूत्रेणेत्यपास्तम् । स्पष्टं चेदं भाष्ये ।

परनित्येति । परं विप्रतिषेधसूत्राद् बलवत् । नित्यं कृताकृत प्रसङ्गि तद्विपरीतमनित्यम् । तत्राक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनं युक्तमिति तस्य बलवत्त्वे बीजम् । अन्त र्-मध्ये-बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्ये ऽन्तर्भूतान्यङ्गानि निमि

---

*इत्थम्भूतलक्षणे तृतीयेति* । अत्र सूत्रे इत्यादिः । अधिकारत्वप्रा स्येदं स्वरितत्वलक्षणम् । *विनियोगः* । स्वीयसूत्रोत्तरसूत्रैकवाक्यत विवक्षितवाक्यार्थनिष्पादनम् । यत्र तु पूर्वत्र विनियोगस्तत्र पूर्वसूत्रैकवा क्यतया विवक्षितवाक्यार्थनिष्पादनम् । "रायोहलि" इत्यत्र "हलि" इ पदस्य यथा । *असति गमक इति* । यथा "प्राग्दीव्यत" इत्यस्य सत नाणः "तेन दीव्यति" इत्यतः प्राग्विनियोगः । यत्र तु न तथा तत्र क्ष्यानुसारिशिष्टकर्त्तृकव्याख्यानमेव ।

मुख्यसूत्रप्रयोजनमाह-*अधिकारगतिरिति* । अस्मिन्पक्षेऽधिका गतिरिति शब्दस्याधिककार्यज्ञानमित्यर्थः । तेन गौणाधारस्याप्यधिक णसञ्ज्ञा । यथासंख्येन सम्बन्धः । "गोस्त्रियोः" इति सूत्रे स्त्रीग्रहणेन स्त्र्य धिकारीयटाबादिग्रहणमित्येषा व्यवस्था सिध्यति । *एतेन* । किञ्चेत्य दिनाऽर्थान्तरकरणेन । *तत्कल्पनमिति* । अभावकल्पनमित्यर्थः । एव नित्येनानित्यस्य बाधे लाघवरूपा युक्तिः प्रमाणमितिफलितम् ।

बहिरङ्गपरिभाषां निरूपयितुं तद्घटकपदार्थानाह—*अन्तरिति* मध्यत्वस्य नियतावध्याकाङ्क्षत्वात्तच्छान्त्यर्थमाह-*बहिरङ्गेति* । शेषो रणेन व्याचष्टे-*अन्तर्भूतेति* । अङ्गशब्दस्य लोके शरीरावयववाचकत्वे

त्तानि यस्य तदन्तरङ्गम् । तदीयनिमित्तसमुदायाद्बाहिर्भूताङ्गकं बहिरङ्गम् । तस्य बलवत्त्वे बीजमाह—असिद्धमिति । इयञ्च "वाह ऊठ्" (पा०सू०६।२।१३२) सूत्रेण ज्ञापिता ।

यद्यपि प्रत्यङ्गवर्त्ती लोको दृश्यते । 'मनुष्यो ऽयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोति ततः सुहृदां ततः सम्बन्धिनाम्' इति न्यायमूलकत्वमस्या "अचः परस्मिन" (पा०सू०१।१।५७) इति

पि प्रकृते निमित्तपरत्वमित्याशयेनाह—*निमित्तानीति* । *इयञ्च वाह उठ्सूत्रेण ज्ञापितेति* । तत्रत्योठ्ग्रहणेन ज्ञापितेत्यर्थः । तथाहि—तस्मिन्सूत्रे ऊठ्ग्रहणाभावेपि सम्प्रसारणमात्रविधानेन लघूपधगुणे "वृद्धिरेचि" इति वृद्धौ 'विश्वौह' इत्यादिसिद्धौ तद्वैयर्थ्यं सिद्धमेव । सत्यां हि तस्यां बहिरङ्गसम्प्रसारणस्यासिद्धत्वाल्लघूपधगुणो न स्यादित्यूठ्ग्रहणं सफलम् ।

ननूठ्ग्रहणाभावे रूपासिद्ध्यभावेऽपि 'विश्वौह' इत्यादौ "ऊडिदम्" इति सूत्रेणोडादिभ्यः परा याऽसर्वनामस्थानविभक्तिस्सोदात्ता स्यादित्यर्थकेन विभक्त्युदात्तत्वन्न स्यात् । तस्मिन्सूत्रे ऊठस्थाने सम्प्रसारणग्रहणन्तु कर्त्तुमशक्यम् । 'यूनः' 'यूना' इत्यादावतिप्रसङ्गादिति चेन्न । "ऊडिदम्" इति सूत्रे "वूडिदम् इति पठित्वा स्थानसम्बन्धार्थकषष्ठ्या 'व उः' इति समासे, ततः वुश्च ऊठ् चेति द्वन्द्वेन सुवचत्वात् । वकारपाठफलं तु पृधातोः क्विपि 'पुरः पुरा' इत्यादौ तस्याः प्रवृत्तिः । न चैवमपि वप् धातोः क्विपि 'उप उपा' इत्यत्र प्राप्नोतीति वाच्यम् । ऊठ्साहचर्येण णन्ताङ्गोद्देश्यकस्य वोर्ग्रहणेनादोषात् । "ऊठ्युपधाग्रहणम्" इति वार्त्तिकेपि वूठ्युपधेति पाठ्यम् । न चैवमपि वेञः क्विपि सम्प्रसारणे उच्छब्दात्प्राप्नोतीति वाच्यम् । इणन्तेत्यस्य परिनिष्ठिते श्रूयमाणो य इण् तदन्तेत्यर्थात् ।

किञ्चैवं सति 'अक्षद्युवा' इत्यादौ स्वराप्राप्त्या "ऊठ्युपधाग्रहणम्" इति वार्तिकमनावश्यकम् । ऊठ् उदाहरणन्तु 'जूरः' 'जूरा' इत्यादि । अथवा "ऊडिदम्" इतिसूत्रानन्तरं 'वाह' इति सूत्रं कर्त्तव्यम् । यदि च हलादिविभक्तेरपि प्राप्नोतीत्युच्यते तदा "शतुरनुम" इति सूत्रानन्तरन्तथा पाठेन सामञ्जस्यात् । न चैवं सूत्रान्तरकरणे गौरवमिति वाच्यम् । अधिकपदाकरणेन साम्यात् ।

नन्वस्यां परिभाषायां ज्ञापकानुपयोगः । लोकन्यायेनैव सिद्धेरिति चेन्न । जातस्य बहिरङ्गस्यासिद्धत्वप्रतिपादनार्थमस्यावश्यकत्वात् । तदेतद्व्युत्पादयितुमाह—*यद्यपीति* । *प्रत्यङ्गवर्त्तीति* । अङ्गानां प्रत्यासन्नत्वात्प्रत्यासत्तिरूपगुणसम्बन्धादङ्गशब्दः प्रत्यासन्ने लाक्षणिकस्तेन वी·

भाष्ये उक्तं, तथापि तेन न्यायेन युगपत्प्राप्तिविषयतैव स्यात्। 'ज्ञापकेन तु सर्वविषयता बोध्यत' इति 'वाहऊठ्'सूत्रे कैयटे स्पष्टम्। अन्यथा वाहः संप्रसारणे पूर्वरूपे च कृते ण्याश्रये गुणे "वृद्धिरेचि" (पा०सू०६।१।८८) इति वृद्धौ 'प्रष्ठौह' इत्यादिसिद्धावूठ्विधानं व्यर्थं स्यात्। नाजानन्तर्यपरिभाषा तु नास्त्येवेति न 'अग्रजे इन्द्रम्' इत्यादौ दोष इति परिभाषेन्दुशेखरे विस्तरः।

अपवादस्तु वचनप्रामाण्याद् बलवान्। अकृतेति। न कृतो विशिष्ट ऊहस्तर्को निमित्तविनाशे ऽपि कार्यस्थितिरूपो, यथा दण्डविनाशे ऽपि घटस्थितिः, स यैस्ते इत्यर्थः स्तदाह—निमित्तमित्यादि।

---

प्लायामप्रतिशब्दस्याव्ययीभावः। *सर्वविषयतेति*। अन्तरङ्गे कर्त्तव्ये जातं तत्कालप्राप्तिकञ्चासिद्धमित्यर्थकल्पनेनेति भावः। एवञ्च सा परिभाषा पृथक् न कार्येति ध्वनितम्।

ननु बहिरङ्गान्तरङ्गयोरिति परिभाषा निरपवादा। असिद्धमिति परिभाषा तु'न जानन्तर्ये बहिष्ट्वप्रक्लृप्तिः'इत्येतदपवादसहितेति सर्वविषयत्वमस्या इत्यनुपपन्नमित्यत आह—*नाजानन्तर्यपरिभाषा त्विति*। "षत्वतुकोरसिद्धः" इति सूत्रे तुग्ग्रहणमस्याज्ञापकम्। तदुदाहरणम् 'अधीत्य, प्रेत्य' इति। तच्चासिद्धपरिभाषयैव सिध्यति। अन्तरङ्गे तुकि कर्त्तव्ये पदद्वयसम्बन्धिवर्णद्वयापेक्षस्यैकादेशस्यासिद्धत्वात्। नाजानन्तर्यपरिभाषास्वीकारे तु तुक्यन्तरङ्गेऽजानन्तर्याश्रयणेनासिद्धपरिभाषानिषेधे ल्यबुत्पत्तिपर्यन्तमसंहितयावस्थानाभावेन पूर्वमेवैकादेशे तुगर्थं तुग्ग्रहणञ्चरितार्थम्। परिभाषास्वीकारादेव 'अक्षद्यूः' इति सिध्यति। अन्यथाऽन्तरङ्गे यणि ऊठोऽसिद्धत्वाद्यण् न स्यात्। *नास्त्येवेति*। "षत्वतुको" इति सूत्रस्थतुग्ग्रहणमसिद्धपरिभाषाया अनित्यत्वे एव ज्ञापकमस्तु। एवञ्चासिद्धपरिभाषाया अप्रवृत्त्यैव सकलेष्टसिद्धौ सा नारब्धव्येति भावः।

*वचनप्रामाण्यादिति*। तच्चापवादत्वं द्विविधम्। येन नाप्राप्तिन्यायेन निरवकाशत्वेन वा। अधिकमन्यत्र स्पष्टम्। *अकृतेति*। कैयटादिसम्मतव्याख्यानमाह—*न कृत इति। विशब्दद्योत्यमर्थमाह—*विशिष्ट* इति। ऊहस्तर्क इत्येतद्विवृणवते। *निमित्तविनाशेऽपीति*। ऊहस्यान्यत्र ज्ञानरूपत्वेपि प्रकृते निश्चीयमानतादृशकार्यस्थितिरेव ऊहपदेन विवक्षितेति भावः। पाणिनिप्रोक्ताध्येतारो निमित्तविनाशसमानकालिककार्यस्थितिविषयकनिश्चयाभाववन्त इति फलितम्। एतेन 'निमित्तापाये नैमित्तिकस्याप्यपाय' इति फलितम्।

'तत्प्रयुक्तं कार्यजातमपि न कुर्वन्ति नोच्चारयन्तीत्यर्थ' इति कैयटादयः । अन्ये तु व्यूहो ऽन्तरङ्गशास्त्रं बहिरङ्गापोहनरूपत्वात् । तन्निमित्तविनाशं दृष्ट्वा पूर्वमपि न कुर्वन्तीत्यर्थ इत्याहुः । इयं परिभाषा निष्फला निर्मूलेति परिभाषेन्दुशेखरे निरूपितम् ।

इति परिभाषाप्रकरणम् ॥

## अच्संधिप्रकरणम् ।

**स्यादिति** । कार्यशब्दवादे इदम् । **संहितायां विषये इति** । कार्यिनिमित्तयोः संहितायां विषयभूतायामित्यर्थः । **स्थानत इति** । इदं यथासंख्यसूत्रे भाष्ये स्पष्टम् । जातिपक्षे यथासंख्येनापि निर्वाह

लाघवादाह-*अन्येत्विति* । *व्यूहोऽन्तरङ्गशास्त्रमिति* । प्रकृतस्य व्यूहपदस्याचारक्विबन्तप्रकृतिकाच्प्रत्ययान्तत्वात् । यथा लौकिकव्यूहस्य सैन्यरचनाविशेषस्य परबलनिवारकत्वं तथाऽन्तरङ्गशास्त्रमप्यस्मिन्व्याकरणे परिभाषाबलात् बलवत् । भाविनिमित्तविनाश इत्यध्याहारः । निमित्तश्चोपस्थितत्वादन्तरङ्गस्य गृह्यते । तथा च स्वनिमित्तविनाशसम्भावनासमानकालिकी याऽन्तरङ्गशास्त्रप्रवृत्तिस्तद्विषयकनिश्चयाभाववन्तः पाणिनीया इति फलितम् । अन्ये त्वित्यनेनास्यार्थस्य लोकाप्रसिद्धत्वमेवारुचिस्सूचिता । शेषमन्यत्र द्रष्टव्यम् ।

*इति परिभाषाप्रकरणमिति* प्राधान्येन सूत्रात्मकपरिभाषाणाम्प्रकरणं समाप्तमित्यर्थः । परनित्येत्यादि तु प्रासङ्गिकत्वेनोक्तमिति दिक् ।

इति परिभाषाप्रकरणम् ।

*इको यणचि* । ननु यण् स्यादिति व्याख्यानेन यण्कर्तृकं भवनं प्रतीयते तन्नोपपद्यते शब्दानान्नित्यत्वादत आह-*कार्यशब्देति* । "संहितायाम्" इति वैषयिकाधारे सप्तमी वाच्या । एवञ्च संहितायां विषयभूतायामिति पौनरुक्त्यादनुपपन्नमत आह-*कार्यिनिमित्तयोरिति* । संहितायाम्" इति सप्तम्यन्तपदप्रतीयमान एवार्थः स्पष्टत्वार्थं विवृत इति भावः । *इदं यथासंख्यसूत्र इति* । "यथासङ्ख्यमनुदेशः समानाम्" । किमु-

इति "स्थानेऽन्तरतम" सूत्रे भाष्ये स्पष्टम् । अनुनासिकस्थानेऽपि निरनुनासिक एव । विधीयमानत्वेन सवर्णाग्राहकत्वात् । गुणाभेदकत्वपक्षोऽपि न विधेयाण्विषये दीर्घादीनामिगादिपदैरुपस्थितये प्रत्याहारेषु जातिपक्ष एव इति 'अणुदित्सूत्रे' भाष्ये स्पष्टम् । अत एव सर्वतकारादीनां झल्त्वादिसिद्धिः "ल्वादिभ्य" इत्यादिनिर्देशादयश्च जात्याश्रयणे मानमिति दिक् ।

व्याकरणस्य साध्वनुशासनत्वन्तु शब्दनित्यतापक्षे शब्दानां सिद्धत्वेन शास्त्रवैयर्थ्यापत्त्या 'मृजिप्रसङ्गे मार्जिः साधुर्भवति' इत्यादिवृद्धिसञ्ज्ञासूत्रस्थभाष्यप्रामाण्येन 'यदिह परिनिष्ठितत्वेन ज्ञाप्यन्तत्साधु' इत्यर्थापत्तिकल्प्यवाक्येन बोध्यम् । कार्यशब्दवादे तु पूर्वभाष्योन्नीतानादितात्पर्यवशात् तत्कल्पनं बोध्यम् । एतेन स्थानप्रमाणोभयान्तरतमे ह्रस्वेकारे चरितार्थो यण् दीर्घे कथं स्यादिसपास्तम् । स्थानत आन्तर्यस्य सर्वतो बलवत्त्वात् "स्थानेऽन्तरतमे" इति सप्तम्यन्तपाठ·

---

दाहरणम् ? "इको यणचि" 'दध्यत्र' 'मध्वत्र' । नैतदस्ति । स्थानेन्तरतमेनाप्येतत् सिद्धम्" इत्युक्तम् ।

ननु "स्थानेऽन्तरतम" सूत्रे यथासङ्ख्येनाप्येतत्सिद्धमित्युक्तं तच्चानुपपन्नम् । यण्शब्दबोध्याः सप्त, इक्शब्दवाच्याः षट्षष्टिः, इति वैषम्यादित्यत आह-*जाति पक्षे इति* । ननु यदि "इको यणचि" इतिसूत्रविषयेऽन्तरतमपरिभाषया निर्वाहस्तदा "स्वौजस्" इत्यत्रानुनासिकोकारस्य वकारोऽनुनासिकः प्राप्नोतीत्यत आह-*अनुनासिकेति* । गुणाभेदकत्वपक्षे तर्हि प्राप्नोतीत्यत आह-*गुणाभेदकत्व इति* । लक्षणां कटाक्षयन्नाह-*दीर्घादीनामिति* । *अत एव* । जातिपक्षाश्रयणादेव । जातिपक्षे मानमप्याह-*ल्वादिभ्य इति* । तत्फलम् 'अवात्ताम्' इत्यत्र सलोपः । सूत्रन्तु 'अभित्था' इत्यत्र चरितार्थम् ।

ननु यदीत्थं विधायकसूत्रार्थस्तदाऽस्य शास्त्रस्य साध्वनुशासनत्वभङ्ग इत्यत आह-*व्याकरणस्येति* । करणल्युटा व्याकरणमत्र सूत्रम् । *परिनिष्ठितेन* । अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तेन समुदायेन *ज्ञाप्यम्* । इगादीनामुच्चारणप्रसङ्गे यणादि । *अर्थापत्तीति* तथा च सोऽत्र प्रमाणमिति भावः । मूलोक्तसप्तम्यन्तपक्षेऽपि साध्वनुशासनत्वमुपपादयति-*कार्यशब्दवाद इत्यादिना* । *एतेनेति* जातिपक्षाश्रयणेनैवेत्यर्थः । भवदुक्तं सप्तम्यन्तपाठे सङ्गच्छते तदेव नेत्यभिप्रायेण दोषान्तरमाह-*स्थानेऽन्तरतम इति* । प्रथमान्तपाठे स्थान्यनुरोधेनादेशसङ्ख्या

स्य चैतद्दूषणेनैव भाष्ये दूषितत्वादिति भावः ।

चः (पा०सू०८।४।४७) विध्यर्थो ध्वनितश्चेद् 'एओङ्'सूत्रे भाष्ये तदाह–द्वे वा स्त इति । सूत्रकृता शाकल्यमते सर्वत्र द्वित्वाभावोक्तेरिति भावः । अवसाने द्वित्वसिद्धये ऽनचीति प्रसज्यप्रतिषेधस्तदाह–न त्वचीति । इदं द्वित्वं षाष्ठद्वित्ववद् द्विःप्रयोगे एव । यर

चः । सप्तम्यन्तपाठे तु स्थानिसङ्कोचः । स चायुक्त इति भावः ।

*चो विध्यर्थ इति* । विधेरपि शब्दत्वसूचक इत्यर्थः । *एओङ् सूत्र इति* । एओङ् सूत्रं यस्मिन्, आन्हिकमन्यपदार्थः । तेन तस्मिन्नान्हिके 'हयवरट्' सूत्र इत्यर्थः । तत्र हि 'अयोगवाहानामाविशेषेण पाठः कर्त्तव्य इत्यस्य प्रयोजनकथनावसरे "संयोगोपधासञ्ज्ञाऽलोन्त्यविधिद्विर्वचनस्थानिवद्भावप्रतिषेधाः" इत्येतद्घटकद्विर्वचनस्य प्रयोजननिरुपणावसरे "उरः कः" "उरः पः" अनचि च "अच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं सिद्धम्भवति" इत्युक्तम् । *द्वेवा स्त इतीति* । "यरोऽनुनासिक" इति सूत्राद्वाग्रहणमनुवर्तत इति भावः । तत्र मानमाह–*सूत्रकृतेति* । निषेधविकल्पे विधिविकल्पः फलतीति भावः । *अवसान इति* । 'वाक्क् वाक्' इति भाष्योदाहृते । अन्यथा हलीत्येव वदेत् । *द्विः प्रयोग एवेति* यथा षाष्ठं द्विर्वचनं द्विः प्रयोगरूपं न त्वादेशरूपं तथा आष्टमिकमिदमपीत्यर्थः ।

ननु षाष्ठं द्विर्वचनमादेशरूपमेवास्त्विति चेन्न । स्थाने द्विर्वचने 'षष्ठीस्थानेयोगे' ति परिभाषया कल्पिते 'आटिटत्' आशिशद्' इत्यादौ वस्नसादाविव प्रकृतिप्रत्ययविभागसंमोहेन "णेरनिटि" इति णिलोपानापत्तेः । किञ्च "जिघांसति" इत्यत्र सनस्सकारेण विशिष्टस्य द्विर्वचने कुत्वन्न स्यात् । एतस्यापि द्विर्वचनस्य स्थाने द्विर्वचनत्वे 'स्थाली स्थाता' 'वत्सर' इत्यादौ सकारस्य तकारस्य चैकस्य सद्वयात्मकतद्वयात्मकादेशे द्वयोर्भेदस्य वस्नसादाविवात्राप्यबुद्धौ प्रत्येकं शरः परत्वबुद्ध्यसम्भवेन "शरः खय" इति द्विर्वचनन्न स्यात् ।

यदि च 'न च मात्रिकं व्यञ्जनमस्ति' इति भाष्योक्तेर्नायं मात्रिक एकवर्णात्मकादेशः, किं तर्हि ? वर्णद्वयात्मक एवेति न पूर्वोक्तदोष इति मन्यते । तथापि 'दधिस्यति' 'मधुस्यति' इत्यादौ क्यचि "सर्वप्रातिपदिकेभ्यः क्यचि लालसायाम्" इत्यनेन सुगागमे "अनचि च" इति द्विर्वचनादेशे "आदेशप्रत्यययोः" इति षत्वापत्तेः । सकारोच्चारणं 'लवणस्यति' 'क्षीरस्यति' इत्यत्र चरितार्थम् ।

यदि तु द्वित्वासिद्धत्वान्नायं दोष इत्युच्यते तदा साधकान्तरमाह–

इत्यादेरध्याहृतोच्चारणक्रियानिरूपितकर्मषष्ठीत्वस्यौचित्यात्। इति घस्येति। न तु द्वित्वं पूर्वघस्थाने जश्त्वानिष्पन्नदस्यापि "लक्ष्ये लक्षणस्य" इति न्यायात्। विकारान्यत्वेन न लक्ष्यभेद इत्यन्यत्र प्रपञ्चितम्।

स्थान्यादेशयोर्भेदात् "स्वं रूपम्" इत्युक्तेश्च तत्स्थानापन्नस्तद्धर्मं लभते। यथा 'गुरोः स्थाने शिष्यो याज्यकुलानि गत्वा ऽग्रासनादीनि लभते' इति लोकन्यायेन स्थानिकार्यमादेशे न स्यादत स्थानिवत्सूत्रम्। न तु स्थान्यलेति। (१)प्रत्यासत्तिन्यायलब्धमिदम्।

आदेशस्य स्थानिभूतो यो ऽल् तत्स्थानिसंबन्धी च यो ऽल्

*यर इत्यादेरिति*। न च स्थाने द्विर्वचनपक्षस्यापि स्थानपदाध्याहारे तन्निरूपितसम्बन्धार्थकत्वं षष्ठ्याः कल्पयित्वोपपत्तिः कार्या, एवञ्चोभयत्राप्यध्याहारोऽविशिष्ट इति वाच्यम्। द्विःप्रयोगपक्षस्य "उपपदविभक्तेः" इति परिभाषानुगृहीतत्वात्। *न लक्ष्यभेद इति*। यथा 'उदवोढाम्' इत्यत्र उद् वह् स् तामिति स्थिते सिज्लोपादेरसिद्धत्वाद्धलन्तलक्षणायां वृद्धौ "सहिवहोरोत्" इत्योत्त्वे "लक्ष्ये लक्षणस्य" इतिन्यायेन पुनर्वृद्धिर्नेति "सिचि वृद्धिः" इति सूत्रे भाष्ये उक्तम्।

स्थानिवत्सूत्रारम्भस्य प्रयोजनमाह—*स्थान्यादेशयोरिति*। अत्र भेदादित्यस्य स्थानिकार्यमादेशे न स्यादित्यनेनान्वयः। 'तत्स्थानापन्न' इति लोकन्यायेन सिद्धिः स्यादत आह—*स्वंरूपमित्युक्तेरिति*। *प्रत्यासत्तीति*। आदेशः स्थानिवदितिवाक्यजन्यशाब्दबोधे स्थानिनो विषयत्वेनैवानलविधावित्यत्रालपदार्थविशेषणभूतसम्बन्ध्याकाङ्क्षया निवृत्तावनुस्थितकल्पनायाम्मानाभाव इति भावः। यद्यपि तथा आदेशोऽप्युपस्थितस्तथापि स नालविशेषणं "कष्टाय क्रमणे" इति निर्देशात्।

*आदेशस्य स्थानिभूत इति*। अत्राप्यादेशस्यैव स्थानी वाक्यार्थघटक इत्यत्र प्रत्यासत्तिरेव प्रयोजिका। अनल्विधावित्यत्र च प्रसज्य

(१) प्रत्यासत्तिः सामीप्यम्। अत्रायमभिसन्धिः। पूर्ववाक्ये श्रूयमाणं पदं उत्तरवाक्ये च आकाङ्क्षापूरकं चेत् तदा तस्यैव समीपस्थस्यानुषङ्गः कर्तव्यः। अनुषङ्गः परामर्शः। तथाच भगवता जैमिनिना "अनुषंगो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात्" इति सूत्रे प्रतिपादितम्। तत्राहि—'याते अग्ने अयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा उग्रं वचोऽपावधीत् त्वेषं वचोऽपावधीत् स्वाहा'। इत्यनन्तरं "याते अग्ने रजाशया, याते ऽग्ने हराशया" इति मंत्रद्वयम्। तत्र पूर्वमन्त्रपठितस्य तनूर्वर्षिष्ठेति पदस्योत्तरमंत्रेऽनुषङ्गः कर्तव्यो न वेति संशये 'वैदिकमंत्राणामाकांक्षा वैदिकैः पूर्वपठितमंत्रैः पूर्यते चेत् तेनैव पूरणीया इति सिद्धान्तितम्। तन्मूलकोऽयं न्यायः।

तद्वृत्ति धर्माश्रये नेत्यर्थः । अत एव रेफस्थानिकविसर्गस्य रुशब्दत्वं न स्थानिवत्त्वेनेति "भोभगो" (पा०सू०८।३।१७) इत्यत्र भाष्ये स्पष्टम् । ऋधातोर्द्वित्वेऽभ्यासस्य 'उरद्' अत्त्वेऽरित्यस्य हलादिः शेषस्तु अरित्यस्य पुनः "पूर्वोऽभ्यासः" (पा०सू०६।१।४) इत्यनेनाभ्यासत्वात् । तस्यापि द्विरुक्तधातुपूर्वभागत्वात् । प्रक्रियाज्ञानवतां तथा ज्ञानस्य सुलभत्वात् । अत एव 'धिन्वन्ति' इत्यादावित्वण् न । उकारवृत्त्यार्द्धधातुकत्वस्य वकारेऽनतिदेशात् ।

यत्त्वत्रेण्निवृत्तये स्वविधावपि स्थानिवत्त्वम् "अपरविधौ" इति न्यासेन साधितं भाष्ये । सा त्वेकदेश्युक्तिः । असिद्धवत्सूत्रेण सिद्धस्य 'आयन्' 'आसन्' इत्यादेस्तत्फलत्वेनोपन्यासात् । अस्यापि "अचः

---

प्रतिषेध एव । न पर्युदासः, तथा सति 'व्यूढोरस्केन' इत्यादौ स्थान्यल्भिन्नकवर्गाद्याश्रयत्वेन णत्वापत्तेः । स्थान्यलाश्रयविधिभिन्नविधावित्यपि नार्थः । तथा सति 'बभूविव' इत्यत्रेड्विधौ बलादित्वं निमित्ततावच्छेदकत्वेनाश्रितन्तच्च स्थानिसम्बन्धिवकारघटितमिति स्थानिवद्भावो न स्यात् । प्रसज्यप्रतिषेधे यद्धर्मवैकल्यादुपदेशाप्रवृत्तौ स्थानिवद्भावः प्रार्थ्यते तस्य धर्मस्य स्थानिस्थान्यवयवान्यतरावृत्तित्व एव निषेधप्रवृत्तेः । प्रकृते च, वलादित्ववैकल्यप्रयुक्ता नोपदेशाप्रवृत्तिः, किन्त्वार्द्धधातुकत्ववैकल्यप्रयुक्ता, तच्च न तादृशमिति भावः ।

यदि तु यद्रूपवैकल्यप्रयुक्तोपदेशाप्रवृत्तिः प्रसज्यते स्थानिस्थान्यवयवान्यतरावृत्तिभिन्नतद्धर्माश्रयविधौ स्थानिवद्भावो भवतीत्यर्थ आश्रीयते तर्हि पर्युदासेऽपि न दोष इत्यवधेयम् । स्थानिभूत इत्यर्थनिवेशे मानमाह—*अत एवेति* । आद्यार्थनिवेशादेवेत्यर्थः ।

नन्वेवम् 'अर' इत्यत्र ऋधातोर्द्वित्वेऽभ्याससंज्ञायामुरदत्वे रपरे कृतेऽरित्यस्याभ्यासत्वमलभ्यं तस्य स्थान्यल्वृत्तिधर्मत्वात्, एवञ्च हलादिश्शेषाप्राप्तिरत आह—*ऋधातोरिति* । *पुनरिति* । सञ्ज्ञायाः कार्यार्थत्वात्कार्यस्य च भेदे तत्तत्प्रयोजकसञ्ज्ञाया अपि भेदः प्रधानानुरोधेन कल्प्यते इति भावः । *अत एव* । आद्यार्थनिवेशादेव । *यत्त्वत्रेण्निवृत्तय इति* । धिन्वन्तीत्यत्रेत्यर्थः । अपरविधावित्यस्य स्थानिभूतादचः परस्य विधौ नेत्यर्थः । तेन 'नैधेय' इत्यस्य सिद्धिः । अस्या एकदेश्युक्तित्वमुपपादयति—*असिद्धवत्सूत्रेणेति* । *आयन्नासन्निति* । अत्र स्वविधावपि स्थानिवद्भावादजादित्वमाश्रित्याट्सिद्धिः । प्रकारान्तरेण सिद्धत्वमेवैकदेश्युक्तित्वसाधकम् ।

पूर्वत्वविज्ञानात्" इति वार्त्तिके पञ्चमीसमासेन सिद्धेः कैयटेनोक्तत्वा-च्च । 'प्रदीव्य' इत्यादौ च वलादिलक्षण इण्न । स्थान्यलित्युक्तेः 'बभू-विव' इत्यादौ वलादिलक्षणेट्सिद्धिः । न हि तत्र वलादित्वं स्थानि-तो लभ्यं । किंतु स्वाश्रयमेव ।

यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशो मृग्यते तस्य निमि-त्तस्य स्थान्यल्साधारणधर्मत्व एव निषेधप्रवृत्तेः । प्रकृते चाऽऽर्द्धधा-

---

ननु तस्यान्यथासिद्धत्वेपि 'धिन्वन्ति' इत्यस्य सिद्धिरेवैतादृशन्यास-कार्या भविष्यतीत्यत आह-*अस्यापीति* । धिन्वन्तीत्यस्यापीत्यर्थः । *इतिवार्तिक इति* । "अचः परस्मिन्" इतिसूत्रघटकपूर्वशब्दार्थस्यावधि-साकाङ्क्षत्वात्तदाकाङ्क्षाशान्त्यर्थमिदं वार्तिकं । 'वैयाकरण' इत्यादावाप्राप्त्यर्थमिति च बोध्यम् । स्थान्यवयवाल्निवेशस्य प्रयोजनमाह-*प्रदीव्ये-त्यादाविति* । तत्रापि स्थानिविशेषणप्रयोजनमाह-*स्थान्यलीति ।

एवञ्च यत्फलितम्प्रत्यासत्त्या शेषपूरणेन च तदाह-*यन्निमित्तेत्या-दि* । *स्थान्यल्साधारणेति* ।

अत्र स्थान्यल्साधारणेत्यस्य स्थान्यलितरावृत्तित्वे सति स्थान्यल्वृ-त्तित्वमित्यर्थोऽसाधारण्यनिवेशात्प्रतीयते, परन्त्वयन्न युक्तः । 'धिन्वन्ति' इत्यत्र वकारस्थान्युकारवृत्त्यार्द्धधातुकत्वस्य स्थान्यलितरस्यादिवृत्ति-तया विशेषणाभावेन विशिष्टाभावस्य सत्त्वात्स्थानिवद्भावापत्तेः । किन्तु स्थान्यल्वृत्तित्वमात्रं विवक्षितम् तथा चार्द्धधातुकत्वस्य स्थान्यका-वृत्तित्वेन स्थानिवद्भावप्रसक्तिः । अत एव "भोभगो अघो" इति सूत्र-भाष्योक्तरेफवृत्तिरुत्वस्य विसर्गेऽनतिदेशः साधु सङ्गच्छते ।

नन्वेवम् अतृणेट्'अचकात्' 'अचकाः' इत्यादौ सार्वधातुकत्वतिप्त्वसि-प्त्वादिधर्मावच्छिन्ननिमित्तका इमादयो न सिध्यन्ति । तर्षां स्थान्यल्वृत्तिधर्मा-वच्छिन्ननिमित्तकत्वादिति । प्रत्ययलक्षणसूत्रस्य विधायकत्वमेव स्यादिति भाष्योक्तनियमार्थत्वपक्षासङ्गतिरिति चेन्न । यथा 'अग्रहीत्' इत्यस्य सि-द्धये "विशिष्टं ह्येषोऽनलमाश्रयते इटन्नाम" इतिभाष्ये उक्तन्तेनैव न्याये-नैतेषां सिद्धिसम्भवात् । तथाहि । स्थानिस्थान्यवयवाल्वृत्तिधर्मे आदेश-विधौ उपात्तत्वविशेषणन्देयम् । एवञ्चादेशविधौ स्थानितावच्छेदकत्वेनोपा-त्तो यस्थानिस्थान्यवयवान्यतरालमात्रवृत्तिधर्मस्तत्समानाधिकरणधर्मा-वच्छिन्ननिमित्तके विधौ स्थानिवत्वञ्च "ग्रहोऽलिटि दीर्घ" इति विधायु-पात्तं स्थानितावच्छेदकमिट्त्वन्तच्च नालमात्रवृत्तीति स्थानिवत्त्वसङ्ग-तिः । धिन्वन्ति' इत्यत्रादेशस्य यणो विधौ स्थानितावच्छेदकत्वेनोपा-त्तमिक्त्वं तच्च स्थान्यलमात्रवृत्तीति तत्समानाधिकरणार्द्धधातुकत्वाव-

तुकत्ववैकल्यप्रयुक्ताऽप्राप्ति र्न तत्स्थान्यल्साधारणं, यच्च तादृशत्वत्वघ-

च्छिन्नोद्देश्यक इण्न।

स्थानितावच्छेदकत्वेनोपात्तश्च,उद्देश्यबोधकशब्दजन्योपस्थितिविषयता-वच्छेदकतापर्य्याप्त्यधिकरणत्वम्। एवञ्च हल्ङ्याबादिलोपे न केवलं हल्त्व-मेवोद्देश्यतावच्छेदकतापर्य्याप्त्यधिकरणं, किन्तु सुतिस्यभेदविशिष्टहल्त्वं, तन्निष्ठाचोद्देश्यतावच्छेदकताख्या विषयता नाल्मात्रवृत्तितावच्छेदक-धर्मनिष्ठावच्छेदकतापर्याप्त्यवच्छेदकधर्मपर्याप्तावच्छेदकताकेति तेषु निषे-धाप्रवृत्त्या स्थानिवद्भावेन तत्तत्कार्यसिद्धौ प्रत्ययलक्षणसूत्रस्य नियमार्थ-त्वसङ्गतिः। अत्र हल्ङ्याबादिलोपे कार्ये उद्देश्यतावच्छेदकतयोपात्तं सुति-स्यभेदविशिष्टहल्त्वन्तन्निष्ठावच्छेदकतापर्याप्त्यवच्छेदकं विशिष्टहल्त्वं त-च्चात्र न, तादृशाल्मात्रवृत्तितावच्छेदकतापर्याप्त्यवच्छेदकमिति। अग्र-हीदित्यत्र च स्थानितावच्छेदकतापर्याप्त्यवच्छेदकमिट्त्वं तच्च नाल्मात्रवृ-त्तितावच्छेदकतापर्याप्त्यवच्छेदकमिति स्थानिवद्भावानिर्वाहः।

नचैवमपि 'वृक्षः' 'प्लक्ष' इत्यत्र विसर्गविधावुद्देश्यतावच्छेदकतायो-पात्तस्य रुत्वस्याल्वृत्तितया तत्समानाधिकरणसुप्त्वावच्छिन्नोद्देश्यकं प-दत्वन्न स्यादिति वाच्यम्। पदसञ्ज्ञायां यथोद्देशपक्षस्यैवाश्रयणेन रुत्वा-त्पूर्वं जायमानपदत्वस्य समुदायनिष्ठस्य स्थानिवद्भावेन विशिष्टे बुद्धिस-म्भवात्। न च'साम्नी' 'लोम्नी' इमे,इत्यत्र शयादेशस्य स्थान्यौकारनिष्ठस्वा-दित्वस्य शयादेशेऽतिदेशासम्भवेन भत्वाभावात् "विभाषा ङिश्योः"इत्य-ल्लोपः द्विवचनत्वस्यानतिदेशात् प्रगृह्यसञ्ज्ञा च न स्यादिति वाच्यम्। ङान्तसञ्ज्ञाकरणेन "औङ आप" इतिसूत्रजन्यबोधीयोद्देश्यतायामिट्त्व-वदौङ्त्वावच्छिन्नत्वस्वीकारात्।

ननु "घेर्ङिति" इति गुणविधावुपात्तं स्थानितावच्छेदकं घित्वन्तच्च स्थान्यल्वृत्तीति स्थानिवद्भावासम्भवेन क्रन्मेजन्तसूत्रस्थभाष्यविरोध इति चेन्न। तदन्तस्य घिसञ्ज्ञेति पक्षाभिप्रायेण तदुपपत्तेः। एवमेव 'कुम्भकारे-भ्य' इत्यत्राप्यादेशविधावुपात्तस्य स्थानितावच्छेदकस्याऽत्वस्यापि इट्त्व-तौल्यम्भविष्यति। तदेतदुक्तं'विशिष्टं ह्येषोऽनलमाश्रयते इट्नाम'इति। अस्य व्याख्यावसरे भाष्यप्रदीपोद्योते दीर्घ इड्वदित्येवातिदेशकल्पनायां स्थानि-तावच्छेदकं च शास्त्रोपात्तरूपमेव तच्च नाल्रूपमिति इट् इत्यादि न स्थान्यल्त्ववृत्तिधर्माश्रयम्। एवञ्च यत्र शास्त्रे विशेष्यतया विशेषणतया वा आदेशस्थानिभूतो योऽल् तत्सम्बन्धी च योऽल् तन्मात्रवृत्तिधर्माश्रय-णन्तादृशो विधौ हि निषेधः। अत्र च शब्दतो विशिष्टमेवानलमाश्रयते वला-देरित्यत्र च शब्दतो विशिष्टमलमिति भाव, इति एतदाशय उक्तः।

न च स्थानितावच्छेदके उपात्तत्वविशेषणदाने प्राचीनोक्तासाधार-

टितं वलादित्वं न तद्वैकल्यप्रयुक्ता ऽप्राप्तिरिति बोद्ध्यम् । प्रत्यासत्त्या च शास्त्रीयकार्ये एव स्थानिवत्त्वं । तेन नायकासिद्धिः ।

प्राधान्यात्कार्यातिदेशो ऽयम् । शास्त्रातिदेशस्तु कार्यातिदेशाद्भिन्नरूपः । तस्यापि कार्यफलकत्वादिति तृज्वत्सूत्रे कैयटः । भाष्येऽपि "तत्राऽङ्गशास्त्रातिदेशात्सिद्धमाङ्गं यत्कार्यं तदतिदिश्यते" इत्युक्त्या तयोरभिन्नरूपत्वं सूचितम् । तत्रानपेक्षितार्थसन्निधानस्तत्तन्निमित्तरू-

ण्यनिवेशात्को विशेष इति वाच्यम् । स्थानितावच्छेदकधर्मस्योपस्थिततया तस्मिन्नुपात्तत्वविशेषणदानापेक्षयाऽसाधारण्यनिवेशे ऽनुपस्थितिकल्पनायां गौरवस्य स्पष्टत्वात् । न चैवं व्याख्यानेऽपि मात्रपदस्य निवेशेऽसाधारण्यनिवेशकर्तृमतादविशेष इति वाच्यम् । आधेयत्व स्वनिष्ठाल्मात्रवृत्त्युपात्तधर्मपर्याप्तावच्छेदकताकविषयतासामानाधिकरण्योभयसम्बन्धेन तादृशान्यतरविशिष्टो यो धर्मस्तद्धर्मसमानाधिकरणधर्म्मावच्छिन्नोद्देश्यके विधौ स्थानिवत्त्वन्नेत्यर्थः । एतादृशोभयसम्बन्धेन वैशिष्ट्यनिवेशसूचनाय यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशो मृग्यते तस्य निमित्तस्य स्थान्यलसाधारणधर्मत्व एव निषेधप्रवृत्तेरित्यत्रासाधारणेत्युक्तम् । नतु तस्य विशेषणत्वाभिप्रायेण ।

अणुदित्सूत्रस्थभाष्यप्रामाण्येनोद्देश्यत्वविधेयत्वाख्यविषयतया बोधविषयताया अनुबन्धविनिर्मुक्ते स्वीकारेऽपि सानुबन्धकानिर्देशे स्थानित्वादेशत्वयोरनुबन्धविशिष्टे सूत्रोपात्ते स्वीकारात् । अत एव ङेर्यादेशस्य सुप्त्वादित्युक्तिसङ्गतिः । अल्मात्रवृत्तित्वञ्च येन सम्बन्धेन स्थानितावच्छेदकत्वन्तेन सम्बन्धेन विवक्षितम् । एवञ्च घ्यादिसञ्ज्ञया यत्र सञ्ज्ञिनः स्थानित्वं बोध्यते तत्र तादात्म्येन संज्ञाया एवावच्छेदकत्वे, तेन सम्बन्धेन च तस्यास्स्वस्वरूपेणापि सम्बन्धितया स्वस्वरूपस्य चानल्त्वेन स्थानिनिष्ठविषयताया अल्मात्रवृत्तिधर्मपर्याप्तावच्छेदकताकत्वाभावः स्फुट एव । एवमेवाच्छब्देनोपादाने "बहुवचने झल्येत्" इत्यादावपि एतत्कल्पनायां क्न्मेजन्तसूत्रस्थम् 'आधये, चिकीर्षवे, कुम्भकारेभ्य,' इति प्रयोगेष्वतिव्याप्तिप्रदर्शनपरम्भाष्यमेव मानमिति भाष्यतत्त्वविदायाशय इति दिक् ।

ननु स्थानिवद्भावस्वीकारे 'नायक' इत्यत्राकादेशस्य स्थानिवद्भावेन हलादित्वादायादेशो न स्यादत आह-* प्रत्यासत्त्येति * आयादेशप्रतिबन्धस्तु न शास्त्रीय इति भावः । * प्राधान्यादिति * सर्वातिदेशानां कार्यार्थत्वादिति भावः । शास्त्रातिदेशस्य कार्यातिदेशादभिन्नरूपत्वे साधकमाह-* भाष्येऽपीति * । ननु कार्यातिदेशस्वीकारे इदमेव कार्यसाधकमिति लभ्यते । एवं सति यादेशस्य स्थानिवद्भावेन सुप्त्वात् "सुपि च"

पकार्यव्यवहार एवानेन । कार्यं तु स्वशास्त्रेणैवेति। अत एव 'रामाय' इत्यादौ स्थानिवत्त्वेन सुप्त्वात् "सुपि च" (पा०सू०७।३।१०२) इति दीर्घः सङ्गच्छते । 'परिवीः' इत्यादौ परत्वाद् दीर्घ इति च सङ्गच्छते ।

यद्वा किंचिन्निमित्तवैकल्ये ऽपि दीर्घादिकार्यमनेन क्रियते । तच्च कार्यं किम् ? इत्याकाङ्क्षायां तत्स्वरूपनिर्णयस्य विधिशास्त्रमूलकत्वेन तद्देशेनैव परशास्त्रविहितत्वरूपं परत्वं तेषां बोद्ध्यम् । एतदेवाभिप्रेत्य "अतिदिश्यमानकार्याणामुपदेश एव देश" इत्यभियुक्ताः ।

अत्राद्यपक्ष एव भाष्यसंमतः । अत एव "स्थान्यल्विधिप्रतिषेधे कुरुवधपिबां प्रतिषेधो वक्तव्य" इत्येतदुपपादनावसरे "स्थानिवद्भावादङ्गसंज्ञा स्वाश्रयं च लघूपधत्वादि तत्र लघूपधगुणादिः प्राप्ने-

---

इति दीर्घ इति ग्रन्थानामसङ्गतिरत आह * तत्रानपेक्षितेति * यथा सुप्त्वव्यवहारे स्वादिपान्तसमुदायघटकत्वन्निमित्तं तस्य यादेशेऽभावेपि अनेनातिदेशेन सुप्त्वबुद्धौ तादृशव्यवहारो भवति, पश्चात्स्वनिमित्तसद्भाववुद्ध्या "सुपि च" इति शास्त्रं प्रवर्तते तथा सर्वत्र ज्ञेयमिति ।

* परिवीरित्यादाविति* । अत्र व्येञः क्विपि सम्प्रसारणे कृते स्थानिवद्भावेनैव तुग्दीर्घत्वयोः प्राप्तौ स्थानिवत्सूत्रस्यैवोभयविधायकत्वे तुकः परत्वात् "हल" इति दीर्घ इति व्यवस्था न स्यादिति भावः । पक्षान्तरमाह-* यद्वेति * *किञ्चिन्निमित्तवैकल्येपीति* यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तवैकल्येऽपीत्यर्थः । आदेशः स्थानिवत्कार्यं प्रवर्त्तयतीति सूत्रार्थात् । ततः किं कार्यमित्यःकाङ्क्षा, ततो विधिशास्त्रपर्यालोचनम्, ततस्तत्कार्यनिर्णय इति यद्देशस्थितकार्यस्वरूपनिश्चयस्तद्देशीयपरत्वस्य विप्रतिषेधशास्त्रप्रवृत्तिनियामकत्वमिति भावः । *एतदेव * पूर्वोक्तक्रममेव । * उत्पत्तिदेशः * उत्पत्तिमन्निश्चयविषयकार्यबोधकशब्दघटितसूत्राधिकरणदेशः । क चित्तूपदेशदेश इति पाठः । स तु सुगम एव । *अत्र* ।अनयोर्मध्ये । *अत एव* आद्यपक्षस्यैतत्सूत्रभाष्यसम्मतत्वादेव ।

*स्थान्यल्विधिप्रतिषेध इति* । तत्र हि स्थान्यल्विधिरूपे कार्ये प्रतिषेध आहोस्विद् अल्मात्राश्रयकार्ये इति सन्दिह्यैवमुक्तम् । अत्र लघूपधत्वादीत्यादिनाऽदुपधत्वपरिग्रहः । लघूपधगुणादिरित्यत्रादिना वृद्धेः परिग्रहः । अत्र लघूपधगुणादीत्येवोक्तम् न त्वनेनातिदेशेनेति । तेनाद्यपक्षस्य भाष्यसमतत्वं लभ्यते । पूर्वत्र किञ्चिन्निमित्तवैकल्येपीत्युक्तं तत्र यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तद्भिन्नस्यापि कस्यचिदग्रहणशंकावारणार्थं-

ति" इत्यादिभाष्योक्तेरिति बोध्यम् । एवं यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तकत्वमतिदेशस्यापि । अत एवेष्ठवद्भावेनातिदिष्टभत्वस्य वर्णाश्रयत्वमित्यादिव्यवहारः । सर्वातिदेशेष्विदं तुल्यम् । यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तं शास्त्रीयमेव । प्रत्यासत्तेः ।

स्थानिवदित्युक्तेः सम्बन्धिशब्दमहिम्नैवाऽऽदेशलाभे आदेशग्रहणं श्रौतस्थान्यादेशभावस्यैव ग्रहणमिति शङ्कावारणद्वारा 'एरुः' इत्यादौ शब्दानित्यत्ववारणाय "सर्वे सर्वपदादेशा" इति न्यायेन कल्प्यमानस्य 'तेस्तुः' इत्यानुमानिकादेशस्य सङ्ग्रहार्थम् । तेन 'पचतु' इत्यादेः पदत्वसिद्धिरिति भाष्ये स्पष्टम् ।

ननु तोस्तित्वमपि छिन्नपुच्छे शुनि श्वत्वव्यवहारवल्लोकन्यायेनैवसिद्धम् । तदुक्तं "प्राग्दीव्यतोण्" (पा०सू०४।१।८३) इति सूत्रे भाष्ये 'दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिदम्' इत्युक्त्वा 'किमर्थं विकृतनिर्देश ? एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषा 'एकदेशविकृतमनन्यवदिति' अत एवात्र विकारोऽशास्त्रीयोऽपि । अत एव आयसशब्दादणणन्ताद् द्विवचने 'आयसौ' इत्यत्र वृद्धौ कृतायां

---

माह-*एवं यन्निमित्तेति*। एवम् पूर्वोक्तवत् । *सर्वनिमित्तकत्वमिति*। तेन 'सर्वस्मिन्' इत्यत्र यञादित्वाभावाद्दीर्घो न । अन्यथा किञ्चित्पदे यञादित्वस्यापि ग्रहणे स स्यादिति भावः ।

*अत एव* । तादृशसर्वनिमित्तकत्वादेव *इष्ठवद्भावेनेति* । अनेनेष्ठत्वमेवातिदिश्यते । भत्वं तु "यचि भम्" इत्यनेन । *वर्णाश्रयत्वमिति* । तेन सुबन्ताण्णिाजिति पक्षेऽन्तर्वर्तिसुपा यत्पदत्वन्तस्य णिलोपे जातेऽपि प्रत्ययलक्षणेन प्राप्तं यद्भत्वन्तेन बाधो नेति मनोरमोक्तं संगच्छते । प्रकृतसूत्रविषयेऽप्याह-*सर्वातिदेश इति* । तेन 'रामस्य' इत्यादौ न दीर्घः । *शास्त्रीयमेवेति* । शास्त्रबोधमेवेत्यर्थः । तेन वयादेशे स्थानिवद्भावेन तासौ नित्यानिट्त्वं न । तस्य स्यानिनि शास्त्रबोध्यत्वाभावात् *श्रौतस्थान्यादेशभावस्यैवेति* । तस्य पुरस्स्फूर्तिकत्वात् । "सर्वे सर्वपदादेश" इत्यत्र पदशब्दोऽर्थवत्परः ।

*अतएव* । एकदेशविकृतन्यायस्य लौकिकत्वादेव । *अत एव* अशास्त्रीयस्यापि विकारस्य ग्रहणादेव । "आयसौ" इत्यत्राणन्तानिष्ठ बुद्धिनिरूपिताङ्गत्वमेकदेशविकृतन्यायेन सान्ते आगतमिति नुमः प्राप्तिः, अत

सान्तस्योगित्त्वेनानेन न्यायेनाङ्गतया प्राप्तो नुम् पूर्वसम्बन्धिविधित्वेन "अचः परस्मिन्" इतिस्थानिवत्त्वेन वारितो "अचः परस्मिन्" (पा० सू० १।१।५७) इति सूत्रे भाष्ये। एतन्न्यायानाश्रयणे त्वङ्गत्वमेव दुर्लभम्।

अन्तादिवत्सूत्रे भाष्यकैयटयोरपि 'गुडोदकम्' इत्यादावेकादेशे कृते दकशब्दस्यानेन न्यायेनोदकशब्दत्वमाश्रित्य "उदकेऽकेवले" (पा० सू० ६।२।९६) इति पूर्वपदान्तोदात्तत्वमुक्तम्। शब्दानित्यत्वं तु रेखागवयन्यायेन समाधेयम्। अनन्यवदित्यस्यान्यवन्नेत्यर्थः। तत्रान्यसादृश्यनिषेधेऽन्यत्वाभावः सुतरामिति चेत्, अर्द्धस्यान्यत्वे जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन तौ तित्त्वप्रतीतेर्न्यायेनानुपपादनात्। किं च तिङ्सञ्ज्ञायास्तिबादिसूत्रोपात्तपरिच्छिन्नपरिमाणनिष्ठतया परिच्छिन्नपरिमाणार्थवाचकशब्दानां न्यूने ऽधिके वा शास्त्रव्यापारं विना ऽप्रवृत्तेः "येन विधिः" इति सूत्रे ऽङ्गसंज्ञा सूत्रे च भाष्ये उक्ततया तदभावात्। न्यूनाधिकत्वञ्च वैरूप्यस्योपलक्षणम्।

---

वृद्धेः शास्त्रीयत्वेऽप्यकार निवृत्तिर्न शास्त्रीयेति भावः। एतदेव समर्थयितुं साधकान्तरमाह—*अन्तादिवदिति*। ननु शब्दैकदेशस्य विकारस्वीकारे शब्दनित्यत्वसिद्धान्तविरोध इत्यत आह—*शब्दानित्यत्वंत्विति* । रेखागवयवत्सर्वा विकारादिकल्पना। वास्तविकन्तु नित्यत्वमेवेति भावः। *अन्यत्वाभाव इति*। अरोपितान्यत्वमित्यर्थः। तेन शक्ततावच्छेदकानुपूर्व्यग्रहात्ततो बोधानापत्तिरिति दूषणस्य नावकाशः। *जातिव्यञ्जकेति*। यत्र जातिव्यञ्जकावयवसंस्थानमास्ति तत्रैव लोके 'अयं श्वा' इत्यभेदप्रत्ययः। अभेदप्रत्यय एव व्यक्त्यैक्यसाधकः, स किञ्चिद्विकार एव। यत्र त्वर्द्धन्तदधिकं वा विकृतन्तत्र शुनोऽयमवयवो न तु श्वेति व्यवहारः। शुनोऽयमिति प्रत्ययेन तु भेदस्यैव सिद्धिरिति भावः।

प्राचीनानुरोधेनाह—*किञ्चेति*। *परिच्छिन्नपरिमाणेति*। परिच्छिन्नानुपूर्वीकसमुदायनिष्ठतयेत्यर्थः। प्रकृते च परिच्छिन्नपरिमाणार्थवाचकस्तिङ्शब्दः। *भाष्य इति*। तत्र हि 'यथा द्रोणादिशब्दानां न्यूनाधिकयोर्न प्रवृत्तिस्तथा 'सर्व' इत्यानुपूर्वीविशेषोपादानेन कृतसंकेतस्य सर्वनामशब्दस्यापि सर्वकादावप्रवृत्तिमाशङ्क्य 'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति समाहितम्। ननु शुनोऽधिकस्फोटादिविकारसत्त्वे द्रोणादिदृष्टान्तेनायं श्वा इति व्यवहारः स्यादिति चेत्, तत्रापि तदेकदेशन्यायेनैव तथा व्यवहार इति भावः। स्थानिवद्भावविषय एव विशेषो वक्तुं

न च 'तण्डुलान्' इत्यादौ स्थानिवद्भावेन प्रत्ययान्तत्वे ऽपि स्वतः प्रत्ययान्तभिन्नत्वात्प्रातिपदिकत्वापत्तिरिति वाच्यम्। अतिदेशस्वभावेनातिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावात्। अत एव 'जहि' इत्यादौ जादेशस्यासिद्धवत्त्वे स्वाश्रयो हेर्लुङ्न। सिद्धत्वासिद्धत्वयोर्विरोधात्। असिद्धवत्सूत्रं तु 'शाधि' इत्यादौ स्थानिप्रयुक्तधिभावसंपादनेन चरितार्थम्। न च "अप्रत्ययः" इत्यस्य पर्युदासत्वे शास्त्रीयकार्याभावात्स्थानिवत्त्वं दुर्लभमिति वाच्यम्। वेः स्कन्दे-

---

शंकते *नचेति*शङ्कायां स्थानिवद्भावेनेत्युपादानम् "अन्तादिवच्च" इति सूत्रं स्थानिवद्भावेन गतार्थमिति मतेन।

*प्रातिपदिकत्वापत्तिरिति*। तथा च न लोपापत्तिः। न चैतादृशविषये यदि नलोपस्तर्हि "तस्माच्छसि पुंसि" इत्येवास्तु, तस्मादित्यस्याक इत्यर्थः, अचीति निवृत्तम्, अकः शसि परे पूर्वसवर्णदीर्घो भवतीति सूत्रार्थः। विधानसामर्थ्येन चात्र "आदेः परस्य" इत्यस्य बाध इति निर्विसर्गरूपे सिद्धे नकारादेशविधानं तच्छ्रवणार्थमिति नलोपो न भविष्यतीति वाच्यम्। 'तण्डुलान्' इत्यादावित्यादिपदेन 'सर्वास्मिन्' इत्यत्र तस्यापत्तिरित्याशयात्। न ह्यत्रापि नकारोच्चारणसामर्थ्यं वक्तुं शक्यम्, 'सर्वस्मिशय' इत्यत्र "शयवास" इत्यलुकि 'संज्ञाविधौ' नलोपस्यासिद्धतया प्लुतसिद्धेः फलत्वात्। *अतएव*। अतिदेशस्वभावसिद्धतादृशवचनबलादेव।

ननु असिद्धवद्भावेऽपि यदि स्वाश्रयधर्म्मप्रयुक्तं कार्य्यन्तदाऽसिद्धवत्सूत्रमेव व्यर्थमत आह-*असिद्धवत्सूत्रन्त्विति*। *पर्युदासत्व इति*। अयम्भावः। 'अप्रत्यय' इत्यस्य पर्युदासत्वे प्रत्ययान्तभिन्नत्वं प्रातिपदिकसंज्ञाप्रयोजकं, तदभावप्रयुक्तः प्रातिपदिकसंज्ञाभावस्तु, न शास्त्रबोध्य इत्येतत्प्रयोजकप्रत्ययान्तत्वबुद्धिसम्पादकः स्थानिवद्भावो न स्यादिति उत्तराभिप्रायस्तु यदि प्रत्ययान्तत्वप्रयुक्तप्रातिपदिकत्वाभावः शास्त्रतात्पर्य्यविषयो न स्यात्तदाऽर्थवत्सूत्रेण प्रत्ययान्ते न विधिर्नापि निषेध इति 'अप्रत्यय' इति विशेषणं व्यर्थमेव स्यादिति तत्सामर्थ्याच्छास्त्रतात्पर्य्यकल्पनया सिद्धोऽप्यर्थः शास्त्रीयवद्भवतीति तत्सम्पादकस्स्थानिवद्भावो भवत्येव। अस्मिन्नर्थे साधकान्तरमाह-*वेःस्कंदेरनिष्ठायामितीति*। पर्य्युदासत्वे निष्ठाभिन्ने कृत्वेन निष्ठासदृशे प्रत्यये एव षत्वन्न तु तिङन्त इति लभ्यते। प्रसज्यप्रतिषेधेऽसमर्थसमासो वाक्यभेदश्च स्यादतो लाघवात्पर्य्युदासः। अत एव न्याय्यः।

रनिष्ठायाम्" (पा०सू०८।३।७३) इति षत्वविधायके तिङन्तेषु षत्वाभावायाऽऽवश्यकेन न्यायेन चानिष्ठायामिति पर्युदासेन वृत्त्यादिसम्मतेन पर्युदासलभ्याशास्त्रीये ऽपि शास्त्रतात्पर्यविषये शास्त्रीयवदतिदेशबोधनात्। 'विस्कन्नः' इत्यादौ हि निष्ठानत्वस्य नित्यतया स्थानिवत्त्वेनैव निष्ठात्वस्य वक्तव्यत्वात्। तस्य प्रसज्यप्रतिषेधत्वे तु लक्ष्यानुसारिव्याख्यानादेवोक्तार्थसिद्धिरिति बोद्धव्यम्।

केचित्तु भाष्ये 'तत्स्थानापन्ने तद्धर्मलाभस्य तत्कार्यस्य च लोकन्यायेनैव सिद्धेरयमतिदेशः "स्वं रूपम्" इत्येतच्छास्त्रसत्त्वाद्धन्तेः कार्ये वधौ न स्यादिति' इत्युक्तम्। एवञ्च 'स्वं रूपम्' इति शास्त्राविषये तेन सिद्धिरिति सूचितम्। एवंचाशास्त्रीयस्यापि धर्मस्यातिदेशो भवत्येव। अतिप्रसङ्गस्तु लक्ष्यानुसारेण क्वचिल्लोकन्या-

---

तिङन्ते षत्वाभावस्येष्टत्वे सम्मतिमाह-*वृत्त्यादीति*। *विस्कन्न इति*। अत्र हि "सर्वे सर्वपदादेशा" इतिन्यायेन तशब्दस्य नशब्दादेशः, तस्याशास्त्रीयेऽपि षत्वाभावे स्थानिवद्भावो भवतीति। न च "एचोयवायाव" इति सूत्रेऽचीत्यनुवर्त्तनाद्वलयाद्यभावः शास्त्रतात्पर्य्यविषय इति 'नायक' इत्यादिरूपप्रतिबन्धकः स्थानिवद्भावस्स्यादिति वाच्यम्। पर्य्युदासलभ्येति ज्ञाप्यशरीरे निवेशेनैव दोषवारणात्। अत्र वृत्त्यादिसम्मतत्वेत्युपादानं भाष्यानुग्रहरूपारुचिसूचनाय। अत एवाह-*तस्य प्रसज्यप्रतिषेधत्व इति*। *तस्य*। अनिष्ठायामित्यस्य। वस्तुतस्तूक्तार्थो लाघवात् कल्प्यते तत्र न ज्ञापकापेक्षेत्याशयेनाह-*केचित्तु भाष्य इति*। अस्योक्तमित्यनेनान्वयः।*तेन सिद्धिरिति*। लोकन्यायेन सिद्धिरित्यर्थः

नन्वशास्त्रीयस्याप्यतिदेशे नासौ नित्यानिट्त्वस्याप्यदिनिष्ठस्य घस्लादेशे अतिदेशात् "उपदेशेऽत्वत" इत्यस्य प्राप्त्या 'जघसिथ' इत्यत्र "ऋतो भारद्वाजस्य" इति विकल्पापत्तिः, इष्यते त्वत्र क्र्यादिनियमान्नित्यमिडित्यत आह—*अतिप्रसङ्गस्त्विति*। "न धातुलोप आर्द्धधातुक" इति सूत्रप्रत्याख्यानपरभाष्यध्वनितश्चायं कल्पः। तथाहि। 'लोलुवः' 'पोपुव' इत्यादौ यङवयवयकाराकारयोः पृथग्लोपेऽचप्रत्ययनिमित्तकगुणस्य "अचः परस्मिन्" इति सूत्रेणाल्लोपस्य स्थानिवद्भावादादौ प्रतिबन्धेपि यङवयवाकारमाश्रित्यैवोवङि पुनरजिनमित्तकलधूपधगुणस्याचः परस्मिन्नित्यल्लोपस्य स्थानिवद्भावान्निवृत्ति र्न स्यात्, उवङवयवोकारस्यानादिष्टादचः पूर्वत्वाभावात् अशास्त्रीयस्याप्यतिदेशे तु स्थान्युकारनिष्ठस्यानादिष्टादचः पूर्वत्वस्य स्थानिवत्सूत्रेणातिदेशादचः परस्मिन्निति स्थानिवद्भावः सि-

यानाश्रयणेन परिहरणीयो यदि प्राप्नोति । एवञ्च न कश्चिद्दोषः। "न पदान्त" (पा०सू०१।१।५८) इति सूत्रे 'ब्राह्मणकण्डूतिः' इत्युदाहरणाच्च क्वचित्तदनाश्रयणम् । तत्र हि कण्डूयतेः क्तिचि तन्त्रात्लोपे तस्य स्थानिवत्त्वादुवङि यणि वानादिष्टादचः पूर्वत्वे स्थानिद्वारके गृह्यमाणे ऊठ् न स्यादित्याहुः ।

अत एवार्थवत्सूत्रशेषे "अप्रत्ययः" इत्यस्य पर्युदासत्वमेवोक्तं भाष्ये । तत्र पक्षे च 'काण्डे' इत्यत्र पूर्वान्तवद्भावेन प्रत्ययान्तभिन्नत्वाद्दोषः शङ्कितो न तु स्वाश्रयाप्रत्ययान्तत्वेन । "क्षियो दीर्घात्" (पा०सू०८।२।४६) इति सूत्रे भाष्येऽपि अतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभाव इति स्फुटम् । तत्र हि 'क्षिय' इत्यत्रेयङर्थं प्रकृतिवदतिदेशे स्वाद्यनुत्पत्तिमाशङ्क्य 'एवं तर्हि आतिदेशिकानां स्वाश्रयाणि न निवर्त्तन्ते' इति समाधायातिदिश्यमानधर्मविरुद्धस्वाश्रयनिवृत्तेरावश्यकत्वाभिप्रायेण 'अथाप्येतन्न' इत्याशङ्क्य 'निर्देशसामर्थ्याद्विभक्तिः' इत्युक्तम् । असिद्धवत्सूत्रे च कैयटे स्फुटमेतत् ।

यत्तु गाङ्कुटादिसूत्रे भाष्ये "सृजिदृशो" (पा०सू०६।१।५८) इत्यत्र'अकिति' इति पर्युदासात् 'सिसृक्षति' इत्यत्र "हलन्ताच्च"(पा० सू०१।२।१०) इति किच्चातिदेशेऽपि अमागममाशङ्क्य प्रसज्यप्रतिषेधाश्रयणेन समाहितम् । तत्तु वार्त्तिककृदुक्तमुपायान्तरं बोद्ध्यम् ।

अनल्विधौ इति विधिग्रहणादलाश्रये विधावित्यर्थात् , यत्र विधौ

---

ध्यतीति । अनादिष्टादचः पूर्वत्वस्याशास्त्रीयस्यातिदेशादेव 'निराघाद' इत्यत्र "अत उपधाया" इति णौ वृद्धौ "सर्वे सर्वपदादेशा" इतिन्यायेन [illegible] ते "अदोजग्धिः" इतिजग्ध्यादेशस्य वधादेशस्य च नापत्तिः। अनादिष्टादचः पूर्वत्वस्य स्थानिनिष्ठस्य कृतवृद्धिकेऽतिदेशादिति बोध्यम् ।

यदुक्तं क्वचिल्लोकन्यायानाश्रयणेनेति तत्र साधकमाह—*ब्राह्मणकण्डूतिरिति* । *उवङि यणि वेति*। यदा कंड्वादयो धातवः प्रकृतित्वेनाश्रीयन्ते तदोवङः प्राप्तिः, यदा तु प्रातिपदिकाद्यक्प्रत्ययस्तदा यणादेशस्य प्राप्तिः । पूर्वोक्तं पर्य्युपदासबोध्यमर्थं द्रढयति—*अत एवेति* । तत्राप्यतिदेशप्रवर्त्तनादेव । अत्रार्थे कैयटोक्तेर्विरोधमाशङ्क्य परिहरति-*यत्त्वित्यादिना* । *अनल्विधावितिविधिग्रहणादिति* । अन्यथाऽनलीत्युच्यमानेऽन्यविभक्त्यर्थः क्रोडीकारो न स्यात् । विधिग्रहणे त्वलाश्रयवि

शब्दतः स्थानिस्थान्यवयवान्यतराल्वृत्तिधर्मवतः तेन, तस्मात्, तस्य, तस्मिन्, तदादेरित्यादिप्रकारेण विशेष्यतया विशेषणतया वा अलाश्रयणं तत्र निषेधः । 'व्यूढोरस्केन' 'द्यौः' 'द्युभ्यां' 'क इष्टः' 'प्रपठ्य' इत्युदाहरणानि । शब्दत इत्युक्तेः 'अग्रहीत्' इत्यादौ "इट ईटि" (पा०सू० ८।२।२८) इति सिद्ध्यति । दीर्घविधावत्र चेट इति समुदायाश्रयणात् । अन्यथा टस्यानुबन्धत्वादिकारस्यैवोभयत्राश्रयणमित्यल्विधित्वं स्यात् ।

अत्र सूत्रे विशेषातिदेशोऽपि । अन्यथा इडादेरपि क्त्वः सत्त्वात् वलादित्वस्य तद्विशेषधर्मत्वात् उपस्थितधर्मैस्तद्व्यापकधर्मैश्च विध्याकाङ्क्षापूरणे सति तदतिरिक्तविशेषग्रहणे मानाभाव इत्येतन्न्यायमूलकेन सामान्यातिदेशे विशेषानतिदेशेन सिद्धौ विशेषणतया ऽलाश्रयणे निषेध इत्येतत्प्रतिपादकस्य 'अनल्' इत्येव सिद्धे कृतस्य विधिग्रहणस्य वैयर्थ्यं स्यात् । हलादिकिङ्निमित्तकेत्वप्रतिषेधकात् "न ल्यपि" (पा०सू०६।४।६९) इति लिङ्गाच्च अनुबन्धकार्ये त्वनल्विधाविति निषेधो न, अनुबन्धानामनेकान्तत्वात् । एकान्तत्वेऽपि शिद्ग्रहणेन तेषामल्व्यवहाराभावज्ञापनात् । 'नानुबन्धकृतमनेकाल्त्वम्" इति ज्ञापयति' इति भाष्येऽल्त्वव्यवहाराभावबोधनद्वारेति शेषः।

ध्वनितश्चेदं "क्ङिति च" (पा०सू०१।१।५) "गाङ्कुटादिभ्योऽञ्णिन्ङित्" (पा०सू०१।२।१)

---

धिसामान्यग्रहणसिद्धिः । तेन प्राधान्येनाप्राधान्येन वा यत्रालाश्रयणं तत्र सर्वत्र निषेधसिद्धिः । *यत्र विधौ शब्दत इति* । एतन्निष्कर्ष उक्तः । *अत्र सूत्रे विशेषेति* । तथा च "सामान्यातिदेशे विशेषानतिदेशः" इत्येषा परिभाषा न प्रवर्तते इति भावः । 'प्रपठ्य' इत्यत्र विशेषणतयाऽलाश्रयणे स्थानिवद्भावनिषेधोऽपि विधिग्रहणस्य प्रयोजनमितिव्याख्यानसामर्थ्यात् । "न ल्यपि" इति सूत्रमप्यत्र ज्ञापकमित्याह-*हलादिक्ङिन्निमित्तक इति* ॥

सामान्योपस्थापकसामग्रीकाले नियमेन विशेषोपस्थापकसामग्र्यभावमूलिकायाः 'सामान्यातिदेशे' इति परिभाषायास्त्यागेऽपि "न ल्यपि" इति सूत्रस्य न चारितार्थ्यम् । 'प्रदाय' 'प्रधाय' इत्यादौ स्थानिवद्भावेन किस्त्वस्य विशेषणतयाऽलाश्रयणान्निषेधस्स्यादत आह-*अनुबन्धकार्ये त्विति* । *इति शेष इति* । एतेन "नानुबन्धकृतमनेकाल्त्वम्" इति परिभाषान्तरमनारब्धव्यमिति सूचयति । *ध्वनितं चेदमिति* । अनु-

(पा०सू०२।४।४९)"हलः श्नः"(पा०सू० ३।१।८३) इति सूत्रेषु भाष्ये। तत्राद्ये"यासुटो ङिद्वचनान्ङिदादेशाङितो नेति ज्ञाप्यते" इत्युक्तम्। द्वितीये' गाङो ङित्त्वस्य सानुबन्धकादेश इत्कार्याभावज्ञापकतोक्ता, तिबाद्यादेशेषु पित्त्वासिद्ध्या दूषितं च ज्ञापकम्,। अन्त्ये 'शानचः शित्त्वस्य सार्वधातुकादेशे अनुबन्धास्थानिवत्त्वज्ञापकत्वमुक्तं, उक्तदूषणैरेव दूषितश्च । अन्यथा ऽनल्विधाविति निषेधेन तत्त्वाभावात्या ज्ञापकत्वासङ्गतिः, तिबाद्यादेशेषु पित्त्वाद्यासिद्धिश्चेति बोद्ध्यम्।

अचः पर ॥ (पा०सू०१।१।५७) आदेशग्रहणमनुवर्त्तते। तदनुरोधात् 'अच' इति स्थानषष्ठी, परस्मिन्नित्यादेशविशेषणं तदाह—परनिमित्त इत्यादि। अच एवादेश इत्यर्थः। तेन मरुतमाचष्टे 'मारयति' इत्यादौ वृद्धिः। अत्र सूत्रे प्रयोगे योऽच् तत् स्थानिक इत्यर्थः। न तु सूत्रे स्थानित्वेनोपात्ताच्स्थानिक इत्यर्थः। तेन णिलोपादरनेन स्थानिवत्त्वं सिद्ध्यति। अत एव चङ्परनिर्ह्रासे ण्यन्तात् णिचि अवीवदत्' इत्यादिसिद्ध्यर्थो निषेधः सार्थकः।

अच इति किम्? आगत्य। मलोपस्य स्थानिवत्त्वात् "ह्रस्वस्य (पा०सू०६।१।७१) इति तुग्न स्यात्। परस्मिन्निति किम्? युवजानिः'। निङः स्थानिवत्त्वेन यलोपो न स्यादिति। पूर्वविधाविति किम्? नैधेयः। निपूर्वाद्धाञः क्विप्रत्यये आतो लोपे तस्य स्थानि-

---

बन्धानामलव्यवहाराभावस्वरूपं वस्त्वित्यर्थः। एवम्भगवतः 'ङिच्च पिन्न पिच्च ङिन्न' इति या कल्पना साप्यनुबन्धानामल्व्यवहाराभावसूचिकेति बोध्यम्।

*अच एवेति*। "अचः परस्मिन्" इति सूत्रेऽनुवृत्ताऽऽदेशपदार्थेऽच्पदार्थस्य स्वमात्रनिवर्त्तकत्वरूपसम्बन्धः षष्ठ्यर्थः। *अत एव चङिति*। उक्तार्थस्वीकारादेव। "चङ्परनिर्ह्रास" इत्यस्य कर्त्तव्य इति शेषः। *निषेध इति*। "क्लिलुगुपधात्व" इति निषेधः सार्थक इत्यर्थः। *यलोपो न स्यादिति*। स्वाश्रयनिवृत्तेरप्येतत्सूत्रसाध्यत्वात्।

ननु 'युवजानिः' इत्यत्र यलोपविधिम्प्रति न स्थानिवदित्यनेनापि गतार्थमत आह—*वैयाघ्रपद्य इति*। यद्यत्र स्थानिवद्भावः स्यात्तदा गुवो न स्यात। *आदीध्य इति*। अत्र स्थानिवद्भावे "यीवर्णयोः" इति

वद्भावाद् व्यच्त्वव्यपदेशविरोधात्स्वाश्रयव्यच्त्वनिवृत्तौ ठगनापत्ते-रिति दिक्।

अत्र स्थानिनि सति यद्भवति तदादेशे ऽपि भवति, स्थानिनि यन्न भवति तदादेशे ऽपि नेति भावाभावयोरुभयोरप्यतिदेशः। तत्र भावोदाहरणं 'निगाल्यते' इति। अन्त्योदाहरणं 'पटयति' इत्यादि। स्थानिनिमित्तकं भवति, आदेशनिमित्तकं नेति च तदर्थः। लघूप-धत्वसम्पादनद्वारा लोपनिमित्तिका वृद्धिरित्याहुः।

स्थानिभूतादच इति। सूत्रे श्रवणाद्व्याख्यानाच्च तस्यैव पूर्वत्वेऽवधित्वमिति भावः। 'पूर्वविधौ' इत्यस्य पूर्वसम्बन्धिन्येव शास्त्रविधेये कर्त्तव्ये इत्यर्थः, तेन पूर्वपरयोर्विधौ न। तेन 'आरतुः' इत्यादौ "ऋच्छत्यॄताम्" (पा०सू०७।४।११) इति गुणस्य सवर्णदीर्घे न स्थानिवत्त्वम्। वस्तुतोऽत्र पूर्वविधिशब्दे तन्त्रम्। एकस्योक्तोऽर्थः। द्वितीये भावे किः। सम्बन्धसामान्यषष्ठ्यन्तपूर्वशब्देन समासः। विधिर्भावः पूर्वसम्बन्धिभावे तत्स्थितौ स्थानिवदित्यर्थः। अत

---

लोपस्यापत्तिः(१)। *स्वाश्रयव्यच्त्वनिवृत्तेरिति* 'गौणी मुख्या वा सङ्ख्या पूर्वां सङ्ख्यां बाधत' इति न्यायात्। *निगाल्यत इति*। अत्र "अचि विभाषा" इति लत्वम्। *पटयतीति*। टिलोपस्य स्थानिवद्भावादुपधावृद्धिर्न भवति। *लघूपधत्वेति*। अदुपधत्व इत्यर्थः।

*व्याख्यानाच्चेति*। परस्मिन्नित्यस्य श्रवणाद्यदि परस्यावधित्वं तदा 'लवनम्' इत्यत्र गुणनिमित्तल्युण्निमित्तकस्य स्थानिवद्भावेऽवादेशो न स्यादित्थं च 'किर तौ लवने' इति निर्देशासङ्गतिरितिभावमूलकादित्यर्थः। *तस्यैव*। अच एव। *पूर्वसम्बन्धिन्येव शास्त्रविधेय इति*। अत्र मानम् "अजादेः" इत्यादिनिर्देशः। अन्यथा "घेर्ङिति" इति गुणस्य स्थानिवद्भावे सति "ङसिङसोः" इति पूर्वरूपानापत्तिः, सूत्रन्तु सेगोशब्दान्ङसिङसोश्चरितार्थम्। अधिकार्थसङ्ग्रहार्थमाह—*वस्तुतोऽत्रेति*। *तन्त्रमिति*। विवक्षितो यावानर्थःस पर्यायशब्दान्तरेण न बोध्यते इति बोद्धुः श्रोतुश्च शब्दतन्त्रेणैवानेकार्थप्रतीतिरिति भावः। भाव इत्यन्तार्थमाह—*तत्स्थिताविस्यर्थ इति*। तन्त्रनिर्देशे मानमाह—*अत एवे-

---

(१) अत्र टीकास्थव्याख्यानानुरोधेन मूले किञ्चिदधिकः पाठो वर्तते इति प्रतिभाति। परं च बहुषु पुस्तकेषु सावधानेन बहुवारमन्वेषिते ऽपि नोपलब्धः। अतो नानवधानं मदीयमिति सुधियो विभावयन्तु।

एव 'ऐनेय' इत्यादौ "यस्येति च (पा०सू०६।४।१४८) इति लोपे तस्य स्थानिवत्त्वात्सन्नियोगशिष्टन्यायप्राप्तनिवृत्तिप्रतिबन्धेन नकारस्थितिः। अत एव 'न पदान्त" (पा०सू०१।१।५८) सूत्रे पञ्चेन्द्राण्यो देवता अस्य 'पञ्चेन्द्र' इति "लुकि न स्थानिवत्" इत्यस्योदाहरणं उक्तं भाष्ये। अन्यथा तत्र पूर्वत्वेन दृष्टस्य सम्बन्धिनः कस्यचित् विधेयस्याभावात्स्थानिवत्त्वाप्राप्तिरेवेति तदसङ्गतिः स्पष्टैव।

प्रकृतसूत्रे ऽपि भाष्ये "कर्मसाधनस्य विधिशब्दस्योपादाने न सर्वमिष्टं संगृहीतमिति भावसाधनो विज्ञास्यते पूर्वस्य विधानं प्रति पूर्वस्य भावं प्रति स्थानिवत्" इत्युक्तम्। तत्र भावसाधन इत्यस्य सो ऽपीत्यर्थः। पूर्वत्वञ्च व्यवहिताव्यवहितसाधारणम्। अव्यवहितग्रहणे मानाभावात्स्वरे निषेधाच्च। तेन 'पटयति' इति सिद्धम्। प्रकृते च द्वित्वनिषेधे स्थानिवत्त्वमिति।

न पदान्त (पा०सू०१।१।५८) अत्र द्विर्वचनसवर्णादिग्रहणं वतिघटितान्यातिदेशानां त्रिपाद्यामपि प्रवृत्तिबोधनार्थम्। तेन 'रामः'

---

ति*। द्वितीयार्थाङ्गीकारादेवेत्यर्थः। भाष्यसम्मतिरप्यत्रार्थे इत्याह—*प्रकृतसूत्रेऽपीति*। भावसाधनविधिशब्दपक्षे। यद्ययमेवार्थस्तदा 'निगाल्यते' एवमादिपूर्वोक्तार्थप्रयोजनासङ्गतिरत आह—*सोऽपीत्यर्थ इति* *साधारणमिति*। तच्च कार्य्यशब्दवादे स्वोत्पत्त्यधिकरणवृत्तिध्वंसप्रतियोगिसमयवृत्तित्वरूपम्। नित्यत्वपक्षे तु तज्ज्ञानघटितम्बोध्यम्। *प्रकृत इति*। सुध्युपास्य इति प्रयोगे।

नन्वत्र द्विर्वचनादिग्रहणं व्यर्थं तेषां त्रैपादिकत्वेनासिद्धत्वात्तेषु कर्तव्येषु स्थानिवद्भावस्याप्रसक्तेरत आह—*अत्र द्विर्वचनेति*। अत्रान्येति न ज्ञाप्यांशप्रविष्टं किन्तु फलमन्यत्र। एतत्सूत्रविषये तु "पूर्वत्रासिद्धे न स्थानिवत्" इत्यवष्टभ्य द्विर्वचनादिग्रहणस्याकरणमेव भाष्यकृत्सम्मतम्, एवञ्च द्विर्वचनग्रहणस्य ज्ञापकत्ववर्णनावसरे ज्ञाप्यं वचनं 'वतिघटितातिदेशानां त्रिपाद्यामपि प्रवृत्ति'रित्येव। एवञ्च "स्थानिवदादेश" इत्यस्य "अन्तादिवच्च" इत्यस्य "व्यपदेशिवदेकस्मिन्" इत्यस्य त्रिपाद्यामपि प्रवृत्तिः। प्रथमे प्रयोजनमाह—*तेन राम इत्यादाविति*। द्वितीयस्य प्रयोजनम् "अमी क्षीरपेण"। अत्रैकादेशे अदस्शब्दसम्बन्धित्वम् तथैकादेशे एकाज्उत्तरपदत्वम् "अन्तादिवच्च" इत्यनेन। तृतीयस्य प्रयोजनं

इत्यादौ विसर्गादिसिद्धिः। अत्र विधिशब्दो भावसाधनः। पदान्ते-त्यत्रान्तशब्दश्चरमावयववाची कर्मषष्ठ्या समासः। तेन 'एषो यन्हसति' इत्यादौ "एतत्तदोः" (पा०सू०६।१।१३२) इति सुलोपो न। इणः शतरि 'यन्' इति रूपम्। तत्र यणः स्थानिवत्त्वाद्। उत्वे च न स्थानिवत्। अनेन निषेधात्। स्पष्टश्चेदं भाष्ये इति भाष्यप्रदीपोद्योते निरूपितम्।

अत्र पदे ऽन्त इति सप्तमीसमासो भाष्ये उक्तस्तेन प्रत्यासत्त्या पदे परतः चरमावयवे कार्ये कर्तव्ये परपदस्थाजादेशस्यैवानेन स्थानिवत्त्वनिषेध इति 'वेतस्वान्' इत्यादौ न दोषः। न चैवमपि "पूर्व-

---

'अचैषीत्' इत्यत्र 'सदेवान्यक्षत्' इत्यत्र च सिचः सिपश्च सकारस्य प्रत्ययावयवत्वात्षत्वं व्यपदेशिवद्भावेन।

वस्तुतस्तु वतिघटितानामतिदेशानां त्रिपाद्यामन्येषान्तु प्रवृत्तिरेव। अचः परस्मिन्नित्यस्य तु सर्वथा प्रवृत्तिरेव न, किन्तु क चित्प्रवृत्तिः क चिदप्रवृत्तिः। एवञ्च "तस्य दोष" इत्यपि नापूर्वमिति विशेषसूचकं द्विर्वचनादिग्रहणम्। *तेनैष इति*। भावसाधनत्वेन। पदचरमावयवकर्मके विधाने न स्थानिवदिति वाक्यार्थनिष्पत्तौ 'एषो यन्' इत्यत्र विधेयस्य लोपस्याभावरूपस्य पदानवयवतया तस्मिन् कर्त्तव्ये निषेधाप्रवृत्त्या स्थानिवद्भावेन हल्परत्वाभावेन लोपो न। अनेन सूत्रेण पदचरमावयवस्य प्रापकः प्रतिबन्धकश्च स्थानिवद्भावो निषिध्यते विनिगमनाविरहात्। 'कानि सन्ति' 'कौ स्त' इत्यत्र प्रापकः' एषो यन्' इत्यत्र प्रतिबन्धकः स्थानिद्भावो निषिध्यते।

*अत्र पदेऽन्त इतीति*। अन्तशब्दस्य चरमावयववाचकतया पदे परतश्चरमावयवः पूर्वपदस्यैव सम्भवतीति तत्प्रापकः प्रतिबन्धको वा स्थानिवद्भावः।*परपदस्थाजादेशस्यैवेति* तदेकवाक्यतया षष्ठीसमासपक्षेपि तादृश एवाजादेशो गृह्यते। 'वेतस्वान्' इत्यत्र तु न तथा, पदचरमावयवसकारस्थानिकरुत्वस्य प्रतिबन्धकः स्थानिवद्भावो भवत्येव, परपदस्थाजादेशस्य स्थानिवत्त्वाप्रसक्तेः। *न चैवमिति*। अस्यापूर्वत्वपक्षेऽनेन उपपादितरीत्या क्काचित्कत्वकल्पने तु तस्यैव। *अत एव*। पदचरमावयवातिरिक्तस्य त्रैपादिकस्य ग्रहणादेव।

इदमत्र बोध्यम्। यद्यपि 'वेतस्वान्' इत्यत्र पदान्तविधिशब्दे षष्ठीसमासपक्षे स्थानिवद्भावनिषेधः प्राप्नोतीत्याशङ्क्य पदेऽन्त इति सप्तमीसमासेन निषेधाप्राप्त्युपपादनं यदि, तदा "लोपः शाकल्यस्य" इति सूत्रव्या-

त्रासिद्धीये न स्थानिवत्" इति निषेधो ऽत्र दुर्वारः । पदे ऽन्त इत्यर्थेन तत्र स्थानिवत्त्वनिषेधव्यावृत्तिपरभाष्यप्रामाण्येन पूर्वत्रासिद्धे इत्यत्र पदचरमावयवविधायकातिरिक्तस्यैव त्रैपादिकस्य ग्रहणात्। अत एव 'महिष्मान्' इत्यत्र जश्त्वं न । सूत्रे जश्पदेन "झलाञ्जश् ।

---

ख्यावसरे 'वृक्षव् करोति' इत्यत्राशग्रहणाभावेऽपि स्थानिवत्त्वनिषेधज्ञाने पदान्तत्वज्ञानं तन्निर्णये च स्थानिवत्त्वाभावज्ञानमित्यन्योन्याश्रय इति निषेधाप्रवृत्तिरिति वक्ष्यमाणरीत्या निषेधो न प्राप्नोतीति सप्तमीसमासप्रदर्शनवैयर्थ्यशङ्का भवति, तथापि न पदान्तसूत्रस्थभाष्ये पदान्तविधिशब्दस्य 'कानि सन्ति' 'कौ स्त' इति प्रयोगे निषेधप्रवृत्तिः प्रयोजनमित्युक्तम्, तत् प्रामाण्येन यत्र पदान्तत्वं सिद्धं तत्र निषेध इति कल्प्यते । 'वेतस्वान्' इत्यत्र तु पदान्तत्वन्न सिद्धमिति निषेधो न प्रवर्तेत, परन्तु सूत्रस्थपदान्तशब्दस्य पदांतत्वपरतया 'स्वादौ पूर्वम्पदम्' इति पदत्वे कर्तव्ये निषेधप्रवृत्तिः। "तसौ मत्वर्थे" इति भत्वे तु निषेधप्रवृत्त्यभावात्स्थानिवत्त्वेन तदकारान्तमिति न भत्वेन पदत्वबाधः । यदि तु सप्तमीसमासेन परपदस्थाजादेशस्यैव स्थानिवद्भावनिषेधस्तदात्र न निषेधप्रवृत्तिरिति पदत्वबाध एव इत्युपाध्यायानुयायिनः ।

वस्तुतस्तु द्विर्वचनशब्दस्य शास्त्रीयार्थबोधकतया पदान्तशब्दोऽपि शास्त्रीयार्थस्यैव बोधकः। तत्साहचर्य्यादिति युक्तम्। 'वेतस्वान्'इत्यत्र रुत्वस्य पदचरमावयवत्वेन तस्मिन्कर्त्तव्ये निषेधः प्रवर्त्तते । न च पदसंज्ञा न पदचरमावयव इति वाच्यम् । तस्याः कार्य्यार्थत्वात् रुत्वस्य पदचरमावयकत्वेन तत्सम्पादकपदसञ्ज्ञाया अपि पदचरमावयवत्वेन ग्रहणमिति पूर्वपक्ष्याशयः। सिद्धान्त्येकदेशिना तु समाहितम् 'भसंज्ञा बाधिका भविष्यति' तस्यायम्भावः । यदि पदचरमावयवसम्पादकस्यापि पदचरमावयवत्वेन ग्रहणन्तदा सान्तनिष्ठपदत्वाप्रतिबन्धसम्पादकत्वाद्रुत्वप्रापकं भत्वं पदचरमावयवप्रापकत्वात्पदान्तशब्देन गृह्यते । न च भत्वम्पदत्वप्रतिम्बन्धकं न तु पदत्वाप्रतिबन्धसम्पादकमिति शङ्क्यं 'भत्वे कर्त्तव्ये' टिलोपस्य स्थानिवद्भावः क्रियते, ततश्च पदत्वम्भवतीति भत्वप्रतिबन्धकस्थानिवद्भावप्रयोजकज्ञानविषयत्वाद्भत्वस्परम्परया रुत्वसम्पादकत्वात्पदत्वाप्रतिबन्धकमिति व्यपदिश्यत इत्याशयात् । एवम्पदचरमावयवे भत्वे कर्त्तव्ये टिलोपस्य स्थानिवद्भावनिषेधाद्भसंज्ञया पदत्वबाधाद्रुत्वन्नेति भावः।

परन्त्वेवं रीत्यासमाधाने महान् क्लेश इत्यत आह-*पदेऽन्त इतीति। पदचरमावयवविधायकातिरिक्तस्यैव त्रैपादिकस्येत्यर्थस्यावश्यकत्वमाह *अत एवेति। तादृशार्थकल्पनादेव । *महिष्मानित्यत्रेति* । अत्र भत्व

झशि" (पा०सू०८।४।५३) इत्यस्यैव ग्रहणं, चर्सन्निहितस्यैव ग्रहणौचित्यात् । कार्यकालपक्षे ऽपि त्रिपाद्यामन्तरङ्गपरिभाषा न प्रवर्त्तते इति वक्ष्यते इति न तयाऽस्य सिद्धिः ।

'गोचा' इत्यादौ 'गतिकारकोपपदानाम्' इत्यस्यानियत्वेन सुबुत्पत्त्यनन्तरमेव समासः । "उत्तरपदत्वे च" इति प्रत्ययलक्षणप्रति-

---

त्रिपयता नेति भावः । एवं चात्र टिलोपस्य स्थानिवद्भावो भवत्येव । ननु जश्विधिम्प्रति न स्थानिवदिति निषेधः स्यादत आह-*सूत्रे जश्पदेनेत* । *चर्सन्निहितेति* । प्रकृतसूत्रे चर्सन्निहितपाठेन यस्य जशश्चर्सन्निधानं तस्यैव ग्रहणमिति भावः । नन्वन्तरङ्गे जश्त्वे बहिरङ्गस्य टिलोपस्यासिद्धत्वाज्जश्त्वं न भविष्यतीत्यत आह-*कार्य्यकालपक्ष इति* । *यत्तु जश्त्वन्नेति* ।

वस्तुतो "झलां जशोऽन्त" इत्यत्र झल्पदस्य विशेषणं, झलन्तपदस्याऽन्त्यस्य जशित्यर्थेन सिद्धेऽन्तग्रहणात्पदान्तस्यैव झलो जश् भवति न तु लोपकृतपदान्तस्यापीत्यर्थस्य क्रोडीकाराज्जश्त्वप्राप्तिरेव नेति । तन्न । भ्रस्जेर्णिचि क्विपि 'भ्रट्' भ्रड् इत्यसिद्ध्यापत्तेः । अत्र हि संयोगस्य लोपकृतमेव पदान्तत्वम् । किञ्च बुधमाचष्टे बुधयति, बुधयतीति 'भुत्' इत्यस्य सिद्धिर्न स्यात् । किञ्चैतत्सूत्रभाष्ये भावसाधनविधिपक्षे 'ब्रह्मबन्ध्वा ब्रह्मबन्ध्वै इत्यत्र जश्त्वम्प्राप्नोति' इतिशङ्कितम । तत्र कैयटः 'ऊङ्नूङोरेकादेश ऊङ्ग्रहणेन गृह्येत तस्मिन्स्वादिष्विति पदसंज्ञायां धकारस्य जश्त्वं स्यात् इति तदेतद्विरुध्येत । धकारो न हि पदान्त एव ।

नन्वेवं "गतिकारकोपपदानाम्" इति सुबुत्पत्तेः प्राक् समासे उत्तरपदस्य पदत्वाभावेन पदेऽन्त इति समासे 'गोचा' इत्यत्राच इत्यल्लोपस्य स्थानिवद्भावादवङादेशापत्तिरत आह-*गोचेत्यादाविति* । सा हि तस्य धनक्रीता' इत्यत्र यथा । नन्वेवमपीदमनुपपन्नम् "उत्तरपदत्वे च" इति निषेधेनोत्तरपदस्य पदत्वाभावादत आह-*उत्तरपदत्व इति* । "उत्तरपदत्वे चापदादिविधौ प्रतिषेध" इति हि वार्त्तिकम् । उत्तरस्य पदत्वे उत्तरपत्वे उत्तरपदशब्दपरोऽत्रोत्तरशब्दः । पदैकदेशलोपात् । एवञ्चोत्तरपदस्य पदत्वव्यपदेशे कर्त्तव्ये प्रत्ययलक्षणं नेत्यस्यार्थः । 'परमवाचा' 'परमवाचे' 'गोदुहा' 'श्वलिहा' अत्रोत्तरपदस्य पदत्वे प्रत्ययलक्षणप्रतिषेधात्कुत्वघत्वदत्वादीनि न । अपदादिविधाविति किम् ? 'दधिसेचौ' दधिसेचः' अत्रोत्तरपदस्य पदत्वे "सात्पदाद्योः" इतिनिषेधस्सिद्धो भवति । न च 'माषकुम्भवापेन' इत्यत्र कुम्भशब्दव्यवायेन यः "पदव्यवाये न" इति निषेधस्स न स्यात्, कुम्भशब्दस्य "उत्तरपदत्वे न" इति पदत्वनिषेधा-

दिति वाच्यम्। "अपदादिविधौ" इति पर्य्युदासादुत्तरपदस्य कार्य्यित्व एव प्रवृत्तिस्वीकारात्।

न च 'पूर्वदण्डिप्रिय' इत्यत्र त्रिपदे बहुव्रीहौ प्रियशब्दे "तद्धितार्थ" इति समासे 'दण्डिन्'इत्यस्य नलोपात्मककार्य्याधिकरणतया प्रत्ययलक्षणानिषेधे सति नलोपो न स्यादिति वाच्यम्। उत्तरपदशब्देन मध्यमपदत्वानाक्रान्तस्यैवोत्तरपदस्य ग्रहणात्। नचैवं सति 'माषकुम्भवापेन' इत्यत्र कुम्भपदस्य मध्यमपदत्वाक्रान्ततया निषेधाविषयत्वेन "पदव्यवायेऽपि" इति निषेधसिद्धौ कार्य्यित्वनिवेशो व्यर्थ इति वाच्यम्। प्रत्यासत्त्या तत्समासीयमध्यमपदत्वानाक्रान्तस्य ग्रहणात्। एवञ्च माषस्य कुम्भो माषकुम्भः माषकुम्भस्य वाप इति षष्ठीतत्पुरुषपूर्वपदकषष्ठीतत्पुरुषे कुम्भशब्दस्य तत्समासीयमध्यमपदत्वानाक्रान्ततया तस्य प्रत्ययलक्षणेन पदत्वसिद्ध्यर्थं कार्य्यित्वनिवेशस्यावश्यकत्वात्।

न चैवमपि 'पूर्वदण्डिप्रिय' इत्यत्र त्रिपदे बहुव्रीहौ अवान्तरतत्पुरुषत्समासोत्तरपदत्वं दण्डिन्नित्यस्य तत्समासीयमध्यमपदत्वानाक्रान्ततया निषेधापत्तिरिति वाच्यम्। तत्समासप्रयोजकैकार्थीभावप्रयोज्यसमासीयमध्यमपदत्वानाक्रान्तेत्यर्थस्वीकारात्। प्रकृते चोभयसमासप्रयोजकैकार्थीभावस्यैकत्वेन दण्डिन्नित्यस्य विवक्षितमध्यमपदत्वमस्त्येव। न चैवम् 'परमवाचा' इत्यादौ वागादिशब्दस्यैतत्समासीयमध्यमपदाप्रसिद्ध्या विशिष्टार्थाप्रसिद्धिरिति प्रक्रान्तप्रयोजनस्यैवासिद्धिरिति वाच्यम्। तत्समासीयमध्यमपदानाक्रान्तेत्यस्य तत्समासीयचरमपदाव्यवहितपूर्ववर्त्तित्वविशिष्टपदत्वानाक्रान्तेत्यर्थात्। "अतद्धित" इत्यस्य प्रत्याख्याने 'पदे व्यवाय' इत्यर्थस्याऽऽवश्याकत्वेन च कार्य्यित्वनिवेशावश्यकत्वात्। अन्यथा वापशब्दस्य पदत्वाभावेन माषकुम्भवापेन इत्यत्र निषेधो न स्यात्।

न चैवं सति 'परमदण्डिनौ' इत्यादौ ङमुट् स्यादिति वाच्यम्। अजादेः पदस्येतिव्याख्यानात्। न च 'सुगण्णीशौ' इत्यत्र ङमुडागमो न प्राप्नोति। ईशशब्दस्य मध्यमपदत्वानाक्रान्तत्वात्कार्य्यित्वाच्चेति वाच्यम्। पूर्वोक्तवत्पदान्तत्वनिमित्तकविधावित्युपादानेनैतत्सङ्ग्रहात्। न चैवं मध्यमपदत्वे तत्समासीयत्वविशेषणं व्यर्थम्। कुम्भशब्दस्य वापशब्दस्य च पदत्वमनायासेन सिध्यति "पदव्यवायेऽपि" इति निषेधस्य पदान्तत्वनिमित्तकविधित्वाभावादिति वाच्यम्। 'दधिसेचिशयः' 'दधिसेचिवास' इत्यादौ "शयवासवासि" इति सप्तम्या अलुकि सेक्शब्दस्य पदान्तत्वनिमित्तककुत्वाभावार्थम्प्रत्यासत्तिलभ्यस्य तत्समासीयत्वनिवेशस्याऽऽवश्यकत्वात्। अत एव 'गोधुग्धा सा' इत्यस्य च सिद्धिः।

न च 'पदे व्यवाये' इत्यर्थे वापशब्दस्य पदत्वसिद्ध्यर्थं कार्य्यित्वनिवे

षेधश्च प्रत्यासत्त्योत्तरपदस्य कार्यित्वे एवेति न दोषः । पदे इति प-दत्वयोग्योपलक्षणं वा । अत्रेदं भाष्यमपि मानम् ।

अत्र पदचरमावयवादिसाधकः प्रतिबन्धकश्च स्थानिवद्भावो नि-षिध्यते । विनिगमनाविरहात् । एतत्सूत्रभाष्य "कमेर्णिङ्" (पा०-सू०३।१।३०) इत्यादिसूत्रभाष्यैः "पूर्वत्रासिद्धे न स्थानिवत्" इत्य-वष्टभ्य वरेयलोपस्वरदीर्घग्रहणवर्जं द्विर्वचनादि प्रत्याख्यातमिति ल-भ्यते । निषेध इति । द्विर्वचनग्रहणात् "पूर्वत्रासिद्धे" इति निषे-धाद्वेति भावः ।

---

श इति यदुक्तं तत्पदे इत्यत्र पदशब्दस्य पदत्वयोग्यपरत्वेनाप्यन्यथासि-द्धमिति वाच्यम् । शास्त्रान्तरसङ्केतितोत्तरपदशब्दस्य तादृशेऽर्थे ल-क्षणापेक्षया स्वशास्त्रसङ्केतितपदशब्दस्य लक्षणानौचित्यादिति दिक् ।

'न पदान्त' सूत्रे'पदेऽन्त'इत्यत्र पदशब्दस्य लक्षणयापि 'गोचा' इत्यस्य सिद्धिरित्यभिप्रायेणाह-*पदे इतीति* । *एतत्सूत्रभाष्येति* । पूर्वत्रा-सिद्धे च । 'पूर्वत्रासिद्धे न स्थानिवदिति वक्तव्यम् । 'वरेयलोपस्वरवर्जम्' एतावदेव यद्यपि तत्रोक्तन्तथापि दीर्घस्याप्युपलक्षणमेतदित्याशयेनाह-*वरेयलोपस्वरदीर्घग्रहणवर्जमिति* ।

अयम्भावः । यद्यपि दीर्घग्रहणस्य 'प्रतिदीव्न' इति प्रयोजनं पूर्वत्रा-सिद्धत्वेन सिध्यति तथापि "कमेर्णिङ्" इति सूत्रस्थभाष्यप्रामाण्येन स-पादसप्ताध्यायीस्थस्यापि दीर्घस्य ग्रहणमिति दीर्घग्रहणमावश्यकमित्यत्र-त्यं भाष्यमुपलक्षणम् ।

तत्र हि कमेर्णिङो ङकारस्य "णेरनिटि" इत्यत्र णिसामान्यग्रहणा-र्थत्वमुक्त्वा ङकारस्यात्मनेपदार्थत्वमप्युद्भाव्यं, प्रतिषेधस्य बलवत्त्वेन 'कामयत इत्यत्र "क्ङिति च" इति प्रतिषेधः प्राप्नोति' इति शङ्कितम् । 'इक्प्रकरणादिग्लक्षणयोरेवगुणवृद्ध्योर्निषेध' इत्यज्ञानेन शङ्क्यम् । एवमेव चान्ते समाहितं सिद्धान्तिना । मध्ये सिद्धान्तेऽप्येकदेश्याह 'एवन्तर्ह्याचा' र्यप्रवृत्तिर्ज्ञापयति न कमेर्वृद्धिप्रतिषेधो भवतीति, यदयं 'नकम्यमिच-माम्'इति मित्वप्रतिषेधं शास्ति' । पूर्वपक्ष्याह-'अर्थवान् मित्वप्रतिषेधः कामयमानम्प्रयुङ्क्ते इत्यर्थे णिङन्ताण्णिचि या वृद्धिस्तस्या ह्रस्वत्वं माभू-दिति, नैव वा णिचि वृद्धिः प्राप्नोति क्ङितिचेति प्रतिषेधात् ।

सिद्धान्त्येकदेश्याह 'क्ङिति चेत्यत्र तन्निमित्तग्रहणान्न तस्याऽयो वृद्धिः, तस्याः प्रतिषेधः । 'नच णिङन्तस्य णिचि वृद्धिः प्राप्नोति, णिङा व्यवहितत्वात् । लोपे कृते नास्ति व्यवधानम् । स्थानिवद्भावात् व्यवधानमे-

व। इदं तर्हि प्रयोजनं यत्तत् 'चिण्णमुलोर्दीर्घोन्यतरस्याम्' इति दीर्घं शास्ति। तत्कर्मेणिङि माभूत्, किम्पुनः कारणन्तत्र दीर्घोन्यतरस्यामित्यु च्यते, न, ह्रस्वोऽन्यतरस्यामित्येवोच्येत, यथाप्राप्तं कर्मेह्रस्वत्वम्"।

तत्रायमर्थः। ह्रस्वग्रहणं न कर्त्तव्यम्भवति प्रकृतमनुवर्त्तते णितां ह्रस्व इति। अशमि। अशामि। शमम् शमम् शामम्। शामम्। वृद्धा सिद्धं न सिध्यति। नोदात्तोपदेशस्येति प्रतिषेधः प्राप्नोति, चिण्कृतोः स प्रतिषेधः, णिव्यवहितेषु तर्हि यङ् लोपे चोपसङ्ख्यानं कर्त्तव्यं स्यात्। शा यन्तम्प्रयोजितवान्। अशमि अशामि । शंशमयतेः अशंशामि अशंश मि। किम्पुनः कारणं न सिध्यति चिण्णमुल्परे णौ मितामङ्गानां ह्रस्व भवतीत्युच्यते। यश्चात्र णिः,चिण्णमुल्परो न तस्मिन् मिदङ्गम्। यास्मि मिदङ्गं नासौ चिण्णमुल्परः। णिलोपे च कृते चिण्णमुल्परः। स्थानिवद्भा वान्न चिण्णमुल्परः। अथ दीर्घोन्यतरस्यामित्युच्यमाने यावता स्थानिवद्भा कथमेवैतत् सिध्यति। एतदिदानीं दीर्घग्रहणस्य प्रयोजनं दीर्घविधिं प्र न स्थानिवदित्यजादेशस्य स्थानिवत्प्रतिषेधसिद्धो भवति' इत्युक्तम्। एते भाष्यप्रघट्टकेन त्रैपादिकातिरिक्तोपि दीर्घो 'न पदान्तेति' सूत्रे दीर्घग्रहणे गृह्यते इति स्पष्टमेव लभ्यते।

न च हेड्धातो र्घटादिपठिताण्णिजन्ताच्चिणि 'अहिडि' 'अहीडि' इ रूपं 'दीर्घोऽन्यतरस्याम्'इत्युच्यमाने सिध्यति। ह्रस्वविकल्पे तु अहिडि अ डि' इति स्यादितिफलभेदस्य स्पष्टतया कथमेतत्प्रघट्टकमिति वाच्यम् एतद्भाष्यप्रमाण्येन हेडधातोर्घटादिपाठस्याप्रामाणिकत्वात्। न च "कृ ति च" इति सूत्रस्थस्य "तद्धितकाम्योरिक्प्रकरणात्" इति वार्त्तिक विस्मरणेनैतत्प्रघट्टकमित्येकदेश्युक्तत्वान्न प्रकृतसूत्रस्थभाष्यस्योपलक्ष त्वे मानमिति वाच्यम्। " चिण्णमुलोर्दीर्घोऽन्यतरस्याम्" इति सूत्रस भाष्यसंवादेनात्रत्यभाष्ये दीर्घग्रहणस्योपलक्षणत्वावश्यकत्वात् । तत्र 'अशंशमि' 'अशंशामि' इत्यत्र यङ्व्यवधाने स्थानिवद्भावाद्दीर्घत्वं न प्र प्नोतीत्याशङ्क्य 'प्रतिषिध्यतेऽत्र स्थानिवद्भावः दीर्घविधिम्प्रतीति । एव प्यसिद्धत्वान्न प्राप्नोति। 'समानाश्रयवचनात् सिद्धम्' इत्युक्तम्।

तथा "ऊकाल" इति सूत्रे भाष्येपि तत्पाठस्याप्रामाणिकत्वं ध्वनितम् तत्रहि—उकालो ह्रस्वसंज्ञक इति वाक्ये ग्रहणकशास्त्रप्रवृत्तौ दीर्घप्लुतयोः र्वसंज्ञाप्रसङ्ग इति शङ्कायां कालग्रहणेन समाधाय 'अथ वा ह्रस्व ज्ञावचनसामर्थ्याद्दीर्घप्लुतयोः पूर्वसंज्ञा न भविष्यति' इत्युक्तम्। ततः दन्तर्हि ह्रस्वसंज्ञावचने प्रयोजनम्। एच इग्ध्रस्वदेश इति। अन्यथा ह्रस्व नपुंसके' 'णौ चङि' 'ह्रस्व' इत्यत्र च त्रिर्ह्रस्वप्रदेशेषु एच इगिति वक्तव्यं स्या तु इति गौरवं स्यात्'। एतेनापि घटादिषु हेड्धातोः पाठोऽप्रामाणि

इति लभ्यते । अन्यथा ह्लिडयतीति रूपसिद्ध्यर्थं 'मितां ह्रस्व" इत्यत्राऽपि तथा पाठस्यावश्यकतया त्रिष्वेव गौरवोद्भावनं विरुध्येत ।

अत्र वार्तिकम् । "प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत्" । स्वरे यथा । आकर्षिकः, चिकीर्षकः, जिहीर्षकः,आकर्षिक, इत्यत्रष्ठलो लित्वात्ककाराकारस्योदात्तत्वम्भवति । लित्त्वसामर्थ्याद् व्यवहितस्यापीति चेत् । आकारस्यापि स्यात् । चिकीर्षक इत्यादौ ण्वुलो लित्त्वादिकारस्योदात्तत्वम्भवति । अन्यस्त्वादेशः स्थानिवदेव, पञ्चारत्न्यो दशारत्न्य इति अत्र यणादेशस्य स्थानिवद्भावात् "इगन्तकालकपाल" इति स्वरो भवति, तथा 'बहुखट्वकः' । अत्र ह्रस्वत्वस्य स्थानिवद्भावात् "ह्रस्वान्तेऽन्त्यात्" इति स्वरो न भवति । दीर्घे यथा 'प्रतिदीव्नः' यो ह्यन्य आदेशः स्थानवद्वासौ भवति, किर्य्योगिर्य्योरिति । यलोपे यथा 'ब्राह्मणकण्डूतिः' 'क्षात्रियकण्डूतिः' यो ह्यन्य आदेशः स्थानिवद्वासौ भवति वाय्वोः अध्वर्य्वोरिति' एताश्चान्यथासिद्धमिति भाष्ये उक्तम् । 'लोपोपि' प्रकृत आदेशोपि, विधिग्रहणमपि, दीर्घादयोपि, निर्दिश्यन्ते केवलं तत्राभिसम्बन्धमात्रं कर्त्तव्यम् । प्रकृतसूत्रस्थो लोपशब्द 'आवर्त्यते' प्रकृत इत्यस्य प्रस्तुत इत्यर्थः ॥

"क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्त्वेषूपसङ्ख्यानम्" । अत्र क्वीत्यंशो द्विधा व्याख्यातः । 'क्वौ लुप्तं न स्थानिवत्' "क्वौविधिम्प्रति न स्थानिवत्" इति विधावित्यस्याध्याहारः क्वौ इत्यस्यावृत्त्या आदेशेन सम्बन्धात् क्विनिमित्तो ऽजादेश इत्यर्थेन क्वौ लुप्तमित्यस्य लाभः । अस्योदारणम् । 'कण्डूयतेरप्रत्ययः । अत्र यण् न, यलोपश्च भवति । यद्यपि यलोपविधिम्प्रतीत्यनेन यलोपः सिध्यति, तथापि यणादेशाभावो मुख्यम्प्रयोजनम् । पिपठिषतेरप्रत्ययः पिपठीः अत्राल्लोपस्य स्थानिवद्भावनिषेधाद्दीर्घः सिध्यति । यद्यप्येतद्दीर्घविधिम्प्रति न स्थानिवदित्यनेन सिध्यति, तथापि रुत्वमेतत्साध्यमेव । यद्यपि पदान्तविधिम्प्रतीत्यस्य षष्ठीसमासे प्राप्तिस्तथापि सिद्धान्तिसम्मते सप्तमीसमासे तदप्राप्तिरेव । लावयतेः 'लौः' पावयतेः 'पौः'अत्र णिलोपस्य स्थानिवद्भावात् 'ऊठ्' न प्राप्नोति, यदि तु"ण्यल्लोपावियङ्" इति वचनसूचितपूर्वविप्रतिषेधेन प्रथमं णिलोपस्ततः प्रत्ययलक्षणेन वृद्धिरिति प्रक्रिया न तु वान्तस्य क्वौ परतोऽङ्गत्वमिति नात्रोठ्, तदा लवमाचक्षाणो 'लौः' 'पौः' इति लवशब्दादाख्याने णिचि टिलोपे वकारस्य ऊठ् क्रियते, स णिलोपस्य स्थानिवद्भावान्न स्यात् ।

ननु क्वौ विधिम्प्रतीति वचनेन तस्यापि सिद्धिरिति चेत्तदा ण्यन्तदिवधातुप्रकृतिकक्विबन्तस्य 'द्यूः' इत्येतण्णिलोपस्य स्थानिवत्त्वान्न स्यात् । न चात्र णिलोपस्य स्थानिवद्भावादुकारस्य वृद्धिः स्यादिति वाच्यम्, ऊठः

दकार इति। स्थानत आन्तर्यादिति भावः।

अदर्शनम् (पा०सू०१।१।६०)। स्थाने इति वर्त्तते प्रसङ्गे सतीति तदर्थस्तदाह–प्रसक्तस्येति। शास्त्रतोऽर्थतो वेति भावः। अत्र दृशिर्ज्ञानसामान्ये। तत्र ज्ञानस्याऽवर्जनीयत्वेन तत्सामग्र्यन्तर्ग-

---

आदिष्टादचः पूर्वत्वात्। यदि चेदमपि क्वौ विधिम्प्रतीत्येव सिद्धमित्यु-च्यते तदा "ख्यत्यात्" इति सूत्रभाष्योदाहृतं सखीयतेः 'सख्युः' इति रू-पमन्यथा न स्यात्, अल्लोपस्य स्थानिवद्भावो यणादेशे प्रत्ययनिमित्ते कर्त्तव्ये स्यात्। तथा गोमत्यतेः 'गोमान्' इति "उगिदचाम्" इति सूत्रे भाष्योदाहृतम्। ण्यन्तपदेः 'पात्' 'पद्' इति "येन विधिः" इतिभा-ष्योदाहृतं स्थानिवद्भावान्न स्यात्। प्रथमेऽल्लोपस्य स्थानिवद्भावात्स-र्वनामस्थानपरत्वाभावान्नुम्, द्वितीये णिलोपस्य स्थानिवद्भावात् पद्भा-वश्च न स्यात्। तथा युष्मानस्मान्वा आचष्टे युष्मयति अस्मयति तत-क्विप् 'त्वम्' 'अहम्' अत्र णिलोपे सौ "त्वाहौ सौ" इति कर्त्तव्ये णिलो-पो न स्थानिवत्।

ननु भाष्ये लवमाचक्षाणो 'लौः' इत्यस्य साधनावसरे नैवं विज्ञाय-क्वौ लुप्तन्न स्थानिवत्' इत्युक्तं तदेतद्विरुध्येत इति चेन्न 'नैवं विज्ञायते' इत्यस्यैवमेव न विज्ञायते। किं तु क्वौ विधिम्प्रति न स्थानिवदित्यपि। एवञ्च लवमाचक्षाणो 'लौः' इत्यत्र णौ वकारलोपस्य ऊठि कर्त्तव्ये स्थानिवत्त्वाभा-वः सिध्यति। एवञ्चार्थद्वयमपि लक्ष्यसिद्धये आश्रीयते इति भावः।

लुका लुप्तं न स्थानिवत्। पञ्चेन्द्राण्यो देवता अस्य 'पञ्चेन्द्रः' 'पञ्चा-ग्निः' 'शताग्निः' अत्र स्त्रीप्रत्ययलुकः स्थानिवत्त्वादानुक् ऐकारश्च श्रूयेत। उपधात्वविधिं प्रति न स्थानिवत्, 'पारिखीयः' परिखाशब्दाच्चातुरर्थि-केऽणि आकारलोपस्य स्थानिवत्त्वात्पारिखे भव इति "वृद्धादकेकान्तखो-पधात्" इति छो न स्यात्। चङ्परनिर्ह्रासे न स्थानिवत्, 'वादितवन्तं प्रयोजितवानवीवदद्वीणां परिवादकेन'। अत्र योऽसौ णौ णिर्लुप्यते तस्य स्थानिवद्भावाद् ह्रस्वत्वन्न प्राप्नोति। न चात्राप्युपधात्वविधिम्प्रति न स्थानि-वदित्येवसिद्धम्, तस्य निषेधस्य प्रत्ययविधिविषयत्वात्। अत्रैतद्वच-स्यैव मानत्वात्। अत एव 'पटयति' इत्यत्र टिलोपस्य स्थानिवद्भावः सि-ध्यति। कुत्वे कर्तव्ये न स्थानिवत्, अर्च्चयतेः 'अर्क्कः' मर्चयतेः 'मर्क्कः' अत्रौणादिके कप्रत्यये तस्मिन् कुत्वं णिलोपस्य स्थानिवत्त्वान्न प्राप्नोति।

*शास्त्रत इति*। यथा 'लिट्' 'धुक्' इत्यादौ "स्वौजस्" इत्यादि-शास्त्रतः प्रसक्तस्य स्वादेः "हल्ङ्याब्भ्य" इत्यादिना लोपविधानम्। त्यदा-लोप इत्यादिविषयसंग्रहाय *अर्थत इति*। *अवर्जनीयतयेति*। ...

ता उच्चारणकृता सत्ता निषिध्यते । तत्र प्रत्ययलोपे शास्त्रतो ऽर्थतश्च प्रसक्तोच्चारणस्य लोपविधानेन तस्य तस्मिन् विषये ऽनुत्पत्तेरेवान्वाख्यानं प्रत्ययलक्षणार्थमिति बोध्यम् । अर्थस्यैषा सञ्ज्ञा व्याख्यानात् ।

यत्तु प्रसक्तस्येति किं ? 'ग्रामे तिष्ठति' इत्यादौ "ल्यब्लोप इति पञ्चम्यापत्तेः । अस्ति चात्र ल्यपो ऽदर्शनम् । शास्त्रतो ऽर्थतश्च न तत्प्रसक्तिरिति न दोष इति । तन्न । तेन प्रत्यासत्त्या ल्यबन्तार्थकर्माधिकरणयोरेव पञ्चमीविधानेन तस्यात्राप्राप्तेः । तत्त्वे तु अस्त्येवार्थतो ल्यबन्तस्य प्रसक्तिः । तस्मात् 'त्रपु' इत्यत्र क्विपो ऽदर्शनसत्त्वेन प्रत्ययलक्षणेन तुगापत्तिर्दोषः । कृत्प्रत्ययेन प्रकृत्याक्षेपस्तु न । अत्रैव प्रकृतिं विना ऽतिदेशतः प्रत्ययज्ञानसत्त्वेन व्यभिचारात्तदाक्षेपासंभवात् ।

---

षयमानप्रयोजकसामग्रीसान्निध्याने तज्ज्ञानं न जायतामितीच्छायामपि तज्ज्ञानं भवत्येव । *तत्ससामग्रीति* । ज्ञानसामग्रीत्यर्थः । ननु यत्र लोपविधानं तत्र प्रसक्तवर्णकृतसत्तानिवृत्तिः शास्त्रतो लभ्यते न तु तस्य वर्णस्याभाव इति चेन्न । समनियताभावानामैक्यस्वीकारात् । ननु "स्वं रूपम्" इति शास्त्रसत्त्वाददर्शनशब्दस्यैषा संज्ञा स्यादत आह-*अर्थस्यैषेति* । लक्षणयाऽदर्शनप्रतिपाद्यस्योच्चारणकृतसत्ताभावस्य । *व्याख्यानादिति* । महासञ्ज्ञाकरणरूपात् । "निपातएकाजनाङ्" इति निर्देशाच्च । अदर्शनशब्दस्य सञ्ज्ञित्वे चानाङित्यस्य प्रथमान्तत्वमनुपपन्नमिति भावः । "स्वंरूपम्" इत्यस्य प्रत्याख्याने तु प्रकृतेऽर्थे कार्य्यबाधाभावेनार्थग्रहणे बाधकाभाव इति ।

ननु ग्रामस्य दर्शननिरूपिताधिकरणत्वमस्त्येवेत्यत आह-*तत्त्वे त्विति*। ननु पित्कृतः प्रत्ययत्वात्तेन प्रकृत्याक्षेपेण 'त्रपु' 'ततु' इत्यत्र न पूर्वोक्तदोष इत्यत आह-*कृत्प्रत्ययेनेति*। *अतिदेशतः*-प्रत्ययलोपशास्त्रतः, स्थानिवत्त्वेन, वा । यदि परदेशावच्छेद्यत्वविशिष्टप्रत्ययज्ञानस्य प्रकृतिज्ञानं व्यापकं स्यात्तदा कृत्प्रत्ययेन प्रकृतेरनुमानात्मकाक्षेपः स्यात्, तत्तु न सम्भवति अत्रैव व्यभिचारात् । प्रत्ययग्रहणपरिभाषया 'यस्मात्प्रत्ययविधिस्तदादेः' एव तुग् भविष्यतीत्यपि न वक्तुं शक्यम् । "उत्तमैकाभ्याम्" इति निर्देशेन यत्र प्रत्ययो निमित्तत्वेनाऽऽश्रीयते तत्र षष्ठ्यन्तस्य यस्मात्प्रत्ययविधिस्तदादेरित्यस्य नियमेनोपस्थितिः, तदा स्यात्, यदि निमित्तत्वेनाभिप्रेत-

इति पक्षे इति । विनिगमनाविरहादिति भावः । द्वित्वस्य त्रै- पादिकत्वात्तत्र न यणो बहिरङ्गासिद्धत्वम् । अत एव 'दध्यत्र' इति भाष्य उदाहृतम् । धकारयकारयोरिति । तेन विसर्गादिद्वित्वे- नाधिक्ये ऽपि न क्षतिः । द्विधमिति । द्विधत्वं प्रक्रियायां बोध्य- म् । 'एकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्या भविष्यति' इति "कृञ्चानुप्रयुज्यते (पा०सू०३।१।४०) इति सूत्रभाष्योक्तन्यायेनैकस्य द्वित्वे परस्य तदभावो ऽनुचित इति न वाच्यम् । सार्थकानेकवि- तन्न्यायाङ्गीकारात् । यत्रान्याकृतिकरणे भिन्नार्थत्वसम्भावना त- षयत्वाच्च । "हलो यमाम्" (पा०सू०८।४।६४) इति लोपे द्वित्वाभा- चैतदेव रूपम् ।

नादिन्या (पा०सू०८।४।४८) । "यरो ऽनुनासिके" (पा० सू०८।४।४५) इत्यतो यर इति वर्त्तते । पुत्रशब्दस्येत्यवयवषष्ठी । आदिनीशब्दे परे इति च प्राधान्याद् यर एव विशेषणम् । सू-

---

स्य तदाद्यन्तार्थसत्तां विना निमित्तत्वानुपपत्तिः स्यात् । सा चाधुना नेतिभावः ।

*विनिगमनाविरहादिति*। "यणो मय" एतयोर्मध्ये एकतरस्य पञ्चम्य- न्तत्वमेवापरस्य षष्ठ्यन्तत्वमेवेत्यत्र साधकयुक्त्यभावादित्यर्थः । *त्रैपा- दिकत्वादिति* । पक्षद्वये त्रिपाद्यां तदप्रवृत्तेरभिप्रेतत्वात् । ननु विसर्गादि- त्वेनाऽऽधिक्याच्चत्वारीत्यसङ्गतमत आह-*धकारयकारयोरितीति । न- एकस्य धकारस्य जश्त्वेन दकारात् द्विधत्वमनुपपन्नमतआह-*प्रक्रियायां- मिति*।'एकस्या आकृतेस्स्वरूपस्य कृतः प्रयोगो न द्वितीयस्यास्तृतीयस्य' इति न्यायो यथाऽन्यत्राऽऽश्रीयते, अतएव 'गवामश्ववानाञ्च स्वामी' इत्ये- प्रयोगो, न तु गवां स्वामी अश्वेषु च, इति । तथाऽत्रापि द्वित्वाकृतेर्धकारवि- षये प्रयोगे यकारस्यापि द्वित्वं बोधितं न तु तदभाव इत्यभिप्रायेणाऽऽशङ्कते *एकस्या इति*। अत एव 'व्रीहीणां यागसाधनत्वेनोपादाने यवोपादानं भवति । *सार्थकानेकेति* । अत्रार्थशब्दोऽभिधेयपरः फलपरश्च, प्रकृते द्वि- त्वविषये नैकस्यापि सम्भवः, गवां स्वामी अश्वेषु इत्युच्यमाने तु अश्वाना- मधिकरणत्वमपि प्रतिपत्तिविषयः स्यात् । तथा एकस्मिन्नेव यागे व्रीहि- यवयोरुपादानन्न भवति । फलभेदः स्यादिति भावः । *प्राधान्यादिति* अत एवात्र द्वित्वस्यासिद्धत्वात्प्रथममेकादेशे पुत्रादिनीत्यत्र पुत्रशब्दस्या- दिनीशब्दपरत्वं दुर्लभमित्यपास्तम् । *अत एव* । लुप्तसप्तम्यन्तत्वादे-

आदिनीति ङ्यन्तानुकरणं लुप्तसप्तमीकम् । अत एव "तत्परे च" इत्यस्य 'आदिनीशब्दो यस्मात्परस्तत्र परे' इत्यर्थं हरदत्तो व्याख्यत् अद्धातौ माधवोऽप्येवमेव । ईदृशाक्रोशस्य स्त्रीष्वेव दर्शनाच्च । आक्रोशो=निन्दा तदाह—पुत्रादिनीति । तादृशाक्रोशस्य स्त्रीष्वेव दर्शनादाह—पुत्रहतीति । "अनचि च" (पा०सू०८।४।४७) इति सिद्धे पुत्रस्य क्तान्ते चेद्धतजग्धयोरेव, आक्रोश एव, इति नियमार्थमिदम् ।

संयुक्तेष्विति । "त्रिप्रभृतिषु" (पा०सू०८।४।५०) इति सूत्रे वर्णानां सजातीयानामेव ग्रहणं परस्परसाहचर्यात् । न च तथाऽचः सम्भवति । अत एव "अचो रहाभ्याम्" (पा०सू०८।४।४६) इति सार्थकम् । निर्धारणे सप्तमी, अच इत्यनुवर्त्तते, त्रिप्रभृतिसंयुक्तवर्णमध्येऽचः परस्य यरो द्वे वा न स्त इत्यर्थः । तेन 'इन्द्रः' 'राष्ट्रम्' इत्यत्र नकारषकारयोः प्राप्तद्वित्वस्यैव निषेधविकल्पः । "अनचि च" (पा०सू०८।४।४७) "सर्वत्रशाकल्यस्य" (पा०सू०८।४।५१) इत्येव सिद्धे इदं सूत्रद्वयं विकल्पस्य मतभेदप्राप्तव्यवस्थाबोधनार्थमिति बोध्यम् । "यरोऽनुनासिके" (पा०सू०८।४।४५) इत्यतो वेत्यनुवृत्त्या "अनचि" (पा०सू०८।४।४७) इत्येव सिद्धे सूत्रत्रयमपि तथेति बोद्धयम् ।

अचो र (पा०सू०८।४।४६) । अच इति श्रुतत्वाद्व्याख्यानाच्च रहाभ्यां सम्बद्ध्यते । "तस्मादित्युत्तरस्य" (पा०सू०१।१।६७) इत्येतल्लभ्यमाह—अचः पराभ्यामिति ।

वा यमीति । "झयो हः" (पा०सू०८।४।६२) इत्यतो "अन्यतरस्याम्" इत्यनुवृत्तेरिति भावः । "दीर्घादाचार्याणाम्"(पा०सू०८।४।५) इत्युत्तरम् "अनुस्वारस्य ययि" "वा पदान्तस्य" "तोर्लि" "उदस्था" झयोहो" "शश्छोटि" इति षट्सूत्रीपाठोत्तरं "झ-

---

त्रिप्रभृतिष्वित्यस्य व्याख्याने संयुक्तेष्वित्युक्तन्तल्लाभोपायमाह—*त्रिप्रभृतीत्यादि* । अत्र सूत्रशब्दप्रयोगः सादृश्यात् । *अत एव* । त्र्यादिहलामेव ग्रहणादेव । *श्रुतत्वादिति* । श्रुतानुमितयोरिति न्यायात् । ननूत्तरसूत्रानुरोधेन यर एव विशेषणमुचितमत आह—*व्याख्यानादिति* । प्रत्यासत्त्या श्रुतविशेषणत्वस्य न्याय्यत्वरूपादित्यर्थः । *इत्यनुवृत्तेरिति*।

लां जश् झशि" "अभ्यासे चर्च" "खरि च" "वावसाने" "अणोऽप्रगृह्यस्य" इति पञ्चसूत्र्याः पाठ इति भाष्यसंमताष्टाध्यायीपाठे तु "वावसाने" (पा०सू०८।४।५६) इत्यतोऽनुवृत्तिर्बोध्या। स्पष्टश्चास्य वैकल्पिकत्वं लण्सूत्रे भाष्ये। आदित्य इति। आदित्यशब्दाच्छेषार्थण्यान्ताद्देवतार्थे ण्यः। "यस्येति च" (पा०सू०६।४।१४८) इत्यल्लोपेऽनेन यलोपः। "आपत्यस्य" (पा०सू०६।४।१५१) इति तु न। अपत्यत्वाभावात्। हल इति किम्? 'शय्या'। यमामिति किम्? 'आध्नोत्'। यमीति किम्? 'रामाभ्याम्'॥

एचोऽय (पा०सू०६।१।७८)। "इचोऽचि यणयवायावः" "अवावौ यि प्रत्यये" इति सूत्रयितुमुचितमित्याहुः। यथासंख्यसूत्रलब्धमर्थमाह—क्रमादिति। उदात्तादिगुणयुक्तानामन्यगुणकव्यावृत्तिस्तु स्थानेऽन्तरतमपरिभाषया बोध्या। एतदेवाभिप्रेत्य 'यथासंख्यं' (पा०सू०१।३।१०) सूत्रे भाष्ये प्रकृतसूत्रे "स्थानेऽन्तरतम" (पा०सू०१।१।५०) सूत्रेण व्यवस्थोक्ता 'संवृतावर्णस्य संवृतावर्णो विवृतावर्णस्य विवृतावर्ण" इति। एतद्भाष्यप्रामाण्येन 'एओ' इत्यनयोरकारांशे संवृतत्वम्। इतरांशे विवृततरत्वम्। तदुपरागाच्च न संवृतत्वस्य पृथग्ग्रहणम्। 'ऐऔ' इत्यनयोस्त्वकारांशेऽपि विवृततरत्वमेवेति बोद्धयम्।

तस्य लो (पा०सू०१।३।९) "उपदेशेऽच्" (पा०सू०१।३।२) इत्यत इदित्यनुवृत्त्या विभक्तिविपरिणामेन च सिद्धौ तस्य ग्रहणं स्पष्टार्थम्

इत्यतोऽन्यतरस्यां ग्रहणानुवृत्तेरित्यर्थः। *भाष्यसम्मताऽष्टाध्यायीपाठे त्विति*। "उदः स्थास्तम्भोः" इति सूत्रभाष्ये "उत्पूर्वस्कन्देश्छन्दस्युपसङ्ख्यानम्" इति वार्त्तिकस्य 'अघ्न्ये दूरमुत्कन्द' इत्युदाहरणे तथा 'रोगे चेति वक्तव्यम्" इति वार्त्तिकस्य 'उत्कन्दको रोगः' इत्युदाहरणे च "उदः स्था" इति सूत्रस्थवार्त्तिकनिष्पन्नसकारस्थानिकथकारस्य चर्त्वेन तकार एव। अन्यथासाभावे तु चर्त्वदृष्ट्या थकारभावेन तकारघटितरूपासिद्धिः स्यात्। *शेषार्थेति*। इदमार्थे।

*लाघवादाह*—इचोऽचीति। ननु "अवावौ यि प्रत्यये" इति न्यासे 'तोष्ट्रूयते' इत्यादावतिप्रसङ्ग इति चेदेतन्न्यासेऽपि यथासंख्यसूत्रेण सम्बन्धो बोध्यः। अत्राहुरित्यनेनापाणिनीयत्वरूपारुचिस्सूचिता। नन्वकारस्य विवृतोपदेशस्यैव करणात्संवृतावर्णस्येत्ययुक्तमत आह—*एत

र्वलोपार्थं । तेन ञिदुड्डनामन्त्यस्य लोपो न । "नानर्थके" इति परिभाषा तु भाष्ये प्रत्याख्यातैवेति दिक् । न भवतीति । फलाभावादिति भावः ।

वान्तो (पा० सू० ६।१।७९) । "येन विधिः"(पा० सू० १।१।७२) इत्यस्यापवादभूतया "तस्मान्नुडचि" (पा० सू० ६।३।७४) इत्याद्यर्थमावश्यिकया वाचनिकया "यस्मिन्विधिस्तदादावल्ग्रहण इति वार्त्तिककृदुक्तपरिभाषया लब्धमर्थमाह—यकारादाविति । ओदौतोरिति । "ओदौतोरिति वक्तव्यम्" इति वार्त्तिकमूलाद् व्याख्यानादिति भावः ।

'पूर्वसूत्रे वान्तौ प्रति तयोरेव स्थानित्वनिर्णयात्' इति स्थानेऽन्तरतमसूत्रस्थकैयटोक्तं तु न युक्तम् । वान्तज्ञानाय सूत्रपर्यालोचनस्याऽऽवश्यकत्वेऽपि तद्वाक्यार्थपर्यालोचने मानाभावात् । यथासंख्यसूत्रसहकारेण बोधोत्तरं तयोस्तत्त्वनिर्णयात् । अन्तरतमपरिभाषया निर्वाहे तु लक्ष्यपर्यालोचनकाले तन्निर्णयः । अत एव पूर्वसूत्रे 'स्थानिविशेषलाभो यथासंख्यसम्बन्धादिह तु निमित्ताभावात्तल्लाभाभावः' इति षष्ठे प्रकृतसूत्रे कैयटः । गव्यमिति । भत्वाद्वलोपो न । यीति किम् ? 'गोभ्याम्' । प्रत्यये किम् ? गोयानम्' ।

---

स्येति* । *भाष्येप्रत्याख्यातेति* । अलोऽन्त्यात्सूत्रस्थभाष्ये प्रत्याख्यातेत्यर्थः । फलानामन्यथासिध्या । *तस्मान्नुडचीत्यादीति* । आदिना नेड्वशीत्यादेः परिग्रहः । परिभाषार्थस्तु अल्गृह्यते येन शब्देन तस्मिन् सप्तम्यन्ते यो विधिः स तदादौ बोध्य इति न युक्तः । "इको यणचि" इत्यादावपि तदादिविध्यापत्तेः । किन्तु गृह्यते इतरभिन्नत्वेन ज्ञायते येन तद् ग्रहणम् । अल् च तद्ग्रहणञ्चेति समासः । विशेषणस्यापि पूर्वनिपातप्रकरणस्यानित्यत्वात्परनिपातः । यस्मिन्निति सप्तम्यन्तानुकरणम् । तथा च सप्तम्यन्ताऽल्रूपे विशेषणे यो विधिः स तदादौ बोध्यः । प्राचीनसम्मतप्रकारं दूषयति *पूर्वसूत्र इत्यादि* । तथा च यदि वाक्यार्थपर्य्यालोचनं स्यात्तदा ओकारौकारयोर्वान्तादेशस्थानित्वनिर्णयः स च न सम्भवतीति भावः ।

कैयटस्यापि पूर्वापरविरोध इत्याह—*अत एवेति* । "ओदौतोरिति वक्तव्यम्" इति वार्त्तिकोपपादकोऽयं ग्रन्थः । *गोयानमिति* । ननु "वा-

ननुः 'गव्यूतिः' इत्यत्र वस्य "लोपः शाकल्यस्य" (पा०सू० ८।३।१९) "हलि सर्वेषाम्" (पा०सू०८।३।२२) इति वा लोपः स्यादत आह–वान्त इत्यत्रेति। न च विशेषविहितेन कार्यित्वेन लोपे वस्य निमित्तत्वबाध इति वाच्यम्। निमित्तत्वानाक्रान्ते विषये कार्यित्वस्य चारितार्थ्यात्। तक्रकौण्डिन्यन्यायश्चानवकाशविषयो विधेयविषयश्चेति स्पष्टं "तद्धितेष्वचाम्" (पा०सू०७।२।११७) इति सूत्रे यङ्विधायके च भाष्ये। अन्त्ये "उत्तरयोर्विग्रहेण विशेषासंप्रत्यया-

---

न्त" इति सूत्रे प्रत्ययग्रहणाभावे "गव्यूति" इत्यस्यानायासेन सिद्धौ "गोर्यूतौ" इति वचनान्नियमार्थम्। अप्रत्ययादौ चेत् यूतावेवेति। एवं च 'गोयानम्' इत्यस्य व्यावृत्तिः सिद्धैवेति चान्त इति सूत्रे प्रत्ययग्रहणं व्यर्थमिति चेन्न। यूतौ चेद् गोशब्दस्यैव, गोशब्दस्य चेद् यूतावेवेति वा नियमोऽपि संभाव्येत। एवं च 'गोयानम्' इत्यत्र तद्व्यावृत्त्यर्थं प्रत्ययग्रहणस्यावश्यकत्वात्। *"हलि सर्वेषाम्" इति लोपः स्यादिति*। एवं चैतदर्थं तत्र वकारोऽप्यनुवर्त्तत इति भावः।

*निमित्तत्वबाध इति*। एवञ्च वान्त इत्यत्र वकारात्पूर्वं वकारप्रश्लेषे वकारलोपो न स्यादिति भावः। तदप्राप्तियोग्ये विषयेऽचारितार्थ्यं बाधकत्वे बीजं तदत्र नास्तीत्याह–*निमित्तत्वानाक्रान्त इति*। ननु माभूत् येन नाप्राप्तिन्यायेन बाधस्तक्रकौण्डिन्यन्यायेन तु स्यादत आह-*तक्रेत्यादि*। तथा च येन नाप्राप्तिन्याय एवास्यान्तर्भावः। *विधेयविषयश्चेति*। विधीयमानदधिदानस्यैव बाधकत्वदर्शनात्। अत्रार्थे मानं दर्शयितुमाह–*तद्धितेष्वचेति* तत्र हि "तद्धितेष्वचामादिवृद्धौ अन्त्योपधलक्षणाया वृद्धेः प्रतिषेधो वक्तव्यः" क्रौष्ट्रो जागत इति। ननु तद्धितेष्व चामादिवृद्धिरन्त्योपधलक्षणां वृद्धिं बाधिष्यते, कथमन्यस्योच्यमानाऽन्यस्य बाधिका स्यात्। असति खल्वपि सम्भवे बाधनम्भवति। अस्ति च सम्भवो यदुभयं स्यात्, लोकविज्ञानात्सिद्धम् सत्यपि सम्भवे बाधनम्भवति, तद्यथा ब्राह्मणेभ्यो दधि दयिताम् तक्रं कौण्डिन्यायेति, सत्यपि सम्भवे दधिदानस्य तक्रदानन्निवर्त्तकम्भवति। एवमिहापि सत्यपि सम्भवेऽचामादिवृद्धिरन्त्योपधलक्षणां बाधिष्यते। विषम उपन्यासः, नाप्राप्ते दधिदाने तक्रदानमारभ्यते तत्प्राप्ते आरभ्यमाणं बाधकं भवति। इह पुनरप्राप्तायामन्त्योपधलक्षणायां वृद्धौ अचामादिवृद्धिरारभ्यते "सुश्रुत् सौश्रुतः" एतेन वचनेनैवाऽऽदिवृद्धिर्यत्र तत्रान्त्योपधालक्षणा वृद्धिर्निवर्त्तनीयेति सूचितम् पुष्करसच्छब्दपाठाद्वेत्युक्तम्।

*अन्त्ये इति*। "धातोरेकाचो हलादेः" इति सूत्र इत्यर्थः। *अ

न्नित्यग्रहणानर्थक्यं, क्रियासमभिहारे च नैतेभ्यो यङा भवितव्यम्" इति भाष्ये चेन विशेषासम्प्रत्ययादित्यनुकृष्यते। अन्यथा तक्रकौण्डिन्यन्यायेन सिद्धे विशेषासंप्रत्ययादित्यनुकर्षकचकारवैयर्थ्यापत्तिः। निरूपयिष्यते चेदं यङन्ते। तस्य च वार्त्तिकेऽनुवृत्त्या यूतौ श्रूयमाणवकारान्त आदेश इत्यर्थः। सूत्रे तु न फलं, गव्यादौ भत्वेन वान्तस्य पदत्वाभावात्, लव्ये स्वत एव तदभावात्,लोपाप्राप्तेः। गोशब्दादिभ्यः क्यजादावपि "नःक्ये" (पा०सू०१।४।१५) इति नियमेन पूर्वस्य पदत्वाभावात्। एवन्तर्हि वार्तिक एव प्रश्लेष उचित इत्याशयेनाह-छकाराद्धेति। "लोपो व्योः" (पा०सू०६।१।७६) इति सूत्रे वकारप्रत्याख्यानं तु लौकिकोदाहरणाभावेन तदर्थतया बोद्धव्यम्। अत एव "इको गुण" (पा०सू०१।१।३) इति सूत्रे "अतो-लून्तस्य" (पा०सू०७।२।२।) इत्यत्र 'लुप्तनिर्दिष्टो वकार' इत्युक्तं

रयोरिति*। "नित्यं कौटिल्ये गतौ" 'लुपसदचर" इति सूत्रयोरित्यर्थः। नित्यग्रहणस्य लुपसदेत्यत्राप्यनुवृत्तेः सम्भावनायामिदम्। वस्तुतस्तु "उत्तरयोर्विग्रहेण विशेषासम्प्रत्ययान्नित्यग्रहणानर्थक्यम्" इति वार्त्तिकं यद्यपि सम्प्रत्युपलभ्यमानभाष्यपुस्तके "नित्यं कौटिल्ये" "लुपसद" इति सूत्रद्वयपाठानन्तरमुपलभ्यते तथापि पूर्वसूत्रस्थमत्र पतितम्। तत्र प्रथमसूत्रविषये भाष्ये उक्तम् 'न हि कुटिलं क्रामतीति चङ्क्रम्यत इति गम्यते'। अत्र कैयटः 'चङ्क्रम्यत इत्यस्मात् योऽर्थः प्रतीयते नासौ कुटिलं क्रामतीति वाक्येन शक्यः प्रत्याययितुम्' इति तदर्थानभिधानादेव वाक्यं न भविष्यति कुटिलं पन्थानं क्रामतीति सम्प्रतीयत इति भावः। द्वितीयसूत्रविषये आह-'अथैतेभ्यः क्रियासमभिहारे यङा भवितव्यम् क्रियासमभिहारे च नैतेभ्यो भवितव्यम्। भृशं जपति ब्राह्मणो भृशं समिधो दहतीत्येव'। अत्र भाष्ये क्रियासमभिहारे चेत्यत्र यश्चकारस्तेन विशेषासम्प्रत्ययादित्यस्य सम्बन्धाद्भृशं जपतीत्याद्यर्थे विशेषस्य यङन्तादप्रत्ययादित्यर्थः।

यत्तु कैयटः। 'तक्रकौण्डिन्यन्यायेन कौटिल्यभावगर्हाभ्यां यङः क्रियासमभिहारादाच्छिद्य स्वीकृतत्वादिति भाव' इति। तन्न। विशेषविहितेन सामान्यविहितं बाध्यत इति हि न्यायो लोके शास्त्रे च प्रसिद्धस्तत्र विहितपदोपादानसामर्थ्येन विधीयमानयोरेव बाध्यबाधकभावः प्रतीयते। न त्वनूद्यमानयोः। यदि त्वत्रापि न्यायेन स स्यात्तर्हि विशेषासंप्रत्ययादित्यनुकर्षकचकारवैयर्थ्यमेव स्यादिति भावः। *तस्य चेति*। प्रश्लिष्टवस्य

भाष्ये। शास्त्रीयसौत्रप्रयोगार्थं तदिति तदाशयः। न चैवं 'विष्णवे' इत्यादौ "तस्य लोपः" (पा०सू०१।३।९) इति दुर्वारं 'गव्यूतौ' उच्चारणस्य चारितार्थ्यादिति वाच्यम्। "गवि च युक्ते" इत्यादिनिर्देशैर्वारणात्।

परे तु सा पूर्वपक्ष्युक्तिरिति न वकारप्रश्लेषो लोपेनोचितः किञ्च छन्दसि सर्वविधीनां व्यवस्थितत्वान्न वलोपप्रसक्तिस्तत्रत्ये गव्यूतौ। अध्वपरिमाणे ऽपि संज्ञाशब्दोऽयम्, तत्र संज्ञात्वभङ्गापत्तेः वलोपः। यथा 'रघुनाथ' इतिसंज्ञा शब्दे नित्यस्यापि णत्वस्याभावः सर्वनामशब्दे णत्वाशङ्का तु तस्य सञ्ज्ञिविशेष आधुनिकविनियोगाः शास्त्रानुसारिशब्दस्यैव विनियोग उचित इत्यभिप्रायेण। निरूपितं चैतत्सर्वादिसूत्रे भाष्यप्रदीपोद्योते इत्याहुः। निरूपयिष्यते च "पूर्वपदात्सञ्ज्ञायाम्" (पा०सू०८।४।३) इतिसूत्रे। (१)

---

चेत्यर्थः। ननु "लोपो व्योः" इति सूत्रे स्थितस्य वकारस्य भाष्यकृता व्याख्यानाद्वकारप्रश्लेषे तन्निवृत्तिर्न स्यादत आह-*लोपो व्योरिति*।

मूलं खण्डयति। *परे त्विति* सा पूर्वप्रदर्शिताऽतोल्रान्तस्येत्यत्र लुप्तनिर्दिष्टो वकार इति भाष्योक्तिः। *पूर्वपक्ष्युक्तिरिति*-तथाहि-'उरार्थं सिजर्थं वृद्धिग्रहणं कर्तव्यम्' इति वृद्धिग्रहणस्य प्रयोजनं कथन्यनुवीत्, न्यधुवीदित्यत्र क्ङिति मा भूत्' इति प्रयोजने च प्रतिपादि 'नैतदस्ति प्रयोजनम्। अन्तरङ्गत्वादत्रोवङादेशे कृतेऽनन्त्यत्वाद् वृद्धिर्भविष्यति। यदि तर्हि सिच्यन्तरङ्गम्भवति। अकार्षीत्। अहार्षीत्। गुणे रपरत्वे चानन्त्यत्वाद् वृद्धिर्न प्राप्नोति। मा भूदेवम्। हलन्तस्येत्येवम्भविष्यति। इह तर्हि। न्यस्तारीत् न्यदारीत्। गुणे रपरत्वे चानन्त्यत्वाद् वृद्धिर्न प्राप्नोति। माभूदेवम्। ल्रान्तस्येत्येवम्भविष्यति। इह तर्हि अलावीत् अयावीत्। गुणेऽवादेशे चानन्त्यत्वाद् वृद्धिर्न प्राप्नोति। माभूदेवम् ल्रान्तस्येत्येवं भविष्यति। ल्रान्तस्येत्युच्यते न चेदं ल्रान्तम्। ल्रान्तस्येत्यत्र वकारोऽपि निर्दिश्यते। किं वकारो न श्रूयते। लुप्तनिर्दिष्टो वकार इत्येवं पूर्वपक्षिणोक्ते ह्म्यन्तेतिसूत्रे णिश्विग्रहणेन ज्ञापकेन 'सिच्यन्तरङ्गं नास्ति' इति प्रतिपादिते वकारप्रश्लेषस्य न फलमिति स्पष्टमेव। मूले प्रयोजनमप्यन्यथासिद्धमित्याह-*किञ्चेत्यादि*।

---

(१) उच्छृङ्खलानुयायिनस्तु गोशब्दस्य विजन्त 'अन्' शब्देन सह समासे "गोऽन्" इत्यवस्थायां "सुप आत्मनः क्यच्" इति क्यचि "नः क्ये" इत्यनेन नान्तत्वात् पदसंज्ञायाम्। "नलोपः प्रातिप

धातोस्त (पा०सू०६।१।८०)। धातोरित्यस्याभावे प्रातिपदिकमात्रविषयो नियमः स्यात्। तथा च 'गव्यम्' इत्यत्र न स्यात्। 'ओयते' इत्यत्र च स्यात्। तदभावे सामान्यतो नियमापादनन्तु योगविभागैर्वकारवैयर्थ्यापत्तेरयुक्तम्। 'तन्निमित्तस्य चेद्धातोरेव' इति नियमे वाभ्रव्यासिद्धेस्तद्वारणायैवकारः। लव्यमित्यादि। अत्र गुणवृद्ध्योर्यण्यन्निमित्तकत्वेनैचो यादिप्रत्ययनिमित्तकता। तन्निमित्तस्येति किमिति। सूत्रमेव किमर्थमिति प्रश्नः। ओयत इति। वेञः कर्मणि लटि यकि यजादित्वात्संप्रसारणे "अकृत्सार्व" (पा०सू०७।४।२५) इति दीर्घे आङा सहाऽऽद्गुणः। "नधातुलोप(पा०सू०१।१।४) सूत्रभाष्यरीत्या बहिर्भूतधातूपसर्गकार्यस्य बहिरङ्गत्वाद्वान्तादेशे गुणोऽसिद्ध इत्यरुचेराह—औयतेति। तस्मादेव कर्मणि लङि आडागमे वृद्धिः। शेषं पूर्ववत्।

---

धातोस्तन्निमित्तेतिसूत्रे धातुग्रहणाभावे प्रातिपदिकाविषयो वा सामान्यतो वा नियमः स्यात्। तत्र क्रमेण दूषणमाह—*धातोरित्यस्याभाव इति*। न चास्मिन् सूत्रे धातुग्रहणसत्त्वे क्विबन्तभूशब्दात् "उगवादिभ्यो यत्" इति यति गुणे 'धातोः कार्यमिति' परिभाषयाऽवादेशो न स्यादिति वाच्यम्। यत्र कार्यविधौ धातुत्वाश्रयस्य समुदायस्योद्देश्यत्वेनोपादानं तत्र तत्परिभाषाप्रवृत्तेः। *न धातुलोपसूत्रभाष्यरीत्येति*। यथा तत्र धातुग्रहणभावे 'उपेद्धः' 'प्रेद्ध' इत्यत्र जायमान आद्गुणोऽपि निषिध्येतेति प्रयोजनस्यान्तरङ्गनिषेधदृष्ट्या बहिरङ्गगुणस्यासिद्धत्वात्खण्डनङ्कृतम्।

न चात्र सूत्रे एवकाराभावेपि सिद्धे सतीति न्यायेन नियमो भविष्यतीति वाच्यम्। एवंकारस्येष्टतोऽवधारणार्थत्वात्। अन्यथा तन्निमित्तस्यैचश्चेद्वान्तादेशस्तदा धातोरेवेत्यपि सम्भाव्येत। अत्रेष्टापत्तिस्तु न सम्भवति। तथा सति बभ्रुशब्दादपत्येऽर्थे "मधुबभ्र्वोर्ब्राह्मणकौशिकयोः" इति सूत्रेण यञि कृते "बाभ्रव्य" इत्यत्र वान्तादेशो न स्यात्। ननु "तन्निमित्तस्य" इत्यस्य 'ओयते' 'औयत' इत्येव यदि प्रत्युदाहरणन्तदा "न यकि" इत्येव सूत्रं लाघवात्कर्तव्यम्। पूर्वसूत्रप्राप्तस्य वान्तादेशस्य प्रतिषेधेन लक्ष्यसिद्धिर्निर्बाधेति।

---

स्य" इत्यनेन नकारस्य लोपः। ततो "वान्तो यि प्रत्यये" इत्यनेन अवादेशे "गव्यति" इत्यादौ पदान्तवकारस्य लोपवारणाय वकारप्रश्लेष आवश्यकः। प्रकृते च 'अन्तादिवच्च' इति सूत्रस्य विषय एव न। 'अचः परस्मिन्' इति स्थानिवद्भावः कथञ्चित् सम्भावयिष्यते इति दुराग्रहश्चेत्, अत्र पदान्तविषयत्वात् 'नपदान्त' इति निषेधो दुर्वार एवेत्याहुः।

क्षय्यजय्यौ (पा०सू०६।१।८१)। "क्षि क्षये" "जि जये" इत्यन-
योरेव ग्रहणं। न तु "क्षीष् हिंसायाम्" "क्षै जै क्षये" इत्यनयो-
र्व्याख्यानात् (१)। अत एव 'क्षिज्योरेवैच:' इति भाष्ये उक्तम्।

तस्मै प्रेति। क्रयार्थे वस्तुनि क्रय्य इति निपात्यत इत्यर्थो
व्याख्यानात्। गुणभूतस्यापि तदा परामर्शः। क्रयार्थत्वञ्च फलोप

अत्र केचित्। गोशब्दादाचारक्विबन्तात्कर्त्तरि क्विपि गोषु सा-
धुरित्यर्थे "तत्र साधुः" इति यति वान्तादेशस्यापत्तेरिति। तन्न। व-
व्रजेतिसूत्रोतः श्यनीतिसूत्रस्थभाष्यविरोधात्। *प्रथमे* 'हल्ग्रहणं कि-
मर्थम्? समुच्चयो यथा विज्ञायेत। अज्ग्रहणादेव समुच्चयो भवि-
ष्यति? वदिव्रज्योरचश्चेति। अस्त्यन्यदज्ग्रहणे प्रयोजनम्। वदिव्रजिवि-
शेषणं यथा विज्ञायेत। वदिव्रज्योरच इति। अथ वा एतदपि न ब्रूयात्
अत इति वर्त्तते। इदन्तर्हि प्रयोजनम्। हलन्तस्य यथा स्यादजन्तस्य
माभूत्। कस्य पुनरजन्तस्य प्राप्नोति। अकारस्य। अचिकीर्षीत्। अजि-
हीर्षीत्। लोपोऽत्र बाधको भविष्यति। अकारस्य तर्हि प्राप्नोति। अयासीत्
अवासीत्। नास्त्यत्र विशेषः। सन्ध्यक्षरस्य तर्हि प्राप्नोति। न वै सन्ध्यक्ष-
रमन्त्यमस्ति' इत्युक्तम्। गोशब्दादाचारे क्विप्सत्त्वे एतद्विरोधः स्पष्ट एव।
*अन्त्ये* 'ओतः शितीति वक्तव्यम्। किम्प्रयोजनम्। ष्ठिवुक्लमिवितिसूत्रे शि-
तीति न वक्तव्यम्। ननु च श्यन्ग्रहणेऽपि शमामष्टानामित्यत्र श्यन्ग्रहणं
न कर्त्तव्यम्। तत्रापि शितीत्येव सिद्धम्' इत्युक्तम्। ओकारान्तेभ्य आ-
चारे क्विप्सत्त्वे शितीत्युच्यमाने लोपः प्राप्नोति श्यनीति न्यासे तु नेति
फलभेदः स्पष्ट एव।

अत्राहुः। न यकीति न्यासे 'लावयतेर्लौः' 'पावयतेः पौः' जनानवतीति
'जनौः'। एभ्यः सप्तम्यन्तेभ्यः "तत्र साधुः" इति सूत्रेण यति "धातोस्त-
न्निमित्त" इतिन्यासे वान्तादेशो न भवति स प्राप्नोति। न चाचः परस्मि-
न्निति वृद्धेः स्थानिवत्त्वम्। अपूर्वविधित्वात्। णिलोपस्यापि न, आदि-
ष्टादचः पूर्वत्वात्। क्वौ लुप्तमिति निषेधाच्चेति दिक्।

क्षिज्योरेव ग्रहणं व्याख्यानादित्युक्तं तदेव व्याख्यानं स्पष्टयति-*अत
एवेति*। "क्रय्यस्तदर्थे" इत्यत्र प्रधानक्रयणकर्मणो न तच्छब्देन परा-
मर्शस्तदर्थशब्दोपादानसामर्थ्याद्, अतो गुणभूतक्रयणक्रियाया एव परामर्श
इत्याशयेनाह-*व्याख्यानाद्गुणभूतस्यापीति*। सर्वनाम्नां प्रधानपरामर्श

(१) अत्रलक्षणप्रतिपदोक्तपरिभषयैव वारणसम्भवात् व्याख्यानपर्यन्तानुधावनं विफलमेवेति
स्याचिच्छंका निष्फलैव। स्वीयोद्देश्यतावच्छेदकज्ञानायोपयुज्यमानानुपूर्वीमत्पदघटितशास्त्रविधेयत्व
प्रतिपदोक्तस्यात्र विषय एव न।

धानरूपं तदर्थे इति विशेषणात्तदाह—क्रेतार इति । योग्यतामात्रग्रहणे त्वव्याप्तिकं तत्स्यादिति भावः । केचित्तु स्वीयं धान्यादि दत्त्वा यत्र तन्मूल्यग्रहणं तत्र धान्यं क्रय्यम् । द्रव्ये तु न क्रय्यत्वं नापि क्रेयत्वं, किं तु धान्यादेरेव शक्तिस्वभावात् । भाष्यस्वरसो ऽप्येवमेवेत्याहुः ।

लोपः शा (पा०सू०८।३।१९) "भोभगोअघोअपूर्वस्य" (पा० सू०८।३।१७) इति "अशि" इति चानुवर्त्तते तत्रौकारान्तेषु "ओतो गार्ग्यस्य" (पा०सू०८।३।२०) इति बाधकमित्याशयेनाह—अवर्णपूर्वयोरिति । व्योरित्यनुवृत्तावपि वर्णसमाम्नाये यकारस्य प्राक्पाठात्तत्क्रमेणाह—यवयोरिति । 'स तस्मा आचष्टे' इत्यादिभाष्यप्रयोगादत्र रोरित्यस्यासम्बन्धः । इदं सूत्रं लघुप्रयत्ने न । शाकटायनमते तयोर्विधानेन शाकल्यमते तदभावात् ।

अवर्णेति किम् ? 'गौर्यत्र' । पदान्तयोः किम् ? 'हरये' । अशि किम् ? वृक्षं वेतीति वृक्षवीः, क्विप् तमाचष्टे इति ण्यन्तात् विच् । 'वृक्षव् करोति । क्विपि तूठ् स्यात् । विज्निमित्तको "लोपो व्योः" (पा०सू०

---

कत्वमित्युत्सर्गः ।

दश्यते राजमातङ्गास्तस्यैवामी तुरङ्गमाः' ।

इत्यत्र यथा । तदर्थत्वञ्च तन्निरूपितफलोपधानात्मकं तज्जनकत्वम्, न तु स्वरूपयोग्यत्वं, विशेषणोपादानसामर्थ्यात् तदाह—*क्रयार्थत्वञ्चेति* । *केचित्त्विति* । अयम्भावः । क्रय्यशब्दे विक्रये क्रीणातिर्वर्त्तते । एवञ्च यद्धान्यं विक्रीतं तत्क्रय्यम् । तत्र विक्रेत्रा मदीयामिदं क्रय्यमिति व्यवहर्त्तव्यम् । येन तु धान्यं क्रीतन्तेनेदं धान्यं क्रेयमित्येव वक्तव्यम् । शब्दशक्तिस्वभावात् । तत्सूत्रस्थभाष्याच्च । एवं हि तत्र भाष्यम् । 'तदित्यनेन किम्प्रतिनिर्द्दिश्यते । स एव क्रीणात्यर्थः । इह माभूत् । क्रेयं नोधान्यम् । क्रेतव्यमिति तदर्थः । न चास्ति क्रय्यम्' इति ।

अयमभिप्रायः । अत्र क्रीणातिर्विक्रये वर्त्तते । तथा च यत्र मया विक्रीतमितिव्यवहारस्तत्र क्रय्यमिति भवति । तथा व्यवहारयोग्यता च धान्यस्यैव न द्रव्यस्य । येन तु स्वीयं द्रव्यं दत्वा धान्यं क्रीतं तं प्रति केनचित्पुरुषेणोक्तम् इदं धान्यमस्मभ्यन्देयमिति तदा स क्रेता एवमुत्तरं ब्रूयात् क्रेयन्नो धान्यमिति । अयमेव भाष्यस्वरसः ।

६।१।६६) इति लोपस्तु न। णिलोपटिलोपयोः स्थानिवत्त्वात्। प्रा-
तिपदिकाण्णिजुत्पत्त्या पदत्वाभावेन परपदस्थाजादेशाभावेन च लो-
पस्य पदचरमावयवत्वाभावेन च "न पदान्त" (पा०सू० १।१।५८)
इति निषेधाप्रवृत्तेः। एतेन विज्निमितको वलोपो ऽत्र दुर्वार इत्यपास्त-
म्। किंच स्थानिवत्त्वनिषेधं विनाऽस्य पदान्तत्वासिद्ध्यात्र निषेधा-
प्रवृत्तिः। स्थानिवत्त्वनिषेधज्ञाने पदान्तत्वज्ञानं तन्निर्णये च स्थानि-
वत्त्वाभावज्ञानमित्यन्योन्याश्रयस्तत्राप्रवृत्तौ मानम्। इदञ्च 'नपदान्त'
सूत्रे भाष्ये स्पष्टम्।

न च पदसञ्ज्ञायां टिलोपस्य स्थानिवत्त्वाद्वस्य पदान्तत्वम-
नासीत्यशीति व्यर्थमिति वाच्यम्। "पूर्वत्रासिद्धीये" इति निषेधा-
साक्षात् पदत्वादिद्वारकपरम्परया वा पूर्वत्रासिद्धीयप्रापकस्य प्रति-
न्धकस्य वाऽतिदेशस्य तेन निषेधादिति केचित्।

परे तु 'न पदान्ता हलो ऽणः सन्ति' इति लण्सूत्रस्थभा-

---

*प्रातिपदिकाण्णिजुत्पत्त्येति*। "प्रातिपदिकाद्धात्वर्थे" इत्यनेन त-
न च "तत्करोति तदाचष्टे" "तेनातिक्रामति" इतिविभिन्नविभक्तिनि-
र्देशात्सुबन्तात् णिजिति लभ्यते तत्कथमुक्तम्प्रातिपदिकादितीति वा-
च्यम्। तत्तेनेत्यनेन कर्मत्वाद्यर्थान्तर्भावेन वृत्तिप्रदर्शनमात्रं क्रिय-
णिच् तु प्रातिपदिकादेवेत्याशयात्। *पूर्वत्रासिद्धीय इति*। न
पदसंज्ञायां यथोद्देशत्वस्यैव सिद्धान्तितया पदसंज्ञाया अत्रैपादि-
त्वेन कथं "पूर्वत्रासिद्धे न स्थानिवत्" इतिनिषेध इति वाच्यम्
साक्षात्पदत्वस्यात्रैपादिकत्वेऽपि पदत्वद्वारकपरम्परया पूर्वत्रासिद्धीय-
पप्रतिबन्धकस्य स्थानिवत्त्वस्यानेन निषेधात्। *न पदान्ता हलो
इति*। यद्यपि लण्सूत्रे भाष्ये 'न हि पदान्ताः परेणः संति' इ-
पाठ उपलभ्यते तथापि तदग्रे तत्रैव 'ननु चायमस्ति कर्तृ हर्तृ' इति
र्शितम्। तेनाज्रूपस्याणः सम्भवाद्धलोऽप्रदर्शनाच्च पदान्ता हलो न
न्तीति गम्यत इत्यभिप्रायेणेह हलोऽण इत्युक्तम्।

न च सुध्युपास्य इत्यादौ पदान्तस्य हलोऽणो दर्शनादिदमसं-
मिति वाच्यम्। प्रकृतिकार्यभाजो न सन्तीति तदर्थात्। 'अणोऽप्र-
स्य' इति सूत्रे 'अण्प्रत्याहारः पूर्वेण न परेण कुत एतत्? पराभावात्
हि पदान्ताः परेणः सन्ति। 'ननु चायमास्ति कर्तृ हर्तृ'। यद्यप्यनुनासि-
विधौ पदान्ताधिकारो नास्ति तथापि पदान्तानामेवावसानेऽनुनासिको

न्यादु वृक्षवादेरनभिधानमेव । "भोभगो" इति सूत्रे "अश्ग्रहणमनर्थक-मन्यत्राभावात्" इति वार्त्तिकाच्च । अशोऽन्यत्र तन्निमित्तकार्यिणोऽभावादिति तदर्थः । 'न ह्यन्यत्र रुरस्ति' इति तद्व्याख्यानभाष्ये रुग्रहणमुपलक्षणम् । एतदाशयमजानानैकदेशिना 'उत्तरार्थं "हलि सर्वेषाम् (पा०सू०८।३।२२) इति 'वृक्षव् करोतीत्यत्र मा भूत्' इत्युक्तम् । अस्य चैकदेश्युक्तित्वं लण्सूत्रस्थोक्तभाष्यविरोधेन स्पष्टमेव कैयटेनोक्तम् । अत एव भाष्ये उत्तरार्थमित्युक्त्वा 'हलि सर्वेषाम्' इत्यत्रैव प्रयोजनमुक्तम् । हलि सर्वेषामित्यत्र वकारनिवृत्त्यैवात्र तद्वारणसम्भवान्न तत्राप्यश्ग्रहणस्य प्रयोजनमिति तद्भाष्यमेकदेश्युक्तिरेवेत्याहुः । कानि सन्तीति । वाक्यसंस्कारपक्षेऽपि (१)पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गाणां पूर्वं प्रवृत्तिरितीकारादेः स्थानिभूतादचः पूर्वत्वं बोद्धयम् ॥

एकः पूर्व (पा०सू०६।१।८४) गुण इत्यादेर्विधेयसमर्पकत्वेन तत्रैकत्वसंख्याया विवक्षणेनोभयोः पूर्वपरयोरेकत्रान्वयतयैव विधेयान्वयेन च 'अनयोः पूलयोः कटं कुरु' इत्यादित इवोभयसम्बन्ध्येकविधेयस्यैव प्रतीतेरेकग्रहणं स्पष्टार्थम् ॥

---

धीयत इत्यभिप्रायेणेह पदान्ता इत्युक्तम । वृक्षवादेः प्रामाणिकत्वेऽनुनासिकयोग्यस्य परस्याप्यणः सम्भवादिदमसंगतमेव स्यात् । सुध्युपास्य इत्यादौ तु यणोऽनुनासिकप्रवृत्तियोग्यत्वाभावेन तत्सत्त्वे बाधकाभावात् । अत्रैव गमकान्तरमाह—*भोभगो इतीति* । तत्रत्यवार्त्तिकेन कथमेतल्लब्धमत आह—*अशोऽन्यत्रेति* । एतन्निमित्तकार्यस्य कार्यिणोऽभावादित्यर्थः । अस्मिन्नर्थे तदग्रिमव्याख्यानभाष्यविरोध इत्यत आह—*न ह्यन्यत्रेत्यादि* । *अत एव* । प्रकृतसूत्रेऽश्ग्रहणस्य प्रयोजनाभावादेव ।

*वाक्यसंस्कारपक्ष इति* । यद्यप्यस्मिन्पक्षे सर्वकार्याणां युगपत्प्राप्तिः तथापि येन क्रमेण वर्णश्रवणं तेनैव क्रमेणान्तरङ्गत्वाच्छब्दसंस्कारः कार्यः इत्यत्र न पदान्तसूत्रस्थं 'कानि सन्ति कौ स्त' इत्यत्र पदान्तग्रहणप्रयोजनप्रतिपादनपरं भाष्यमेव मानम् ।

---

(१) अत्र 'मूले' इति शेषः कार्यः । कौमुद्यामिति तदर्थः ।

उरण् (पा०सू०१।१।५१) । (१) 'स्थाने' इति । "षष्ठी स्थाने" (पा०सू०१।१।४९) इतिपरिभाषया लब्धम्, "उदात्तस्वरितयोर्यण' (पा०सू०८।२।४) इतिवत् । "स्थाने ऽन्तरतम" (पा०सू० १।१।५०) इत्यतः स्थानेग्रहणमनुवर्त्तते, तस्य लक्षणया प्रसङ्गावस्थायामित्यर्थस्तदाह-रपरः सन्नेवेति । रपर इत्यवयववाचिना परशब्देन षष्ठ्यर्थे बहुव्रीहिः, तेनास्यावयवत्वात् "यदागमा" इतिन्यायेन विशिष्टस्य गुणवृद्धित्वेन 'ऋकारस्य गुणवृद्धी अरारावेव' इति नियमोपपत्तिः । अत एव "रदाभ्याम्" (पा०सू०८।२।४२) इतिसूत्रे "थलिचसेटि" (पा०सू०६।४।१२१) इतिसूत्रे च भाष्ये "गुणो भवन् वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसञ्ज्ञको ऽभिनिर्वर्त्तते" इत्युक्तम् 'उः स्थानेऽण् प्रसज्यमान एव रपरो भवति, पूर्वभक्तश्च रेफ इति गुण' इति कैयटः । अवयवत्वं वाचनिकमेव तत्सादृश्यबोधनपर्यवसायि । अन्यथा वर्णस्य वर्णान्तरावयवत्वं "हलन्ताच्च" (पा०सू०१।२। १०) इति सूत्रभाष्योक्तरीत्या ऽसङ्गतं स्यात् । पञ्चम्यर्थे बहुव्रीहिणा ऽनवयवत्वे तु गुणवृद्धिशब्देनाकारादेरेव रेफपरस्यैतदेकवाक्यतया विधानं स्यात् । गुणत्वादिकन्त्वकारादिनिष्ठमेव स्यात्, इत्युक्तनियमानुपपत्तिः । अत एव 'ववृ' इत्यादौ हलादिः शेषसिद्धिरभ्यासावयवस्यैवानादेस्तेन निवृत्तेः ।

---

*परिभाषया लब्धमिति* । अनुवादेपि परिभाषाप्रवृत्तेः । पूर्वोक्तभाष्यसम्मतिमाह-*अत एवेति* । रेफस्यावयवत्वस्वीकारादेव *तत्सादृश्येति* । अवयवसादृश्येत्यर्थः । यथा दध्यवयवस्यावयवबोधकशब्दजन्यप्रतिपत्तिविषयत्वन्तथा अस्य वृद्धिगुणादिशब्दबोध्यत्वम् । *अन्यथा* । सादृश्यापर्यवसाने । *हलन्ताच्चेति* । तत्र हि "अयुक्तोऽयं निर्देशः कथं हि नामेको हलन्तः स्यात् । अन्यस्यान्य" इत्युक्तम् । अत्र कैयटः-'अन्यस्यान्य' इति 'अत्यन्तभेदमनयोर्द्योतयति' । *एतदेकवाक्यतया* । वाक्यैकवाक्यतया । *अत एव* । अ

---

(१) ( उः ) इति बहुषु पुस्तकेषु पाठेऽपि उः इत्यस्य प्रकृते पृथगुपादानमप्रयोजकं कौमुद्यां 'स्थाने' इत्येव पठितम् । तत्र स्थाने इतिपदं कुत आगतमिति प्रदर्शनाय 'स्थाने' इति प्रतीकमादाय प्रवृत्तोऽयं ग्रंथः । तत्र 'उः' इति व्यस्तोच्चारणं नोपयोगि' इति गुरुचरणानां मतम् ।

एतेनाणमनूद्य रपरत्वं विधीयते इति परास्तम् । उक्तनियमानुपपत्तेः । अत्र पक्षे क रपरत्वं क लपरत्वमिति व्यवस्थानुपपत्तिस्तु न । रेफवत्स्थानिकस्य रेफपरत्वं, लकारवत्स्थानिकस्य लपरत्वमिति व्यवस्थासंभवात् । तत्रान्तरतम्यादिति । स्थानत इति भावः । रेफादिद्वारा ऽऽदेशस्यापि मूर्द्धादिस्थानत्वात् । तत्र तत्रादेशानेक रलपरांश्चोच्चार्येदं सूत्रं न कार्यमिति तु न वाच्यम् । "आप्ज्ञप्यृधामीत्" (पा०सू०७।४।५५) "मृजामित्" (पा०सू०७।४।७६) इत्यादौ दोषापत्तेः । अत्राण् पूर्वेणैव प्रशास्तॄणाम्" इति निर्देशात् । वस्तुतो रप्रत्याहाराभावेन रपर इत्यस्य स्थाने लपर इति पठनीयमिति "लपरत्वं वक्ष्यामि" इति तुल्यास्यसूत्रभाष्याल्लभ्यते ।

झरो झ ॥ (पा०सू०८।४।६५) "झयो ह" (पा०सू०८।४।६२) इत्यतो, "वावसाने" (पा०सू०८।४।५६) इत्यतो वा विकल्पो ऽनुवर्त्तते । हयवरट्सूत्रशेषे भाष्ये स्पष्टमिदम् । लोपे इति । ऋधधातोर्झर इति भावः । असतीति । द्वित्वाभाव इत्यनुकृष्यते । त्रिधामिति । त्रिधकारत्वं प्रक्रियाभिप्रायेण । न च द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये परमसिद्धमित्यर्थकेन "पूर्वत्रासिद्धमद्वित्वे" इत्यनेन धातुधकारस्य जश्त्वे दस्य द्वित्वमितीदमयुक्तमिति वाच्यम् । फले विशेषाभावेन तदनादरणात् । न ह्यत्र जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषो

---

यवत्वस्वीकारादेव । एतेनेति यदुक्तं तदर्थमाह-*उक्तनियमेति* । जातस्याणो रपरत्वमिति पक्षेऽन्येनोहितं दूषणङ्खण्डयति-*अत्र पक्षे इति* ।

कस्यापि कल्पनां दूषयति-*तत्रतत्रेति* । 'ऋत इत्' 'उदोष्ठ्य'इत्यत्र तकारस्य स्थाने रेफ एवोच्चारणीयः । "वृद्धिरारालादैच्" 'अरलदेङ्गुणः' । एवं रीत्या पाठे बहूनां रेफलकाराणामुच्चारणेन यद्यपि गौरवरूपं दूषणं स्फुटम्भवति तथापि दूषणान्तरमाह-*आबित्यादि* । अत्र यथाश्रुतन्यासे 'ईर्त्सति' इति न सिध्येत् एतदर्थमत्र ईरिति करणे 'ईप्सति' 'ज्ञीप्सति' इति न सिध्येत् । *मृजामिदिति* । अत्र तपरातपरपाठयोर्यद्यपि न दोषः । हलादिः शेषेण रेफनिवृत्तेः । तथापि माङ् 'ओहाङ्' विषये हलादिः शेष इत्येतस्य स्मरणमत्र पक्षे कर्त्तव्यमिति गौरवमेव दोषः । *रप्रत्याहाराभावेनेति* । निरूपितमेतत्प्राक् ।

*झयो ह इति* । यथा स्थितपाठे । भाष्यसम्मताष्टाध्यायीपाठे

ऽस्ति । तदनन्तरञ्चशत्वप्रवृत्तेस्तस्य परिभाषात्वेन फलविशेषे एव प्रवृत्तेरित्यन्यत्र विस्तरः । पञ्चमीति । विनिगमकाभावादिति भावः । अत एवास्य वैकल्पिकत्वम् ।

कृष्णैकेति । कृष्णेति संबुद्ध्यन्तं पृथक्पदमिति कश्चित् ।

एत्येध ॥ (पा०सू०६।१।८९) ऊठ् अत्रादेश एव व्याख्यानात् । एचीति नोठो विशेषणमूठस्तत्त्वासम्भवात् । "एत्येधत्योः" इति योगं विभज्य तयोरेवैचीति विशेषणस्य भाष्ये कृतत्वाच्च तदाह-एजाद्योरिति । एतिरत्रेणेव प्रसिद्धत्वात् । उपैति इत्यादौ "वृद्धिरेचि" (पा०सू०६।१।८८) इत्यनेन गतार्थत्वमाशङ्क्याह-पररूपगुणेति । एत्येधत्योरेङि पररूपस्योठि वाऽऽद्गुणस्येति विवेकः । उपैधत इति । अत्र न सर्वादेशः। एत्येधत्याद्यवयवेऽचीत्येवं क्रमेण सूत्राणामर्थात् । अयमेवार्थ इति प्रत्ययलक्षणसूत्रस्थभाष्यस्वरसः । 'प्रष्ठौह इति । प्रष्ठं वहतीत्यर्थे वहेण्वौ ततः शस्यूठि संप्रसारणे पूर्वरूपे ऽनेन वृद्धिः । प्रोदिधदिति ।

---

आह *वावसान इति* । *फलविशेष एव प्रवृत्तेरिति* । ननु सन्नन्ते ईर्त्सतीति प्रतीकमुपादाय 'पूर्वत्रासिद्धीयमद्वित्वे इति चर्त्वे कृते त्सशब्दस्य द्वित्वम्' इत्युक्तम् । तत्र चर्त्वात्प्राग् द्वित्वेऽपि रूपसिद्धौ निर्बाधायां रूपे विशेषाभावेन परिभाषाप्रवृत्तिर्न स्यात् सा च स्वीकृतेति तेन ग्रन्थेनास्य विरोध इति चेन्न । अकृतकारि शास्त्रमग्निवत् यथाऽग्निर्यददग्धं तद्दहति, इति न्यायानुसारित्वादस्य ग्रन्थस्य । तस्य तु ग्रन्थस्य 'कृतकारि खल्वपि शास्त्रम्पर्जन्यवत्' इत्येतन्न्यायानुसारित्वात् । *पृथक्पदमिति* । नात्र षष्ठीसमासस्य प्राप्तिः "पूरणगुण" इति निषेधादिति भावः । *कश्चिदिति* । "संज्ञाप्रमाणत्वात्" इत्यादिनिर्देशैस्तन्निषेधस्यानित्यत्वात्समासेऽपि न क्षतिरित्यस्वरसः ।

*आदेश एवेति*। एतेन 'ऊठ्' उपघात इति धातुव्यावृत्तिः । *व्याख्यानादिति* । "असिद्धम्बहिरङ्गमन्तरङ्गे" इतिपरिभाषाज्ञापकपर 'वाहऊठ्' सूत्रस्थभाष्यमूलकाद्व्याख्यानादित्यर्थः । *प्रसिद्धत्वादिति* । एतेन 'धि' गति इत्यत्र प्रश्लिष्टस्य व्यावृत्तिः । *भाष्यस्वरस इति* । तत्र हि "औतोम्शसोः" इत्यत्राचीत्यनुवर्त्य 'नैवं विज्ञायते अच्यमीति कथन्तर्हि अम्यचीति' एतेनास्मिन् प्रकरणे यत्र यत्राचीति सम्बध्यते तत्र सर्वत्राचूपद

परं तु "इणीकारादौ प्रतिषेधः" इति वार्त्तिके एधत्यनुपादानात् 'न त्वेधतेरव्यभिचारात्' इति वृत्तेश्चास्यानभिधानमेव। 'एत्येधत्यो- रेचीति विशेषणम्' इति भाष्यस्यैधत्यंशे संभवमात्रेणोपरञ्जकतया विशेषणमित्याशय इत्याहुः। उपैधत इत्यादावपि वृद्धिर्भवत्येव। प्रकृतिभागस्यैधरूपत्वात्। किं च एत्येधत्यवयवे ऽचीत्यर्थः प्रत्ययल- क्षणसूत्रभाष्यसंमत इति अत्र न दोषः।

पुरस्तादिति। "पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्त- रान्" इति न्यायः। अवश्यं स्वपरस्मिन्बाधनीये भेदेनापेक्षायां प्रथ- मोपस्थितबाधेनाऽऽकाङ्क्षानिवृत्तिर्हि तद्बीजम्। असाधुरेवेति। आ- ङिणोरेकादेशस्य पूर्वान्ततयाऽऽङि, पररूपेण बाधादिति भावः। अ- र्थवद्ग्रहण इति। अस्या बीजं स्वं रूपमिति सूत्रे उक्तम्। पररूपे प्राप्त इति। 'पूर्वं धातुः साधनेन युज्यते' इति सिद्धान्तादिति भावः।

---

र्थस्य विशेष्यत्वमित्येकादेशस्य वर्णाश्रयत्वमित्युक्तम्। एवञ्चायमेवार्थ इत्यस्य शाब्दोऽर्थ इत्यर्थ इति तात्पर्यम्। *वृद्धिर्भवत्येवेति*। एवञ्च ण्यन्तस्य शब्दान्तरत्वेऽपि प्रकृतिभागस्यानन्यत्वान्नानुपपत्तिरिति भावः। अवैहीति वृद्धिरसाधुरेवेत्युक्तं तच्चायुक्तम् 'आङोऽभावेन ओमाङोः' इत्य- स्याप्राप्तेरत आह-*आङिणोरेकादेशेति*। "*स्वं रूपम्" इति सूत्रे उक्त- मिति*। तस्मिन् सूत्रे स्वंरूपमित्युभयोरुपादानादात्मीयार्थविशिष्टशब्दरू- पस्य संज्ञित्वादेतल्लाभः।

अत्र मनोरमायामुक्तम्। सीरदेवस्त्वाह—व्रश्चेति सूत्रे राजेः पृथग् भ्राजिग्रहणमिह ज्ञापकम्। नन्वेतदयुक्तम्। फणादिना राजिना साहच- र्यात्तथाभूतस्यैव षत्वार्थतया भ्राजिग्रहणस्योपक्षीणत्वादिति चेत्। वि- भ्राड् विभ्राग् इति रूपद्वयं साध्यम्। तच्च व्रश्चादिसूत्रे राजृ इति पठि- त्वापि सुसाधम्। एकस्य भ्राजतेर्ऋकारस्य प्रागपि दातुं शक्यत्वात्। 'भ्राजभासेति' विकल्पस्य वाचनिकतया ऋकारस्यात्मनेपदमात्रफलकता- याः वक्ष्यमाणत्वेन तत्स्थानेऽकारस्यापि दातुं शक्यत्वात्। एवञ्च ऋकारा- नुबन्धकस्य व्रश्चेतिसूत्रे ग्रहणात्तस्य विभ्राडिति रूपमन्यस्याकारानुबन्ध- कस्य विभ्रागिति भविष्यतीति भावः। तस्मात् सीरदेवोक्तं ज्ञापकं सम्य- गेवेति।

शब्दरत्ने सीरदेवोक्तमिति। अत्रारुचिबीजन्तु व्रश्चादिसाहचर्येण धा- तुसंज्ञकराजग्रहणं स्यात्, एवञ्च भ्राजन्तर्गतस्य राजेरधातुत्वान्न तेन तत्र ष-

उपसर्गादृति ॥ (पा०सू०६।१।९१) तपरकरणात् 'उपऋकारीयति' इत्यादौ "वा सुपि" (पा०सू०६।१।९२) इति न वृद्धिः। सौत्रऋकृतिस्तु न गृह्यते व्याख्यानात्। आदित्यनुवृत्तेन तदन्तविधिरित्याह—अवर्णान्तादिति। "यस्मिन्विधिः" इति परिभाषयाऽऽदृकारादाविति। पूर्वपरयोस्तयोः समुदाययोरन्त्याद्योर्वर्णयोरेकादेश इत्यर्थः। उपसर्गावयवाकाराद्धात्ववयवे ऋकारे तयोः पूर्वपरयोर्वृद्धिरित्युचितम्। गतेरिति तु नोक्तम्। अच्छर्छति' इत्यादौ दोषात्।

---

त्वसिद्धिरिति भ्राजिग्रहणस्याऽऽवश्यकत्वम्। किञ्च भ्राजन्तर्गतराजेर्न ऋकारानुबन्धत्वं तस्य समुदायानुबन्धत्वादिति। समुदायानुबन्धो हि नावयवानुबन्धः, "तस्थस्थमिपाम्" इति सूत्रे चतुर्णाम्भेदेनोपादानात्। अन्यथा तस्थपामित्येव वदेत्। तेन महिङो ङकारस्य तिङादिप्रत्याहारार्थत्वेन समुदायानुबन्धतया महिप्रत्ययस्य न ङित्त्वमिति 'सम्पप्रच्छिमहे' इत्यत्र सम्प्रसारणाभाव इति। यत्तु असत्यामर्थवत्परिभाषायामृकारस्य समुदायावयवोभयोरुपकारकत्वसम्भवेन राजृग्रहणेन भ्राजृग्रहणं स्यादेवेति। तन्न। तत्रत्य ऋकारस्य समुदायोपदेशप्रयुक्तैवेत्संज्ञा वाच्या, व्यवसितानुनासिकस्यैवेत्संज्ञाविधानात्। एवञ्च यदुपदेशप्रयुक्ता यस्येत्संज्ञा तस्य तदुपकारकत्वमित्युभयोपकारकत्वासम्भवात्। न चैवं सति याटष्टकारस्य समुदायानुबन्धत्वेन रमाय इत्यत्राटश्चेति वृद्धिरिति प्राचीनलेखनासङ्गतिरिति वाच्यम्। ज्ञापकसिद्धस्यासार्वत्रिकत्वेन शरीरावयवहस्तपादाद्यवयवाङ्गुल्यादेः शरीरावयवत्वस्य लोकप्रसिद्धव्यवहारेण च प्राङ्गिभः तथाभिधानात्। यत्तु व्रश्चादिसाहचर्येण धातुसंज्ञकानामेव ग्रहणे छशविषयेऽपि साहचर्याच्छशान्तधातोरेव ग्रहणं स्यात्, एवञ्च निर्भ्यां निद्धिरिति रूपासिद्धिरिति। तन्न। तत्रापि निज्भ्यान्निज्भिरिति रूपाभ्युपगमात्। यदि तु निड्भ्याम् इत्यादीष्टं तर्हि साहचर्यानित्यत्वेन साधनीयम्। यदपि फणादिभिन्न राजौ अतिप्रसङ्गनिवारणाय कृतस्य राजृ इत्यत्र ऋकारस्य यदि न राजुपकारकत्वं तदा ऋकारपाठवैयर्थ्यमिति। तदपि न। समुदायोपकारकत्वेन तस्य चारितार्थ्यादिति।

*तपरकरणादिति*। प्रकृतसूत्रे तु न फलम्। ॠकारादेर्धातोरप्रसिद्धत्वात्। *ॠकारीयतीत्यादाविति*। आदिना ॠकार इवाचरति ॠकारति इत्यस्य सङ्ग्रहः। *न गृह्यते व्याख्यानादिति*। एतत्सूत्रभाष्ये 'धातुक्रिया इति वचनेनोपसर्गग्रहणेन धातुग्रहणे सिद्धे पुनर्धातुग्रहणस्योपसर्गादृति धातौ वृद्धिरेव यथा स्यात्, यदन्यत्प्राप्नोति तन्माभूत्। किञ्चान्य

अन्तादि (पा०सू०६।१।८५) इह पूर्वपरयोरिति वर्त्तते यथासं-ख्यश्च, अन्तादिशब्दावुपस्थितैकादेशस्थानिपरौ। पूर्वपरशब्दौ न तद्घटितसमुदायपरौ। एवञ्च पूर्वस्य परस्य समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रातिपदिकत्वसुबन्तत्वप्र-त्ययत्वादयस्ते कृतैकादेशस्य भवन्ति, न तु तद्वर्णमात्रवृत्तयो ऽत्वह्र-स्वत्वादय इत्यर्थस्तत्फलितमाह—यो ऽयमित्यादि। तेन 'रामौ' इत्यादौ परादिवत्त्वेन 'औ' इत्यस्य सुप्त्वे पूर्वमान्तस्यैकदेशविकृतन्यायेन प्रकृतित्वे यस्माद्विहितस्तदादितदन्तत्वमार्थं समाजग्रस्तमिति पदत्व-सिद्धिः। तद्वर्णमात्रवृत्तिधर्मानतिदेशात्। 'खट्वाभिः' इत्यत्रात्वनि-बन्धन ऐस् न। 'अयजे इन्द्रम्' इत्यादौ सवर्णदीर्घश्च न। अत एव तुक्यसिद्धवचनं चरितार्थम्। 'अन्यथा अधीत्य' इत्यादावादिवत्त्वेन ह्रस्वत्वप्रयुक्ततुक्सिद्धौ तद्वैयर्थ्यं स्पष्टमेव। तदुक्तं 'वर्णाश्रये चान्ता-दिवत्त्वप्रतिषेधो वक्तव्यो न वा ऽताद्रूप्यातिदेशात्' इति। अन्तादि-वर्णमात्रवृत्तिधर्मानतिदेशादिति तदर्थः। 'क्षीरपेण' इत्यादावेकारवि-शिष्ट एकाजुत्तरपदत्वं भवत्येव।

---

स्याप्नोति ह्रस्वत्वं ऋत्यक" इति प्रतिपादितम्। यद्यस्मिन्सूत्रे ऋतिः सौत्रो विवक्षितः स्यात्तदा धातुग्रहणसत्त्वे सौत्रस्य शीघ्रोपस्थितिकतया तद्ग्र-हणं सिध्यति। अन्यथा ऋतीत्यनेन वर्णग्रहणमेव "ऋत्यक" इतिवत् सम्भा-व्येत ततश्च पुनर्विधानार्थत्ववर्णनमसङ्गतं स्यात्, तेन सौत्र एव गृह्यते इति नेति व्याख्यानादित्यर्थः। अत एव 'धाताविति किमर्थम्? इह मा भूत, प्रर्ष-भं वनम्'। एतत्प्रत्युदाहरणं भाष्योक्तं सङ्गच्छते।

यदुक्तम्पूर्वस्य परस्य समुदायस्येति तत्फलमाह—*तद्वर्णमात्रवृत्ती-त्यादिना*। एवञ्च विशिष्टनिष्ठधर्मातिदेशो न तु वर्णवृत्तिधर्मस्येति सि-द्धम्। अस्मिन्नर्थे ज्ञापकमप्याह—*अत एवेति*। उक्तार्थस्वीकारादेवेत्य-र्थः। *तुक्यसिद्धेति*। तुकि कर्त्तव्येऽसिद्धवचनमिति योजना। असिद्ध-वचनम्—असिद्धत्वबोधकं वचनमित्यर्थः। उक्तार्थे वार्त्तिकसम्मतिमप्याह—*तदुक्तमिति*। वार्त्तिककृतेति शेषः। अत्र प्राञ्चः स्थानिवत्सूत्रेण गता-र्थमेतत्सूत्रमिति तन्न युक्तमित्याशयेनाह—*क्षीरप इत्यादि।

न चात्रोत्तरपदत्वमात्रं पे इत्यत्रातिदिश्यते एकाच्त्वन्तु तस्य स्वतः सिद्धमिति समासे एकाजुत्तरपदत्वमार्थसमाजग्रस्तमिति स्थानिवत्त्वेनैव

स्थानिवद्भावेन तु नैतल्लभ्यम्। अप्राधान्येनालाश्रयणात्। किं च एकादेशे वर्णयोरेव स्थानित्वं न समुदायस्येति भी ई 'भिय' इत्यादावेकादेशविशिष्ट धातुत्वानापत्तिः। धातुत्वस्यैकादेशस्थानिधर्मत्वाभावात्। आनुमानिकादेशकल्पकवाक्यम् 'अन्तादिघटितसमुदायस्यैकादेशघटित आदेश' इत्येव न तु प्रत्येकं तयोः स्थानित्वबोधकं तथा सति स्त्राश्वशब्दस्य स्थानिवत्त्वेन स्वशब्दतया तत ईरिन्शा वृद्ध्यापत्तेः। किं च भवत्संमतस्य "उभयत आश्रयणे नान्तादिवत्" इत्यस्यासङ्गतौ भवत्संमत 'अभीयात्' इत्याद्यसिद्धिः। स्थानिवत्तूभयत आश्रयणे इष्यत एव। अन्यथा "अचः परस्मिन्" (पा० सू० १।१।५७) इत्यस्याप्युभयत आश्रयणे ऽप्रवृत्त्यापत्तौ 'प्लायत' इत्याद्यसिद्धिरिति दिक्।

---

निर्वाह इति वाच्यम् "एकाजुत्तरपद" इति सूत्रे समासनिर्देशेनैकाजवयवत्वविशिष्टोत्तरपदकसमासावयवपूर्वपदस्थत्वस्य निमित्ततावच्छेदकत्वेन श्रयणं तच्च विशेषणीभूताल्घटितमेव। किं चात्र श्रौतस्थान्यादेशभावो वा। आनुमानिको वा। उभयथोत्तरपदत्वं पे इत्यत्रातिदेष्टुमशक्यम्। श्रौतस्थानिनि पूर्वाकारेकारघटितसमुदाये तस्याभावात्। आनुमानिकादेशस्तु 'क्षीरपेण' इति तत्स्थानी क्षीरप इनेति तस्मिन्समुदायेऽपि नोत्तरपदत्वमिति तस्यातिदेष्टुमशक्यत्वादिति भावः।

*भी इ भिय इति* ॥ आत्वपक्षे "भियो हेतुभये षुक्" इति सूत्रेण षुगागमवारणाय "भिय" इति सूत्रे ईकारप्रश्लेषः कृतस्तन्निर्देशोऽयम्। तु 'अरुदिताम्' इत्येतद्दृष्टान्तेन स्थानिवद्भावमुपपादयन्ति ते मान्याः। तत्र तसस्तामादेशे तस्य स्थानिवद्भावेन सार्वधातुकत्वसम्पादनसमये न कथमप्यलाश्रयणमिति वैषम्यं स्पष्टमेव। तथा प्राचाम्पूर्वापरावि-ध इत्याह—*किञ्चेति* । *अभीयादित्याद्यसिद्धिरिति* । इणो उपसर्गात्परत्वस्यातिदेशेन लाभसम्भवात्। *अचः परस्मिन्नित्यस्येति* पूर्वसूत्रापेक्षयाऽचः परस्मिन्नित्यनेनाभावोऽप्यतिदिश्यते इत्येव विशे-दर्शितो न त्वयमित्युभयत आश्रयणेऽप्युभयोः प्रवृत्तिः। विनिगमनावि-हाच्च। यदि उभयत आश्रयणेऽप्रवृत्तिस्तदोभयोरप्रवृत्तिः स्यात् 'प्लायत' इत्यस्यासिद्धिः। अत्रायतिपरत्वं न कार्यिरेफविशेषणं 'निलयते' 'दुल-' इत्यादौ चरितार्थस्य तस्य 'पल्ययते' इत्यादौ व्यवहिते प्रवृत्तिर्न स्यात् उपसर्गविशेषणम्, एवञ्च 'प्लायत' इत्यत्र लत्वं स्थानिवत्त्वेनैव साधनीयमिति भावः।

निर्देशादिति । न च "कर्त्तरि चर्षि" (पा०सू०३।२।१८६) इत्यादौ गुणस्य पदद्वयसम्बन्धिवर्णद्वयाश्रितत्वेन बहिरङ्गत्वाद्रेफाभावेन न विसर्ग इति वाच्यम् । गुणस्येव पदद्वयसम्बन्धिरेफस्वरात्मकवर्णद्वयाश्रितत्वेन विसर्गस्यापि तत्वात् । परनिमित्तकत्वमप्युभयोः समम् । किं च कार्यकालपक्षे त्रिपाद्यां तदुपस्थितावपि पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्यान्तरङ्गनिरूपितबहिरङ्गत्वाभावात्कथं तस्यासिद्धत्वप्रतिपादनम् । न चानया पूर्वस्यासिद्धत्वात्तदभावेन तं प्रति परासिद्धत्वं "पूर्वत्र" (पा०सू०८।२।१) इत्यनेन वक्तुमशक्यमिति वाच्यम् । एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्तौ विसर्गो दुर्वारः । एवञ्च विरोधात्कार्यकालपक्षे ऽपि तदनुपस्थितिरेव त्रिपादीस्थे ऽन्तरङ्गे उचिता । अत एव विसर्जनीयसूत्रे भाष्ये इमामेव युक्तिमुक्त्वा "अयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वात्" इत्युक्तम् । एवञ्च तत्र तत्र वचनान्येव कार्याणि ज्ञापकानुसरणं वा कर्त्तव्यम् । अत एव 'निगाल्यते' इत्यादौ लत्वाद्यर्थं "तस्य दोष" इति वचनमेवारब्धम् । अन्यथाऽन्तरङ्गत्वाण्णिलोपात्पूर्वं वैकल्पिकलत्वे 'चक्रयत्र' 'माषवपनी' इत्यादौ बहिरङ्गासिद्धत्वेन च सिद्धे तद्वैयर्थ्यं स्पष्टमेव ।

---

पदद्वयसम्बन्धित्वेन वर्णद्वयस्य निमित्तत्वेनाऽऽश्रयणन्न शास्त्रबोध्यम्, किन्तु वस्तुगत्या गुणस्य पदद्वयसम्बन्धिवर्णनिमित्तकत्वं वाच्यम् । तच्च विसर्गस्यापीत्याह—*गुणस्येवेति* । कार्यकालपक्षे त्रिपाद्यामसिद्धपरिभाषा प्रवृत्तिरिति प्राचीनसम्मतोऽर्थो नोचित इत्याह—किञ्चेति* । *अनया* । असिद्धपरिभाषया । *विनिगमनाविरहादिति* । प्रत्यक्षानुमानयोः समत्वमभ्युपगम्येदम् । उक्तेऽर्थे भाष्यसम्मतिमप्याह—*अत एवेति* । कार्यकालपक्षेऽप्यप्रवृत्तेरेवेत्यर्थः । *इमामिति* । एवं हीत्याद्युक्ताम् । तत्र हि 'नार्कुटो नार्पत्य' इत्यत्र विसर्गनिवारणायारब्धस्य "विसर्जनीयोऽनुत्तरपद" इति वचनस्य प्रत्याख्यानाय प्रवृत्तं बहिरङ्गपरिभाषया समाधानमयुक्तं किन्तु वचनेन समाधानं कार्यम् । *तत्रतत्र* । 'संयोगान्तस्य' 'रदाभ्याम्निष्ठातः' 'क्षियो दीर्घात्' 'खरवसानयोः' एतेषु सूत्रेषु ।

*वचनानीति* । "संयोगान्तलोपे यणः प्रतिषेधः" । तथा कार्त्तिरित्यत्र नत्वव्यावर्त्तकं "रेफादपरनिमित्तात्" । तथा क्षेतिरित्यत्र नत्ववारकम्

यत्तु लक्ष्यानुरोधात्कार्यकालपक्षे उपस्थितयान्तरङ्गपरिभाषयाऽऽनुमानिक्या प्रत्यक्षसिद्धस्यापि पूर्वत्रेत्यस्य बाध इति, तन्न लक्ष्यैकचक्षुषामादरणीयम्। अत एव "उरण्" (पा०सू०१।१।५१) इति सूत्रे रेफस्य पूर्वान्तवत्त्वे 'विसर्जनीयप्रतिषेधो वक्तव्यो नार्कुटाद्यर्थम्' इत्युक्तं भाष्ये इति दिक्।

उपसर्गेणैवेति। तत्सञ्ज्ञायाः क्रियायोगनिमित्तत्वादित्यर्थः। यदर्थे क्रियारूपे प्रादीनामन्वयस्तं प्रत्येवोपसर्गत्वमिति भावः। कृते च प्रत्यासत्त्या ऋकारादिनिमित्तोपसर्गग्रहणात् प्रगतः ऋद्धः 'प्रर्द्धः' इत्यत्र न। पुनरिति। प्रकृतसूत्रे भाष्ये स्फुटमेतत्। सुब्धाताविति। सुबन्तप्रकृतिके धातावित्यर्थः। तुल्यास्यसूत्रे 'उपाकारीयति' इत्यादेरेतदुदाहरणत्वस्य भाष्ये उक्तत्वात्। शास्त्रे सुबन्तधातुप्रकृतित्वेनोक्ततया तत्प्रकृतिके इति व्याख्यानमेवोचितम्। ऋषभस्य समीपमुपर्षभं तदिच्छति 'उपर्षभीयति' इत्यत्र तु न वृद्धिः।

---

"निष्ठानत्वमवृद्धेः" इति। एवञ्चेदं व्यापकत्वादादर्त्तव्यम्, अनेनैव सिद्धे पूर्वोक्तन्न कार्यम्। नार्कुटे विसर्गनिवारकं 'विसर्जनीयोऽनुत्तरपद' 'इत्येवं वचनञ्च कार्यमित्यर्थः। उत्तरपदे सति यो रेफः उत्तरपदनिमित्तक इति यावत् तस्य नेत्यर्थः। न च नार्कुट' इत्यादावुत्तरपदस्य न रेफनिमित्तत्वं किन्तु तद्धितस्येति वाच्यम्। उत्तरपदे सत्यृकारे आदित्वव्यपदेशे वृद्धिप्राप्त्या परम्परया रेफस्योत्तरपदनिमित्तकत्वात्। न चैवमपि 'नार्कलिपः' इत्यत्र रेफस्योत्तरपदनिमित्तकत्वाभावाद्विसर्गो दुर्वार इति वाच्यम्। उत्तरपदशब्दस्योत्तरं यत्पदमर्थवत्तत्परत्वात्। कल्पप्रत्ययस्य द्योत्येनार्थेनार्थवत्त्वात्।

ननु तत्रतत्र वचनारम्भे गौरवमत आह—*ज्ञापकानुसरणमिति*। "संयोगान्तस्य लोप" इत्यत्र झल्ग्रहणापकर्षस्याप्युपलक्षकमेतत्। एवं विसर्गविधौ "उभयथर्क्षु कर्त्तरि चर्षि" इत्यादिसंयोगान्तलोपविषये झल्ग्रहणापकर्षो वा "तस्मादित्युत्तरस्य" इत्यादिनिर्देशस्य वा ज्ञापकत्वम्। नत्वविषये "निष्ठानत्वमवृद्धेः" वृद्धेः परस्य प्रतिषेध इत्यर्थकं वचनं कर्त्तव्यम्। एवञ्च ज्ञापकानुसरणं वेत्यत्र वाकारोऽनास्थायां द्रष्टव्यः।

*यदर्थे क्रियारूप इति*। उपसर्गाः क्रियायामित्येव सिद्धे योगग्रहणात् यत्क्रियायोग इत्यस्योपस्थित्या विवक्षितार्थलाभः। *सुबन्तप्रकृतिके धाताविति*। सुबन्तं प्रकृति र्यस्यैतादृशो यः

उपेत्यस्यानुपसर्गत्वात् । अत्रापि धातावित्यनुवर्त्य वाक्यभेदेन व्याख्येयं । तेन सुब्धातावपि न प्रकृतिभावः ।

प्रार्षभीयतीति । अत्र "शरोचि" (पा०सू०८।४।४९) इत्यस्यानुपन्यासेन व्यञ्जनात्परस्यैकस्यानेकस्य वोच्चारणे विशेषाभावेन अचो रहाभ्याम्" (पा०सू०८।४।४६) इत्यस्य तन्निषेधस्य चानावश्यकता सूचिता । वाक्यभेदेनेति । इदं वृत्तौ स्पष्टं, भाष्ये तु न दृश्यते । "एवेच" इति वार्त्तिकं सूत्रे धातावित्यनुवृत्तेरारब्धम् । अवधारणं नियमः । एवशब्दस्य द्योत्यमर्थद्वयमवधारणमसम्भवरूपानवक्लृप्त्यादि च । तयोरन्त्योऽत्रैवशब्दार्थ इत्यभिप्रेत्याह—अनवक्लृप्तावेवेति । 'क्वेव भोक्ष्यसे' इत्युक्ते स्थलसङ्कीर्णत्वादिना नास्ति संभवस्तव भोजनस्येति गम्यते ॥

अचोऽन्त्या (पा०सू०१।१।६४) अच इति निर्धारणे षष्ठी । अन्ते भवो अन्त्यः "अन्त्यादि" इति गमकत्वाद् बहुव्रीहिः । मार्त्तण्ड इति । मृताण्डादागतो मार्त्तण्डः । अण्विषये एव पररूपम् । ननु मार्त्तशब्दादन्त्याच् तकाराकारः स आदिर्यस्येत्यन्यपदार्थो दुर्लभ इति चेन्न । एकस्मिन्नेव समुदायरूपत्वारोपेण तदवयवत्वारोपेण च तदुपपत्तेः । एतन्मूलकमेव "व्यपदेशिवदेकस्मिन् इति पठ्यते इत्यलम् ।

---

यः क्यजादिस्तदन्ते धातावित्यर्थः । न तु सुबन्ते धाताविति शेषः । *अनुपसर्गत्वादिति* । क्रियायोगाभावादिति भावः । *अत्रापीति* । पूर्ववत् । *व्यञ्जनात्परस्यैकेति* । "न हि व्यञ्जनपरस्यैकस्यानेकस्य वोच्चारणे विशेषोऽस्ति" इत्यत्र व्यञ्जनात्परस्य, व्यञ्जनं परं यस्मादिति वा समासद्वयं विवक्षितम् । *अनवक्लृप्त्यादि चेति* । अत्रादिनाऽमर्षपरिग्रहः । यथाऽनवक्लृप्तिः प्रतीयते तथा स्पष्टयति—*क्वेत्यादि* । *निर्द्धारणे षष्ठीति* । सौत्रत्वादेकवचनम् । अत्रान्त्यशब्दस्य सापेक्षत्वेऽपि समासोपपत्तिंकरोति—*गमकत्वादिति* । गणे सीमन्तशब्दो नान्तङ्व त्तयोरपि तन्त्रेण निर्दिष्टः । केशवेश इत्यस्य रचनाविशेषविशिष्टकेशविन्यर्थः । *मृताण्डादागत इति* एतेनाणप्रत्ययसत्तायाम्पररूपमिति सूचयति । अत्राधिकरणस्य हेतुत्वविवक्षया पञ्चमी । आगत इत्यस्य भवेत्यर्थः । बुधशापवशाददितेरुदरे स्थित एव गर्भोऽचेतनः सम्पन्नः । पश्चा-

वस्तुत आरोपस्य नात्रोपयोगः । "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" (यो० सू० १।३।१०) इति पतञ्जल्युक्तेः, अर्थाभावे ऽपि विकल्पात्मकं ज्ञानमत्र, तदपि लक्ष्यानुरोधाच्छास्त्रप्रवृत्त्युपयोगीति बोद्ध्यम् । पतञ्जलिरिति तु अञ्जलेः पतित इति विग्रहे मयूरव्यंसकादित्वात्समासे तत्रैव निपातनादितशब्दस्य लोपे पृषोदरादित्वात् तल्लोपे साधु । गोनर्ददेशे कस्य चिदृषेरञ्जलेः सन्ध्याकरण समये पतित इत्यैतिह्यात् ।

ओत्वोष्ठयोः । अत्र समर्थपरिभाषा (पा० सू० २।१।१) नोपतिष्ठते "समासे ऽङ्गुलेः सङ्गः" (पा० सू० ८।३।८०) इत्यादौ समास

---

त्तो निःसरणे सचेतनोऽभूदिति भारते प्रसिद्धम् ।

*शब्दज्ञानानुपातीति* । शब्दश्च ज्ञानञ्च शब्दज्ञाने ते अनुपाति जनके यस्य स शब्दज्ञानानुपाती, वस्तुशून्यो–बाह्यवस्तुशून्यस्तद्विषयित्वाभाववानिति यावत् । एतादृशो यः प्रत्ययः स विकल्प इत्युच्यते । शशशृङ्गादिशब्दे केनचित्पुरुषेणायं शशशृङ्गवानित्यादिरीत्योच्चारिते इदं शब्दबोध्यस्य दुःखं जायते । दुःखोत्पत्तौ च तदर्थविषयकशाब्दबोधो हेतुः स च शाब्दबोधः पदार्थोत्पत्तिस्थितिसाध्यः सा चोपस्थितिरस्मादेव शब्दाद्वाच्येति यः शाब्दबोधो भवति । स, उच्चारितशब्दजन्यज्ञानञ्च, प्रयोक्तुः परम्परया शाब्दबोधस्य प्रयोजकं, वाक्यप्रयोगे वाक्यार्थबोधस्य कारणत्वात् । बौद्धपदार्थस्वीकाराच्च ।

एष बन्ध्यासुतो याति खपुष्पकृतशेखरः ।
मृगतृष्णाम्भसिस्नातः शशशृङ्गधनुर्धरः ॥

इत्यस्योपपत्तिः । शकन्ध्वादिष्विति वचनस्य शकन्ध्वादिषु शब्देषु यथा शब्दा उच्चारितास्तथा येन प्रकारेण सिध्येरंस्तथा पररूपम्भवतीत्यर्थोऽभियुक्तैरुक्तः । तेन टेरिति लब्धम् । पतच्छब्दस्याञ्जलिशब्देन समासे यद्यपि पतञ्जलिशब्दसिद्धिर्भवति शकन्ध्वादौ पतञ्जलिशब्दपाठश्चरितार्थो भवति । तथापि कस्य चिदृषेरञ्जलेः पतित इत्यर्थे यः पतञ्जलिशब्दस्तस्यानेन सिद्धिर्न भवतीति सिंहावलोकनन्यायेनाह–*पतञ्जलिरिति त्विति*। अतएव भगवान् भाष्यकार एव तत्रतत्राऽऽह 'गोनर्दीयस्त्वाह' इति । तथा चेयमेव व्युत्पत्तिर्युक्तेति सूचितम् ।

नन्ववर्णादोत्वादिशब्दावयवेऽचि वा पररूपमित्यर्थे ओत्वोष्ठादिशब्दस्य विशेषणतयाऽस्यापि पदसम्बन्धिविधित्वेन समर्थपरिभाषोपस्थितौ समास एव प्रवृत्तिर्भविष्यतीति समासग्रहणं व्यर्थमत आह–*अत्र स

हणेन "पदविधिरिति सूत्रस्वरसेन भाष्यादिस्वारस्येन च पदत्वेन सुबन्तत्वेन वा यत्र साक्षादुद्देश्यता तत्रैवैतत्परिभाषाप्रवृत्तिस्वीकारात् । ओत्वोष्ठादिमात्रस्य पदत्वाभावात् । अवर्णादोत्वोष्ठयोराचि तद्घटितसमास इत्यर्थात् "दन्त्योष्ठ्यो वः स्मृत" इति प्रयोगसिद्धिः । अन्यथा प्रत्यासत्त्यौत्वाद्युत्तरपदकसमास एव प्रवृत्त्यापत्तौ तदसङ्गतिः स्पष्टैव । ओतुर्विडालः ।

ओमाङोः ॥ (पा०सू०६।१।९५) अत्र एङीति नानुवर्त्तते तेनेषदर्थकाऽऽङा सह ऋषभशब्दस्य समासे 'अद्य अर्षभः' इत्यत्र पररूपे ऽद्यर्षभसिद्धिः । न चात्र परत्वाद्दीर्घप्रसङ्गः । प्रतिपदविधित्वञ्च निरवकाशत्वे सत्येव बाधकत्वे प्रयोजकम् । इदञ्च मध्येपवादन्यायेन 'अवेहि' इत्यादौ वृद्धेरेव बाधकं स्यादिति वाच्यम्, लक्ष्यानुरोधेनात्रबाध्यसामान्यचिन्ताश्रयणात् । अन्यत्र प्रतिपदविधित्वस्य बलवत्वे प्रयोजकतादर्शनेन परदीर्घात्पूर्वं पररूपप्रवृत्तेश्च ।

---

थेति* । यथा कथञ्चित्पदविधौ परिभाषोपस्थितौ "समासेङ्गुलेः" इत्यस्यापि समासे प्रवृत्तिः सिद्धैवेति तत्रापि समासग्रहणं व्यर्थमेव स्यात् । ननु तस्याप्यकरणे लाघवमेवेत्यत आह—*पदविधिरितिसूत्रस्वरसेन चेति* । न चैतावता सुबन्तत्वेनेत्यस्य लाभ इत्यत आह—*भाष्यादिस्वारस्येन चेति* । अत्र साक्षादुद्देश्यतेत्यस्य पदस्येत्यादिः । तेन पदसंज्ञकसमुदायस्योद्देश्यतायामेव समर्थपरिभाषा प्रवर्त्तते । "समासेङ्गुलेः" इत्यत्रौत्वोष्ठयोरित्यत्र च न पदस्योद्देश्यत्वं किन्तूद्देश्यविशेषणत्वमिति भावः । तत्र सुबन्तत्वेनोद्देश्यता समासादिविधौ स्फुटैव । पदत्वेनोद्देश्यतायाम्प्रवृत्तिश्च "गतिर्गतौ" इति सूत्रे भाष्ये कैयटेन दर्शिता ।

न च समासादिविधौ समर्थपरिभाषया एकार्थीभावो बोध्यते । स चैकार्थीभावः साक्षाद्विध्युद्देश्ययोर्विधेयोद्देश्ययो र्वा कल्प्यते । समासविषये विध्युद्देश्ययोरिति ग्राह्यम् । अत्र द्वित्वस्याविवक्षितत्वाद् बहूनामपि सङ्ग्रहः । "कर्मण्यण्" इत्यादौ विधेयोद्देश्ययोरिति ग्राह्यम् । तथा सति 'महान्तं कुम्भं करोति' इत्यत्र नाणिति ग्रन्थासङ्गतिः । कुम्भमित्यस्योद्देश्यत्वाभावादिति वाच्यम् । उद्देश्यपदस्योद्देश्ये सोपपदकोद्देश्ये च लाक्षणिकत्वात् । एवञ्चोद्देश्योपपदविधेयानामपि क्वचित्स कल्प्यते । अत एव 'मूलकेनोपदंशमित्यादौ मूलकेनेति तृतीयान्तेन सह कल्प्यते, उपपदांशे चेद्विशेषणन्तदा तु न । तेन महता मूलकेनोपदंशमित्यसाध्विति ग्रन्थसङ्गतिः ।

अव्यक्तशब्दार्थो-ध्वनेरिति । अविद्यमानकत्वादिशब्दस्येत्य
र्थः । तस्य चाच्छब्दो ऽनुकरणे एव सम्भवतीत्याह-अनुकरण
स्येति । अत्र "अलोन्त्यस्य" (पा०सू०१।१।५२) इति न प्रवर्त
"नानर्थक" इति निषेधात् । "आम्रेडितस्य वा" इति वक्तव्ये "ना

---

"उपपदमतिङ्" इति सूत्रे सुप्सुपेत्यस्य निवृत्तावपि पदत्वेनोद्देश्य
सत्त्वान्न क्षतिः । "गतिर्गतौ" इति सूत्रे भाष्ये 'गताविति किमर्थम्'?
च तिङन्ते प्राप्नोति । तिङन्ते चेदुदात्तवत्येवेति नियमेनान्यतिङन्तव्या
त्तेरिति प्रश्नः । "आमन्द्रैरिन्द्रहरिभिर्याहि" इत्यत्र मन्द्रशब्दे परे आ
निघातव्यावृत्त्यर्थङ्गतावित्युक्तमित्युत्तरम् ।

अत्र कैयटः । यदा प्रयोगनियमो 'धातोः प्रागेव प्रयोक्तव्या इति तं
पसर्गत्वेपि प्रकृते 'छन्दसि परेपि' इत्यनेन नियमबाधेन व्यवहितपूर्वप्रयोगा
द्धिस्तदा गतेराङो निघातः स्यात् । यदा तु संज्ञानियमपक्षो, धातोः
क् प्रयुज्यमानानामेव गतित्वमिति, तदात्र न गतित्वमिति । 'नैतद् गता
त्यस्य प्रयोजनम्' इति । न च मदे रकि नुकि सति व्युत्पन्नात् मन्द्र
ब्दात्प्राक् प्रयोगात्स्यादेव गतिसंज्ञेति वाच्यम्, "यत्क्रियायुक्ता" इति
चनात् यत्प्रति क्रियायोगः तत्प्राक्प्रयोगे सत्येव गतित्वमिति "इन्द्रम् प्रत्य
गतित्वात्" इत्युक्तम्भाष्ये । तत्र कैयटः । 'यत्र परनिमित्तोपादानं तत्र
यत्क्रियायुक्ता इत्यस्योपस्थितिः, यथोपसर्गस्य घञीत्यादौ । प्रकृते तस्या
पादानान्न यत्क्रियायुक्ता इत्यस्योपस्थितिः, इति शङ्कायाम्पदस्येत्यधिकार
त्पदविधित्वात्समर्थपरिभाषोपस्थानादेतद्विशेषलाभ' इत्याह—येन ग
सामर्थ्यं तत् प्रति यो गतिः स तस्मिन् परे निहन्यत' इत्यर्थ इति भाव

वस्तुत इदञ्चिन्त्यम् । एकार्थीभावविषय एव समर्थपरिभाषाप्रवृत्ते
तद्विषयत्वन्न प्रकृते क्रियावाचकस्येति स्पष्टमेव । ननु प्रागुक्तभाष्यस्य
र्हिं का गतिरिति चेत्, यया क्रियया ऽव्यवहितपरशब्दवाच्यया यु
तत्प्रत्येव गतित्वमिति, प्रकृते तु यद्वाच्यया योगस्तद्व्यवहितत्वेन सं
नियमपक्षे गतित्वाभावो, येन चाव्यवधानन्तस्य क्रियात्वाभाव इति स
था गतित्वाभाव इति । 'किन्तर्हिं याहिशब्दम्प्रतीति' भाष्यस्य तदुवि
तत्वाद् गतित्वाभाव इति भावः । एवं यत्र सुबन्तत्वावच्छिन्नोद्देश्यक
धिसाहचर्यन्तत्रापि सन्नन्तादावेकार्थीभावो भाष्यकारादिसंवादात्
क्रियत इति बोध्यम् ।

*इति निषेधादिति* । अनुकरणावयवाऽच्छब्दस्यानर्थकत्वं स्फुट
"नानर्थक" इति परिभाषां विनापि लक्ष्यसिद्धिमाह-*आम्रेडितस्येति

म्रेडितस्य" (पा०सू०६।१।९९) इत्यारम्भाद्वा। अंत इति किम्? 'वटक्' इति।

नाम्रेडित॥ (पा०सू०६।१।९९) अव्यक्तानुकरणस्य इति अत इति च वर्त्तते। अव्यक्तानुकरणावयवीभूताऽऽम्रेडितावयवाच्छब्दस्येत्यर्थः। "नाम्रेडितस्य तस्तु वा" इति न सूत्रितं वैचित्र्यार्थम्। फलकल्पनाभिनिवेशस्तु न युक्तो भाष्यानुक्तेः। अत एव "तदधीते तद्वेद" (पा० सू०४।२।५९) इति सूत्रे "द्विस्तद्ग्रहणं प्रमादकृतमाचार्यस्य" इति भाष्ये उक्तम्। 'लाघवानवधानलक्षणोऽत्र प्रमाद' इति कैयटः। क्व तदवधानं क्व तदनवधानमिति तु भाष्यकृदुक्तप्रयोजने तदवधानमन्यत्रान्यदिति निर्णेयम्। ननु डाचोऽभावादेतदप्राप्तिरत आह—बहुलवचनादिति।

तस्य परम्॥ (पा०सू०८।१।२) अवयववाचिपरशब्दयोगेऽत एव ज्ञापकात् षष्ठी। तस्य ग्रहणं स्पष्टार्थम्, द्वे इत्यनुवर्त्य षष्ठ्या विपरिणामेन सिद्धेः। अन्यद्विरुक्तपरस्य तु न सञ्ज्ञा, अष्टमे "सर्वस्य" (पा०सू०८।१।१) इत्येतत्प्रकरणे संज्ञाकरणात्।

झलांजश् (पा०सू०८।४।५३) अन्तग्रहणं झलीति निवृत्त्यर्थम्। सर्वोपकारकतया च प्रकरणान्तेऽस्य लेखः। एतेन 'अत' इत्यत्रैव लेख उचित इत्यपास्तम्।

अज्झलोः सावर्ण्यनिषेधादाह—अचि किमिति। अनिष्पत्ते-

---

*वटगितीति। इदङ्कपोतोच्चारितध्वनेरनुकरणम्। *वैचित्र्यार्थमिति*। मात्रादिलाघवाभावेपि प्रतिपत्तिलाघवं यथा भवति तथैव वक्तव्यमिति नियमाभावसूचनार्थमित्यर्थः। *फलकल्पनाभिनिवेशस्त्विति*। नाम्रेडितस्येत्यंशस्यान्वाचयशिष्टत्वद्वारा वटग्वटगिति इत्यादौ अन्त्यस्य पररूपम्भवतीत्येवं रूप इति भावः। *प्रमादकृतमिति*। न तु तत्र द्विस्तद्ग्रहणेनाधीयानविदुषोः पृथग्ग्रहणं सिध्यति। अन्यथा 'योऽधीते वेद' च तत्रैव स्यादिति फलकल्पना कार्या। "तेन दीव्यति खनति जयति" इत्यादौ यथा पृथगेव निमित्तत्वं तथा पृथगेव भविष्यतीति भावः।

ननु ग्रहणकशास्त्रस्य सावर्ण्यविधिनिषेधाभ्याम् प्रागनिष्पत्तेरित्यनुपपन्नम्, सूत्रनिष्पत्तेर्नाज्झलाविति शास्त्रजन्यशाब्दबोधहेतुत्वे मानाभावादतोऽनिष्पत्तेरित्यस्य तावद्ग्रहणबोधकत्वेत्यादिपूरणेन व्याख्या

रिति । "नाज्झलौ" (पा०सू०१।१।१०) इति सूत्रविषयनिर्णये अ-
वादविषयपरिहारेण तत्तद्वर्णीयसवर्णपदवाच्यनिर्णयोत्तरं तावतां ग्र-
हणस्य ग्रहणकशास्त्रबोध्यतयैतद्बोधकाले ग्रहणकशास्त्रस्य तावद्ग्र-
हणबोधकत्वानिष्पत्तेरित्यर्थः ।

सूत्रस्थसवर्णपदानुवृत्तिमभिमेत्याह—"ऋति सवर्ण" इति । तत्
ळं दध्यृकारादावेतदप्रवृत्तिः । एतद्विधेययोः "अइउण्" सूत्रानन्त
पाठादच्त्वम् । तेन तयोः स्थाने प्लुतसिद्धिस्तयोश्च न रपरत्वम् । द्वि
मात्रमिति । अत एव "अकः सवर्णे" (पा०सू०६।१।१०१) इत्यनेन
ऋकारद्वयस्य स्थाने रेफद्वयवत्तारूपगुणकृताऽऽन्तर्येण कदा चिद्रेफद्व
गर्भस्य विवृतत्वाऽऽन्तर्येण कदा चिद्विवृतस्य, ऌकारे लकारवत्तान्तर्ये
कदाचिद् द्विलकारस्य, कदाचिद्विवृतत्वसाम्येन रेफवत्तासाम्येन च ता
दृशस्य ऋकारस्य सिद्ध्या विकल्पफलसिद्धिमाश्रित्यैतद्वचनद्वयं "तुल्या
स्य" (पा०सू०१।१।९) इति सूत्रे भाष्ये प्रत्याख्यातम् । द्वौ रेफा
विति । अत्रापि तदेव भाष्यं मानं । द्विरेफत्वे हि रेफद्वयवति स्था
निन्ययं, लकारवत्यपर इति व्यवस्था सिद्ध्यति । अभित इति
द्वौ रेफावित्यनुषज्यते । तच्च द्वितीयान्तम् । अभितः पदयोगात् ।

"एओङ्" सूत्रे भाष्ये 'मातॄणाम्' इत्यादौ णत्वादिसिद्ध्यर्थं

---

युक्त्याशयेनाह—*नाज्झलाविति* । यद्यपि "ऋति ऋ वा
इत्येव वचनन्तथाप्यनुवृत्त्यैतादृशार्थलाभ इत्याह—*सूत्रस्येति* । वार्ति
कद्वयविधेययोः प्रसिद्धाद्विलक्षणत्वं वार्तिकारम्भेणैव ज्ञायत । ए
चाच्कार्यसिद्धिः कथमत आह—*एतद्विधेययोरिति* । *न रपर
मिति* । प्रथमणकारेणाण्ग्रहणस्यैव तस्मिन् सूत्रे निर्णीतत्वात् । *अ
एव* । द्विमात्रत्वादेव । *रेफद्वयवत्तारूपेति* । स्थानार्थगुणप्रमाणेति च
विधमेवाऽऽन्तरतम्यमिति नियमस्य 'उरण्' इति सूत्रेऽनान्तर्यमेवान्तर्यमि
भाष्यकृतोक्तत्वेन त्यागादिति भावः । *कदाचिद्विवृतस्येति* । प्रसिद्ध
दीर्घऋकारस्येत्यर्थः । *द्विलकारस्येति* । वार्तिकविधेयस्येषत्स्पृष्ट
दीर्घऌकारस्यात्राप्रसिद्धत्वादिति भावः । *रेफवत्तासाम्येन चेति* । रे
हि द्वयोः षष्ठीनिर्दिष्टयोः स्थाने भवति लभतेऽसावन्यतरतो व्यपदेश
इति भाष्यकृतैवोक्तत्वेन पूर्ववृत्तिधर्मवत्त्वेनोत्तरवृत्तिधर्मवत्त्वेन वा सा
स्य ग्रहीतुमुचितत्वादिति भावः । *तदेव भाष्यमिति* । प्रत्याख्यान

वश्यमङ्गीकर्त्तव्ये 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्त' इति पक्षे 'प्रक्लृप्य' 'खट्वाभिः' 'वाचा तरति' इत्यादौ तुगैस्भ्यज्लक्षणानां शङ्कायाः, "दीर्घात्" (पा०सू०६।१।७५) इति तुग्विधानसामर्थ्यतपरकरणसामर्थ्य"नौद्यचः" (पा०सू०४।४।७) इति सूत्रस्थनौग्रहणसामर्थ्यैर्भेदेनाप्रतिभासमानेषु वर्णावयवेषु अवयवसदृशस्वतन्त्रवर्णाश्रयकार्याभावज्ञापनरूपसमाधानस्य च करणवत् 'प्रातर्क्ऌतम्' इत्यत्र "रोरि"(पा० सू०८।३।१४) इत्यस्य तद्‌लृकार इत्यादौ "तोर्लि"(पा०सू०८।४।६०) इत्यस्य च शङ्कासमाधानाकरणेन 'यत्तद्रेफात्परं भक्तेः' इति 'हयवरट्'सूत्रस्थभाष्येण च 'ऋलृक्'सूत्रस्थयोरर्धमात्राज्भागस्याभितः क्लृप्तत्वेन तथैवोचितत्वादिति भावः ।

द्वौ लकाराविति । हल्द्वयवत्पूर्वसाहचर्यादिति भावः । अत्र ह्रस्वऋकारद्वयस्थानिकैकादेशे एव पूर्वस्य साधुत्वं ह्रस्वऋकारलृकारस्थानिकैकादेशे एवोत्तरस्य साधुत्वम् । अत एव लृति न ऋकारो नाप्यृति लृकारः । अत एव वार्त्तिके ऋतीति तपरकरणमुत्तरवार्त्तिके लृतीति च चरितार्थम् । तुल्यास्यसूत्रे भाष्ये 'यदेतदृतीति एतदृत इति वक्ष्यामि, इत्येतद्वचनाश्रयणेन ऋलृवर्णयोः सावर्ण्यं न कार्यमिति च

---

भाष्यमेवेत्यर्थः। तदेवोपपादयति—*द्विरेफत्वे हीति* । *अवश्यमङ्गीकर्तव्य इति* । ऋवर्णान्नस्येति तु पक्षान्तरेऽस्ति ।

*भेदेनाप्रतिभासमानेष्विति* । ऊकाराद्यवयवेष्वित्यर्थः । *प्रातर्क्ऌतमित्यत्रेति* । एतेन मूले वार्तिकव्याख्यानावसरे 'अभितोऽज्भक्तेः' इति यदुक्तन्तद्वार्तिकविधेययोरेवेति शङ्काव्युदासः । *रेफात्परम्भक्तेरिति* । रेफाद्भक्तेः परमिति योजना । *तथैवोचितत्वादिति* । अभितोऽज्भागस्योचितत्वादिति भावः । वार्तिकविधेययोर्यत् साधुत्वन्तद्विषयं दर्शयति *अत्र ह्रस्व इत्यादि* । ऋतीति तपरकरणेन ह्रस्वस्यैव स्थानित्वलाभात् । *पूर्वस्य* । पूर्ववार्तिकविधेयस्य । *ह्रस्वऋकारेति* । 'यदेतदृतीति एतदृत इति वक्ष्यामि' इति भाष्यात् । *लृकारेति* । तस्यैव द्वितीयवार्तिक उपादानात् । *अत एवेति* । उक्तव्यवस्थाश्रयणादेवेत्यर्थः । *सावर्ण्यन्न कार्यमिति* । सावर्ण्यस्य 'होतृ लृकार' इति स्थिते सवर्णदीर्घरूपं यत्फलं तस्यानेन वार्तिकेनैव सिद्धिर्भविष्यति वार्तिकस्थवाशब्दस्य चार्थत्वात् । एवञ्च वार्तिके 'ऋत' इति करणे 'होतृलृकार' इत्यत्रैव

सङ्गच्छते । उपस्थितरेफीयप्रयत्नत्यागे मानाभावादीषत्स्पृष्टाविमौ विवृतत्वे हि विवृतऋकारऌकाराभ्यामनयोरपि ग्रहणे "अकः सवर्णे" इत्यनेनैव सिद्धे वार्त्तिकस्यैव वैयर्थ्यापत्तेः ।

एङः प ॥ (पा०सू०६।१।१०९) पदान्तात् किम् ? भवति ।

सर्वत्र वि(पा०सू०६।१।१२२)"प्रकृत्यान्तः"(पा०सू०६।१।१ इति सूत्रात्प्रकृत्येत्यनुवर्त्तते । प्रकृतिशब्दोऽत्र स्वभाववाची 'दुस्त्यजः प्रकृतिः' इत्यादौ तथा दर्शनात् । प्रकृत्या स्वभावेनावस्थानमित्यर्थः अत एव प्रकृतिभावे न पूर्वरूपं नाप्ययादय इति भावः । "नान्तः पादम्" इति पाठे त्वनेन सूत्रेण गोशब्दस्य यत्प्राप्तं तन्नेति व्याख्यानेन नान्तः पादमित्यनेनैव पूर्वरूपत्वादिकं विकल्पेन निषिद्धम् इति बोद्धव्यम् ।

अवङ् ॥ (पा०सू०६।१।१२३) स्फोटोऽयनं यस्य सः, स्फोटप्रतिपादक इत्यर्थः । "स्फौटायनस्य" इतिपाठे नडादित्वं कल्प्यम् स्फोटायनोऽवङः समर्त्ताऽन्यस्तु तदभावस्येति स्मृत्यन्तरानुसन्धान द्वारेणात्र विकल्पो बोद्ध्यः । निवृत्तमिति । अत एव इन्द्रे इति 'सामर्थ्यान्नित्यम्' इति भाष्यादावुक्तम् । गवाग्रमिति । सन्निपातपरिभाषया अनित्यत्वाद्दीर्घ इति बोद्ध्यम् । व्यवस्थितेति ।

---

द्वितीयवार्तिकविधेयौ भविष्यत इति तत्र सवर्णग्रहणानुवृत्तिर्न कार्या इति भावः । वार्तिकविधेययोरीषत्स्पृष्टत्वे प्रमाणमाह–*उपस्थितेति* एतेनान्यप्रयत्नकत्वशङ्का निरस्ता । ननु प्रसिद्धऋकारीयप्रयत्न एवास्त्वित्यतआह–*विवृतत्वे हीति* । अनयोरपि ऋकालत्वस्योपपादितत्वादिति भावः ।

*भवतीति*। न चात्र शपि गुणे सन्निपातपरिभाषया न पररूपमिति वाच्यम् । अस्य 'धयति' इत्याद्युपलक्षकत्वात । न चापदान्तात्चेत् ङसिङसोरेवेति नियमार्थक'ङसिङसोश्च' इति सूत्रारम्भान्नात्र दोष इति वाच्यम् । विभक्तौ चेन्ङसिङसोरेवेति नियमपरतयापि सूत्रसार्थक्यसम्भवात् । 'हरये' 'असुनवम्' इत्यादिव्यावर्त्यं स्यात् । *स्फौटायनेति* । स्फोटस्य ऋषेरपत्यमित्यमित्यर्थः । *अत एव* । तन्निवृत्तिरस्वीकारादेव ।

ननु सन्निपातपरिभाषयाऽवङादेशे कृते दीर्घो न स्यादत आह–*

देवत्रातो गलो ग्राह इतियोगे च सद्विधिः ।
मिथस्तेन विभाष्यन्ते गवाक्षः संशितव्रतः ।

तेन प्राण्यवयवे नेति "शाच्छोः" (पा०सू० ७।४।४१) इति सूत्रे भाष्ये स्पष्टम् । 'अग्नीत्प्रेषणे' (पा०सू०८।२।९२) इति सूत्रे 'अग्नीदग्नीन्विहर इत्यत्र एतद्व्यावृत्त्यर्थं वार्त्तिककृद्बहुलग्रहणघटितं न्यासं कृतवान् । तत्प्रत्याख्यानाय भाष्ये कृतेन 'विभाषा' इति योगविभागेन विभाषेत्यस्य व्यवस्थितविभाषात्वं ध्वनितम् । तथा "अजेर्व्यघञपोः" (पा०सू०२।४।५६) इति च व्यवस्थितविभाषेति "अजेर्वी" इतिसूत्रे भाष्ये स्पष्टम् । न च व्यवस्थितविभाषयेन्द्रे नित्याऽवङि सिद्धे "इन्द्रे च" (पा०सू०६।१।१२४) इति व्यर्थमिति वाच्यम् । भाष्योक्तातिरिक्तव्यवस्थितविभाषाणामप्रामाणिकत्वज्ञापनार्थं तत्सत्त्वादित्याहुः ।

इन्द्रे च (पा०सू०६।१।१२४) क्व चिद्भाष्यपुस्तके चशब्दरहितः पाठः । इन्द्रावयवेऽचीत्यर्थस्तेन षष्ठीतत्पुरुषोत्तरपदषष्ठीतत्पुरुषे 'गवेन्द्रयज्ञ' इत्यादावव‍ङ्सिद्धिः । अन्यथा वाक्ये गोशब्दस्येन्द्रपरत्वासंभवेन समासाक्षेपादिन्द्रशब्दस्योत्तरपदत्व एव प्रवृत्तिः स्यात् ।

---

न्निपातेति* । *देवत्रात इति* । "क्तिच्क्तौ च" इतिसंज्ञायां क्ते "नुदविद" इति नत्वमत्र न । *गल इति* । "अचि विभाषा" इति लत्वम्प्राण्यवयवे नित्यम् । *ग्राह इति* । जलचरे "विभाषा ग्रह" इति णप्रत्यय एव । *इतियोग इति* । 'हन्तीति पलायत' इत्यादौ "लक्षणहेत्वोः" इति शत्रादिर्न । वातायनेऽवङ् नित्यः । व्रतविषये शाच्छोरिति नित्यमेवेत्वम् । ते नत्वादयो मिथो न विभाष्यन्ते एकस्मिन् विषये पर्यायेण न भवन्ति ।

अन्या अपि व्यवस्थितविभाषा भाष्यप्रमाण्यात्तत्र तत्र स्वीकार्याः । न तु स्वच्छेया । तदाशयेनाह—*अग्नीत्प्रेषण इतीति* ॥ अग्नीध्रःप्रेषणे यद्वाक्यन्तस्यादेस्तस्मात्परस्य च प्लुतो भवति । स यथा 'ओश्रावय' इत्यत्र भवति तथा 'अग्नीदग्नीन्विहर' इत्यत्रापि स्यादित्यर्थः । नन्वन्यत्रापि व्यवस्थितविभाषात्वस्वीकारे "इन्द्रे च" इति सूत्रं व्यर्थमित्याशङ्क्य निराचष्टे—*न चेति* । एवञ्च भाष्यतात्पर्यविषय एव व्यवस्थितविभाषात्वमिति सिद्धम् ।

*इन्द्रावयवेऽचीति* । अवयविन आधारत्वविवक्षायां सप्तमी । अत्रा-

"प्लुतप्रगृह्या (पा०सू०६।१।१२५) इत्यस्य प्रकृत्येति पाठ ए
सामञ्जस्यं मत्वाह—अथ प्रकृतीति । न चैतद्घटकपदार्थज्ञाना
प्रगृह्यत्वादिकथनं पूर्वं युक्तमिति वाच्यम् 'इन्द्रे च" (पा०सू०६।१।
१२४) इत्यत्र प्राचीनपठितनित्यग्रहणस्याऽप्रामादिकत्वं बोधयि
तदव्यवहितमेतत्सूत्रलेखनात् । तत्र नित्यग्रहणे तदव्यवहितोत्तरे
त्सूत्रे तद्वैयर्थ्यं स्पष्टमेवेत्याशयेनाह—'प्लुताः प्रगृह्याश्च वक्ष्यन्ते
इति । अचीत्यनुवर्त्तमाने पुनरज्ग्रहणं प्रत्यासत्त्या यत्राचि अनयो
प्रकृतिभावस्तदज्निमित्तकार्यस्यैव तेनाभाव इत्यर्थलाभार्थं, तेन 'जा
नु उ अस्य रुजति', 'जानू अस्य'(१) इत्यादौ सवर्णदीर्घरूपसन्धि
र्भवत्येव । एहि कृष्णोति । "दूराद्धूते च (पा०सू०८।२।८४) इ
प्लुतः । अत्र प्लुतस्याश्रयात्सिद्धत्वं बोद्धव्यम् । नित्यमिति किमिति
वा ग्रहणनिवृत्त्यैव तल्लाभ इति प्रश्नः । मा भूदिति । नित्यग्रहण
सामर्थ्येन पुनर्विधानाद् बाधकविषये ऽप्ययमेवेति भावः ।

इको ऽसवर्णे (पा०सू०६।१।१२७)। एङः (पा०सू०६।१।१०९
इसतः पदान्तादित्यनुवृत्तं प्रथमया विपरिणम्यत इत्याह—पदान्ता

---

प्यचीत्यनुवर्त्तमानं विशेष्यसमर्पकमेव । तदुक्तम्भाष्ये । "नैवं विज्ञाय
इन्द्रेचीति । किन्तर्हि 'अचीन्द्रे" इति । न चेदानीमप्याक्षेपादुत्तरपदभूतेन्द्र
शब्दावयवेऽचीति व्याख्यानेनानुपपत्तिः समानैवेति वाच्यम् । अचीत्य
नुवृत्तिसामर्थ्या त्तथार्थाकल्पनात् ।

*सामञ्जस्यमिति* । प्लुतप्रगृह्या इत्यस्य प्रथमान्तत्वात् । *अची
त्यनुवर्त्तमान इति* । न चाज्ग्रहणानुवृत्त्यभावेपि प्लुताः प्रगृह्याः प्र
त्या इत्यनेनैव सामञ्जस्येऽज्ग्रहणानुवृत्तिसामर्थ्यादुक्तार्थो भविष्यतीति
वाच्यम् । अनुवृत्तिसामर्थ्यात्तस्मिन्निति परिभाषायाः षष्ठ्यन्तपदराहित
या अप्युपस्थितिः सम्भाव्येतेत्याशयात् । *आश्रयादिति* । अनुवा
सामर्थ्यादित्यर्थः । *वाग्रहणनिवृत्त्यैवेति* । सर्वत्र विभाषेतिसूत्रादनु
र्त्तमानस्य विभाषाग्रहणस्य "इन्द्रे च" इतिसूत्रे सामर्थ्यान्निवृत्तेरुक्तत्वात्
*अयमेवेति* । एतच्च मूल एवोक्तम् ।

*प्रथमया विपरिणम्यत इति* । 'इक' इत्यस्य जसन्तस्य विशेष

---

(१) नन्वत्र स्थानिवत्त्वेन प्रगृह्यत्वं वाच्यम् । तच्च दुर्लभं नव्यमते तस्याऽलवृत्तित्वादिति चेद्, सत्य
परादिवद्भावेनैव प्रगृह्यत्वाङ्गीकारादितिभावः ।

इति । वेति । ह्रस्वयणोर्विधानसामर्थ्यात्तु न विकल्पसिद्धिः । अपदान्तादौ यणश्चरितार्थत्वात् । सामर्थ्यादेवेति चेन्न । प्रकृतिभावाकर्षणेऽपि "ऋत्यकः" (पा०सू०६।१।१२८) इत्यत्र चानुकृष्टत्वेन तदसंबन्ध इति तदर्थं ह्रस्वविधानसामर्थ्यस्यावश्यकत्वेन चकारो व्यर्थ इति भावः। भाष्ये स्थितमिति । प्रकृतसूत्रे इति शेषः । एतेन ह्रस्वाभावे प्रकृतिभावार्थं चकार इति न्यासाद्युक्तमपास्तम् । चक्री अत्रेति तु संहिताया अविवक्षायां बोद्ध्यम् । "न समासे" "सिति च" इति वार्त्तिकम् । पार्श्वमिति । "पर्श्वाणस्वक्तव्यः" इति णस् "सिति च" (पा०सू०१।४।१६) इति पदत्वम् ।

ऋत्यकः (पा०सू०६।१।१२८) सवर्णार्थमनिगर्थश्चेदम् । 'होतृऋकारः' 'ब्रह्मऋषिः' । 'आर्छत्' इति । आटो धात्ववयवत्वेनापदान्तत्वादिति भावः । ( ईषदसमाप्तऋच्छको बहृच्छक इत्यपि व्यावृत्त्यर्थं बोध्यम् )(१)एतेन "आटश्च"(पा०सू०६।१।९०) इति पुनर्वृद्धिविधानार्थेन चेनोस्योमाङ्क्षु पररूपबाधवत्प्रकृतिभावस्यापि बाधेनेष्टसिद्धिरित्यपास्तम् । समासेऽपीति । व्याख्यानादिति भावः । 'सप्तऋषीणाम्' इति । "दिक्संख्ये" (पा०सू०२।१।५०) इति समासः ।

---

स्यानुरोधात् । पञ्चम्याः पूर्वत्र कृतार्थत्वात् । *विकल्पसिद्धिरिति* । शाकल्यग्रहणसिद्धस्य विकल्पस्य सिद्धिरित्यर्थः । *तदसम्बन्ध इति* । प्रकृतेत्यस्यासम्बन्ध इत्यर्थः । *आवश्यकत्वेनेति* । उत्तरसूत्रेऽपश्यन्तथा वक्तव्ये पूर्वसूत्र एव तथास्त्विति भावः । न च ह्रस्वाभावे प्रकृतिभावार्थश्चकारोऽस्त्विति वाच्यम् । भाष्यप्रामाण्येन ह्रस्वप्रकृतिभावयोरेकत्रैव प्रवृत्तेः स्वीकारात् । यत्रैकस्याभावस्तत्रापरस्याप्यभावाङ्गीकारात् । तथा सति 'चक्री अत्र' इत्यस्यासिद्धिरत आह-*चकी अत्र इति* । *इति वार्त्तिकमिति* । "सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्य" इतिवार्त्तिकखण्डनिर्देशः । *इति णासिति* । पर्शूनां समूह इत्यर्थे इत्यादिः । *पदत्वमिति* । तेन गुणाभाव इति भावः ।

*बहृच्छक इति* । अत्र बहुजवयवोकारस्यापदान्तत्वं सुलभमेव । *एतेन* । बहृच्छक इत्यस्य व्यावर्त्यस्य लाभेन । *व्याख्यानादेति* । पूर्वसूत्रप्राप्तियोग्यस्यैवोदाहरणस्य भाष्ये उपन्यासमूलकात् सि-

---

(१) अयं पाठः पुस्तकान्तरे नास्ति । परंच टीकाकौर रादृतत्वात् आवश्यक इति च भाति ।

प्रकरणशुद्धये प्रकृतिभावविधायकसूत्रद्वयमुपन्यस्य "प्लुतप्रगृह्या (पा०सू०१।१।१२५) इति सूत्राकाङ्क्षितप्लुतप्रगृह्ययोर्मध्ये प्रथमो पात्तत्वात् प्लुतप्रकरणमारभते–वाक्यस्य टेः (पा०सू०८।२।८२) वाक्यस्येत्यभावे पदस्य टेरित्यर्थे ऽनन्त्यस्यापि पदस्य टेः प्लुतः स्यात्। तत्सत्त्वे तु वाक्यस्य टिरन्त्यपदस्यैव संभवतीति न दोषः टिग्रहणाभावे प्लुतश्रुत्योपस्थिताचपरिभाषया ऽजन्तस्यैव स्यात् टिग्रहणे तु सामर्थ्याट्टिनाचो विशेषणाद्व्यञ्जनान्तस्यापि भवति।

प्रत्यभिवादे (पा०सू०८।२।८३) प्रणामादिभिराशिषं वाच्य मानो गुर्वादिर्यत्प्रतिसंभाषते तत्प्रत्यभिवादः। न त्वाशीर्वचनं आशीर्वादरूपप्रत्यभिवादाभावेन "अशूद्रे" इत्यस्य वैयर्थ्यापत्तेः अत एव भाष्ये 'अशूद्रे इति किं? कुशल्यसि तुषजक' इत्युक्तम् अभिवादये इति। नमस्कारपूर्वमाशिरादि वाचयामीत्यर्थः आयुष्मानित्यायुष्मत्त्वस्य विधेयत्वात्संबोधनविभक्त्यभावः। 'एधि इति 'भव' इत्यस्याप्युपलक्षणं, (१) प्रत्यभिवादे शर्मादिप्रयोगो नियतः। "एचोऽप्रगृह्यस्य" (पा०सू०८।२।१०७)इति सूत्रे प्रत्यभिवादे ऽन्तस्यैचः प्लुतविधानात्। 'आयुष्मानेधि अग्निभूता ३ इ' इति भाष्ये तदुदाहरणाच्च। शर्मादिप्रयोगे तु तट्टेरेव प्लुतः। 'शर्मान्तं नाम ब्राह्म

---

त्साहचर्यमूलकाद्वा व्याख्यानादित्यर्थः। *प्रथमोपात्तेति*। लोके प्रथमोपात्ते एव प्रथमजिज्ञासोदयस्यानुभवसिद्धत्वात्।

*यत्प्रतिसम्भाषत इति*। एवञ्चाशीर्वचनम्प्रत्यभिवाद इत्येव न, किं यद् गुर्वादिर्वक्ति स्वीयानुग्रहसूचकवाक्यमात्रमाशीर्वचनरूपं कुशलप्रश्न वा तत्सर्वम्प्रत्यभिवादशब्दबोध्यमिति भावः। *विधेयत्वादिति*। सम्बोध्यतावच्छेदकत्वेनाभिमतो यो धर्मस्तदवच्छिन्नस्य यत्र सिद्धत्वन्तत्रैव सम्बोधनविभक्त्यङ्गीकारात्। *भवेत्यस्याप्युपलक्षणमिति*।

आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने

इति मनुसम्वादात्। नन्वेधीतिप्रयोगस्तर्हि निर्मूल एवेति चेत्, नूक्तौ भवेति यत्तदर्थपरमित्यभिप्रायात्। अत्रैव किम्मानमिति चेत्, 'आयुष्मानेधि अग्निभूता इ' इत्यनुपदमुदाहरिष्यमाणभाष्यप्रयोगे एवेति गृहाण। *शर्मान्तन्नामेति*। यत्र शर्मादिप्रयोगस्तत्र तस्य तदवयव

---

(१) "आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने" इति मनूक्तेः। नन्वेवमेधीतिप्रयोगे किं मितिचेत् "आयुष्मानेधि" इतिभाष्योदाहरणमेव मानम् इत्यवधेयम्।

णस्य' इत्यादिस्मृत्या तस्य नामावयवत्वबोधनात्। स्त्रियां नेति। स्त्रिया अपि नाम्नाभिवादप्रत्यभिवादे इत्यर्थस्य भाष्यसंमतत्वादिति भावः।

नामगोत्रं वेति। अभिवादप्रत्यभिवादे नामगोत्राभ्यामेव स्मृतिषु प्रसिद्धेः। तत्राधिकृतस्य पदस्येत्यस्य प्रत्यभिवादे इत्यनेन विशेषणात् प्रत्यासत्त्या प्रत्यभ्युद्यमानार्थवाचकस्यैव प्लुत इति भावः। तत्र नामशब्देन द्वादशेऽह्नि पित्रादिकृतं गृह्यते। अत एव 'आयुष्मान् भव दण्डिन्' इत्यादौ प्लुतो नेति स्पष्टं भाष्ये। भोराजन्येति। भोशब्दस्य राजन्यवैश्यवाचकनाम्नश्च टेः प्लुत इत्यर्थः। भोशब्दस्याप्राप्ते इतरयोस्तु नामत्वात्प्राप्ते विभाषेयम्।

दूराद्धूते (पा०सू०८।२।८४) यावति देशे प्राकृतप्रयत्नोच्चारितं संबोध्यमानो न शृणोति किं त्वधिकं प्रयत्नमपेक्षते तावद्दूरम्। दूरादाह्वानञ्च दूराद्बोधनस्योपलक्षणं, न तु संबोधनविभक्तिनियामकस्याभिमुखीकृत्य बोधनरूपस्य संबोधनस्योपलक्षणम्। 'आगच्छतु भवान्देवदत्त' इत्येवमाह्वानस्यापि संभवात्। अत एवाऽऽकडारसूत्रे नदीगुरुसंज्ञयोः समावेशे 'वात्सीबन्धुः' इत्यत्र गुरोः (पा०सू०८।२।८६) इति प्लुतो "नदीबन्धुनि" (पा०सू०६।२।१०९) इति पूर्वपदान्तोदात्तत्वञ्च फलमुक्तं भाष्ये। अन्यथात्र संबोधनाभावेन "गुरो" इत्यस्याप्राप्त्या तदसङ्गतिः स्पष्टैव। उपलक्षणत्वादस-

---

नतु तदन्तमेव नाम। उक्तभाष्यप्रयोगस्यैवात्रापि मानत्वादिति भावः। *स्त्रिया अपीति*। तद्विषये तथैवोदाहृतत्वात्। *नामगोत्राभ्यामेवेति*।

असौ नामाहमस्मीति स्वं नाम परिकीर्त्तयेत्।

इति मनुवचने नामपदङ्गोत्रस्याप्युपलक्षणम्। *प्रत्यासत्त्येति*। वाक्यसम्बन्धिटित्वसिध्यर्थमेतस्य वाक्यान्तत्वम्। *भोशब्दस्याप्राप्त इति*। अस्य नामगोत्रभिन्नत्वात्। दूरत्वस्यानियतत्वादाह—*यावति देश इति*। *प्राकृतेति*। स्वाभाविकेत्यर्थः। *उपलक्षणमिति*। एवञ्चाह्वानाभावेऽपि न क्षतिरिति भावः। तत्र मानमाह—*अत एवेति*। उक्तार्थाङ्गीकारादेवेत्यर्थः। *समावेश इति*। लघुगुरुसंज्ञे वर्णस्य नदीधिसंज्ञे तु तदन्तस्येति समावेशसिद्धिः। अत्राकडारसूत्र इति पाठे रेफान्तानुकरणादागन्तुनाऽकारेण निर्देशो बोध्यः।

त्यध्याहाने भवति तदाह—सक्तूनित्यादि । अत्रापि "दूराद्धूते" इत्येतदनुवृत्तस्य पदस्येत्यस्य विशेषणं । तेन हूयमानार्थवाचिनः पदस्यैव टेः प्लुतः । तच्च रूढं यौगिकं वेत्यन्यदेतत् ।

हैहेप्र ॥ (पा०सू०८।२।८७) हैहयोः संबोधनद्योकत्वेन केवलाभ्यामपि ताभ्यां संबोधनदर्शनेन च तयोरपि हूयमानार्थपदत्वा "गुरोरनृत"इत्येव सिद्धे नियमार्थमिदमित्याह—हैहयोरेवेति । हैहेऽन्त इत्येव सिद्धे प्रयोगग्रहणादनन्त्ययोरपि । तदाह–हे३ रामेति ।

केचित्तु एकं हैहेग्रहणमनन्त्यार्थम् । अन्यथा वाक्यस्य टेरित्यधिकारादन्त्ययोरेव तयोः स्यात्तदाह— हे ३ रामेति ।

प्रयोग इति तु यत्र संबोधनोत्तरं तयोः प्रयोगस्तत्र तेनैवाभिमुख्यस्य द्योतितत्वेन द्योत्याभावादनर्थकयोरपि तयोः प्लुतार्थं तदाह—राम है ३ इति । अन्यथाऽप्रयुक्तयोः प्लु

---

*केवलाभ्यामपीति* । यत्र नामग्रहणस्यात्मनामेत्यादिना निषेधस्तत्र 'आगच्छ हे' इति प्रयोगदर्शनादित्यर्थः । न चैवमपि हेशब्दस्य समभ्याहृतपदगतशक्त्युद्बोधकत्वरूपद्योतकत्वस्यानुपपत्तिः समभिव्याहृतस्य तादृशस्य पदस्याभावादिति वाच्यम् । 'प्रादेशं विमाय परिलिखति' इत्यत्र विद्यमानस्य वाक्यैकदेशन्यायेन प्रादेशं विपरिलिखतीत्यस्य तादृशार्थबोधकत्वेन तद्घटकस्य विशब्दस्य यथा विमानक्रियाक्षेपकत्वव्यवहारस्तथाऽत्रापि स्वघटिताग्रहणयोग्यनामघटितवाक्यार्थे 'आगच्छ हे' इत्यत्र वर्त्तमानत्वेन द्योतकत्वोपपत्तेः । एवञ्चेदं सूत्रं नियमार्थमिति सिद्धम् । *हैहेऽन्ते इत्येवमिति* । वाक्यस्य टेरित्यधिकारादन्त्यग्रहणमनर्थकमिति न शङ्क्यम । अन्त्यग्रहणाभावेऽधिकारबलादनन्त्ययोस्तयोः प्लुतस्याप्राप्तौ विध्यर्थमेतत्सूत्रं स्यादित्याशयात् । हैहयोरिति तु यत्र हैहयोः प्रयोगस्तत्र हैहेसम्बन्धिनोऽनन्त्यस्यापि प्लुतो भवतीति प्लुतयोरेकत्र समावेशः स्यादित्येवमर्थम । प्रयोगग्रहणसत्त्वे तु हैहेप्रयोगे इत्यंशस्यानुवादसमर्पकत्वं हैहयोरित्यस्य च विधेयबोधकत्वमिति निश्चयो भवतीतीष्टसिद्धिः । स्वसिद्धान्तमाह—*केचित्त्विति* । *एकमिति* । आद्यमित्यर्थः । प्रयोगे हैहयोरिति निर्देशेऽपि प्रत्यासत्त्या हैहेप्रयोग इति लभ्यत एव । नन्वेवमपि हैहे हैहयोरित्येवास्तु । प्रयुज्यमाने सतीत्यध्याहारेण वाक्यार्थावसानम्भविष्यतीत्यत आह—*प्रयोग इतीति* । प्रयोगग्रहणाभावे "दूराद्धूत" इत्यस्यानुवृत्त्या हूयमानार्थत्वं यत्र तत्रैवेति कल्पनया 'हे ३ राम'इत्यादावेव स्यादिति भावः । *अन्यथा* । प्रयोगग्रहस्यानर्थकहैहे

तासंभवात्तद्वैयर्थ्यं स्पष्टमेव । "हैहयोः" इति तु तयोर्हूयमानार्थपदत्वाभावादप्राप्ते विध्यर्थं (१)। नियमे तु न मानं, तेनात्र प्लुतसमावेश, एतत्सर्वं भाष्यकैयटयोः स्पष्टमित्याहुः । यत्तु अयं हूयमानार्थपदस्य टेः प्लुतस्य बाधकस्तक्रकौण्डिन्यन्यायादिति । तन्न । 'शिव हे' इत्यादौ तस्याप्राप्तेस्तन्न्यायविषयाभावात् ।

गुरोर ॥ (पा०सू०८।२।८६) "दूराद्धूते" इत्यनुवर्त्तते । तेन दूराद् बोधन एव प्रवृत्तिस्तदाह—दूराद्धूतइति । दूरत्वप्लुतार्थत्वाभावे ।

*तद्वैयर्थ्यं स्पष्टमेवेति* । सति तु प्रयोगशब्दे तत्सामर्थ्यादानर्थक्ये ऽपि यत्र प्रयोगस्तत्र तयोः प्लुतासिद्धिः । *अप्राप्ते विध्यर्थमिति* । राम है ३ इत्यादौ सामर्थ्यादन्त्यस्य हूयमानार्थभिन्नस्य स्यादिति भावः । अत्र केचिदिति दर्शनेनारुचिं कल्पयन्ति यद्यपि सर्वं भाष्यकैयटारूढम् । तथापि हैहयोः प्रयोगे इत्यनेन प्रत्यासत्तिन्यायेन षष्ठ्युच्चारणसामर्थ्येन च तयोरेव प्लुतसिद्ध्या तद्व्यर्थमेवेति ।

अत्रेदश्चिन्तनीयम् । "हैहेप्रयोगे हैहेग्रहणं क्रियते । हैहयोः प्लुतिर्यथा स्यात् 'देवदत्त है३' 'देवदत्त हे ३'अक्रियमाणे हि हैहेग्रहणे तयोः प्रयोगेऽन्यस्य स्यात्" इति भाष्ये उक्तम् । एतेन हैहयोरित्यस्य प्रयोजनमुक्तम् । भाष्ये हैहेप्रयोगे इत्यत्र प्रयोगपदोपादानात् । अत्र कैयटः–'अन्यथारम्भसामर्थ्यादनन्त्यस्यापि हूयमानवाचिन प्लुतः स्यात् । देवदत्त हे इत्यादौ हूयमानवाचिनो देवदत्तशब्दस्य 'हे देवदत्त, इत्यादौ पूर्वेणैव सिद्धिरिति भावः' । तदनन्तरम्भाष्ये "अथ प्रयोगग्रहणङ्किमर्थम्? प्रयोगग्रहणमर्थवद्ग्रहणेऽनर्थकार्थम् । प्रयोगग्रहणेऽनर्थकयोरपि यथा स्यात् । 'देवदत्त हे३' 'देवदत्त है ३' पुनर्हैग्रहणङ्किमर्थम्? अयमाद्यविषये प्रश्नः । 'अनन्त्ययोरपि यथा स्यात् । है ३ देवदत्त" इति भाष्येऽनर्थकयोरिति यत्तस्यानर्थकत्वमुक्तरीत्या कैयटेनोपपादितम् ।

अस्मिन्प्रघट्टके सामर्थ्यादिति कथनेन प्रत्यासत्तिन्यायापेक्षया सामर्थ्यस्य बलवत्त्वं सूचितम् । षष्ठ्युच्चारणसामर्थ्यादित्यपि न युक्तम् । हैहयोरित्यस्याभावे स्थानषष्ठ्यनिर्देशात् । प्रथमोपात्तस्य हैहयोरित्यस्य तु प्रयोगापेक्षया कर्मषष्ठीत्वात्तस्याश्च प्रयोगविशेषणभूतार्थप्रतिपादकत्वेन चरितार्थत्वादिति । *शिव हे इत्यादाविति* । अत्र हेशब्दस्य पूर्वोक्तरीत्या हूयमानार्थत्वाभावः स्पष्ट एव । ननु सर्वप्लुतप्रकरणस्यायं शेषो·

(१) अत्रायमभिसन्धि. । एकं "है हे" ग्रहणं नामग्रहणनिषेधविषये 'एहि हे' इत्यादौ हूयमानार्थत्वाभावादप्राप्ते विध्यर्थम् । अपरञ्च 'हे राम' इत्यादौ वाक्यादित्वात् अप्राप्ते विध्यर्थम् । इतिभावः ।

श्वात्राविवक्षितं तेन प्रत्यभिवादे "भो राजन्य" इत्यस्य विषये अ
स्य प्रवृत्तिः। तद्विषयेऽप्युपलक्ष्य बाधनसत्त्वात्। सर्वप्लुतप्रक
णस्य तु न शेषः। तथा हि सति "वाक्यस्य टेः" इत्यनेन
वाऽप्यधिकारत्वमेव कुर्यात्। एतत्त्रयविषयमेवेदमिति प्रकर
"अनुदात्तं प्रश्नान्ते" (पा०सू०८।२।१००) इति सूत्रे च
स्पष्टम्।

अपिशब्दो यथाप्राप्तटिसमुच्चयार्थः। यदि तु गुरोः सन्निधा
दन्त्यो गुरुरेव समुच्चीयते तदाऽन्त्यलघुमति अनन्त्यगुरावेतस्या
लघौ "दूराद्धूते च" इत्यादीनां दुर्वारत्वेन प्लुतासमावेशापत्ति
एकैकग्रहणं त्वेतद्विहितानामेव पर्यायार्थं स्यात्। तेन यत्रान्त्यो
गुरुरनन्त्यगुरुद्वयं वा तत्रैव पर्यायः स्यात् व्याख्यानाच्चैत
लाभः। अनन्त्यस्यापीति। अपिनाऽन्त्यस्य गुरोरगुरोश्चेत्यर्थ
पर्यायार्थमिति। अन्यथा समावेशः स्यादिति भावः। "अनुदात्तं
पदम्" (पा०सू०६।१।१५७) इति तु त्रिपाद्यां न प्रवर्त्तत इति
वक्ष्यते। "प्राचाम्" इति तु पक्षे सर्वेषां प्लुताभावार्थम्।

विकल्प्यत इति। सा च व्यवस्थितविभाषा। तेन "अग्नी३
न्विहर' इत्यादौ "अग्नीत्प्रेषणे" (पा०सू०८।२।९२) इति न। भा
"विभाषापृष्टे" (पा०सू०८।२।९३) इति सूत्रे विभाषेति योगवि

---

ऽस्त्वित्यत आह-*सर्वप्लुतेति*। *एतत्त्रयेति*। "प्रत्यभिवादे
"दूराद्धूते च" "हैहेप्रयोगे" इत्येतत्त्रितयेत्यर्थः। *वृत्तौ स्पष्टमिति
भाष्यन्त्वत्रोदासीनम्। *एतद्विहितानामिति*। एकसूत्रोपात्तत्व
*व्याख्यानादिति*। अपिशब्दस्यानन्त्यसमभिव्याहारेणान्त्यसमु
यकतया टेरित्यस्य प्रक्रान्तस्य समुच्चयकल्पने लाघवमित्येतन्मूलं
त्यर्थः। ननु वाक्यस्य टेः प्लुत उदात्त इत्यधिकारात्तद्विधेयप्लुता
शेषस्यानुदात्तत्वापत्तिरत आह-*अनुदात्तम्पदमितीति*। तत्सू
कग्रहणेन त्रैपादिकोदात्तस्वरितयोरग्रहणादिति भावः। *व्यव
विभाषेति*। अत्र मूलं प्रागुक्तम्।

भाष्ये तु प्राचामिति योगविभागो नोक्तः, किन्तु "विभाषा" इ
तस्तेन प्राचामिति योगविभागेन सर्वस्य प्लुतस्य वैकल्पिकत्वला
प्राचामुदीचाञ्च स्वस्वमतप्रच्युतिरूपो दोषो न सम्भाव्यत इत्या

दर्शित-:। 'सापि व्यवस्थितविभाषा' इति कैयटः। अत एव "ओश्रावये परस्येति वक्तव्यम्" इति वचनस्य 'अग्नीदग्नीन्' इत्यादौ प्लुतनिवृत्तये कृतस्य विभाषेति योगविभागेन प्रत्याख्यानं भाष्योक्तं सङ्गच्छते। एवञ्च भाष्यसंमतैषा व्यवस्थितविभाषेत्याहुः।

अप्लुतवदित्युक्त्या प्लुत इत्यध्याहारस्तदाह—प्लुतो ऽप्लुतवदिति। प्लुत एव निषिद्धथेतानि। तत्स्थाने अप्लुतस्य विधानेन स एव निवर्त्ततेत्यर्थः। प्रसज्यप्रतिषेधेन व्याख्यानं तु न युक्तम्, गौरवात्। किं च तथा सति 'प्लुतप्रकरणे एव' नोपस्थिते इति वदेत्। न च पर्युदासे 'अग्नी इति' इत्यादौ प्रगृह्याश्रयप्रकृतिभावं बाधित्वा परत्वादप्लुतवद्भावे दीर्घादिकं स्यादिति वाच्यम्। 'शब्दतः' इति शब्दसापेक्षाप्लुतवद्भावापेक्षया वर्णमात्रापेक्षप्रकृतिभावस्यान्तरङ्गत्वात्। अप्लुतवदित्यस्य प्लुतकार्यं नेत्यर्थस्तु न शब्दमर्यादालभ्यः। प्लुते ऽप्लुतसादृश्यविधानस्यैव शब्दतो लाभात्। भाष्ये प्लुतकार्यप्रतिषेधार्थमित्युक्तिस्तु फलितार्थाभिप्रायेणैवेति बोद्ध्यम्। प्रगृह्याश्रये इति। प्लुते कृते ऽपि तस्यासिद्धत्वाद्दीर्घत्वबुद्धिवत् तद्वतं प्रगृह्य-

---

*भाष्ये त्विति*। *कैयट इति*। न, चास्या व्यवस्थिताविभाषात्वं पठतो भाष्यकृता नोक्तमिति वाच्यम्। प्रत्याख्यानेन भाष्यकृता तथा वचनादित्याह–*अत एवेति*। व्यवस्थितविभाषात्वादेवेत्यर्थः।

*प्लुतइत्यध्याहार इति*। अन्यथोद्देश्याकाङ्क्षाशान्त्यभावेन वाक्यार्थपर्यवसानं नस्यात्। *स निवर्त्तेत इति*। न च पर्युदासपरतया व्याख्याने प्लुतसदृशो दीर्घः स्यात्। अच्त्वेन सादृश्याश्रयणे प्रथमोपस्थितत्वाद् ह्रस्वो वा स्यादिति वाच्यम्। प्लुतश्रवणाभावे तात्पर्यात्। जायमानो दीर्घो ह्रस्वो वा उभयथा सन्धिकार्येण तस्य निवृत्तिः स्यादिति फलतो विशेष इत्याशयः।

कस्य चिद्व्याख्यानन्दूषयति—*प्रसज्यप्रतिषेधेति*। *अग्नी इतीत्यत्र*। अत्र गुरोरनृत इति प्लुतः। अत्र वत्करणाभावे प्लुतादेशे सवर्णदीर्घापत्तेः। वत्करणसत्त्वेऽपि यत्केन चित्कृतं व्याख्यानन्तद्दूषयति–*अप्लुतवदित्यस्येति*। ननु प्लुतस्य प्रगृह्यत्वन्दुर्लभम् "इदूदेत्" इति सूत्रे दीर्घाणामेव समाश्रयणात्तेषाञ्चानणत्वात्, न हि पूर्वप्रवृत्तम्प्रगृह्यत्वं प्लुतानिवद्भावलभ्यमल्विधित्वादत आह–*प्लुते कृतेपीति*। न ह्यत्र लक्ष्ये लक्षणं सकृदेव प्रवृत्तम्भवतीति पुनः प्रगृह्यं न स्यादिति शङ्क्यम्।

त्वमनुकार्ये सुलभम् । अनुकरणे तु प्रकृतिवदनुकरणमित्यतिदे शात्तत्त्वमिति भावः ।

किं मया कर्त्तव्यमिति पृष्ट आह—चिनुही ३ इदमिति। "विभाषा पृष्टप्रतिवचने हेः" (पा०सू०८।२।९३) इति प्लुतः इदंशब्दो ऽत्र वाक्यान्तरस्थ इति हेरिकारस्य वाक्यादित्वम् । उभ यत्र विभाषेयमिति । उपस्थिते प्राप्ते ऽनुपस्थिते चाप्राप्ते इत्यर्थः विभाष्यते विकल्प्यत इति विभाषा "गुरोश्च हलः" (पा० सू० ३।३।१०३) इत्यप्रत्यये टाप् । "न वेति विभाषायाम्" इति भाष्यप्रयोगात् ।

भाष्ये तु 'किमर्थमिदमुच्यते ऽनुपस्थितार्थं तत्र ईग्रहणेन नार्थः अविशेषेण चाक्रवर्मणस्याप्लुतवदित्येवेदमपि सिद्धं वथा इयं विभाषा यम्' इत्युक्तं । तद्बलेनोपस्थिते पूर्वविप्रतिषेधेन ईग्रहणे नित्याप्लुतवद्भाव एवेष्टः । प्रत्याख्याने नित्याप्लुतवद्भावस्य येन नाप्राप्तिन्यायेन वैकल्पिकतद्बोधिताभावांशबाधकत्वात् । 'उपस्थित' इत्यस्य निवृत्त्या परविप्रतिषेधादुभयत्र विभाषेयम्' इति कैयटः प्रमादः । मूलं तु इतिशब्दभिन्ने वैदिकेतिशब्दे चेत्येव परतया

---

संज्ञायाः कार्यार्थतया कार्यस्य प्रकृते प्लुतोत्तरं प्राप्तया पुनः प्रवृत्ति स्वीकारात् । *तस्यासिद्धत्वादिति* । प्लुतस्यासिद्धत्वादित्यर्थः ।

विभाषाशब्दस्याव्ययत्ववादिमतनिरासायाह—*विभाष्यत इति 'नवेति विभाषायामर्थस्य संज्ञाकरणम्' इति भाष्यप्रयोगोऽत्रानुकूलः । चाक्रवर्मणस्येति सूत्रस्योभयत्र विभाषात्ववादिमतन्दूषयति—*भाष्ये तु इति* । *अभावांशबाधकत्वादिति* । न च सूत्रबाधकत्वादिति वक्तव्ये इदमनुपपन्नमिति वाच्यम्, भावांशविधाने पूर्वोत्तरयोर्द्वयोरपि समत्वेन अभावांशबाधे सूत्रबाधस्यैव पर्यवसन्नत्वादिति भावः । एवञ्चानुपस्थितार्थमेवेदं सूत्रम्, उभयत्र विभाषेयमितिमूलस्य त्वयमर्थः, उभयत्र इतिशब्दद्वये । तदाह—*मूलन्त्विति* । *कथञ्चिदिति* । प्राप्ताप्राप्तविभाषायामेव तादृशशब्दप्रयोगस्य शिष्टसम्मतत्वात् ।

अत्र कैयटानुयायिनः । वस्तुतः पूर्वविप्रतिषेधकल्पने गौरवप्रसङ्गात् दनुपस्थितार्थमिति भाष्यस्य तदर्थमपीत्यर्थ उचितः, 'तत्र ईग्रहणेन नार्थः अविशेषेण चाक्रवर्मणस्य' इत्यादि, तदुत्तरभाष्ये चाविशेषण

चिह्नाख्येयमित्यन्ये । उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत्सर्वनाम पर्यायेण तत्तल्लिङ्गभाग् इति इयम् इति निर्देशः ।

विशेषणेन तदन्तविधिमाश्रित्याह—ईदूदेदन्तमिति । द्विवचनमिति । सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधादिति भावः । तदन्तमिति व्याख्याने फलमाह—पचेते इति ।

निपात एकाजनाङ् (पा०सू०१।१।१४)। निपात इति किम्? 'चकारात्र। प्रत्ययस्य शास्त्रकल्पितार्थवत्त्वात् । एकाजिति कर्मधारयो वर्त्तिपदार्थप्रधानत्वेनान्तरङ्गत्वात् "व्याहरति मृगः" (पा०सू०४।३।५१) इत्यादिनिर्देशा-

---

स्थान्यंशे निमित्तांशे चेत्यर्थात् कैयटमतस्य सयुक्तिकत्वमिति । इदमत्रोहनीयम् । विप्रतिषेधसूत्रे परशब्दस्येष्टवाचकत्वात्सर्वेषां पूर्वविप्रतिषेधानां सङ्गृहीतत्वात्तस्य कल्पनायान्नाधिककल्पना, अनुपस्थितार्थमिति भाष्यस्य तदर्थमपीत्यध्याहारेण व्याख्यान एव गौरवम् । किञ्च यदोत्तरसूत्रे ईग्रहणन्नास्ति तदा येन नाप्राप्तिन्यायेन पूर्वसूत्रस्योपस्थिते विकल्पबाधकत्वस्यैव लाभादपिशब्दपूरणेन भाष्यव्याख्यानं न्यायविरुद्धमिति ॥

ननु योगस्य सूत्रस्य वोद्देश्यतया इयमिति स्त्रीलिङ्गनिर्देशोऽनुपपन्न इत्यत आह—*उद्देश्येति* । *ऐक्यमापादयत्* । ऐक्यम्बोधयत् । यं पदार्थं बोधयितुं यच्छब्दः पूर्वम्प्रयुक्तः, तस्यैव तत्पदेन तत्समानविभक्तिकेन बोधनस्यानुभवसिद्धत्वात् । उद्देश्यलिङ्गन्वं यथा ।

यद्यत्पापम्प्रतिजहि जगन्नाथ नम्रस्य तन्मे ॥

इत्यादावुद्देश्यलिङ्गत्वस्य "णेरणौ" इति सूत्रेऽणौ यत्कर्म णौ चेत्तकर्मेति कर्मण उद्देश्यस्य परामर्शार्थमुपात्तस्यापि यच्छब्दस्य स कर्तेत्यत्र पुल्लिङ्गता दृश्यते । ननु द्विवचनसंज्ञायाः प्रत्ययबोधकतया प्रत्ययग्रहणपरिभाषया तदन्तग्रहणापत्तिरित्यत आह—*संज्ञाविधाविति* । पर्युदासवच्चनाङिने पर्युदासवत्तनार्थवत एव ग्रहणान्न प्रत्ययेऽतिप्रसङ्ग इत्यत आह-*प्रत्ययस्येति* । स्वातन्त्र्येण प्रयोगार्हत्वविशिष्टार्थवत्त्वन्तु वक्तुमशक्यम् । आङो द्योतकतया तस्याप्यतथात्वात् । पर्युदासवत्तल्लभ्यार्थवत्त्वाभिप्रायेण शङ्कायामयङ्ग्रन्थः । एतेन । वर्णग्रहणेऽर्थवत्परिभाषाप्रवृत्त्यभावेन प्रकृतेऽर्थवद्ग्रहणविचारासङ्गतिरित्यपास्तम् । *अन्तरङ्गत्वादिति* । यद्यपि कर्मधारयबहुव्रीह्योरेकार्थीभावः समानः, तथापि जहत्स्वार्था वृत्तिरिति पक्षेऽवयववृत्तिग्रहसहकारेणैव समुदायशक्त्या धीरिति कर्मधारयजन्यशाब्दबोधसामग्र्यपेक्षया बहुव्रीहिजन्यशाब्दसाम-

च। तेन 'प्रेदम्' इत्यादौ न दोषः। तदाह—एको ऽजिति। 'आ
ङ्वर्जं' इति। पर्युदासस्यौचित्यात्। अत एवैकाज्नाङिति नाप्रति
वासुदेववाचकस्य अशब्दस्य आङा सहाव्ययीभावे आ आत् 'अ
इत्यादौ सत्यभिधाने स्वत आङ्भिन्नत्वेन पूर्वान्तवत्त्वेन निपात
ऽपि प्रगृह्यत्वन्न। पूर्वान्तवत्त्वेनाङ्त्वातिदेशे ऽतिदिश्यमानधर्मवि
द्धस्वाश्रयधर्मप्रयुक्तकार्यनिवृत्तेरतिदेशस्वभावसिद्धत्वात्। "ओ
(पा०सू०१।१।१५) इति सूत्रे आ उ,ओ, इत्यत्र अनाङिति 'प्र
षिद्धार्थो ऽयमारम्भ' इति भाष्यं तु पर्युदासे ऽपि गम्यस्य प्रति
धस्य सत्त्वान्नानुपपन्नम्। अनाङिति पर्युदासादेव निपातैकाज्त्व
लब्धे निपातैकाज्ग्रहणं स्पष्टार्थम्।

---

मन्या अन्यपदार्थोपस्थितिघटिततया गुरुत्वेन सामग्र्योर्लाघवगौरव
दाय कार्ययोरन्तरङ्गत्वबहिरङ्गत्वम्बोध्यम्।

नन्वेवमेकशब्देन क्वापि बहुव्रीहिर्न स्यादेवञ्च "एकाचो द्वे प्रथम
इत्यादावप्यनुपपत्तिरत आह—*व्याहरतीति*। एवञ्च व्याहरतीति
शात्कर्मधारयस्य "हलादिः शेष" इति सूत्रारम्भाद्बहुव्रीहेः प्रामाणि
ऽपि प्रकृतेऽनेन निर्देशेन कर्मधारय एवेति भावः। *पर्युदासस्यौ
त्यात्*। असमर्थसमासाकल्पनादेकवाक्यतया शाब्दबोधजनना
"ओत्" इति सूत्रे 'प्रतिषिद्धार्थोयमारम्भ' इति भाष्यन्तु गम्यमानप्रति
मादायोपपादनीयम्। न्यायसिद्धे लिङ्गमप्याह—*अत एवेति*। पर्युद
स्याभिप्रेतत्वादेवेत्यर्थः। एतत्पक्षे शङ्कते—*वासुदेवेत्यादि*। सति
ह्यत्वेऽव्ययीभावसंज्ञकस्याशब्दस्यामशब्दावयवाकारे प्रकृतिभावापा
न च पर्युदासपक्षे आङ न सूत्रव्यापार इति पूर्वान्तवत्त्वेन नि
त्वेऽपि आङ्तिदेशो न भविष्यतीति वाच्यम्। आङ्भिन्नत्वरूपोद्दे
वच्छेदकधर्मज्ञानप्रतिबन्धार्थमेवाऽऽङ्त्वातिदेशः स्यात्। अत एव 'ओ
इति सूत्रस्य 'ओषु यातम्' इत्यत्र प्रयोजनङ्कथितम्। अन्यथा तत्रा
त्वातिदेशाभावेनाऽनाङिति निषेधाप्राप्त्या भाष्यासङ्गतिः स्पष्टैव। पर्यु
लभ्याशास्त्रीयेपि शास्त्रीयवत्कार्यस्योपपादितत्वाच्च। न च आ उ
इत्यत्रैकादेशे कृते आङ्भिन्नत्वस्योकारनिष्ठस्यातिदेशेन "निपात एक
इत्येव सिद्धे 'प्रतिषिद्धार्थोऽयमारम्भ' इति भाष्यमेवमप्यनुपपन्नमिति
च्यम्। आङ्भिन्नत्वस्याशास्त्रीयत्वेनातिदेशालभ्यत्वात्। शास्त्रीयत्व
शास्त्राश्रितत्वम्। किन्तु शास्त्रबोध्यत्वमेवेति।

*स्पष्टार्थमिति*। निपातस्यैकाचः सर्वस्य सङ्ग्रहो यथा स्या

स्वाङ्गसमुदाये स्वाङ्गत्वाभाववदच्समुदाये ऽच्त्वाभावादजित्ये-वाच्समुदायग्रहणाभावे सिद्धे एकग्रहणमन्यत्र वर्णग्रहणे जातिग्रहणार्थम्" तेन 'धिच्सति' इत्यादिसिद्धिरिति भाष्ये स्पष्टम् । जातिग्रहणार्थमित्यस्योपात्तजात्याश्रयैकानेकव्यक्तिग्रहणार्थमित्यर्थः । तेन तितउशब्दैकदेशस्य 'अउ' इत्यस्यानुकरणे 'अउ अकरोत्' इत्यत्र "अनुकरणं चानिति" (पा० सू० १।४।६२) इति निपातत्वे ऽपि प्रगृह्यत्वाभाव एकग्रहणफलं बोद्ध्यम् । ननु ङकारस्य कार्यश्रवणेन ङिदङिद्विवेको दुर्ज्ञेय इत्यत आह—वाक्यस्मरणयोरिति । वाक्यशब्देन स्वार्थगतमनभिमतत्वम् । स्मरणं विस्मृतस्य स्मृतिविषयता । 'एवं किल तत्' इति स्मृतार्थनिर्देशः ।

निपात इत्यनुवृत्तमोदित्यनेन विशेष्यत इत्याह—ओदन्त इति । निपातसञ्ज्ञा चादिपदोपस्थितचादीनां सति सम्भवे ऽर्थवतामेवेति सार्थकनिपातानां निपातपदेन तत्तदर्थविशिष्टानामवोपस्थितिरिति गौणमुख्यन्यायेन प्रकृतसूत्रस्थनिपातपदेन गौणार्थानां न ग्रहणमिति 'गोऽभवत्' इत्यादौ च्व्यन्ते नास्य प्रवृत्तिः । एवञ्च कार्यकालपक्षे ऽपि "च्व्यन्ता निपाता" इत्यस्यानुपस्थितिरेतत्परिभाषावशात् । अव्ययसञ्ज्ञादौ तु नैतत्परिभाषाप्रवृत्तिरनित्यत्वाद् । अत एवानर्थकेऽपि निपाते सा सञ्ज्ञा सिद्ध्यति ।

---

ङसदृशस्यैकाचोऽर्थवतो निपातस्यैव पर्युदासबलाद् ग्रहणम्मा भूत् । अनेन रूपेण सादृश्यग्रहणे हि पादपूरणार्थकस्य कमीमिदु इत्यस्य व्यावृत्तिः स्यात् । *समुदायेऽच्त्वाभावादिति* । अच्त्वस्य प्रत्येकपर्याप्तत्वात् । *अनभिमतत्वमिति* । लक्ष्यते इति शेषः । ननु गोऽभवदित्यादौ च्व्यन्ते 'ओत्' इति सूत्रेण प्रगृह्यत्वम्प्राप्नोतीत्याशङ्क्य गौणमुख्यन्यायेन समाहितं भाष्ये, तच्च तदा सङ्गच्छते, यदि गौणमुख्यन्यायमूलभूताया अर्थवद्ग्रहणपरिभाषाया विशिष्टरूपोपादानविषयायाः प्रवृत्तिः स्यात्, अतस्तस्याः प्रवृत्तिमुपपादयति—*निपातसंज्ञेत्यादि* । *अर्थवतामेवेति* । अर्थविशिष्टानाञ्चादीनामुद्देश्यतयोपस्थितत्वात् । *एतत्परिभाषेति* । गौणमुख्यपरिभाषेत्यर्थः । *अनित्यत्वादिति* । "इणः षीध्वम्" इति सूत्रेऽङ्गादित्युपादानेनार्थवत्परिभाषाया अनित्यत्वस्य ज्ञापितत्वात्तन्मूलिकाया गौणमुख्यपरिभाषाया अप्यनित्यत्वमिति । अव्ययसंज्ञादावित्यादिना प्राति-

'अघो इति' इत्यादौ प्रगृह्यत्वायाह—सम्बुद्धिनिमित्तक इति। सम्बुद्धिपर इति व्याख्याने तु सोर्लुका लुप्तत्वेन तत्परत्वाभावान्न स्यात्। "न लुमता" (पा०सू० १।१।६३) इति निषेधानित्यत्वं त्वगतिकगतिः। इताविति किम्? पटो ऽत्र। अनार्षे किम्? ब्रह्मबन्धवित्यब्रवीत्। (१)संहितायां विवक्षायामप्यवादिरहितप्रयोगार्थमिदं। तद्विवक्षा च वर्णोच्चारणे नियतेनार्धमात्राकालव्यवायेनोच्चारणेच्छा। तदधिकार्द्धमात्राकालव्यवायेनोच्चारणेच्छा च तदविवक्षेति बोध्यम्।

पदिकसंज्ञापरिग्रहः।

ननु सम्बुद्धौ शाकल्यस्येत्यस्मिन् सूत्रे सम्बुद्धाविति सप्तमीश्रवणे तस्मिन्निितिपरिभाषाबलात् सम्बुद्धिपरो य ओकार इत्येव व्याख्यानं युक्तम् न आह—*सम्बुद्धिपर इति*। न च लक्षणप्रतिपदोक्तपरिभाषानुग्रहाय तस्मिन्निितिपरिभाषानुग्रहाय च तथैव व्याख्यानं युक्तमिति वाच्यम्। लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वात्। निर्दिष्टपरिभाषापि लक्ष्यानुसारात् क्वचित्यज्यते। न च लुनातीति 'लौः' पुनातीति 'पौः' अत्र हि "गोतो णित्" इति सूत्रे "गोत" इति यथाश्रुतमिति मते सम्बुद्धौ 'लो' 'पो' इति रूपम्। गकारस्याविवक्षितत्वे तु लौः पौरिति, तदा हे गौरित्यत्रेव स्थानिवद्भावात्प्राप्तिः। लो पो इति विजन्तस्य रूपं सम्बुद्धिपरं सम्भवति। सम्बुद्धिनिमित्तक इति व्याख्याने त्वेतदवयवोकारस्य सम्बुद्धिनिमित्तकत्वाभावाल्लो इति पो इतीत्यत्र प्रगृह्यत्वप्रयुक्तः प्रकृतिभावो न स्यादिति वाच्यम्।

अचः परस्मिन्निति सूत्रस्थभाष्यप्रामाण्येन, ने लो पो इत्यादीनां विजन्तानामनभिधात्। तत्र हि "पूर्वविधाविति किमर्थम्? हे गौः। बाभ्रवीयः। नैधेयः। हे गौरित्यौकारः परनिमित्तकः तस्य स्थानिवद्भावादेङ्ह्रस्वादिति लोपः प्राप्नोति 'पूर्वविधाविति' वचनान्न भवति, नैतदस्ति प्रयोजनम्, आचार्यप्रवृत्तिर्ज्ञापयति न सम्बुद्धिलोपे स्थानिवद्भावो भवतीति यदयम् 'एङ्ह्रस्वात् संबुद्धेः' इति एङ्ग्रहणं करोति। नैतदस्ति ज्ञापकम्। गोऽर्थमेतत् स्यात्। यत्तर्हि प्रत्याहारग्रहणङ्करोति। इतरथा हि ओह्रस्वादित्येव ब्रूयात्" इत्युक्तम्। अत्र कैयटः 'नयत्यादीनां विजन्तानां गुणे ने, लो, पो, इति कथं सम्बुद्धिलोप इति चेन्नैतेभ्यो विज् दृश्यते' ओह्रस्वादित्येवेति। सेस्मृतोशब्दादावप्येवम्। नैतेभ्य इति। एवन्दीर्घैकारान्तप्रकृतिकसेइत्यादीनामेकाक्षरकोशबोधितस्य ए इत्यस्य च सम्बुद्धावभिधानाभावो बोध्यः।

(१) नचैतावता व्याख्यानेन सूत्रस्य फलं स्पष्टमतः सूत्रफलमाह--संहितायां इति।

उञः। (पा०सू०१।१।१७) अत्रोञ् निपात एव। 'उञ ऊँ' इत्येकसूत्रत्वे तु शाकल्यग्रहणाननुवृत्तौ ऊँ इतीत्येकमेव स्यात्। प्रगृह्यसञ्ज्ञाप्रकरणेन प्रगृह्यत्वस्यादेशस्य च सह विधानात्। 'उ इति' 'विति' इति च न स्यात्। आदेशे प्रगृह्यत्वकार्यन्तु स्थानिवद्भावेन बोद्ध्यम्। प्रगृह्यत्वस्य साक्षादुद्देश्यसम्बन्धस्य क्लृप्ततयात्र विधेयविशेषणत्वे मानाभावात्। शाकल्यग्रहणानुवृत्तावपि प्रगृह्यत्वस्य ऊँ आदेशस्य विकल्पे 'ऊँ' 'इति' 'विति' इति सिद्ध्यति, न तु 'उ इति' इति। प्रगृह्यत्वविकल्पेन पक्षे तदभावे ऽपि अस्य तात्पर्यात्। एतदभावे "निपात एकाच" इत्यस्याप्रवृत्तेः। तदुक्तं भाष्ये योगविभागं

---

अत्रेदमवधेयम्। ओग्रहणस्य भाष्ये कृतत्वेन दीर्घौकारान्तप्रकृतिक ओकारान्तानामभिधाने मानाभावः। किञ्च द्योशब्दस्य सर्वसम्मत्वेन गोर्थमेतदिति भाष्यमोकारान्तोपलक्षणतया व्याख्येयम्। किञ्च सम्बुद्धावनभिधानेन भाष्यस्योपपत्तौ सर्वथा विजभावकल्पना नोचिता। एवं सति "सम्बुद्धौ शाकल्यस्य" इति सूत्रस्य सम्बुद्धिनिमित्तक ओकार इति व्याख्यानमपि न विरुध्यत इति।

केचित्तु सम्बुद्धिग्रहणमत्र सूत्रेऽनर्थकम्। न च 'अहो इति' इत्यादौ परत्वाद्विकल्पाभावार्थमिति वाच्यम्। "ओत्" इति पूर्वसूत्रविहितनित्यसंज्ञाया अपरनिमित्तकत्वेनान्तरङ्गत्वात्, इतिशब्दसापेक्षत्वेन परभूतविकल्पस्यैव वहिरङ्गत्वात्। न च पूर्वसूत्रस्थमोत्पदं निपातपदसम्बद्धमभूदिति प्रकृतसूत्रे निपातपदासम्बन्धबोधकं सम्बुद्धिपदमिति वाच्यम्। यद्येतावन्मात्रप्रयोजनकं सम्बुद्धिग्रहणन्तदा प्रकृतसूत्रेऽप्योद्ग्रहणङ्कर्त्तव्यन्तेन निपातपदाननुवृत्तिर्भविष्यति, अन्यथा 'ओत्' पदानुवृत्त्यैव सिद्धे प्रकृतसूत्रे ओदित्येतत्पदं व्यर्थमेव स्यादिति कल्पनसम्भवादित्याहुः।

अत्रेदन्तत्त्वम्। स्वरादिषु पठिते मिथो इत्यव्यये प्रगृह्यत्वाभावो यथा स्यादित्येवमर्थं सम्बुद्धिग्रहणमिति।

उञ ऊमित्येकमेव सूत्रन्तद्योगविभागेन व्याख्यातम्—उञ इति। *निपात एवेति। प्रतिपदोक्तत्वात्। योगविभागफलन्दर्शयति—*उञ ऊमित्येकसूत्रत्व इति*। *सह विधानादिति*। यद्यपि विधेयभेदाद्वाक्यभेदो न्याय्य एव तथापि द्वयोर्वाक्ययोः सहप्रवृत्तिः स्यादित्याशयः। एवं सत्यादेशे प्रगृह्यकार्यं कथम्? अत आह—*आदेशे प्रगृह्यत्वकार्यन्त्विति*। *नतु उ इतीति*। विधेयतया प्रक्रान्तयोर्द्वयोरेवैकस्मिन् प्रयोगे विकल्पः स्यादिति। *तदभावेऽपि अस्य तात्पर्यादिति*। शाकल्या-

प्रदर्श्य 'किमर्थो योगविभागः ? शाकल्यमते ऊँ विभाषा यथा स्यात्। ऊँ इति। उ इति। अन्येषामाचार्याणां मतेन 'विँतीति'। अनेन हि योगविभागस्य 'उ इति' इति रूपसिद्धिः फलमिति स्पष्टमेव लभ्यते। अतो योगविभागेन व्याचष्टे-उञ इति। उञो वाचकं प्रगृह्यपदमित्यर्थः।

शाकल्यस्येतौ प्रगृह्यमित्यनुवर्त्तते तदाह-उञ इतौ चेत्यादि। विकल्पाननुवृत्तौ हि "निपात एक" इत्येव सिद्धे इदं व्यर्थमेव स्यात्। एवञ्च प्राप्तविभाषेयम्।

ऊँ (पा०सू०१।१।१८) इत्यत्र शाकल्यप्रगृह्यपदयोरसम्बन्धे "उञ" इत्यर्थाधिकारादप्रगृह्यस्यैवादेशे तस्य "इकोयण्" (पा०सू०६।१।७७) इति यणि 'ऊँ इति' इत्यस्यासिद्धिः। दीर्घोच्चारणवैयर्थ्यापत्तिश्च। विकल्पमात्रसम्बन्धे ऽपि ऊँ इति इत्यस्यासिद्धिरिति विधानसामर्थ्यात्प्रगृह्यपदसम्बन्धः। प्रगृह्यपदमात्रसम्बन्धे ऽर्थाधिकारादप्रगृह्यस्य नित्ये 'ऊँ' आदेशे 'ऊँ इति' इति प्रगृह्यस्य 'उ इति' इति सिद्धे ऽपि 'विँति' इति न सिद्ध्येत् तदाह-उञ इतौ दीर्घो ऽनुनासिक इत्यादि। अत्र विशिष्टस्य विधिरिति न वाक्यभेदः।

न च प्रगृह्यत्वमादेशश्च शाकल्यमते इति तयोरेकप्रयोगे एव प्रवृत्तिः स्यादिति वाच्यम्। योगविभागसामर्थ्येन शाकल्यमते एव भावाभावकल्पनात्। वस्तुत उञनुवादेन सञ्ज्ञादेशयोः सहविधानमेव

---

तिरिक्तमते प्रगृह्यत्वमुञो नेत्यर्थात् योगविभागे सति उञ इति सूत्रे षष्ठ्यन्तार्थान्वयायाह-*उञो वाचकमिति*।

उञ इति सूत्रे विकल्पफलन्दर्शयति—*विकल्पाननुवृत्ताविति*। न च योगविभागाभावेऽपि निरनुबन्धकोकारमादाय उ इति रूपं सिध्यत्येवेति वाच्यम्। किमः परत्वं यत्र तत्र किम्विति किमु इतीति रूपद्वयन्न स्यादित्यत्र तात्पर्यात्।

*वैयर्थ्यापत्तिश्चेति*। अनुनासिकाननुनासिकयोर्द्वयोरप्यादेशे रूपे विशेषाभावादिति भावः। *विकल्पमात्रेति*। शाकल्यशब्दमात्रस्येत्यर्थः। *प्रगृह्यत्वमादेशश्चेति*। उञ इति पूर्वसूत्रेण प्रगृह्यत्वं ऊँ इत्यनेन चादेशत्वमित्यर्थः। ननु प्रगृह्यपदस्योद्देश्यसम्बन्धस्य क्लृप्ततयेति पूर्वोपपादितरीत्या विशिष्टस्य विधिरिति न युक्तमिति चेत् मूलानुसारेण तथाभिधानादित्याशयेनाह-*वस्तुत इति*। नन्वेवम्प्रगृह्यसंज्ञकञ्चाव

न्यायम् । आदेशे स्थानिवद्भावात्प्रगृह्यकार्यम् । भाष्ये 'प्रगृह्यसञ्ज्ञकश्च' इत्यपि स्थानिवद्भावलब्धार्थस्वरूपकथनमिति न्यायविदो विचारयन्तु ।

मय उञो ॥ (पा० सू० ८।३।३३) व्याख्यानादत्र मय् प्रत्याहारः । अस्य त्रैपादिकत्वेनासिद्धत्वान्न "प्लुतप्रगृह्या" (पा० सू० ६।१।१२५) इत्यनेन बाधः । नानुस्वार इति । 'किम्विति' इत्यादौ प्रगृह्यसञ्ज्ञाभावे ऽस्यासिद्धत्वात् "इको यण्" (पा० सू० ६।१।७७) इति यणि अनुस्वारो भवत्येव ।

---

भाष्यविरोध इत्यत आह-*भाष्ये प्रगृह्यसंज्ञकश्चेति* । *न्यायविद इति* । 'असति साधके क्लृप्तसम्बन्धित्यागे मानाभाव' इति न्यायेत्यर्थः । न च प्रगृह्यपदस्य प्रथमान्तत्वेन प्रथमान्तेन सामानाधिकरण्यमेवात्र साधकमिति वाच्यम् । प्रथमान्तसामानाधिकरण्यस्य पूर्वसूत्र एव त्यक्तत्वात् ।

ननु मय उञ इति सूत्रे मय्पदेन मय्धातोरेव ग्रहणं कुतो नेत्यत आह-*व्याख्यानादिति* । बहुलक्ष्यसंस्कारानुरोधमूलकादित्यर्थः । ननु प्रगृह्यस्योञः 'प्लुतप्रगृह्या' इत्यनेन कार्यान्तरप्रवृत्तिप्रतिबन्धकेन मय उञ इत्यस्यापि प्रवृत्तिप्रतिबन्धः कुतो नेत्यत आह-*अस्य त्रैपादिकत्वेनेति* । *अनुस्वारो भवत्येवेति* । एतेन त्रिपाद्यां वत्वविधानस्यानुस्वाराभावः फलमिति सूचितम् । तदुक्तम्मनोरमायाम् । प्रकृतिभावमात्रबाधनार्थत्वे हि 'इको यण्' इत्यनन्तरं 'मय उञ' इत्येवावक्ष्यत्, यणश्चान्ववर्त्तयिष्यदिति ।

न च त्रिपाद्यां मयः परस्य उञो वत्वविधानेऽपि मयः परत्वमुपजीव्य कृतं वत्वं सन्निपातपरिभाषयाऽनुस्वारानिमित्तं न भविष्यतीति त्रिपाद्यां वत्वविधानस्यानुस्वाराभावरूपप्रयोजनकथनासङ्गतिरिति वाच्यम्, त्रिपाद्यान्तथा पाठेन सन्निपातपरिभाषाया अनित्यत्वस्यापि ज्ञापनात् ।

न च त्रिपाद्यान्तथा पाठे वत्वस्यासिद्धत्वात् 'प्रत्यङ् उ उक्तम्' इति स्थिते ङमुटि कृते ङमुड्विशिष्टस्य उञ्ग्रहणेन ग्रहणेऽपि निर्दिश्यमानस्य ङमुटा व्यवधानाद्वत्वस्याप्राप्तिः । 'इको यणचि' इति सूत्रानन्तरं पाठे तु ङमुटोऽसिद्धत्वाद्वत्वे कृतेऽजादित्वाभावात् ङमुटोऽप्राप्तिरिति फलभेदस्य स्पष्टतया कथं सन्निपातपरिभाषाया अनित्यत्वज्ञापनमिति वाच्यम् । त्रिपाद्यामपि बहिरङ्गपरिभाषाप्रवृत्तिवादिप्राचीननयेऽन्तरङ्गे ङमुटि कर्त्तव्ये बहिरङ्गस्य यणादेशस्यासिद्धतया पूर्वं ङमुटि फलभेदाभावात् ।

न चोभयोरपि पदद्वयसापेक्षत्वेन नान्तरङ्गबहिरङ्गभाव इति वाच्यम्, पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वस्य ङमुटि सत्त्वात् । न चान्तरङ्गप-

ननु 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन गौरी-शब्दस्य सप्तम्यर्थवृत्तित्वे ऽपीकारस्य तत्त्वाभावो ऽत आह-ईदूदन्तमिति । शब्दस्वरूपस्य विशेष्यत्वात्तदन्तविधिरिति भावः । मामकी तनू इति । प्रगृह्येष्विति शब्दप्रयोगस्य पदकारैर्नियमितत्वात् पदपाठे प्रगृह्यत्वफलमत्र बोद्ध्यम् । ईदूतौ किम् ? अम्रा भवति सप्तम्या डादेशः । तपरत्वमसन्देहाय । सप्तमीति किम् ? 'धीती' 'मती' । ह्रस्वान्ताभ्यां तृतीयैकवचनस्य पूर्वसवर्णे सवर्णदीर्घः ।

अर्थग्रहणम् किमिति । न च तदभावे 'ईदूदेत्'इदितिवदीदूदन्तया सप्तमीत्यर्थापत्तिः । तथा च 'ययी' इत्यादावेव स्यात् । एकादेशस्य परादिवद्भावेन सप्तमीत्वात्, न तु 'गौरी' इत्यादाविति, तत्सिद्ध्यै तदावश्यकमिति वाच्यम् । "इदूतौ सप्तमी प्रगृह्यम्" "अदसः, एचश्चि-चनम्" इत्येव सिद्धे गुरुभूतन्यासकरणेन तत्प्रकरणापेक्षया वैजात्यबोधनादूकारांशे ऽसम्भवाच्च "संज्ञाविधौ" इति तदन्तग्रहणनिषेधा-वृत्त्या ईदूदन्तं सप्तम्यन्तमित्यर्थेनेष्टसिद्धेरिति प्रश्नः । 'ययी' इत्यादे-रनभिधानमेवेति परे । (१)

वृत्ताविति । अर्थग्रहणसामर्थ्यात्सप्तम्यर्थमात्रे पर्यवसन्नमिति प-

रिभाषाप्रवृत्तिस्वीकारे किम्वुक्तमित्यत्रान्तरङ्गेऽनुस्वारे बहिरङ्गस्य यणा-देशस्यासिद्धतयाऽनुस्वाराप्राप्तिरिति कौमुदीमनोरमाग्रन्थयोर्विरोध इति वाच्यम्, मान्तपदसमुदायसापेक्षत्वेन पदसंज्ञासापेक्षत्वेन चानुस्वारस्य बहिरङ्गत्वात् । प्राचीननये बह्वपेक्षस्य बहिरङ्गत्वं च स्पष्टमेव । अस्तु सन्निपातपरिभाषाया अनित्यत्वम् "न यासयोः" इति निर्देशात् कल्पितं बहिरङ्गपरिभाषापि त्रिपाद्यान्न प्रवर्त्तत इति त्वसकृदावेदितमेव । *तपर-त्वमसन्देहायेति* । न च गुणाभेदकत्वपक्षे तथात्वेऽपि भेदकत्वपक्षे गुणा-न्तरयुक्तसङ्ग्रहार्थं तपरत्वमावश्यकमिति वाच्यम्, अस्य ग्रन्थस्याभेदक-त्वपक्षाभिप्रायकत्वात् । *ह्रस्वान्ताभ्यामिति* । अस्य परस्येति शेषः । *तदावश्यकमिति* । अर्थग्रहणमावश्यकमित्यर्थः । वैजात्येत्यस्य प्रकृत-सूत्रे इत्यादिः । *असम्भवादिति* । ऊकारान्तसप्तम्या असम्भवादित्यर्थः । *अनभिधानमेवेतीति* । प्रकृतसूत्रस्थभाष्यप्रामाण्यात्तथा कल्प्यते

(१) केचित्तु अनभिधानमित्यस्य सप्तम्येकवचने इत्येवार्थः । याति लोकामिति ययी सर्व-व्युत्पन्नस्य कोशेषु प्रसिद्धशब्दस्य चैवं त्यागो न भवतीति भावः ।

र्थेनात्र तत्संसृष्टाधेयार्थे ऽपि वृत्ते र्न दोषः । "सञ्ज्ञायाम्" इति समासे जहत्स्वार्थायां वृत्तौ पूर्वपदस्याऽऽनर्थक्ये ऽपि 'सुप्सुपेति' समासे अजहत्स्वार्थायां प्रसक्तदोषस्योक्तरीत्यैव वारणमिति भावः । गौरी अधिश्रित इत्यत्राधिश्रयणक्रियायामेव गौरीपदबोध्याधिकरणत्वान्वय इति गौर्यधिकरणके लक्षणायां मानाभाव इति न तत्र दोषः । वाप्यामश्व इति । सुप्सुपेति समासः । 'सञ्ज्ञायाम्' (पा० सू० २।१।४४) इति वा । ननु "सञ्ज्ञायाम्" इति समासे वाक्येन सञ्ज्ञानवगमान्नित्यसमासत्वेन विग्रहो ऽनुचित इति चेन्न । तेषु समाससमानार्थकवाक्याभावेन नित्यसमाससदृशत्वे ऽपि-

---

इति भावः । *तत्संसृष्टार्थेति* । पूर्वपदार्थसंसृष्टाऽधेयार्थवृत्तेरित्यर्थः । एतदुपपादयति—*संज्ञायामिति समास इति* । *जहत्स्वार्थायां वृत्ताविति* । 'जहत्स्वं यं स' जहत्स्वः, तादृशोऽर्थो यस्यामिति बहुव्रीहिगर्भो बहुव्रीहिः । अत्र स्वशब्द आत्मीयवाची । अर्थस्य चात्मीयः शब्द एव । एवञ्च वृत्तेः पूर्वं यदर्थसम्बन्धी यः शब्दस्तस्माद्यत्र वृत्तौ सोऽर्थो न प्रतीयते, किन्तु समुदायशक्त्या अर्थान्तरस्यैव प्रतीतिः, तत्र जहत्स्वार्था वृत्तिरित्युच्यते । वस्तुतस्तु साऽत्र न युक्ता ।

जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी ॥

इत्यभियुक्तोक्तेः । यथा कुशलप्रवीणादिशब्दे । वाप्यश्व इत्यत्र तु रूढेरभावान्न जहत्स्वार्थता युक्ता । किन्तूपसर्जनपदं स्वार्थमजहत्परार्थमभिधत्ते । 'भिक्षुको द्वितीयाम्भिक्षामासाद्य न पूर्वां जहाति सञ्चयायैव प्रवर्त्तते' इति भाष्यात् । एवञ्च वाप्यश्व इत्यत्र वापीपदं वाप्यधिकरणकाश्वपरमिति सप्तम्यर्थमात्रे पर्यवसन्नत्वाभावात् न प्रगृह्यसंज्ञा । अर्थग्रहणसामर्थ्यात् श्रूयमाणायां सप्तम्यां यथा आधेयासंसृष्टाधिकरणप्रतीति र्भवति, तथा लुप्तायामपि तस्यामाधेयासंसृष्टाधिकरणप्रतीतिर्यत्र तत्रैव प्रगृह्यत्वस्वीकारादिति ।

ननु 'सोमो गौरी अधिश्रित' इत्यत्र गौरीपदस्य विरुद्धविभक्तिरहितसमार्थयोरभेदान्वयस्यौत्सर्गिकतया गौर्यधिकरणके लक्षणास्वीकारान्नाधेयासंसृष्टाधिकरणप्रतीतिरत आह—*गौरी अधिश्रित इत्यत्रेति* । एवञ्चोभयोर्विरुद्धविभक्तिरहितत्वेऽपि कारकस्य क्रियायामन्वयस्याऽऽवश्यकत्वेन गुणीभूतक्रियायां तदन्वयेन वाक्यार्थस्योपपत्तौ लक्षणायाम्मानाभाव इति

नित्यसमासत्वाभावात् । विभाषाधिकारबाधे मानाभावात् । नित्यस-
मासे हि वृत्तिघटकपदानां पृथक् प्रयोगाभाव एव । अत्र तु पृथक्प्र-
योगे ऽपि तद्बोद्ध्यविशिष्टार्थप्रतीमात्रमित्याहुः ।

अणो ऽप्र ॥ (पा०सू०८।४।५७) अण इति किम् ? 'कर्तृ'
'हर्तृ' । अत्राण्पूर्वेणैव, व्याख्यानात् । 'आगच्छतमग्नी' इत्यादौ प्लु-
तस्यासिद्धत्वात्ततः प्रागेव यथोद्देशत्वात् प्रगृह्यत्वे जाते पश्चात्प्लु-
तस्यापि अनुनासिकप्रतिबन्धार्थं पुनः सञ्ज्ञेति नानुनासिकः । सञ्ज्ञा-
याः (१)कार्यार्थत्वात्पुनः प्रवृत्तौ कार्यमेव बीजम् । स्थानिवत्त्वं
न, प्लुतस्थान्यल्वृत्तिधर्मत्वेनालिवधित्वात् । पूर्वसवर्णे कृते द्विवच-
नत्वन्तु परादिवद्भावेन । तेन ताद्रूप्यानतिदेशे ऽप्येतद्धर्मातिदेशाङ्गीका-
रात् । अत एव 'रामौ' इत्यादौ परादिवद्भावेन सुप्त्वात्पदत्वं सा-
तम् "अन्तादिवत्" (पा०सू०६।१।८५) इत्यत्र भाष्ये इति स्पष्टमाक-

अच्सन्धिरिति । "सिद्धमनच्त्वात्" इति वार्त्तिकप्रयोगं
"अल्पाच्तरम्" (पा०सू०२।२।३४) इति सौत्रप्रयोगेण, 'कथमनच्त्व-

---

भावः । *विभाषाधिकारबाधे मानाभावादिति* । यस्य नित्याधिकारो-
ऽस्तत्र विभाषाऽधिकारबाधो न चात्र तथेति ।

*व्याख्यानादिति । अप्रगृह्यस्येति पर्युदासबलान्नानुनासिका-
योग्यत्वं, पराण्सङ्ग्रहार्थत्वे त्वज्ग्रहणमेव कुर्यात् इत्यण्ग्रहणसामर्थ्यमूला-
दित्यर्थः । 'आगच्छतमग्नी' इत्यत्र प्रगृह्यस्याप्राप्तिमाशङ्क्य पूर्वं प्रगृह्यसं-
ज्ञामपि समाधत्ते—*आगच्छतेति* । *कार्यमेव बीजमिति* । न
"लक्ष्ये लक्षणस्य" इतिन्यायविरोध इति वाच्यम् । "समः सुटि"
सविधानज्ञापितस्य ज्ञापकसाजात्येन तस्य संज्ञातिरिक्ताविधेयपर-
स्वीकारात् । ननु प्रगृह्यसंज्ञोद्देश्ये ईकारे तर्हि द्विवचनत्वमपि न स्या-
दत आह—*द्विवचनत्वन्त्विति* । ननु परादिवद्भावेनापि ताद्रूप्या-
देशो नेत्यत आह-*ताद्रूप्येति* । ताद्रूप्यस्य वर्णमात्रवृत्तिधर्मस्याति-
देशेऽपि तद्धर्मस्य वर्णवृत्तिधर्मस्यातिदेशस्वीकारात्, द्विवचनत्वञ्च व-
र्णमात्रवृत्तीति भावः । एतदेव द्रढयति-*अत एवेति* । सुप्त्वस्यानेक-
वृत्तित्वेऽपि तस्य वर्णमात्रवृत्तित्वाभावेन "अन्तादिवच्च" इत्यनेनातिदेशो
भवत्येव ॥

---

(१) अनुनासिकप्रतिबन्धकरूपकार्यस्य प्रगृह्यत्वे कर्तव्येऽसिद्धत्वं तु न, कार्यस्याशास्त्री-
'अनिष्ठायामिति' ज्ञापकपक्षेऽपि, ज्ञापकसिद्धस्यासार्वत्रिकत्वान्नासिद्धत्वमिति भावः ।

इति भाष्यप्रयोगेण, च वृत्तिघटकाचपदे पदान्तकार्यस्य, तत्सन्निधानेन श्चुत्वस्य चाभावो बोध्यते इति केचित् ॥

इति स्वरसन्धिः ॥

---

# हल्संधिप्रकरणम्।

---

स्तोश्चु ॥ (पा०सू०८।४।४०) सिति शिति च लुप्तविभक्तिके भिन्ने पदे। योगे इति। संयोगे इति तदर्थः। तेन 'चितम्' इत्यादौ न दोषः। अत्र "पदस्य" (पा०सू०८।१।१६) इत्यधिकृतमपि (१)न

---

अचसन्धिरित्यत्राचपदे कुत्वस्य चयोगे श्चुत्वस्याप्राप्त्यर्थमाह–*सिद्धमनच्त्वादितीति*। यत्तु संज्ञात्वभङ्गापत्तेर्नेह कुत्वश्चुत्वे इतीति। तन्न। "प्रत्याहारेऽनुबन्धानाङ्कथमज्ग्रहणेषु न" इत्यत्र वार्त्तिके जशत्वस्य "एषा ह्याचार्यशैली लक्ष्यते यत्तुल्यजातीयांस्तुल्यजातियेषूपदिशाति अचोऽक्षु हलो हल्षु" इति भाष्यप्रयोगेऽक्षिवति दर्शनेन संज्ञात्वभङ्गस्याकिञ्चिकरत्वात्।

॥ इति स्वरसन्धिः ॥

---

*स्तोःश्चुना*। अत्र समाहारद्वन्द्वे नपुंसकत्वापत्तिः। इतरेतयोगे द्विवचनापत्तिरत आह—*सितीति*। न च समाहारद्वन्द्व एवास्तु सौत्रश्च पुंस्त्वमस्तु, न ह्यत्र गौरवम्, भिन्नविभक्तिकत्वेऽपि सौत्रत्वेनैव विभक्तिलुकः कल्पनादिति वाच्यम्, समाहारद्वन्द्वे सौत्रत्वेन पुंस्त्वस्य कल्पनायां "स नपुंसकम्" इति शास्त्रस्य बाधकल्पनापेक्षया विभक्तिलुक्कल्पनायां "सुपां सुलुक्" इति शास्त्रप्रवृत्तिकल्पनायां लाघवादित्याशयात्।

"स्तोः श्चुना श्चुः" इतिसूत्रे "वृद्धो यूना" इतिवद्विनापि तद्योगं तृतीया। श्चुना योगः सम्बन्धः स चाव्यवधानरूप एव ग्राह्यः। "बहुषु बहुवचनम्" इतिनिर्देशात् ष्टुनेत्यत्रापि तथा। "पूरणगुणसुहित" इति निर्देशात्। तथा च संयोग एव पर्यवसानमित्याशयेनाह–*संयोग इति तदर्थ इति*। ननु पदस्येत्यस्याधिकृतस्य 'स्तोः' इतिविशेषणमिति

---

(१) नसम्बद्ध्यते इति। सामानाधिकरण्येन विशेष्यतया न सम्बद्ध्यते, किन्तु वैय्यधिकरण्येन विशेष्यतया सम्बध्यत इत्यर्थः। पदस्येतिच 'अपदातस्य मूर्धन्यः' इत्यत प्रागयमधिकारः इत्यस्यायमर्थः। उत्तरत्रानुवृत्तमपि यत्र बाधकं तत्र वैयधिकरण्येनैव सम्बन्ध इति। एवं 'ष्टुनाष्टुः' इत्यत्रापि "नपदान्तात्" इति ज्ञापकात् वैयाधिरण्येनैव सम्बन्ध इति भावः।

संबद्ध्यते। "शात्" (पा०सू०८।४।४४) इति ज्ञापकात्। तेन 'पाश्चा'
सिद्धा। शात्परस्य स्तोः श्चुत्वनिषेधकात् "शात्' इति लिङ्गादेव।
निमित्तकार्यिणोर्यथासंख्यं न। एवमुत्तरसूत्रेऽपि "तोः षि" (पा०सू०
८।४।४३) इति ज्ञापकान्न तद्। सकारचवर्गौस्त इति। यथासंख्य-
मितिशेषः। हरिश्शेते इति। "वाशरि" (पा०सू०८।३।३७) इति
विसर्गाभावे शः। सच्चित् इति। चुत्वस्यासिद्धत्वाज्जश्त्वेन दस्य
तस्य चुत्वेन जकारे चर्त्वमिति बोध्यम्। तयोरत्रालेखस्तु वैचित्र्यार्थं
विश्न इति। "यजयाचयतविच्छप्रच्छरक्षो नङ्"(पा०सू०३।३।९०
इति नङि छ्वोः (पा०सू०६।४।१९)इति शादेशे ङित्वाद् गुणाभावः
"प्रश्ने चासन्नकाले" (३।२।११७) इति निर्देशात्सम्प्रसारणाभावः

न पदान्ता (पा०सू०८।४।४२)। "पदाट्टोः" इत्यत्रसिद्धे-
ऽन्तग्रहणं स्पष्टार्थम्। टोः किमिति ? षकारस्यापि पदान्ते ज-
श्त्वविधानात्प्रश्नः। "ह्रस्वाच्चादौ" (पा०सू०८।३।१०१) इति पत्व-
स्यासिद्धत्वाज्जश्त्वाभाव इत्युत्तरम्। षण्णवतिरिति। षडधिका
नवतिरिति विग्रहः। षण्णगर्य इति पृथक् पदे।

---

पदान्तयोः सकारतवर्गयोरित्यर्थोऽत्र उचित इत्यत आह-*अत्र पदसं-
त्यधिकृतमपीति*। *शादिति ज्ञापकादिति*। तादृशार्थस्याभिप्रेतत्वे
'विश्नः' 'प्रश्न' इत्यत्र श्चुत्वाप्राप्त्या तद्व्यर्थमेव स्यादिति भावः।

*शादितिलिङ्गादेवेति*। न ह्येकेनैकमेव ज्ञाप्यते किन्तु यावता वि-
नानुपपत्तिस्तस्य सर्वस्य ज्ञाप्यत्वात्। *यथासङ्ख्यमिति शेष इति*
अत्र यथासङ्ख्यशास्त्रबाधे साधकाभावात्। *वैचित्र्यार्थं इति*। य-
द्यप्येतल्लक्ष्यतावच्छेदकाक्रान्तं तथापि तयोरत्राप्रवृत्तावपि सच्चिदित्य-
सिद्धिरिति सूचनमेव वैचित्र्यम्। लक्ष्यतावच्छेदकाक्रान्ते लक्षणप्रवृत्ते-
र्न्याय्यत्वानुसरणेन तु चुत्वस्यासिद्धत्वादित्याद्युक्तिः। *सम्प्रसारणाभा-
इति*। न चानेन निर्देशेनैव श्चुत्वाभावस्यापि सिद्धौ शादिति सूत्रवै-
यर्थ्यमिति शङ्क्यम्। तस्य 'विश्न' इतिप्रयोगार्थत्वात्। "न ह्येकमुदाहरणं
इति न्यायस्यात्र न विषयता। पूर्वोक्तज्ञापनस्यापि तत्फलत्वात्।

*स्पष्टार्थमिति*। न चान्तग्रहणाभावे पदत्वेन ग्रहणात्समर्थपरि-
षोपस्थितिः स्यादिति वाच्यम्, अत्रैव सूत्रे 'अनाम्' इत्यस्योपादानेन स-
र्थपरिभाषानुपस्थानात्। पदत्वेनोद्देश्यत्वाभावाच्च। *पृथक्पदे इति*
"दिक्सङ्ख्ये संज्ञायाम्"इति नियमेन समासाप्राप्तेः।

यरोनु (पा०सू०८।४।४५) । पदान्तस्येति किम् ? 'वेद्मि' 'ब,-ध्नाति'। स्पर्शे चरितार्थ इति । उपलक्षणमिदम् । वलयोरपि प्रवृत्तेः । एतच्च जातिपक्षे स्पष्टमेव । व्यक्तिपक्षेऽपि तादृशव्यक्तौ चरितार्थस्य एतद्व्यक्तिविषयतयोपप्लुत एव नेति बोध्यम् । स्पष्टं चेदं "इकोयणचि" (पा०सू०६।१।७७ इत्यत्र कैयटे । परे तु स्थानेऽन्तरतमसूत्रे सप्तम्यन्तपाठस्य भाष्यकृता दूषितत्वेनैतद्युक्तेरुक्तिसम्भव एव न । तस्मात् "अनुस्वारस्य" (पा०सू०८।४।५८) इति सूत्रात्सवर्णग्रहणमपकृष्य यरः सवर्णोऽनुनासिको भवतीत्यर्थान्न दोषः । तदुक्तं भाष्ये । "रेफेऽनुनासिकपरसवर्णत्वयोः प्रतिषेधो वक्तव्यः, न वक्तव्यः रेफोष्मणां सवर्णा न सन्ति" इति ।

चिन्मयइति । स्वार्थिकः "तत्प्रकृतवचने"(पा०सू०५।४।२१) इति मयट् । तत्र तदिति वाक्यभेदेन क्वचित्प्राचुर्यरूपप्रकृतवचनाभावेऽपि मयडर्थम् । अत एव 'चिन्मयं ब्रह्म' इति सामानाधिकरण्यम् । 'चिन्मात्रम्' इति क्वाचित्को ऽपपाठः । मात्रचः प्रत्ययस्यात्रापपदस्यभावात् । मयूरव्यंसकादित्वेनार्थमात्रशब्देनात्र समासस्य वक्ष्यमाणत्वात् । निपातनादिति । यवादिगणे 'ककुद्मान्' इति प्रकृतिप्रत्ययसमुदायः पठ्यत इति मतेनेदम् ।

---

न्यूनतां परिहर्तुमाह—*उपलक्षणमिदमिति* । *वलयोरिति* । 'कमल्' 'वृक्षव्' एतयोरभिधाने 'कमल् मनोरथः' 'वृक्षव् आंश्निनोति' इत्यादाविति शेषः । *जातिपक्ष इति* । स्थानप्रयत्नाभ्यामन्तरतमे चारितार्थ्येनैव वचनं सफलमिति भावः । व्यक्तिपक्षे तर्हि दोष एवेत्यत आह—*व्यक्तिपक्षेऽपीति* । सिद्धान्तमाह—*परे त्विति* । *न दोष इति* । प्रथमान्तपाठे आदेशसङ्कोचेऽपि न दोष इत्यर्थः । *सवर्णा न सन्तीति* । एतेन सवर्णग्रहणाप्रकर्षः सूचितः । *उपपदस्यभावादिति* । "प्रमाणे द्वयसच्" इतिसूत्रे प्रमाणशब्दस्य परिच्छेदकपरत्वाच्चितः परिच्छेदकत्वासम्भवात् । ननु 'चिन्मात्रं ब्रह्म' इति प्रयोगस्य का गतिरत आह—*मयूरेति* ।

ननु यवादिगणे दकारनिपातनादित्यनुपपन्नम् । तत्र प्रकृतिमात्रपाठस्य तत्स्वरूपप्रतिपत्तौ तात्पर्यादित्यत आह—*यवादिगण इति* । न च "वाऽवसान" इति चर्त्वेन निर्देशे कर्त्तव्ये दकारान्तपाठो मतुपि विका-

उदः स्था ॥ (पा०सू०८।४।६१) "तस्मादित्युत्तरस्य" (पा० सू०१।१।६७) इति परिभाषालभ्यमर्थमाह-उदः परयोरिति। अत्राघोषस्येति। समनियतत्वेनान्यतमाग्रहणे बाधकाभावेन श्वा सविवारयोस्त्यागे ऽपि न न्यूनतेति बोद्धव्यम्। थस्यासिद्धत्वा दिति। त्रिपाद्यां परत्वादिति भावः। "हलो यमाम्" (पा०सू० ८।४।६४) इति सूत्रोक्तभाष्यसंमताष्टाध्यायीपाठे तु थस्यासिद्धत्वा भावेन चर्त्वं भवत्येव। अत एव "उत्पूर्वस्कन्दे रोगे उपसंख्यान उत्कन्दो रोगः" इति भाष्यं सङ्गच्छते। मूलन्तु प्राचामनुरोधेनेति पं

न चेदं सूत्रं व्यर्थं "झलो झलि" (पा०सू०८।२।२६). इत्यने सस्य लोपे उत्थानस्य सिद्धेरिति वाच्यम्। झलादौ प्रत्यये ते लोप इत्यर्थस्यानेन ज्ञापनात्। उदस्थादित्यत्र तु निर्दिश्यमानपरि भाषया निर्दिश्यमानादेरेव स्थानित्वान्न दोषः। (१)झय इति पञ्च मीत्याह-झयः परस्येति। पूर्वस्येत्यनुवर्त्तते। घोषवत इति

राभावार्थ इति कल्पनयैव सामञ्जस्ये समुदायपाठस्वीकारेण मूलयोज न्निष्फमिति वाच्यम्। झयो गणेषु प्रातिपदिकानुकरणस्यैव सत्त्वेन चर्त्वस्य प्राप्तेरित्याशयात्। *समनियतत्वेनेति*। त्रयाणाम्परस्परमव्यभिचरितत्व *अन्यतमेति*। त्रयाणां यस्य कस्य चिदित्यर्थः। एतेनात्र द्वयोरग्रहणा न्यतमप्रयोगासङ्गतिरित्यपास्तम्। *त्रिपाद्याम्परत्वादिति*। पूर्वसव स्येत्यादिः। नन्वेवं "परेश्च घ" इति सूत्रे कैयटेनोक्तं यद्यप्येतत्सूत्राभा ऽपि "झलो झलि" इत्यनेन सलोपे उत्थानस्य सिद्धिस्तथापि झला प्रत्यये तेन लोप इत्यर्थज्ञापनार्थमेतदिति यत् तर्हि, तदिदानीं विरु ते लोपपक्षे द्विथकाराघटितस्य रूपस्यैव सिद्धिः पूर्वसवर्णे तु झरो झ ति लोपाभावे द्विथकारकस्य प्राप्तेरिति चेन्न। तत्रत्यकैयटस्य भाष्यस ताष्टाध्यायीपाठाभिप्रायकत्वात्। तदेतत्सूचयति-*हलोयमामितीति*

पाठव्यत्यासे प्रमाणमाह-*अत एवेति*। अन्यथात्रापि थस्या द्धत्वाच्चर्त्वाभावे थकारस्य श्रवणप्रसङ्ग इति भावः। *उत्थानस्य सि रिति*। न च लोपपक्षे उदो दकारस्य चर्त्वे तस्य द्वित्वे द्वितकारकं पम्। सकारस्य शकारादेशे तस्य पूर्वोक्तरीत्या तकारे पूर्वतकारस्य

(१) ननु 'झयो ह' इत्यस्य हकारात्परस्य झयः स्थाने, झयो हस्य च स्थाने वेति कुतो न इत्यत आह—झय इति पञ्चमीति। होढः इत्यनेन ढादिविधानात् धकारात्परस्य झ भवात्। द्वितीये च द्वन्द्वनिर्देश एव कर्तव्ये व्यस्तोच्चारणसामर्थ्यात् कोटिद्वयसम्भवाच्चेति भावः।

समानियतत्वे ऽपि विनिगमनाविरहात् स्वरूपप्रतिपादनाय च त्रितय-ग्रहणम्।

झय इति। पदान्तादित्यपि बोद्धव्यम्। तेन 'विरप्शम्' इत्यादौ छत्वं न। जकारे कृते इति। छत्वमिति शेषः। पूर्वोक्त-भाष्यसंमताष्टाध्यायीपाठे चर्त्वस्य छत्वं प्रत्यसिद्धत्वात्।

मोनु (पा०सू०८।३।२३)। पदस्येत्यधिकृतं म इत्यनेन विशेष्यत इत्याह—मान्तस्येति। "हलि सर्वेषाम्" (पा०सू०८।३।२२) इत्यतो हलीत्यनुवर्त्तते। हलि किम्? 'राममाश्रय'।

नश्चा। (पा०सू०८।३।२४) चेन मो ऽनुकृष्यते। अपदान्तस्य किम्? 'राजन्पाहि'। यशांसीति। यशस्शब्दे जसः शौ "नपुंस-कस्य" (पा०सू०७।१।७२) इति नुमि "सान्त" (पा०सू०६।४।१०) इति दीर्घः। आक्रंस्यत इति। क्रमेर्लृङ् "आङ उद्गमने(पा०सू० १।३।४०) इति तङ् स्यः।

अनुस्वारस्य" (पा०सू० ८।४।५८।)। परेति लुप्तषष्ठीकं पृथक्पदम्। अत एव "उदः स्था" इत्यादौ सवर्णग्रहणानुवृत्तिः 'यरोऽनुनासिके' इत्यत्र तदपकर्षश्च सिद्धः। 'ययि' इति स्पष्टार्थम्। 'दंशनम्' इत्यादौ तु न दोषः, शकारसवर्णाप्रसिद्धेः। प्रयत्नभे-देनाज्झलोः सावर्ण्याभावात्। अचि अनुस्वाराभावात्।

---

त्वे तकारत्रयस्य श्रवणमिति भेदात्कथमियमाशङ्केति वाच्यम्, एवं विधे विशेषेऽपि 'न हि व्यञ्जनपरस्यैकस्यानेकस्य वोच्चारणे विशेष' इति न्याय-माश्रित्य शङ्कनात्। विशेषो नेत्यस्य दुर्लक्षो विशेष इत्यर्थः।

"झयो ह" इति सूत्रे झय इत्यस्य षष्ठ्यन्तत्वात् 'झयः स्थाने ह' इत्युचि-तमिति विपर्यासनिरासायाह—*पदान्तादित्यपीति*। तेनैतत्सामानाधिक-रण्याय झय इति पञ्चम्यन्तमुत्तरसूत्रे। एवञ्च पूर्वसूत्रेऽपि झय इति पञ्च-म्यन्तमर्थाधिकारानुरोधात्। अत एव "नाज्झलौ" इतिनिर्देशसङ्गतिः। उत्तरसूत्रे झय इत्यस्य पञ्चम्यन्तत्वे फलमाह—*विरप्शमित्यादावि-ति*। अत्र विपूर्वो द्रपेरौणादिकः शप्रत्ययः। *अत एव*। पृथक्पद-त्वादेव। परसवर्णपदस्य समासत्वे एकदेशसम्बन्धे क्लेशः। *दंशनम-त्यादाविति*। आदिना कंसेत्यस्य सङ्ग्रहः। *शकारसवर्णाप्रसिद्धेरि-ति*। इदं 'नाज्झलौ' इतिसूत्रप्रत्याचक्षाणस्य पञ्चधा प्रयत्नाङ्गीकर्तुर्म-

**मो राजि** (पा०सू०८।३।२५) नेति सिद्धे म इत्युक्ति-
"हेमपरे" (पा०सू०८।३।२६) इत्येतद्विषये 'प्रशाम् ह्मलयति'
इत्यादौ "मो नो धातोः" (पा०सू०८।२।६४) इति नत्व-
बाधनार्था। निषेधस्त्वनन्तरत्वादनुस्वारस्यैव स्यात्। ध्वनितञ्चेद-
"एतदोऽन्" (पा०सू०५।३।५) "अमोमश्" (पा०सू०७।१।४०) इति
सूत्रयोर्भाष्ये।

**हे मपरे।** (पा०सू०८।३।२६) मपरे इति बहुव्रीहिः, न
तत्पुरुषोऽसम्भवात्। "मोऽनुस्वारः" (पा०सू०८।३।२३) इत्यतो म
इत्यनुवर्त्तते।

**यथासंख्य।** (पा०सू०१।३।१०) सम्यक् ख्यानं संख्या क्रमवै-
शिष्ट्येन ज्ञानम्। "यत्सांख्यैः प्राप्यते स्थानम्" (भगा०गी०) इत्यत्र
संख्याशब्दस्य ज्ञानार्थतया दृष्टत्वात्। तामनतिक्रम्य यथासंख्यम्
अनुदेशः पश्चाद्भवद्वाक्यार्थबोधकालिकः सम्बन्धः। साम्यं संख्-
या योग्यत्वाद्व्याख्यानाच्च। एवञ्च समसंख्यानां सम्बन्धो येन क्रमे-
णपदज्ञानं पदादुपस्थितिर्वा तेनैव क्रमेण वाक्यार्थबोधविषयः सम्ब-
न्धस्तेषामित्यर्थः। फलितमाह—**समसम्बन्धीति**। यद्यपि स्था-

---

तेन। तेन दीर्घकारस्य तादृशस्य प्रसिद्धावपि न क्षतिः। शकारसवर्णः
शकारो यद्यपि प्रसिद्धस्तथापि स नानुनासिकोऽस्मिन्सूत्रे यरोऽनुनासि-
क इत्यतोऽनुनासिकपदानुवृत्तेः। अन्यथा 'कुण्डं रथेन' इत्यत्र परेरफ-
वर्णस्य रेफस्यैवानुस्वारस्य स्थाने आपत्तिः स्यात्।

*अनुस्वारस्यैव स्यादिति*। न च स न्यायो यथा न षडिन्य-
त्यज्यते तथात्रापि तत्त्यागोऽस्त्विति वाच्यम्, तत्र तथा व्याख्यानस्वी-
करे कृतत्वेन त्यागेऽपि तत्त्यागस्यात्र स्वीकारे मानाभावात्। तदाह
*ध्वनितमिति*। तत्र हि "मोराजि" इत्यनुस्वारादिबाधनार्थमित्युक्तम्।
अत्रादिपदोपादानं "हे मपरे" इत्येतत्सूत्रविषये नत्वसङ्ग्रहार्थम्। *
क्रमेण पदज्ञानम्पदादुपस्थितिर्वेति*। आद्योदाहरणन्तु "दीशलातुरे"
त्यादि। अत एव "स्यतासी लृलुटोः" इत्यत्र यथासङ्ख्यनिर्वाहः, अन्त्यो-
दाहरणं "परस्मैपदानां णलतुस" इत्यादि, जातिपक्षे "इकोयणचि" इत्या-
दि च। *स्थानाख्येति*। स्थानञ्चात्रक्रमः।

शत्रुम्मित्रं विपत्तिञ्च जय रञ्जय भञ्जय।

नाऽपलौकिकक्रमप्रमाणादेव सिद्धं तथापि "परस्मैपदानाम्" (पा०सू० ३।४।८२) एचो ऽयवायाव" (पा०सू० ६।१।७८) इत्यादौ शब्दतः सूत्रान्तरस्थक्रममादाय सम्बन्धबोधार्थं "आद्यन्तौ टकितौ" (पा०सू० १।१।८६) इत्यादौ समासनिर्देशे साहित्ये द्वन्द्वविधानादप्राप्तक्रमान्वयबोधनार्थञ्चेदम् । एवञ्च तत्र यथासंख्येनान्वयबोधकवाक्यकल्पने तत्प्रामाण्यात्ततश्च बोध इति बोद्ध्यम् ।

अत्र स्वरितेन (पा०सू०१।३।११) इत्यपकृष्यत इति "ख्यत्यात् (पा०सू०६।१।११२) इत्यादौ नातिप्रसङ्गः, तत्र प्रतिपत्तिकालिकमेव संख्यासाम्यमेतच्छास्त्रप्रवृत्त्युपयोगीति "अमङणनम्" इति सूत्रे भाष्ये स्पष्टम् । एते यवला निरनुनासिका एव । विधीयमान-

---

इत्यत्र यथा । क्रमेण सम्बन्धो यत्र क्रमेणोच्चारणं तत्र, यत्र तु न तथा तत्र न लौकिकप्रमाणावसर इत्याशयेन समाधत्ते-*तथापीति* । नन्वेवं विलम्बेऽपि लौकिकप्रमाणादेव सिद्धिरत आह-*आद्यन्ताविति* । *साहित्ये द्वन्द्वविधानादिति* । इतरेतरयोगेऽपि साहित्यस्यैव प्राधान्यादिति भावः । लोके तु यत्रासमासेनोच्चारणं तत्रैव क्रमेण सम्बन्धोऽनुभवसिद्धः । अत एव 'अविधनौ देवदत्तयज्ञदत्तौ इत्युक्ते न ज्ञायते कस्याजा धनङ्कस्यावय' इति भाष्ये उक्तम् ।

अयमाशयः । यद्येवंविधे विषये क्रमेणान्वयः स्यात्तर्हि द्वन्द्वघटकानामेकधर्मावच्छिन्नान्वयित्वाभावेन साहित्यस्यैवानुपपत्तिरिति । *वाक्यकल्पनेति* । प्राथमिकबोधस्तु साहित्यावच्छिन्ने साहित्यावच्छिन्नस्यैव । यथा 'राजपुरोहितौ स्वाराज्यकामौ यजेयाताम्' इत्यत्र । उत्तरकालिकस्तु राजा स्वर्गकामो यजेत पुरोहितश्च राज्यकाम इति प्रकरणादिवशाद्बोधः । *प्रतिपत्ति कालिकम्* । प्राथमिकवाक्यार्थबोधकालिकम् । *प्रवृत्त्युपयोगीति* । तेन "स्यतासी लृलुटोः" इत्यत्र लृशब्देन लङ्लृटोर्द्वयोः पश्चादुपस्थितावपि नानुपपत्तिः ।

*अमङणनमित्यत्र भाष्य इति* । तत्र हि 'मकारप्रत्याख्याने ये मकारेण प्रत्याहारास्ते ञकारेणैव सन्तु 'ङमो ह्रस्वादचि ङमुण्णित्यम्' इति यथा, तर्हि पदान्तयो झकारभकारयोरभावात्पञ्चागमास्त्रय आगमिन इति वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोति' इत्याशङ्क्य 'येषामागमानामागमिनः सन्ति त एव भविष्यन्ति प्रतिपत्तिकालिकन्तु सङ्ख्यासाम्यमस्ति' इति प्रतिपादितम् । *एते यवला इति* । यद्यप्येतेऽनुनासिकस्थानिकत्वादान्त-

त्वेन सवर्णाग्राहकत्वात् जातिग्रहणप्राप्तस्येव गुणाभेदकत्वात्प्राप्तस्या-पि अप्रत्यय इत्यनेन निषेधाच्च । एवं "मय उञ (पा०सू०८।३।३३) इत्यत्रापि । अत एव मतोर्मस्य नानुनासिको वकारः । अन्यथा "तद्वानासाम्" इत्यादौ नित्यानुनासिकापत्त्या तन्निर्देशासङ्गत्यापत्तिरित्याहुः ।

चयो द्वितीया इति । "नादिन्याक्रोशे" (पा०सू०८।४।४८) इत्यत्र भाष्ये इदम् । एतत्सामर्थ्यादेतत्कृतद्वितीयस्य न चर्त्वम् ।

ऊष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजम् ॥

इतिप्रातिशाख्ये ऽपदान्तभाजमिति चर्त्वासिद्धत्वलब्धार्थानुवादः । पदान्ते जश्त्वप्रवृत्त्या चर्त्वं विना चयो ऽलाभात् । अत्र तु कृते न जश्त्वप्राप्तिरस्यासिद्धत्वात् । 'अफ्सरा' 'वथ्सा' इति भाष्योदाहृते छान्दसत्वाच्चर्त्वस्यासिद्धत्वं न । एवञ्च प्रातिशाख्ये अपदान्तभाजमित्युत्सर्गः । यद्वा तयोरव्युत्पन्नत्वं, न त्वप्पूर्वात् सर्त्तेरसिद्धेः सो वेत्यन्यत्र विस्तरः ।

ङः सि (पा०सू० ८।३।२९)। सीति सप्तमी षष्ठ्यर्थे व्याख्यानात् तदाह–सस्येति । पदस्येत्यनुवर्त्तमानस्य वैयधिकरण्येनान्वया-

---

रतस्यादनुनासिकत्वयुक्ताः प्राप्तास्तथापि 'भाव्यमानेन सवर्णानाङ्ग्रहणं' इति निषधान्निरनुनासिका एवेत्यर्थः ।

*अत एवेति* । भाव्यमानत्वादेवेत्यर्थः । एतेन तद्वानितिनिर्देशात् मतोर्मस्य नानुनासिको वकार इति केषाञ्चित् कल्पनमपास्तम् । "चयो द्वितीया" इति वार्त्तिकनिष्पन्नद्वितीयस्य चत्वमाशङ्क्याह–*एतत्सामर्थ्यादिति* । ननु प्रातिशाख्यविरोधात्कथमत्र द्वितीयादेश इत्यत आह–*ऊष्मोदयमिति* । एवञ्च 'सुगणट् षष्ठ' इत्यादौ द्वितीयादेशो भवत्येवेति भावः। * चर्त्वासिद्धत्वेति* । "चयो द्वितीया" इत्यतेदृदृष्टया चर्त्वस्यासिद्धत्वादित्यर्थः । *अत्र तु* । द्वितीये तु । *अस्य* । द्वितीयस्य । ननु अप्सरन्तीत्यर्थकस्याप्सरश्शब्दस्यावयवः पकारोऽपि चर्त्वनिष्पन्न एवेति चयोक्तस्याप्सरा इत्युदाहरणस्यासङ्गतिरत आह–*अप्सराइत्यादि* छन्दसि सर्वविधीनां वैकल्पिकत्वेन द्वितीयादेशे असिद्धत्वस्यापि वैकल्पिकत्वमिति भावः । पक्षान्तरमाह–*यद्वेति* । उणादिष्वव्युत्पत्तिपक्षस्यैव सिद्धान्तितत्वात् ।

*सप्तमीषष्ठ्यर्थ इति*। 'सि'इति सप्तम्या अप्यकृतार्थत्वात्सकारा-

त्पदावयवस्य सस्येत्यर्थः । षट् त्सन्त इति । धुटि धस्य चर्त्वे ल- क्ष्यभेदात्पुनर्डस्य चर्त्वम् ।

नश्च (पा०सू०८।३।२४) । नकारान्तादिति । पदस्येत्यनु- वृत्तं पञ्चम्या विपरिणम्यत इति भावः । वैयधिकरण्येनैवान्वय इति ङमुट्सूत्रस्थभाष्यस्वरसः । नस्य पदान्तस्येति । अपदान्तनकारे ऽनुस्वारप्रवृत्त्या फलितार्थप्रदर्शनमिदम् । नान्तस्य पदस्येत्युचितम् । चतुष्टयमिति । वक्ष्यमाणविकल्पैरिति भावः । तेन तुकश्चुत्वे छ- त्वस्यासिद्धत्वात् "चयो द्वितीया" इति पक्षे चस्य छत्वेन छकारे छ- कारशकारघटितरूपद्वयाधिक्ये ञशानुस्वारविसर्गाणां द्वित्वविकल्पे- नाधिक्ये ऽपि न क्षतिः ।

ङमो । (पा०सू०८।३।३२) पदस्येत्यनुवृत्तं सामानाधिकरण्या- नुरोधात्पञ्चम्या विपरिणम्यते इत्याह—तदन्तं यत्पदं तस्मादिति । तत्र ङम् स्वयं ह्रस्वादिति विशेषणसम्बन्धमनुभूय पदविशेषणत्वेन त-

---

वाहितपूर्ववर्त्तिनो डात्परस्याव्यवाहितस्य धुडित्यर्थः,सस्येति फलितम्। एवञ्च सप्तम्याः षष्ठ्यर्थे पर्यवसानमिति भावः । न च ड इति षष्ठ्यन्तमेवास्त्विति शङ्क्यम्, 'श्वलिट्त्सायम्''मधुलिट्त्सायम्' इत्यत्र "न पदान्ताट्टोरनाम्" इति ष्टुत्वप्रतिषेध, इति भाष्यविरोधापत्तेः । "उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्"इतिपरिभाषाबलात्सप्तम्यन्तस्य षष्ठ्यन्तत्वकल्पनमिति तु युक्तम् । तस्मिन्निति तस्मादिति परिभाषयोः प्रवृत्तावुभयोरागमित्वे विरोधस्य स- द्भावात् 'तस्मात्' इति परिभाषायाः परत्वाद्व्यवस्थेति । तदादिविधौ विशे- षणविशेष्ययोरुभयोः सप्तम्यन्तत्वान्नियामकमित्यत्र विशेष्यस्य पदस्यास- प्तम्यन्तत्वान्न तदादिविधिः । तेन 'षट्त्सु' इत्यत्र धुट्सिद्धिः ।

*पञ्चम्या विपरिणम्यत इति* । एवञ्च नकारान्तात्पदादिति फलि- तम् । *ङमट्सूत्रस्थभाष्यस्वरस इति* । तत्रहि—पदावयवङमः परस्येति व्याख्यातम् । एवञ्चोत्तरसूत्रे पदस्येत्यस्य वैयधिकरण्येन सम्बन्धे पूर्वसूत्रे- ऽपि तथैवास्त्विति भावः । "शि तुक्" इति सूत्रे शीति सप्तम्या अचरि- तार्थत्वं 'न' इति पञ्चमी तु पूर्वसूत्रे चरितार्थेति पञ्चम्यन्तस्यैव षष्ठ्यन्त- त्वकल्पनमिति भावः । *इत्युचितमिति* । वर्णग्रहणे च सर्वत्रेति तदन्त- विधिसम्भवादिति भावः । रूपाणामाधिक्यस्यापि सम्भवाच्चतुष्टयमित्य- स्योपपत्तये आह- *वक्ष्यमाणेति* । विशेषणसम्बन्धमनुभूयेति । "गुणः कृतात्मसंस्कार" इति न्यायादिति भावः ।

दन्तपर इति भावः। ङम इति पञ्चमीबलादचीति सप्तमी षष्ठ्यर्थे दाह—अच इति। सप्तमीनिर्देशस्तु लाघवार्थः। 'ङम उत्तरस्य' इति "तस्मिन्" (पा०सू० १।१।६६) इति सूत्रस्थभाष्यात्। ङम् यत्पदमिति किम्? 'अन्' इत्यादौ ङमुण्मा भूदिति।

भाष्ये तु विभक्तिव्यत्ययकल्पने गौरवात्पदावयवङमः परस्य वैयधिकरण्यमेवोक्तम्। 'दण्डिना' इत्यत्र ङमुडभावो मण्डूकप्लुत्या "उञि च पदे" (पा०सू०८।३।२१) इत्यतः पदे इत्यनुवर्त्यां पदस्य ङमुडित्यर्थेन बोध्यः। पदस्येत्यस्यावृत्त्या सम्बन्धेऽपि विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्व एव तदादिविधिप्रवृत्त्या तदलाभः स्यात्। एतदर्थमेवाचीति सप्तमीनिर्देशः। ङमन्तं यत्पदमित्यर्थेऽपि 'परमदण्डिना' इत्यादावेतद्वारणाय पदे इत्यनुवृत्तिरावश्यिकयेवान्तर्वर्तिविभक्त्या दण्डिन्नित्यस्य पदत्वात्। "उत्तरपदत्वे च" इति प्रत्ययलक्षणनिषेधस्तु न। 'माषकुम्भवापेन' इत्यादौ "पदव्यवायेऽपि" (पा०सू०८।४।३८) इति निषेधसिद्धये तस्य यत्रोत्तरपदस्य कार्यित्वं तत्रैव प्रवृत्तेः। 'तेन निषेधेन सिद्धम्' इत्येतत्सूत्रस्थभाष्योक्तिस्त्वेकदेशिन इति दिक्। "इको यणचि" (पा०सू०६।१।७७) इति सौत्रो निर्देशः।

---

*लाघवार्थ इति*। वक्ष्यमाणरीत्या तदादिविध्यर्थमपीति बोध्यम्। एतेन सप्तमीनिर्देशस्य कृतार्थत्वाद्बाधकत्वशङ्काऽपि निरस्ता। सिद्धान्तमाह—*भाष्ये त्विति*। *एतदर्थमेवेति*। न तु लाघवार्थ इत्येवकारव्यवच्छेद्यम्। उच्चारणकृतलाघवेऽपि मनोव्यापाराधिक्येऽधिकगौरवात्। अत एव वक्ष्यते 'हलन्तनपुंसके उत्तरपदत्वे चेति वचनस्य भाष्ये प्रयोजनान्यथासिद्धिप्रदर्शनेन प्रत्याख्यानेऽपि ज्ञानगौरवेण प्रत्याख्यानस्याकृत्वात्स्थापनमेव कृतम्' इति। पदे इत्यनुवृत्तेरावश्यकत्वमपि दर्शयति—*ङमन्तं यत्पदमित्यर्थेऽपीति*। *उत्तरपदस्य यत्र कार्यित्वमिति*। अत्र यद्वक्तव्यं तत् 'न पदान्त' सूत्रे उक्तम्। ङमुडागमस्य नित्यत्वात् 'इको यणचीति' प्रयोगानुपपत्तिरत आह—*सौत्रो निर्देश इति*। एवमादिप्रयोगाः संहिताया अविवक्षयापि साधयितुं शक्याः। वस्तुतः "सनाद्यन्ता धातवः" "सुप्तिङन्तम्" इत्यादिषु बहुषु सौत्रत्वकल्पनोपेक्षया वृत्तिविषयकङमन्तपदस्थले ङमुटः काचित्कत्वमित्यत्र युक्तम्। तेनाणादिसंज्ञानीत्यादिप्रयोगसङ्गतिः।

रुप्रकरण इति । अत एव 'समः सुटि'' (पा०सू०८।३।५) इत्यादौ 'प्रश्लेषेण सविधानम्' इति भाष्ये उक्तम् । रोः पूर्वस्येत्युपलक्षणं रुप्रकरणविधेयस्य । एवमुत्तरत्र रोः पूर्वस्मादित्यपि । अयमधिकारः । तेनोत्तरसूत्रविषये एवास्य प्रवृत्तिः । न तु "मतुवसोः" (पा०सू०८।३।१) इत्यत्र तत्सूत्रस्थवार्तिकयोश्च । अत्रेति तु रुप्रकरण एवास्य सम्बन्धो न त्वग्रे "ढो ढे लोपः" (पा०सू०८।३।१३) इत्यादावित्यर्थसूचनार्थं, स्पष्टार्थमेव । तुशब्दः परस्य नित्यं रुत्वं पूर्वस्य वानुनासिक इति विशेषद्योतनार्थः । रोः पूर्वस्येत्यस्य च रुस्थानिनः पूर्वस्येत्यर्थो बोद्ध्यः ।

अनुनासिकात्पर इत्यत्रानुनासिकादिति ल्यब्लोपे पञ्चमी व्याख्यानात् । अयमागमोऽनवयव एवावयवत्वे मानाभावात् ।

खरीति । विसर्गाक्षिप्तस्याप्यवसानस्य न संबन्धो व्याख्यानात् । सो वक्तव्य इति । "समः सुटि" (पा०सू०८।३।५) इत्यादिसूत्रत्रये स इत्युपसंख्याय समः सुटीत्यत्र सकारं प्रश्लिष्य वैतैः सकार एव विधेय इत्यर्थः । एवञ्चास्यासिद्धत्वाद्रुत्वाभावेन विसर्गाभावे तत्तद्विधीनामप्राप्तिरेवेति भावः । स्पष्टं चेदं भाष्ये । विसर्गस्थानेन सत्वविधाने तु

---

*रुप्रकरणविधेयस्य इति* । तेन सविधानपक्षे सकारस्य लोपपक्षेऽभावस्योपलक्ष्यस्य सङ्ग्रहः । *ल्यब्लोप इति* । ल्यपो ल्यबन्तस्य विहायेत्यस्य लोपे गम्यमानार्थत्वादप्रयोगे ल्यबन्तार्थक्रियाकर्मणि पञ्चमीत्यर्थः । *व्याख्यानादिति* । "यद्यत्र दिग्योगलक्षणा पञ्चमी स्यात्तदा 'अत्रानुस्वारपरानुनासिकः पूर्वस्य तु वा' इत्येव वदेत्तथा तु न कृतम्" इत्येवंरूपादित्यर्थः । *अयमिति* । अनुस्वार इत्यर्थः । अत्र परपदोपादानेन "परश्च" इति सूत्रैकवाक्यतापन्नसूत्रविधेयसादृश्यस्य लाभादनवयवत्वसिद्धिः ।

'खरि'इत्यस्य मण्डूकप्लुत्यानुवृत्तौ गौरवादाह—*विसर्गेति* । इदमन्यरीत्या । वस्तुतस्तु मण्डूकप्लुतिरेव युक्ता । न त्वाक्षेपः । आक्षिप्तस्य शाब्दबोधविषयत्वाभावस्यान्यत्रोक्तेः । *व्याख्यानादिति* । लक्ष्यानुराधमूलेकात् अत एव "प्रत्यय" इत्यादिनिर्देशसङ्गतिः । *एवञ्चेति* । एतैः सकारविधाने चेत्यर्थः । *भाष्य इति* । "समः सुटि" इति सूत्रभाष्य इत्यर्थः। ननु वार्तिकेन विसर्गस्य स्थाने सकारविधानत्यागेबीजं किमि-

गौरवं स्फुटम् । लोपस्यापीति । यत्तु—

उपधारञ्जनं कुर्यान्नमो रुकरणे सति ।

लोपे प्रकृतिभावे वा नोपधारञ्जनं मतम् ॥

उपधारञ्जनमनुनासिकानुस्वारागमरूपम् । नमोर्नकारमकारयोः प्रकृतिभावोदाहरणं, 'नॄन्पाहि' इति । तत्तु प्रातिशाख्यस्वार च्छाखामात्रविषयमितिभावः । अत एव भाष्ये 'समादिषु सत्वं वक्त व्यम्' इत्युक्तम् । रुत्वपक्षे चानुनासिकाद्यापत्तिर्दोषत्वेन नोक्ता।

ननु लोपपक्षे एव द्वित्वेन द्विसकारस्य सिद्धत्वात् "समः सुटि" इति व्यर्थमित्यत आह-त्रिसकारकमपीति । "स्कोः" (पा० ८।२।२९) इति लोपस्तु न, अस्यासिद्धत्वात् । पुनर्द्वित्वेन त्रिसक रस्य सिद्धिरिति तु न युक्तं, "लक्ष्ये लक्षणस्य" इति न्यायात् एतेन "समः सुटि" इत्यत्र वेति पाठेनैव पक्षे मोऽनुस्वारेण सिद्धे ऽनुनासिकात्पर इति व्यर्थमित्यपास्तम् । ननु व्यञ्जनात्परस्यै स्यानेकस्य वोच्चारणे विशेषाभावोऽत आह—अनुनासिकवत मिति । तत्रोच्चारणे विशेषाभावकल्पने इदं वचनं व्यर्थमेव स्या

---

त्यत आह-*विसर्गस्यानेनेति* प्रातिशाख्यविरोधम्परिहरति—*प्रकृ भाव इति* । अत्र प्रकृतिभावशब्दः शास्त्रविधेयत्तत्कार्यप्राक्कालिकस्वरूप स्थानपरः । तच्च नॄन्पाहीत्यत्रास्त्येव । "नॄन्पे" इत्यस्य वैकल्पिकत्वा *नोपधेति* । रोः पूर्वस्यैवानुनासिको न तु रुप्रकरणविधेयात् । लोपपक्षे नोपधारञ्जनप्राप्तिरिति भावः । *प्रातीति* । प्रतिशाखं भव ति प्रातिशाख्यसमाख्याबलादृक्सम्बन्धितच्छाखापरमिदं, शास्त्रन्तु साधारणमिति भावः ।

पूर्वोक्तमेव द्रढयति—*अतएवेति* । तस्य तच्छाखामात्रविषय व । यदि सर्वसाधारण्यं स्यात्तर्हि रुत्वपक्षे उपधारञ्जनस्य प्राप्तिः पक्षे च तस्याभाव इति फलभेदस्य स्पष्टतया रुत्वपक्षेऽनुनासिका सिरप्युक्ता स्यात्स्वमते तु रुप्रकरणविधेयात्पूर्वस्यानुनासिकादेशत्वे या रुत्वपक्ष इव सत्वपक्षेऽप्यनुनासिकादेशस्य सम्भव इति रुत्वेऽनुना सिकापत्त्यकथनं युक्तमेव । एवञ्च लोपेऽप्युपधारञ्जनम्भवत्येवेति भा *एतेन* । त्रिसकारकरूपासाधनेन । *इदं वचनं व्यर्थमेवेति* । न भाष्योक्तवचनन्तु दुर्लक्ष्यत्वाभिप्रायञ्च तु सर्वथा विशेषाभावपर

ति भावः । 'हयवरट्' सूत्रभाष्योक्ते शर्षूपसंख्याने फलमाह-अनुस्वारवतामिति । अपिना कस्य सङ्ग्रहः । लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेराह-वचनान्तरणेति । 'यणो मय' इत्यनेन । एकस्यैव शास्त्रस्य पुनः प्रवृत्तौ हि स न्याय इति भावः । पूर्वत्रासिद्धत्वेन पूर्वद्वित्वस्य पूर्वं प्रवृत्त्या तेन द्वितीयस्य साधुत्वे बोधिते तदनन्तरं परद्वित्वप्रवृत्त्या तयोर्मध्मे पुनरन्यस्य साधुत्वे बोधित इति त्रितयस्य निर्वाहो बोद्धव्यः । "अनचि च" (पा०सू०८।४।४७) इत्यत्र "यणोमय" इत्यस्योपसंख्यानाद् "अचोरहाभ्याम्" (पा०सू०८।४।४६) इत्यतस्तस्य परत्वं बोद्धव्यम् ।

पुमः ख्य ॥ (पा०सू०८।३।६) अम्परइति बहुव्रीहिः । ᳲकᳲपयोरिति । "कुप्वोः" (पा०सू०८।३।३७) इति सूत्रविधेययोरित्यर्थः "इदुदुपधस्य" (पा०सू०८।३।४१) इति सूत्रेऽप्रत्ययस्येत्यस्य प्रत्ययावयवभिन्नस्येत्यर्थादिति भावः । अव्युत्पत्तीति तत्पक्षे प्रकृतिप्रत्ययविभागाभावादिति भावः । षत्वेति । इदमनुनासिकपक्षे । अनुस्वारपक्षे तु "कुप्वोः" इत्यस्यैव प्राप्तिः । अनुस्वारव्यवधानेनोदुपधत्वाभावात् । पुंक्षीरमिति । क्षरधातोरुपधाया ईत्वे ऽप्प्रत्यये क्षीरमिति भावः ।

नश्छवि ॥ (पा०सू०८।३।७) अप्रशानिति षष्ठ्यर्थे प्रथमा । 'नॄन्पे' (पा०सू०८।३।१०) नॄनिति द्वितीयान्तानुकरणम् । षष्ठ्याः सौत्रो लुक् । नलोपस्तु सौत्रत्वान्न । एवं "कान्"

---

भावः । *इदमिति* । शरः खय इत्येतत् ।

ननु द्वे इत्यनेनोच्चारणद्वयस्यैव विधेयत्वाद् द्वयोर्वचनयोर्युगपत्प्रवृत्तौ द्विरुच्चारणस्यैकस्यैवोभाभ्यां वचनाभ्यां लाभेन त्रितस्यानिर्वाह इत्यत आह—*पूर्वत्रेत्यादि* । वार्त्तिकेऽपि पूर्वापरीभावं व्युत्पादयति*—अनचि चेत्यत्रेति* । कविभिः कृतमित्यादिव्यावृत्तये "इदुदुपध" इति सूत्रे प्रत्ययशब्दस्य प्रत्ययावयवलाक्षणिकत्वादाह-*इदुदुपधस्येतीति । ननु "घसेः किच्च" इत्यौणादिकसूत्रेणरन्विधानेन क्षीरशब्दस्य व्युत्पादनाच्च षत्वस्यासिद्धत्वात्खय्परत्वाभावेन नैतत्प्राप्तिरत आह—*क्षरधातोरिति* । *प्रकृतार्थदार्ढ्येति* । यद्यप्यभावाभावस्य प्रतियोगिरूपतया यत्कर्तृकप्राप्ता-

इत्यत्रापि । चाद्विसर्ग इति । "शर्परे" (पा०सू०८।३।३५) इति सूत्रात्तदनुकर्षश्च नेति भावः येन नेति । "येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधक" इति न्यायेनेत्यर्थः । येन नेत्यादेर्यत्कर्तृकावश्यप्राप्तावित्यर्थः नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् । प्राप्त इति भावे क्तः । तदप्राप्तियोग्ये विषये ऽचारितार्थ्यं हि बाधकत्वे बीजम् । तदुक्तं "शर्पूर्वाः" (पा०सू०७।४।६१) इति सूत्रे भाष्ये "शर्पूर्वा इत्येतद्धलादिः शेषस्य बाधकम्, इदन्तावदयं प्रष्टव्यः, यदि नोच्येत किमिह स्यात् हलादिः शेषश्चेन्नाप्राप्ते तस्मिन्नारम्भादिदन्तद्बाधकं भविष्यति" इति "अजादेर्द्वितीयस्य" (पा०सू०६।१।२) इति सूत्रे भाष्ये ऽपि स्फुटमेतत् ।

न तु शर्परइति । न चास्य विसर्गस्य ᳲकᳲपौ दुर्वारौ । इति चास्यैव तौ स्यातां, "खरवसानयोः" (पा०सू०८।३।१५) इति विहितस्य तु एतयोरसिद्धत्वात्सत्वमेव स्यादिति वाच्यम् । "शर्परे

---

वित्येव लभ्यते । तथापि नञ्द्वयोपादानसामर्थ्याद्दार्ढ्यलाभकल्पना । दार्ढ्यञ्चापवादत्वाभिप्रेतशास्त्रोद्देश्यतावच्छेदकस्योत्सर्गशास्त्रोद्देश्यतावच्छेदकव्याप्यत्वमेवेति बोध्यम । *तदप्राप्तीति* । उत्सर्गाप्राप्तीत्यर्थः । अत्रैव सम्मतिमाह-*तदुक्तमिति* ।

ननु बाध्यबाधकभावे द्वैविध्यम्प्रसिद्धम् । समानफलकत्वं विरोधश्च यथा दध्नस्तक्रस्य चौदनोपसेकात्मकसमानफलकत्वम् । "अष्टाश्रियूपो भवति वाजपेयस्य चतुरश्रः" इत्यत्र सङ्ख्याकृतविरोधाच्चतुरश्रत्वेनाष्टाश्रित्वस्य बाधः(१) । द्विविधापि विधा प्रकृते न सम्भवति । हलादिःशेषे 'पस्पर्द्धे' इत्यत्र सकारस्य "शर्पूर्वा" इत्यनेन पकारस्य शेषसम्भवादिति चेन्न । शेषपदार्थस्येतरनिवृत्तिपूर्वकावस्थानरूपतया द्वयोरपि सकारपकारयोर्निवृत्तिस्थित्योर्विरोधाद्भवतीह बाध्यबाधकभाव इति भावः ।

*न चास्य विसर्गस्येति* । एतत्सूत्रविहितस्येत्यर्थः । तथा च 'वास्क्षौमम्' इत्यादिरूपमेव "कुप्वोः" इत्यस्योदाहरणम्भविष्यति । शर्परे इति सूत्रविहितविसर्गस्य श्रवणन्तु 'कः त्सरुः' कः त्सरिता' इत्यादिषु भविष्यति

---

(१) संख्याकृतकर्मभेदस्योदाहरणमिदम् । एवमेव "सप्तदशप्राजापत्यान् पशूनालभेत" इत्यादि इदं च जैमिनीये शास्त्रे द्वितीयाध्याये स्पष्टम् । अत्रापि कर्मभेदे विरोध एव बीजम् कल्प्यव्यवस्थामूलं सुधियो विभावयन्तु ।

(पा०सू०८।३।३५) इति सूत्रे 'कुप्वोः' (पा०सू०८।३।३७) इत्यत्रानुवर्त्य शर्परयोः कुप्वोः ᳵकᳶपयोरपवादो विसर्गस्य विसर्ग इति वाक्यभेदेन व्याख्यानेनादोषात्, स्पष्टश्चेदं भाष्ये । वार्त्तिके कान्ग्रहणं शक्यमकर्तुमित्याह—यद्वेति । एवं सम्ग्रहणमपि त्युक्तुं शक्यम् । पुम्ग्रहणं त्वावश्यकमेव । अनुनासिकपक्षे इणः परत्वेन षत्वापत्तेः ।

एष्विण इति । गणे कृतसत्वषत्वानामेव पाठादिति भाव । ᳵकᳶपयोरपवाद इति । तद्विहितविसर्गस्यापीत्यपि बोद्धव्यम् । 'काँस्कान्' इति वीप्सायां द्वित्वम् ।

संहितायाम् ॥ (पा०सू०६।१।७२) संहिता च स्वारसिकार्धमात्राकालव्यवायेनोच्चारणम् । ततोऽधिकार्धमात्राकालेनोच्चारणे एतदधिकारोक्तकार्यव्यावृत्तये इदम्, तदधिककालव्यवाये तु न साधुत्वम् नापि बोध इष्यते इति वृद्धा इति तेषां शास्त्रविषयतैव नेति भावः ।

छे च ॥ (पा०सू०६।१।७३) छे इत्यकार उच्चारणार्थस्तेन 'अच्छिन्नम्' इत्यत्र तुक् । "ह्रस्वस्य पिति' (पा०सू०६।१।७१) इत्यतो ह्रस्वस्येति तुगिति च वर्त्तते । जश्त्वेनेति । स्वशब्दे उपपदे छ्यतेः के स्वच्छशब्दो निर्मले रूढः । एवं नञ्पूर्वाच्छादयतेर्डे अच्छशब्द इति

---

ष्यति । *एतयोः* । ᳵकᳶपयोः । "शर्परे" इति सूत्रविहितविसर्जनीयस्य तु न सत्वप्राप्तिस्तद्दृष्ट्याऽसिद्धत्वादिति भावः । *वाक्यभेदेनेति* । कुप्वोरितिपदस्यावृत्तिङ्कृत्वा भिन्नवाक्यं सम्पादनीयमिति भावः । ननु "विसर्जनीयो र" इति संज्ञासूत्रङ्कृत्वा "खरवसानयोः" इत्यादिसूत्रे विसर्जनीयपदस्थाने लाघवात् 'र' इत्येव पठनीयमिति चेन्न, 'पर्यायशब्देषु लाघवगौरवचर्चा नाद्रियते' इत्यस्य ज्ञापनार्थन्तदुपादानात् । "कस्कादिषु च" इति सूत्रव्याख्यावसरे एषु इण उत्तरस्य षत्वमन्यस्य सत्वमिति विविच्योक्तन्तल्लाभप्रकारमाह—*गण इति* । तथा च कस्कादिषु यथा पठितं तथैव साधु भवतीति सूत्रार्थः । *संहितायाम्* । यद्यपीदम् "इको यण्" इत्यादिसूत्रेष्वप्युपयुज्यत इति तत्रैव व्याख्यातुमुचितन्तथाप्यष्टाध्यायीस्थसौत्रक्रमानुरोधादेवङ्कृतम् ।

ननु निर्मले रूढे स्वच्छब्दे तस्यापद्रान्तत्वात्कथं जश्त्वमत आ-

पदान्तत्वं बोद्धव्यम् । स्पष्टश्चेदममराटिप्पणे ।

**आङ्माङोः** ॥ (पा०सू०६।१।७४) आङ्साहचर्यान्माङव्ययमेव दीर्घस्यायमिति वक्ष्यमाणज्ञापकाद्व्याख्यानाद्वा । दीर्घादिति पञ्चमी पञ्चमीति भावः । एओङ्सूत्रभाष्ये ध्वनितमेतत् । चेच्छिद्यते इति तुको हलादिः शेषस्तु न, अभ्यासस‌ञ्ज्ञाप्रवृत्तिकाले स्थानिद्वारा साक्षाद्वा संहितानां हलामेव तेन निवृत्तेः । अत एव "नुगत" (पा०सू० ७।४।८५) इत्यादि चरितार्थम् ।

**दीर्घात्पदान्ताद्वा** । पदान्तस्य दीर्घस्येत्यर्थः । योगविभागो ऽनयोः "एओङ्" इति सूत्रे भाष्ये स्पष्टः । दीर्घान्तस्य पदस्येत्यर्थेन सिद्धे ऽन्तग्रहणं पदान्तविधित्वमस्य न पदविधित्वमिति बोधनद्वारा समर्थपरिभाषानुपस्थित्यर्थम् । तेनासामर्थ्येऽप्यस्य प्रवृत्तिः

---

ह-*स्वशब्द इत्यादि* । *अव्ययमेवेति* । तेन क्विबन्त'माङ्'माने इतितोर्ग्रहणशङ्कायां माछेद इति लक्ष्यसम्भवेऽपि सा व्युदस्ता । *वक्ष्यमाणज्ञापकादिति* । 'सुराच्छाये'तिज्ञापकादित्यर्थः । ननु "दीर्घात्" इतिसूत्रमपदान्तविषयकम् । सेनासुराच्छायेत्युदाहरणन्तु "पदान्ताद्वा" इति सूत्रस्य विषय इत्यत आह-*व्याख्यानादिति* । "वर्णैकदेशानां वर्णग्रहणेन ग्रहणम्" इतिपक्षे 'अग्ने इन्द्र' इत्यादौ सवर्णदीर्घत्वं दीर्घं ह्रस्वाश्रयम् आलूयेत्यादौ "ह्रस्वस्य पिति कृति" इति तुकश्चाशङ्क्य दीर्घं ह्रस्वाश्रयो विधिर्न भवतीत्यर्थे 'यदयन्दीर्घाच्छेतुकं शास्ति' इत्युक्तम्भाष्ये यदि छस्यायन्तुकस्यात्तदा ह्रस्वस्य पूर्वेण, छस्य त्वनेनेति विशेषस्य सत्त्वात्तस्य ज्ञापकत्वाभिधानासङ्गतेरिति भाष्यपर्यालोचनमूलकादित्यर्थः । *ध्वनितमिति* । ध्वनितञ्च तथा ज्ञापकोपपादनेनैव ।

*स्थानिद्वारेति* । यथा "उरत्" इतिसूत्रनिष्पन्नस्यारित्यस्याद्यो रेफः चकार जहारेत्यादौ निवर्त्तते । साक्षात्सन्निहितनिवृत्तिस्तु पपाःत्यादौ स्पष्टैव । *चरितार्थमिति* । यद्युत्तरकालप्राप्तिकपदत्वेनाद्देश्यभावेन च स्थानिद्वारकप्राप्तिकर्तृभिन्नस्यापि तेन निवृत्तिः स्यात्तदा कोऽपि निवृत्त्यापत्तौ 'ययस्यत' इत्यादौ नुक्श्रवणाभावेन तद्वैयर्थ्यं स्पष्टमेव । दीर्घस्य पदान्तस्येति षष्ठ्यर्थे पञ्चमीत्युक्तत्वादिति भावः ।

*समर्थपरिभाषानुपस्थित्यर्थमिति*। यत्र सुबन्तत्वेन पदत्वेन बोद्धव्यं तत्रसमर्थपरिभाषोपस्थितेरुक्तत्वात् । पदान्तस्य दीर्घस्येत्यर्थे तु दीर्घस्योद्देश्यत्वन्न तु पदत्वावच्छिन्नस्य । यद्यत्र समर्थपरिभाषोपस्थितिः स्यात्

रिति समर्थसूत्रे कैयटः ।

॥ इति हल्सन्धिः ॥

---

# विसर्गसन्धिप्रकरणम्

विसर्जनीयस्य सः (पा०सू०८।३।३४)। प्राग्व्याख्यातमपि विसर्जनीयपदानुवृत्तिप्रदर्शनाय स्मारितम् ।

शर्पर इति बहुव्रीहिः । विशेष्यं चावध्यवधिमतोः साजात्याद्विसर्जनीयाक्षिप्तः खरेव । विसर्गस्य विसर्गविधौ फलमाह—न त्वन्यदिति । अन्यदेव विवृणोति—इहेति । त्रैरूप्यमिति । विकल्पद्वयसामर्थ्यादिति भावः ।

सोप ॥ (पा०सू०८।३।३८) अपदाद्योरिति सूत्रे सौत्रत्वादेकवचनम् । अनव्ययस्येति । अत्राव्ययीभावातिरिक्ताव्ययस्यैव ग्रहणं

---

दा 'लक्ष्मीच्छाया' इत्यादावेवास्य प्रवृत्तिः स्यान्न तु 'तिष्ठतु लक्ष्मी च्छाया देवदत्तस्य' इत्यादाविति भावः। यत्त्वेवमेव "न पदान्ताट्टोरनाम्" इति सूत्रेऽप्यन्तग्रहणस्यावश्यकत्वेन 'अन्तग्रहणं स्पष्टार्थम्' इति तत्रत्यग्रन्थविरोध इति। तन्न । 'षण्णाम्' इत्यत्र निषेधाभावफलकेनाऽनामित्यस्योपादानेन पदत्वेनोद्देश्यत्वाभावेन च तत्र समर्थपरिभाषोपस्थित्यभावस्य पूर्वमुपपादितत्वात्। किञ्च "समासेऽङ्गुलेः सङ्गः" इतिसूत्रस्थसमासग्रहणेन ज्ञापकेन सजातीयापेक्षत्वाद्यत्रभावकार्यस्य विधेयत्वन्तत्र समर्थपरिभाषाप्रवृत्तिरतोऽन्तग्रहणन्तत्र स्पष्टार्थमेवेति ॥

इति हल्सन्धिः ।

---

पौनरुक्त्यशङ्कापरिहारायाह—*प्राग्व्याख्यातमपीति*। *बहुव्रीहिरिति*। कर्मधारयस्याभिप्रेतत्वे शरीत्येव वदेत्। *विसर्जनीयाक्षिप्त इति*। स्थानिनो विसर्जनीयस्य निमित्तमेतत्सूत्रविषये खरेवेति शर्परे खरीति पदसमुदायार्थे तदेकदेशस्य शर्पर इति पदस्य शक्तिस्वीकारादनेनोपस्थितः खरेवेति भावः। एतेनाक्षिप्तस्य शाब्दबोधे भानानङ्गीकारादिदमसङ्गतमित्यपास्तम् ।

व्याख्यानात् । तेन 'उपपयस्काम्यति' इत्यादौ सत्वसिद्धिरिति स्पष्टम् व्ययीभावश्च" (पा०सू०२।४।१८) इत्यत्र भाष्ये । गीः काम्यतीति । 'वाः काम्यति' इत्यस्याप्युपलक्षणमिदम् ।

इण षः ॥ (पा०सू०८।३।३९) 'इदुदुपधस्य' (पा०सू०८।३।४१) इत्यस्यासिद्धत्वात् 'सर्पिष्पाशम्' इत्यादौ सत्वनिवृत्त्यर्थम् 'गीष्पाशं' 'दोष्कल्पम्' इत्याद्यर्थश्चेदम् अत्रानव्ययस्येत्यपदाविति काम्य इति च सम्बद्ध्यते । तेन 'उच्चैः कल्पं' 'दोः पश्य' 'गीः काम्यति' इत्यादौ षत्वम् न । अत एव 'अत्र प्रकरणे सर्वत्र सत्वमेव विधेयमिण उत्तरस्य विसर्गस्थानिकसस्यानेन षत्वम्' इति भाष्योक्तपक्षान्तरं सङ्गच्छते । विसर्जनीयस्थानिकेत्युक्त्या 'पुंस्पुत्र' इत्यादौ न दोषः तत्र हि मस्थानिकः सः । अत्र विसर्जनीयस्येत्यनुवृत्त्यैतद-

---

*व्याख्यानादिति* । "अव्ययीभावश्च" इतिसूत्रभाष्येऽव्ययीभावस्याव्ययत्वे "लुङ्मुखस्वरोपचारा" इति परिगणनेन प्रयोजनमुक्तोपचारस्य विसर्गस्थानिकसकारस्य 'उपपयःकार इत्यत्राप्रवृत्तिः प्रयोजनमिति प्रदर्श्य तस्मिन् सूत्रेऽनुत्तरपदस्थस्येत्यनुवृत्त्या 'उपपयःकार' इत्यादौ विसर्गस्योत्तरपदस्थत्वात्सत्वाभावसिद्धौ तदव्ययत्वस्य न प्रयोजनमिति दर्शितं परिगणनञ्च प्रत्याख्यातम् । यदि "सोपदादौ" इति सूत्रशेषभूते "अनव्ययस्य" इति वार्त्तिके यदनव्ययपदं तेनोपपयस्काम्यतीत्यत्र प्रतिषेध इष्टः स्यात्तदोपचारस्येदम्प्रयोजनं सम्भवत्येवेति प्रत्याख्यानपरं भाष्यं विरुध्येत । तस्मादुपचारपदेन परिगणनस्थेन "अतः कृकमि" इतिसूत्रनिष्पन्नसत्वस्यैव ग्रहणमिष्यते । तच्चाव्ययत्वप्रयोजनमन्यथासिद्धमित्यव्ययीभावस्याव्ययत्वप्रयोजननिराकरणमूलकाद्व्याख्यानादित्यर्थः । *उपलक्षणमिति* । एवञ्च "इणः ष" इति सूत्रस्यायमविषय इति भावः ।

*सर्पिष्पाशमिति* । उणादीनामव्युत्पन्नत्वमिति पक्षेऽत्र "इदुदुपधस्यस्य" इत्यस्य प्राप्तिः । *गीष्पाशमिति* । अत्रेदुदुपधस्येति तपरकरणात्षत्वप्राप्तिरेव न । *अत एव* । उक्तत्रितयस्य "इणः ष" इति सूत्रस्यापि शेषत्वादेव । यद्युक्तत्रितयस्यैतत्सूत्रशेषत्वञ्च स्यात्तदा स्त्रातेण षत्वविधायकत्वपक्षे 'उच्चैः कल्पम्' इत्यादौ षत्वप्राप्त्या सकारस्य त्वमिति पक्षे चैषु सकाराभावेन षत्वाप्राप्त्या फलभेदः स्पष्ट एव । नन्वर्थस्य फलवत्त्वेऽपि लाभः कथमत आह—*अत्रेति* । एतत्सूत्रे भाष्ये वमुक्तम् "किमविशेषेण सत्वमुक्त्वा इण उत्तरस्य सकारस्य षत्वमु-

र्थलाभः । अनव्ययस्येत्यादि त्वत्र पक्षे ऽत्र न सम्बद्ध्यते तेन 'द्विष्कृतं' 'दुष्कामयति' इत्यादौ षत्वसिद्धिः । 'गीः काम्यति' इत्यादौ सकाराभावादेव न दोषः । अपादादाविति च न सम्बद्ध्यते तेन 'दुष्करोति' इति षत्वसिद्धिः ।

परन्त्वयं पक्षो ऽसङ्गतः । उत्तरसत्वस्यासिद्धत्वेन 'निष्कृतं' इत्यादौ षत्वासिद्धेः । प्रकरणे प्रकरणमसिद्धं न योगे योग' इति पक्षस्तु नास्त्येव ज्ञापकासम्भवादिति "उपसर्गादसमासेऽपि" (पा०सू० ८।४।१४) इत्यत्र निरूपयिष्यामः । विसर्जनीयस्यैव षत्वमिति मू-

---

आहोस्विदिण उत्तरस्य विसर्जनीयस्यैव षत्वं विधीयते, इति। अत्र यदास-कास्य षत्वविधानमिति पक्षस्तदा सोपदादावित्यतोऽनुवृत्तस्य प्रथमान्त-स्य षष्ठ्या विपरिणामः कार्यः। किञ्चातः ? यद्यविशेषेण सत्वमुक्त्वा इण उत्तरस्य सकारस्य षत्वमुच्यते तदा निष्कृतं निष्पीतमित्यत्र सत्वस्यासिद्धत्वात् षत्वन्न प्राप्नोति" ।सत्वस्यासिद्धत्त्वादिति। निष्कृतमित्यादौ 'इदुदुपधस्येति' सूत्रेणैव सत्वमस्मिन् पक्षे वाच्यं,तस्य च "इणः ष" इत्येतद्दृष्ट्याऽसिद्धत्वात् षत्वन्न प्राप्नोतीत्यर्थः। इतः प्रभृति सर्वत्र विपरिणतस्य स इत्यस्य प इत्यस्य विसर्जनीयस्येत्यस्य च सम्बन्धः । किञ्च विसर्जनीयस्थानिकस्य सस्य षत्वमिति 'पुंस्पुत्र' इत्यत्र दोषवारणाय स्वीकार्यम् । एवञ्चोत्तरत्र "विसर्जनीयस्य" इत्यस्य मण्डूकानुवृत्तिक्लेशोऽपि नेति। अत्र पक्षद्वयसम्भावनाकाले "सोऽपदादौ" इति सूत्रविहितसस्य स्थानेऽनेन षत्वमिति स्वीकार्यम् । "सोऽपदादौ" इत्यस्य तु पूर्वोक्तद्वितयं शेष इति, "इणः ष" इत्यस्यापि तत्त्रितयं शेष, इत्युक्तम्प्राक्। यदा तु द्वितीयपक्ष एवपरिगृह्यते तदाह—*अनव्ययस्येत्यादीति* ।

भाष्योक्तदूषणेनैवेमम्पक्षं खण्डयति—*परं त्वयमिति* । ननु 'न योगे यागोऽसिद्धः किन्तु प्रकरणं प्रकरणम्' इति पक्ष आश्रीयत इति सत्वषत्वप्रकरणस्यैकत्वान्नायन्दोष इत्यत आह-प्रकरणे प्रकरणमसिद्धमिति* । *निरूपयिष्याम इति* । तत्र हि "पूर्वपदात्संज्ञायामग" इति सूत्रात्पूर्वपदादित्यनुवृत्तौ तदाक्षिप्तसमास एव स्यादित्यसमासेऽपीति । ननु व्याख्यानतः पूर्वपदादित्यस्य निवृत्त्याऽसमासेपीति व्यर्थम् । न च "पूर्वपदात्संज्ञायाम्" इति नियमव्यावर्त्तितणत्वप्रतिप्रसवायेदमावश्यकमिति वाच्यम् । "पूर्वपदात्" इत्येतद्दृष्ट्या "उपसर्गादसमास इत्यस्यासिद्ध्या नियमेनाव्यावृत्तेः । न चासमासेऽपीति पदमेव न योगे योगोऽसिद्धः किन्तु प्रकरणे प्रकरणमसिद्धमित्यर्थे ज्ञापकमस्त्विति वाच्य-

लोक्तपक्षे तु सकारषकारयोः स्वरितत्वे ऽपि यथायोगं सम्बन्धो म-ण्डूकप्लुत्येत्यन्यत्र विस्तरः ।

नमस्पु ॥ (पा०सू०८।३।४०) इत उत्तरम् "अपदादौ" इति न सम्बध्यते व्याख्यानात् । साक्षात्प्रभृतित्वादिति । ऊर्यादि-त्वाद्गतित्वं स्वरादिपठितस्य तु गतित्वाभावस्तेन साक्षात्प्रभृतिषु व्या-ख्यानवचने ऽपि न क्षतिरित्यन्ये ।

इदुदु । (पा०सू०८।३।४१) अप्रत्ययस्येति पर्युदासो लाघवात् तत्र प्रत्ययपदं तत्संबन्धिपरं तेन प्रत्ययसम्बन्धिभिन्नस्येत्यर्थः, अत एव 'कविभिः कृतम्' इत्यादौ न षत्वं, स्पष्टञ्चेदं भाष्ये इत्यन्यत्र विस्तरः ।

एकादेशशास्त्रेति । एकादेशशास्त्रसपन्नरेफस्थानिकत्वे विसर्जनीयस्यैकादेशशास्त्रनिमित्तकत्वं बोध्यम् । स्पष्टञ्चेदमत्र सूत्रे, "उरण् रपर" ( पा०सू०१।१।५१ ) इति सूत्रे च भाष्ये इत्यन्यत्र विस्तरः । प्रत्ययभिन्नसंबन्धिन इति तु नार्थः

---

म् । "समानपदे" इत्यस्याखण्डपद इत्यर्थकत्वाऽऽवश्यकत्वेन "पूर्वपदात्" इति सूत्रस्य विधायकतयाऽसमासेपीत्यस्योक्तरीत्या प्रतिप्रसवार्थकत्वा-सम्भवादिति चेन्न, स्पष्टार्थत्वादित्येवान्निरूपयिष्यत इत्यर्थः ।

ननु मूलोक्तपक्षे सत्वषत्वयोः सर्वत्र सम्बन्धेन "नमस्पुरसोः" इति सूत्रेणापि षत्वापत्तिरत आह-*विसर्जनीयस्यैवेति* । *मण्डूकप्लु-त्येति* । इयञ्च भाष्ये एव स्पष्टा ।

*इत उत्तरमिति* । इतः प्रभृतीत्यर्थः । *व्याख्यानादिति* । "ना-रायणन्नमस्कृत्य" इत्यादिलक्ष्यदर्शनमूलकादित्यर्थः । ननु नमस्करोती-त्यादौ नमःशदस्य व्यर्थवृत्तित्वाभावात्साक्षात्प्रभृतित्वादित्यसङ्गतमत आह *ऊर्यादित्वादिति*

*लाघवादिति* । वाक्यभेदाभावेनेत्यादिः । प्रत्ययभिन्नस्येतिव्याख्या-नन्न युक्तमित्याह—*तत्र प्रत्ययपदमित्यादि* । ननु विसर्जनीयस्यैका-देशशास्त्रनिमित्तकत्वन्नेत्यत आह—*एकादेशशास्त्रेति* । न च कस्का-दिगणे भ्रातुष्पुत्रशब्दपाठस्य ज्ञापकत्वमसङ्गतम् । "इदुदुपध" इति पदे कर्तव्ये एकादेशस्य "षत्वतुकोः" इत्यसिद्धतया उदुपधत्वाभावेन षत्वाप्रा-प्तौ तत्पाठेन षत्वस्य साध्यत्वादिति वाच्यम् । "षत्वतुक" इति सूत्रे पदे

'अग्निः करोति' इत्यदावपि प्रत्ययभिन्नसमुदायसंबन्धित्वेन

न्तपदाद्योरेकादेशोऽसिद्ध" इति वार्तिकात्तादृशे विषये एवासिद्धत्वविधानात्। इदञ्च वार्तिकमावश्यकम्। अन्यथा 'शकहूषु' 'परिवीषु' 'वृक्षेच्छत्रम्' 'प्लक्षेच्छत्रम्' इत्यादौ षत्वतुकोरसिद्ध्यापत्तेः।

यत्तु "इक् साच्यणः सम्प्रसारणम्" इति सूत्रं कार्यम्। "सम्प्रसारणाच्च" इति सूत्रञ्च न कार्यम्, एवञ्च शकहूष्वित्यादावेकादेशस्यैवाभावेनासिद्धत्वशङ्कैव नेति षत्वविषये "पदान्तपाद्योः" इति नियमो न स्वीकार्यः। एवञ्च 'भ्रातुष्पुत्र' इत्यादावेकादेशस्यासिद्धत्वादुदुपधत्वाभावेन षत्वाप्राप्तौ षत्वसिद्ध्यर्थङ्कस्कादिषु भ्रातुष्पुत्रशब्दपाठश्चारितार्थ इति ज्ञापकत्वोपपादनमसङ्गतमिति। तन्न। श्वानमाचष्टे 'शावयति' इति रूपवादिमते "नस्तद्धित" इति टिलोपे सम्प्रसारणानापत्तेः। न च "श्वादीनां सम्प्रसारणे नकारान्तग्रहणम्" इति वार्तिकविरोधात्कथमत्र सम्प्रसारणमिति वाच्यम्। टिलोपस्याभीयासिद्धत्वेन सम्प्रसारणप्राप्तेः।

वस्तुतस्तु 'शुनयति' इत्येव युक्तम्। षपूर्वेतिसूत्रभाष्ये प्रकृतिभावस्य "अल्लोपोऽन" इत्येतद्बाधकतया अप्युक्तत्वेन "नैकाज्" इत्येव सिद्धे प्रकृतिग्रहणेन प्रकृतिभावे कर्तव्ये न्यायाप्रवृत्तिबोधनेन वा येन नाप्राप्तिन्यायस्यात्राप्राप्त्या "नस्तद्धित" इति प्रकृतिभावेन टिलोपस्य दुर्लभत्वात्। तर्हि साच्यण इति न्यासे दोषाभाव इति चेत्, अच्साहित्यं स्वाव्यवहितपूर्ववृत्तित्वसम्बन्धेनेव स्वाव्यवहितोत्तरत्वसम्बन्धेनापि स्यादिति 'मघोन' इत्यसिद्ध्यापत्तेः। "यूनस्तिः" इति निर्देशस्य स्वाव्यवहितपूर्ववृत्तित्वसम्बन्धस्यैव निवेशे तात्पर्यग्राहकत्वाश्रयणे प्रतिपत्तिगौरवम्।

किञ्च 'शुन' इत्यत्र श्वन् शब्दस्यान्तोदात्तस्य सम्प्रसारणे वकारस्य संज्ञनधर्मणोऽनुदात्तोकारे पूर्वरूपे "एकादेश उदात्तेनोदात्त" इत्युदात्तस्योकारस्य श्रवणं भवति। यदि तु साच्कस्य समुदायस्य सम्प्रसारणस्थानित्वमिष्यते तदा समुदायस्योदात्तत्वाभावेन तदादेशस्योदात्तत्वं न स्यात्, किंतु समुदायस्योदात्तत्वाभाववत्त्वरूपानुदात्तत्वेन तत्स्थानिकसम्प्रसारणस्याप्यनुदात्तत्वापत्तिः। साच्यण इतिश्रवणेनानुदात्तत्वोदात्तत्वयुक्तयोर्वकाराकारयोर्योऽन्तरतमः स एव भविष्यतीति स्वरितत्वापत्तिरिति "शुनो दन्त" इत्यस्य "अतः शुन" इति निर्देशस्य वा आद्युदात्तत्वांशे ज्ञापकत्वाश्रयणे तु सुतराङ्गौरवम्।

किञ्च मघवन्शब्दान्मघवानमाचष्ट इत्यर्थे णिचि टिलोपे पूर्ववट्टिलोपस्यासिद्धत्वात् सम्प्रसारणेन वकारस्य उकारे घकाराकारेणाऽऽद्गुणे क्विपि "अमृशसोः" औतोम्शसोः" इत्यात्वे मघाम् मघा इति भवति सम्प्रति तु वकारस्य स्वाव्यवहितपूर्ववृत्तित्वसम्बन्धेनाच्साहित्याभावात्सम्प्रसारणा-

षत्वापत्तेः। तपरकरणम् किम् ? 'गीः करोति'। उपधाग्रहणं व्यर्थम्
'उपधाग्रहणं न करिष्यते इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्यामि'
इति हयवरट्सूत्रभाष्योक्तेः ॥

तिरसो ऽन्य ॥ (पा०सू०८।३।४२) अत्र गतिग्रहणं नानु-
वर्त्तते पराभवे तिरस्कारशब्दप्रयोगात् । अन्तर्धावेव तिरसो गतित्वात्

द्विस्त्रि ॥ (पा०सू०८।३।४३) कृत्वो ऽर्थ इति न विसर्गविशे-
षणं चतुःशब्दे ऽसंभवात् । किं तु द्विरादीनामित्याह-वर्त्तमाना-
नामेषामिति । "इसुसोः" (पा०सू०८।३।४४) इति सूत्रवक्ष्यमाण-
रीत्या 'सुच' इति सूत्रयितुमुचितम् । सुजन्तान्तस्य पदस्येत्यर्थः।
चतुष्कपाल इति । "इदुदुपधस्य" इति नित्यं षः । चतुःशब्दो
ऽव्युत्पन्न इति अप्रत्ययस्येति पर्युदासो न । अत एव "चतुष्पाद्भ्यो
ढञ्" (पा०सू०४।१।१३५) इत्यादिनिर्देशाः सङ्गच्छन्ते । 'चतुष्प्रका-
शात्' इत्यत्रापि षत्वं भवेत्येव ।

न चेदुदुपधस्य सस्य यो विसर्ग इति हयवरट्सूत्रभाष्योक्तेः
कथमत्र षत्वमिति वाच्यम् । विसर्गस्य पाठाभावेनोपधात्वासम्भवा-

---

भावापत्तौ मघवम् मघव इति स्यादित्यपि बोध्यम् । "अभिव्यक्त" इ-
न्यायस्तु पदकार्य एवेति दिक् । *षत्वापत्तेरिति* । तथा च वैयधि-
करण्येन सम्बंधो न युक्त इति भावः । *हयवरट्सूत्रभाष्योक्तेरिति* ।
योगवाहानामविशेषेण पाठ इति पक्षे उपधासंज्ञारूपस्य प्रयोजनस्य खण्ड-
नाय तत्रैवमुक्तम् । *तिरस्कारशब्दस्येति* ।

अनादरः परिभवः परिभावस्तिरस्क्रिया

इति कोशात् । *विसर्गविशेषणमिति* । तस्य प्राधान्यात्तथा प्र-
ज्यते परन्तु लक्ष्यानुरोधाच्छ्रुतत्वाच्च द्विरादीनामेव विशेषणमिति भा-
लाघवसम्भावनयाह-*इसुसोरितिसूत्रवक्ष्यमाणेति* । सुचः प्रत्यय-
त्प्रत्ययग्रहणपरिभाषया सुजन्तस्य पदस्येत्यर्थे "परमद्विष्करोति" इ-
दौ न स्यादतो वक्ष्यमाणरीत्या विशेष्यसत्त्वेऽपि शब्दस्वरूपं विशेष्य-
दाय तदन्तविधौ पुनस्तदन्तस्य पदविशेषणतया सुजन्तान्तस्य पदस्ये-
त्यर्थः स्वीकार्य इति भावः । *अव्युत्पन्न इति* । एवञ्चोणादिषु "
रुरन्" इति पाठोऽयुक्त इति भावः । अत्र मानमाह-*अत एवेति* ।
व्युत्पन्नत्वादेवेत्यर्थः । आदिना "चतुष्पादो गर्भिण्या" इत्यस्य सङ्ग्र-

तत्स्थानिनिमित्तमुपधात्वं ग्राह्यमिति भाष्यतात्पर्यात् । अत एव "समः सुटि" (पा०सू०८।३।५) इति सूत्रभाष्ये "संपुङ्कानाम्" इत्यनेन रुविधिरेवास्त्वित्याशङ्क्य 'पुंस्काम' इत्यत्र षत्वापादनं सङ्गच्छते ।

न च कृत्वोर्थे विद्यमानस्य पदस्येदुदुपधस्य यो विसर्ग इत्यर्थान्न 'पञ्चकृत्वः करोति' इत्यादौ दोषो नापि 'चतुष्करोति' इत्यादावतिव्याप्तिरिति "द्विस्त्रिश्चतुः" इति व्यर्थमिति वाच्यम् । "कृत्वो ऽर्थे" इत्यस्यासिद्धत्वेन चतुःशब्दे "इदुदुपधस्य" (पा०सू०८।३।४१) इति नित्यषत्वापत्तेः । 'प्रकरणे प्रकरणमसिद्धम्' इति पक्षस्तु "उपसर्गादसमासे ऽपि" (पा०सू०८।४।१४) इति सूत्रे कैयटे "पूर्वपदात्" (पा०सू०८।४।३) इति सूत्रे भाष्ये च दूषित एव । "उपसर्गात्" (पा०सू०८।४।१४) इति सूत्रे चोपपादयिष्यते । किं च पूर्वत्रेति पूर्वशब्देन प्रकरणग्रहणे ऽव्यवहितप्रकरणे एव त्रिपाद्यसिद्धत्वं स्यान्न संपूर्णसपादसप्ताध्याय्याम् । किं चास्या-

---

*भाष्यतात्पर्यादिति* । एवञ्च तत्रत्यं सग्रहणं विसर्गस्थान्युपलक्षणमिति भावः । उपलक्षणत्वे भाष्यान्तरं साधकमित्याह—*अत एवेति* । उपलक्षणत्वादेवेत्यर्थः । *षत्वापादनम्* । इदुदुपधेति सूत्रेण । अन्यथा तस्य सस्थानिकत्वाभावाद्भाष्यमनुपपन्नं स्यादिति भावः । अत्र लाघवाभिप्रायेणैव शङ्कते—*न चेति* । पूर्वोक्तसुच इतिन्यासे तदन्तविधिद्वयम्, अस्मिन्यासे तु तथा नेति भावः । *चतुःशब्द इति* । एवञ्चतुष्करोति' 'चतुः करोति' इति रूपद्वयमिष्यते तन्न सिध्येत् । यदा तु "द्विस्त्रिश्चतुः" इति पाठस्तदा चतुश्शब्दोपादानसामर्थ्यान्नासिद्धत्वमिति भावः । नन्वेवं 'सुच' इति सूत्रयितुमुचितमिति पूर्वग्रन्थाविरोधस्तादृशन्यासस्य 'द्विष्करोति' 'त्रिष्करोति' इत्यत्र चरितार्थतया चतुष्करोतीत्यत्रास्यासिद्धत्वान्नित्यषत्वापत्तेः । न च 'द्विष्करोति' 'त्रिष्करोति' इत्यत्र विकल्पस्य "इसुसोः" इत्यनेनैव सिद्धौ सुच्सूत्रं चतुष्करोतीत्यत्रैव विकल्पार्थमित्यारम्भसामर्थ्यादसिद्धत्वन्न भविष्यतीति वाच्यम् । 'देवदत्तः पचतु द्विः करोति यज्ञदत्तः पाकम्' इत्याद्यर्थमस्यावश्यकत्वात् ।

न च "सुच" इति सूत्रानन्तरं र इति पठनीयम् । "सुच" इत्यस्य तत्रानुवृत्तिः कार्या । वर्णग्रहणे तदन्तग्रहणमिति पूर्वोक्तरीत्या सुजन्तं सुजन्तान्तं च यत्पदं रेफान्तञ्च तदवयवस्य विसर्गस्य वा षत्वमित्यर्थान्न पूर्वोक्तस्थले नित्यषत्वापत्तिरिति वाच्यम्, सूत्रान्तरकरणे पदलाघवस-

धिकारत्त्वात्प्रतिसूत्रमुपस्थितत्या प्रतियोगमसिद्धत्वं दुर्वारमित्यन्यत्र विस्तरः।

इणुसोः (पा०सू०८।३।४४) अत्रेसुसोः प्रातिपदिकावयवयो ग्रहणमिति पाठः(१)। तेन 'पेचुः काष्ठैः' 'सख्युः पाक' इत्यादौ षत्वं न। "नित्यं समास" (पा०सू०८।३।४५) इति सूत्रोदाहरणे समासविषे तयोरेव संभवेनार्थाधिकारानुरोधात्साहचर्याच्च इसुसन्तपदावयवा सर्गस्येत्यर्थः। पदस्येत्याधिकारात्। न च प्रत्ययग्रहणपरिभाषा 'परमसर्पिष्करोति' इत्यादौ षत्वानापत्तिरवयवस्येसुसन्तत्वे ऽपि "उत्तरपदत्वे च" इति निषेधेनापदत्वादिति वाच्यम्। "अनुत्तरपदस्थस्य" इति निषेधेन क्वचिदुपात्तविशेष्यसत्वे ऽपि शब्दरूपं वि

---

म्भवेऽपि सुच्पदे स्वरितत्वकल्पनेन पृथग्वाक्यार्थकल्पनेन च ज्ञानगौ वस्य स्पष्टत्वादिति चेन्न, "इणः ष" इतिसूत्रानन्तरं सुच इति पठनी मित्यभिप्रायात्। ष इति 'वाशरि'इत्यतो वेति चानुवर्तते सुजन्ते इका कारोकारोपधत्वस्यैव सम्भवादिण इति नापेक्ष्यते। यदि वाशब्दस्य मण्डू प्लुत्याऽनुवृत्तौ क्लेश इत्युच्यते तदा स्वस्थान एव सुच इति सूत्रानन्तरं इत्येव पठनीयम्। अथ वा त्रयाणामेकशेषेण सुचामिति पठनीयमित्यपवा त्वासिद्धत्वन्न प्रसञ्जनीयमित्यभिप्रायादिति दिक्।

*अन्यत्र विस्तरः*। भाष्यादौ विस्तरः। तदुक्तम्भाष्ये। 'अधिका प्रतियोगन्तस्यानिर्देशार्थ' इति। 'योगेयोगे उपतिष्ठते' इति। तथा सु इत्येव सूत्रमस्तु। चतुः शब्दे नित्यषत्वापत्तिस्तु न। अस्मिन् सूत्रे इ दुपधेत्यतो योभयोरनुवृत्तिस्तत्रेदुपधेत्यस्य चारितार्थ्येऽप्युदुपधांशे चा तार्थ्याभावादसिद्धत्वापत्तिर्नेति। एतेन यत्सुच इति न्यासे प्रत्ययग्रह परिभाषायां यस्तदन्तांशः सोऽपि येन विधिरिति सूत्रबोधित एवेति दिश्यमानपरिभाषया निर्दिश्यमानसुच एव षत्वं स्यान्न तु तदन्तस्य चतुष्करोतीत्यस्यासिद्धिदूषणन्तदपि निरस्तम्। उदुपधत्वांशे विधा सामर्थ्येन निर्दिश्यमानपरिभाषाया अप्रवृत्तेरिति। अपि च "कृत्वोर्थे" न्यासपक्षेऽपि उदुपधेत्यस्यांशस्य चारितार्थ्यविरहेणासिद्धत्वस्य परिहा कर्तुं शक्य इति द्रष्टव्यम्।

यदुक्तम्प्रातिपदिकावयव इति तत्र मानमाह—*नित्यं समास इ

---

(१) अत्र सूत्रे उस औपदेशिकप्रत्ययावयवाभिन्नस्य लाभेन 'इस्' अपि प्रत्ययावयवाभिन्नो तेन कविभिः कृत मित्यादौ न दोषः। तथाच तादृशस्य इसः प्रातिपदिकावयवस्यैव लाभेन उस् अपि पदिकावयवो गृह्यते परस्परसाहचर्यात्। तेन 'सख्युः पाकः' 'पेचुः काष्ठम्' इत्यादौ न दोषः।

ष्यमादाय तदन्तविधिज्ञापनेन, शब्दरूपं विशेष्यमादाय प्रत्ययग्रहण-परिभाषया लब्धतदन्तार्थकस्य पदविशेषणतयेसुसन्तान्तस्येत्यर्थेना-दोषात्(१)। अत एव "वनोरच" (पा०सू०४।१।७) इत्यादौ न दोषः।

'ब्राह्मणस्य सर्पिष्करोति' इत्यादौ सापेक्षत्वेनासामर्थ्यं नाश-ङ्क्यं, तस्यैकार्थीभावसामर्थ्यविषयत्वात् । "अधात्वभिहितं समा-नाधिकरणमसमर्थवत्" इत्युक्तेः 'सर्पिःकालकम्' इत्यादौ न षत्वम्। अधात्वभिहितमित्युक्तेः 'सर्पिष्पीयते' इत्यत्र षत्वसिद्धिः । धातुस-हचरितप्रत्ययाभिहितार्थेन समाधिकरणमसमर्थवन्नेति तदर्थः।

यदा तु सर्पिरादिकमव्युत्पन्नं प्रातिपदिकं 'पाणिनेरुणादि-ष्वव्युत्पत्तिपक्ष एव' इति "आयनेयीनी" (पा०सू०७।१।२) इति सूत्रे भाष्ये स्पष्टमुक्तेः। तत्र हि 'शङ्ख' इत्यादावादेशानाशङ्क्य 'उणा-दीनां प्रतिषेधो वक्तव्यः' प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धम्' इत्युक्तम् "अयामन्ताल्वाय्येत्न्विष्णुषु" (पा०सू०६।४।५५) इति सूत्रे पाणिनेर्व्युत्पत्तिपक्षस्यापि स्वीकार इत्यस्य गमकम्। व्या-करणान्तररीत्यैव वा तत्सूत्रं, "सर्वनामस्थानम्" इति महासञ्ज्ञा-वत्। अत एव भाष्ये "उणादयोऽव्युत्पन्नानि" इत्येवोक्तम्। न तु 'अने-कार्था अपि धातव' इतिवदव्युत्पन्नानीत्यप्युक्तं, तदा "इदुदुपधस्य" इति

---

ति*। *अत एवेति*। तदन्तविधिद्वयसिद्ध्यर्थमुपात्तविशेष्यसत्त्वेऽपि शब्दस्वरूपं विशेष्यमादायादौ तदन्तविधिस्वीकारादेवेत्यर्थः। अत्र 'द्वि-सर्पिःप्रिय' इत्येतद्व्यावर्त्तकतयाऽनुत्तरपदस्थस्येत्यस्य चारितार्थ्यं सम्भव-तीति शङ्का यद्यपि भवति, तथापि भाष्योक्तस्य 'परमसर्पिःकुण्डिका' इत्यस्योपपत्तिस्तदन्तविधिद्वयं विना न भवतीत्यभिप्रायः। *तस्यैका-र्थीभावसामर्थ्येति*। स्पष्टश्चेदम्भाष्ये। *अधात्वभिहितमिति*। सम-र्थसूत्रभाष्य एव स्पष्टम्। ननु 'सर्पिष्पीयत' इत्यत्र कर्मणो न धात्वभिहि-तत्वमत आह-*धातुसहचरितेति*। तथा च धातुपदस्य धातुसहचरिते

---

(१) न च अशब्देन साकं 'अरुस्' 'अर्चिस्' शब्दे समस्यमाने 'अरुः करोति' 'अर्चिः करोति' इत्यादौ पूर्वान्तवद्भावेन इसुसान्ततदादित्वं परादिवद्भावेन चोत्तरपदत्वमाश्रीय षत्वं न स्यात् इति चेत्, उत्तरपदेन पूर्वपदाक्षेपात् तत्रस्थे पूर्वपदाद्युत्तरपदे षत्वं न। अत्र च नान्तादिवद्भावप्रवृत्तिः, व्यपवर्गधर्मे तस्याप्रवृत्तिस्वीकारादिति भावः।

नित्ये षत्वे प्राप्ते ऽनेन विकल्प इति प्रत्ययग्रहणाभावात्तत्परिभाषानुपस्थितेः 'परमसर्पिष्करोति' इत्यादौ षत्वविकल्पः सिद्धः। "नित्यं समासे" इति सूत्रम् "अनुत्तरपदस्थस्य" इति प्रतिषेधार्थम्। नित्यग्रहणं तु न कर्त्तव्यमेव। समासे नित्यषत्वस्य इदुदुपधस्येत्येव सिद्धेः। 'सार्पिषा' इत्यादौ षत्वं त्वत्र पक्षे क्वचिदन्यत्रेत्यर्थकाद् बहुलग्रहणादिति स्पष्टं भाष्ये।

व्यपेक्षेति। व्याख्यानात् एकार्थीभावसामर्थ्यग्रहणे 'परमसर्पिः कुण्डिका' इत्यादौ समासे विकल्पापत्तिः। अनुत्तरपदस्थस्येति निषेधादुत्तरसूत्रस्य न प्रवृत्तिरिति भावः। नन्वनेनैव सिद्धे कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठो व्यर्थ इत्यत आह—कस्कादिष्विति। एतेन तत्सामर्थ्यादुत्तरपदस्थस्यापि षत्वमित्यपास्तम्। व्यपेक्षाविरहे ऽपीति। 'आनय सर्पिः कुण्डिका तिष्ठति' इत्यादौ। व्यपेक्षायामिति। 'इदं सर्पिष्कुण्डिकाया' इत्यत्र। प्रत्ययभिन्नविसर्गस्येत्यर्थम् 'इदुदुपधस्य' इत्यत्र व्याचक्षाणानां व्याख्यादर्शकृतां मते ऽव्यपेक्षयां तेन सिद्धेरिति भावः। एतेन कस्कादिपाठस्याव्यपेक्षायां चारितार्थ्येन व्यपेक्षायां तस्यासिद्धत्वाद्विकल्प एवोचित इत्यपास्तम्। प्रत्ययसंबन्धिभिन्नविसर्गस्येत्यर्थे तु तदप्राप्तेरेवेति व्यपेक्षायां विकल्प एवेति बोद्ध्यम्।

अतः कृ॥ (पा०सू०८।३।४६) कृशब्देन तदादिग्रहणं समा-

---

लक्षणेति भावः। *अनेन*। इसुसोरित्यनेन। नन्वेवं समासे "इदुदुपध" इत्येत्र सिद्धे "नित्यं समास" इति व्यर्थमत आह—*नित्यं समास इतीति*। *प्रतिषेधार्थमिति*। तथा च 'परमसर्पिःकुण्डिका' इत्येव भवति।

नन्वस्मिन्पक्षे सर्पिषेत्यत्र सकारस्य षत्वं न स्यात् सकारस्यादेशप्रत्ययावयवभिन्नत्वादत आह—*व्याख्यानादिति*। उत्तरसूत्रे समासग्रहणस्य सत्त्वेन तस्यैकार्थीभावविषयकतया "इसुसोः" इति सूत्रे सामर्थ्यस्य व्यपेक्षाविषयकत्वमित्येवंरूपादित्यर्थः। *एतेन*। तत्र चारितार्थ्येन। *तेन*। इदुदुपधेत्यनेन। *एतेन*। व्यपेक्षायांनित्यार्थश्चेति कथनेन। *तस्य*। कस्कादिषु चेत्यस्य। *समासाक्षिप्तेति*। "नित्यं समासे

साक्षिप्तोत्तरपदस्य विशेष्यत्वात् । "विभ्वग्देवयोः" (पा०सू०६।३।९२) इति सूत्रे प्रत्ययग्रहणेन धातोर्विशेषणत्वे तदादिविधिज्ञापनात् । 'अयस्कुम्भी' इत्यादौ लिङ्गविशिष्टपरिभाषया सत्त्वं बोद्धम् । भास्कर इति । तपरकरणात् "अतः कृ" (पा०सू०८।३।४६) इत्यस्याप्राप्तिः ॥

इति विसर्गसन्धिः ॥

---

## स्वादिसंधिप्रकरणम् ।



यत्तु "स्वौजस्" (पा०सू०४।१।१२) इत्यत्र रुरेव पाठ्यः । सर्वत्र सुग्रहणे रुग्रहणमेवास्त्विति । तन्न । 'यशोऽत्र' इत्यादौ रोरसिद्धत्वादुत्वानापत्तेः । "अतो रोः" (पा०सू०६।१।११३) इत्यस्य प्रथमैकवचने चारितार्थ्यात्, तदुच्चनयन्नाह—स्वौजसेति । पदस्येत्यनुवृत्तं ससजुर्भ्यां विशेष्यते, तेन तदन्तविधिः । आदेशस्त्वलोऽन्त्यस्येत्यस्य तत्फलितमाह—पदान्तस्येत्यादिना । 'सजूः' इत्यत्र व्यपदेशिवद्भावेन सिद्धिः । "व्यपदेशिवद्भावो ऽप्रातिपदिकेन" "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न" इति परिभाषाद्वयं प्रत्य-

---

इति सूत्रात्समासग्रहणानुवृत्तेः । ननु समासाक्षिप्तोत्तरपदस्योपस्थितत्वात्कुम्भादिरूपस्यैव ग्रहणं स्यादिति 'अयस्कुम्भी' इत्यत्र न स्यादत आह—*लिङ्गविशिष्टेति* ।

॥ इति विसर्गसन्धिः ॥



लाघवमूलकम्प्राचां व्याख्यानन्दूषयति—*यत्त्विति* । न च "ससजुष" इति सूत्रस्यान्यार्थमावश्यकतया प्रकृते सकारस्य रेफस्य वोच्चारणे को विशेष इति वाच्यम् । प्रक्रियालाघवसत्त्वात् । *प्रथमैकवचन इति* । न चैवं सति "ससजुष" इतिसूत्रविधेयरुशब्दे उकारोच्चारणं व्यर्थमिति वाच्यम् । "भोभगो" इति सूत्रे उभयोर्ग्रहणसम्पादनेन चारितार्थ्यात् । न च यदि रोरसिद्धत्वन्तदा 'एहि सम्रोता' इत्यादौ रुत्वस्यासिद्धत्वादुत्वन्नैव प्राप्नोतीत्यप्लुतग्रहणसामर्थ्यादासिद्धत्वबाध इति वाच्यम् ।

यविधिविषयमिति "असमासे निष्कादिभ्य" (पा०सू०५।१।२०) इत्यत्र भाष्ये स्पष्टम् । इदञ्जश्त्वापवादः । 'श्रेयान्' इत्यादौ रुत्वस्या-सिद्धत्वात्संयोगान्तलोप एवेति दिक् ।

यत्वस्यापवाद इति । यदीदं न स्यात्तर्हि यत्वं प्राप्नोती-त्येतावता । कृते त्वस्मिन् यत्वस्यासिद्धत्वादुत्वगुणयोर्यत्वाप्राप्ति-रेवेति भावः ।

प्रथमयोः (पा०सू०६।१।१०२) व्याख्यानात् प्रथमयोरित्यनेन प्रथमाद्वितीयारूपसुब्विभक्त्योर्ग्रहणं तदाह–प्रथमाद्वितीययोरिति। पूर्वग्रहणं किम् ? 'अग्नी' इत्यत्र पक्षे परसवर्णो मा भूदिति । दीर्घ-ग्रहणं तु त्रिमात्रस्य स्थानिनस्त्रिमात्रो मा भूदिति । सवर्णग्रहणं तु स्पष्टार्थम् । पूर्वस्यादीर्घत्वात्पूर्वजातीय इत्यर्थेनेष्टसिद्धेरिति स्पष्टं

---

'देवदत्त ३ गतो ग्रामान् किम्' इत्यादावनन्त्यस्यापीति प्लुतविषये त-स्य चारितार्थ्यात् ।

*प्रत्ययविधिविषयमिति* । ज्ञापकस्य सजातीयापेक्षत्वात् । *जश्-त्वापवाद इति* । सस्य स्थाने प्राप्तस्य जश्त्वस्य निरवकाशत्वेन स-जुष्शब्दविषये येन नाप्राप्तिन्यायेन च प्राप्तस्य जश्त्वस्य च बाधक इत्य-र्थः । ननु उत्वदृष्ट्या यत्वस्यासिद्धत्वात्तेन येन नाप्राप्तिन्यायाभावाद्य-त्वापवादत्वोक्तिरसङ्गतेत्यत आह—*यदीदमिति* । *इदम्* । उत्व-शास्त्रम् । *कृते त्वस्मिन्* । अस्मिन् सूत्रे । एतेन शास्त्रासिद्धत्वस्यैव सिद्धान्तितत्वादिदमित्याद्यसङ्गतमित्यपास्तम् ।

*व्याख्यानादिति* । अत्र "प्रथमयोः" इत्यनेन न यस्य कस्य वि-ग्रहणं किन्तु "वा सुपि" इत्यतः सुब्ग्रहणानुवृत्तेस्सुब्विभक्त्योरेव, तयो-रपि न प्रथमवचनयोः, अचीत्यधिकारात् "तस्माच्छस" इत्यत्र कृतस्य पूर्वसवर्णदीर्घार्थकतच्छब्दस्य "दीर्घाज्जसि" इति निषेधसूत्रस्य च दर्श-नमूलकादित्यर्थः । *पक्ष इति* । "पूर्वपरयोः" इत्यनेन पूर्वपरयोरुप-स्थितत्वात्पर्यायेण कदाचित्परसवर्णस्यापि प्राप्तिरिति भावः । *त्रिमात्रो माभूदिति* । आन्तरतम्यात्प्राप्त इति भावः । *पूर्वजातीय इति* । तथा च पूर्वस्यादीर्घत्वात्पूर्वशब्दस्य लक्षणया पूर्वजातीयबोधकता भविष्यतीति भावः । न च यत्र पूर्वो दीर्घस्तत्रास्य चारितार्थ्यात्का लक्षणेति वाच्यम् । "दीर्घाज्जसि" इति च निषेधादप्रवृत्तेरिष्टतया य-पूर्व आकारः परश्शस् तत्र सवर्णदीर्घस्यैव प्राप्त्येष्टस्य सिद्धेर्दीर्घकार-

भाष्ये । अदुगुण इति । "तौ सत्" (पा०सू०३।२।१२७) इति निर्देशेन भ्रष्टावसरन्यायस्यात्र शास्त्रेऽनाश्रयणादिति भावः ।

देवदत्तहन्तृहतन्यायस्य तु नात्र प्रवृत्तिः । देवदत्तहन्तृहनने हि नोज्जीवनं देवदत्तहननप्रसक्तहनने त्वस्त्येव देवदत्तजीवनं, प्रकृते तु न हननस्थानीया वृद्धिर्हन्तुः पूर्वसवर्णदीर्घस्य लक्ष्ये प्रवृत्तिः, किं तु हननोत्तमसजातीयं प्रसक्तिमात्रं, प्रसक्तस्य निषेधे बाध्योज्जीवने न बाधकमिति स्पष्टं चेदं "स्वादिष्व"(पा०सू०१।४।१७) इति सूत्रे कैयटे ।

सुस्रोत इति । सुस्रोतस्शब्दः कस्य चित्सञ्ज्ञा, सम्बुद्धौ "दूराद्धूते च" (पा०सू०१ २।८४) इति प्लुतः । तत्सामर्थ्यादिति । प्रतियोगित्वेन तदाश्रयणसामर्थ्यादित्यर्थः ।। 'आश्रयात्सिद्धे' इति भाष्योक्तेः । पयस्यटति पयो ददातीत्यर्थे 'आगच्छ हे पयो३ट्' 'आगच्छ पयो३द्' इत्यादावेकपदस्थवर्णद्वयसापेक्षमन्तरङ्गमुत्वं प्रति वाक्यसम्पादकपदान्तरसापेक्षप्लुतस्यासिद्धत्वादुत्वे प्लुतासिद्धिः । अन्यथा प्लुतस्योत्वदृष्ट्या सिद्धत्वात् प्लुते आद्ये ऽप्लुतपरत्वाभावादन्त्ये ऽप्लुतात्परत्वाभावादुत्वं न स्यात् । परिभाषादृष्ट्या बहिरङ्गासिद्धत्वेऽपि न क्षतिः, स्वदृष्ट्या ऽसिद्धस्या-

---

देशासि प्रवृत्तिरस्य वाच्या तथा चास्याल्पविषयत्वापत्तिरतो लक्षणाया आवश्यकत्वात् । ऋकारलृकरयोः सवर्णविधिरित्यनेन समानजातीयत्वमेवातिदिश्यत इति गमॄनित्यादौ नानुपपत्तिः । ननु वृद्धिप्राप्तिकालोत्तरकालिकप्राप्तिकर्तृपूर्वसवर्णदीर्घस्य "नादिचि" इत्यनेन निषेधे भ्रष्टावसरन्यायेन "वृद्धिरेचि" इति वृद्धिर्न स्यादत आह—*भ्रष्टावसरेति* ।

*सुस्रोतस्शब्द इति* । एतेनैतदकारान्तस्य रूपमिति कस्य चित्प्रलपितमपास्तम् । ननु "अतो रोर" इतिसूत्रेऽप्लुतस्य निमित्तत्वेनाश्रयणन्न तु प्लुतस्येति तत्सामर्थ्यादित्यसङ्गतमत आह-प्रतियोगित्वेनेति* । ननु यदि सामर्थ्यादुत्वदृष्ट्या प्लुतस्य सिद्धत्वन्तदा वक्ष्यमाणरीत्या उत्वन्नस्यादित्यत आह-*पयस्यटतीति* । अटतेः क्विब् आद्ये । *पयो ददातीति* । दाधातोः 'आतोऽनुपसर्गे' इति कः । प्रतियोगित्वेन प्लुतस्याश्रयणात्पूर्वत्रासिद्धत्वमेव बोध्यते न त्वन्तरङ्गपरिभाषया बोध्यस्यासिद्धत्वस्य बाधो मानाभावात् । ननु परिभाषायाः षाष्ठीत्वादेतद्दृष्ट्या प्लुतस्यासिद्धत्वात् कथं बहिरङ्गपरिभाषाप्राप्तिरत आह—*परिभाषेति* । *स्वदृष्ट्याऽविद्यमानस्येति* । अ-

पि परं प्रत्यसिद्धत्वप्रतिपादनसंभवात् । इत्यदृष्ट्या ऽविद्यमानस्य परं प्रत्यविद्यमानत्वप्रतिपादनवत् । अन्तरङ्गस्यासिद्धत्वे तु प्रतिपाद्याभावे कं प्रत्यासिद्धत्वं प्रतिपाद्येत । तत्राद्ये "वाक्यस्य टेः" (पा०सू०८।२।८२) इत्यट्शब्दाकारः प्लुतः, अन्ते रेफदकारसंयोगपरत्वेनाकारस्य गुरुत्वात् "गुरोः" (पा०सू० ८।२।८६) इति प्लुतः । आश्रयेण तु येन नाप्राप्तिन्यायेन प्रत्यक्षत्वेन च पूर्वत्रासिद्धत्वमेव बाध्यते न त्विदम् । सुस्रोता इत्यादौ त्वेकवाक्यमात्रसापेक्षत्वात् प्लुतो ऽन्तरङ्गो, भिन्नवाक्यस्थाकारसापेक्षत्वादुत्वं बहिरङ्गमिति स्पष्टं भाष्ये । उकारानु

---

यश्च न्यायो लोके प्रसिद्धः ।

नन्वेवं त्रिपाद्यामन्तरङ्गपरिभाषाया अप्रवृत्तिरिति सिद्धान्तविरोध इत्यत आह*—अन्तरङ्गस्यासिद्धत्वे त्विति* । *प्रतिपाद्याभाव इति* यथा ययोः शास्त्रयोरन्तरङ्गबहिरङ्गभावविचारस्तत्र द्वयोरप्यन्तरङ्गत्वे बहिरङ्गत्वे वा परिभाषाया अप्रवृत्तिस्तथाऽन्तरङ्गस्य त्रैपादिकत्वे तन्निरूपितबहिरङ्गत्वस्य पूर्वशास्त्रे प्रतिपादनासम्भवादिति भावः । पूर्वोक्तप्रयोगयोर्येन शास्त्रेण प्लुतस्तदाह—*तत्राद्य इति* । तयोर्मध्य इत्यर्थः । अ "दूराद्धूत" इत्यनेन प्लुतः । ननु प्रतियोगित्वेनाश्रयणसामर्थ्यादुभयाधासिद्धत्वस्य बाधोऽस्त्वित्यत आह—*आश्रयेण त्विति* । *प्रत्यक्षत्वेचेति* । एतेन पूर्वत्रासिद्धत्वस्य शीघ्रोपस्थितिकत्वात्तद्बाधेनोपपत्तिविलम्बोपस्थितिकस्यानुमानिकासिद्धत्वस्य बाधे मानाभाव इतिभावः ।

*स्पष्टम्भाष्य इति* । "अतो रोरप्लुतादप्लुत" इति सूत्र इत्यर्थः । के चित्तु, एतेन "प्लुतप्रगृह्या" इति सूत्रे प्लुतस्य सिद्धत्वज्ञापनद्वारा एकादेशात् प्लुते विप्रतिषेधात्कृते प्रकृतिभावः । "देवदत्ता ३ अत्र न्वमसि" इति भाष्योक्तिः प्लुतस्यैकपदाश्रयत्वादन्तरङ्गत्वादेकादेशस्य तु पदद्वयापेक्षत्वाद्बहिरङ्गत्वाच्चिन्त्यतोक्तौ प्लुतस्यापि वाक्यत्वसम्पादकपदान्तरसापेक्षतया एकादेशसमत्वाच्चिन्त्यमेव चिन्त्यमिति विवरणोक्तिः प्रयुक्तवाक्यस्य टेः प्लुतार्थं 'देवदत्ता ३' इत्यस्यादौ एहीति शेषपूरणस्यावश्यकत्वात् वाक्यद्वयसापेक्षैकादेशस्यैवमपि बहिरङ्गत्वादित्याहुः ।

तत्र शेषपूरण इत्यसङ्गतम् । अन्ते पूरणे एव शेषपूरणव्यवहारात् वाक्यसापेक्षैकादेशस्येत्यपि चिन्त्यम् । वस्तुतो वाक्यद्वयसापेक्षत्वं तत्र यववर्णद्वयसापेक्षतया यद्यप्यस्ति तथापि वाक्येन वाक्यद्वयापेक्षायाम् नाभावः । प्लुतस्य यादृशसमुदायसापेक्षत्वन्तादृशसमुदायस्य शब्दतो

बन्धेति । उकारेत्सञ्ज्ञकरेफस्येत्यर्थ इति भावः । तेन 'देव रुहि' इत्यादौ न दोषः ।

भोभगो ॥ (पा०सू०८।३।१७) "रोः सुपि" (पा०सू० ८।३।१६) इत्यतो रोरिति वर्त्तते, न तु 'रोरि' (पा०सू०८। ३।१४) इत्यतो र इति 'प्रातरत्र' इत्यादावतिप्रसङ्गात् । अशब्दान्त-द्वन्द्वेन पूर्वशब्दस्य बहुव्रीहिमभिप्रेत्याह–एतत्पूर्वस्येति । नन्वेवं पूर्वरूपापत्तिरत आह–असन्धिरिति । भगोअघोशब्दौकारयोर-काराभ्यां प्राप्तपूर्वरूपात्मकसन्धिकार्याभाव इत्यर्थः । इदं प्राचामनुरोधेन ।

वस्तुतः सूत्रे रान्तानामेवानुकरणमसन्धिर्यादय एवेति बोद्धव्यम् । न त्वयमिति । इदमर्वाचामनुसारेण । भाष्ये तु रेफस्य विसर्ग-स्थानित्वेन तद्वृत्तिरुत्वाश्रयमपीदमलिवधिरेव । स्थान्यलवृत्तिधर्मा-श्रयत्वात् । 'अग्रहीत्' इत्यत्र च दीर्घे लोपे च इट्त्वेनैव निवेश इति विशेषः । अतः 'पयःसु' इत्यादौ दोषः । तत्र हि "रोः सुपि" (पा०सू० ८।३।१६) इति विसर्गः । नियमशास्त्राणि च विधायकान्येव वाच्य-वृत्त्या, आर्थिकार्थमादाय तु निषेधकानीति, तत्रापि रो रेफस्य विसर्ग इत्यर्थे रुग्रहणं व्यर्थमित्युक्तम् ।

---

क्षाया एकादेशस्य विरहादेकादेशस्यैवान्तरङ्गत्वात् । यद्येवं 'देवदत्ता ३ अत्र त्वमसि' इतिवाक्यस्य का गतिरिति चेत् । अत्र केचित् । एतादृशे वि-षये द्वयोर्वाक्ययोः संस्कृतयोरयम्प्रयोग, एवञ्च प्लुतस्य प्रकृतिभाव इति । अपरे तु वस्तुतो वाक्यद्वयावयवसापेक्षैकादेशस्यापि प्लुतसमत्वान्नात्र बहिरङ्गपरिभाषाया विषयत्वमिति सङ्गिरन्ते । यदि त्वेकादेशस्य वर्णमा-त्रापेक्षयामन्तरङ्गत्वं तदा सपादसप्ताध्यायीस्थेऽप्यन्तरङ्गे लक्ष्यानुरोधाद-नित्यत्वेन बहिरङ्गपरिभाषाया अप्रवृत्तिरिति दिक् ।

उकारानुबन्धग्रहणादित्यस्योकारस्यानुबन्धस्य स्थानित्वेन ग्रहणमि-मत्यर्थस्य प्रकृते न सम्भवः । उकारस्येत्संज्ञालोपाभ्यामपहारात् किन्तु बहुव्रीहिमभिप्रेत्याह—*उकारेत्संज्ञकेति* । आदिना तरुमूलमित्यस्य सङ्ग्रहः । *अकारान्तद्वन्द्वेनेति* । न चैवमकारस्य पूर्वनिपातापत्तिरिति वाच्यम् । पूर्वनिपातप्रकरणस्यानित्यत्वात् । *भाष्येत्विति* । स्थानिव-त्सूत्रव्याख्यावसरे यदत्र वक्तव्यन्तदुक्तम् । *वाच्यवृत्त्येति । वाच्यनिष्ठा

नन्वेवं 'हे राम' इत्यादौ संबुद्ध्यवयवस्य हलः सस्य लोपे तद्वृत्तिसुप्त्वस्यालूधर्मत्वेन स्थानिवत्त्वाभावे पदत्वासिद्धिरिति चेन्न। आनुमानिकादेशस्य(१) रामेत्यस्य स्थानिवद्भावेन सुबन्तत्वस्य तत्प्रयुक्तकार्यस्य वा लाभेन तत्सिद्धेः। प्रत्ययलक्षणेनापि (२)न प्रत्ययवृत्तिधर्मलाभः। लक्षणपदोपादानेन प्रत्ययनिमित्तककार्यस्य तन्निमित्तकव्यवहारस्य वातिदेशात्। एवं 'दीर्घाहो निदाघ' इत्यादौ

---

या वृत्तिः शक्तिस्तया नियमशास्त्रघटकशब्दोऽर्थबोधक इत्यर्थः।

ननु यदि प्राचोक्तरीत्याऽसाधारण्यनिवेशस्तदा 'हे राम' इत्यादौ पदत्वासिद्धिरित्याशङ्कते—*नन्वेवमिति*। पदत्वाभावे सति 'हे राम पाहि माम्' इत्यादौ निघातो न स्यादिति भावः। *लक्षणपदोपादानेनेति*। "प्रत्ययलोपे प्रत्ययवत्" इति न्यासेन सिद्धे लक्षणपदोपादानेनैतादृशार्थलाभः। *प्रत्ययनिमित्तककार्यस्येति*। अस्य प्रकृतिसम्बन्धिन इत्यादिः अत एव 'नखभिन्न' इत्यादौ नैत्वादिः। न चैवमपि स्थानिवद्भावेनैत्वादेः कस्मान्न भवतीति वाच्यम्, "अचः परस्मिन् पूर्वविधौ" इति सूत्रे पूर्वविधिशब्दे पूर्वशब्दोत्तरं स्वशब्दाश्रयणेन भावरूपस्य कार्यस्य चिकीर्षायामभावात्मकादेशस्थानिनः स्थानिवत्पदघटकस्थानिपदेनाग्रहणबोधनात्। *तन्निमित्तकव्यवहारस्येति*। प्रकृतिनिष्ठप्रत्ययपरत्वव्यवहारस्येत्यर्थः एतेन श्रूयमाणप्रत्ययान्ते यो व्यवहारस्तस्य सर्वत्र स्थानिवत्सूत्रेणैः सिद्धिरिति सूचितम्। कार्यातिदेशस्य फलमाह—*एवमिति*। प्रथम

---

(१) आनुमानिकस्थान्यादेशेति। रामर् इत्यत्रापि रेफान्तस्य स्थाने विसर्गान्त आदेश इति भावः

(२) ननु स्थानिवद्भावेन सुबन्तत्वलाभ इत्ययुक्तम्। नियमशास्त्राणां विधिमुखेन प्रवृत्तिरिति शेखरकारैः पूर्वमुक्तत्वेन प्रत्ययलक्षणेनैव सुबन्तत्वस्य वक्तुमुचितमिति तटस्थस्य शङ्कां परिहरति—प्रत्ययलक्षणेनापीति।

केचित्तु। इममेव ग्रन्थं वार्तिककारमतमनुसृत्य प्रवर्तते इति योजयन्ति। तथा हि—वार्तिककारमते प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वेन वर्णाश्रये नास्ति प्रत्ययलक्षणमिति परिभाषायाः—

वर्णत्वव्याप्यधर्मघटितधर्मावच्छिन्ना प्रत्ययनिष्ठविशेष्यतानिरूपितप्रकारत्वासमानाधिकरणा निमित्तता तादृशनिमित्तताके कार्ये प्रत्ययलक्षणं न भवतीत्यर्थेन तन्मते प्रत्ययलक्षणसूत्रेण सिद्धिमस्य निराकरोति—प्रत्ययलक्षणेनापीति।

निरुक्त परिभाषार्थघटकनिमित्ततायां प्रत्ययनिष्ठविशेष्यतेत्यादिविशेषणदानेन "मित्रशीः' 'अग्' चित्रायां जाता 'चित्रा' इत्यादौ न दोषः। गवे हितं गो हितमित्यादौ त्वानुमानिकस्थान्यादेशभावात् न कुत्रापि दोषः।

उच्छृंखलानुयायिनस्तु यद्यप्ययं ग्रन्थो यथाश्रुतो ऽपि कथंचित् केचित्तुमतरीत्योपपद्येत तथापि ग्रन्थकाराभिप्रेतं हेतुद्वयं स्वरसतो न सङ्गच्छते, अत एवंरीत्या ग्रंथं योजयन्ति। तथाहि—प्रकृते प्रत्ययलक्षणेनापि निर्वाहो भविष्यति यद्यपि लक्षणपदोपादानेन न प्रत्ययवृत्तिधर्मलाभः तथापि प्रत्ययनिमित्तककार्यस्य तन्निमित्तकव्यवहारस्य वा ऽतिदेशात्, इति। तच्च सुधीभि र्विभावनीयमिति कथयन्ति।

हल्ङ्यादिलोपे उक्तरीत्या स्थानिनि जायमानस्य "असुपि" इति रत्वनिषेधस्यादेशे दीर्घाहन्शब्दे ऽतिदेशेन प्रवृत्त्या न रेफ इति दिक्।

तेषां रोरिति । इदञ्च निपातानाख्याय "विभाषा भवत्" इति वार्त्तिकं प्रत्याचक्षाणस्य वृत्तिकृतो मतेन । परे तु तेषामपि रोरि- त्यर्थः । अपिना "विभाषा भवद्भगवदघवतामोचावस्य" इति वार्त्ति- कनिष्पन्नसङ्ग्रहः । एषामन्त्यस्य रुः स्यादवस्य चौकारः संबुद्धाविति तदर्थः । अवग्रहणसामर्थ्यात् "अलोन्त्यस्य" (पा०सू०१।१।५२)इति नेति बोद्धव्यम् । वार्त्तिकनिष्पन्नानां त्रयाणां भोशब्दनिपातस्य चाव- श्यकत्वमन्यत्र स्पष्टमित्याहुः ।

व्योर्लघु ॥ (पा०सू०८।३।१८) यद्यपि वर्णसमाम्नाये यस्य प्राथम्यात् य्वोरित्युचितं तथापि "लोपो व्यो" (पा०सू०६।१।६६)

---

प्रकारेणेत्यर्थः । तथा न केवलं सम्बुद्ध्यन्ते एव स्थानिवत्त्वेन प्रत्ययान्तत्व- बुद्धिः, किन्तु 'राजपुरुष' इत्यादावपि स्थानिवत्त्वेनेति बोध्यम् । *न रेफ इति* । यद्यपि प्रत्ययलक्षणेन सुप्परत्वव्यवहारस्यापि लाभेन तेन सूत्रेण सिद्धिः, तथापि स्थानिवत्सूत्रेण सिद्धिकथनन्नियमार्थत्वाभिप्रायेण । हे रामेत्यादौ तु स्थानिवत्सूत्रेणैव ।

यत्तु वस्तुतस्त्वनपेक्षितार्थसन्निधानस्य तत्तन्निमित्तरूपकार्यव्यवहा- रस्यैव स्थानिवत्सूत्रेणातिदेशात्तथाभूतस्य चात्र सुप्परत्वस्याशास्त्रीयत्वा- दतिदेशाभावाच्चिन्त्यमेतदिति । तन्न । "रोऽसुपि" इति सूत्रस्य वाक्य- भेदेन मूले एव व्याख्यातत्वात् असुपीति पदेन तस्मिन्निति परिभाषैकवा- क्यतया सुबव्यवहितपूर्वात्मकशास्त्रीयधर्मावच्छिन्न एवोद्देश्यतावच्छेदकाव- च्छिन्ने निषेधविधानेन सुबव्यवहितपूर्वत्वस्य स्थानिवद्भावेनातिदेशसम्भ- वात् ।

*वृत्तिकृतो मतेनेति* । निपातानान्निर्देशोत्तरं तेषामित्यनेन निपा- तानामेव बोधनात् । सिद्धान्तमाह—*परे त्विति* । *एषामिति* । "म- तुवसोः" इति सूत्रेऽस्य पाठात्तस्मिन्नलोन्त्यपरिभाषाप्रवृत्तिवदत्रापि तस्याः प्रवृत्तिः । नन्वेवमवांशेऽप्यलोन्त्यपरिभाषाप्रवृत्तिः स्यादत आह—*अवग्र- हणेति* । नानर्थकपरिभाषा तु प्रत्याख्यातैवेति भावः । *अन्यत्रेति* । मनोरमादावित्यर्थः ।

ननु लघुप्रयत्नतर इत्यनुपपन्नम्, घर्त्तिपदार्थस्यान्यपदार्थेन- प्रकर्षेण च युगपदन्वयाविवक्षायाम्परत्वात् तरप् स्यात् ततो बहुव्रीहौ

इति लोपवारणाय सौत्रत्वमाश्रयणीयं स्यादतो व्योरित्युक्तम्। लघु-
तरः प्रयत्नो यस्योच्चारणे स लघुप्रयत्नतरः। अन्यपदार्थसंबन्धेऽपि
वर्त्तिपदार्थप्रकर्षविवक्षया साधुः। प्रयत्ने लघुतरत्वं चैषां शैथिल्य-
जनकत्वमेव। लघूच्चारणाविति। लघुतरोच्चारणावित्यर्थः। द्वि-
सौत्रत्वादेकवचनम्। वकारोदाहरणम् 'असावादित्य' इति वृत्तिः।

ओतो (पा०सू०८।३।२०) 'व्योः' इत्यत्र यकारसाहचर्याद्वका-
रोऽपि धात्ववयव एव। अत्राप्यर्थाधिकारात्तथैव। तेन 'स्मृतोवच्यु'
इत्यादौ न दोषस्तदाह-यस्येति। तादृशवस्यासम्भवादिति भावः।
"भोभगो" इति तु नानुवर्त्तते विच्छेदात्। तद् ध्वनयन्नक्ष्यति
पदान्तस्य किं? तोयमिति। इदं लघुप्रयत्नयोर्न, गार्ग्यश्रुतेस्तदाह-
अलघुप्रयत्नस्येति। पूजार्थमिति। व्याख्यानादिति भावः। ता-
श्च भोसादिपूर्वक एवेत्याशयेनाह-भो अच्युतेति।

---

लघुतरप्रयत्न इति स्यादत आह—*अन्यपदार्थेति*। न च वर्त्तिपदा-
स्यान्यपदार्थविशेषणत्वात्कथम्प्रकर्षयोग इति शङ्क्यम्, 'शुक्लतरः प-
इत्यादौ विशेषणप्रकर्षबोधकस्य तरपो बहुषु दृष्टत्वात्। वार्त्तिककृता-
सूचितमिदम्—"पूर्वपदार्थातिशये आतिशायनिकाद्बहुव्रीहिः सूक्ष्मवस्त्र-
तरार्थं" इति। अत्र बहुव्रीहिरित्यस्य पूर्वविप्रतिषेधेनेति शेषः। लघु-
यत्नतर इति निर्देश एवात्र गमक इति बोध्यम्—*वृत्तिरिति*। भाष्य-
नुक्तत्वमत्रारुचिः।

*यकारसाहचर्यादिति*। ओकारात्परस्य पदान्तस्य धात्ववयवस्य-
स्यासम्भवादिति भावः। *स्मृतोवच्युत इति*। स्मृतः उः शम्भुर्येन
स्मृतोः। स्मृतां वाति गच्छतीति स्मृतोवाः। तमाचक्षाणः स्मृतोव् इति
*तदाहेति*। तदभिप्रेत्याहेत्यर्थः। एवञ्च यकारांश एव स्वरितत्वम्,
वा व्योरित्यनुवर्त्तमानमत्र यकारमात्रतात्पर्यकमिति भावः। *विच्छेदा-
ति*। लोपः शाकल्यस्येत्यत्रास्यानुवृत्तेः। *व्याख्यानादिति*। अत्र भा-
"किमर्थमिदमुच्यते न लोपः। शाकल्यस्येत्येव सिद्धम्"। 'लोपः शाकल्य-
त्येनन पाक्षिकः सिद्ध एव लोपोऽनेनापि गार्ग्यस्य मतेन लोपो नान्यपाणि-
विकल्पेनैव विधेय इति प्रश्न' इति कैयटः। "ओकाराल्लोपवचनमित्य-
र्थम्, । ओकाराल्लोपवचनं क्रियते नित्यार्थोऽयमारम्भ" इत्युक्तम् तद-
नमूलकादित्यर्थः। कैयटोऽपि-'गार्ग्यः स्वस्यां स्मृतावोतो नित्यमेव
स्मरतीति पाणिनिरपि तथैवेच्छति। एवञ्च भो अत्रेति नित्यम्भवं
न तु 'भोयत्रेति' इति। न च स्वस्वमतप्रच्युत्यभावायेदमस्त्विति वाच्य-

भाष्यानुसारिणस्तु भो इत्याद्यनुवृत्तेः 'स्मृतोवृ'त्यादौ न दोषः। तस्याऽनभिधानाच्च । 'अपूर्वस्य'इति तु 'ओत' इत्यनेन विरोधान्न सम्बध्यते "लोपः शाकल्यस्य" (पा०सू०८।७।१९) इत्येव 'भो भगो' इत्याद्यनुवृत्त्या सिद्धे नित्यत्वार्थमिदमित्याहुः ।

उञि च ॥ (पा०सू०८।३।२१) भोइत्यादिपूर्वस्य पूर्वेण सिद्धेराह–अवर्णपूर्वयोरिति । एतदपि नित्यमेव । अत्रापि गार्ग्यग्रहणानुवृत्त्याऽलघुप्रयत्नस्यैव लोपः । एतेन भो इत्यादिपूर्वे लघुप्रयत्नलोपार्थमत्रापि तदनुवृत्तिरित्यपास्तम् । वकारोदाहरणन्तु 'असाउ एकाग्निः, इति वृत्तिः । उत्तरार्थमिति । "ङमो ह्रस्वादचि" (पा० सू०८।३।३२) इत्यर्थमित्यर्थः । एतत्तत्रैव निरूपितम् । "हलि सर्वेषाम्" (पा०सू०८।३।२२) इत्यादौ तु न संबद्ध्यते । व्यवहिते ङम इत्यत्रैव प्रयोजनकथनपरभाष्यप्रामाण्यात् । अत एव 'लिट्त्सु' इत्यादौ धुडादयः । अन्यथा सादौ पदे इत्यर्थान्न स्युः । अत एव 'माभ्याम्' इत्यादौ "हलि सर्वेषाम्" इति लोपसिद्धिरिति दिक् ।

हलि सर्वेषाम् ॥ (पा०सू०८।३।२२) 'भो भगो' इत्याद्यनुवर्त्तते तत्रौ-

---

गार्ग्यशाकल्याभ्यां लोपस्यैव स्मृत्या तद्वाक्येऽन्यग्रहणेन तयोरग्रहणात् ।

*भाष्यानुसारिण इति* । नित्यार्थोऽयमारम्भभाष्यतात्पर्यविद इत्यर्थः । अयम्भावः । "लोपः शाकल्यस्य" इति सूत्रे अवर्णपूर्वस्येति यद्व्याख्यानन्तस्य न 'भोभगो' इति सूत्रादवर्णमात्रानुवृत्त्या सम्भवः । अशब्दस्य द्वन्द्वघटकतया तन्मात्रस्य पूर्वशब्देन समासासम्भवात् । तस्मिन्सूत्रे 'भो भगोअघोअपूर्वस्य' इत्यनुवर्त्तते । तत्र भोभगोअघोअपूर्वत्वे ओतो गार्ग्यस्येत्यनेन नित्येन भवितव्यम् । तस्मादपूर्वस्येति परिशेषसिद्धार्थकथनम् । तादृशस्यैव समुदायस्य "ओत" इति सूत्रेऽप्यनुवृत्तिः । अत एव नित्यार्थत्वकथनमप्यारम्भसामर्थ्यात् साधु सङ्गच्छते । एवञ्च विच्छेदादित्यसङ्गतम् । स्मृतोवित्यादौ च प्राप्तिरेव नेति फलितम् । *तस्यानभिधानादिति* । वृक्षव्शब्द इवेत्यादिः । *वृत्तिरिति* । अत्रापि प्राग्वदेवारुचिः । *अत एवेति* । मण्डूकप्लुतिस्वीकारादेव । अन्यथा "हलि सर्वेषाम्" इत्यत्र पदे इति सप्तम्यन्तानुवृत्तौ हलादौ पद इत्यर्थः स्यात् । एवञ्च 'माभ्याम्' इत्यादौ लोपानापत्तिस्तदाह–*अत एवेति* । मध्येऽसम्बन्धादेवेत्यर्थः ।

कारात्परस्य लघूच्चारणस्यैवानेन लोपः। अलघूच्चारणस्य तु "ओतः" इत्येव सिद्धम्। अपूर्वे तूभयोरपि। न चापूर्वालघुप्रयत्ने अस्यासिद्धत्वात् "लोपः शाकल्यस्य" इति प्राप्नोतीति वाच्यम्। लघुप्रयत्नस्यैवानेन लोपे "व्योः" इति सूत्रेऽचीति करणेन हलि विधानाभावेनैव सिद्धावस्य सूत्रस्य वैयर्थ्यापत्त्या तद्बाधात्। न चालघुप्रयत्नयोरेव लोपः स्यात् व्योरित्यर्थाधिकारादिति वाच्यम्, ऋषिमात्रग्रहणार्थस्य सर्वेषामित्यस्य वैयर्थ्यापत्तेः। विकल्पस्य विच्छिन्नत्वेन नित्यत्वसिद्धेः। अत्र च यकार एवानुवर्त्तते न वकारो वृत्तौ तथैवोक्तेः, फलाभावाद्(१) 'अव्यपरे' इत्यादिनिर्देशाच्च। अन्यथा तत्र सौत्रत्वाद्याश्रयणीयं स्यात्तदाह–लघ्वलघूच्चारणस्येति।

न तु सुपीति। पर्युदासे हि सुप्सदृशे प्रत्यये एव स्यात्, एवं 'अहर्भाति' इत्यत्र न स्यात्। यदि तु सुब्भिन्ने शब्दे स्यात् 'दीर्घाहो निदाघ' इत्यत्रापि स्यात्। सुबन्ते इत्यर्थस्तु न "उत्तमैकाभ्याम्" (पा० सू० ५।४।८०) इत्यादिनिर्देशैः सप्तमीनिर्दि

---

*उभयोरपीति* लघ्वलघूच्चारणयोरपीत्यर्थः। *न चेति*। एवमि त्यस्य शेषः। समाधत्ते—*लघुप्रयत्नस्यैवेति*। परिशेषादेतत्सिद्धम् *हलिविधानाभावेन*। लघुप्रयत्नस्य विधानाभावेनेत्यर्थः। न हलीतिसूत्रं न ऋषिमात्रतात्पर्यकमपि तु नित्यार्थमत आह-*विकल्पस्येति*। *अत्र चेति*। हलीति सूत्रे चेत्यर्थः। *फलाभावादि ति*। वकारानुवृत्तेः फलाभावादित्यर्थः। अस्मिन्नर्थे सौत्रनिर्देशस्य साधकत्वमाह—*अव्यपर इति*। *सौत्रत्वादीति*। आदिना निपातनादिपरिग्रहः। *तदाहेति*—तदेतत्सर्वं हृदि निधायाह। *लघ्वलघूच्चारणस्येति*। अत्र लघ्वलघूच्चारणेति सर्वेषामित्यनेन लभ्यते।

"रोऽसुपि" इत्यत्र यत्प्रसज्यप्रतिषेधपरत्वेन व्याख्यानन्तत्फलमाह *पर्युदासेहीति*। एवञ्च लक्ष्यानुरोधाद्गौरवं युक्तमेव। ननु सुबन्तातिरिक्ते शब्दे परे न पूर्वोक्ताव्याप्त्यतिव्याप्तीति पर्युदास एव लाघवादुचित इत्यत आह-*उत्तमैकेति*। यदि सप्तमीनिर्दिष्टेऽपि तद

---

(१) ननु वृक्षंवातीति वृक्षवा तमाचष्टे इत्यर्थकक्विबन्तात् क्विपि निष्पन्नवृक्षव् शब्दस्याग्रे करोति प्रयोगे 'वृक्षव् करोति' इति रूपे 'अशि' इत्यनुवृत्तिपक्षे लोपाभावरूपं फलं सम्भवति। तथाच वृक्षव् इत्यादौ लोपसम्भवरूपं फलं स्पष्टमिति वाच्यम्, तयोरनभिधानामिति ग्रन्थकाराशयः।

प्रत्यये तदन्तविध्यभावज्ञापनात्। लक्ष्यानुरोधेन क्वचित्प्रत्ययग्रहणे शब्दस्वरूपस्य विशेषणताया एवाश्रयणाच्च। अत एव "रदाभ्यां निष्ठा" (पा०सू०८।२।४२) इत्यादौ न दोषः। अहरहरिति। "नित्यवीप्सयोः" (पा०सू०८।१।४) इति द्वित्वम्। "न लुमता" (पा०सू०१।१।६३) इति निषेधात्सुप्परत्वाभावः।

गतमहो रात्रिरिति। केचित्तु भाष्ये आतिदेशिकस्याहोरात्रस्यैवोदाहरणात् "नलोपः प्रातिपदिकान्तस्य" (पा०सू०८।२।७) इति सूत्रे 'न हि रूपरात्रिरथन्तरेषु रौ रे वा विशेषो ऽस्ति' इत्यत्र भाष्ये प्रायेण रात्रेति पाठाच्चेदृशानामनभिधानमेवाहुः। अनन्यत्वादिति। रात्रिशब्दान्तात् समासादचि समासान्ते "यस्येतिच" इति लोपेऽपि रात्रिशब्दत्वाक्षतेरिति भावः। अनुवादे रेफविशिष्टस्योपादानाद्रेफस्य रेफविधानं व्यर्थमत आह—विसर्गापवाद इति।

ढ्रूलोपे (पा सू० ६।३।१११) नायन्तत्पुरुषोऽनीयरि 'चचा-

---

विधिः स्याद् तदा सुपि चेत्यत्रापि तदापत्तौ दीर्घानापत्तिरिति भावः। प्रत्ययग्रहणपरिभाषायाः प्राप्तिरपि नेत्याह—*लक्ष्यानुरोधेनेति*। *अत एव*। लक्ष्यानुरोधस्वीकारादेव। अन्यथा रदाभ्यां परं यन्निष्ठान्तमित्यर्थापत्त्या 'दृषत्तीर्ण' इत्यत्र धातुतकारस्यापि नत्वापत्तिः। न चात्र "प्रत्ययग्रहणे चापञ्चम्या" इत्यनेन प्रत्ययग्रहणपरिभाषाया निषेधान्न निष्ठान्तमित्यर्थसम्भव इति वाच्यम्। अस्यापि वचनस्येष्टविशेषणविशेष्यभावतात्पर्यग्राहकत्वात्।

*आतिदेशिकस्येति*। अत्र "अहः सर्वैकदेश" इति सूत्रेण रात्रिशब्दान्तद्वन्द्वादच् प्रत्ययः। एकदेशविकृतन्यायेन च रात्रिशब्दत्वम्। ननु 'नचोदाहरणमादरणीयम्' इति अभियुक्तोक्तेरिदमयुक्तमत आह—*नलोपः प्रातिपदिकान्तेतिसूत्र इति*। तत्र हि—'अहः' 'अहोभ्याम्' इत्यत्र रुत्वरत्वयोरसिद्धत्वेन नलोपमाशङ्क्य 'अहन्'इत्यस्यावृत्त्याऽसिद्धत्वस्य वारणं प्रमाणभाष्ये उपन्यस्तम्। 'न हि रूपरात्ररथन्तरेषु रौ रे वा विशेषोऽस्ति' इति। ननु समासान्तस्य रात्रिशब्दविकारत्वाभावादेकदेशविकृतस्येत्यनुपपन्नमत आह—*रात्रिशब्दान्तसमासादिति*। द्वन्द्वादित्यर्थः।

*तत्पुरुष इति*। ढयोर्लोप इति तत्पुरुष इत्यर्थः। *अनीयरीति*। एवं सति करणीयामित्यत्र दीर्घापत्तिः। ननु नात्र रेफस्य त-

र' इत्यादौ च दोषापत्तेः। नापि बहुव्रीहिर्व्यधिकरणत्वादतो णि-जन्तात्कर्मण्युपपदसमास इत्याह-ढरेफावित्यादि। भाष्ये तु व्य-धिकरणबहुव्रीहिरेव दर्शितः। न च 'अजर्घा' इत्यादौ "सिपि धातो" (पा० सू० ८।२।७४) इति रुत्वस्य, 'लीढ' इत्यादौ ढत्वादीनां, 'नि-तूराज्यम्' इत्यादौ संयोगान्तलोपस्यासिद्धत्वात्कथं दीर्घ इति वा-च्यम्। ढग्रहणेन लण्सूत्रे 'अजर्घा' इति भाष्योदाहरणेन च तत्तच्छा-स्त्रकार्यतापन्नपूर्वत्रासिद्धमिति सूत्रस्थपूर्वग्रहणेनैतत्सूत्राग्रहणबोध-नात्। अणः किमिति। अच इत्येव सिद्धमिति प्रश्नः। तृंहू इति पाठे "नकारजावनुस्वारपञ्चमौ" इति वृद्धोक्तेः "अनिदिताम्"(पा० सू० ६।४।२४) इति नलोपे 'तृढ' इति रूपम्। अत्राणूपूर्वेणैव व्या-ख्यानात्।

---

न्मात्रलोपविधायकशब्देन लोप इत्यत आह-*चत्वारेत्यादाविति*। न चात्रापि कथन्तत्त्वमिति वाच्यम्, अभ्यासपदात् तत्तद्धातुसम्बन्धिनं विभिन्नस्याभ्यासस्य प्रतिलक्ष्यं लक्षणोपप्लुवन्यायेन बोधात्तत्वमस्तीत्याश यात्। न चात्र सत्यपि दीर्घे "ह्रस्व" इति सूत्रेण ह्रस्वादेशे रूपसिद्धि रक्षतैवेति वाच्यम्। आङ्गत्वात्पर्जन्यवल्लक्षणन्यायेन ह्रस्वे ततो दीर्घे ल क्ष्ये लक्षणस्येति न्यायेन पुनर्ह्रस्वानापत्तेरिति भावः।

मूलोक्तरीत्या व्याख्याने णिजन्तात्कर्मण्युपपदसमासे वृत्तिद्वयप्र सङ्गाल्लाघवाभिप्रायेणाह—*भाष्ये त्विति*। न च समानाधिकरणा नामेव बहुव्रीहिविधानात् व्यधिकरणबहुव्रीहिरनुपपन्न इति वाच्यम्। "सप्त मीविशेषण" इति सूत्रेण सप्तम्यन्तस्य पूर्वनिपातविधानाल्लिङ्गात् व्यधिक रणबहुव्रीहेरपि साधुत्वज्ञापनात्। *ढग्रहणेनेति*। रग्रहणन्तु न ज्ञाप कम्। 'पुना रमते' इत्यत्र चारितार्थ्यात्। *तत्तच्छास्त्रेति*। "सिपि धातोः" इति शास्त्र "हो ढ" इति शास्त्राभ्यामित्यर्थः। न चैवमपि "सं योगान्तस्य" इति सूत्रस्यासिद्धित्वमपरिहृतमिति वाच्यम्।

नैर्ऋतोरस्यभासम्त सवितू रश्मयो यथा।

इति रामायणप्रयोगदर्शनेन तत्राप्येवमेव कल्पनात्। यत्तु "हल्ङ्याब्" इतिसूत्रे मनोरमायां 'हल्ङ्यापः सोः' इति सूत्रयितुमुचितमित्युक्त्वा शब्दरत्ने सुपदं तिस्योरप्युपलक्षणमन्यथा 'अविभा राज्यम्' इत्यत्र सं योगान्तलोपस्यासिद्धत्वाद्दीर्घत्वन्न स्यादित्युक्तम् इह च दीर्घम्प्रति सि द्धत्वमुच्यते तेन विरोध इति। तन्न। उक्तरामायणप्रयोगेण विभक्त्यव यवमात्रसम्बन्धिसंयोगान्तलोपस्य सिद्धत्वकल्पनात्। *अच इत्येवेति*

विप्रतिषेध ( पा० सू० ७।४।२ ) विप्रतिपूर्वात्कर्मव्यतिहारे वर्तमानात्सेधतेर्घञि परस्परविरोधार्थो विप्रतिषेधशब्दस्तत्र नित्यस्यावश्यकतयान्तरङ्गस्य ज्ञापकादिनाऽपवादस्य वचनप्रामाण्याद्बाधकत्वे स्थिते तद्भिन्नोऽस्य विषय इत्याह—तुल्यबलेति । द्वयोः शास्त्रयोः क चिल्लब्धावकाशयोरेकत्र प्रयोगे युगपदसम्भवि स्वकार्यसमर्पणञ्च सः । तत्र प्रायेणैकस्य कार्यद्वययोगकृतेऽसम्भव एतस्य प्रवृत्तिः । यथा 'वृक्षेभ्य' इति । । तत्र हि दीर्घैत्वयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भवः । क चित्केवलासम्भवेऽपि यथा 'शिष्टात्' इत्यादौ । तत्र हि तातङ्शाभावयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भवः । यद्यपि तातङादेः स्थानिवत्त्वेनास्त्येव तत् । तथापि अतिदेश आदेशप्रवृत्त्युत्तरमेव, न तु तत्प्रवृत्तिकाले, इति युगपदसम्भवोऽस्त्येवेति, परत्वात्तातङि सकृद्गतिन्यायेन न आदेशः । स्पष्टञ्चेदं सर्वं प्रकृतसूत्रे "इको गुणवृद्धी" ( पा० सू० १।१।३ ) "अदसोमात्" ( पा० सू० १।१।१२ ) इत्यादावाकरे । तत्र युगपदुभयोः कार्ययोरसम्भवात्पर्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे नियमार्थमिदम्—परमेवेति । तेन 'तिसृणाम्' इत्यत्र यौगपद्यासम्भवेन परत्वात्तिस्रादेशे पुनः स्थानिवत्त्वेन त्रयादेशो न । तत्पठ्यते "सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव" इति ।

---

"अचश्च" इति परिभाषया लब्धमित्यादिः । *व्याख्यानादिति* । यदि परेण णकारेणाण्ग्रहणं स्यात्तदा हल्रूपाणि फलाभावादच्तात्पर्यकमेवाण्ग्रहणम्भविष्यतीति तदभावेऽप्यचश्चेति परिभाषयैव तत्सिद्धिर्भविष्यतीत्येवंरूपादित्यर्थः ।

*परस्परविरोधेति* । विविधं यद्गमनं तदत्र विवक्षितम्, एवञ्च विरोधलाभ इति भावः । तुल्यबलविरोध इत्येतत्परिशेषसिद्धमित्येतदुपपादयति *तत्र नित्यस्येति* । *समर्पणञ्च स इति* । अत्र चो वाक्यालङ्कारे । यदुक्तम्प्रायेणेति तत्फलमाह—*क चित्केवलेति* न्यायद्वयोपपत्तिमाह—*तत्र युगपदिति* । *तृजादिवदिति* । यथा "ण्वुल्तृचौ" पर्यायेण भवतस्तथा पूर्वपरावपि पर्यायेण भवेताम् । एवञ्च यदा पूर्वशास्त्रप्रवृत्तिस्तदा योऽप्राप्तांशस्तत्पूरणं परेण क्रियते इति नियमः फलितो भवति । पूर्वशास्त्रस्य चैतद्विषयाविषयकत्वं कल्पनीयम् । लौकिकदृष्टान्तेन पुनः प्रसङ्गन्यायमुप-

यद्वा यथा तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये भवतस्तदोभयोर्न करोति यौगपद्यासम्भवात्, तथा शास्त्रयोर्लक्ष्ये प्रेष्ययोः क्व चिल्लक्ष्ये यौगपद्यासम्भवादप्रतिपत्तौ प्राप्तायामिदं परं भवतीति विद्ध्यर्थः। तत्र कृते यदि पूर्वस्यापि निमित्तमस्ति तदा तदपि भवत्येव तत्पठ्यते "पुनः प्रसङ्गविज्ञानात्सिद्धम्" इति। यथा 'भिन्धि' इत्यत्र परत्वात्तातङि पुनर्धिर्भवति। अत्र तातङ्धिभावयोर्युगपदेकस्थानिसम्बन्धस्याङ्गरूपनिमित्तानन्तर्यस्य वा न संभ

पादयति—*यद्वेति*। लक्ष्यप्रेष्ययोः लक्ष्योपकारकत्वादेवं व्यवहारः। *अप्रतिपत्ताविति*। अप्रवृत्तावित्यर्थः। *अत्र कृते*। परस्मिन्कृते। *तातङि इति*। कृत इति शेषः। *पुनर्द्धिरिति*। स्थानिवद्भावेव हित्वात्।

अत्र केचित्। एवं सति "अचश्च" इतिसूत्रस्थभाष्यकैयटविरोधः तथाहि यदि अचश्चेति सूत्रमिको गुणवृद्धी इति सूत्रवदच इत्यस्य षष्ठ्यन्तस्योपस्थापकं तदा 'ऊकालोच्' इतिसूत्रेऽजिति किमर्थमित्याशयेन 'अथ पूर्वस्मिन्योगेऽज्ग्रहणे सति किम्प्रयोजनम्' इति भाष्ये उक्तम्। अत्राज्ग्रहणे सतीति मध्यमणिन्यायेनोभाभ्यां संबध्यते। एवञ्च सत्यज्ग्रहणे पूर्वस्मिन्योगे ज्ग्रहणे किम्प्रयोजनमित्यन्वयः। अज्ग्रहणं संयोगादच्समुदायनिवृत्त्यर्थम्। 'अज्ग्रहणं क्रियते संयोगानिवृत्त्यर्थम्। अच्समुदायनिवृत्त्यर्थञ्च। संयोगानिवृत्त्यर्थन्तावत् 'प्रतक्ष्य' 'प्ररक्ष्य, ह्रस्वस्य पिति कृति तुङ्मा भूत्"। अत्र कैयटः। यथा प्रत्याहारेऽनिर्दिष्टा आकारादयो दीर्घप्लुतसंज्ञे लभन्ते तथा संयोगोऽपि ह्रस्वसंज्ञः स्यादिति तुक्प्रसङ्गः। 'अच्समुदायनिवृत्त्यर्थम्। तितउच्छत्रम्। तितउच्छाया। दीर्घात्पदान्ताद्वेति विभाषा तुङ्माभूत्'। अत्र वैकल्पिके तुकि तदभावे ह्रस्वलक्षणस्तुक्कस्मान्न भवतीत्याशङ्कायाङ् कैयटः' परत्वाद्दीर्घलक्षणे वा तुकि सति सकृद्गतौ विप्रतिषेध इति न्यायाद्ध्रस्वलक्षणः पुनर्नप्रवर्त्तते। चैवं विधे विषये पुनः प्रसङ्गविज्ञानमस्ति। नित्यविरोधात्पूर्वेण परस्य बाधप्रसङ्गात्। यत्र हि पूर्वो विधिः परं न बाधते तत्र पुनः प्रसङ्गविज्ञानं क्व चिदाश्रीयते' इति। यत्र पुनः प्रसंगविज्ञानन्यायेन पूर्वप्रवृत्तौ परशास्त्रप्रवृत्तिवैयर्थ्यप्रसङ्गस्तत्र सकृद्गतिन्याय एव। यत्र परस्मिन्कृते पूर्वप्रवृत्तावपि न परप्रवृत्तिवैयर्थ्यं तत्र पुनः प्रसङ्गन्यायप्रवृत्तिरिति भावः। यथा 'भिन्धकि' इत्यत्र परत्वा द्वौ कृतेऽकच्प्रवृत्तावपि न धिभाववैयर्थ्यमिति पुनः प्रसङ्गन्यायेनाक

इति भाष्ये स्पष्टम्। कार्यं परत्वञ्च परशास्त्रविहितत्वम्। कार्यकालपक्षेऽप्यष्टाध्यायी पाठकृतपरत्वमेव नियामकम्, अत एव "ङमो ह्रस्वात्" (पा०सू०७।३।३२) इत्यादौ त्रिपादीस्थकार्यकालपक्ष एव परिभाषयोः प्रवृत्त्या एकदेशस्थत्वेऽपि परत्वात् "तस्मादित्युत्तरस्य" इत्येनेनैव व्यवस्थेति सङ्गच्छते। त्रिपादीस्थेन शास्त्रेण विरुद्धपरिभाषाद्वयमद्ध्ये परैव काल्यते आकृष्यते न पूर्वेति तत्त्वम्। सञ्ज्ञानां तु कार्यकालपक्षे

---

ज् भवति। एवञ्च सिन्धीत्यत्र तु परत्वात्तातङि कृते यदि पुनः प्रसङ्गविज्ञानन्यायेन धिभावस्तदा तातङ्प्रवृत्तिवैयर्थ्यमेवेति नायम्पुनः प्रसङ्गन्यायविषय इत्याहुः।

अत्रापरे समादधिरे। यथा 'अकृतकारि खल्वपि शास्त्रमग्निवत्'। 'कृतकारि खल्वपि शास्त्रम्पर्जन्यवत्' इति द्वौ न्यायौ लक्ष्यानुरोधाद्व्यवस्थितौ तथेमावपि न्यायौ लक्ष्यानुसारिणावित्याशयेन भिन्धीत्यत्र परस्य तातङः प्रवृत्तेर्वैयर्थ्यप्रसङ्गेऽपि पुनः प्रसङ्गन्यायप्रवृत्तिराश्रिता। न चैवम् 'अचश्च'इतिसूत्रभाष्यविरोध इति वाच्यम्। "ईच द्विवचने" इति सूत्रभाष्यप्रामाण्येन परशास्त्रप्रवृत्त्युत्तरम्पूर्वशास्त्रप्रवृत्तौ परशास्त्रवैयर्थ्याभावेऽपि क्वचित्सकृद्गतिन्यायस्य प्रवृत्तिस्वीकारात्। तत्र यद्यपि 'अक्षी ते इन्द्र पिङ्गले' इत्यत्र परत्वादीकारादेशे पुनर्नुमः प्रवृत्तावपि नेकारप्रवृत्तिविरोधः, तथापि सकृद्गतिन्यायान्न नुमित्युक्तं, भवन्मते तत्र पुनः प्रसङ्गन्यायस्यैव विषयतासत्त्वाद्भाष्यविरोधः स्पष्ट एव। तथा "साक्षात्प्रभृतीनि च" इति सूत्रे भाष्ये उक्तम् "च्व्यन्तस्य प्रतिषेधोवक्तव्यः। लवणीकृत्य। न वा पूर्वेण कृतत्वात्। न वा वक्तव्यम्। किं कारणम्। पूर्वेण कृतत्वात्। अस्त्वनेन विभाषा पूर्वेण नित्या भविष्यति" इति। तत्र कैयटः। 'लवणीकृत्येति। अत्र हि परत्वादनेन विभाषा प्राप्नोति। नित्या च गतिसंज्ञेष्यते। पूर्वेणेति। पुनः प्रसङ्गविज्ञानाद्दति भाव' इत्याह। यदि यत्र पुनः प्रसङ्गविज्ञानन्यायेन पूर्वप्रवृत्तौ परशास्त्रप्रवृत्तिवैयर्थ्यप्रसङ्गस्तत्र सकृद्गतिन्याय एवेति नियमस्वीकारस्तदा पूर्वेण नित्या भविष्यतीति भाष्यविरोधः स्पष्ट एवेति द्वयोरप्युक्तन्यायोर्लक्ष्यानुसारेण प्रवृत्तिकल्पनमेव वरं न नियम इति दिक्।

*अष्टाध्यायीपाठकृतपरत्वमेवेति*। एतेन यथोद्देशपक्षे परिभाषयोः पौर्वापर्यन्न तु कार्यकालतायामिति कैयटोक्तन्न युक्तमिति सूचितम्। तत्र साधकमाह—*अत एवेति*। कार्यकालपक्षेऽप्यष्टाध्यायीपाठकृतपरत्वस्य नियामकत्वादेव। *ङमो ह्रस्वादित्यादाविति*। आदिना "ङः सि" इत्यस्य परिग्रहः। *परिभाषयोः*। तस्मिन्निति तस्मादित्यनयोः।

प्रदेश एव वाक्यार्थेन तद्बोधोत्तरमेव विरोधप्रतिसन्धानं कार्यज्ञानश्च
तत्रत्यपरत्वमेवैतत्सूत्रप्रवृत्तौ बीजम्, अत एव 'कार्यकालपक्षेऽयादि-
भ्यः परैव प्रगृह्यसञ्ज्ञा' इति 'अदसोमात्' इति सूत्रे भाष्ये उक्तम्। परि-
भाषाणां तु तत्पक्षेऽपि स्वस्वदेशेऽर्थबोधोऽस्त्येवेति तासां पाठक्र-
मेव तदेतत्सूत्रप्रवृत्तौ नियामकमिति बोद्धव्यम् ।

यद्यपीयं परिभाषा तथापि कार्यग्रहणेन कार्यमात्रग्रहणात् "
स्मिन्" इति "तस्मात्" इति परिभाषयोरपि व्यवस्थापिका का
कालपक्षेऽपि नैषा इकपरिभाषादिवद्विद्धयेकवाक्यतयाङ्गत्वात्स्वका
निष्पादिका, किं तु वाक्यभेदेनैव कार्यं व्यवस्थापयति। यथा 'वृक्षेभ
इत्यत्रैत्वदीर्घत्वयोः प्राप्तयोः परमेत्वं प्रवर्तयति । एवमसिद्धं बहिर
मित्यादयोऽपीति "खरवसानयो" (पा०सू०८ ३।१५) इत्यत्र कै
स्पष्टम्। एवञ्च "विप्रतिषेध" इत्येषा यथोद्देशैवेति स्थितम्। त्रिपाद्यां
र्यकालपक्षेऽप्यप्रवृत्तेः। पूर्वदृष्ट्या परावस्थानाभावादित्यन्यत्र विस्त

इति लोपे इति। उत्वं नित्यमिति तु न। "भोभगो" (पा०
८।३।१७) इति सूत्रोक्तरीत्या लोपस्याल्विधित्वात् । स्थानिवत्त्वेन
द्धर्मातिदेशेऽपि उच्चारणप्रसङ्गरूपस्थानषष्ठ्यर्थाभावेन लोपे तद्प्राप्ते

---

संज्ञाविषये त्वाह-*संज्ञानान्त्विति* । *विरोधप्रतिसन्धानमिति*। त्रि
थोद्देशे विरोधप्रतिसन्धानन्तद्देशीयपरत्वस्य नियामकत्वादेव । अत्र
माणमाह—*अत एवेति*। यदि संज्ञाविषयेऽप्यष्टाध्यायीपाठक्रमप
न्नियामकं स्यात्तदा प्रगृह्यसंज्ञाया अयादिभ्यः परत्वोक्तिरसंगतैव स्
दिति भावः। नन्वियमेव युक्तिः परिभाषाविषयेऽप्यस्त्वित्यत आह-*त
भाषाणान्त्विति* । *तत्पक्षे* । कार्यकालपक्षे ।

ननु "गुणानाञ्च परार्थत्वात्" इति न्यायेन "विप्रतिषेधे परं कार्यम्"
इति परिभाषायाः परिभाषाविषये नियामकत्वङ्कथमित्यभिप्रायेणाशङ्क
*यद्यपीति*। *कार्यमात्रग्रहणादिति*। कार्यमात्रग्रहणस्य मुनित्रयसम्म
त्वादित्यर्थः। प्रसङ्गादाह-*एवमिति*। यथैषा वाक्यभेदेन व्यवस्थाप
तथेत्यर्थः। अन्तरङ्गत्वज्ञाने बहिरङ्गत्वेन यो विवक्षितस्तेन विरोधप्रतिसन्
चपरिभाषाप्रवृत्तेः। उपसंहरति-एवञ्चेति*। उपपादितरीत्या व्यवस्था
त्वे चेत्यर्थः। तदेतदुपपादयति—*त्रिपाद्यामिति*। *सूत्रोक्तरीत्येति
लोपे रुत्वस्यैवोद्देश्यतावच्छेदकत्वेनोपानात्तस्य चाल्वृत्तित्वादिति भावः

एतत्तदोः-(पा०सू०६।१।१३२) अनुकार्यस्वरूपभङ्गभिया क्रोशे इवैकशेषाभावः । एतत्तत्तदोरनन्तर इत्यर्थः । तेन 'परमस ददाति' इत्यादौ न दोषः । गौणे तु न दोषः, तत्र त्यदाद्यत्वाभावेन हल्ङ्यादिलोपस्य दुर्वारत्वात् । सु इति प्रथमैकवचनमेव व्याख्यानात् । अनञ्समासे किमिति । तस्य पूर्वपदार्थप्रधानत्वादुपसर्ज-

---

स्थानिवद्भावप्रवृत्तिमभ्युपेत्याह-*स्थानिवत्त्वेनेति । *तदप्राप्तेः* । उत्वाप्राप्तेरित्यर्थः ।

"एतत्तदोः" इति सूत्रे त्यदादीनीत्यनेनैकशेषप्राप्तिमाशङ्क्याह-*अनुकार्येति* । सूत्रे सौत्रत्वादेकशेषाप्रवृत्तावपि वृत्तौ एतत्तदोर्यः सुस्तस्येत्यत्रैकशेषवारणमेव बोध्यम् । सूत्रे पञ्चम्यभावात्परमितिवक्तुमशक्यमित्यभिप्रायेण सूत्रे श्रूयमाणा या एतत्तदोरिति षष्ठी तदुपपत्तयेऽनन्तरपदस्यैवाध्याहारो न तु पूर्वसमीपादिपदाध्याहार इति दर्शयति—*एतत्तदोर इत्यर्थ इति* । अनन्तर इत्यस्यानध्याहारेऽनञ्समासग्रहणस्य वैयर्थ्यापत्तेः पूर्वस्य तस्याभावात् । न चैवं तदपि त्यज्यतामेतावता लाघवमेवेति वाच्यम् ।

यो विभुर्विश्वमखिलं स्वीकृत्य समदृष्टिताम् ।
सदा रक्षति रामः स ममास्तु शरणं हरिः ॥

इति पद्ये रामः स इत्यत्रातिव्याप्त्यापत्तेः । *व्याख्यादिति* । उत्तरत्र प्रथमैकवचनस्यैव सम्भवेन पूर्वसूत्रेऽपि तस्यैव ग्रहणमित्याशयमूलकादित्यर्थः । *पूर्वपदार्थप्रधानत्वादिति* । अस इत्यस्मात्तद्भिन्न इत्याकारकबोधस्य नैयायिकसम्मतत्वात् । युक्तं चैतत् । नञो भेदवाचकत्वे नीलो घट इत्यादौ तादात्म्यसम्बन्धेन नीलपदार्थप्रकारकघटविशेष्यकबोधस्य सर्वानुभवसिद्धतया "प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ" इति न्यायेन तादात्म्यसम्बन्धावच्छिन्ननीलाभावप्रतीतिरुपपद्यते नञ्समभिव्याहारे ।

न चैवं 'न ह्यब्राह्मणमानयेत्युक्ते लोष्टमानीय कृती भवति' इति भाष्योक्तेरभाववद्विशेष्यकस्य बोधस्य स्वीकारे लोष्टाद्यानयनापत्तिरनिष्टा प्राप्नोतीति वाच्यम् । घटादिपदानां घटत्वादिना यावद्घटबोधकत्वेऽपि प्रकरणादिनाऽत्र घटोऽस्तीत्यादौ कस्य चिद् घटस्यैव बोधवदब्राह्मणादिपदादपि प्रकरणादिना ब्राह्मणभिन्नक्षत्रियस्यैव बोधसम्भवात् । न चास्य नञो भेदार्थकत्वे नञर्थभेदस्याश्रये पदप्रतिपाद्ये प्रकारतया भानात्पटो न घट इत्यत्रानुपपत्त्यभावेऽप्यघटमानयेत्यादावनुयोगिवाचकपदार्थस्यैव प्राधान्येन भानापत्तिरिति वाच्यम् । तत्र नञो भेदवति लक्षणास्वीकारात् ।

नत्वात् यदाद्यत्वाभावेन हल्ङ्यादिलोपो दुर्वार इति प्रश्नः। उत्तर-
दार्थप्रधानः स इत्युत्तरम्।

सोऽचि-(पा०सू०६।१।१३४) ससिति प्रथमान्तस्य लुप्तषष्ठी-
कमनुकरणम्। सेमामविड्ढीति। द्वादशाक्षरपादा जगतीछन्दः।
स एवमुक्त्वेति। लोपेऽत्र पादपूर्तेर्न लोप इति भावः। अवधा-
रणान्त्विवाति। वृद्धैर्व्याख्यातमवधारणन्त्विवत्यर्थः। बहुलेत्यादि ग-
कान्तराभावादिति भावः। एवञ्च तदनुवृत्त्यैव क्वचिदप्रवृत्तौ सिद्धा-
यामवधारणपरतया व्याख्यानं व्यर्थमिति भावः। सर्वमेतदवधा-
रणन्त्विवति तुना सूचितमित्यलम्।

इति स्वादिसन्धिः।

---

न च भेदस्य पदार्थैकदेशतया तत्र प्रतियोगिनो घटादेरन्वयासम-
इति वाच्यम। चैत्रस्य नप्तेत्यादाविव पदार्थैकदेशेऽपि ससम्बन्धिकत्वे-
न्वयसम्भवात्। न च नञो भेदवाचकत्वे 'न ब्राह्मणैरतैरुपद्रुतम्' इत्य-
प्रतियोग्यनुयोगिवाचकपदयोः सामानाधिकरण्यात्समानविभक्तिकत्वा-
पत्तिरिति वाच्यम्। प्रतियोग्यनुयोगिनोरभेदान्वयबोधोपयोगिकाङ्क्षाया-
नञा भेदबोधनात्। अन्यथा 'भूतले न घट' इत्यत्रापि भेदबोधापत्तिः।
च नञो भिन्ने लक्षणाकल्पने तदेकदेशे प्रतियोगिनोऽन्वयकल्पने गौर-
मिति वाच्यम्। "यजतिषु येयजामहं करोति नानुयाजेषु" इत्यत्र भि-
लक्षणाया आवश्यकतया अन्यत्रापि तस्याः कल्पनात्। अत्र हि यज-
शब्दो यागवचनः।

येयजामहमिति। हकारान्तानुकरणादुच्चारणार्थकारान्ताद्द्वितीया
तस्य करणं च तच्छब्दवन्मन्त्रोच्चारणम्। तथा चानुयाजभिन्नेषु या-
षु येयजामहशब्दवन्मन्त्रप्रयोगरूपैकार्थविधाने सत्येकोद्देश्यकैकविधे-
कार्थबोधजनकत्वतयैकवाक्यतानिर्वाहः। यद्यत्र नञोऽत्यन्ताभावार्थ-
स्यात्तदावाक्यभेदः स्यात्। न च नञो भेदे शक्तिर्भिन्नैवेत्यत्र विनि-
नाविरह इति वाच्यम्। भेदत्वस्याखण्डोपाधितया तस्य स्वरू-
शक्यतावच्छेदकत्वात्। यद्यप्यस्मिन् पक्षे नञ्समासग्रहणं पूर्वपदार्थप्रा-
न्येऽपि उत्तरपदार्थप्राधान्यप्रयुक्तं कार्यं भवतीत्यर्थज्ञापकमिति 'अस' इ-
दौ सर्वनामकार्यानुपपत्तिः परिहर्तुं शक्यते। तथापि गौरवमतः पा-
न्तरमाह—*उत्तरपदार्थेति*। आरोपितत्वमारोपविषयत्वरूपम, अ-
ऽऽरोपमात्रम्। विषयत्वं तु संसर्ग इति पक्षेऽस इत्यत्र सर्वनामका-
नुपपत्तिर्नास्ति अनञ्समासग्रहणं चरितार्थम्। ननु सत्येवेत्यवधारण-
तया व्याख्यानञ्च सर्वसम्मतमत आह-*वृद्धैर्व्याख्यातमिति*। एतेन त-
नुवृत्त्यैव सर्वेष्टसिद्धावधारणपरतया व्याख्यानमनर्थकमिति सूचित-

इति स्वादिसन्धिः॥

# अजन्तपुँल्लिङ्गप्रकरणम् ।



स्वादिविधौ प्रातिपदिकाधिकारात्तां सञ्ज्ञामाह (१) अर्थवदिति । (पा० सू० १।२।४५) "अधातुः" इत्यादिः पर्युदासो लाघवात् । प्रत्ययान्तमिति । आवर्तिते अप्रत्ययपदे प्रत्ययग्रहणपरिभा-

---

अथ स्वादिसन्धिनिरूपणानन्तरम् प्रसङ्गसङ्गत्या प्रातिपदिकसंज्ञानिरूपणमिति ध्वनयितुमाह-*स्वादिविधाविति* । *प्रातिपदिकाधिकारादिति* । एतेन प्रातिपदिकत्वस्य स्मरणे प्रसङ्गनिर्वाहके स्वादिनिरूपितस्य स्वविध्युद्देश्यतावच्छेदकत्वरूपसम्बन्धस्य नियामकत्वं सूचितम् । न च "ङ्याप्प्रातिपदिकात्" इति सूत्रे ङ्यापोः प्रथममुपादानात्तयोरप्यधिकारत्वेन प्रथमं तयोरेव निरूपणमुचितमिति वाच्यम् । ङ्याब्ग्रहणस्यान्यार्थताया वक्ष्यमाणत्वात्तयोरप्युपपत्तौ प्रातिपदिकत्वस्योद्देश्यतावच्छेदकत्वादित्याशयात् ।

'अधातुः' 'अप्रत्ययः' इत्येतत्पदद्वयप्रतिपाद्यार्थविशिष्टस्यार्थवत उद्देश्यत्वेऽभ्युपगमे अश्रयणाद्विशेषज्ञानस्याप्रामाण्यज्ञानानास्कन्दितस्य सम्पत्त्यर्थं तत्पदद्वयं तावद्व्याचष्टे-*अधातुरित्यादिरिति* । न च धातुपदस्य पुँल्लिङ्गत्वात्तेन नञ्समासस्यापि पुंस्त्वात्तदर्थविवरणवाक्ये नपुंसकत्वानुपपत्तिरिति वाच्यम् । धातुभिन्नमित्यस्य फलितार्थत्वात् । आरोपितो धातुरित्येव तु वाक्यार्थः । *लाघवादिति* । असमर्थसमासस्य वाक्यभेदस्य चाकल्पनेन लाघवादित्यर्थः । यद्यपि सूत्रस्थमप्रत्ययपदमेकमेव तथापि तदावृत्त्या मूले व्याख्यातं तत्रहि-*आवर्तित इति* । *प्रत्ययस्य

---

(१) ननु शब्दः कण्ठताल्वाद्यभिघातजन्यास्तिमितवायवीयमंडलेनाभिव्यङ्ग्यः कर्णग्राह्यो गुणः, अर्थं च भूमौ पश्यामः, तत्र कः ? शब्दार्थयोः सम्बन्धः इत्यर्थप्रतिपादकेन गौतमेन मुनिना "पूरणप्रदाहपाटनानुपपत्तेश्च सम्बन्धाभावः" इति सूत्रितम् । तस्यायमर्थः । शब्देन सहार्थस्य सम्बन्धाभावः=व्याप्त्याद्यभावः । यदि च शब्दस्यार्थेन सम्बन्धः स्यात् तदा अग्निशब्दोच्चारणे मुखदाहापत्तिः, गुडशब्दोच्चरणे माधुर्यापत्तिः । एवञ्च यदि शब्दार्थयोरसम्बन्धः तदा "अर्थाच्चासन्निहिते" इति सूत्रेण अर्थशब्दादिनिः प्रत्ययः स्यात्, 'अर्थवदिति' कथं मतुपो दर्शनमितिचेत् । न । शाब्दिकानां वाक्यनिर्णायकानां च मते शब्दार्थयो र्नित्यः सम्बन्धः । स च भेदाभेदरूपस्तादात्म्यसम्बन्ध एव । तदुक्तम् हरिणा ॥ तादात्म्यमुपगम्यैव शब्दार्थस्य प्रकाशकाः ॥ इति । निरूपितं चैतद् 'वृद्धिरादैच्' इति सूत्रे ग्रन्थकारेण ।

जैमिनिना च स्वशास्त्रे "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः, तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्" इति सूत्रितम् । औत्पत्तिकः=नित्यः । एवञ्चार्थस्य नित्यसान्निध्यात् असान्निहितत्वाभावेन इनेरप्राप्तिरिति भावः ।

षया तदन्तग्रहणम् "संज्ञाविधौ" इति निषेधस्तु प्रत्ययस्य यत्र संज्ञा तद्विषय इति भावः।

---

यत्र संज्ञेति*। प्रत्ययोद्देश्यकसंज्ञाविधावित्यर्थः। ज्ञापकस्य सजातीया-पेक्षत्वादिति भावः। अत्र सूत्रेऽर्थशब्दोऽभिधेयवाचक उपात्तो न प्रयो-जनवाचकः सर्वस्यापि यत्किञ्चित्प्रयोजनवत्त्वादर्थवद्ग्रहणस्याऽऽनर्थक्य-सङ्गात्। एवञ्च शक्त्या यत्किञ्चिदर्थविशिष्टं यत्तत्प्रातिपदिकसंज्ञं स्या-दिति सूत्रार्थः।

न चार्थवद्ग्रहणमत्र वर्णानाम्प्रत्येकं संज्ञा माभूदित्येवमर्थं वाच्यं 'सत्याञ्च तस्यां धनं वनमित्यादौ नलोपः प्रातिपदिकान्तस्येति नलोपः प्रसज्येत' इति भाष्ये उक्तम्, तदेतु "कर्मणि द्वितीया" इत्यादिशास्त्र-"द्व्येकयोः" इत्यादिशास्त्रस्य चैकवाक्यतया एकत्वादिविशिष्टकर्मादिषु स्वादयो भवन्तीत्येवं नियमे नोपपद्यते संख्याकर्मादेरभावादिति कथं न-ऽप्रसक्तिरिति वाच्यम्। प्रकृतार्थापेक्षया प्रत्ययनियमेऽव्ययादिभ्य इव प्र-वर्णे स्वाद्युत्पत्तिः स्यादित्याशयात्। यदा तु सामान्यापेक्षो नियम आ-यते तदा 'दश दाडिमानि षडपूपाः कुण्डमजाजिनम्पललपिण्डमधः रुकमेतत्कुमार्याः स्फय्यकृतस्य पिता प्रतिशीन' इत्यत्यानर्थकस्य सः-दायस्य व्यावृत्त्यर्थमर्थवद्ग्रहणम्। समासग्रहणं तु अर्थवत्समुदायव्यावृत्त्य-र्थमिति स्फुटीभविष्यति।

अधातुरिति किम्? 'अहन्' अत्र नलोपः स्यात्। न च प्रत्ययलक्षणे-प्रत्ययान्तपर्युदासः स्यादिति वाच्यम्। प्रत्ययलक्षणेन प्रत्ययान्तपर्युदास-प्रवृत्तौ "न ङिसम्बुद्ध्योः" इति सूत्रस्थसम्बुद्धिग्रहणस्य ज्ञापकत्वसम्भ-वात्। न च धातोः प्रातिपदिकत्वाभावे "सुपो धातुप्रातिपदिकयोः" इति सूत्रस्थधातुग्रहणमेव ज्ञापकम्भविष्यतीति वाच्यम्। 'श्येनायत' इत्या-क्यङन्तस्य प्रत्ययान्तपर्युदासेनाप्रातिपदिकत्वात्तस्यावश्यकत्वेन ज्ञाप-कत्वासम्भवात्।

अप्रत्यय इति किम्? 'काण्डे कुड्ये'। अत्र हि प्रातिपदिकत्वे ह्रस्-त्वापत्तिर्दोषः। ननु 'पर्जन्यवल्लक्षणम्प्रवर्त्तेत' इति न्यायेनान्तरङ्गत्वात्सु-ब्व्युत्पत्तेः प्रागेव ह्रस्वत्वे कृते ततः सुबुत्पत्तावेकादेशेऽपि लक्ष्ये लक्षण-स्येति न्यायेन पुनर्ह्रस्वत्वं न भविष्यति। विकारकृतो लक्ष्यभेदस्तु लक्ष्ये लक्षणेति न्यायप्रवृत्तिप्रतिबन्धकः। 'उदवोढाम्' इत्यत्रादावक-स्याकारे तस्यौकारे ढत्वादीनामसिद्धत्वात्पुनरोकारस्य प्राप्ताया हलन्तल-क्षणवृद्धेरनेन न्यायेन वारणपरभाष्यप्रामाण्येन तादृशभेदस्यानाश्रय-दिति चेन्न। यद्धर्मावच्छिन्नस्य पूर्वकालिकप्राप्तिकर्तृशास्त्रबोध्यकार्यवि-

वुद्देश्यता तद्धर्ममात्राश्रयोद्देश्यकविकारस्यैव भेदानियामकत्वकल्पनात् । यथा'उदवोढाम्'इत्यत्र हलन्तधात्ववयवाच्त्वम् उद्देश्यतावच्छेदकं तद्धर्ममात्रावच्छिन्नसम्बन्धित्वमेव पुनःप्राप्तवृद्धेरिति ।

न चैवम् 'ऊखतुः' इत्यत्र पूर्वमभ्यासस्य ह्रस्वत्वे तत एकादेशे कृते पुनःप्राप्तह्रस्वत्वस्य नाभ्यासमात्रावयवः स्थानीति 'लक्ष्ये लक्षणस्य'इति न्यायेन समाधानपरग्रन्थविरोध इति वाच्यम् । अभ्याससंज्ञाविधौ धात्ववयवप्रथमैकाचो ग्रहणेन विधीयमानं यद् द्विर्वचनं तत्पूर्वभागस्योद्देतया ह्रस्वत्वस्य तदच्स्थानिकत्वेन तद्धात्ववयवाच्स्थानिकैकादेशस्यापि न लक्ष्यभेदसम्पादकत्वमित्याशयात् । 'काण्डे' 'कुड्ये' इत्यत्र तु पूर्वं प्रातिपदिकान्त्यत्वविशिष्टमच्त्वं ह्रस्वत्वविधावुद्देश्यतावच्छेदकं तदवच्छिन्नमात्रसम्बन्धित्वं नैकादेशस्य, किन्तु प्रकृत्यवयवप्रत्ययसम्बन्धित्वमित्येतादृशभेदमादाय लक्ष्यभेदस्याश्रयणात् ।

अत्र च'काण्डे 'कुड्ये' इत्यत्र प्रत्ययान्तपर्युदासप्रयोजनप्रदर्शनपरभाष्यस्यैव साधकत्वमाश्रीयते । युक्तञ्चैतत् अन्यथा अतति यत् कुलं तत् अम्, कुड्यस्याम् 'कुड्यम्' तस्मै कुड्याय इत्यत्र सवर्णदीर्घे कृते 'ह्रस्वो नपुंसक' इति ह्रस्वत्वानापत्तिः स्यात् । तथाविक्षायान्तु कुड्यशब्दान्त्यावयवाच्त्वं पूर्वकालिकप्राप्तिकर्तृह्रस्वत्वोद्देश्यतावच्छेदकं तदाश्रयमात्रसम्बन्धित्वं नोत्तरकालिकविकारस्येति लक्ष्यभेदो भवत्येव । न चैवमपि 'काण्डे' कुड्ये' इत्यत्रैकादेशे विशिष्टस्य प्रत्ययान्तभिन्नत्वं शास्त्राश्रितं पूर्वान्तवद्भावेनेति ह्रस्वत्वम्प्राप्नोत्येवेति वाच्यम्, 'ह्रस्वो नपुंसके यत्तस्य' इति न्यासेन सिद्धे प्रातिपदिकग्रहणात्सत्त्वप्रधानप्रातिपदिकस्यैव ग्रहणमिति स्वीकारात् ।

अत्र भाष्ये "अप्रत्ययग्रहणं शक्यमकर्तुम् । कस्मान्न भवति ? काण्डे कुड्ये इति, कृत्तद्धितग्रहणं नियमार्थम्भविष्यति, कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसंज्ञा भवति नान्यस्य" इत्युक्तम् । अत्र कैयटः । 'यद्यपि कृत्तद्धितग्रहणमित्युक्तं तथापि तद्धितग्रहणमेव नियमार्थम्, कृद्ग्रहणं तु प्रतिषिद्धार्थम् 'भिद्' 'छिद्' इति । अत्र ह्यधातुरिति प्रतिषेधप्रसङ्गः । न च प्रत्ययान्तस्य चेत्तद्धितान्तस्यैवेति नियमशरीरं पर्यवसितं तथा सति कारक इत्यत्र प्रातिपदिकत्वं न स्यात् । कृद्ग्रहणं हि मध्येऽपवादन्यायेनाधातुरिति प्रतिषेधस्यैव बाधकम्भविष्यतीति वाच्यम् । बाध्यमासान्यचिन्ताया एव कारके इत्यादिनिर्देशात् प्रकृते स्वीकारात् ।

वस्तुतस्त्वेवम्भाष्यतात्पर्यवर्णने 'कृत्तद्धितग्रहणम्' इत्युभयोपादानमनर्थकमापद्यतेति 'धातोः प्रत्ययान्तस्य च चेत्कृत्तद्धितान्तस्यैव'इति नियमाकारे तात्पर्यम् । एवञ्चाधातुग्रहणमपि न कार्यम् । अर्थवद्ग्रहणन्तु पर्युदा-

अत्र सूत्रे उत्तरसूत्रे चार्थवत्त्वम्—एतत्सञ्ज्ञाफलभूतविभक्ती
संबलात् यादृशोऽर्थतत्त्वलाभो न भवति तादृग्बोधनार्थङ्कार्यमेव। अत एव
प्रत्ययपर्युदासो भाष्ये नोक्तः। नह्येवं सति तद्धितग्रहणस्य अस्यापत्यम्।
इयान् इत्यादौ प्रत्ययपर्युदासेन प्रातिपदिकत्वाप्राप्त्या तत्प्रापकतया चा-
रितार्थ्यान्नियमार्थत्वानुपपत्तिरिति शङ्क्यम्, तादृगर्थवत्त्वमेवाह-*अत्र सू-
त्र इत्यादि*। एवं सति सूत्रद्वयेऽप्येकस्यैवार्थवत्त्वस्याश्रयणे लाघवमि-
यदि मनोरमोक्तरीत्योत्तरसूत्रे एकार्थीभावेन लौकिके प्रसिद्धत्वरूपम-
स्तार्थवत्त्वरूपं विवक्षितं, तदा प्रत्ययग्रहण इति परिभाषायाः प्रयोजन-
रूपणावसरे 'देवदत्तो गार्ग्य' इत्यस्य कृत्तद्धितेतिसूत्रेण यञन्तत्वात्प्राति-
पदिकत्वापत्तिरन्यथा स्यात्' इत्युक्तम्भाष्ये तन्न सङ्गच्छेत तावत्समुदा-
ये एकार्थीभावविरहात्।

ननु देवदत्तो गार्ग्येत्यस्य समुदायस्य पारिभाषिकार्थवत्त्वमस्ति
वा। आद्ये सिद्धान्तेऽपि वक्ष्यमाणरीत्या समासग्रहणकृतनियमेनाव-
णात् पूर्वसूत्रेण प्रातिपदिकत्वं दुर्वारम्। अन्त्ये उत्तरसूत्रे तदन्तविधा-
मर्थवत्पदानुवृत्तेरावश्यकतयाऽर्थवत्त्वाभावस्य सत्त्वादुत्तरसूत्रस्याप्य-
प्राप्तिरिति प्रत्ययग्रहणपरिभाषाप्रयोजनकथनपरं भाष्यं भवन्मतेऽपि विरु-
ते। किञ्च प्रत्ययग्रहणपरिभाषा यावन्न सिद्धा तावत्कालेऽर्थवत्सूत्रे प्रत्ययान्त-
त्वस्यापि यथा कथञ्चिद् ग्रहणं स्यात्। एवञ्च समासार्थालौकिकविग्रहवाक्य-
स्य प्रत्ययान्ततया पूर्वसूत्राप्राप्तेः समासग्रहणमुत्तरसूत्रे विध्यर्थम्भवि-
तीति नियमकथोच्छेद इति चेन्न। उत्तरसूत्रेऽर्थवत्पदानुवृत्तौ केवलत-
द्धिते पारिभाषिकार्थवत्त्वाभावादभेदेन विशेषणविशेष्यभावानुपपत्तिरि-
कृत्तद्धितांशे तदन्तविधौ तद्विशेषणार्थवत्पदांशेऽपि तदन्तविधौ बाधका-
वेन 'अर्थवदन्तं यत्कृदन्तं तद्धितान्तञ्च' इत्यर्थस्वीकारादर्थवान् यो गार्ग्य-
ब्दस्तदन्तत्वस्य प्रत्ययग्रहणपरिभाषाभावे तद्धितान्तत्वस्य च 'देवदत्तो गा-
र्ग्य' इतिसमुदाये सत्त्वेन प्रातिपदिकसंज्ञा प्राप्नोतीति परिभाषाप्रयोजनक-
परभाष्यसङ्गतिरित्यभिप्रायात्। परिभाषास्वीकारे तु विशिष्टस्यार्थव-
न्तत्वेऽपि तद्धितान्तत्वाभावान्न दोषः। कर्त्ता गार्ग्य इत्यादावर्थवद-
व्यपदेशिवद्भावेन बोध्यम्।

न चैवमपि पूर्वोक्तरीत्या समासग्रहणस्य नियमार्थत्ववर्णनासङ्गति-
ति वाच्यम्। पूर्वसूत्रम्परित्यज्योत्तरसूत्रे प्रत्ययग्रहणपरिभाषायाः प्रयो-
भाष्यकृतोक्तं, तदभिप्रायेण समासग्रहणस्य नियमार्थत्ववर्णनात्। त-
हि 'प्रथमसूत्रे येषामवयवा अर्थवन्तस्तेषां समुदायोऽप्यर्थवान् यथै-
स्तिलस्तैलदाने समर्थस्तेषां समुदायः खारीशतमपि समर्थं तैलदाने'
त्यभिप्रायेण 'दश दाडिमानि' इत्यादिसमुदाये शङ्कां कृत्वा समाधानं

तत्प्रत्ययग्रहणपरिभाषासत्त्वमभिप्रेत्यैव। अन्यथा 'दश दाडिमानि' इत्यादिसमुदायस्य प्रत्ययान्ततया प्रत्ययान्तपर्युदासेन तद्व्यावृत्तेः शङ्कासमाधानयोर्निर्दलत्वापत्तिः। एवञ्च पूर्वसूत्रविषये परिभाषयानुगृहीते एव पूर्वसूत्रम्प्रवर्त्तत इत्यभिप्रायः कल्पनीयः। एवञ्च समासार्थालौकिकविग्रहवाक्यस्य प्रत्ययान्तत्वाभावात् निषेधाप्राप्त्या पूर्वसूत्रेणैव प्रातिपदिकत्वं सिद्धमिति समासग्रहणन्नियमार्थमेव।

किञ्च 'देवदत्तो गार्ग्य' इत्यत्र 'तद्धितान्तत्वात्प्रातिपदिकत्वं प्राप्नोति' इति कथनं न परिभाषाभावाभिप्रायेण, किन्तु तद्धितान्तत्वात्प्रातिपदिकसंज्ञायामपि परिभाषाप्रयोजनमिति ध्वनयितुम्। अन्यथा प्रथमोपस्थितत्वात् 'देवदत्तः पूजक इति समुदायस्य कृदन्तत्वात्प्रातिपदिकत्वापत्तिरेवोद्भाविता स्यात्। *एतत्संज्ञेति*। फलभूतेति पाठो, न तु फलीभूतेति, च्वेः सम्भवाभावात्। 'मधु' 'लिट्' इत्यादिसङ्ग्रहाय नञर्थद्वयप्रवेशः। विभक्तीतरानपेक्षत्वञ्च विभक्तीतरविषयकज्ञानासहकारिकारणकज्ञानविषयत्वम्। एवञ्च यद्विषयकज्ञानस्य लौकिकार्थबोधजनकतायामेतत्संज्ञाफलभूतविभक्तिभिन्नविषयकं ज्ञानं सहकारि कारणन्न भवति तत्त्वरूपमर्थवत्त्वंप्रातिपदिकसंज्ञोद्देश्यतावच्छेदकम्।

न च प्रत्ययग्रहणपरिभाषया "कृत्तद्धित" इति सूत्रेण 'देवदत्तो गार्ग्य' इत्यस्य प्राप्तसंज्ञाव्यावृत्तावपि अर्थवत्सूत्रेण प्राप्नोति। तस्यार्थबोधजनकतायां गार्ग्यशब्दप्रकृतिकप्रातिपदिकसंज्ञाप्रयोज्या या विभक्तिः तन्मात्रस्यापेक्षासत्त्वादिति वाच्यम्। एतत्संज्ञेत्यस्य यद्रूपविशिष्टस्य या संज्ञा चिकीर्षिता तत्फलभूतेत्यर्थात्, तच्च रूपं तत्तदानुपूर्वीस्वरूपम्। एवञ्चार्थवत्सूत्रसाध्यसंज्ञाफलभूतविभक्तिभिन्नकृत्तद्धितेतिसूत्रसाध्यप्रातिपदिकसंज्ञाफलभूतविभक्तेरत्रापेक्षासत्त्वान्नातिप्रसङ्गः। अत एवैतत्संज्ञाफलभूतेति विशेषणमर्थवद्भवति।

अत्र केचित्। तद्भिन्नञ्च साजात्यात्प्रकृतिप्रत्ययान्यतररूपमेव गृह्यते। तेन क्वचिदादेशागमादिसापेक्षत्वेऽपि न क्षतिः। आदेशापेक्षा यथा 'अर्वन्तौ' इतिप्रयोगघटकार्वन्शब्दस्य त्रादेशसहकारेणैवार्थबोधकतायां लोके दर्शनेन 'भवन्तौ' इत्यादौ नुमाद्यागमादिसहकारेणैव तथा दर्शनम्। अत्रेदम्बोध्यम्। 'औपगव' इति समुदायस्य प्रातिपदिकसंज्ञायां चिकीर्षितायाम् तत्संज्ञाफलभूतविभक्तिभिन्नतादृशसमुदायघटकस्य तद्धितप्रकृतेरपेक्षासत्त्वादव्याप्तिः। यस्य प्रातिपदिकसंज्ञा चिकीर्षिता तद्घटकान्यत्वनिवेशेऽपि तत्रैवाव्याप्तिः, तस्मिन् यत्किञ्चित्तद्घटकवर्णस्य भेदसत्त्वात्। तादृशसमुदायघटकप्रकृत्यन्यत्वनिवेशे अव्युत्पन्नप्रातिपदिकासङ्ग्रहः।

तरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वम्। अन्यथा "अधातुः" इति पर्युदासेन व्याख्यानादर्थवत्त्वेनैव सादृश्यग्रहणेन सिद्धेरुत्तरसूत्रे कृदादीनामनर्थकानामप्रसिद्धेस्तद्वैयर्थ्यं स्यात्।

---

किञ्च 'कारयाञ्चकार' 'हारयाञ्चकार' इत्यादावामन्तस्य प्रातिपदिकत्वानापत्तिः तिङ्प्रकृतिकृञोऽपेक्षासत्त्वात्। एवन्तादृशविभक्तिभिन्नप्रत्ययानपेक्षाऽपि वक्तुमशक्या। 'अजा' 'खट्वा' इत्यादौ टाबुत्पत्तेः प्राक् प्रातिपदिकत्वानापत्तेः। विभक्तिपदस्य प्रत्ययसामान्योपलक्षणत्वेऽपि 'कारक' इत्यादिसमुदायघटकस्य ण्वुलादेर्निरुक्तापेक्षासत्त्वादव्याप्तिः। तादृशप्रत्ययभिन्नत्वे सति प्रातिपदिकसंज्ञोद्देश्यघटकप्रत्ययान्यत्वस्यापेक्षानिवेशे ऽव्युत्पन्नप्रातिपदिकासङ्ग्रह इति।

इदमत्र तत्त्वम्। एतत्संज्ञाफलभूतेत्यत्र विभक्तिपदमेतत्संज्ञाफलभूतप्रत्ययोपलक्षणम्। अत एव 'सांकूटिनम्' इत्यादाविनुणन्तस्यार्थबोधकताबामणोऽपेक्षासत्त्वेऽपि न क्षतिः। तस्य च प्रत्ययस्यैतत्संज्ञोद्देश्योत्तरवृत्तितया तद्भिन्नोऽपि तदुत्तरवृत्त्यैव गृह्यते इति 'कुम्भकारी' 'मूलकेनोपदंशम्' इत्यादावुपपदापेक्षासत्त्वेऽपि न क्षतिः। ननु तादृशप्रत्ययभिन्नोत्तरवृत्तिसामान्यानपेक्षानिवेशे कारयाञ्चकारेत्याद्यसङ्ग्रह इति चेन्न। तादृशप्रत्ययभिन्नं यदेतत्संज्ञोद्देश्योत्तरवृत्तिसुप्-सुप्प्रकृत्यन्यतरत्-तदपेक्षात्वस्य निवेशनानुपपत्तिपरिहारात्।

अत्रैतत्संज्ञोद्देश्योत्तरवृत्तित्वं सुप एव विशेषणम्। न च राम इत्यादिपदसंस्कारकाले तद्घटकरामशब्दादेर्यदा प्रातिपदिकसंज्ञा चिकीर्षिता तदा तदुत्तरवृत्तिनिरुक्तान्यतरस्य तत्राभावात्तेषामसङ्ग्रह इति वाच्यम्। एतत्संज्ञोद्देश्योत्तरवृत्तिनिरुक्तान्यतरसापेक्षत्वे सत्यप्यबोधकं यद्यत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटविशिष्टत्वे सति लोकेऽर्थबोधजनकत्वरूपमर्थवत्त्वन्निवेशनीयम्, एवञ्च 'पञ्चगव' इत्यस्य धनशब्दोत्तरसमुदायघटकसुप्सापेक्षतया 'पञ्चगवोऽस्यैः' इत्यत्र पञ्चगवेत्यस्य सुप्प्रकृत्युत्तरशब्दापेक्षतया ताभ्यां भिन्नत्वं रामेत्यादावक्षतमेव। न च पञ्चगवेत्यस्य धनशब्दप्रकृतिकसुप्सापेक्षत्वे मानाभाव इति वाच्यम्। धनशब्दप्रकृतिकश्रूयमाणसुबन्तेनैकार्थीभावस्वीकारेण सुपोऽप्यपेक्षायाः सत्त्वात्। उक्तरीत्यस्यैव च तत्र सुबन्ततया सुपस्तत्र नापेक्षेति प्रकृतिनिवेशवैयर्थ्यमिति दिक्।

*कृदादीनामनर्थकानामिति*। न च प्रतिष्ठानिष्ठादिशब्दघटकाणप्रत्ययः, सांकूटिनमित्यादिशब्दघटकाण्प्रत्ययश्चानर्थकः प्रसिद्ध इति वाच्यम्, तस्यापि प्रकृत्यर्थेनार्थवत्त्वाभ्युपगमात्। ननु पर्युदासेनैवार्थ

न च "नञिवयुक्त" न्यायानित्यत्वज्ञापनार्थं तत् । तदनित्यत्वज्ञापने भाष्यसंमतदढतरफलाभावात् । 'अहन्' 'काण्डे' इत्यादावेतत्साङ्ख्यविभक्त्यनपेक्षत्वे ऽपि तदितरानपेक्षत्वमस्त्येवेति तत्पर्युदासः सार्थकः । न च तत् केवलप्रत्ययस्य । तदुक्तं "संख्याया अतिशदन्तायाः" (पा०सू०५।१।२२) इति सूत्रे भाष्ये-'न हि लोके केवलेन प्रत्ययेनार्थो(१) गम्यते, केन तर्हि ? सप्रकृतिकेन' इति ।

स्वलाभे सिद्धेऽर्थवद्ग्रहणात् 'नञिवयुक्त' न्यायानित्यत्वं, "वेः स्कन्देरनिष्ठायाम्" इति सूत्रस्य तिङन्तेऽपि प्रवृत्त्यर्थम्भविष्यतीत्याह-*न चेत्यादि* । *भाष्यसम्मतेति* । तस्य सूत्रस्य तिङन्तेऽपि प्रवृत्तेर्भाष्यानुक्तत्वात् कृत्स्वेव प्रवृत्तेर्वृत्त्यादिसम्मतत्वाच्च । अपि च पर्युदासस्थले सदृशग्रहणमवश्यम्भवतीत्यभिप्रायेण "अकर्त्तरि च कारके" इति सूत्रे भाष्येऽकर्त्तरीति कर्तृसदृशस्य कारकस्य ग्रहणात्कारकग्रहणन्न कर्त्तव्यमित्युक्तम् ।

ननु "अर्वणस्त्रसौ" इति सूत्रेऽसावित्यस्य पर्युदासत्त्वे तस्य सूत्रस्य सुभिन्नविभक्तावेव प्रवृत्तिः स्यात्, न चेष्टापत्तिः, अर्वत्पदमित्यत्र समासेऽप्रवृत्त्यापत्तेः । न चात्र त्रादेशप्रवृत्तौ साधकाभाव इति वाच्यम् । अर्वण इति सूत्रस्य ऋधातोर्विजन्तान्मतुपि कृते तान्तेनार्वच्छब्देन साध्यप्रयोगस्य साधनेन प्रत्याख्यानैकवाक्यतया तत्र प्रवृत्त्यनुमानादित्यत आह—*दढतरेति* ।

अर्वणस्तृ मघोनश्च न शिष्यश्छान्दसं हि तत् ।

इत्यनेनार्वन्शब्दस्य छान्दसत्वादुक्तप्रयोगस्य छान्दसत्वे "न लुमता" इतिनिषेधानित्यत्वेन तदुपपत्तिसम्भवः । 'छन्दसा अपि क्वचिद्भाषायाम्भवन्ति' इत्यस्याश्रयणे तु 'वाहेरलुब्धत सहस्रदगर्वगर्वे' इत्यत्रेव त्रादेशाभाव एव । यदि त्वर्वण इति सूत्रे असावित्यत्र प्रसज्यप्रतिषेध एव तदा तु नानुपपत्तिरिति बोध्यम् । पारिभाषिकार्थवत्त्वस्वीकारेऽपि धातुपर्युदाससार्थक्यमुपपादयति-*अहन् काण्ड इति* । *न च तत्केवलस्येति* । पारिभाषिकार्थवत्त्वं केवलप्रत्ययस्य नास्तीत्यर्थः । तदेतदुपपादयति--

(१)ननु न केवलेन प्रत्ययेनेत्यस्य कोऽर्थः । यदि प्रकृतिरहितेन प्रत्ययमात्रेण बोधो न स्यात् इत्यर्थस्वीकारस्तदा अस्यापत्यम् 'इः' 'इयान्' 'इयती' इत्यादौ प्रकृतेरदर्शनरूपलोपसंज्ञया जातस्य नाशस्याज्ञानवतां वैयाकरणाभिन्नलोकानां बोधानापत्तिः । बोधश्च भवतीत्यत्र निःसंदेहं सर्वेषामैकमत्यम् । अतो 'न केवलेनेत्यस्य भाष्यस्येदं तात्पर्यम् । प्रकृतिलोपाप्रयोजकप्रत्ययेन बोधो न स्यात् इत्यर्थः । तेन इदं शब्दोत्तरजायमानविभक्तेः स्थाने जातेन 'अधुना' प्रत्ययेनेदमो लोपेऽपि प्रकृतिप्रत्ययाविशिष्टबोधे न क्षतिः । एवमेव 'न केवला प्रकृतिः प्रयोक्तव्या' इत्यस्यापि प्रत्ययनाशाप्रयोजकप्रकृत्या इत्यर्थकरणेन दधि मधु लिट् धुक्

हरिरप्याह—

धात्वादीनां विशुद्धानां लौकिको ऽर्थो न विद्यते ॥
कृत्तद्धितानामर्थश्च केवलानामलौकिकः ।
प्राग्विभक्तेस्तदन्तस्य तथैवार्थो न विद्यते ॥ इति

अत एव पदसञ्ज्ञासूत्रे ऽन्तग्रहणस्य सञ्ज्ञाविधौ तदन्तविध्यभा-वज्ञापकत्वे "कृत्तद्धित" इति सूत्रे "अन्तग्रहणं कर्त्तव्यं न कर्त्तव्यम्, अर्थवदिति वर्त्तते, कृतद्धितान्तश्चैवार्थवत् न केवलाः कृतस्तद्धिता वा" इति(१)भाष्यमुपादाय 'शास्त्रीयार्थग्रहणे ऽर्थवत्ग्रहणानुवृत्तिवैय-

*तदुक्तमित्यादि* । *विशुद्धानामिति* । प्रत्ययरहितानामित्यर्थः *लौकिक इति* । लोके विदित इत्यर्थः । स च कारकादिविशिष्टः एतेन केवलस्य धातुसंज्ञाप्रयोजकार्थसद्भावेऽपि न क्षतिः । *कृत्तद्धितानामर्थश्च केवलानामिति* । अत्र लौकिकोऽर्थो विद्यत इति सम्बन्धः अत्र प्रसज्यप्रतिषेधार्थकेन नञा समासः । प्रकृत्यर्थनिष्ठप्रकारतानिरूपित विशेष्यताशून्य इत्यस्यार्थः ।

*प्राग्विभक्तेरिति* । विभक्त्युत्पत्तेः प्रागित्यर्थः । *तदन्तस्य* कृत्तद्धितान्तस्यैव । *तथैवार्थो न विद्यते इति* । अत्रैवकारस्य नञुत्त सम्बन्धः । एवञ्चानुत्पन्नविभक्तिकानां कल्पितार्थसद्भावेऽपि न लौकिक स्यार्थस्य सद्भाव इति । एतेन सूत्रद्वये निरुक्तार्थवत्त्वमेव प्रातिपदिकसं ज्ञाप्रयोजकमिति स्पष्टमेव लभ्यते । अत्र प्रमाणमाह—*अत एवेति* सूत्रद्वयेऽपि निरुक्तार्थवत्त्वस्य विवक्षितत्वादेवेत्यर्थः । *ज्ञापकत्व इति* सतीति शेषः । *शास्त्रीयार्थग्रहण इति* आवापोद्वापाभ्यां कल्पि-

इत्यादौ न दोषः । अत एव प्रकृतिप्रत्ययसमुदाये उभयमिलितस्यार्थवत्वेऽपि यत्रैकस्य व्यपायस्तत्र शिष्य-माणस्यैकस्य प्रकृतेः प्रत्ययस्य वोभयार्थबोधकत्वमित्यर्थबोधको "यः शिष्यते स लुप्यमानार्थाभिधायी" न्यायो न विरुध्यते इति भावः ।

(१) अत्रेदं विचारणीयम् । सुप्तिङन्तं पदमिति सूत्रे अन्तग्रहणस्य "संज्ञाविधौ प्रत्ययग्रहणे" इति परिभाषाया ज्ञापने प्रयोजनमुक्त्वा, 'यद्येवं कृत्तद्धितेति सूत्रे अन्तग्रहणं कर्तव्यं न कर्तव्यम् कृत्तद्धिता-न्तं चैवार्थवत् न केवला कृतस्तद्धिता वा" इत्यत्र अर्थवदिति वर्तते इति भाष्यमादाय अर्थविषयकबोध-जनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वरूपं सूत्रद्वयसाधारणमर्थवत्त्वं स्वीकृत्य शेखरे यत् प्रत्ययपर्युदासखण्डनं कृतं, तन्न युक्तम् । न चोपरिनिर्दिष्टार्थवत्त्वं केवले कृत्तद्धितप्रत्ययमात्रे ऽभा-वादेवमर्थः स्वीकार्य इति वाच्यम् । अन्यरीत्या भाष्यस्य सुयोज्यत्वेन तादृशार्थकरणे प्रमाणाभावात् भाष्यस्य सुयोजनया च कैयटकथनविरोधो ऽपि न भविष्यति ।

तथा हि—कृत्तद्धितान्तं चैवार्थवदित्यस्यानन्तरम् 'प्रातिपदिकमिति शेषः । "न केवला कृतस्तद्धिता व." इत्यस्यावन्तरं 'प्रातिपदिकानि' इति शेषेण भाष्यं स्वरसत उपपद्येत । अत्र बीजं च भाष्ये 'अर्थ-पूर्वं ( पूर्वपादे ) व्याख्यातं प्रातिपदिकपदविशिष्टं च अर्थवत्सूत्रं सम्पूर्णमनुवर्तते इत्यभिप्रायेण

र्थेन तदनुवृत्तिसामर्थ्याल्लौकिकार्थप्रत्यासन्नो ऽभिव्यक्ततरो योऽर्थः प्रत्ययान्तेषु लक्ष्यते स आश्रीयत' इति कैयटेनोक्तम् । लौकिकं य-त्पदन्तदर्थस्य प्रत्यासन्नः शास्त्रकृत्कल्पितस्वादिप्रकृतेरर्थः प्रत्ययान्तेषु सुबन्तेषु यो ऽभिव्यक्ततरो लक्ष्यते बोद्धृभिः स इत्यन्वयः ।

यत्तु प्रत्ययान्तेष्वित्यस्य कृदाद्यन्तेष्वित्यर्थ इति । तन्न । तावन्मात्रेण कस्याप्यर्थस्याभिव्यक्तेरप्यभावेनाभिव्यक्ततरत्वस्य सुतरामभावात् । अर्थवत्सूत्रे ऽप्येवमेवेति ,अनुवृत्तिसामर्थ्यादित्यनेन सूचितम् । अन्यथा तत्सामर्थ्यादित्येव वदेत् । पूर्वसूत्रे यादृशार्थवत्त्वग्रहोऽत्राप्यनुवृत्तिसामर्थ्यात्तादृशार्थवत्त्वस्यैव ग्रहः । शास्त्रीयार्थग्रहणे तु त-

---

इत्यर्थः । *तदर्थस्य* । प्रशस्तस्येत्यर्थः । स च स्वार्थद्रव्यलिङ्गसंख्याकारकरूपः । *प्रत्यासन्नः* । तद्विषयकप्रतीत्यव्यवहितप्राक्कालिकप्रतिपत्तिविषयः । स च कृत्तद्धितान्तस्यैव न तु केवलकृत्तद्धितस्येति भावः । *लक्ष्यत इति* । सुपां द्योतकतया सुप्समभिव्याहारे एव स प्रतीयत इति भावः । एवञ्च सुबन्तस्यैव सम्पूर्णलौकिकार्थवत्त्वम् । तत्प्राग्भागस्य तु लौकिकार्थप्रत्यासन्नत्वमित्युक्तम् ।

विवरणकाराद्युक्तिं खण्डयति—*यत्त्विति* । *अभिव्यक्तेरपीति* ।

---

तिवर्तते' इत्युक्तमि-यवश्यं भवताऽपि अङ्गीकर्तव्यम् अन्यथा 'वर्तते' इति पदस्वारस्य भङ्गापत्तेः ।

एवमर्थकरणेन वाक्यप्रामाणिकानां मीमांसकानां न्यायविरोधापत्तिरपि न । तत्र हि—तृतीयाध्याये तृतीये पादे प्रथममेव "उच्चै ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना," इत्यत्र विधिवाक्ये मन्त्रवाचिनामृगादिशब्दानां प्रयोगात् मन्त्रधर्मा उच्चैस्त्वादयः । एवं च यजुर्वेदोत्पन्नाऽऽध्वर्युणा प्रयुज्यमाना अप्यृचा उच्चैरेव पाठितव्या इति पूर्वपक्षं कृत्वा, असञ्जातविरोधित्वेन प्रबलमुपक्रममनुसृत्य तद्वशेनोपसंहारस्य नेतव्यत्वात् , "त्रयो वेदा असृजन्त, अग्ने ऋग्वेदो, वायो यजुर्वेद, आदित्यात् सामवेद" इत्यत्रोपक्रमगतवेदानुसारेण विध्युद्देशगतानां मृगादिशब्दानां वेदपरत्वात् ऋचोऽपि यजुर्वेदोत्पन्ना उपांशुपठनीया इति उपक्रमोपसंहारैकवाक्यता बलेन वाक्यनिर्णयः इति सिद्धान्तितम् ।

एवमेवार्थवत्सूत्रेऽपि प्रातिपदिकत्वस्य विधानात् विधेयबोधकप्रातिपदिकपदस्य शेषः कर्तुमुचितः, न केवलस्यार्थवत् पदस्येति सुधीभि र्विभावनीयम् ।

अत्रेदं तत्त्वम् प्राचांमते वृत्तिविशिष्टत्वमर्थवत्त्वम् । वैशिष्ट्यञ्च स्वपर्याप्त्यधिकरणत्वम् स्वप्रयोज्यशाब्दबोधजनकत्त्वप्रकारकतात्पर्यविशेष्यत्वम् एतदुभयसम्बन्धेन । आद्यसम्बन्धदानात् धनंवनमित्यादौ प्रतिवर्णं संज्ञा मा भूत । कृत्तद्धितेत्युत्तरसूत्रे च । स्वनिष्ठशक्तिज्ञानप्रयोज्यज्ञानविषयत्वम् स्ववृत्तित्वम् एतदुभयसम्बन्धेन यत्किञ्चित्पदविशिष्टशक्तिपर्याप्त्यधिकरणरूपैकार्थीभावरूपशक्तिपर्याप्त्यधिकरणत्वम् अर्थवत्त्वम् । तस्य च केवले कृत्तद्धितप्रत्ययेऽभावात् सामर्थ्यात् तदन्तविधिरिति न कुत्रापि दोषः ।

नव्यास्तूभयसूत्रसाधारणमेकरूपमेवार्थवत्त्वं स्वीकुर्वन्ति । तदित्थम्—एतत्संज्ञाफलभूततिङ्—स्ववृत्तिसमासत्वाभाववद्पद—स्वादिविभक्तिपदत्वानाश्रयानियपूर्वसुबन्त,—एतदन्यतमेतर-समभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमर्थवत्त्वम् । अत्र लक्षणसमन्वयस्तु गुरुचरणकृताटिप्पण्यां द्रष्टव्यः ।

दनुवृत्तिर्व्यर्था स्यादिति तद्भावः ।

किं च पूर्वसूत्रे सामान्यतोऽर्थवत्त्वग्रहणे न किंचित्फलं प्रत्य-येष्वतिव्याप्तिदानातिरिक्तम् । अत एव तद्धितग्रहणस्य नियमार्थत्वा-श्रयणेन(१) "ह्रस्वो नपुंसके यत्तस्य" इति न्यासेन 'काण्डे' इत्यादौ ह्रस्ववारणात् फलाभावेन वा भाष्योक्ते तत्प्रत्याख्याने 'पञ्चनावप्रिय' इत्यादौ 'पञ्चनाव' इत्यस्यानेन न प्रातिपदिकत्वं, नाप्युत्तरसूत्रेण। प्रातिपदिकत्वे तु टाबापत्तिः । एवञ्च प्रत्ययस्य प्राप्तिरेव नेति के-लप्रत्ययपर्युदासो विफलः । 'दश दाडिमानि षडपूपा' इत्यादिनि-रर्थकपदसमुदायव्यावृत्तिरर्थवद्ग्रहणस्य फलम् । तत्र हि "सुपो धातु

अभिव्यक्तेरेवेत्यर्थः । यत्र च लिट् धुगादौ प्रतीतिरस्ति तत्र न कृद-त्वमात्रम्, अपि तु सुबन्तत्वमिति । *तद्भाव इति* । भाष्यकैयटयोर्भा इत्यर्थः । *सामान्यत इति* । लौकिकालौकिकसाधारणार्थवत्त्वमित्यर्थः *अत एव* । पारिभाषिकार्थवत्त्वस्याभिप्रेतत्वादेव । *तद्धितग्रहणस्ये-ति* । एतत्प्रागुपपादितम् । *पञ्चनावप्रिय इति* । अत्र श्रूयमाणसुबन्तै-वैकार्थीभावाङ्गीकारात् एतत्संज्ञाफलभूतविभक्तिभिन्नस्य सुपोऽपेक्षासत्त्वा प्रातिपदिकत्वम् । *प्रत्ययस्य प्राप्तिरेव नेति* प्रत्ययमात्रस्य चिकीर्षिता प्रातिपदिकसंज्ञा तत्फलभूतबौद्धविभक्तिभिन्नस्य प्रकृतिस्वरूपस्या-क्षासत्त्वात् । एवञ्च सामान्यतोऽर्थवत्त्वस्याश्रयणे प्रत्ययातिव्याप्तिवार-णाय तत्पर्युदासे गौरवमिति भावः । *निरर्थकपदसमुदाय इति* । निरर्थ-कश्चासौ पदसमुदायश्चेत्यर्थः । एतेन वक्ष्यमाणेन नियमेनास्य न व्यावृ-त्तिरिति सूचितम् । 'धनं' 'वनम्' इत्यादौ प्रतिवर्णं संज्ञाव्यावृत्तिस्तु फलम्, साधकं विना सुपोऽनुत्पत्तेः क्षत्यभावात् ।

न च 'दश दाडिमानि' इत्याद्यर्थवद्ग्रहणस्य फलमिति यावन्न सि-द्धं तावदुत्तरसूत्रे तदनुवृत्तेरप्यभावेनोत्तरसूत्रस्थसमासग्रहणस्यासूर्यंप-श्यादिसमर्थसमासस्य पर्युदासलभ्यार्थत्वाभावेऽपि प्रातिपदिकसं-सिद्ध्यर्थं ग्रहणमिति नियम एव नास्तीति वाच्यम् । तेषामप्रातिपदि

(१) अत्रायमभिप्रायः । ह्रस्वो नपुंसके प्रातिपदिकस्येतिसूत्रस्थप्रातिपदिकपदं-सत्वप्रधानप्राति-लाभार्थम् । सत्वप्रधानप्रातिपदिकत्वं च लिङ्गाद्यन्वयितावच्छेदकत्वयोग्यस्ववाच्यतावच्छेदकरूपावच्छि-न्नव्यविशेष्यताप्रयोजकत्वम् । विशेष्यतायां मुख्यत्वं च स्वघटकप्रयोज्यप्रधानतानिरूपिताऽप्रधानत्वासमा-करणत्वम् । तेन यथादेशपक्षे विभक्त्यैकादेशो नान्तवद् इत्यादि यत् मनोरमायामुक्तं तत्तु प्रत्ययपर्युदा-एव सम्भवति न प्रत्ययपर्युदासखण्डनपक्षे इतियत् केषांचिन्मतं, तत्खण्डयन् तदेवसूत्रं स्वमते ला-*ह्रस्वोनपुंसके यत्तस्येति* । यत्तस्य इत्यनेन प्रत्यासत्त्या नपुंसकत्वशक्तिपर्याप्त्यधिकरणं यत् तस्य अचः इति सूत्रार्थः ।

(पा०सू०२।४।७१) इति लुगापत्तिरिति(१) भाष्ये स्पष्टमिति दिक् ।

पूर्वसूत्रेणेति । प्रत्ययग्रहणे यस्मादिति प्रत्ययान्तत्वाभावादिति भावः । नियमस्य सजातीयविषयत्वात्साजात्यं दर्शयितुमाह—पूर्वो भाग इति । एतेन यत्तच्छब्दार्थयोरननुगतत्वेन शब्दानुगमस्याप्रयोजकत्वेन व्यवच्छेद्याननुगमे ऽपि सत्यभावेन च 'यत्र सङ्घाते' इत्या-

---

संज्ञायाः समासग्रहणाभावेऽपि धर्मिग्राहकमानेनैव सिद्धेः । न चार्थवच्छब्दसत्त्वे यन्मूले व्याख्यातं धातुं प्रत्ययं प्रत्ययान्तं वर्जयित्वेति तन्नोपपद्यते समानकर्तृकत्वाभावादिति वाच्यम् । प्रातिपदिकसंज्ञकत्वविशिष्टभवनेऽर्थवच्छब्दस्वरूपस्य कर्तृत्वे तात्पर्यात् । सुबन्तानां समाससंज्ञाविधानात्तस्य समुदायस्य प्रत्ययान्तत्वशङ्काव्यावृत्तये आह—*प्रत्ययग्रहण इति* । *साजात्यमिति* । सङ्घाह्यव्यवच्छेद्ययोरित्यादिः समाससाजात्यमित्यर्थः । तत्र पूर्वभागस्य पदत्वसत्त्वात् । साजात्यास्वीकारे सङ्घातस्य चेत् 'पदसंज्ञकपूर्वभागकसमासस्यैव' इति नियमे समासातिरिक्तसङ्घातमात्रस्य व्यावृत्तिः स्यात् एतत्सूत्रमर्थवतामेकैकवर्णानां संज्ञाविधायकत्वेन चरितार्थमिति भावः ।

ननु यत्तच्छब्दयोर्बुद्धिस्थपरामर्शकतया यदा यो बुद्धिस्थस्तस्यैव बोधो न त्वन्यस्येति 'यत्र सङ्घात' इत्यनेन समासात्मकस्य सङ्घातस्य ग्रहणे व्यवच्छेद्यवाक्यासङ्ग्रहः । वाक्यस्यैव यत्रेत्यनेन ग्रहणे तत्पदेनापि तस्यैव बोधात्,तदभेदस्य समासेऽभावात् 'तस्य यदि समासस्य' इत्यसङ्गतम्' इति खण्डनकृदाह तन्मतन्दूषयति—*एतेनेति* । मूलोक्तनियमाकारस्य साजात्यप्रदर्शनपरत्वेन । नन्वस्त्वर्थाननुगमः शब्दानुगमस्तु स्यादेवेत्यत आह—*शब्दानुगमस्याप्रयोजकत्वेति* । अयम्भावः । शब्दानुगमो नामानुगतार्थप्रतिपादनमेव । यथा घटादिशब्दानां घटत्वादिनाऽनुगतानामेकाकारप्रतीतिविषयीभूतानामर्थानाम्प्रतिपादकत्वम् । न तु शब्दानुगम इत्यस्यैकानुपूर्वीकत्वसम्पादनमित्यर्थः । अर्थभेदाच्छब्दभेदस्वीकारेऽपि शब्दानुपूर्व्या एकत्वस्यैव सत्त्वात् । एवञ्च प्रकृते शब्दानुगमसद्भावेऽपि पूर्वोक्तरीत्यार्थानामननुगततया सोऽकिञ्चित्कर इति ॥

ननु त्यदादीनां बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्तिस्वीकाराच्छक्यतावच्छेदकानामननुगमेऽपि शक्यतावच्छेदकतावच्छेदकैक्यादनुगतत्वव्यवहारो भविष्यतीत्यत आह—*व्यवच्छेद्याननुगमेपी-

---

(१) सुपोधातुरितिसूत्रेण सुबुविशिष्टस्यैव लुग्भवति। अत्र वैशिष्ट्यञ्च स्वतादात्म्यं स्वविशिष्टशक्तिपर्याप्त्यधिकरणघटकत्वम् एतदुभयसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च—स्वघटकेतरत्वं—स्वप्रकृतिघटकेतरत्वम् एतदुभयसम्बन्धेन ।

दिव्यर्थमेवेत्यपास्तम् ।

पदशब्देनात्र स्वातन्त्र्येणापि प्रयोगार्हमर्थवद् गृह्यते । अत ए-

ति* संग्राह्ये विवक्षितधर्मवत्त्वेन बोधनीये सर्वसंग्राह्योपस्थितिरपेक्षि-
सा चाननुगमे न संभवतीत्यनुगमापेक्षा । व्यवच्छेद्यानननुगमेऽपि ते-
विशेषधर्मसम्बन्धबोधस्यानभिप्रेतत्वात्तेषामननुगमेऽपि क्षतिविरहादि-
भावः । यथोक्तं भाष्ये 'शद्वापशद्वयोरन्यतरोपदेशेन कृतं स्यात्' इति
मूलोक्तस्य नियमाकारस्यासाध्यत्वं 'प्रत्ययग्रहण' इति परिभाषायां 'दे-
दत्तो गार्ग्य' इत्यत्रातिव्याप्तिवारणार्थमावश्यकत्वप्रदर्शनपरभाष्यालम्भ-
इति कस्य चिच्छङ्कायान्तदर्थमाह *पदशब्देनेति* ।

यदि पदशब्दः पदसंज्ञकपरस्तदा 'वृषणवसुः' इत्यस्यासंग्रहः, य-
स ज्ञाप्रतियोग्यपरस्तथापि भसंज्ञया प्रकृते बाधात्, तद्योग्यतापि-
स्वीकारे सर्वसमाससाजात्याभाव एव । पदसंज्ञाप्रयोजकप्रत्ययप्रकृ-
परत्वे 'राज्ञः पुरुष' इत्यादिवाक्यघटकस्य पूर्वभागस्य विभक्त्यन्तस्य त-
दृशप्रकृतिभाव एव । ननु षष्ठीप्रकृतिप्रातिपदिकमादाय वाक्यसंग्र-
इति वाक्यानां नियमेन व्यावृत्तिर्भविष्यतीति चेत् । एवं सति पदशब्द-
तत्र शक्त्यभावेन लक्षणाया आवश्यकत्वे जहत्स्वार्थलक्षणापेक्षयाऽज-
त्स्वार्थलक्षणैवोचिता । किं च 'जन्मवान्' इत्यादौ प्रातिपदिकत्वसिद्ध-
'उत्तरस्तु प्रत्ययो न' इत्यपि निवेशनीयमिति गौरवमपि भविष्यतीत्या-
येनाह—*स्वातंत्र्येणेत्यादि* । स्वातन्त्र्येणप्रयोगयोग्यत्वे सत्यर्थवदि-
र्थः । *अत्र* साजात्यप्रदर्शकवाक्ये । अत्र पूर्वशब्दोपादानात्परस्या-
तादृशस्यैवोपस्थितिरिति स्वतन्त्र्येण प्रयोगयोग्यताविशिष्टार्थवत्त्वावि-
ष्टपूर्वोत्तरभागकसमुदायलाभात् जन्मवान् इत्यादेः सङ्ग्रहः । पूर्वोत्तरपद-
स्वातन्त्र्येण प्रयोगार्हत्वञ्च तत्तत्प्रयोगाभावेऽप्यर्थबोधजननाय प्रयुज्य-
मानत्वम् ।

यतु 'स्तम्बेरमः' 'शकृत्करिः' 'समस्थ' इत्यादेः स्वातन्त्र्येण प्र-
गानर्हत्वात् नैतद्घटितरूपेण साजात्यविवक्षणं युक्तमिति । तन्न । 'वेदव्यास'
इत्यत्रोपपदसमासे 'विनापि प्रत्ययम्' इति वचनेन वेदेत्यस्य लोपे
व्यासेत्यस्य प्रयोगवत् 'स्तबेरम' इत्यादावपि तथा सम्भवात् । यदि
भीमसेन इत्यस्य यदुत्तरपदं सेन इति तावन्मात्रस्य पृथक्प्रयोगादर्श-
ल्लोपविधायकं वचनं क्काचित्कमिति नैतेषु पूर्वोत्तरपदयोरन्यतरलोपे
नान्यतरस्य स्वातन्त्र्येण प्रयोगार्हत्वसम्भव इति मन्यते तदा किञ्चि-
ष्ठोपपदसंज्ञाविधायकशास्त्रविधेयप्रत्ययान्तघटितसमुदायावयवत्वपूर्वो-
त्तरभागाभावसमानकालीकार्थबोधजनकतावच्छेदकतावच्छेदकानुपूर्व्य-
न्यतररूपमेव स्वातन्त्र्येण प्रयोगार्हत्वमिति वक्तव्यम् । एतद्घटकपूर्वो-

व 'अर्थवत्समुदायानां समासग्रहणं नियमार्थम्' (१) इत्युक्तमत्र भाष्ये। भाष्ये 'सुबन्तानामित्यनेन भेदसंसर्गद्वारकार्थवन्त उपलक्ष्यन्ते' इति

---

रमागाभावश्च कालिकसम्बन्धेन यत्प्रतियोग्यधिकरणन्तान्निरूपितविशेषणतासंबन्धावच्छिन्नवृत्तित्वात्मकसामानाधिकरण्यसम्बन्धेन तत्तत्प्रतियोगिविशिष्टान्यो वक्तव्य इति न विशिष्टाभावोभयाभावमादाय जन्मवानित्यादौ दोषः ।

नचैवं सति स्वातन्त्र्येण प्रयोगार्हार्थवदित्यत्र पृथगर्थवत्त्वनिवेशनमफलमिति वाच्यम् । निरुक्तस्य स्वातन्त्र्येण प्रयोगार्हत्वस्य निवेशसूचनाय तदुपादानात् । उक्तार्थे भाष्यसम्मतिमाह—*अत एवेति* । उक्तान्यथानुपपत्तिपरिहारार्थमेव । *अर्थवत्समुदायानामिति*। अर्थवत्समुदायपदमत्र तन्त्रेण षष्ठीतत्पुरुषकर्मधारयाभ्यामर्थवतामर्थवान् यः समुदायस्तद्बोधकम् । कर्मधारयमात्रविवक्षायामव्युत्पन्नडित्थादेरसङ्ग्रहः । षष्ठीतत्पुरुषमात्रविवक्षायामुत्तरसूत्रेऽनुवर्तमानं यदर्थवत्पदन्तदर्थालाभः । तत्र ह्यनुवर्त्तमानस्यार्थवत्पदस्य निरुक्तार्थकत्वमावश्यकमन्यथाऽनर्थको योऽर्थवतां समुदायो 'अश्राद्धभोजी ब्राह्मणो' 'अलवणभोजी ब्राह्मण' इत्यादि तेषां पूर्वसूत्रेणाप्राप्ता या संज्ञा तद्विधायकत्वेन समासग्रहणस्य चरितार्थतया नियामकत्वानुपपत्तेः । न चेष्टापत्तिः । मूलके-नोपदशम्' इत्यादिवाक्ये कृदन्तत्वादतिव्याप्त्यापत्तेः पूर्वसूत्रक्लृप्तार्थकस्यैवानुवृत्तौ तु पूर्वसूत्रे यथाऽर्थवान् यः शब्दस्तस्यैवार्थवत्पदबोध्यं तथोत्तरसूत्रेऽपि वाच्यमिति कर्मधारयोऽप्यावश्यकः ।

किञ्च 'दशदाडिमानि' इत्यादि यदर्थवद्ग्रहणव्यावर्त्यमुक्तन्तदपि कर्मधारयपक्षे सङ्गच्छते । अन्यथा तस्य समुदायस्य नियमेनैव व्यावृत्तौ तस्यार्थवद्ग्रहणव्यावर्त्यत्वानुपपत्तिः । अश्राद्धभोजीत्यादीनान्तु "सुडनपुंसकस्य" इति ज्ञापकेन साधुत्वं बोध्यम् । *अत्र भाष्य इति* । वाक्यव्यावृत्तिपरभाष्य इत्यर्थः । *सुबन्तानामित्यनेनेति* । अस्य 'बहुपटव' इत्यादिसंग्रहायेत्यादिः । अत्र प्रातिपदिकसंज्ञाभावेऽपि न क्षतिरिति तु न वाच्यम् , वकाराकारस्य 'चित' इत्यनेनोदात्तत्वापत्तेः । तदुक्तं भाष्ये । 'तुल्यजातीयस्य नियमः । कश्च तुल्यजातीयः । यथाजातीयकानां समासः । कथञ्जातीयकानां समासः ? सुबन्तानाम्' । यद्यर्थवत्समुदायमात्रविषयको नियमः स्यात्तदा बहुपटव इत्यादीनां व्यावृत्तिः स्यात् । अत्र हि द्योत्येनार्थेन बहुजर्थवान् प्रकृतिस्तु वाच्यार्थेनार्थवतीति स्पष्टमेव ।

---

(१) अत्र नियमाकारश्चेत्थम् । स्वातन्त्र्येण प्रयोगार्हार्थवत् पूर्वावयवकः तादृशार्थवदुत्तरावयवकः अर्थवांश्च यः समुदायः तस्य चेत्तर्हि समासस्यैव । केचित्तु । स्वघटकत्वं, स्वोद्देश्यकार्थवद्घटकत्वं, एतदुभयसम्बन्धेन प्रत्ययाविशिष्टाघटितभिन्न स्वघटितस्य चेत् तर्हि समासस्यैव इति कथयन्ति ।

कैयटेन स्पष्टमेवोक्तम् । तेन 'गोवित्ययमाह' इत्यादौ गोइत्यादीनां सुबन्तत्वाभावे ऽपि न समुदायस्य प्रातिपदिकत्वम् । अनुकरणस्यानितिपरस्यापि प्रयोगसत्त्वेन तावन्मात्रस्यापि पृथक्प्रयोगार्हत्वात् 'बहुपटव' इत्यादौ प्रातिपदिकत्वसिद्धये स्वातन्त्र्येणेति ।

तत्र पूर्व इत्याक्षिप्तपरेषामपि स्वातन्त्र्येण प्रयोगार्हार्थवतामेव ग्रहणात् 'पुत्रकाम्या' इत्यादौ न दोषः । अत एवाङ्गसञ्ज्ञासूत्रे भाष्ये "प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्" इति परिभाषायाः फलनिरूपणावसरे 'देवदत्तो गार्ग्यः' इति समुदायस्य तदन्तत्वेन प्राप्तप्रातिपदिकसञ्ज्ञाभावः फलत्वेनोक्तः । यथाश्रुतमूलोक्तनियमे तु नियमेनैव तत्र तदप्राप्त्या भाष्यासङ्गतिः स्पष्टैव । एतेन 'वृषण्वसुः?' इत्यादौ पूर्वभागस्य भत्वात्पूर्वो भागःपदमित्ययुक्तमित्यपास्तम् ।

---

ननु सुबन्तत्वेनापि समाससामान्यसाजात्यं वक्तुमशक्यम् 'अश्वक्रीती' इत्यादौ सुबुत्पत्तेः प्रागेव गतिकारकोपपदानामित्यनेन समाससंज्ञाप्रवृत्तिबोधनादत आह—*भेदसंसर्गद्वारकार्थवन्त इति* । प्रातिपदिकसंज्ञायोग्यावयवानां शब्दानाम्पृथक् प्रयोगे सतीतरसंसर्गाकाङ्क्षा भेदसंसर्गः स द्वारभूतो यस्य विशिष्टार्थवत्त्वस्य तद्युक्तानामित्यर्थः । समासे वाक्यीयेनैवार्थेन विशिष्टार्थवत्त्वम् । बहुपटव इत्यादौ तु तथा नेति भावः । 'पचतभृज्जता' 'खादतमोदता' इत्यादिसमासस्यापि दर्शनेनोक्तार्थं लक्षणाया आवश्यकत्वमिति च सूचितम् ।

मूलोक्तनियमे पूर्वोभागः पदमित्युक्तं तस्य यथाश्रुतार्थकत्वे 'गवित्ययमाह' इत्यादौ पूर्वभागस्य पदत्वाभावान्नियमाऽप्राप्त्याऽतिप्रसङ्ग इत्याशङ्कां वारयितुमाह—*तेनेति* । पदशब्दस्य निरुक्तार्थकरणेन । अनुकरणस्य स्वातन्त्र्येण प्रयोगार्हत्वमुपपादयति । *अनुकरणस्येति* । *स्वातन्त्र्येणेतीति* । एतद्धटकबहुचो न पूर्वोक्तस्वातन्त्र्यमिति भावः । विभक्तीतरापारतन्त्र्यमत्र स्वातन्त्र्यमिति तत् स्तम्बेरम इत्याद्यसङ्ग्राहकतया न्यूनम् । *पुत्रकाम्येति* । 'अप्रत्ययात्' इत्यनेन काम्यजन्तादकारप्रत्ययं टाप् । *न दोष इति* । उत्तरभागस्य निरुक्तस्वातन्त्र्यविरहात् । न च कृदन्तत्वात् सिद्धिः । परत्वान्नियमेन बाधप्रसङ्गात् । *अत एव* । उक्तस्यैव नियमस्याभिप्रेतत्वादेव । मूलस्थपदपदस्योक्तार्थकरणे तु भाष्यासङ्गतिरिति सूचयितुं *यथाश्रुतेति* । *एतेन* । पदशब्दस्योक्तार्थकरणेन ।

वाक्यस्य नेति। प्रातिपदिकत्वे हि सुपः श्रवणानापत्तिः। 'पिण्डीम्' इत्यादौ वाक्यैकदेशप्रयोगेऽलुक्समासे चाङ्गाधिकारविहित-सुप्प्रत्ययनिमित्तककार्याणां सुबादेशानाञ्च चारितार्थ्यं विकल्पेन समासविधानञ्च स्वराद्यर्थमिति भावः। शशशृङ्गादिपदानाञ्च बौद्धे शशशृङ्गादौ शक्तिरितिपूर्वेणैव प्रातिपदिकत्वं सिद्धम्। स्वप्नाद्यनुरो-

---

*सुपः श्रवणानापत्तिरिति*।

ननु सर्वत्र वाक्यस्यैव प्रयोगाद्वाक्यावयवसुपां लोपेन चेदपहार-स्तदाङ्गाधिकारविहितानां सुब्निमित्तकार्याणां सुबादेशानाञ्च वैयर्थ्या-पत्तिरत आह—*पिण्डीमित्यादाविति*। ननु वाक्येऽपि चेल्लोपस्तदा वाक्यस्यापि समाससमानानुपूर्वीकत्वापत्तौ समासविकल्पविधानम-नुपपन्नमत आह—*विकल्पेनेत्यादि*। स्वरादीत्यादिना एकार्थीभा-वनिमित्तकसर्वकार्याणां विशेषणाद्ययोगानां परिग्रहः। नन्वर्थवत एव चेत्प्रातिपदिकसंज्ञा तदा शशशृङ्गादिशब्दानां लौकिकार्थाभावा-त्प्रातिपदिकसंज्ञानापत्तिरित्यत आह-*शशशृङ्गादिपदानामिति*। एतेन तेष्वपि पूर्वसूत्रेणैव प्रातिपदिकसंज्ञेति न तेषु प्रातिपदिकसंज्ञासिद्ध्यर्थं स-मासग्रहणं विध्यर्थमिति शङ्कनीयमिति भावः।

ननु बौद्धपदार्थानङ्गीकारेऽपि शशशब्दस्य तादात्म्यसम्बन्धावच्छि-न्नशशीयनिष्ठप्रकारतानिरूपितविशेष्ये लक्षणया तादृशविशेष्याभेदावगा-हिबोधजनकोऽयं शब्दो भविष्यति। तादृशप्रकारतानिरूपितविशेष्यता चान्यथाख्यातिनिरूपिता प्रसिद्धैवेत्यत आह-*स्वप्नाद्यनुरोधेनेति*। अत्रानुभूतानाम्पदार्थानां न कदाचिदपि सत्ता। प्रबोधोत्तरमुपलम्भात्। यस्य हि व्यावहारिकी सत्ता स पदार्थो घटादिरनुभूयत एव। न चात्रापि संस्कारविषयपदार्थानामन्यथाख्यातिरूपमेव ज्ञानं किं न स्या-दिति वाच्यम्।

विप्र पृथ्व्यादिचित्तस्थन्न बहिष्ठङ्कदाचन॥
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते।

इति कूर्मपुराणीयस्मृतेर्वासनारूपेणान्तःस्थितानामेव पदार्थानां वि-लक्षणान्तःकरणस्य वृत्तिरभ्युपेयते, न तु तेषां पदार्थानां कदाचिदपि सद्भा-वः। चाकचिक्यादिदोषवशात् यत्र 'इदं रजतम्' इति भ्रमो जायते तत्र तद्वि-षययोर्विशेषणविशेष्ययोर्व्यावहारिकी सत्ताऽभ्युपेयेति न्यायमतरीत्या स्वीकारो नोचितः। ज्ञानलक्षणप्रत्यासत्तेरनङ्गीकारात्। तत्तद्विशेष्यानु-योगित्वतत्तत्प्रतियोगिकत्वविशिष्टसम्बन्धाननुभवाच्च। किन्तु चित्तस्य द्रव्यरूपपरिणाम एव वृत्तिरिति व्यवह्रियते। चित्तमेवेन्द्रियप्रणाल्या नि-

धेन च बौद्धपदार्थस्याऽऽवश्यकत्वम् । अक्षौहिणीरथन्तरादिपदेषु अ
यवानामत्यन्तनिरर्थकानामप्यन्यत्र दृष्टार्थारोपेण प्रातिपदिकत्व
त्पत्त्यादिना यथाकथञ्चित्साधुत्वात्तत्वान्वाख्यानं बोध्यम् ॥

---

गत्य विषयेण संयुज्य विषयवासनावशात्तथा परिणमते । तस्य च
रिणामस्य प्रातिभासिकी सत्ता । यावदधिष्ठानस्य व्यावहारिकसत्ता
शिष्टं यच्छुक्तित्वादि तत्तद्रूपेण साक्षात्कारो न भवति तावत्स तिष्ठ
तादृशसाक्षात्कारे सति स निवर्त्तते । स्वप्ने तु विषयेन्द्रियसन्निकर्ष
व्यभावेनान्तःकरणस्य निर्गमनासम्भवाद्बौद्धस्यैव भानमिति बौद्धस्वी
र आवश्यक इति । अधिकं मञ्जूषायां द्रष्टव्यम् ।

नन्वक्षौहिणीरथन्तरादिष्ववयवानामत्यन्तनैरर्थक्यात्प्रातिपदिकत्व
पत्तौ सुबुत्पत्त्यभावेन समासानापत्तौ समुदायस्य साधुत्वन्न स्यादत
ह-*अक्षौहिणीरथन्तरादिपदेष्विति* । *अन्यत्र दृष्टार्थारोपेण*
क्षान् दीव्यतीत्यादौ ऊहो, मनुष्याणामित्यादौ च प्रसिद्धानामर्थानामा
णावयवस्य साधुत्वार्थं तदर्थकत्वकल्पनेन प्रातिपदिकत्वादिकमुपपादनं
जहत्स्वार्था वृत्तिरिति पक्षे मण्डपकुशलादिपदेऽप्ययमेव प्रकार ऊहनी

अत्र नैयायिकमतानुसारिणः । अर्थवत्त्वमत्र शक्तिलक्षणान्यतरस
न्धेनार्थोपस्थापकत्वमेव । तच्च धातुप्रत्यययोरप्यस्तीति पर्युदासद्व
प्रत्ययान्ते च प्रकृतिप्रत्ययसमुदायरूपेऽर्थवत्त्वाभावान्नातिव्याप्तिरिति
यान्तपर्युदासोऽनावश्यकः । अव्युत्पन्नडित्थादिकमेतत्सूत्रोदाहरणम् ।
कृत्तद्धितेति सूत्रस्य । अव्युत्पन्नप्रातिपदिकपक्षसद्भावे चैतत्सूत्रमवे ज्ञाप
कृदन्ते 'लिट्' 'घुक्' इत्यादौ धातुभेदाभावात्, कृदन्ते 'पक्ता' 'का
इत्यादिसमुदायेऽपि निरुक्तार्थवत्त्वाभावादप्राप्ता सा संज्ञोत्तरसूत्रेण
धीयते । अस्यापत्यमित्यादौ प्रत्ययभेदाभावात्तद्धितान्ते 'गार्ग्य' इ
दौ च निरुक्तार्थवत्त्वाभावात्तद्धितान्तसमुदायेऽपि साऽऽरब्धा । एवमेव
जपुरुषादिसमासे समुदायेऽप्राप्ता सा विधीयते । समुदायस्य च श
भावे "कृत्तद्धित" इति सूत्रमेव ज्ञापकम् । यतः समासपदघटितसू
गवान् पाणिनिः प्रणिनाय । अत्र कृत्तद्धितग्रहणं प्रत्ययग्रहणपरिभा
तदन्तपरम् । न च संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणेत्यस्या अ
इति वाच्यम् । तज्ज्ञापकेन" सुप्तिङन्तम् " इति सूत्रस्थान्तशब्देन
यग्रहणपरिभाषायाः काचित्कत्वस्यैव ज्ञापनात् ।

न च विशिष्टस्य शक्त्यभावे 'बहुपटत्र' इत्यादिसमुदायस्य प्रा
दिकसंज्ञा न प्राप्नोतीति वाच्यम् । प्रत्ययग्रहणपरिभाषायाः कृदन्त प

वृत्तिः। तद्धितपदन्तु स्वाव्यवहितपूर्ववृत्तित्व स्वाव्यवहितोत्तरवर्त्तित्वान्यतरवत्त्वसम्बन्धेन तद्धितविशिष्टे लाक्षणिकमिति स्वीकारात्। न च 'अणुपगुः' इति समुदायेऽतिव्याप्तिरिति वाच्यम्। व्याकरणप्रसिद्धसमुदायस्यैव लक्ष्यत्वात्। 'सर्वके' इत्यादिसङ्ग्रहस्तु तन्मध्यपतितन्यायेन सर्वसाधारणः। न चैवम्मूलकेनोपदंशमित्यादिसमुदायस्य "कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्" इति परिभाषया कृदन्तत्वात्प्रातिपदिकत्वापत्तिरिति वाच्यम्। "गतिरनन्तरः" इति सूत्रस्थानन्तरपदस्य कचित् कृद्ग्रहणे गतिकारपूर्वस्यापि ग्रहणमित्यत्रैव ज्ञापकत्वकल्पनात्। दर्शिता चेयं रीतिर्वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिज्ञापकस्य "आदेच उपदेशे" इतिसूत्रस्थोपदेशपदस्य 'लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्व एव ज्ञापकत्वम्' इति वदद्भिर्नवीनैः।

ननु समासादिरूपसमुदायस्य शक्तिः "समर्थः पदविधिः" इति सूत्रकरणेन भगवता पाणिनिना दर्शिता, सा कथमपलप्यत इति चेन्न। समुदायशक्त्यभावेऽपि 'नीलोत्पलम्' इत्यादौ समासप्रयोजकविग्रहवाक्येऽवयवानां योऽर्थः प्रसिद्धस्तत्तदर्थविशिष्टानान्तेषां व्यपेक्षालक्षणसामर्थ्यविशिष्टानामेव "समर्थः पदविधिः" इतिपरिभाषाविषयतास्वीकारात्। व्यपेक्षालक्षणसामर्थ्यञ्च "इसुसोः सामर्थ्ये" इति सुप्रद्धिमेव। किञ्चैकार्थीभावः किं वृत्तित्वसमासत्वान्यतरावच्छेदेन, तत्सामानाधिकरण्येन वा। नाद्यः। 'परार्थाभिधानं वृत्तिः' इतिलक्षणप्रणयनेनावयवार्थातिरिक्तसमुदायार्थ एव समुदायशक्तेरभ्युपेतव्यतया कर्मधारये तदनुपपादनात्। नान्त्यः। पङ्कजादियोगरूढशब्दस्थले रथन्तरादिशुद्धरूढस्थले च यत्र समुदायशक्तिः कोशादिसुप्रसिद्धा तत्र समुदायशक्तेरस्माभिरपि स्वीकारात्। सर्वनामादिशब्दानां समुदायात्मकानां व्याकरणप्रसिद्धिमाश्रित्य स्वीकाराच्च।

न चैकार्थीभावाभावे राजपुरुष इत्यादौ राजादिपदार्थस्य नामार्थतया पुरुषादिपदार्थे भेदसम्बन्धेनान्वयोऽनुपपन्न इति वाच्यम्। तेषु राजादिपदानां राजसम्बन्ध्यादिलाक्षणिकतयाऽभेदेनैव सम्बन्धेनान्वयोपगमात्। नन्वेकार्थीभावानुपगमे 'ऋत्विजो हविःशेषान्भक्षयन्ति' इति प्राप्तभक्षानुवादेन 'वषट्कर्त्तुः प्रथमभक्ष' इत्यनेन प्राथम्यविधाने उद्देश्यविधेयभावेन स्वघटकपदार्थान्वयबोधाजनकत्वरूपस्यैकप्रसरत्वस्य भङ्गापत्त्या न भक्षानुवादेन प्राथम्यविधानं, किंतु प्राथम्यविशिष्टभक्षणस्यैव विधानं शाब्दम्। प्राप्ताप्राप्तविवेकन्यायेन तु प्राथम्यविधाने पर्यवसानमिति मीमांसायां निर्णीतम्। एतावानेव तु विशेषस्तेषां—

सर्वत्रैव तु वाक्यार्थो लक्ष्य एवेति संस्थितः।

अधिकारोऽयमिति । सञ्ज्ञाधिकार इत्यर्थः । सञ्ज्ञात्वाव

---

इति मतम् । अस्माकन्तु विशिष्टस्य शक्यत्वमिति तदेतद्विरुध्येतेति चे
समासघटकपदार्थनिष्ठविधेयतानिरूपितोद्देश्यतासम्बन्धेन शाब्दबोधे
त्समासघटकपदजन्योपस्थितेः प्रतिबन्धकतया समुदायशक्त्यभावे
प्राथम्यस्य विधेयत्वास्वीकारेण तादृशैकप्रसरत्वस्योपपत्तेः । न चैव
तिबन्धकत्वकल्पनमधिकमिति शङ्क्यम् । बहुषु स्थलेषु विशिष्टस्य श
कल्पनापेक्षया तादृशप्रतिबन्धकस्वीकारस्योचितत्वात् । समर्थसू
चायमर्थः । पदसम्बन्धी यो विधिः स साक्षात्परम्परया वा स्वप्रयोज
षयतानिरूपितविषयताप्रयोजकत्वरूपसामर्थ्यवत्पदाश्रितो बोध्य ।
समुदायशक्त्यभावादेव वाक्यस्य प्रातिपदिकत्वाप्राप्त्या नियमस्वी
फलाभावोऽपि बोध्यः । व्यवहाराद्वाक्ये प्रथमं शक्तिग्रहेऽपि तत आ
पोद्वापाभ्यां पदानां पदार्थेषु शक्तिग्रहे प्राथमिकशक्तिग्रहेऽप्रामाण्यं
लभ्यते । प्राथमिकग्रहेऽप्रामाण्यकल्पनमन्यत्राक्लृप्तमिति तु न वाच्य
प्रथमतश्चन्द्रेऽल्पपरिमाणग्रहेऽपि ज्योतिःशास्त्रेणाधिकपरिमाणग्रहे
त्पन्नज्ञानेऽप्रामाण्यग्रहस्य सुप्रसिद्धत्वात् ।

न चैकार्थीभावस्वीकारे राजपुरुषादिपदार्थैकदेशराज्ञि पदार्थै
शत्वान्न विशेषणान्वयो, व्यपेक्षापक्षे तु स्यादिति वाच्यम् । एकपदार्थ
ष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधेऽन्यपदार्थनिष्ठविशेष्य
निरूपितप्रकारतासम्बन्धेन ज्ञानस्य प्रतिबन्धकतया तादृशापत्त्यभावा
न चैतादृशप्रतिबन्धकाभावस्य शाब्दबोधकारणतायां तत्सामान्या
न्नविषयकप्रत्यक्षप्रतिबन्धकतायामाधिक्यमिति वाच्यम । एकार्थीभा
वादिमते पदार्थैकदेशत्वं स्वरूपसत्, न समासाघटकपदार्थप्रकारकशा
बोधे प्रतिबन्धकं । व्यधिकरणत्वात् । किन्तु एकपदार्थनिष्ठप्रकारतानिरू
तविशेष्यतासम्बन्धेन शाब्दबोधे पदान्तरजन्योपस्थितेर्मुख्यविशेष्य
सम्बन्धेन कारणतया तदभावान्नापत्तिरिति वक्तव्यम् । न चैनावता
बाहः । अवयवशक्तिग्रहसहकृतसमुदायशक्त्या विशिष्टार्थोपस्थिति
तत्रावयवशक्तिग्रहजन्यावयवार्थोपस्थितेरपि सत्त्वात्तथा प्रतिबन्धप्रा
कभावस्य भवतामप्यावश्यकत्वात् । अधिकमन्यत्र स्पष्टमिति प्राहुः ।

ननु प्रत्ययशब्दस्य शुद्धाधिकारत्वे "स्वं रूपम्" इति शास्त्रवर्ति
ग्रिमसूत्रैः प्रत्ययशब्दस्यापि विधानापत्तिरत आह—* संज्ञाधिकार
एवञ्च "अशब्दसंज्ञा" इति निषेधान्न स्वं रूपमित्यस्योपस्थितिरिति भ
ननु पूर्वोच्चारितशब्देन संज्ञानिर्देशात्कथं संज्ञात्वावगतिरित्यत आ

मस्तु व्याख्यानात्। विकारागमानान्तु न तत्सञ्ज्ञा 'प्रत्यय' इति महासञ्ज्ञया स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकस्यैव तत्सञ्ज्ञकत्वात्। स्वप्रकृत्यर्थत्वञ्च धातुपाठकोशादौ तमुच्चार्य्य बोधितत्वम्। अत एव नभवधाद्यादेशानां न सञ्ज्ञा। तेषां स्थान्यर्थेनैवार्थवत्त्वं न तु स्वार्थोऽस्ति। अत एव कोशादौ तदर्थाकथनम्। एतदर्थमेव भाष्ये 'स्त्री-

---

*संज्ञात्वावगम इति*। *व्याख्यानादिति*। उत्तरसूत्रेषु प्रथमान्तप्रत्ययपदोपस्थितौ विधेयसामानाधिकरण्येन निर्देशात्संज्ञात्वावगममूलकात्। विकारागमेषु संज्ञात्वप्रसङ्गं वारयति—*विकारागमानान्त्विति*। बहुवचनमत्र विकारागमानां बहुत्वात्तदभिप्रायेण। *महासंज्ञयेति*। एतद्बलादेव ण्यर्थान्तर्भावलाभः। *स्वस्वप्रकृत्यन्यतरार्थेति*। स्वार्थप्रत्यायकत्वं "धातोः" इतिसूत्रविहितसनि स्पष्टम्। स्वप्रकृत्यर्थप्रत्यायकत्वं स्वार्थिकेऽत्यन्तस्वार्थिके च प्रसिद्धम्।

ननु यदर्थे द्योत्ये वाच्ये वा यस्य विधानं तस्य तदर्थकत्वकल्पनं, न चैतत्प्रकृते सम्भवति, अर्थविशेषे प्रकृतिविधानाभावादत आह—*स्वप्रकृत्यर्थत्वञ्चेति*। अत्रापि स्वार्थिकस्य प्रकृत्यर्थद्योतकत्वम्, अत्यन्तस्वार्थिकस्य तु द्योतकत्वाभावेऽपि प्रकृतिप्रयोज्यविषयताविलक्षणविषयत्वाप्रयोजकत्वरूपस्य प्रकृतिसाधारणधर्मस्याश्रयतया गौणं प्रकृत्यर्थप्रत्यायकत्वमिति विशेषः। *तमुच्चार्येति*। अर्थविशेषबोधकशब्दमुच्चार्येत्यर्थः। एवमनर्थकानां विकारागमानामन्वर्थसंज्ञया व्यावृत्तिं कृत्वा सार्थकानामपि सञ्ज्ञां वारयति—*अत एवेति*। अन्वर्थसंज्ञाविधानादेवेत्यर्थः। *नभवधाद्यादेशानामिति*। "नाभि नभं च"। "हनश्च वधः"। आदिना "विरामो विरश्च" इत्यस्य परिग्रहः। *स्थान्यर्थेनैवेति*। स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वमिति सिद्धान्तात्। एवकारव्यवच्छेद्यमाह—*न त्विति*। स्वः। स्वीयः।

ननु स्वार्थत्वाभावेऽपि उक्तप्रकृत्यर्थत्वतुल्यमर्थवत्त्वं स्यादत आह—*अत एवेति* स्थान्यर्थेनार्थवत्त्वादेवेत्यर्थः। *तदर्थेति*। तेषां पृथगर्थेत्यर्थः। अत एव नभ्यशब्दान्नाभिहित इत्येव बोधो न तु नभहित इति। न चैतावताप्युक्तप्रकृत्यर्थत्वव्यावृत्तिः कथमिति वाच्यम्। तत्र प्रकृतिशब्दस्य प्रत्ययविधानावधिपरतया यस्मात् यस्य विधानं तत्प्रयोज्यविषयताविलक्षणविषयत्वाप्रयोजकत्वस्य साधारणधर्मस्य तत्राभावेन न प्रकृत्यर्थार्थकत्वस्य व्यवहार इति भावः। च्ल्यादेशानामपि च्लिनिष्ठनिरुक्तप्रत्ययत्वाश्रयादेशतया स्थानिवद्भावेन प्रत्ययत्वं सुलभम्। अत्रार्थे भाष्यसम्मतिमाह—*एतदर्थेति*। ननु विग्रहवाक्यादेतादृशार्थप्रतीतावपि

यमर्थं प्रत्याययन्ति' इति विग्रहे स्वीयपदोपादानम् । भाष्यप्रामा-
ण्याच्च तदर्थान्तभावेण प्रत्ययशब्दस्य वृत्तिः ।

यत्तु विकारागमादेशानां देशांशे निराकाङ्क्षत्वात् "परश्च" इत्य-
स्यानुपस्थितौ तत्सन्नियोगशिष्टप्रत्ययसञ्ज्ञाया अप्रवृत्तिरिति तन्न।
श्नमकज्बहुच्स्वप्रवृत्त्यापत्तेः । किं च 'लविषीय' इत्यत्र विशेषविहित-
त्वात्परत्वाच्च पूर्वं सीयुटि ततो लादेशे प्रत्ययसञ्ज्ञासन्नियोगेनै-
विधीयमानमाद्युदात्तत्वं सीयुट एव स्यादत 'आगमानुदात्तत्वं वक्त-
व्यम्' इति "आद्युदात्तश्च" (पा०सू०३।१।३) इति सूत्रस्थभाष्यस-
ङ्गतिः । लस्थानिकत्वेन देशांशे निराकांक्षत्वेन "परश्च" इत्य-
स्याप्रवृत्तौ "प्रत्ययः" (पा०सू०३।१।१) इत्यस्याप्यप्रवृत्तौ तत्सन्नि-
योगकथनासङ्गतेरिति दिक् ।

---

प्रत्ययपदात्कथंतदर्थप्रतीतिरत आह--*भाष्यप्रामाण्यादिति*।

प्राचामुक्तिं खण्डयति—*यत्त्विति*। *अप्रवृत्त्यापत्तेरिति* । प्र-
देशाकांक्षाया अन्यत एव निवृत्तेः । ननु "तृणह इम्" इति निर्देशा-
कचः कप्रत्ययबाधकतया बहुचः "चितः सप्रकृतेर्बह्वकजर्थम्" इ-
भाष्यात्प्रत्ययत्वज्ञानम्भविष्यतीत्यत आह—*किञ्चेति* । विशेषवि-
तत्वान्निरवकाशत्वे सत्येव बाधप्रयोजकमित्यत आह—*परत्वादिति*।
न च लादेशाप्राप्तियोग्ये विषये सीयुटश्चारितार्थ्याभावेन परत्वात्सी-
युटीत्यसङ्गतमिति वाच्यम् । लादेशपदस्य लादेशसामान्यबोधकत्वे-
लविषीयेत्यत्र लादेशस्येट एव प्रवृत्त्या तदप्राप्तियोग्ये सीयुटश्चारि-
तार्थ्यं प्रसिद्धमेवेत्याशयात् ।

यद्यपि लादेशानाम्प्रत्ययत्वं स्थानिवद्भावेन सिद्धन्तथाप्यधिकृत-
"प्रत्यय" इत्यस्य तत्रासम्बन्धे मानाभाव इत्याशयः । अथवा परत्वं
त्यस्य "आद्युदात्तश्च" इति सूत्रापेक्षया परत्वादित्यर्थः । लादेशानिमि-
त्तोदात्तत्वस्य 'यात' इत्यादिरवकाशः । 'शयिषीष्ट' इत्यादौ लसार्व-
धातुकानुदात्तत्वात्सीयुट् सावकाशः । प्रकृते चोभयप्रसङ्गे परत्वात्सीयु-
डित्यर्थः । लावस्थायान्तु न स्वरः, तस्यानच्कत्वात् । न च पूर्वं सीयुटि अ-
निर्दिश्यमानत्वान्न समुदायस्य, व्यवहितत्वान्न निर्दिश्यमानस्य, इत्यादेशा-
प्राप्तिरेव स्यादिति वाच्यम् । "धातोः" इत्यस्य विहितविशेषणत्वाङ्गीका-
राद् व्यवहितेऽपि प्रवृत्तेः ।

परश्च । गुप्तिज्किद्भ्यः (पा०सू०३।१।५) इत्यादावपादानत्वासम्भवाद्दिग्योगलक्षणा पञ्चमी । तत्र परः पूर्वो वेत्यत्र नियमेनाध्याहारे प्रसक्ते पर एवेति नियमार्थमिदम् । "गापोष्टक्" (पा०सू० ३।२।८) इत्यादावपि षष्ठ्यर्थ आनन्तर्यं पूर्वपरसाधारणमित्यनियमोऽस्त्येव । अत्र "तस्मात्" इति परिभाषोत्तराङ्गविकला प्रवर्तते इत्यव्यवहिता एव प्रत्ययाः । न चैवं षष्ठ्यंशविकलं संपूर्णं सूत्रमुपतिष्ठतां, किं परश्चेत्यनेनेति वाच्यम् । प्रकृत्यर्थमात्रविवक्षायां केवलप्रकृतेः पच् पत् इत्यादेः प्रयोगो मा भूदिति प्रत्ययः परो भवत्येवेति नियमार्थत्वात् । तेन 'न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्ययः'

---

*अपादानत्वासम्भवादिति* । गुपादिभ्यः प्रत्ययस्य विश्लेषाभावात् । *तत्र* तस्यां सत्याम् । अस्यैतदुपपत्तये इति शेषः । ननु 'गापोष्टक्" इत्यत्र पञ्चम्यनिर्देशादादेशत्वापत्तिरत आह--*गापोष्टेति* । अस्य प्रत्ययाधिकारे पाठेन प्रत्ययत्वज्ञाने "षष्ठी स्थानेयोगा" इति सूत्रस्याप्रवृत्तिकल्पने षष्ठ्यर्थाकांक्षायां सत्यामनन्तरपदाध्याहारेण तन्निरूपितसम्बन्धार्थकत्वमस्या इति भावः । स च सम्बन्धः स्वाधारदेशसम्बन्धिदेशाधिकरणकसम्भावितस्थितिकर्तृत्वरूपः । व्यवधानेन परत्वापत्तिं वारयति-*अत्रेति* । अत्र तत्तत्प्रत्ययविधायकयोगे । न च यत्र तस्मादितिपरिभाषोपस्थितिः, तत्राव्यवधानलाभेऽपि गापोष्टगित्यादावव्यवधानलाभः कथमिति वाच्यम् । अत्रापि धातोरित्यस्यानुवृत्त्या गापोरनन्तरो धातोरव्यहित इत्यर्थकल्पनेनादोषात् । *उत्तराङ्गेति* । उत्तरस्येत्यंशेत्यर्थः । *षष्ठ्यंशेति* । तदर्थस्यासम्भवात् । तस्मादिति सूत्रोपस्थितौ "सुपि च" "बहुवचने झल्येत्" इति सप्तमीनिर्देश एव प्रमाणम् । यदि पूर्वशब्दाध्याहारेण प्रत्ययः पूर्वः स्यात्तदा सप्तमीनिर्देशोऽनुपपन्न एव स्यात् ।

ननु "विभाषा सुप" इति सूत्रे पुरस्ताद् ग्रहणेन बहुजेव पूर्वो नान्य इति नियमेनान्यः प्रत्ययः पूर्वो न भविष्यति । न च यत्र षष्ठीनिर्देशो गापोष्टगिति तत्र मध्येऽपि प्रत्ययोत्पत्तिः स्यादिति वाच्यम् । "अव्ययसर्वनाम्नाम्" इति सूत्रे प्राक्टेर्ग्रहणेनायमेव मध्ये नान्य इति नियमेन मध्यदेशस्यापि नियमनात् । एवं सति परिशेषात्पर एव भविष्यति किं षष्ठ्यंशविकलसूत्रोपस्थानेनेति चेन्न । विधेयतया प्रधानीभूतयोर्बहुजकचोर्नियामकतयापि पुरस्ताद्ग्रहणस्य प्राक्टेर्ग्रहणस्य च चारितार्थ्यसम्भवेन प्र-

इति सिद्धम्। अनुकरणे तु अभेदविवक्षया ऽर्थवत्त्वाभावात्प्रातिप-दिकत्वाभावेन प्रकृतित्वाभावात् 'गविल्ययमाह' इत्यादौ नानुपपत्तिः।

प्रकृतित्वं प्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्तत्वम्। अयं न्यायः शास्त्राबोधितान्यतरप्रयोगविषयः। अत एव "लिट्'इयान्'" इत्यादौ न दोषः। अत्र प्रकृतिविशेषोद्देशेनैव प्रत्ययानां विधानात् 'नापि केवलः' इति न्यायमूलकम्। एतन्मूलकमेव पठ्यते "अपदं न प्रयुञ्जीत" इति। अपरिनिष्ठितमिति तदर्थः। परिनिष्ठितत्वञ्चाप्रवृत्तनित्यवि-ध्युद्देश्यतावच्छेदकानाक्रान्तत्वम्। निहते तिङन्तादावव्याप्तिवारणा-

---

त्ययान्तरनियामकत्वे व्यापाराभाव इत्याशयात्। *इति सिद्धमिति* परत्वस्य सावधिकतयाऽवध्याकाङ्क्षायां यस्माद्विधानं ततः परो भव-त्येवेति फलितमिति शास्त्रेण च धात्वादेर्विधानात्केवलस्य 'पच्' 'पठ्' इत्यस्य प्रयोगो न भविष्यति।

नन्वेवं 'गविल्ययमाह' इत्यस्य प्रयोगो न स्यादत आह—*अनु-केति*। *अभेदविवक्षयेति*। तदा हि सादृश्याख्यसम्बन्धेनोपस्थितिर्न वृत्त्याख्यसम्बन्धेन। प्रकृते च वृत्तिरूपसम्बन्धेनार्थबोधकतया लोके दृष्टस्यैव ग्रहणमिष्यत इति भावः। *प्रातिपदिकत्वाभावेनेति*। अस्वाद्यनुत्पत्तेरिति शेषः। एवञ्च यत्फलितन्तदाह—*प्रकृतित्वाभावादि-ति*। प्रत्ययविधावित्यस्य यदिति शेषः। अस्योद्देश्यतावच्छेदकेऽन्वय-गमकत्वात्समासः। ननु प्रत्ययः परो भवत्येवेत्यस्य यत्र प्रत्ययस्य लु-तत्र नियमभङ्गस्तत्परिहारमाह—*अयं न्याय इति*। *अन्यतरेति* प्रकृतिप्रत्ययान्यतरेत्यर्थः। एतेन यत्र प्रकृतेर्निवृत्तिस्तत्रापि 'व्यति-' 'इयान्' इत्यादौ न नियमाव्याप्तिः।

ननु 'अपदन्न प्रयुञ्जीत' इति यथा वाचानिकं तथा 'न केवला प्रकृतिः' इति नियमस्यापि वाचनिकत्वमेवास्त्वित्यत आह—*एतदिति*। एत-न्मूलकमेव 'न केवला प्रकृतिः' इति नियममूलकमेवेत्यर्थः। ननु परिनि-ष्ठितपदार्थाप्रसिद्ध्याऽपदपदार्थाप्रसिद्धिरित्यत आह—*अप्रवृत्तनित्य-विधीति*। अप्रवृत्तो यो नित्यविधिस्तस्य यदुद्देश्यतावच्छेदकं तदना-क्रान्तत्वमिति विवक्षितम्। न च 'गन्ता' इत्यादावप्रवृत्तो यो नित्यविधिः आर्द्धधातुकेति तस्य यदुद्देश्यतावच्छेदकं वलाद्यार्द्धधातुकपरधातुत्वं त-दाक्रान्तमेतदिति परिनिष्ठितमेतन्न स्यादिति वाच्यम्। उत्सर्गापवादस्थ-लेऽपवादविषयं परित्यज्यैवोत्सर्गप्रवृत्तिस्वीकारादुपदेशकालावच्छिन्न-त्वानुदात्तत्वावच्छिन्नप्रतियोगिताकभेदविशिष्टधातुपरवलाद्यार्द्धधातु-

याप्रवृत्तेति । वैकल्पिकेडागमोद्देश्यतावच्छेदकाक्रान्ते 'सेद्धा' इत्यादाव्याप्तिवारणाय नित्येतीति दिक् ।

ङ्याप्प्रातिपदिकात् ( पा० सू० ४।१।१। ) समाहारद्वन्द्वः । ननु "परश्च" इत्यनेन प्रकृतेराक्षेपात्प्रातिपदिकाधिकारो व्यर्थः । तिङन्तात्तु न द्वितीयादिः । संख्याऽभावात् । संख्यायास्तिङोक्तत्वा-

---

त्वस्योद्देश्यतावच्छेदकतया तदनाक्रान्तत्वस्य प्रकृते सत्त्वात् । एवमेवान्यत्रापि बोध्यम् ।*सेद्धेत्यादावव्याप्तीति* । न च नित्यपददानेऽपि कथमस्य परिनिष्ठितत्वम् । पूर्वोक्तविशेषणविशिष्टधातुपरवलाद्यार्द्धधातुकत्वसत्त्वादिति वाच्यम् । स्वरत्यादिभिन्नत्वेनापि धातोर्विशेषणीयत्वात् । नन्वस्य निषेधस्य व्यापकतया 'न केवल' इतिवचनस्य च प्रकृतिप्रत्ययमात्रविषयकतयैतन्मूलकतयेत्यसङ्गतमिति चेत् । केवलप्रत्ययप्रकृतिप्रयोगेऽप्यपरिनिष्ठितस्य प्रयोगे प्राप्ते तेन नियमेन तस्य निवृत्तावेकदेशानुमत्या व्यापकस्यापि तन्मूलकत्वमिति गृहाण ।

एकवचनोपपत्तये आह—*समाहारेति* । *प्रकृतेराक्षेपादिति* । परत्वस्य सावधिकत्वात् । न चाक्षिप्तस्य शाब्दे भानाभावेन कथमेतदिति वाच्यम् । अवध्याकाङ्क्षायाः प्रकृते नित्यत्वात्प्रकृतेरिति शब्दस्याध्याहारेण विवक्षितवाक्यार्थपर्यवसानसम्भवात् । *नद्वितीयादीति* । 'पश्य मृगो धावति' इत्यादौ धावतिपदात्कर्मबोधिका द्वितीया स्यात् । न च 'पचति भवति' इत्यत्र तिङन्तात्प्रथमाया अप्यापत्तिसम्भवेन प्रथमादीति वक्तव्ये द्वितीयादीत्यनुपपन्नमिति वाच्यम् । अनभिहिताधिकारे "कर्मणि" इति सूत्रस्य प्रथमोपादानात् ।

*सङ्ख्याभावादिति* । सङ्ख्यान्तराभावादित्यर्थः । गमकाभावेनौत्सर्गिकैकवचनस्याप्यप्रवृत्तेः । एवं सर्वत्र तिङन्तस्य भवतिक्रियाकर्तृत्वसम्भवेन प्रथमाया दुर्वारत्वात्सुबन्तत्वेनैव पदत्वे सिद्धे तिङ्ग्रहणस्याऽऽनर्थक्यमपि सम्भाव्येत । न च तिङर्थसङ्ख्यावच्छिन्ने सुबर्थसङ्ख्यायाः प्रकारतया भानं स्यादिति वाच्यम् । 'दण्डवान्दण्डवान्' इतिवदुद्देश्यतावच्छेदकविधेययोरैक्येन शाब्दबोधासम्भवात् । ननु तस्या एव सङ्ख्यायाः प्रतिपादकः सुप् कथन्न स्यादित्यत आह—*तिङोक्तत्वादिति* । एतेनैकसङ्ख्याया धात्वर्थेऽपरस्यास्तिङर्थसाधनेऽन्वयाभिप्रायेण तिङन्तात्सुबुत्पत्तिः स्यादित्यपास्तम् । न च द्योतकविषये उक्तार्थानामिति न्यायो 'द्वौ ब्राह्मणौ' इत्यादौ यथा न दृष्टस्तथात्रापि स्यादिति वाच्यम् । द्योतकविषयेऽपि क्वचिन्न्यायप्रवृत्तेः स्वीकारात् । अत एव स्त्रीप्रत्ययप्रकरणे 'ष्फेणोक्तेऽपि' इत्यादि वक्ष्यति । वाक्यात्तर्हि सुबुत्पत्तिः स्यादित्य-

च्च । धातुभ्यस्तु न । तिङामपवादत्वात् । तस्येत्यादिसमर्थविभक्तिनिर्देशात्, तमब्विधौ "तिङश्च" इति ज्ञापकाच्च न तेभ्यस्ताद्धितव्यावृत्यर्थ इति चेन्न । तदभावे 'स्वार्थद्रव्यलिङ्गसंख्याकारकप्रयुक्तकार्यैः संस्कृतस्य बहिर्भूतापत्यादियोग' इति "कुत्सिते" (पा० सू० ५।३।७४।) इति सूत्रभाष्योक्तन्यायेन "तस्यापत्यम्" (पा० सू० ४।१।९२।) इत्यादौ तत्संबन्ध्यपत्यमित्याद्यर्थे प्रथमोच्चारितबोध्यात् प्रत्यय इत्यर्थस्य सत्त्वेन च सार्थकतद्धितानां सुबन्तादुत्पत्त्या "अनुदात्तादेः" (पा०सू० ४।३।१४०) इत्यस्य प्राधान्यादुपस्थितसुबन्तविशेषणत्वापत्तौ सर्वस्य विकारः सार्व इत्यत्राञनापत्तेः । "सर्वस्य सुपि" (पा० सू ६।१।१९१) इत्याद्युदात्तत्वात् । तदारम्भकारसामर्थ्यात्तु प्रातिपदिकस्यैव तद्विशेषणमिति न दोषः । सर्वशब्दस्योञ्छादिपाठेनान्तोदात्तत्वात् । स्पष्टञ्चेदमत्र भाष्ये ।

---

पि नाशङ्कनीयम् । स्वघटकसुपा तत्रापि सङ्ख्याया उक्तत्वात् ।

ननु धातुभ्यस्तर्हि स्यादत आह—*धातुभ्य इति* । *अपवादत्वादिति* । विशेषविहितत्वेनेत्यादिः । ननु धातुतिङन्तेभ्यस्तद्धितव्यावृत्त्यर्थं प्रातिपदिकाधिकार इत्यत आह—*तस्येत्यादीति* । तिङन्ताद्धेत्वन्तरेणापि तद्धितं वारयति—*तमब्विधाविति* । *न्यायेनेति* । अनया युक्त्या सुबुत्पत्त्यनन्तरमेव तद्धितोत्पत्तिसम्भावनेति भावः । हेत्वन्तरमाह—*तस्यापत्यमित्यादेरिति* । *उपस्थितेति* । पूर्वोक्तहेतुद्वयेनोपस्थितेत्यर्थः । एवञ्च प्रातिपदिकाधिकाराभावे "अनुदात्तादेः" इत्यस्यानुदात्तादेः सुबन्तादित्यर्थोऽपि सम्भाव्येतेति भावः ।

नचोञ्छादिगणे सर्वशब्दस्य पाठेनाञि कर्तव्ये "सर्वस्य सुपि" इत्येतन्न प्रवर्त्तत इति कल्प्यते, सर्वत्रैव सर्वस्य सुपीत्यस्य प्रवृत्त्यान्तोदात्तत्वस्य श्रवणाभावात्तत्पाठस्याञ्सिद्धिमात्रफलकत्वात् । यदि च प्रातिपदिकाधिकाराभावेऽनुदात्तादेः सुबन्तादित्यर्थे च सति 'सार्व' इत्यत्र भवदुक्तरीत्याऽञोऽप्रवृत्तिः, तर्हि उञ्छादिषु सर्वशब्दपाठस्य वैयर्थ्यं स्पष्टमेवेति वाच्यम् । अस्य ग्रन्थस्यैतत्सूत्रभाष्ये पठितवार्त्तिकोक्तप्रयोजनसामान्योपलक्षणत्वात् । एवं हि वार्तिके उक्तम् । "वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे च प्रत्ययविधौ तत्सम्प्रत्ययार्थम्" । वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे तर्हि प्रत्ययविधौ तत्सम्प्रत्ययार्थं ङ्याप्प्रातिपदिकग्रहणं क्रियते । वृद्धात् अवृद्धात् अवर्णान्तात् अनुदात्तादेः द्व्यच इति एतानि प्रातिपदिकविशेषणानि

न च "अन्तरङ्गानपि" इति न्यायेन लुङ्निमित्तप्रत्ययात्पूर्वमाद्युदात्तप्राप्त्या तस्य सुबन्तविशेषणत्वेऽपि न दोष इति वाच्यम् । तेन न्यायेन धर्मिग्राहकमानादन्तरङ्गनिमित्तविनाशकलुक एव प्राबल्यबोधनेनादोषात् । "सर्वस्य सुपि" इत्यत्र "सौत्रीणां सप्तमीनां तदन्तसप्तमीत्वात्" । प्रत्यये परतः पूर्वस्य कार्यत्वाभावेन "नलुमता" (पा० सू० १ । १ । ६३) इत्यस्याप्राप्तौ प्रत्ययलक्षणेन सुबन्ततया तस्यान्तरङ्गनिमित्तविनाशकत्वाभावात् । अत एव सर्वस्तोमादिबहुव्रीहेराद्युदात्तत्वसिद्धिः । न चानुदात्तादिप्रकृतिकषष्ठ्यन्तादित्यर्थेन न दोष इति वाच्यम् । "गर्गादिभ्यः" (पा० सू० ४ । १ । ११५) इत्यादौ सुबन्तं प्रति गर्गादीनां विशेषणत्वासंभवादगत्या लक्षणास्वीकारेऽपि प्रकृते लक्षणायां मानाभावात् ।

वस्तुतस्तत्रापि न लक्षणा । गर्गादिरूपात्प्रातिपदिकात्तत्संभव-

---

यथा स्युरिति । अथाक्रियमाणे प्रातिपदिकग्रहणे कस्यैतानि विशेषणानि स्युः । समर्थविशेषणानि । तत्र को दोषः । उदीचां वृद्धादगोत्रात् इह च प्रसज्येत ज्ञानां ब्राह्मणानामपत्यम् । एतद्धि समर्थं वृद्धम् । इह न स्यात् ज्ञयोर्ब्राह्मण्योरपत्यमिति । प्राचामवृद्धात्फिन् बहुलम । ज्ञयोर्ब्राह्मण्योरपत्यमित्यत्र प्रसज्येत एतद्धि समर्थमवृद्धम् । इह न स्यात् ज्ञानां ब्राह्मणानामपत्यमिति । एतद्धि समर्थं वृद्धम् । अत इञ् । इहैव स्यात् दक्षस्यापत्यं दाक्षिरिति, एतद्धि समर्थमकारान्तम् । इह च न स्याद्दक्षयोरपत्यन्दक्षाणामपत्यमिति एतद्धि समर्थमनवर्णान्तम् । अनुदात्तादेरञ् भवति । इह प्रसज्येत वाचो विकारस्त्वचो विकार इति । इह न स्यात् सर्वेषां विकारः सार्व इति । द्यचष्ठन्निह प्रसज्येत वाचा तरति त्वचा तरति । इह न स्यात् घटेन तरति" इति भाष्ये उक्तम् । एवं पञ्चानां विकार इति विग्रहे "षट्त्रिचतुर्भ्यो" इति विभक्तेरुदात्तत्वेन समर्थस्यानुदात्तादित्वादञ् प्राप्नोति । प्रातिपदिकाधिकारे तु न्रः सङ्ख्याया इति पञ्चन्शब्दस्याद्युदात्तत्वादनुदात्तादिप्रातिपदिकप्रकृतिकसुबन्तत्वाभावान्न भवतीति बोध्यम् ।

ननु प्रातिपदिकाधिकारेऽपि यद्प्रातिपदिकं 'सर्व' इत्येतदनुदात्तादि तन्न समर्थं, सर्वं ङसिति तन्न प्रातिपदिकमित्यत्र न प्राप्नोति । लक्षणया प्रातिपदिकपदस्य तत्प्रकृतिकपरत्वं चेत् अनुदात्तादिपदस्यैव, तत्प्रकृतिके लक्षणाऽस्तु किंप्रातिपदिकाधिकारेणेत्याशङ्कते—*न चेति* । *मानाभावात्* । अस्यानुपपत्त्यात्मकबीजाभावादित्यादिः । *तत्रापि* ।

ङ्यपत्यमित्यर्थे प्रत्यय इत्यर्थे प्रातिपदिकात्परत्वं तद्व्यवधानेन भवि- ष्यति। तद्व्यतिरिक्तव्यवधाने तु न, मानाभावात्। एतच्च मतु- प्सूत्रे कैयटे स्पष्टमित्यन्यत्र विस्तरः।

लिङ्गविशिष्टस्येति। इयञ्च प्रातिपदिकसामान्यग्रहणे तद्वि- शेषग्रहणे च। अनया परिभाषया ङ्याब्ग्रहणवैयर्थ्यस्य भाष्ये शङ्कितत्वात्। विशेषविषये बहुतरोदाहरणदानाच्च स्त्रीप्रत्ययस- मभिव्याहारे प्रातिपदिकत्वतद्व्याप्यधर्मा विशिष्टेऽनेनातिदिश्यन्ते। अत एव "बहुव्रीहेरूधसः" (पा० सू० ४।१।२५) इति सूत्र भाष्ये "नद्यृतश्च" (पा० सू० ७।४।१५३) इत्यस्य नद्यन्तबहुव्रीहेरित्यर्थे 'कुण्डोध्नी' इत्यत्र कबापादितः। अन्यथा तु ङ्यन्तस्य बहुव्रीहि- त्वाभावात्तदसङ्गतिः। नद्यन्तानां यो बहुव्रीहिरित्यर्थेन च प- हृत इत्यन्यत्। समासान्तेषु तत्परिभाषाभावस्तु ङ्याप्सूत्रे भाष्योक्तो ऽवयवविषयक एव। समुदायविषये तत्प्रवृत्तावपि दोषाभावेन तदंशे तदप्रवृत्तौ न मानमित्याशयः।

ङ्याबन्तादिति। ङ्याब्ग्रहणं स्त्रीप्रत्ययमात्रोपलक्षणम्। ते

---

गर्गादिभ्य इत्यत्रापि। *न लक्षणेति*। प्रकारान्तरेण निर्वाहे जघन्यवृ- त्तिकल्पनमन्याय्यमिति भावः। *सामान्यग्रहणे तद्विशेषग्रहणे चेति*। अनया परिभाषया ङ्याब्ग्रहणवैयर्थ्यप्रतिपादनपरभाष्यात्सामान्यग्रहणे "कुमारः श्रमणादिभिः" इत्यस्य ज्ञापकतया विशेषग्रहणे चेत्यर्थः। *बहु- तरोदाहरणेति*। अयस्कुम्भीत्यादिः।

नन्वनया स्त्रीप्रत्ययविशिष्टस्य प्रातिपदिकग्राहकशब्देन ग्रहणेऽपि प्रातिपदिकत्वव्याप्यधर्मलाभः कथमत आह—*स्त्रीप्रत्ययेति*। *अ- पव*। उक्तार्थस्य स्वीकारादेव। *अन्यथा*। प्रातिपदिकत्वव्याप्यधर्मा- तिदेशास्वीकारे। ननु समासान्तविधौ न, इति ङ्याप्सूत्रभाष्ये उक्त- द्विरोध इत्यत आह—*समासान्तेष्विति*। *अवयवविषय एवेति*। यथा मद्राणां राज्ञी 'मद्रराज्ञी' इत्यत्र 'राजाहः' इति टज् न। *उपलक्ष- णमिति*। अत्र मानन्तु 'कुत्सिते' इतिसूत्रभाष्यमेव। तत्र हि स्वार्थिक- प्रयुक्तकार्यैः संस्कृतस्य बहिर्भूतकुत्सादियोग इतिन्यायेनातिशायनि- प्रत्ययः स्त्रीप्रत्ययानन्तरमेव भविष्यति। तत्र लिङ्गपदोपादानेन तद्वि- त्यूङन्तात्तद्धितोत्पत्तेः। ङ्याब्ग्रहणस्य वाच्यार्थमात्रतात्पर्यकत्वे तु

'ब्रह्मबन्धुतरा' "युवातितरा" इत्यादेः सिद्धिः । "जातेश्च" (पा० सू० ६ । ३ । ४१) इति निषेधान्न पुंवत्त्वम् । वयोवाचिनां वैकल्पिकजातिकार्यस्य वक्ष्यमाणत्वात् ।

तद्धित इति । एतच्च समासान्ततिप्रत्ययाद्यतिरिक्तपरं व्याख्यानात् । एतेन 'यूनीतिः' 'बहुगोमतीका' इति स्यादित्यपास्तम् । एवञ्च स्त्रीप्रत्ययेषु अत्यन्तस्वार्थिकानारभ्य ताद्धितेषु च ङ्याब्ग्रहणासंबन्धो व्याख्यानात् । अत एव 'लोहिनि-

---

फलैक्याय लक्षणाया आवश्यकत्वमिति भावः । *सिद्धिरिति* । विशिष्टात्तद्धितसिद्धिः । अन्यथा 'लोहिनिका' इत्याद्येव प्रयोजनं स्यान्न तु त्यूङन्तघटितम् । इत्यादेरित्यत्रादिना 'युवतिका' इत्यादिपरिग्रहः ।

ननु "पुंवद्भावाद्ध्रस्वत्वं विप्रतिषेधेन" इति वार्तिकव्याख्यानावसरे "पुंवद्भावावकाशो 'दारदिका" इति भाष्ये उक्तं, तेन तसिलादिषु कप्रत्ययस्यापि पाठेन 'युवतिका' इत्यादौ पुंवद्भावः स्यादतः कथमुक्तप्रयोगाणां सिद्धिरत आह—*जातेश्चेति* । ननु वयसोऽनित्यत्वेन नास्य जातिवाचकत्वमत आह—*वयोवाचिनामिति* । *वैकल्पिकेति* । आकृतिग्रहणेत्यादिलक्षणेऽनित्यव्यावृत्तविशेषणाभावात् युवत्वादिकमपि जातिरत एव 'युवतितरा' इति भाष्योदाहृते न पुंवत्त्वम् । न चैवं 'युवजानिः' इत्यत्र पुंवत्त्वानापत्तिः "जातेश्च" इतिनिषेधादिति वाच्यम् । 'अपर आह' इत्यादिना ।

प्रादुर्भावविनाशाभ्यां द्रव्यस्य युगपद् गुणौ ।

इत्यादिना यावद्द्रव्यभावित्वघटितलक्षणान्तरकरणेन युवत्वस्य तन्मते जातित्वाभावात् । एवञ्च भिन्नऋषिकर्तृकलक्षणद्वयप्रामाण्येन वयोवाचके जातिकार्यविकल्प इति भावः । 'वृद्धा वेश्या तपस्विनी' इत्यादौ पक्षे तर्हि ङीष् प्राप्नोतीत्यत एतादृशानामजादिषु पाठो बोध्यः । गौरादिषु तरुणतलुनयोः पाठस्तु 'अपर आह' इति मते जातित्वाभावात् । *एतच्चेति* । तद्धितपदञ्चेत्यर्थः । *व्याख्यानादिति* । लक्ष्यसिद्धिमूलकाद् व्याख्यानादित्यर्थः । *एतेन* । तद्धितपदस्य समासान्ततिप्रत्ययातिरिक्तपरत्वेन । तद्धितपदस्य तद्धितसामान्यपरत्वे समासान्ततिप्रत्यययोरपि तद्धितसंज्ञकत्वेन एतयोरपि स्त्रीप्रत्ययान्तादेवोत्पत्तिः स्यात् । तथा च 'यूनीतिः' 'बहुगोमतीका' इति स्यादेव तच्चाधुना नेति भावः ।

तद्धितपदस्य समासान्ततिप्रत्ययातिरिक्तपरत्वे सति यत्फलितं तदाह—*एवञ्चेति* । तदन्यपरत्वे चेत्यर्थः । *आरभ्येति* । एतेन समासान्तानां सङ्ग्रहः । *व्याख्यानादिति* । "कुत्सित" इति सूत्रभाष्योक्त-

का' इत्येतत्सिद्धये "लोहितालिङ्गबाधनं वा" इति चरितार्थम्
अत्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमुत्पत्तिरिति "सर्वस्य द्वे" (पा०
सू० ८।१। १) इति सूत्रे भाष्ये स्पष्टं कैयटे च । तत्र हि—पद्यस्य
त्यस्य प्रयोजनं 'द्विपदिका' इत्यादौ द्वित्वसंख्यायुक्तपादार्थस्य वीप्सा-
त्वात् वीप्सायामेकत्वलक्षणसंख्याया अनन्तर्भावात्, समासात् वि-
क्त्यभावेन पदत्वाभावात्, प्राक् तद्धितोत्पत्तेर्द्विर्वचनाभाव इत्युक्तम्। "पुं-
योगात्"(पा०सू०४।१।४८)इति सूत्रे भाष्ये ऽप्येतत्स्फुटम्।तत्र हि "क-
कारकोपपदानाम्" इत्यस्याः 'साङ्कूटिनम्' इति प्रयोजनमुक्त्वा
तत्र हि—अभिविधौ भाव इनुणि कूटिन्शब्दादण्प्रत्ययविभ-
क्त्योः प्राप्तयोः स्वार्थिकत्वेनान्तरङ्गत्वादणि कूटिन्नित्यस्यैव
स्यादित्युक्तम् । तस्यापि सुबन्तादुत्पत्तौ तु पूर्वं सुपि इनुणन्तस्

न्यायेन सार्थकतद्धितानां ङ्याबन्तादेवोत्पत्तिर्भविष्यति । ङ्यापोः स्
र्थविवक्षायामेव प्राप्त्याऽत्यन्तस्वार्थिकानान्तु स्वार्थद्रव्यमात्रापेक्ष
ताभ्यां पूर्वमेव प्राप्तिरिति तन्न्यायाविषयत्वमित्येवं युक्तिमूलकादित्य
एवं सति यत्सिद्धन्तदाह-*अत एवेति* । अत्यन्तस्वार्थिकानां प्र
प्रयोज्यविषयताविलक्षणविषयत्वादेव । *सुबुत्पत्तेः पूर्वमुत्पत्तिरिति*
सुबुत्पत्तेः सङ्ख्यापेक्षत्वेन बहिरङ्गत्वादिति भावः । पूर्वोक्तार्थे भाष्यस
तिमप्याह-*सर्वस्य द्वे इति* । *प्रयोजनमिति* । अस्य द्विर्वचना
इत्यनेनान्वयः । *पादार्थस्य । पादपदार्थस्येत्यर्थः । *एकत्वलक्षणेति
द्वित्वसङ्ख्यायुक्तपादार्थस्य व्याप्तिबोधसमये तदर्थगतैकत्वाननुभव
*पदत्वाभावादिति* । एतेन द्विर्वचनाभावे हेतुरुक्तः ।

*प्राक् तद्धितोत्पत्तेरिति* । तद्धितोत्पत्त्यनन्तरं तु न द्विर्वचनम्
द्धितान्तेन वीप्साया बोधनात् । तद्धितस्यास्य स्वार्थिकतया सुबु
प्रागेवोत्पत्तिरिति स्पष्टमनेन लभ्यते । सुबुत्पत्तेस्तु संख्यापेक्षत्वम्, एता
तद्धितस्य तु नेति अत्यन्तस्वार्थिके इति समाख्यापि साधु सङ्गच्छते ।
वार्थे भाष्यान्तरमपि साधकमाह-*पुंयोगादितीति* । *अन्तरङ्गत्वा
ति* । सुबुत्पत्तेः संख्यापेक्षत्वेन बहिरङ्गत्वमिति भावः । एवं चात्यन्त
र्थिकानां सुबुत्पत्तेः प्रागुत्पत्तिस्वीकारवत् स्त्रीप्रत्ययानां लिङ्गबोध
बहिरङ्गतया स्त्रीप्रत्ययोत्पत्तेः प्रागित्यपि बोध्यम् । *इनुणीति* । कू
तोरिति शेषः । *स्वार्थिकत्वेनांतरंगत्वादिति* । विभक्तेर्बहिर्भूतसङ्ख्या
कारकापेक्षत्वेन बहिरङ्गत्वादिति शेषः । अत्र स्वार्थिकस्यान्तरङ्गत्व
नेन सुबुत्पत्तेः प्रागुत्पत्तिरिति स्पष्टमेव लभ्यते । *तस्यापि* । अत्यन्त

पाधिकसापेक्षत्वेन बहिरङ्गतया ऽणः पूर्वं समासे त्रिशिष्टादाणि रूपसिद्धौ भाष्यासङ्गतिः। प्राक्सुबुत्पत्तेः समासे तु उक्तरीत्यैवान्तरङ्गत्वात्पूर्वं समासे ततो त्रिशिष्टादाणिति साङ्कृटिनसिद्धिरित्यन्यत्र विस्तरः।

स्वौजस (१)(पा० सू० ४।१।२) सूत्रे समाहारद्वन्द्वः। टङ्पाश्वेन इति। न च फलाभावः। लोपस्यैव फलत्वात्। तत्र तत्रेतरव्यावृत्त्या चरितार्थानां लोपफलकत्वस्वीकारे बाधकाभावात्। काम्यजादौ तु ककारलोपे सति वर्णोच्चारणवैयर्थ्यान्न तन्मात्रफालिकेत्सञ्ज्ञेति बोध्यम्।

"न विभक्तौ" (पा०सू०१।३।४)इति निषेधोपयोगिनीं विभक्तिसञ्ज्ञामाह–विभक्तिश्च (पा० सू०१।४।१०४)। चकार एकसञ्ज्ञा-

---

र्थिकाणोऽपि। अपिशब्देन समाससङ्ग्रहः।

न च समासस्य पदद्वयसापेक्षत्वम्, अणस्तु इनुणन्तत्वमात्रापेक्षतयाऽन्तरङ्गत्वमिति वाच्यम्। अण्प्रत्ययो भवतीत्यर्थे जननीये सौत्राणपदादण्प्रत्ययस्वरूपज्ञानस्याप्यपेक्षासत्त्वेन समासाद्बहिरङ्गत्वमिति भावः। इदमत्र बोध्यम्। समासान्तप्रकरणे प्रातिपदिकादित्यस्याप्यसम्बन्धः, तेषामलौकिकविग्रहवाक्ये एवोत्पत्त्या तस्यामवस्थायामप्रातिपदिकत्वादिति।

*समाहारद्वन्द्व इति* इतरेतरद्वन्द्वे बहुवचनापत्तिः पृथक्पदत्वे प्रत्येकं विभक्तिश्रवणापत्तिरत आह–*समाहारद्वन्द्व इति*। ननु लोपफलिकेत्संज्ञा न युक्ता उच्चारणसामर्थ्यात्। अन्यथा काम्यचः ककारस्यापि सा कथन्न स्यादत आह—*इतरव्यावृत्त्या चरितार्थनामिति*। एतेन, काम्यजवयवककार इवोच्चारणसामर्थ्यमेषु नास्तीति भावः।

*निषेधोपयोगिनीमिति*। वाच्यतासम्बन्धेन विभक्तिशब्दावच्छिन्नस्य निमित्तत्वादिति भावः। ननु "विभक्तिश्च" इतिसूत्रमकर्तुं शक्यम्। "न विभक्तौ" इति सूत्रे सुप्तिङ्ग्रहणेनैव सिद्धेः। "अष्टन आ विभक्तौ" इत्यादिसूत्रे सुब्ग्रहणमेवास्तु। "त्यदादीनाम" इत्यत्रापि सुब्ग्रहणमेवानु-

---

(१) अत्र प्रक्रियालाघवाय सुस्थाने रुरेवास्तु, सर्वेषु सूत्रेष्वपि रुरेव पाठ्यः तेन 'ससजुषोरुः' इति सूत्रजन्यवाक्यार्थबोधाभावेन लाघवम्। नन्वेवं 'सुपिच' इत्यत्र रुपिचेति न्यासेन 'रामः' इति प्रथमाया एकवचने दीर्घापत्तेः। ननु तत्रापि अमो मकारमारभ्य सुपः पकारपर्यंतको 'अपिच' इत्येषन्यासः कार्यं इति न दोष इति वाच्यम्। नन्वेवंकरणे न किमपि लाघवम् इति चेत्, 'यूभि च' इति न्यासेन लाघवस्य स्पष्टत्वात् इति चेन्न। संप्रति सिद्धस्य रुत्वस्य लाभेन 'अतोरोर' इत्यनेन 'यशोऽत्र' 'पयोऽत्र इत्यादौ उत्वानापत्तेः। आभयात् सिद्धमिति भाष्यविरोधापत्तेश्च।

धिकारेऽपि पुरुषवचनसञ्ज्ञाभ्यां समावेशार्थः। अन्यथा पर्यायः स्यात्। "सुपः" (पा० सू० १। ४। १०३) इति सूत्रं "तिङस्त्रीणि" (पा० सू० १। ४। १०१) इति सूत्रात्तिङ इति चानुवर्तते। "प्रथमयोः" (पा० सू० ६। १। १०२)इत्यादौ व्याख्यानात्प्राचां वैयाकरणानां प्रथमाद्वितीयापदवाच्ययोर्ग्रहणं बोध्यम्। अन्यथा "औजसोः पूर्व"इत्येव वदेत्। त्रिभक्तिप्रदेशेषु सुप्तिङिति न वक्तुं शक्यम्। यत्र तत्रेत्यादौ त्यदाद्यत्वानापत्तेः। तेषां सुप्सञ्ज्ञा त्वशक्या। 'एतर्हि' इत्यादौ "सुपि च" (पा० सू० ७। ३। १०२) इति दीर्घापत्तेः। सञ्ज्ञन्ता इति। स्त्रीलिङ्गा इति शेषः। प्राचां—वैयाकरणान्तराणाम्

---

वर्तते। तथा सति"प्राग्दिशः"इत्यत्रापि सुबित्येवाधिकारः। यत्र तत्रेत्यादौ सुप्संज्ञके त्रलादावत्वं भविष्यति। न चैवम् 'तर्हि' इत्यत्र "सुपि च"इति दीर्घापत्तिरिति वाच्यम्। 'यञि सुपि च' इति करणेनादोषात्। यञादौ सुपीति तस्यार्थः। न च'यत्र' 'तत्र'इत्यादौ सुपस्त्रलादेर्लोपे इदानीमित्यादौ"अनुदात्तौ सुप्पितौ" इत्यनुदात्तत्वञ्च स्यादिति वाच्यम्। त्रलादिविधानसामर्थ्येन लुगभावसिद्धेः। त्रलो लित्करणेन ज्ञापकेन प्राग्दिशीयप्रत्ययेऽनुदात्तौ सुप्पितावित्यस्याप्रवृत्तेश्चेति चेन्न। त्रलादीनां विधानसामर्थ्यकल्पनेन त्रलो लित्त्वस्य ज्ञापकत्वाश्रयणेन मनोव्यापारगौरवस्पष्टत्वात्।

किञ्च विभक्तिसंज्ञाभावे "इवेन सह" इति वार्त्तिके 'सुब्लोपश्च' इति पाठ्यम्। एवञ्च तत्रेवत्यादौ त्रलादीनां श्रवणेन चरितार्थतया तत्रेत्यादौ लोपापत्तेर्दुर्वारत्वात्। यञि इत्येतत्पदद्वयकरणाच्च। 'सर्वदा' इति दाप्रत्ययस्य विभक्तिसंज्ञायां प्रत्ययाद्युदात्तत्वेनान्तोदात्तत्वं भवति सुप्संज्ञायान्तु "सौवर्यः सप्तम्य" इति सिद्धान्तादादौ विभक्तिनिमित्तकाद्युदात्तत्वेऽपि पुनर्दान्तस्य"सर्वस्य सुपि" इत्याद्युदात्तत्वापत्तावुदात्तान्तत्वापत्तेश्चेति।

*समावेशार्थ इति*। तेन युष्मद्युपपद इत्यादिप्रवृत्तिः। न त्वन्यतरबाधो वचनद्वयप्रामाण्यात्तदाह—*पर्याय इति*। ननु "त्रीणित्रीणि" इत्यस्यानुवृत्तौ "अष्टन आ विभक्तौ" इति सूत्रविषये सामर्थ्यात्त्रिर्त्रीणि "प्रथमयोः" इत्यत्र वचनयोरेव ग्रहणं प्राप्नोतीत्यत आह—*प्रथमयोरित्यादाविति*। *वाच्ययोरिति*। त्रिकयोरित्यर्थः। *व्याख्यानादिति*। प्रथमयोरितिशब्दोपादानमूलकाद्व्याख्यानादित्यर्थस्तदाह—*अन्यथेति*। तयोरेव ग्रहण इत्यर्थः। *विभक्तिप्रदेशेष्विति*। निरूपितत्वकथनेन *दीर्घापत्तेरिति*। न च तिङ्संज्ञैवास्तु। निघातापत्तेः। *अस्मिन्*

इहापि। अस्मिन् व्याकरणेऽपि।

सुपः (पा० सू० १।४।१०३।)सुबिति प्रत्याहारात्षष्ठ्यत्र।

द्व्येकयोः (पा० सू० ७।४।२२) नियमार्थे इमे। इह सूत्रे द्व्येकशब्दौ संख्यापरौ, न संख्येयपरौ बहुवचनापत्तेः, तदाह—द्वित्वैकत्वयोरिति। लौकिकप्रयोगे तु "आदशतः संख्या संख्येये" इति कोशभाष्याद्युक्तेः संख्येयपरत्वे एव प्रायः साधुत्वं। क्वचित्संख्यापरत्वेऽपि संख्येयगत संख्यारोपेण साधुत्वम्। अत एव कस्य द्वित्वे इत्याद्यर्थे 'कयोर्द्वयोः' 'केषां बहुषु' इति भाष्ये प्रयुक्तमिति बोद्ध्यम्। एकशब्दो द्विशब्दसाहचर्यात्संख्यावाच्येव। एकग्रहणन्त्यक्त्वैकवचनमुत्सर्गः कर्तव्यस्तेनाव्ययेभ्यः 'पचतिकल्पम्' इत्यादौ च व्यर्थैकवचनप्रयोगसिद्धिरिति "तद्धितश्च" (पा०सू०१।१।३८) इति सूत्रे भाष्ये स्पष्टम्।

---

करण इति*। तेनेहेत्यस्यास्मिन्प्रकरण इत्यर्थकत्वभ्रमनिरासः।

ननु सुबिति सप्तमीबहुवचनस्यैव ग्रहणमस्त्वित्यत आह—*प्रत्याहारादिति*। पूर्वसूत्रे "ह्नीणित्रीणि" इत्युपादानादेकस्य समानफलकानेकसंज्ञाकरणस्य प्रसङ्गाच्चेत्यादिः। नन्वादशतः संख्याशब्दस्य संख्येयपरतया द्वित्वैकत्वयोरित्यनुपपन्नमत आह—*न संख्येयपराविति*। *बहुवचनापत्तेरिति*। एवं हि सति द्व्येकेष्विति स्यात्। *प्रायः साधुत्वमिति*। एतत्फलमाह—*क चिदित्यादि*। नन्वेकशब्दस्यान्यार्थकस्यापि ग्रहणं स्यादत आह—*द्विशब्दसाहचर्यादिति*।

नन्वेकत्वे वाच्ये एव चेदेकवचनं तदाऽव्ययेभ्यस्तस्याप्युत्पत्तिर्न स्यादत आह—*एकग्रहणमिति*। *व्यर्थैकवचनेति*। अत्रैकशब्दस्यानुपादानेन प्रसिद्धस्यैकशब्दार्थैकत्वस्याभावेऽप्येकवचनसिद्धिरिति भावः। बहुषु बहुवचनमित्यनेन शास्त्रेण बहुत्वे बहुवचनस्य प्रवृत्तिरुद्भाविता, तंत्र केषां बहुष्वित्याकाङ्क्षायां 'येषु कर्मादिषु बहुवचनं विधीयते तेषां बहुषु' इति भाष्ये उक्तम्। अत्र केषां बहुष्वित्यत्र षष्ठ्युपादानाद्बहुत्वं बहुवचनबोध्यम्, तच्च बहुत्वन्न संख्या। नियतविषयपरिच्छेदहेतुर्हि संख्या। बहुत्वन्तु न तथा। न च बहुत्वस्यासंख्यात्वे "सुपां कर्मादयोऽप्यर्थाः संख्या च" इत्यनेन विरोध इति वाच्यम्। तत्रत्यसंख्यापदेन बहुत्वस्याप्युपलक्षणात् त्रिचतुरादिव्यक्तीनां विवक्षायामपि बहव इति प्रयोगात्, अत एव "बहुगण" इति सूत्रभाष्ये, 'यदयम् असंख्यां संख्येत्याह, संख्यावदयं

बहुषु (पा० सू० १।४।२१)। बहुशब्दोऽत्र त्रित्वादिपरार्धान्तसं-ख्यानां व्यापको यो धर्मविशेषो बहुत्वं तत्परः। बहुवचनं त्वाश्रय-गतबहुत्वं धर्मे आरोप्य कृतम्। तेन वैपुल्यवाचिनो न ग्रहणम्। 'दाराः' इत्यादौ त्ववयवादिगतबहुत्वस्यावयविन्यारोपो बोध्यः। स च कोशवृद्धव्यवहारानुसारेणैवेति नातिप्रसङ्गः। 'भर्तृदारयोरने-कयोः' इत्यादौ वृत्तौ तु द्विवचनमेव। आरोपे मानाभावात्। अत एव "द्व्येकयोः" (पा० सू० १।४।२२) इति सङ्गच्छते। एतेनैकस्मिन्नपि 'गुरवः समागता' इत्यादि समर्थितम्। अन्वर्थसञ्ज्ञयैव सिद्धे इदं सू

---

भवति'इत्युक्तम् तच्चबहुत्वं त्र्यादिसंख्याव्यापकमखण्डोपाधिरूपम्।

किञ्च लोके 'घटा' इत्युक्ते कतीति तद्व्याप्यसंख्याजिज्ञासा भवति,यदि बहुत्वमेव नियतविषयपरिच्छेदकं भवेत्तर्हि तादृशाजिज्ञासाबोधकव्यव-हारो न स्यात्। न च यत्र घटत्रयविषयकं घटा इत्याकारकं ज्ञानं तत्र बहु-त्वप्रकारकज्ञानेऽपि त्रित्वप्रकारकनिश्चयाभावात् त्रित्वप्रकारसंशयप्रतिब-न्धो न स्यादिति वाच्यम्। द्वित्वादिवत् बहुत्वस्याप्यपेक्षाबुद्धिजन्यतया यदा अपेक्षाबुद्धिविशेषजन्यबहुत्वप्रकारकं प्रत्यक्षं तदा त्रित्वप्रकारकप्रत्यक्षसाम-ग्र्या अपि कल्पनेन जायमानत्रित्वादिप्रकारकप्रत्यक्षेण प्रतिबन्धात्संशया-नुत्पादात्। यत्र तु न प्रत्यक्षविशेषसामग्री तत्र बहुत्वस्यापि प्रत्यक्षम्। न चैवमपि यत्र घटा इति बहुवचनान्तशब्दप्रयोगस्तत्र त्रित्वत्वस्य बहुवच-नार्थतानवच्छेदकतया तदवच्छिन्नप्रकारताकशाब्दबोधासम्भवेन तादृश-संशापत्तिरिति वाच्यम्। इष्टापत्तेः। यदा 'त्रय' इत्यादिशब्दान्तराद् त्रि-त्वादिशाब्दधीस्तदैव संशयानिवृत्त्यभ्युपगमात्।

न च बहुत्वस्याखण्डोपाधित्वेऽभाववत्प्रत्येकवृत्तितया यत्किञ्चिद्घटवि-विवक्षायामपि 'घटा' इति प्रयोगापत्तिरिति वाच्यम्। त्रित्वादिव्याप्तिवि-शिष्टपर्याप्तेरेव बहुत्वसम्बन्धत्वोपगमेनैकस्मिन्तादृशपर्याप्तिसम्बन्धेन बहुत्व-स्यासत्त्वान्न प्रामाणिकानां तथा व्यवहारः। अत एव 'दारा' इत्यादौ बहु-वचनस्यारोपेण साधुत्वस्वीकारः साधु सङ्गच्छत इत्याशयादिति दिक्।

ननु "बहुषु" इति सूत्रे बहुशब्दस्य बहुत्वार्थकत्वे बहुवचनासङ्गति-त आह—*बहुवचनन्त्वाश्रयेति*। नन्वेकव्यक्तावपि दारशब्दस्य बहुव-चनान्तस्य प्रयोगो दृश्यते स च वाच्यार्थे बहुत्वाभावादसङ्गत इत्यत आह—*दारा इत्यादाविति*। *कोशवृद्धव्यवहारेति*। कोशात् यथा "दाराः पुंसि च भूम्न्येव" इति। वृद्धव्यवहारात् यथा 'गुरवः समागताः

न्नद्वयं स्पष्टार्थम् । राम इति । रुत्वे एकदेशविकृतन्यायेन सुबन्तत-या पदत्वाद्विसर्गः ।

सरूपाणामे (पा०सू० १।२।६४।) 'वृद्धो यूना' इति सूत्रादेव-कारोऽपकृष्यत इत्याह—सरूपाण्येवेति । तेन जननीपरिच्छेतृवा-चिनोर्मातृशब्दयोर्भ्यामि नैकशेषः । न चैकविभक्ताविति व्यर्थम् । 'यानि सरूपाण्येव' इत्युक्त्यैवोक्तदोषवारणादिति वाच्यम् । हरिणस्त्रीवा-चकहरिणीशब्दस्य हरितवर्णविशिष्टस्त्रीवाचकहारिणीशब्दस्य चैकशे-षानापत्तेः । पुंवद्भावेन तद्धितादौ वैरूप्यात् । दृष्टानीति । लौ-किकेप्रयोगे इति शेषः । एकशेषश्चायमनैमित्तिकत्वेनान्तराङ्गत्वात् विभक्त्युत्पत्तेः पूर्वमेवेति एतद्विषये द्वन्द्वप्राप्तिरेव नेति बोध्यम् ।

---

इत्यादौ । *राम इतीति* । रमन्ते योगिनो यस्मिन्निति व्युत्पत्त्या "हल-श्च" इति घञा कृदन्ततया प्रातिपदिकत्वात्स्वादयः । कार्यकालपक्षाभि-प्रायेणाह—*एकदेशविकृतन्यायेनेति* । रेफान्तसमुदाये सान्तनिष्ठपद-त्वस्यातिदेशः । एतेन सकारमात्रस्य रुत्वे स्थानितया तन्निष्ठसुप्त्वस्य रुण्येऽलिवधित्वादतिदेशो दुर्लभ इत्यपास्तम् ।

*भ्यामीति* । भ्यामादावित्यर्थः । एवकारबलेनान्वयितावच्छेदका-वच्छेदेने विधेयान्वयलाभाद्विभक्तित्वावच्छेदेन सारूप्य एवैकशेष इति भावः ।*पुंवद्भावेनेति* । "भस्याढ" इति सूत्रविहितेनेत्यादिः । नन्वेकशे-षस्यापरनिमित्तकत्वेनान्तरङ्गतया बहिरङ्गदीर्घादीनामसिद्धत्वान्मातृश-ब्दयोर्वैरूप्यादर्शनादेकशेषो दुर्वार इत्यत आह-*लौकिक इति* । स च परिनिष्ठित एव । तत्र वैरूप्यं दृश्यत एवेति भावः । *प्राप्तिरेव नेति* । एतावतैव द्वन्द्वापवाद एकशेष इति व्यवहारः । न च सर्वशब्दस्य संज्ञा-भूतस्यासर्वनामत्वाज्जसि सर्वाः इति, सर्वनाम्नस्तु सर्वे इत्येवं वैरूप्यादे-कशेषो न प्राप्नोतीति वाच्यम् । विभक्ताविति सप्तम्यन्तोपादानेन तत्पर-त्वयोग्यप्रातिपादिकांशे एव वैरूप्याभावस्य विवक्षितत्वात् । न च तथा-प्यनयोरामिति सर्वाणामिति सर्वेषां वैरूप्यदर्शनादेकशेषो न प्राप्नोतीति वाच्यं । विभक्तिसंज्ञाविधावुद्देश्यतावच्छेदकं यादृशयद्रूपं तादृशतद्धर्मा-वच्छिन्नपरत्वविशिष्टं यद्वैरूप्यं तदभावस्य सारूप्यपदार्थत्वात् ।

न चैकविभक्तावित्यस्यैकत्वसंख्यावच्छिन्नविभक्तावित्यर्थो न सम्भ-वति । यत्रैकशेषस्तत्र समुदायादेकविभक्त्यभावेनैकशेषशास्त्रस्य वैयर्थ्या-पत्तेः । एकजातीयायामित्यर्थे स्वसा च स्वसारौ च माता च मातरौ चेत्यत्रैकशेषानापत्तिरिति वाच्यम् । लौकिकप्रयोग इत्यस्यैकशेषप्रवृत्त्युत्त-

(१)ननु तन्त्रेणैव सिद्धेरिदं व्यर्थम्। यथा 'अक्षा भज्यन्तां भुज्यन्तां दीव्यन्ताम्' इत्यत्राक्षा इति कारकस्य सकृदुपादानेऽपि सर्वत्रान्वयः। तन्त्रकारणन्तु शब्दानां तुल्यरूपता। एवम् 'अक्षो भज्यतां भुज्यतां दीव्यताम्' इत्यपि। तन्त्रं द्वेधा—शब्दतन्त्रमर्थतन्त्रञ्च। शब्दस्य पर्यायपरिवृत्त्यसहत्वे आद्यम्। यथा 'अक्षाः' इत्यादौ, तत्सहत्वे त्वन्त्यम्।

रमुत्पत्तियोग्या या विभक्तिस्तस्यामित्यस्यैकशब्दोपादानेन विवक्षितत्वात्।

*तन्त्रेणैवेति*। सकृदुच्चरितस्यैकस्य शक्त्यानेकार्थप्रतिपादकत्वं तन्त्रम्। *कारकस्येति*। अनेन विभक्त्यन्ततन्त्रमत्रेति सूचितम्। न चात्र तन्त्रानङ्गीकारेऽपि शास्त्रीयैकशेषेणैव निर्वाह इति वाच्यम्। द्वन्द्व इत्यस्यानुवृत्त्या "इदितो नुम्" इति लिङ्गेन च सहविवक्षायामित्यस्यावश्यकत्वात्। सा चैकधर्मावच्छिन्नान्वयित्व एव। प्रकृते च समभिव्याहृतानेकसाहित्यानवच्छिन्नक्रियायामेवान्वयस्य तात्पर्यविषयतया सा न। शाब्दबोधोऽप्यक्षपदबोध्यानां साहित्यानवरुद्धानां तत्तत्क्रियान्वयिनां समूहालंबनरूपः। न केवलं बहुवचनसद्भाव एव तन्त्रेण निर्देशः किन्त्वेकवचनान्तप्रयोगेऽपि तदाह—*एवमक्ष इति*।

न चात्रैकस्य बह्वर्थकत्वे बहुवचनापत्तिरिति वाच्यम्। विभक्त्यन्तस्य तन्त्रेणानेकार्थकत्वं विवक्षितं तच्च न प्रातिपदिकमिति तदप्राप्तेः। उचितश्चैतादृशे विषये तन्त्रस्वीकारः। अन्यथा साहित्याभावेऽप्येकशेषस्वीकारे शिष्यमाणैकशब्दस्यानेकार्थाभिधायकत्वे वृत्त्या पुष्पवन्तपदप्रयोग इवैकत्रैवान्वयः स्यात्। नन्वक्षो भज्यतामित्यत्र न तन्त्रम्, किन्तु वक्तुर्यदा श्रूयमाणैकशब्दादुपस्थितानां बहूनामर्थानामनेकत्रान्वयविवक्षा तदा तस्य शब्दस्याऽऽवृत्त्याऽर्थानां पृथगुपस्थितिरेव स्वीक्रियत इत्यत आह—तन्त्रमिति।

*शब्दस्य पर्यायपरिवृत्तीति*। पर्यायस्य पर्यायवाचकस्य परिवृत्तिः स्वप्रयोगाभावेऽपि स्वबोध्ययावत्सु प्रवृत्तिः तत्सहत्वं तद्योग्यत्वमिति यावत्। अत्र शब्दस्येति षष्ठ्यर्थो निष्ठत्वम्। एवञ्चैतादृशशब्दनिष्ठधर्मद्वैविध्येन शब्दोऽपि द्विविधः। स्वावच्छिन्नशक्यतावच्छेदकावच्छिन्नविषयतासमनियतविषयताकबोधजनकतावच्छेदकस्वभिन्नानुपूर्वीकशब्दवृत्ति-यद्यत्तद्भिन्नधर्मवत्त्वं शब्दतन्त्रमिति निष्कर्षः। स्वं वाचकतावच्छेदिकाऽनुपूर्वी, सा च घटशब्दनिष्ठा। तदवच्छिन्नशक्यतावच्छेदकावच्छिन्न-

(१) तन्त्रञ्च—नानाफलकसमानाकारकानेकव्यापाराणां मध्ये एकव्यापारेण फलोत्पादनम्। यथा देवदत्तः पाकनिष्पत्तिसमये काष्ठतण्डुलघृतादीनामापणत एकदैव सर्वानानयति इति लौकिकव्यवहारस्तथा शास्त्रेऽपि सकृदुच्चरितः शब्दोऽनेकोपकारको भविष्यति इत्यभिप्रायेण शङ्कते—नन्वित्ति।

यथा 'घटा' इत्यादौ । तत्राक्षा भज्यन्तां भुज्यन्तामित्यादावन्वयिपदार्थभेदाद् बोद्धुरावृत्त्यैव बोधः । उच्चारणन्तु तन्त्रेण । अन्वयिपदार्थस्यैकत्वे तु एकोपस्थित्यैवान्वयः, यथा 'अक्षान् पश्य' 'घटान् पश्य' इत्यादाविति चेत्? सत्यम्, सरूपाणामेकशेष एवेति नियमार्थत्वात् । तत्फलं तु प्रत्यर्थं शब्दनिवेशस्यापि दर्शनेन कदाचित्तादृशप्रयोगे प्राप्तद्वन्द्वस्य निवृत्तिः । स चायं नियमो विभक्तौ यानि सरूपाण्येव तद्विषयः सहविवक्षाविषयश्च ।

अत एव विभक्त्यन्तानामेकशेष इति पक्षे "द्वन्द्वप्रतिषेधो वक्तव्यः" इत्याशङ्क्य 'अनवकाश एकशेषो द्वन्द्वं बाधिष्यते' इति भाष्ये उक्तम् । किं चासहविवक्षायामपि तत्प्रवृत्तौ सहविवक्षायां द्वन्द्वस्येवाऽन्यत्र कर्मधारयस्यापि बाधापत्तौ 'सारवसारवोर्मिजः' इत्यादिप्रयो-

---

घतासमनियतविषयताकबोधजनकतावच्छेदकस्वभिन्नकलशेत्याऽऽनुपूर्वी-कत्वस्य तत्र सत्वात् । समनैयत्यघटकव्यापकत्वानिवेशे रथाक्षविशेषविषयकबोधजनकतद्व्यक्तिरिति शब्दमादायव्याप्यत्वानिवेशे द्रव्यशब्दमादायाक्षावित्यादावसम्भवः स्यादित्युभयोपादानम् । अक्षेत्याद्यानुपूर्वी च न तादृशीत्येतादृशेषु शब्दतन्त्रमेव । एवञ्चैकस्मिन् शब्देऽर्थे वा बहूनामर्थानां शब्दानां वा सम्बन्धसम्भवात् 'तन्त्रिकुटुम्बधारण' इति धात्वर्थानुसारात्तन्त्रव्यवहार उभयत्रापि समञ्जस एव । परन्तु यत्रानेकार्थबोधो जायतामितीच्छया वक्तुः शब्दोच्चारणानुकूला कृतिस्तत्र तन्त्रेणोच्चारणमिति व्यवहारो, यत्र तु न तादृगिच्छा तत्र तथा व्यवहाराभावः ।

इदन्तन्त्रेणोच्चारणमनेकक्रियान्वयविवक्षायामेव 'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इतिन्यायादित्याशयेनाह—*अन्वयीति* । अन्वयानुयोगिधात्वर्थस्य भेदादित्यर्थः । *एकत्व इति* । न च क्रियायां सङ्ख्याया असत्त्वादेकत्व इत्यसङ्गतमिति वाच्यम् । सङ्ख्याकृतपरिच्छेदशून्यत्वे इत्यर्थात् । *एकोपस्थितीति* । दृश्युपस्थापितदर्शने बहुवचनान्तेन 'अक्षान्' इतिपदेन तन्त्रेणोपस्थापितानां देवनाक्षरथाक्षविभीतकाक्षाणामन्वयः । *तत्फलं त्विति* । नियमफलन्त्वित्यर्थः । *प्रत्यर्थमिति* । अर्थमर्थम्प्रतीत्यर्थः । अत्रापिना अर्थावर्थौ प्रतीति भाष्योक्तविग्रहोऽपि सूचितः । *तद्विषय इति* । सूत्रस्वारस्यात् । अन्य आह—*अत एवेति* । सहविवक्षाविषयत्वस्वीकारादेव । प्रकृतसूत्रे "तिष्यपुनर्वस्वोः" इत्यतो द्वन्द्व इत्यस्याकर्षणादेतल्लाभः । तस्याऽऽकर्षणमकृत्वा तादृशनियमस्वीकारे दोषमाह—*किञ्चेति* । *सारवसारव इति* । आरवैः सहिताः सारवाः सरव्वां

गविरोधापत्तिः। असहविवक्षाविषयेण विभक्त्यन्ततन्त्रेण 'ब्राह्मणाभ्यां कृतं देहि' 'पयो जरयति' इत्यादि 'नीलोत्पलस्पर्धिनी नेत्रे तनुर्वा हरेः' इति वत् 'विद्वन्मानसहंस' इतिवच्चेष्टमेवेति बोध्यम्। न चासहविवक्षायां तंत्रसत्वे "इदित" इति गुरुनिर्देशो व्यर्थः। अन्यपदार्थावगतये तत्सत्त्वात्। इद्यस्य धातोरिति करणे तु गौरवम्।

एतच्च सूत्रं भाष्ये प्रत्याख्यातम्। अर्थावर्थौ प्रति यदर्थानर्थान्प्रति च यत्तदपि प्रत्यर्थमेव इत्याश्रयणेन। अनेकघटादिपदानां साहित्ये वृत्तिरेव न अनभिधानात्। एकस्यैव त्वनेकार्थस्य तत्र

---

भवाः साखाः। साखाश्च ताः साखाश्च ऊर्मयस्तासु जात इत्यर्थः। विभक्त्यन्ततन्त्रन्त्वसहविवक्षायामपि स्वीक्रियत इत्याह—*असहविवक्षेति। *ब्राह्मणाभ्यामिति* तृतीयान्तश्चतुर्थ्यन्तश्च। *पय इति*। द्वितीयान्तः प्रथमान्तश्च। नवमे काव्यप्रकाशे।

भक्तिप्रह्वविलोकनप्रणयिनीनीलोत्पलस्पर्द्धिनी।
ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये॥
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती।
युष्माकं कुरुतांभवार्त्तिशमनं नेत्रे तनुर्वा हरेः॥

इति लिङ्गवचनश्लेषोदाहरणम्। तथा।

विद्वन्मानसहंस वैरिकमलासङ्कोचदीप्तद्युते॥
दुर्गामार्गणनीललोहितसमित्स्वीकारवैश्वानर।
सत्यप्रीतिनिधान दक्ष विजयप्राग्भावभीमप्रभो॥
साम्राज्यं वर वीर वत्सरशतं वैरंच्यमुच्चैः क्रिया।

इति दशमोल्लासे उक्तम्। अत्र विदुषां मानसाभिन्नमानसाधिकरणकहंसेत्याद्यर्थः। एतेषु सहविवक्षाया अभावेऽपि तुल्यत्वात्मकस्य तन्त्रकारणस्य सत्त्वात्तन्त्रसद्भावो नानुपपन्नः। शब्दानान्तुल्यरूपत्वमेव तन्त्रकारणम्। तदुक्तम्।

अक्षादिषु यथाभिन्ना भक्षिभाञ्जिदिविक्रियाः।
प्रयोगकालाभेदेऽपि प्रतिभेदम्पृथक् स्थिताः।
अक्षाणान्तन्त्रिणांतन्त्रे उपायस्तुल्यरूपता। इति।

भाष्यकृत्सम्मतमेकशेषप्रत्याख्यानमाह——*एतच्चेति*। सूत्रप्रत्याख्याने यदा नैकेन नानार्थप्रतिपादनविवक्षा, किन्तु प्रतिव्यक्ति प्रतिपादनेच्छा तदाऽनेकघटशब्दानां सह प्रयोगः प्राप्नोतीत्यत आह—*अनेकघटादिपदानामिति*। सूत्रारम्भवादिमतापेक्षया प्रत्याख्यानवादिमते

त्तिरभिधानस्वाभाव्यादिति तदाशयः । "द्विर्वचनेऽचि"(पा०सू०१।१।५९) इत्यादावेकशेषशब्दस्तु भाष्ये तन्त्रपरः । स चोच्चारयितुः । बोद्धुस्त्वावृत्तिरेवेति बोद्धव्यम् ॥

एकविभक्तावित्यत्रैकपदन्तु स्पष्टार्थम् । एकस्यामपि विभक्तौ यानि विरूपाणि नेत्यर्थं स्पष्टं बोधयितुम् । ध्वनितश्चेदं 'विभक्तिः सारूप्ये उपलक्षणम्' इति भाष्ये एकपदानुच्चारणेन । समाहारद्वन्द्वविषये तु नैकशेषः । "एकवच्चास्यान्यतरस्याम्" इत्यनेनैकशेषविषयपदानां समाहारे वृत्त्यभावबोधनात् ।

---

स्य प्राबल्यात् । *तन्त्रपर इति* । विभक्त्यन्ततन्त्रपरः । सूत्रारम्भपक्षे एकग्रहणेऽपि विभक्तित्वव्याप्यरूपेण साजात्यविवक्षया यद्धर्मावच्छिन्ने सारूप्यं तत्रैकशेषः, तेन भ्यामादावेकशेषो भवत्यैव तेषु सारूप्यसद्भावात् न त्वौजसादिषु तत्र वैरूप्यादिति केचित्, तन्मतं दूषयन्नेकग्रहणफलमाह— *एकविभेति* । एवकारलभ्याभावप्रतियोगिभूतं विरूपत्वं विभक्तित्वावच्छेदेन विवक्षितमिति भावः ।

यत्तु समाहारविवक्षायामप्येकशेषेण भवितव्यं, सूत्रारम्भेऽनभिधाने प्रमाणाभावात् तत्रापि सूत्रं प्रवर्त्तेत एवान्यथा घटघावित्यस्याप्यनभिधानेनैव वारणेन सूत्रस्यैव वैयर्थ्यादिति कश्चिदाह । नन्वेवं शिष्यमाणादेकस्मात्समूहस्येतरेतरयोगस्य वा प्रतीतिरित्यत्र विनिगमकाभाव इति वाच्यम् । प्रकरणादेरेव निर्णायकत्वादन्यथा 'घटा' इत्यादौ कदाचिद्व्यक्तित्रयस्य कदाचिच्चतुर्णां पञ्चानां वेत्यत्रापि नियमो न स्यात् (१) । समाहारविवक्षायामप्येकशेषाङ्गीकारात् 'अनेकं ब्राह्मणं भोजय' इत्युपपद्यते । अत एव च "न ब्राह्मणं हन्यात्" इत्यस्याप्युपपत्तिः । न चैवं समूहेऽभावप्रतियोगिहननकर्मत्वप्रतीतावपि ब्राह्मणेषु कथं तत्प्रतीतिरिति वाच्यम् । समूहस्यावयवानतिरेकात् । एकत्वान्वयस्तु प्रधानसमूह एवेति तन्मतं दूषयति—*समाहारद्वन्द्वविषये त्विति* । *अन्यतरस्यामित्यनेनेति* । यद्येकशेषविषयाणां समाहारे वृत्तिः स्यात् तदा समाहारविवक्षायामेकवद्भावस्येतरेतराविवक्षायां द्विवचनबहुवचनयोः सिद्धावन्यतरस्यामिति व्यर्थमेव स्यादिति भावः ।

---

(१) नन्वत्रानियमितसंख्याकल्पनायामनवस्थापातात् कपिञ्जलाधिकरणन्यायेन त्रित्वसंख्यैव ग्राह्येति न दोष इति वाच्यम् । यत्र वक्त्रा चत्वारः, पञ्च, षट् इत्यादि वा ऽधिकसंख्यातात्पर्येण बहुवचनं प्रयुक्तं तत्र श्रूयमाणबहुवचनेन श्रोतु र्बोधानापत्तिः । नन्वेवं तर्हि कपिञ्जलाधिकरणन्यायो व्यर्थ इति चेद्ध्यम् । इति चेन्न । वेदे कर्तुरभावात् प्रकरणादिना नियामिकायाः संख्याया बोधाभावात् भिन्नभिन्नयागकर्तृभिः स्वच्छयाऽनियमितसंख्याकल्पनायां कर्मवैगुण्यप्रसङ्गाचागत्या 'कपिञ्जलानालभेत' इति वाक्ये श्रूयमाणबहुवचनस्योपपत्तये तथा स्वीक्रियते । लोके तु वक्तृतात्पर्यस्य व्यक्ततया नानवस्थादोष इति भावः ।

"न ब्राह्मणं हन्यात्" इत्यादौ तु जातिपक्षेणैव निर्वाहः। अत एव तत्र व्यक्तिपक्षे 'यं कश्चिद् ब्राह्मणमहत्वा कृती स्यात्" इति दूषणं भाष्ये उक्तम्।

शेषशब्दार्थश्चेतरानिवृत्तिपूर्वकमवस्थानं, तदाह–एक एवेति। एकेति लुप्तविभक्त्यन्तं पृथक्पदम्। अत एव तत्र सरूपाणामित्यस्यान्वयः। तत्रावस्थानस्य सिद्धतया निवृत्तिरेव विधेया। तत्र "शिष्यमाणं लुप्यमानार्थाभिधायि" इति न्यायेन श्रूयमाणपदवृत्त्या बोधः। धातुषु तु नास्य प्रवृत्तिः। 'एकानिष्ठानेकव्यापाराणामिवानेकनिष्ठानामप्येकधातुत एव निवृत्तभेदानां प्रतीत्या ऽनेकधातुप्रयोगाऽप्रसक्तेः।

---

अत्र केचित्। आश्विकश्च आश्विकी च आश्विकश्च तानीमानि 'आश्विकानि' इत्यत्र बहुप्रकृतित्वाभावात् "फलसेना" इति वार्त्तिकेनैकवद्भावस्य व्यावर्त्तनात्समाहारद्वन्द्वाभावेनैकवद्भावस्याप्राप्तस्य प्रापणार्थं प्रकृतसूत्रे "एकवच्चान्यतरस्याम्" इत्यावश्यकमित्यस्य ज्ञापकत्वाश्चिन्त्यमिति। तन्न। एकशेषस्य द्वन्द्वापवादतयाऽपवादविषयपरिहारेणोत्सर्गोविकल्पवारणाय प्रवृत्तिस्वीकारात्। 'फलसेना' इति वार्त्तिकस्य च समाहारद्वन्द्वविधायकशास्त्राङ्गत्वेन विभिन्नशक्यतावच्छेदककविषयकतयोक्तस्थले वार्त्तिकाप्रवृत्तेरिति। *जातिपक्षेणैवेति*। न च जातेः साक्षात्कार्यान्वयित्वासम्भवाद् व्यक्तेराक्षेपो वाच्यः। तासाञ्च बहुत्वाद्बहुवचनमेव स्यादित्येकवचनासङ्गतिरिति वाच्यम्। एतत्पक्षे जातेः प्राधान्यं तस्या एकत्वात्प्रधानानुरोधेनैकवचनोपपत्तेः। *अत एव*। जातिपक्षस्याभिप्रेतत्वादेव। *इति दूषणमिति*। न च विभक्त्यन्ततन्त्रेणैतादृशे विषये निर्देशाश्रयणेन दूषणासङ्गतिरिति वाच्यम्। प्रतिव्यक्तिशास्त्रावृत्त्यापत्तेरिति लाघवेन जातिपक्षस्यैवोचितत्वात्।

यत्रैकशेषस्तत्र श्रूयमाणातिरिक्तनिवृत्तेरशाब्दत्वं वारयति–*एकशेषशब्दार्थेति*। एकेत्यस्य सरूपाणामित्येतदपेक्षत्वेनासामर्थ्यशङ्कां वारयाह–*पृथक् पदमिति*। *श्रूयमाणपदवृत्त्येति*। लुप्यमानपदार्थेऽपि श्रूयमाणस्य शक्तिग्राहकश्चैकशेषविधायकं शास्त्रमेव। ब्राह्मणादिष्विव भवतो भवन्तीत्यादिष्वपि विभिन्नकर्तृकानेकव्यापारप्रतीतिरेकशेषादेवेति भ्रमवारणायाह—*धातुष्विति*। *निवृत्तभेदानामिति*। एकत्वतो द्वित्वादिसङ्ख्यारहितानामित्यर्थः। स्वगतमेकत्वन्तु प्रतीयत एवात एवैकवचनम्। यत्रापि 'देवदत्तयज्ञदत्तविष्णुदत्तैरास्यत' इत्युच्यते वस्तुगत्या कर्तृभेदाद्भेदेऽपि तिङन्ताद्भेदस्यानवगतिरेव। एवं भेदस्य

सरूपाणां किम्? घटपटौ। शेष इत्येतन्मात्रोक्तौ द्वित्वाद्यैरपि शेषः प्रसज्येत। एक इत्येतावदुक्तौ त्वेक आदेश इत्यर्थः स्यात्। तथा चाश्वश्चाश्वश्चेत्यादौ कदाचित् द्युदात्तवत्त्वमनुदात्तवत्त्वरूपसाम्यमादायोभयस्वरितैकादेशः प्रसज्येत। न च "अक्षस्यादेवनस्य" इति फिट्सूत्रेण शकटाक्षे आद्युदात्तस्य, देवनाक्षे "फिष" इत्यन्तोदात्तस्य चैकशेषे कदाचिदन्तोदात्तस्यापि शेषः स्यादिति वाच्यम्। "स्वरभिन्नानां यस्योत्तरस्वरविधिः" इति वचनेनैव निर्वाहात्। एकादि-

---

नाधिकरणद्वित्वादेश्चानवगतिः।

न च 'देवदत्तः पचति' 'यज्ञदत्तस्तु पचतितराम्' 'विष्णुदत्तस्तु पापच्यत' इत्यादौ पञ्चकृत्वः पचतीत्यादौ च प्रकर्षपौनः पुन्याभ्यावृत्तिगणनप्रतीत्या भेदप्रतीतिरस्त्येवेति वाच्यम्। तेषामाश्रयगतप्रकर्षादिनिबन्धनत्वात्। आश्रयगतो यः प्रकर्षः पटुत्वादिलक्षणस्तन्निबन्धनः क्रियायाः प्रकर्षः पौनःपुन्यं पुनरुत्पत्तिरभ्यावृत्तिरपि पुनः पुनरुत्पत्तिरेव। उत्पत्तेश्च तदधिकरणसमयध्वंसानधिकरणसमयसम्बन्धरूपतया समयसम्बन्धगतपौनःपुन्यादिनिबन्धनमेव क्रियायां पौनःपुन्यादिकमिति बोध्यम्। अत एव भाष्येऽनवकाशत्वेनैकशेषस्य द्वन्द्वापवादत्वोक्त्यनन्तरं तिङन्तेषु एकशेषस्य चारितार्थ्यमाशङ्क्य 'न तिङन्तान्येकशेषारम्भम्प्रयोजयन्ति एका हि क्रिया' इति भाष्ये उक्तम्।

न च 'क्रियासमूहः काल' इति व्यवहारः क्रियाया एकत्वेऽनुपपन्न इति वाच्यम्। 'न हि वयं सर्वापि क्रिया वस्तुत एकैवेति ब्रूमः किन्तु 'क्रिया नामेयमत्यन्तापरदृष्टा पूर्वापरीभूतावयवा' इति भाष्यात्तस्याःस्वतो भेदेऽपि शब्दशक्तिस्वाभाव्येन धातुवाच्यक्रियायाः कर्त्रादिभेदेन भेदेऽपि निवृत्तभेदाया एव धातुतः प्रतीतिरित्यभ्युपगमात्। न चैवमपि कर्तृद्वयविवक्षायां लद्वयापत्तिरिति वाच्यम्। "वर्त्तमाने लट्" इत्यादावेकत्वस्य विवक्षितत्वात् *उभयस्वरितैकादेश इति*। अन्यतरसाम्यमादायान्यतरधर्मवान् यद्यपि प्राप्नोति तथापि विनिगमनाविरहादुभयस्वरितकोऽपि स्यात्। यद्यप्यान्तरतम्यघटकोदात्तानुदात्तशब्दाभ्यां तत्संज्ञकयोर्ग्रहणात् स्वरितघटकयोस्तयोः तथा वाऽभावादुभयस्वरितक इत्यसङ्गतम्। तथापि तेनैव रूपेण सादृश्यमत्र ग्राह्यमित्यत्र विनिगमनाविरहाद्युदात्तसंज्ञकः कदाचित् द्यनुदात्तसंज्ञकश्चादेशः प्राप्त इत्याशयः।

*स्वरभिन्नानामिति*। स्वरैर्भिन्नानामित्यर्थः। *उत्तर इति* उत्तरसूत्रेण विहित इत्यर्थः। एवञ्च "अक्षस्यादेवनस्य" इति सूत्रस्य परत-

दशान्तसंख्यावाचिनामेकशेषद्वन्द्वावनभिधानान्न भवतः। विंशत्यादि-
ष्विष्ट एवैकशेष इत्यलम् ॥

चुटू (पा०सू०१।३।७) "आदिर्ञिटुडवः" (पा०सू०१।३।५) इ-
त्यत आदिरिति "षः प्रत्ययस्य" (पा०सू०१।३।६) इत्यतः प्रत्य-
स्येति चानुवर्त्तते, तदाह–प्रत्ययाद्याविति। तेन वाचाटे नेत्सं-

याऽऽद्युदात्तस्यैवैकशेषः। *अनभिधानादिति*। तदुक्तम्भाष्ये "इह त-
स्मान्न भवति। एकश्च एकश्च द्वौ च द्वौ चेति। सङ्ख्याया अर्थासंप्रत्य-
त् अन्यपदर्थत्वाच्चानेकशेष" इति। अत्र कैयटः संख्याया अर्थास्यासं-
त्ययादित्यर्थः। यत्रैकः शब्दोऽनेकमर्थमभिधातुं शक्नोति तत्रैकशेषो न
न्यत्र प्रयुक्तानामन्वाख्यानात्। एकावित्युक्तेऽसहायादिरर्थो गम्यते न
द्वावित्यर्थः। अन्यपदार्थत्वादिति। असान्दिग्धेन पदान्तरेणायमर्थः
त्यायत इत्यर्थः। यथा एकश्च एकश्चेत्यत्र द्वाविति। द्वौ च द्वौ चेत्य-
चत्वार इति।

अत्रेदं बोध्यम्। एकादिदशशब्दान्तान्यतमः पक्षः। एकशेषविधाय-
शास्त्रोद्देश्यत्वाभावः साध्यम्। स्वशक्यतावच्छेदकमात्रावच्छिन्नविष-
ताशालिशिष्यमाणशब्दजन्यबोधजनकशब्दकं यद्यत्तद्भिन्नत्वादिति शि-
ष्यमाणशब्दजन्यबोधीया या स्वप्रयोज्यविषयतातिरिक्तवृत्तिविषयता त-
त्प्रयोजकशब्दान्तरकत्वादिति वा हेतुः। स्वमेकशेषप्रवृत्तिप्राक्कालि-
सहविवक्षाविषयः शब्दः।

ननु 'गार्ग्यौ' इत्यतः कदाचिद्गर्गगोत्रापत्यद्वयस्य बोधजननेऽपि ग-
र्ग्यायणस्यापि गार्ग्यश्च गार्ग्यायणश्चेत्येवं सहविवक्षयां बोधात् स्वशक्य-
वच्छेदकमात्रावच्छिन्नविषयताशालिशिष्यमाणशब्दजन्यबोधजनकश-
कत्वस्य तत्रासत्त्वेनैतादृशधर्मावच्छिन्नभिन्नत्वस्य तत्र सत्त्वेन प्रथम-
व्यभिचारः। तथा विंशतिश्च विंशतिश्च 'विंशती' इत्यत्र द्वितीयेऽपि शि-
ष्यमाणविंशतिशब्दजन्यबोधीया स्वप्रयोज्यविषयतानतिरिक्तवृत्तिविष-
ता तत्प्रयोजकचत्वारिंशच्छब्दकत्वसत्त्वेन व्यभिचारः। एवं घटादिश-
ऽपि पर्यायकलशादिशब्दमादाय व्यभिचार इति चेन्न। 'एवन्तर्हि'
मौ पृथक्परिहारौ एकपरिहारोऽयम् सङ्ख्याया अर्थासम्प्रत्ययादन्यप-
र्थत्वाच्च' इति भाष्येणैवात्र समाधानात्। एवञ्च सामानाधिकरण्यस-
न्धेन प्रथमविशिष्टद्वितीयस्य हेतुत्वमित्युक्तम्भवति। 'गार्ग्यौ' इत्यत्र प्र-
मस्य विशेषणस्य सत्त्वेपि विशेष्यस्यासत्त्वेन, विंशती घटौ इत्यादौ च वि-
शेषणस्यासत्त्वेनैतेषु हेतुतावच्छेदकावच्छिन्नाभावसत्त्वान्न व्यभिचारः।

आदिग्रहणानुवृत्तेः फलमाह—*तेनेति*। आदिशब्दानुवृत्तिकर-

प्रत्ययेति किम् ? चामरादावित्त्वं मा भूदिति । चुञ्चुप्चणपोर्यादित्वात् परनिमित्तयलोपस्य बहिरङ्गासिद्धत्वात्प्रत्ययादित्वाभावात् नेत्वम् ॥

न विभक्तौ (पा०सू०१।३।४) हलन्त्यमित्यस्य निषेधोऽयम् । अनित्यमिदं थमोर्मकारपरित्राणार्थादुदित्करणात् । तेन "किमोत्" (पा० सू०५।३।१२) 'क्व' इति सिद्धं । प्राग्दिशीयत्वादियं विभक्तिः । अत एव-दानीमो मस्य नेत्वमिति नव्याः । भाष्ये तु प्राग्दिशीयेष्वस्याप्रवृत्ता-वुदित्वं ज्ञापकमित्युक्त्वा "दानीञ्च" (पा०सू०५।३।१८) इति सूत्रे 'लोपो व्योः' इति लोपेन यकारं प्रश्लिष्येत्सञ्ज्ञा वारिता । अन्यत्रानित्य-त्वस्य फलाभावाच्चैवमेवोक्तं । लोपस्यासिद्धत्वाच्च नान्त्यत्वमिति बोध्यम् । विभक्तौ किम् ? "अचो यत्" (पा०सू०३।१।९७) ॥

अतो गुणे (पा०सू०६।१।९७) "उस्यपदान्तात्" (पा०सू० ६।१।९६) इत्यतो ऽपदान्तादिति "एङि पररूपम्" (पा०सू०६।१। ९४) इत्यतः पररूपमिति चानुवर्त्तते । पुरस्तादिति । अत एव "नादिचि" (पा०सू०६।१।१०४) इतीज्ग्रहणञ्चरितार्थम् । ताद्धि रामाः रामानित्यादौ निषेधाभावाय । पररूपेण पूर्वसवर्णदीर्घबाधे हि तद्वैयर्थ्यं स्पष्टमेव । नोत्तरानिति । अनन्तरापेक्षयोत्तरान् व्यव-

---

*चामरादाविति* । तथा सति 'चित' इत्यन्तोदात्तापत्तिः । आद्युदात्तो हि सः 'लघावन्त' इति फिट्सूत्रेण । *नेत्वमिति* । यद्यत्रेत्संज्ञा स्यात्त-दा चित्तित्स्वरयोः पर्यायः स्यात् । *मकारपरित्राणार्थादिति* । उकारे सति व्यवसितान्त्यत्वस्य मकारेऽभावात् । *अत एव* । विभक्तित्वादेव । *नव्या इति* । एतेनानित्यत्वस्य दानींव्यतिरिक्तस्थले फलाभावेन तत्र तु प्रकारान्तरेणैव निर्वाहात् सामान्यतोऽनित्यत्वाश्रयणमनुचितमित्यरुचिः सूचिता । *इत्संज्ञा वारितेति* । "सद्यःपरुत्" इत्यत्र सकारतकार-योरित्वाभावो निपातनादेव । न चैवमौतस्तकारस्येत्त्वन्न स्यादिति वाच्यम् । "ननौ पृष्टप्रतिवचने" "शेषे लडयदौ" "क्रियाऽतिपत्तौ" इत्या-दिनिर्देशादुच्चारणार्थस्य तस्येत्त्वस्वीकारात् ।

ननु यलोपेऽन्त्यत्वमस्त्येवेत्यत आह—*लोपस्यासिद्धत्वाच्चेति* । बहिरङ्गत्वेनासिद्धत्वादित्यर्थः । चो वाक्यालङ्कारे । *अत एव* । पुरस्ता-दपवादन्यायाश्रयणादेव । इज्ग्रहणाभावेऽप्यज्ग्रहणानुवृत्त्यैव सिद्धेः । *तद्वै-यर्थ्यमिति* इज्ग्रहणवैयर्थ्यमित्यर्थः । नन्वनन्तरानित्यस्य प्रतिपक्षे व्यव-

हितानित्यर्थः।

एकवचनं सम। (पा०सू०२।३।४९) सुः संबुद्धिरित्युचितम् "संबोधने च" (पा०सू०२।३।४७) इत्यतः संबोधने इत्यनुवृत्तेः सप्तमीबहुवचने न दोषः। संबुद्धौ अङ्गस्य गुण इति व्यवहारान्न तदन्तस्य सञ्ज्ञा। तस्मात्पारायणादावदृष्टार्थमेव न्यास इति बोध्यम्।

संबुद्ध्याक्षिप्तस्येति। संबुद्धेः प्रत्ययत्वेन यस्मात्स विहितस्तदादीत्यंशोपस्थितिः। स चात्र योग्यतया पञ्चम्यन्त इति भावः। 'प्रत्यये गृह्यमाणे यस्मात्स विहित', इत्याद्युपतिष्ठते इति 'प्रत्ययग्रहणे यस्मात्स विहित' इत्यादिपरिभाषार्थ इति "अङ्गस्य" (पा०सू०६।४।१) इति सूत्रे भाष्ये स्पष्टम्। अनुमानरूपाक्षेपस्तु नात्र, फलाभावात्। यथा पीनत्वानुपपत्त्या ऽनुमीयमानरात्रिभोजनस्य पीनत्वोपपत्तिः फलं, न तथा एतत्सूत्रे तदनुमानेन संबद्ध्युपपत्तिर्भवति। किं च प्रत्ययस्योत्पत्तावङ्गापेक्षत्वे ऽपि ज्ञाने तदपेक्षत्वाभावेन शास्त्रे तदाक्षेपे मानभावः। अत एव "अङ्गस्य" इति सूत्रे तत्स्थाने

---

हिते वक्तव्ये नोत्तरानित्ययुक्तमत आह—*अनन्तरापेक्षेति*। तथा चैवंशब्देन प्रतिपक्षकथनमेवेति भावः। *न तदन्तस्य संज्ञेति*। न च संज्ञाविधाविति निषेधः शङ्क्यः। "सामन्त्रितम्" इतिवन्महासंज्ञाकरणेन प्रत्ययग्रहणेऽपि तदन्तग्रहणासिद्धेः।

*योग्यतयेति*। अन्यथा समानविभक्तिकत्वाभावेन "एङ्ह्रस्वात्" इत्यभेदेनविशेषणं न स्यात्। *प्रत्यय इति*। अङ्गसंज्ञासूत्रे प्रत्यये इत्यन्तस्य योगविभागेनैतादृशपरिभाषाया लाभात्। सम्बुद्धेः प्रत्ययत्वे प्रत्ययज्ञानस्य प्रकृतिज्ञानव्याप्यत्वादनुमानरूपं प्रकृतिज्ञानं भविष्यतीत्यत आह—*अनुमानेति*। भावेल्युट्। अनुमितीत्यर्थः। *फलाभावादिति*। न च 'हे कतरत्' इत्यत्र हलो लोपाभावस्यैव फलत्वमिति वाच्यम्। तस्य शास्त्रीयप्रत्ययग्रहणपरिभाषयैव लाभेनानुमानस्य व्याप्त्यादिज्ञानसापेक्षस्य विलम्बितोपस्थितिकत्वात्। न चानुमीयमानाङ्गस्य सम्बुद्धिसत्त्वमेव फलमिति वाच्यम्। तथा सत्यपि पदेन तस्यानुपस्थापनाच्छाब्दबोधकत्वं तस्य न स्यादिति भावः। *ज्ञान इति*। प्रत्ययत्वेन ज्ञाने प्रत्ययाधिकारे पाठो विधेयसमर्पकविभक्तिनिर्देशश्च साधकः, न तु प्रकृतिज्ञानं तस्य तज्जनकतावच्छेदकधर्मशून्यत्वादिति भावः। *अत एव। एतादृ

'प्रत्यय' इत्यधिकारः कार्य इति पक्षे 'प्राकरोत्' इत्यादौ उपसर्गात्पूर्वमडादिः स्यादित्याशङ्क्य 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेः' इति परिभाषोपस्थित्या समाहितं भाष्ये न त्वङ्गाक्षेपेणेति दिक् ।

अङ्गस्य । उक्तार्थस्य । "हल्ङ्याब्‌ (पा०सू०६।१।६८) इति सूत्राद्धलित्यनुवर्त्तते । हे कतरदिति । प्रकृत्यकारस्य टिलोपेनापहारादिति भावः । नन्वाङ्गात्परस्याः संबुद्धेरवयवस्य हलो लोप इत्युचितम् संबुद्ध्याक्षिप्तस्य संबुद्ध्यैवान्वयस्योचितत्वादत आह- कुलेतीति । अत्र परत्वात्पूर्वरूपे उभयत आश्रयणे ऽन्तादिवद्भावाभावात् तत्स्वीकारे ऽपि ह्रस्वसंबुद्ध्योः पौर्वापर्यव्यवहारासंभवात् ताद्रूप्यानतिदेशाच्च ह्रस्वान्ताङ्गात्परसंबुद्धेरभावान्मलोपो न स्याद्, । एवञ्च लक्ष्यानुरोधादन्याक्षिप्तस्याप्यन्यत्रान्वय इति भावः । एतदर्थमेव 'हल्लुप्यते सम्बुद्धेश्चेत्' इति व्याख्यातम् , मस्य सम्बुद्धित्वासंभवाद् अर्द्धविकारेणैकदेशविकृतन्यायेनापि न सम्बुद्धित्वम् । एकवचनसञ्ज्ञासंबुद्धिसंज्ञयोर-

---

विषये प्रत्ययग्रहणपरिभाषाया एवोपस्थितेरेव । न च सम्बुद्धिसंज्ञकः प्रत्ययो यस्माद्विहितस्तदादिष्टिलोपे कृतेऽपि कतरेत्यस्त्येवेति कथमत्र लोपाभाव इति वाच्यम् । परिभाषायां प्रत्ययपरकस्य तदादेरित्यंशस्य घटकतच्छब्देनोपस्थिततया प्रकृते सम्बुद्ध्या तादृशस्यैव तदादेरित्यंशस्योपस्थितिः सोत्र रेफान्तो न ह्रस्वान्त इत्यदोषात् ।

*परत्वादिति* । लोपापेक्षया इत्यादिः । *पूर्वरूपे* । अमि पूर्व इत्यनेन । *व्यवहारासम्भवादिति* । "अन्तादिवच्च" इतिशास्त्रबलादेकस्मिन्नपि यदि व्यवहारद्वयं तथापि ह्रस्वस्य सम्बुद्धेश्च पूर्वत्वस्य परत्वस्य चातिदेशबोधकशास्त्राभावेन तादृशव्यवहारासम्भवादिति भावः ।

ननु स्थानिवद्भावेन तादृशव्यवहरो भविष्यतीत्यत आह—*ताद्रूप्येति* । ताद्रूप्यस्य वर्णमात्रवृत्तिधर्मघटितस्यानतिदेशेन ह्रस्वान्तात्परा सम्बुद्धिरिति व्यवहारः स्थानिवत्त्वेनापि दुर्घटः । ह्रस्वत्वस्य वर्णवृत्तितया विशेषणतयाऽलाश्रयणात् । ननु पूर्वान्तवद्भावेन ह्रस्वान्ताङ्गत्वमेकदेशविकृतन्यायेन मस्य सम्बुद्धित्वं तस्यैव च व्यपदेशिवद्भावेन तदवयवत्वमिति लोपो भविष्यतीत्यत आह-*अर्द्धविकार इति* । अत्रार्द्धशब्दो भागाभिप्रायेण, न तु मात्रया । अत एव हेत्वन्तरमाह-*एकवचनसंज्ञेति* ।

क्तपरिमाणनिष्ठतया(१) तयोस्तेन न्यायेनालाभाच्च। मकारस्यादेशत्वा-
भावाच्च नात्र स्थानिवद्भावः। अत एव 'रामम्' इत्यादौ "सुपि च"
(पा०सू०७।३।१०२) इति दीर्घो न।

न च सम्बुद्धित्वस्य सकारमात्रनिष्ठत्वेन स्थानिभूतात्यर्थमत्वेन
आमः सम्बुद्धित्वाभावे कथं मस्य सम्बुद्ध्यवयवत्वमिति वाच्यम्, सुप्स-
ञ्ज्ञाया उकारविशिष्टे सत्त्वेन तदुपस्थाप्ये जायमानैकवचनसञ्ज्ञाया
विशिष्टे सत्त्वेन सम्बुद्धिसञ्ज्ञायामित्सञ्ज्ञोकारविशिष्टस्यैवोद्देश्यत्वेन
तस्यानल्विधित्वात्। एतेनादडादेशेनैव नपुंसकत्वाभिव्यक्तौ कुले-
तीति व्यर्थमित्यपास्तम्।

एङ्ग्रहणं किमिति। 'हरे' 'विष्णो' इत्यादौ अङ्गाधिका-
रस्थात् परनिमित्तापेक्षत्वाच्च गुणात्पूर्वं ह्रस्वान्तत्वादेव सि-
द्धिः। सेप्रभृतीनां सम्बोधने प्रयोगसत्त्वे एङ्ग्रहणेनैव सिद्धेः प्रत्या-

---

ननु स्थानिवद्भावेन सम्बुद्धित्वाल्लोपो भविष्यतीत्यत आह—*मकारस्ये-
ति*। नन्वेतादृशे विषये सम्बुद्धित्वस्याऽमिति समुदायवृत्तित्वेऽपि पूर्व-
रूपेणाऽऽनुमानिकादेशकल्पनया अ अ इत्यस्य स्थाने अ इति मकारस्याव-
शिष्टस्य मकार एवादेशः संबुद्धिर्भविष्यतीति न 'कुल' इत्यादौ लोपाप-
त्तिरत आह—*अत एवेति*। मस्यादेशत्वाभावादेव। यदि मकारे सम्बुद्धि-
त्वमतिदेशलभ्यं भवेत्तदा सुप्त्वमपि तुल्यन्यायात् स्यादिति भावः। सि-
द्धान्तार्थेऽपि, शङ्कते—*न चेति*। *सकारमात्रनिष्ठत्वेनेति*। इदं यथा-
श्रुतसूत्ररीत्या। "सुः संबुद्धिः" इति न्यासे तु शब्दतः समुदायस्य संज्ञि-
त्वेनाश्रयणादयमनल्विधिरेव। सूत्ररीत्यैवसमाधत्ते—*सुप्संज्ञाया इति*
*अनल्विधित्वादिति*। इष्टो दीर्घ इव। *एतेनेति*। उक्तरीत्या कुलेत्या-
स्य शङ्कासमाधानपरतया योजनेन।

एङ्ह्रस्वादिति सूत्रस्थस्यैङ्ग्रहणस्य प्रयोजनमन्यथासिद्धमित्याह—
*हर इत्यादि*। *अङ्गाधिकारस्थादिति*। एतेनाधिकापेक्षत्वरूपं बहि-
रङ्गत्वबीजं सूचितम्। ननु संज्ञापेक्षान्तरङ्गबहिरङ्गभावोऽन्यत्र निरस्त इ-
चेत्तदाह-*परनिमित्तेति* परनिमित्तकं बहिरङ्गमिति पूर्वपक्षिणो मत-
तिभावः। *सम्बोधने प्रयोगसत्त्व इति*। एवंकथनेन "नान्तः पादम्-

---

(१) अक्तपरिमाणत्वं—परिच्छिन्नपरिमाणत्वम्—परिच्छिन्नपरिमाणत्वञ्च, संख्यात्व परिमाणत्व व्या-
प्यधर्मावच्छिन्नप्रकारताकविषयताश्रयविशिष्टत्वम्। वैशिष्ट्यञ्च—स्वघटितत्वं, स्वसमनियतत्वं, अन्य-
सम्बन्धेन। लक्षणसमन्वस्तु स्वयमूहनीयः। तत्त्वञ्च संबुद्धिसंज्ञा इयत्ता परिमाणेन दर्शयितुं समर्था, प्रा-
तिपदिकत्वं च न तथा, इति न तत्राक्तपरिमाणन्यायावसर इति।

ह्रस्वग्रहणं व्यर्थमिति प्रश्नः। हरे इति। सामर्थ्यादेवात्र सन्निपातपरिभाषा न। "गुणात्सम्बुद्धेः" इति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्याच्च। अत एव 'हे लक्ष्मि' इत्यादौ लोपसिद्धिः। परत्वादिति। अभ्युच्चयः। नित्यत्वाच्चेति। चेनाऽनवकाशत्वसङ्ग्रहः। नपुंसके 'त्रपो' इत्यादावस्यापि लुकि बाध इत्यन्यत्।

---

इति सूत्रस्थेन, 'न चेङः पदान्तात्परोऽस्ति' इति भाष्येण विरोधात् सावीदशानामनभिधानेन एकारग्रहणस्यापि न प्रयोजनमिति सूचितम्। सौ पदत्वञ्च "स्वादिषु" इतियोगविभागेन साधितमेव। मूले *नित्यत्वाच्चेति*। न च नित्याद्प्यन्तरङ्गस्य बलवत्त्वं तच्च ह्रस्वान्तत्वप्रयुक्तस्य लोपस्योपपादितमेवेति वाच्यम्। परस्थानिकमन्तरङ्गं परनिमित्तकं बहिरङ्गमित्यस्य लक्ष्यसाधकत्वेनासम्प्रतिपन्नत्वादिति भावः।

ननु सम्बुद्धिनिमित्तके गुणे कृते उपजीव्यविरोधस्यान्याय्यत्वमूलकसन्निपातपरिभाषया सम्बुद्धिलोपो न स्यादत आह—*सामर्थ्यादेवेति*। एङ्ग्रहणसामर्थ्यादित्यर्थः। सम्बुद्धिसन्निपातेन गुणे कृते यदि सम्बुद्धिलोपो गुणनिमित्तकः स्यात्, तदा सन्निपातपरिभाषाविरोधः स्पष्ट एव। *अत्रेति*। लोपविषये। ननु "अतोम्" इतिसूत्रे म् इति छेदपक्षे 'ज्ञानम्' इत्यादौ सुपि चेति दीर्घापत्तिमुक्त्वा सन्निपातपरिभाषया दीर्घवारणे 'हे ज्ञान' इत्यादौ सम्बुद्धिलोपानापत्तिः। मनिमित्तसन्निपातस्य प्रत्ययलोपेन विनाशादित्युक्तम्। यदि 'लोपविषये सन्निपातपरिभाषा न' इतिप्रकृतोक्तरीत्योच्यते तदा तत्र वक्ष्यमाणग्रन्थविरोध इति चेन्न। कृन्मेजन्तसूत्रभाष्ये सन्निपातपरिभाषाया दोषनिरूपणावसरे 'नदीह्रस्वत्वं सम्बुद्धिलोपस्यानिमित्तं स्यात्' इत्युक्तम्, तत्प्रामाण्येन सम्बुद्धिनिमित्तककार्ये कृते तस्य कार्यस्य यत्र सन्निपातविघातककार्यान्तरनिमित्तत्वप्रसक्तिः तत्र सन्निपातपरिभाषाया अप्रवृत्तिः कल्प्यते। यत्र तु सम्बुद्धेरेव कार्यं तत्र सा प्रवर्त्तत एवेत्याशयात्॥

*सामर्थ्याच्चेति*। उभयोपादानसामर्थ्यादेङ्सामान्यमेतत्सूत्रस्य विषयः। 'हे हरे' 'हे विष्णो' इत्यत्र यदि सन्निपातपरिभाषया लोपो न स्यात्तदा लोपशास्त्रस्यैङ्त्वव्यापकप्रवृत्तिकत्वभङ्गः स्पष्ट एव। *अत एव*। सन्निपातपरिभाषाऽप्रवृत्तिस्वीकारादेव। एवञ्चैङिति प्रत्याहाराश्रयणं सन्निपातपरिभाषाया अनित्यत्वे ज्ञापकमिति तत्त्वम्। असमबलस्थले परत्वं न नियामकमित्याशयेनाह—*अभ्युच्चय इति*। ननु सम्बुद्धिगुणस्य नानवकाशत्वम् 'त्रपो' इत्यादौ लुका बाधेनैङ्ह्रस्वादित्यस्याप्राप्तौ गुणस्य चारितार्थ्यादित्यत आह—*नपुंसक इति*। *अस्यापि*। एङ-

अमि पूर्वः। (पा०सू०६।१।१०७) पूर्वसवर्ण इत्यनुवृत्तै
सिद्धे पूर्वग्रहणन्तु 'रामम्' इत्यादौ द्विमात्रवारणाय।

लशकु (पा०सू०१।३।८।) समाहारद्वन्द्वः। अतद्धिते किम्
"कर्णललाटात्कनलङ्कारे" (पा०सू०४।३।६५) कर्णिका। किं
फलन्त्वादिवृद्धिः स्यात्। आदिग्रहणाद् वृङः षाकनो न। तस्य कि
त्वे गुणो न स्यात्।

तस्माच्छ(पा०सू०६।१।१०३) (१)पुंसीति पञ्चम्यर्थे सप्तमी।
पुंसो विहितस्येत्यर्थः। तत्र विद्यमानाद्विहितस्येत्यर्थो वा। तस्मादि
किम्? एतान् गाः पश्य। पुंसि किम्? मतीः।

ह्रस्वादित्यस्यापि। *अन्यदिति*। लुका बाधेऽपि प्रकृतसूत्रोद्देश्यता
वच्छेदकसत्त्वेन गुणस्य प्रकृतसूत्राप्राप्तियोग्येऽपि विषयेऽचारितार्थ्येनाप
वादत्वमक्षतमिति भावः।

*पूर्वग्रहणन्त्विति*। पूर्वो वर्णः स्थानप्रयत्नाभ्यां यज्जातीयस्तज्
तीय एव यथा स्यादिति।

*पुंसो विहितस्येति*। अत्र विहितत्वानुपादाने 'अतिमाल
न्' इत्यादौ पूर्वसवर्णदीर्घे कृते पुंसि यो वर्त्तते ततः परस्य शसोऽसम्भ
आद्यव्याख्यायां व्यत्ययकल्पनापेक्षया लाघवादाह—*तत्र विद्यमाना
ति*। *एतान्गा इति*। अत्रैतानित्यस्योपादानं गोशब्दस्य पुंसि वि
मानत्वसूचनाय। यत्तु तस्मादित्यस्याभावेऽपि 'एतान् गाः पश्य' इत्य
दोषः। "शसो नुम् पुंसि" इति न्यासात् अक इति हलन्तेऽतिप्रसङ्गा
वायानुवर्त्तनीयम्। एवञ्च "आदेः परस्य" इत्युपस्थित्याऽकारस्यान्त्या
वे नुमि पूर्वसवर्णदीर्घे सकारस्य संयोगान्तलोपे सिद्धमिष्टम्। गाः इ
तु न नुमः प्राप्तिः, अपवादत्वात्पूर्वमात्त्वेऽकः परस्य शसोऽभावादिति।
न्न। विश्वप इत्यादावाकारलोपेऽपि पञ्चमीसमासेन शसो कः परत्वा

(१) अत्र 'शसो नुम पुंसि' इत्येवन्यासः कार्यः। अकः सवर्णेति पुर्वसूत्रात् 'अकः' इत्यनु
कः परस्य शसः पुंसि नुम्भवति' इत्यर्थकरणेन मिदचोन्त्यादिति परिभाषया शसोऽकारस्यान्तावय
गमः पश्चात् सवर्णदीर्घे संयोगान्तस्येत्यनेन सलोपे सिद्धं रामान् इति। शसोऽकः परत्वाभाव
दुहः इत्यादौ न दोषः। 'सूनः' 'विदुषः' इत्यादौ अजादित्वस्य नाशाभावात् भत्वात्सम्प्रसारणं च
एतान् गाः पश्यति इत्यादौ शसो अकः परत्वाभावात् दोषो न। हरीन् भानून् इत्यादौ अकः परत्व
सिद्धम्। विश्वपः इत्यादौ 'हेगौरि' 'प्रविगय्य' इति भाष्योदाहरणात् 'परस्माद्विधौ' इति
सस्यानित्यत्वात् आकारस्य स्थानिवद्भावोऽपि न। एवञ्च आकरस्य स्थानिवत्वाभावेन अकः प
वात् नुमागमाप्राप्तिरेव नेति विश्वप इति रूपं सिद्धम्। अष्टौ इत्यत्र बहिरङ्गपरिभाषया दैवार
'अकः' इत्युनुवृत्तिकरणे प्रमाणाभावात् यथाश्रुतमेव साधु।

अट्कु (पा०सू०८।४।२)। बाधितुमिति। तेन 'पर्याणद्धम्' इत्यत्र "उपसर्गादसमासेऽपि" (पा०सू०८।४।१४) इति णत्वसिद्धिरिति भावः। अयोगवाहानामिति। न विद्यते योगो वर्णसमाम्नाये येषां ते ऽयोगाः। अनुपदिष्टत्वादुपदिष्टैरगृहीतत्वाच्चेत्यर्थः। ते च ते वाहयन्ति प्रयोगं निर्वाहयन्ति ते वाहाः। ते चानुस्वारविसर्गजिह्वामूलीयोपध्मानीययमाः। अत एव "उरः केण' इत्यादौ विसर्गव्यवधानेऽपि णत्वसिद्धिः। तदुक्तं भाष्ये--'नार्थो नुम्ग्रहणेनानुस्वारे कृतेऽड्व्यवाये इत्येव सिद्धम्' इति।

आदर्शेनेत्यादौ तु नातिप्रसङ्गः। अडतिरिक्तव्यवायात्। 'तस्मात्'इत्युपस्थितं निर्दिष्टग्रहणमेतत्समभिव्याहारेऽडादिव्यतिरिक्ताव्यवहितपरम्। तदुक्तम्-'णत्वे ऽन्यव्यवाये प्रतिषेधो वक्तव्यो, न वा ऽन्येन व्यवहितत्वात्' इति ग्रन्थेन। एतदुत्तरम् 'अटा व्यवायसत्त्वात्प्राप्नोत्येव, अटैव व्यवाये इत्यर्थात्' इत्यादि भाष्यमेकदेशिनोरुक्तिप्रत्युक्तिपरम्। "चुटुतुलशर्व्यवाये न" इति प्रतियोगिज्ञानसापेक्षनिषेधबोधकगुरुन्यासेन सिद्धेऽट्कुप्वाङ्नुमित्युक्त्या एतैरेव व्यवाये इत्यर्थं वदता तस्यास्तदुक्तित्वध्वननात्। एतद्वार्तिकमतम्।

भाष्ये तु "रषाभ्याम्" (पा०सू०८।४।१) इति सूत्रे 'ऋवर्णान्नस्य' इत्यस्य प्रत्याख्यानाय व्यवाये इति योगं विभज्याट्कुप्वाङ्नुम्भिरित्येतैरेवाक्षरसमाम्नायिकैर्व्यवाये, नान्यैरित्यर्थकं व्याख्यातम्।

---

कारस्य नुमापत्तेः। पञ्चमीसमासः प्रत्याख्यात इति न भ्रमितव्यम्। तदावश्यकत्वस्यान्यत्र स्पष्टत्वात्।

*णत्वसिद्धिरितीति*। अत्राऽऽङ्ग्रहणम् "पदव्यवाय" इतिसूत्रे पदशब्द आङ्भिन्नपदपर इत्यत्र तात्पर्यग्राहकमिति भावः। यदुक्तमडाद्यतिरिक्तव्यवायादिति तल्लाभप्रकारमाह-*तस्मादीति*। प्रतियोगिज्ञानसापेक्षेति न्यासस्य गुरुत्वे हेतुः। इत्युक्त्या इत्यस्य लब्धमिति शेषः। *तस्या इति*। समाधानपरभाष्योक्तेरित्यर्थः। सिद्धान्तमाह-*भाष्ये त्विति*। अत्राक्षरसमाम्नायिकैरित्येतन्नियमस्य सजातीयापेक्षत्वाल्लब्धम्। अत्राक्षरसमाम्नायिकत्वं नाक्षरसमाम्नायपठितत्वं किन्तु अक्षरसमाम्नायपठितग्राह्यत्वमपि। अत एव "सरूपाणाम्" इति निर्देशसङ्गतिः। "स्वं

तदा तु आदेशेन इत्यादौ प्राप्तिरेव नेति बोध्यम् । णत्वे इति । णकारे इत्यर्थः ।

पदान्तस्य । (पा०सू०८।४।३७) "नभाभू" (पा०सू०८।४।३८) इति सूत्रान्नेति वर्त्तते । अत्र सूत्रे ऽनन्तरस्येत्यादिव्यवस्थापकन्यायानामप्रवृत्तिर्बोध्या । अपदान्तस्येत्यनुवर्त्यैतस्य भाष्ये प्रत्याख्यानात् ।

यस्मात्प्र (पा०सू० १।४।१३)। 'यस्मात्'इति 'तदादि'इति तच्छब्दाकाङ्क्षापूरणाय। तदादीति। तत्प्रकृतिरूपमादिर्यस्येत्यर्थः। प्रत्यासत्तिन्यायलब्धार्थमाह-तस्मिन्प्रत्यये इति। "गुणः कृतात्मसंस्कार" इति न्यायेनात्रापि 'तस्मिन्'इति परिभाषाप्रवृत्तिः। प्रकृतिमात्रस्य तु व्यपदेशिवद्भावेन तदादित्वं बोध्यम्। स्त्री इयतीति। इदम्शब्दात् वतुपि वस्य "किमिदंभ्यां वो घः" (पा०सू०५।२।४०) इति घादेशे इयादेशे "इदङ्किमोः" (पा०सू०६।३।९०) इतीशि 'यस्य' इति लोपे ङीपि 'इयती' इतिरूपम् ।

न च तत्र परतः स्त्रीशब्दस्येयङाद्यापत्तिरूपो दोषो न, यस्येति लोपस्याभीयत्वादसिद्धत्वेनात्र तदप्राप्तेरिति वाच्यम्। व्याश्रयत्वे

---

रूपम्" इति शास्त्राय शब्दाय शब्दप्रकारकैवोपस्थितिः, तस्मात्त्वप्रत्ययस्य प्रकारीभूतशब्दबोधकतया तस्यैव प्राप्तिरित्याशयेनाह-णकार इति।

*न्यायानामिति*। एकस्यैव विषयभेदाद्बहुत्वारोपेण बहुवचनम्। न्यायप्रवृत्तिरिति सूचितम्।

ननु यस्मात्प्रत्ययविधिरित्यत्र "गुणानाञ्च परार्थत्वात्" इति न्यायेन "तस्मिन्" इतिपरिभाषाप्रवृत्तिर्न स्यादत आह-*गुणः कृतात्मेति*।

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्त्तते ।

पानीयमेलादिसंस्कृतम्पुरुषस्य यथा, इति न्यायेनेत्यर्थः। 'भवति' इत्यादौ 'भू' इत्यादेः शब्निरूपिताङ्गत्वसिद्धये आह-*प्रकृतिमात्रस्येति*। मूले विधिरिति किम् ? स्त्री इयतीति। विधिग्रहणाभावे यस्मात्प्रत्यय इत्याश्रयणे स्त्रीशब्दाद्वतुपः परत्वात्तस्मिन्नपि स्त्रीशब्दस्याङ्गसंज्ञा स्यात्, तथा सति स्त्रिया इतीयङापत्तिः। अत्र शङ्कते--*न चेति* *आभीयत्वादसिद्धत्वेनेति*। "असिद्धवदत्राभात्" इत्यनेनासिद्ध

दित्यर्थः। अत्राऽऽङभिविधौ। एवञ्च भादिति पञ्चम्यर्थस्य व्यापकत्वस्य सत्त्वे तात्पर्यग्राहकत्वेन द्योतक इति फलितम्। भशब्दश्च लक्षणया भाधिकारसम्बद्धशास्त्रपरः। असिद्धपदञ्च लक्षणयाऽसिद्धकर्तृकसत्तापरम्। असिद्धम्-अनिष्पन्नमित्यर्थः। तृतीयान्ताच्च वतिः। तृतीयार्थः प्रतियोगित्वम्। एवञ्चानिष्पन्ननिष्ठप्रतियोगित्वस्य निरूपकत्वसम्बन्धेन वत्यर्थसादृश्येऽन्वयेनासिद्धकर्तृकसत्ताप्रतियोगिकसादृश्यलाभः। सादृश्यञ्च-प्रवृत्तिरूपं निवृत्तिरूपं च। भाधिकारसम्बद्धशास्त्रनिष्ठा व्याप्यता तादात्म्यसम्बन्धावच्छिन्ना ग्राह्या। सादृश्यनिष्ठा व्यापकता च स्वरुपसम्बन्धावच्छिन्ना विवक्षिता। भाधिकारसम्बद्धशास्त्रस्य तादात्म्यसम्बन्धेन यः सम्बन्धी तन्निष्ठो योऽत्यन्ताभावः तदप्रतियोग्यसिद्धकर्तृकसत्ताप्रतियोगिकं सादृश्यमित्युभयार्थः।

आभादिति पदञ्चानुवर्त्तते। तदर्थोऽपि व्यापकत्वपर्यन्तं पूर्ववत्। 'शास्त्रे कर्त्तव्य' इत्यध्याहारः। एतद्घटकशास्त्रे चावृत्ताभाच्छब्दार्थव्यापकत्वस्य स्वाश्रयसम्बद्धत्वसम्बन्धेनान्वयः। तादृशव्यापकत्वाश्रयश्च असिद्धवत्पदमेव। अत्रेत्येतद्घटकैतच्छब्देनासिद्धवत्पदसम्बद्धशास्त्रीयनिमित्तसमुदायो गृह्यते। विषयत्वं सप्तम्यर्थः। स च स्वसजातीयनिमित्तसमुदायरूपः। एवञ्चासिद्धवत्पदसम्बद्धशास्त्रीयनिमित्तसजातीयनिमित्ते भाधिकारसम्बद्धशास्त्रव्यापकत्ववत्सम्बद्धशास्त्रे कर्तव्येऽविद्यमानकर्तृकसत्ताप्रतियोगिकसादृश्यवती भाधिकारसम्बद्धशास्त्रकर्तृका सत्ता इति सूत्रार्थः। एतत्सूत्रभाष्ये 'असिद्धवचनमुत्सर्गलक्षणभावार्थमादेशलक्षणप्रतिषेधार्थञ्च' इति सूत्रप्रयोजनमुक्तम्। यथा 'एधि' 'शाधि' इत्यत्र परत्वान्नित्यत्वाच्च 'घ्वसोरेद्धा' इत्येत्वे कृतेऽपि तस्यासिद्धत्वात् धिभावो भवति। एवं 'शाधि' इत्यत्र शाभावे कृतेऽपि तस्यासिद्धत्वाद्धित्वमिति।

न चोभयमप्यन्यथा सिद्धम्। "घ्वसोः" इति सूत्रेऽत इत्यनुवर्त्यात एत्वे धित्वे सलोपे चैधीत्यस्य "शा हौ" इतिसूत्रे "शास् हौ" इतिन्यासेन "शास इदङ्" इतिप्राप्तत्वबाधकशासादेशे धित्वे सलोपे च शाधीत्यस्य च सिद्धेः। अथ वा "न हौ" इतिन्यासेनेत्त्वनिषेधेऽपि सिद्धेरिति वाच्यम्। 'कुरु' इत्यत्र कृ उ हि इति स्थिते "सर्वविधिभ्यः" इतिन्यायेन हेर्लुकि सार्वधातुकपरत्वमसिद्धत्वादाश्रित्य "अत उत्" इति सूत्रेणोत्त्वार्थं तस्यावश्यकत्वात्। यदि चोप्रत्ययान्ताङ्गावयवकरोतेः "अत उत्" इत्यनेन लुक्यपि प्रत्ययलक्षणेनाङ्गसंज्ञया भूतपूर्वगत्या सार्वधातुकपरत्वाश्रयणेन वाऽस्यापि सिद्धिरित्युच्यते तदाऽऽसन्नायन्नित्यत्र "श्नसोः" इति सूत्रेणाल्लोपे प्रथमस्य "इणो यण्" इति यणादेशेऽनजादित्वाद ण् प्राप्नोतीति सूत्रमावश्यकमिति वदन्ति।

न च "मयतेरिदन्यतरस्याँल्लुङ्लङ्" इतिसंहितापाठे लकारान्तं प्रश्लिष्य आर्द्धधातुकग्रहणानुवृत्त्या वा लावस्थायामेवाडागमेनास्याप्य न्यथा सिद्धिरिति वाच्यम्। एवं सति 'ऐज्यत' इत्यस्यासिद्ध्यापत्तेः। च "आडजादीनाम्" इतिसूत्रस्याऽऽडागमेनैव लक्ष्यसिद्धेरनारम्भ एव यु क्तः। वृद्धिविधौ "आटश्च" इति कर्त्तव्यम्। तच्च "उपसर्गादृति" सूत्रानन्तरं पाठ्यम्। "उपसर्गादृति" इतिसूत्राद्धातुग्रहणमनुवर्त्य पञ्च विपरिणामेनाटो धात्ववयवेऽचि वृद्धिः स्यादिति व्याख्यानाद् 'अस्वपो सति' इत्यादौ न दोषः।

न च 'अस्वपोऽहसन्' इत्यत्र पूर्वान्तवत्त्वेनाट्त्वात्पूर्वरूपं बाधि वृद्धिः स्यादिति वाच्यम्। येन नाप्राप्तिन्यायेन गुणस्यैव बाधिका वृद्धि रिति परत्वात्पूर्वरूपेण सिद्धेः। न च 'आटीत्' इत्यत्र पररूपापत्तिः। "अ गुणे" इतिसूत्रानन्तरमाट इतिकरणेन "आटश्च" इतिसूत्रस्थचकारस्य नर्वृद्धिविधायकतया वा पररूपस्य बाधनात्। अत एव "उस्योमाङ्क्ष्वा प्रतिषेध" इति वचनप्रत्याख्यानमपि सङ्गच्छते। एवञ्चाऽऽयन्नित्यत्राप्य ङ्गत्वात् वृद्धावायादेशे च सिद्धिर्भविष्यति। वृद्धौ कृतायाम् "इणो यण्" तु न, 'एरुः' इतिसूत्रादेरित्यपकर्षेणेवर्णान्तस्येणो यणित्यर्थात्। न "वार्णादाङ्गम्" इतिन्यायेन वृद्धिबाधित्वाऽनेकाच्त्वादिवर्णान्तत्वाच्च णापत्तिरिति वाच्यम्। अजादौ प्रत्यये "इणो यण्" विधानेनोभयोर्युग त्प्राप्त्यभावात्।

न च 'लावस्थायामडागम' इति पक्षे 'अध्यैयाताम्' इति न सिद्ध्ये अत्र पूर्वमडागमे इयङ्वृद्ध्योर्युगपत्प्राप्त्यभावेनान्तरङ्गत्वात् वृद्धौ इयङः प्रवृत्तेरिति वाच्यम्। आडागमप्रत्याख्यानपरभाष्यप्रामाण्येन लोके त भिधानात्। "सम्प्रसारणाच्च" इतिसूत्रभाष्यस्य 'अध्यैयाताम्' इतिप्र गस्य तु छान्दसत्वमभ्युपेत्य "बहुलं छन्दस्यमाङ्योगेऽपि" इतिबहुल हणेन पूर्वमियङि ततोऽटि वृद्धिरित्युपपत्तिः। 'आसन्' इत्यत्र तु अटि द्धौ अदितितपरकरणेनाल्लोपाप्रवृत्तिः। एवम् 'अकारि' 'येहि' इत्यत्र "चि लुक्" इति लुकि 'न लुमता' इतिनिषेधेन प्रत्ययलक्षणाभावेऽपि स्थायामडागमे तताश्चिणि दोषाभाव इत्यपि बोध्यमिति चेन्न। 'आ 'जहि' इत्यत्रानुनासिकलोपे जादेशे च कृते 'अतो हेः' इति लुक्प्रा स चासिद्धत्वान्नेत्यस्य प्रयोजनत्वात्।

ननु 'अतो हेः प्रत्ययात्, उतश्चासंयोगपूर्वात्' इति न्यासेन प्रत्ययादेव प्रवृत्त्येदमप्यन्यथा सिद्धमिति चेन्न। पय्धातोर्यङ्लुगन्तात् स्य लोपानापत्तेः। यदि यङ्लुकश्छान्दसत्वमिति ब्रूषे तथाऽपि भ व्दात् "छन्दसीवनिपौ" इति वनिपि शासि वकारस्य सम्प्रसारणे

नाभीयासिद्धत्वाप्राप्तेः । तत्र हि समानाश्रयत्वम्—असिद्धत्वाश्रयशास्त्रसम्बन्धिनिमित्तसमुदायान्यूनानतिरिक्ताश्रयकत्वम् । अस्ति च यस्येतिलोपापेक्षया 'स्त्रियाः' इतिसूत्रेऽधिकस्य स्त्रीशब्दस्यापेक्षा प्रत्यासत्त्या

---

ति च" इत्यल्लोपः प्राप्नोति तस्यासिद्धत्वादप्रवृत्तेः फलत्वात् । न च बहिरङ्गपरिभाषया सम्प्रसारणस्यासिद्धत्वं भविष्यतीति वाच्यम् । बहिरङ्गपरिभाषया अन्तरङ्गस्याऽजानन्तर्यनिमित्तकत्वेऽप्रवृत्तिस्वीकारात् । किञ्च 'शुन' इत्यत्र वकारस्य सम्प्रसारणे वार्णपरिभाषया पररूपं बाधित्वाऽल्लोपः स्यात् । सूत्रारम्भे तु सम्प्रसारणस्याल्लोपे कर्त्तव्येऽसिद्धत्वात् 'न संयोगात्' इतिसूत्रेण निषेधान्नाल्लोपः । न चेष्टापत्तिः । उदात्तनिवृत्तिस्वरापत्तेः । किञ्च 'दध्रे' इत्यत्र "इरयोरे" इति सूत्रेण रेभावे तस्यासिद्धत्वाद् "आतो लोप" इत्याल्लोपो भवति, स च सूत्राभावे न स्यात् । यद्यप्येतस्य छान्दसत्वेन "छन्दस्युभयथा" इतिसूत्रेण सार्वधातुकत्वात् "सार्वधातुकमपित्" इति ङित्वेन "आतो लोप इटि च" इति लोपेन सिध्यति । तथापि 'कारिष्यत' इत्यत्र चिण्वदिट आभीयत्वेनासिद्धत्वात् णिलोपस्य सूत्रप्रयोजनत्वात् । यदि तु "स्यसिच्" इति सूत्रे चकारस्यानुक्तसमुच्चयार्थत्वेन णिलोपोऽपि साध्यते, तथापि 'अकारितराम्' इत्यत्र चिणोलुकि कर्तव्ये चिणो लुग् असिद्धो भवति, सूत्राभावे तु तरपोऽपि लोपः स्यात् । तद्व्यावृत्त्यर्थं यदि "चिणो लुक्" इति सूत्रे तग्रहणं क्रियते, यदि वा चिणो लुगिति सूत्रे मण्डूकप्लुत्या एकदेशे स्वरितत्वप्रतिज्ञया "गमहन" इतिसूत्रात् ङिद्ग्रहणस्यानुवृत्तिमाश्रित्य 'ङितो लोप' इति व्याख्यायते तर्हि क्लेश इत्येतदपेक्षया सूत्रारम्भ एव ज्यायानित्याशयः ।

असिद्धवत्पदसम्बद्धशास्त्रीयनिमित्तसजातीयत्वञ्च अन्यूनानतिरिक्तत्वेन निमित्तम्, अत्र समवायिकारणं निमित्तकारणञ्च । अत एव समानाश्रये आभीये कर्तव्ये इति व्याख्यातम् । एवञ्च प्रयोगप्राप्तासिद्धत्वाश्रयशास्त्रीयनिमित्तसमुदायान्यूनानतिरिक्ताश्रयकत्वम् । अत्रान्यूनत्वनिवेशात् 'पपुषः' 'तस्थुष' इत्यत्र सम्प्रसारणे कृते आतो लोपे कर्तव्येऽसिद्धत्वाभावः सिध्यति । सम्प्रसारणनिमित्तभत्वनिमित्तशसाद्यनपेक्षत्वात् । एवं 'प्रशमय्य गतः' 'प्रतमय्य गत' इत्यत्र "मितां ह्रस्व" इत्यस्य णेरयादेशे कर्त्तव्येनासिद्धत्वम् असिद्धत्वाश्रयशास्त्रीयनिमित्तसमुदायाधिकनिमित्तकत्वमयादेशस्य । एवम् 'चाखायिता' 'चाखायितुम्' इत्यत्रात्वे कृते आत्वस्यासिद्धत्वाल् "यस्य हल" इति लोपः प्राप्नोति तस्याधिकनिमित्तकत्वादसिद्धत्वाभावः । न च 'जहि' इत्यत्र हन्तेर्जादेशे "अतो हेः" इति हेर्लुक् प्राप्तोऽपि हिनिमित्तकजादेशस्यासिद्धत्वान्नेति भाष्ये उक्तं, तद्वि-

अजादिप्रत्ययनिरूपिताङ्गे एवेयङ्प्रवृत्त्या स्त्रीशब्दस्य सुनिरूपिता
त्वेऽपि न दोषः। विधिग्रहणादेव 'भनक्ति' इत्यादौ "अतो दीर्घो य
ञि" (पा०सू०७।३।१०१) इति न। तदादिग्रहणं 'करोमि' इत्याद

---

रुध्यते "अतो हेः" इतिसूत्रप्रवृत्तिनिमित्तातिरिक्तस्य जादेशस्थानि
हन्तेर्जादेशनिमित्तत्वेन सामानाश्रयत्वाभावादिति वाच्यम्। एतद्भाष्य
प्रामाण्येन विकारकृतभेदस्य समानाश्रयत्वविघातकत्वानङ्गीकारात्।

न च तथापि चिणो लुकि कर्तव्ये चिणो लुगसिद्ध इति "अपा
तराम्' इत्यत्र तरपो न लुगित्युक्तं तद्विरुध्यते। उत्तरकालप्राप्तिक
सम्बन्धिनस्तरपः पूर्वकालजातलुक्स्थानितशब्दभिन्नतया समानाश्र
त्वाभावादिति वाच्यम्। अन्यूनातिरिक्ताश्रयकत्वघटकातिरिक्तस्य
रूपेणासिद्धत्वाश्रयशास्त्रनिमित्तता तद्धर्मावच्छिन्नप्रतियोगिताकभेद
पतया प्रकृते चिणः परत्वमात्रस्यैवोद्देश्यतावच्छेदकत्वेन तादृशध
च्छिन्नप्रतियोगिताकभेदस्य चोत्तरकालप्राप्तस्य चिणो लुक्शास्त्रस
म्बन्धिन्यसत्त्वात् समानाश्रयत्वमव्याहतमेवेत्याशयात्। स्थानिनोऽपि
मित्तमध्ये प्रवेशस्वीकारात् विधिग्रहणस्याङ्गसंज्ञासूत्रघटकस्य प्रयोजन
रूपणावसरे 'स्त्री इयती' इत्यत्रेयङादेशे इयच्छब्दनिमित्तके कर्तव्येऽ
द्धा नेत्युक्तं सङ्गच्छते। स्थानिनो निमित्तत्वेनाश्रयणाभावे "यस्येति
इति लोपस्य स्त्रिया इतीयङादेशस्य चेयच्छब्दनिमित्तकत्वेन समान
यतया इयङादेशे कर्त्तव्ये यस्येति लोपस्यासिद्धत्वं स्यात्। स्थानिन
थात्वे तु व्याश्रयतयाऽसिद्धत्वाभावः स्पष्ट एव।

अत्रेदन्तत्वम्। अत्र भाष्ये 'आरभ्यमाणेऽप्येतस्मिन् योगे 'सिद्धं वसु
म्प्रसारणमज्विधौ' इत्युक्तम्। व्याश्रयत्वात्सिद्धत्ववचनं प्रत्याख्याता
त्वन्यत्। परं त्वारभ्यमाणेऽप्येतस्मिन्निति वाक्ये अपिशब्दोपादानस
र्थाद्भाष्यकारस्यासिद्धवत्सूत्रानारम्भ एवाभिमत इति कल्प्यते।
एवाह कैयटः 'अनेकपरिहाराश्रयेण प्रतिपत्तिगौरवं माभूत्, इत्येवमर्थ
रभ्यमाण इत्यर्थ इत्याह'। नन्वेवम् 'इर इत्संज्ञा वक्तव्या' इतिवार्ति
प्रत्याख्यानावसरे "गोः पादान्त" इति सूत्रादन्तपदसम्बन्धेनेदिदन्त
ति व्याख्याने नुम्विधायकसूत्रस्थं धातुग्रहणस्याङ्गस्येत्यस्याङ्गसंज्ञायो
र्थकत्वं कल्पयित्वा उपदेशावस्थायामेव नुम्प्रवृत्तिः प्रयोजनम्। तेन
ण्डा' 'हुण्डा' इत्यादौ "गुरोश्च हल" इति सूत्रेणाकारप्रत्ययः सिध्यति
तादृशसिद्धान्ते तासन्ते 'भविता' इत्यादौ नुम्प्राप्नोतीत्याशङ्क्य 'तास
वक्तुं शक्यत्वात्' इत्युक्तम्। एवं सति 'हन्तारौ' इत्यादौ टिलोपे कृते
निदिताम्" इति नलोपः प्राप्नोति। सूत्रसत्त्वे त्वाभीयत्वेन टिलोप

विकरणस्य गुणार्थम् । प्रत्ययविशिष्टस्येति । तथा सति अङ्गेन प्रत्ययपरत्वलाभानापत्तौ 'वव्रश्च' इत्यस्यासिद्धिः ।

किं च 'राजपुरुष' इत्यादौ 'नलुमता' इति निषेधात्पूर्वपदे पदत्वाभावेन नलोपानापत्तिरिति भावः । ततोऽप्यधिकस्य वेति । 'देवदत्त ओदनमपाक्षीत्' इत्यादौ देवदत्तादिशब्दोत्तरसुपं निमित्तीकृत्य लुङ्पर्यन्तमङ्गत्वात्तस्य लुङ्परत्वेन देवात्पूर्वमडापत्तिः । अङ्गसञ्ज्ञा-

---

सिद्धत्वेन नलोपाप्राप्तिरिति वाच्यम् । "हनः सिच्" इतिकित्त्वविधानेनाहतेत्यादौ नलोपसाधकेन विकरणोपधात्वमादाय नलोपाभावज्ञापनेनादोषात् । अत एव 'अमंस्त' इत्यत्र नलोपो न ।

न च लावस्थायामडागममाश्रित्य सूत्रप्रत्याख्याने 'अकरोत्' इत्यादावुप्रत्ययस्याऽऽद्युदात्तत्वेऽटोऽनुदात्तत्वापत्तिरिति वाच्यम् । "अन्यत्र विकरणेभ्यः" इति पर्युदासात् । न च तथापि 'अग्रहीष्टाम्' इत्यादावेकाचो ग्रहेर्विहितत्वाभावाद्दीर्घो न स्यादिति वाच्यम् । अन्तरङ्गे दीर्घे कर्तव्ये बहिरङ्गस्याटोऽसिद्धत्वात् "सम्परिभ्याङ्करोतौ" इति सूत्रे पञ्चमीनिर्देशेन सम्परिभ्यांपरत्वयोग्यस्य करोतेरित्यर्थकरणेन "समस्कृत" इत्यादौ नानुपपत्तिः ।

न चास्मिन्पक्षेऽत्रियन्नित्यत्राटमाश्रित्य "एरनेकाच" इति यणापत्तिः । सूत्रसत्त्वे त्वटोऽसिद्धत्वादियङेष्टसिद्धिरिति वाच्यम् । "एरनेकाच" इति योगं विभज्य 'इणो यण्' इत्यनुवर्त्य योगविभागस्येष्टार्थत्वेनाडागमसहितानेकाच एवेयण् तर्हि इण एवेति नियमेन सिद्धत्वात् । आडागमसाहित्यञ्चानेकाज्ग्रहणानुवृत्त्या लभ्यत इति दिक् ।

*विकरणस्य गुणार्थमिति* । 'भवामि' 'भविष्यामि' इत्यत्र मूलोक्तोदाहरणे तु विधिग्रहणाभावेऽपि "अतो दीर्घो यञि" इतिसूत्रारम्भसामर्थ्याद्दीर्घो भविष्यतीति भावः । *वव्रश्चेत्यसिद्धिरिति* । उरदत्त्वस्य प्रत्ययपरत्वलाभानापत्तौ परनिमित्तत्वाभावेन "अचः परस्मिन्" इत्यस्याप्राप्त्याऽत्वस्य सम्प्रसारणत्वाभावेन 'न सम्प्रसारणे' इतिसूत्रस्याप्राप्तेर्वकारस्य सम्प्रसारणापत्तेः 'वव्रश्च' इत्यस्यासिद्धिरित्यर्थः । दूषणान्तरमाह—*किञ्चेति*। प्रत्ययान्तस्याङ्गसंज्ञायां लुप्तो यः प्रत्ययस्तस्य राजन्शब्दाद्विधानेन तच्छब्देन राजन्नित्यस्य ग्रहणे प्रत्ययो निमित्तमिति लुप्तप्रत्ययनिमित्तत्वं राजन्शब्दादेः सुबन्तस्यास्तीति निषेधापत्तिरिति भावः । 'देवदत्त ओदनमपाक्षीत्' इत्यादौ प्रत्यासत्त्या दोषवारणमशक्यमित्याह—*अङ्गसंज्ञाया इति*।

याः प्रत्ययनिमित्तत्वाभावेन लुङादिनिरूपिताङ्गस्येसर्थस्य दुर्लभ-त्वादिति भावः ॥

टाङसि (पा०सू०७।१।१२)। अङ्गस्येति षष्ठ्या "अतोभिस" (पा०सू०७।१।९) इत्यतोऽनुवृत्तेनात इत्यनेन पञ्चम्यन्तेन सा-मानाधिकरण्यानुरोधात्पञ्चम्या विपरिणाम इत्याह-अकारान्तादि-ति। 'अकारात्परेषामङ्गसञ्ज्ञानिमित्तटादीनामित्यर्थ' इति पक्षान्त-भाष्ये। किं चादन्तादङ्गादित्यर्थेऽपि 'ब्राह्मणभिस्सा' इत्यादावति-प्रसङ्गः। ब्राह्मणेत्यस्यापि "युवोरनकौ" (पा०सू०७।१।१) इति सूत्र-भाष्योक्तरीत्याऽन्तर्वर्तिविभक्त्याऽङ्गत्वात्। अर्थवत्परिभाषया प्रत्यय-ग्रहणपरिभाषया वा प्रत्ययस्यैव भिसो ग्रहणे त्वेषामङ्गाधिकारे फ-ल्यर्थः। भिसः प्रत्ययस्यैव ग्रहणे हि प्रत्यासत्त्या तन्निरूपिताङ्गस्य ग्र-हणमिति युज्यते वक्तुं, नान्यथा। इदमेव हि "अतोभिस" इत्यत्रा-ङ्गाधिकारस्य प्रयोजनं भाष्ये दत्तमित्यलम्।

सुपि च (पा०सू०७।३।१०२) "अतो दीर्घो यञि" (पा०सू० ७।३।१०१) इत्यनुवर्त्तते। यञीत्यनेनाल्त्वात्तदादिविधिरित्याह-यञादाविति।

ङेर्यः। (पा०सू०७।१।१३)। चतुर्थ्येकवचनस्यैव ग्रहणं व्या-ख्यानादित्याह-ङे इत्येतस्येति। सन्निपातेति। उपजीव्य

---

*इति षष्ठ्या इति*। इत्यधिकृतघटकषष्ठ्या इत्यर्थः। अङ्गस्येति ष-ष्ठ्या विपरिणामे गौरवात्पक्षान्तरमाह-*अकारात्परेषामिति*। ननु ब्रा-ह्मणेत्यस्य "न लुमता" इत्यनेन निषेधादङ्गत्वन्दुर्लभमत आह-*युवो-रनाकाविततीति*। तत्र पञ्चभिः क्रोष्ट्रीभिः क्रीतम् 'पञ्चक्रोष्टृ' इत्युक्त अङ्गस्य क्रोष्टुः तृज्वदङ्गसंज्ञा च भवति प्रत्ययलक्षणेन न लुमतेति नि-षेधस्तु न। लुप्तप्रत्ययनिमित्ताङ्गसंज्ञाविशिष्टोद्देश्यककार्यान्तरे प्रतिषेधो न तु तस्यामपीति भावः। नन्वर्थवत्परिभाषया प्रत्ययाप्रत्ययपरिभाषया वा वारणम्भविष्यतीत्यत आह-*अर्थवदिति*। किञ्च भिसः प्रत्ययस्यैव ग्रहणमित्यत्र साधकाभावः। "प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्" इति परिभाषाया लक्ष्यसाधकत्वेनान्यत्रानाश्रयणात्। प्रत्ययस्यैव ग्रहणमि-ति नियमासिद्धौ भिस्साशब्दावयवानर्थकस्यापि ग्रहणसम्भावनयाऽर्थ-वत्परिभाषाया अप्यप्रवृत्तिरिति भावः।

*व्याख्यानादिति*। "न धातुलोप आर्द्धधातुके" इत्यत्र सा-

विरोधन्यायमूलैषा । सन्निपातः संश्लेषस्तन्निमित्तको यो विधिः स तं सन्निपातं यो विहन्ति स तद्विघातस्तस्यानिमित्तमित्यर्थः । न च यणादित्वसापेक्षदीर्घस्य बहिरङ्गतयाऽसिद्धत्वान्नात्र सन्निपातविघात इति वाच्यम् । आरोपितासिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानत्वेन तत्प्रवृत्तेः । किं चान्तरङ्गे कर्त्तव्ये बहिरङ्गासिद्धत्वेऽपि तत्र कृतेऽसिद्धत्वे मानाभावः । किं चातिदेशिकसंनिपातविघाताभावमादायैतदप्रवृत्तौ 'गौरी' इत्यादौ सम्बुद्धिलोपेऽपि स्थानिवत्त्वेन ह्रस्वनिमित्तविघाताभावात्तत्रैतस्या अतिव्याप्तिपरभाष्यासङ्गतिः । सन्निपातस्याशास्त्रीयत्वान्नात्र स्थानिवत्त्वमिति चेत्तत्रासिद्धत्वमपि कथमिति वद ।

---

म्येकवचने यादेशादर्शनमूलकादित्यर्थः । *यो विधिरिति* । कर्मणि किप्रत्ययः । तद्विघातस्येत्यत्र कर्मण्यण् । "असिद्धं बहिरङ्गम्" इति परिभाषायामन्तरङ्ग इति सप्तम्यन्तस्यान्यसाकाङ्क्षतया बुद्धिस्थे सतीत्यस्याध्याहारोऽपि सम्भवतीत्याशयेन शङ्कते—*न चेति* । प्रकृतिप्रत्ययोभयस्य यादेशो दीर्घे च यद्यप्यपेक्षा तथापि प्रत्ययविशेषणस्य यादित्वस्य तादृशसमुदायबहिर्भूतस्य दीर्घेऽपेक्षासत्त्वाद्बहिरङ्गत्वमिति भावः । *तद्विघातस्य जायमानत्वेनेति* । एतेनोपजीव्यविरोधोऽस्त्येवेति सूचितम् । अस्याः परिभाषायामन्तरङ्ग इत्यस्य कर्तव्य इत्यनेनैवाकाङ्क्षायाः पूरणस्य भाष्यादिसर्वग्रन्थसम्मतत्वादित्याशयेनाह—*किञ्चेति* । *तत्र कृते* । अन्तरङ्गे कृते । *एतदप्रवृत्ताविति* । सन्निपातपरिभाषाया अप्रवृत्तावित्यर्थः । *अतिव्याप्तिपरभाष्येति* । 'नदीह्रस्वत्वं संबुद्धिलोपस्य' इति भाष्यस्येत्यर्थः । *असिद्धत्वमपि कथमिति* बहिरङ्गाऽसिद्धत्वस्य शास्त्रज्ञाप्यत्वात् । अत एव 'पुग्घ्रस्वत्वस्य अदीदपत्' इति भाष्यसङ्गतिः । यदि भवदुक्तरीत्याऽऽतिदेशिकसन्निपाताभावः सन्निपातपरिभाषाया अप्रवृत्तौ हेतुर्भवेत्तदा प्रकृतेऽपि पुक्शास्त्रस्यान्तरङ्गत्वात् ह्रस्वत्वस्य तु बहिरङ्गत्वात्परिभाषाया अप्रवृत्तौ भाष्यासङ्गतिः स्पष्टैव ।

यत्तु सन्निपातः संश्लेषः । उपात्तयोर्यादृशो यत्कार्यस्य निमित्तं तत्कार्यं तादृशसंश्लेषविघातकं प्रत्ययनिमित्तम् । यथा "घेर्ङिति" इति सूत्रे उपात्तयोर्घिङितोः संश्लेषो गुणस्य निमित्तं तस्मिन्कृते सति स गुणोऽन्यसंज्ञाद्वारा लुकम्प्रत्ययनिमित्तम् । "ङेर्यः" इत्येतत्सूत्रे तूभयोरनुपादानादयं सन्निपातपरिभाषाविषय इति 'रामाय' इत्यत्र "सुपि च" इति दीर्घः सन्निपातपरिभाषाविरोधान्न प्रवर्त्तेत इत्यसङ्गतमिति कश्चिदाह त-

कार्यस्य निमित्तं ययोः सन्निपातस्तयोः सूत्रे उपादानमपेक्षितमिति तु नाग्रहः। अत एव 'दाक्षिः' इत्यत्राकारान्तप्रकृतीञ्सन्निपातनिमित्ताङ्गसञ्ज्ञाऽनया परिभाषयाऽल्लोपस्य निमित्तं स्यादित्याशङ्क्यानित्यत्वेन समाहितं भाष्ये कृन्मेजन्तसूत्रे, न ह्यङ्गसञ्ज्ञायामदन्तस्याङ्गसञ्ज्ञेत्युक्तमस्ति। न च 'कष्टाय' इत्यस्य "अकृत्सार्व" (पा०सू०७।४।२) इति दीर्घेणोपपत्तेरनित्यताज्ञापकत्वं कथमिति वाच्यम्। तस्यापि सन्निपातपरिभाषयाऽप्राप्तेः विरोधाभावात्फले विशेषाभावाच्च परत्वेऽप्यकृदिति नोपन्यस्तम्। तस्याकृदित्यादिपर्युदासेनासुप्येव प्रवृत्तिरित्यन्ये।

झलि किमिति "उतो वृद्धिः" (पा०सू०७।३।८९) इत्यतो हलीत्येवानुवर्त्य सन्निपातपरिभाषया रामाणामित्यत्र न दोष इति प्रश्नः। झल्ग्रहणमेत्वे सन्निपातपरिभाषाया अप्रवृत्तिज्ञापनार्थं तेन 'सर्वेषाम्' इत्यादावेत्वसिद्धिरित्युत्तरम्। एतेन 'बहुवचने किं रामस्य'

---

न्मतन्दूषयितुमुपक्रमते—*कार्यस्य निमित्तमित्यादिना*। *नाग्रह इति*। "कृन्मेजन्त" इति सूत्रभाष्ये 'कुम्भकारेभ्य' इत्यत्रानयापरिभाषयाऽव्ययसंज्ञावारणपरभाष्यविरोध एवं सति स्यादिति भावः। अत्रैवार्थे भाष्यान्तरसंवादमाह—*अत एवेति*। तादृशानियमाभावादेवेत्यर्थः। नतु "सुपि च" इति दीर्घापेक्षया 'अकृत्' इत्यस्य परत्वात्तेनैव दीर्घो वक्तुं योग्य इत्यत आह—*विरोधाभावादिति*। एककार्यसाधकत्वेन विरोधाभावादिति भावः। पर्युदासन्यायेनाह—*अकृदितीति*। *अन्य इति*। सुख्या इत्यर्थः। अतएव 'उरुया' 'धृष्णुया' इत्यादौ न दीर्घः, "सुपां सुलुक्" इति सूत्रेण तृतीयैकवचनस्य यादेशः।

झल्ग्रहणाभावेऽपि रामाणामित्यादिसिद्धये आह—*उतो वृद्धिरिति*। झल्ग्रहणमेत्वविषये विलक्षणार्थज्ञापकमाह—*झल्ग्रहणमिति*। *एतेन*। एत्वे सन्निपातपरिभाषाया अप्रवृत्तिस्वीकारेण *रामस्येति*। अत्र स्यादेशोऽदन्तसन्निपातस्योपजीव्यत्वेन सन्निपातपरिभाषयैवेत्वव्यावृत्तौ बहुवचनग्रहणस्यात्रातिव्याप्तिवारकत्वसूचनमसङ्गतं स्यात्। क्वचित्तु 'रामः' 'रामस्य' इति पाठः। तत्र 'राम' इत्यत्र न बहुवचनग्रहणप्रयोजनम्। 'प्रत्यय' इत्यादिनिर्देशैः क्वचित्त्रिपाद्यामसिद्धत्वमिति कल्प्यते। अन्यथा रुत्वस्यासिद्धत्वाद्रेफान्ते पदत्वाभावाद्विसर्गो न स्यात्। एवं च राम स् इत्यवस्थायामेत्वरुत्वयोः प्राप्तौ परत्वाद्रुत्वे सति

व्याख्यातम् 'रामाभ्याम्' इत्यपि प्रत्युदाहरणं बोध्यम्। बहुवचने झल्येत् इति(१) तु न सूत्रितम्। 'ज्ञानयोः' इत्यादौ नुमापत्तेः। (इटि तु 'गङ्गे' इत्यादौ गुणे तस्य पञ्चमीसमासेन स्थानिवत्त्वात् 'एङ्' इत्यस्याप्राप्तौ व्यवधानात् 'हल्ङ्याब्भ्यः' इत्यस्याप्राप्तौ संबुद्धिलोपानापत्तेश्च)(२)। जश्त्वमिति। बाधित्वेति शेषः(३)। अवसाने चर्त्वस्य

द्वितिन्यायेनैतव्व्यावृत्तिः स्यादित्यरुचेराह—*रामस्येति*।

यत्र सन्निपातपरिभाषयाऽतिप्रसङ्गवारणञ्च भवति तादृशम्प्रत्युदाहरमाह—*रामाभ्यामित्यपीति*। मात्रालाघवानुरोधात् यत्केनचिदुक्तन्तद्दूषयति—*बहुवचन इति*। *ज्ञानयोरिति*। ज्ञानशब्दस्य ओसि परे इगागमे कृते "आद्गुण" इति गुणस्य 'इकोऽचि" इति नुमश्च प्राप्तौ वार्णादाङ्गस्य कार्यस्य बलवत्त्वाद्गुणात्पूर्वं नुमि सति रूपासिद्धिः। न च "बहुवचने झलीट्" इति न्यासोऽस्तु। एवञ्च 'ज्ञानयोः' इत्यत्र न नुमः प्राप्तिः, विभक्तौ यदङ्गं तस्येगन्तत्वाभावादिति वाच्यम्। "बहुवचने झलि" इति सप्तम्या अचारितार्थ्येन झलादौ बहुवचने सुप्यत इडित्यर्थापत्तावनिष्टापत्तेः। यदि च "यत्तदेतेभ्यः" इतिनिर्देशेन सप्तमीनिर्दिष्टपदानां षष्ठ्यन्तत्वम् अत इत्यस्य च षष्ठ्यन्तस्य पञ्चम्यन्तत्वकल्पनं सप्तमीनिर्देशश्च यस्मिन्विधिरिति परिभाषाप्रवृत्तिसम्पादकत्वेन चरितार्थ इत्युच्यते तदाऽधिकं ज्ञानगौरवं स्पष्टमेव। किञ्चेदम्शब्दाद् भ्यसि त्यदाद्यत्वे पररूपत्वे च कृते हलि लोपस्य इडागमस्य च प्राप्तौ नित्यत्वादिट् स्यात्, एवञ्च हलादिपरत्वाभावाल्लोपानापत्तिः। लोपविधानन्तु द्विवचने चरितार्थमिति दिक्।

*इति शेष इति*। यत्त्वेवं शेषपूरणेन प्रकृतग्रन्थसङ्गमनेऽपि रत्नमु·

(१) 'बहुवचने झलीक्' इति न्यासे 'रामेभ्यः इति सिद्धावपि उत्तरत्रानुवृत्ते सम्बुद्धौचेति सूत्रे इकः सम्बन्धे 'हे रमे' इति न सिध्येत्। यदि च 'पट्व्या' 'मृद्व्या' इत्यादावाश्रितस्य 'पूर्वं पूर्वमन्तरङ्गम्' इत्यन्तरङ्गस्य प्रकृते रमा इ सु इत्यवस्थायां पूर्वं गुणे तत एङन्तत्वात् संबुद्धिलोपेन रमे इति सिद्धावपि, वार्णाद ङ्गमिति परिभाषयाऽऽद्गुणादपि पूर्वं 'ह्रस्वस्य गुणः' इत्यनेनेकारस्य गुणो संबुद्धिलोपेऽपि राम ए इति स्थितौ वृद्धेर्दुर्वारत्वेन संबुद्ध्यन्तस्य रामशब्दस्य अनिष्टं रूपं प्रसज्येत। संबुद्धौचेत्यत्र विषयसप्तमी स्वीकारेण 'हे रमे' इति सिद्धावपि, ज्ञानयोः इति न सिध्येत्। अत्रहि–ओसिचेत्यनेन इकि 'ज्ञान इ ओस्' इत्यवस्थायाम् अंन्तरगमपि गुणं बाधित्वा वारणपरिभाषया नुमः प्रथमं प्रवृत्तिः स्यादत आह–ज्ञानयोरित्यादौ नुमापत्तेरिति।

केचित्तु इममेव ग्रन्थं प्रकारान्तरेण उपपादयन्ति। तथाहि–ज्ञान इ ओस् इत्यवस्थायां प्राप्तस्य 'इकोऽचि' 'आद्गुणः' इति सूत्रद्वयापेक्षया 'नपुंसकस्य झलचः' 'इकोऽचि विभक्तौ' इति सूत्रद्वयस्य पञ्चमीसमासेन स्थानिवद्भावपक्षेऽपि नित्यत्वात् परत्वान्नुमापत्तेः। तदाह—नुमापत्तेरिति।

(२) इति केषु चित्पुस्तकेष्वधिकः पाठो नास्ति।

(३) 'तद्धित' इत्यत्रत्यमनोरमाग्रन्थविरोधं परिहरति–इति शेष इति।

पदान्तजश्त्वापवादत्वात् । द्वित्वे रूपेति । पूर्वत्रासिद्धमद्वित्वे इति न्यायाच्चर्त्वोत्तरं द्वित्वं बोद्ध्यम् । तादेश इति । अन्यथा "खरि च" (पा०सू०८।४।५५) इति चर्त्वेन सिद्धाविदं व्यर्थं स्यादिति भावः ॥

---

ट्'त्यादावान्तरतम्यात्षकारस्य चर्त्वेन षकार एव प्राप्नोति, न दकारो ऽल्पप्राणतया प्रयत्नभेदात् अतस्तदादिशब्दे दकारस्य स्थाने 'अकृतकारि खल्वपि शास्त्रमग्निवत्' इति न्यायेन फलाभावेन जश्त्वाप्रवृत्तौ तत्र चर्त्वस्य चारितार्थ्यादपवादत्वमेव नेति 'रामात्' इत्यादावुभयोः प्राप्तावसि द्धत्वाच्चर्त्वात्प्राग् जश्त्वमिति । तन्न । फलाभावेऽपि पर्जन्यवल्लक्षणन्याये शास्त्रप्रवृत्तेर्बहुषु दृष्टत्वात् येन नाप्राप्तिन्यायेन चर्त्वस्य जश्त्वापवादत्वा ऽसिद्धत्वस्याप्राप्तेः । 'रत्नमुट्' इत्यस्य सिद्धिस्तु "जक्षित्यादयः षट्" इति न्यासेन षकारस्य स्थाने जश्त्वात्पूर्वं चर्त्वशास्त्राप्रवृत्तिकल्पनमिति भवि ष्यति ।

*चर्त्वोत्तरन्द्वित्वमिति* । यत्तु "द्वित्वे परसवर्णत्वं सि वक्तव्यम्" इति वार्त्तिकाद्वर्णद्वित्वे एतदप्रवृत्तिरिति । तन्न 'वाक्क्' 'वाग्' इति भाष्योदाहरणेन वर्णद्वित्वेऽपि तत्प्रवृ स्वीकारात् । "द्वित्वे परसवर्णत्वम्" इति वार्त्तिकन्तु पूर्वत्रासि द्धीयमिति वचनस्यैवावयुत्यानुवाद इति बोध्यम् । *मूले स द्वित्वेति* । "अनचि च" इत्यनेन वैकल्पिकद्वित्व इत्यर्थः । अत्र स रस्य स्थाने "खरिच" इत्यनेन स्थानतः प्रयत्नतश्च तुल्यस्तकारः प्राप्नोति भ्रान्तस्य शङ्कायामाह-*आन्तरतम्यादिति* । "स्थानेऽन्तरत" इति तमब्ग्रहणेन सदृशेनैवादेशेन भाव्यमित्युभाभ्यामन्तरतमः सकार स्यात् । तदेतदुपपादयति-*अन्यथेति* । अन्यथा उभाभ्यामान्तर म्यानाश्रयणे । *इदम्* । सस्यार्द्धधातुक इत्येतत् ।

ननु "सस्यार्द्धधातुक" इतिन्यासारम्भे 'वत्स्यति'इत्यादौ "चयो द्वितीय इत्यनेन पक्षे सकारो भवति । "खरिच" इति सूत्रेण तकारे त्वस्याऽसि त्वाद्वितीयादेशाप्राप्त्या थकारघटितरूपासिद्धिरिति कथमियमाशंका यत्तु तत्रस्यार्द्धधातुकसंज्ञकस्य शब्दापेक्षत्वं, द्वितीयादेशस्य तु सकार त्रपेक्षत्वमित्यन्तरङ्गत्वाद्वितीयादेशे कर्त्तव्ये "सः स्यार्द्धधातुके" इत्यस् पि बहिरङ्गपरिभाषयाऽसिद्धत्वादत्र द्वितीयादेशो न भवत्येवेति । त 'अवात्सीत्' इत्यत्र शास्त्रद्वयस्यापि समाननिमित्तकत्वात् । आर्द्धधातुक संज्ञाया अधिकाया अपेक्षणात्तत्त्वस्य बहिरङ्गमिति तु न वाच्यम् । सं तद्बहिरङ्गत्वानाश्रयणात् । त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाभावस्य त्रोपपादितत्वाच्चेति, चेन्न । अस्य ग्रन्थस्य प्राचीनमताभिप्रायकत्वाच

ह्रस्वन (पा०सू०७।१।५४) ह्रस्वनद्याप इति पञ्चमी। "आमि सर्वनाम्न" (पा०सू०७।१।५२) इत्यत आमीति वर्त्तते। तच्च षष्ठ्या विपरिणम्यते नामीति लिङ्गादित्याह—ह्रस्वान्तादित्यादि। आम्अत्र षष्ठीबहुवचनमेव न तु ङेरामादीति स्पष्टं भाष्ये।

यत्तु नुडिति विभज्य सामान्येन नुड् विधेयः 'नद्याप' इति दीर्घान्ताच्चेत् नद्याप एवेति नियमार्थमिति दीर्घेषु न दोषः। हलन्ताच्चेत् षट्चतुर्भ्य एवेति नियम इति हलन्तेषु न दोषः। एवञ्च ह्रस्वग्रहणं न कार्यमिति। तन्न। नद्याप इत्यस्य स्त्रीलिङ्गनाश्चेत् नद्याप एवेति नियमपरतया ऽपि व्याख्यातुं शक्यत्वेन नदीत्वाप्त्वयोर्ह्रस्वेऽपि दृष्टत्वेन त्वदुक्तानियमे दृढतरमानाभावेन च 'मतीनाम्' इत्यादौ नुडनापत्तेः॥

---

संज्ञाकृतान्तरङ्गबहिरङ्गभावस्य त्रिपाद्यामप्रवृत्तेः स्वीकारात्। "न मु ने" इति सूत्रे नेति योगविभागेन क्वचिदसिद्धत्वञ्नेत्यर्थकल्पनेन "खरि च" इत्यनेन तकारादेशेऽप्यसिद्धत्वं न भविष्यतीति कल्पनायाः सम्भवाच्चेति।

*षष्ठ्या विपरिणस्यत इति*। "नद्याप" इति पञ्चम्यन्तस्य सत्त्वात्। "आमि" इति सप्तमी तु "त्रेस्त्रय" इत्यत्र चरितार्था। साधकमन्यत्राह—*नामीति लिङ्गादिति*। *स्पष्टम्भाष्य इति* । तत्र हि—"बहव आम् शब्दाः पठ्यन्ते। कास्प्रत्ययादाममन्त्रे लिटि। ङस् ओस् आम्। किमेत्तिङित्यत्र। ङेराम् नद्यामित्यत्र। कस्येदं ग्रहणम्। षष्ठीबहुवचनस्य ग्रहणम्। कास्प्रत्ययेतिसूत्रपठितस्य तु सानुबन्धकत्वान्न ग्रहणम्। स चानुबन्ध इत्संज्ञापरित्राणार्थः कर्तव्यः। अस्ति चेत्संज्ञायाः फलमन्त्यादचः परो यथा स्यादिति। प्रत्ययान्तादयं विधीयते तत्र नास्ति विशेषः मिदचोऽन्त्यात्परत्वेन प्रत्ययपरत्वेन वा। यस्तर्हि न प्रत्ययान्तादिजादेरिति। अत्राप्यास्कासोराम्वचनं ज्ञापकं नायमन्त्यात्परो भवतीति। किमेदितिसूत्रविहितस्यापि न ग्रहणम्। सानुबन्धकत्वात्। ङेरामो निरनुबन्धकत्वेऽपि तत्र याट्स्याडाड्भिः परत्वात् बाधे सकृद्गतिन्यायात्पुनस्तदप्रवृत्तेः षष्ठीबहुवचनस्यैव ग्रहणम्" इत्युक्तम्।

दण्डिसम्मतमर्थं खण्डयति—*यत्त्विति*। हूहूशब्दादिभ्योऽतिप्रसङ्गं वारयति—*नद्याप इतीति*। लिहांदुहामित्यादावतिप्रसङ्गं वारयति—*हलन्ताच्चेदिति*। विपरीतनियमापत्त्या तद्दूषयति—*नद्याप इति*। एवं सति हाहाहूहूशब्देऽतिप्रसङ्गः स्यादेव। *ह्रस्वेऽपीति*।

नामि ।(पा०सू०६.४।३) "ढ्रलोपे" (पा०सू०६।३।१११) इत्यतो दीर्घ इत्यनुवर्त्तते । अङ्गस्येति किम् ? चर्मणाम् । नन्वामीत्येवास्तु नित्यत्वात्पूर्वं दीर्घे कृतेऽपि ह्रस्वान्तान्नुडित्येतत्सामर्थ्याद्भूतपूर्वह्रस्वान्तत्वमादाय नुट्सिद्धेः । न च "नृच" (पा०सू०६।४।६) इति दीर्घविकल्पात् नृणामित्यत्र नुट् चरितार्थः, नृनद्याप इत्येव सिद्धेः। तदुक्तं भाष्ये-"नैकमुदाहरणं योगारम्भं प्रयोजयति" इति । 'तिसृणाम्' इति 'षट्' (पा०सू०७.१।५५) इत्यत्र त्रेरित्यनुवृत्त्या सिद्धमिति भाष्ये एव स्पष्टम् । एतेन "ऋन्नद्याप" इति न्यासे भाष्यतात्पर्यमित्य पास्तम् । 'चतसृणां' 'प्रियचतसृणाम्' इत्यत्र "षट्चतुर्भ्यः" (पा०सू०७।१।५५) इति सिद्धम् । गौणे तदप्रवृत्तौ तु न मानम् । बहुवचनन्तु लाघवार्थं द्विवचने हि चतुर्भ्यामिति गुरुनिर्देशः स्यात् नैकमुदाहरणमिति प्रकृतसूत्रस्थभाष्यविरोधश्च । समाहारद्वन्द्वेन निर्देशे कार्ये बहुवचननिर्देशस्तदर्थं इति तु न युक्तम् । "अस्थिदधि" (पा०सू०७।१।७५) तिसृभ्यो जसः (पा०सू०६।१।१६६) इत्यादौ व्यभिचारात् ।

न च 'अङ्गाधिकारे पञ्चम्या यदुच्यते गृह्यमाणविभक्तेस्तद्भवति' इति सर्वादिसूत्रभाष्यात् गृह्यमाणाद्विहितंविभक्तेरित्यर्थकादस्य नुटो गौणे ऽप्रवृत्तिः । षड्भ्य इत्यत्रापि विहित विशेषणमेवेत्याशयेन 'परमपञ्च' इत्यादौ लुगभावमाशङ्क्य 'षट्प्रधान एष समास' इत्युक्तम् । समासस्य षट्प्रधानत्वेन संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वेन षट्त्वसत्त्वान्न दोष इ

मत्यतिमाल्लादौ । ननु नैकमित्यसङ्गतम् तिसृणामित्यत्र चारितार्थ्यात् आह—*तिसृणामितीति* । अन्यत्रापि चारितार्थ्यं घारयति—*चतसृणामिति* । गौणेऽप्रवृत्तौ भाष्यविरोधमप्याह—*नैकमिति* । गौणेऽप्रवृत्तिसाधकमुपायान्तरं खण्डयति-*समाहारेत्यादि* । "अस्थिदधि" इति सूत्रे 'तिसृभ्य' इत्यत्र च बहुवचननिर्देशेऽपि गौणे प्रवृत्तेः प्रामाणिकतया व्यभिचारादित्यर्थः ।

गौणेऽप्रवृत्तिर्भाष्यान्तरसंवादेन परेणोक्तेति यत्तद्दूषयितुमुपन्यस्यते-*न चेति ।*पञ्चम्येति*। पञ्चम्यन्तेनेत्यर्थः । स्वकल्पितेऽर्थे भाष्यान्तरमपि साधकमाह—*षड्भ्य इत्यत्रापीति* । *न दोष इति* ।

तदर्थः । ष्णान्तेत्यत्र लोके गणनायां प्रसिद्धानामेव ग्रहणमित्यत्र न मानं प्रकृते ऽपि तथैव षड्भ्य इत्यादौ पञ्चम्या विरुद्धविभक्तित्वादङ्गस्येत्यनेन संबन्धायोग्यत्वात् विहितेत्यध्याहारेण प्रत्ययविशेषणतैवेति भाष्योक्तेरिति गौणे नुटो ऽप्रवृत्तिरिति वाच्यम् । "नामि" इति सूत्रस्थोक्तभाष्यप्रामाण्यान्नुड्विधायके विहितपदानध्याहारेण षडादिभ्यः परस्याङ्गसञ्ज्ञानिमित्तस्याऽऽमो नुडित्यर्थेन गौणे ऽपि प्रवृत्तेः । "अतो भिसः" (पा०सू०७।१।९) इत्यादावङ्गस्येत्यस्यैवमन्वयस्यैवाङ्गसञ्ज्ञासूत्रे भाष्ये उक्तत्वात् । अत एव परमचतुर्णामित्यादौ नुट् ।

यद्यप्येवं "षड्भ्यो" "अष्टत्तरादिभ्य" इत्यनयोरपि वक्तुं शक्यम् । तथापि लक्ष्यानुसारात्तत्र विहितविशेषणम् । "विरुद्धविभक्तित्वात्" इति भाष्योक्तयुक्तिस्त्वेकदेशिन इति बोध्यम् । "अष्टत्तरादिभ्यः" "षड्भ्यो लुक्" इत्यनयोरेव सर्वादिसूत्रे भाष्ये उपन्यासाच्च । 'षड्भ्य' इत्यादौ 'षडर्थगतसंख्याभिधायिजश्शसोरित्यादिक्रमेणार्थ' इति कैयटोक्तं तु "अष्टत्तरादिभ्य" इति सूत्रे भाष्यविरोधादिभिर्दूषयिष्यते । न च 'पदां' 'दताम्' इत्यादावतिप्रसङ्गः । ह्रस्वत्वं नाम मात्राकालिकाच्त्वं तत्र सामर्थ्याद्विशेषणभूतमात्राकालिकाच्त्वांशे एव भूतपूर्वगत्याश्रयणं, न तु विशेष्यभूत च्त्वांशेऽपी-

---

विहितविशेषणत्वेऽपीत्यादिः । ननु "ष्णान्ता" इति सूत्रेऽनुवर्तमानसञ्ज्ञापदेन लोके गणनायां प्रसिद्धानामेव ग्रहणेन षट्प्रधानत्वेऽपि कथं लुगित्यत आह—*ष्णान्तेत्यत्रेति* । *प्रकृतेऽपीति*. "षट्चतुर्भ्य" इत्यत्रापि । *उक्तभाष्येति* । न ह्येकमितिभाष्येत्यर्थः । अङ्गस्येत्यस्यैवमन्वयोऽन्यत्र भाष्ये दृष्ट इत्याह-*अतो भिस इति* । *अत एव* । विहितविशेषणानाश्रयणादेव ।

सर्वादिसूत्रस्थभाष्यं योजयति-*यद्यपीति* । *एकदेशिन इति* । विरुद्धविभक्तित्वेऽप्यन्वयस्योपपादितत्वादिति भावः । *अनयोरेवेति* । एवञ्च तद्भाष्यबलेन "षट्चतुर्भ्य" इत्यस्यान्यथा व्याख्यानमनुचितमिति भावः । कैयटोक्तिं खण्डयति-*षड्भ्य इत्यादि* । आमीतिन्यासे कृते दीर्घे यदि भूतपूर्वगत्या ह्रस्वान्तत्वमादाय नुट् तदा पदांदतामित्यत्रापि नुट् प्राप्नोतीति शंकां हरदत्तीयां निराकरोति-*न चेति* । *मात्राकालि-

त्यदोषादिति चेन्न । "नोपधायाः" इत्युत्तरार्थत्वात् । तेन 'चर्मणाम्' इत्यादौ दीर्घाभावः सिद्ध इति दिक् ।

**परिभाषाविरोधादिति** । सर्वत्रानित्यत्वाश्रयणे मानाभावः इति भावः । कृताकृतप्रसङ्गित्वात् 'नामि' इति नियम् । न च विशेषा

---

कत्वांश इति* । नुड्विधायकसूत्रस्थह्रस्वग्रहणस्यैतावन्मात्रेणोपपत्तेः *तेन* । उत्तरार्थत्वेन । तत्फलमाह-*चर्मणामिति* । अत्र णत्वस्यासिद्धत्वान्नान्तत्वाद्दीर्घप्राप्तिः ।

*दिगिति* । दिगर्थस्तु ह्रस्वग्रहणसामर्थ्याद् भूतपूर्वह्रस्वन्तात् नुडि स्वीकारे पदां दतामित्यादावतिप्रसङ्गशङ्का पदादीनामादेशत्वपक्षे, तु पदादीनां प्रकृत्यन्तरत्वपक्षस्तदा पद्दतामित्यत्रातिप्रसङ्गशङ्कैव न किञ्चादेशत्वपक्षेऽपि शस्प्रभृतिष्वित्यस्य विषयसप्तमीत्वेन हलन्तादेः मुविधानेनामुत्पत्तिकालिकह्रस्वान्तान्नुडित्यर्थौ ह्रस्वग्रहणसामर्थ्याल्लभ्यते तावतापि पदामित्यादावतिप्रसङ्गो वारयितुं शक्य एवेति ।

ननु "सुपि च" इति दीर्घे कर्त्तव्ये यथा सन्निपातपरिभाषा प्रवर्त्तते तथा "नामि" इति दीर्घविधावपि सा कुतो न प्रवर्त्तते इति शङ्कायामाह *सर्वत्रेति* । "सुपि च" इति दीर्घे कर्तव्ये सन्निपातपरिभाषाप्रवृत्तिः "श्नान्नलोप" इति सूत्रे भाष्ये ध्वनिता । तत्र हि-श्नमः शकारविशिष्टग्रहणाभावे "नान्नलोप" इति न्यासे 'यज्ञानां' 'यत्नानाम्' इत्यत्रापि लोपः प्राप्नोति' इतिदूषणेऽभिहिते 'दीर्घे जाते नास्ति लोपप्राप्तिः' इति पूर्वपक्षिणा शङ्किते 'परत्वद्दीर्घम्बाधित्वा नलोपः प्राप्नोति' इति सिद्धान्तिनोक्तम् । अत्र परत्वादिति कथनेन "नामि" इति सूत्रस्य प्रवृत्तिरहिता । न तु "सुपि च" इत्यस्य । नलोपशास्त्रापेक्षया "सुपि च" शास्त्रस्यैव परत्वात् । न च "सुपि च" इति दीर्घस्तर्हि परत्वान्नलोपाक् स्यादिति वाच्यम् । तस्य सन्निपातपरिभाषयाऽप्रवृत्तेः । "नामि" दीर्घे तु आरम्भसामर्थ्यात्परिभाषाबाध इति भावः ।

यद्यपि "सुपि च" इति दीर्घेऽपि "कष्टायक्रमणे" इति निर्देशात् सन्निपातपरिभाषा न प्रवर्त्तत इति प्रागभिहितं तथापि नामि परे सुपि दीर्घे कर्तव्ये तदप्रवृत्तौ मानाभावः । अत एव सन्निपातपरिभाषाया विषनिरूपणावसरे 'यादेशः सुपि चेति दीर्घत्वस्य' इत्येवाभिहितम् । तु "कष्टाय" इति निर्देशेन सामान्यतो दीर्घे कर्तव्ये सन्निपातपरिभाषा अप्रवृत्तिङ्कल्पयित्वा "सुपि च" इति दीर्घे इत्येव वक्तुमुचितमित्यु तदाप्याह-*कृताकृतेति* । कृताकृतप्रसङ्गित्वमुपपादयितुमाह-*न

वेन फलाभावान्न कृते तत्प्राप्तिरिति वाच्यम् । विशेषाभावेऽपि पर्ज न्यन्यायेन शास्त्रप्रवृत्तेः" "इको झल्" (पा०सू०१।२।९) इति सूत्रे भाष्ये उक्तत्वात् । "आयादय" (पा०सू०३।१।३१) इति सूत्रे भाष्ये स्यादिभिः परत्वादायादिबाधमाशङ्क्य "अनवकाशत्वादाया- दयः । न च 'गोपायति' इत्यादिरवकाशः, अत्रापि शपः स्यादेः प्राप्तेः । न च नास्ति विशेषः । अन्यदिदानीमिदमुच्यते नास्ति विशेष इति । यदुक्तं-आयादीनां स्यादिभिरव्याप्तो ऽवकाश इति स नास्त्यव- काश" इति भाष्योक्तेश्च इत्यपि बोध्यम् ।

आरम्भेति । यत्तु 'कतीनाम्' इत्यत्र 'षट्चतुर्भ्यः' इति नुटि सन्निपातपरिभाषाया अप्राप्तेः सावकाशत्वमस्त्येवेति, तन्न । न ह्यकामित्युक्तन्यायेन 'कतेर्नामि' इत्येव सिद्धे सामान्यसूत्रारम्भेत्य- र्थात् । एवञ्च 'नतिसृचतसृ' इत्यकरणेन लाघवमिति भावः । नुटी- ति तु नोक्तम् ।

---

स्यादि* । *आयादय इतिसूत्रभाष्य इति* । तत्र ह्यविशेषेणयादिविधि- मुक्त्वा सार्वधातुके नित्यमिति न्यासपक्षे "स्यादिबलीयस्त्वं विप्रतिषे- धेन तुल्यनिमित्तत्वात्" इति वार्तिककृतोक्तम्, तत्खण्डनाय वार्तिके 'न वा स्यादिविधानस्यानवकाशत्वा'दित्यादिग्रन्थः । एतेन 'गोपाय' इत्यत्र चारितार्थ्यादयवकाशा' इत्यसङ्गतामित्यपास्तम् । *अप्राप्त्येति* । "ष- ट्त्रिचतुर्भ्यो हलादिः" इति स्वरप्रयोजकषट्त्वं स्थानिवत्त्वे नास्ती- ति भावः ।

कतेर्नामीतिं न्यासे लाघवमप्याह-*एवञ्चेति* । *नुटीति तु नोक्त- मिति* । मात्रालाघवसत्त्वेऽपि बहूनामर्थानां कल्प्यत्वेन ज्ञानगौरवापत्तेः । नुम्यजन्ताङ्गस्य दीर्घ इत्यर्थेऽनश्च इत्यादौ दीर्घापत्तेः । न च नुटि यद- ङ्गं तस्य दीर्घ इत्यर्थे नायंदोषः । नुटि परे यत्किञ्चिन्निमित्तकाङ्गस्य ग्रह- णे तत्रैवातिव्याप्तेः । अङ्गसंज्ञाप्रयोजके नुटीति तु वक्तुमशक्यम् । नुड्- मात्रस्याङ्गसंज्ञाप्रयोजकत्वासम्भवात् । नुटीत्यस्य नुडादौ लक्षणायान्तु लक्षणैव दोषः । एवं 'सन्नच्युत' इत्यत्र "ङमो ह्रस्वादचि" इति सूत्रेण नुटि "नोपधायाः" इति दीर्घापत्तिः । सन्निपातपरिभाषया संयोगान्तलो- पस्यासिद्धतया वा तद्वारणकल्पनेऽपि ज्ञानगौरवं स्फुटम् । किञ्च 'अक्षण्व- न्त' इत्यत्र "छन्दस्यपि दृश्यत" इत्यनङ्घञन्तात्परस्य मतुपो नुडित्य- र्थकेन "अनो नुट्" इति सूत्रेण नुटि कृते दीर्घापत्तिः । यदि तु "नोप

अपदान्तस्य (पा०सू०८।३।५५) ष इत्येव सिद्धे मूर्द्धन्यग्रह-
णम् "इणः षीध्वम्" (पा०सू०८।३।७८) इत्यत्र ढविधानार्थं 'रषा-
भ्याम्' (पा०सू०८।४।१) त्यत्रानुवृत्त्यर्थश्च । एवञ्च तत्र णग्रहणं
'पदान्तस्य' इति च न कर्त्तव्यमिति भाष्ये स्पष्टम् ।

इण्कोः (पा०सू०८।३।५७) वर्गग्रहणञ्चत्वर्वस्यासिद्धत्वात् 'सु-
इत्याद्यर्थम् ।

आदेश । (पा०सू०८।३।५९) प्रत्ययशब्दस्तदवयवपरो व्या-
ख्यानात्, सातेः षत्वनिषेधाल्लिङ्गाच्च, तदाह—प्रत्ययावयवस्येत्या-
दि । विवृताघोषस्येति । विवृतत्वरूपाभ्यन्तरप्रयत्नवतो ऽघो-
रूपबाह्यप्रयत्नवतश्चेत्यर्थः । ठकारवारणायाऽऽद्यम् । ऋकारवारणा-
द्वितीयम् । रामस्येति । "टाङसि" (पा०सू०७।१।१२)
सूत्रे सकारोच्चारणं तु 'इण्कोः' इत्यत्रानुवृत्तावेव तात्पर्यग्राहकमि-
भावः ।

---

धाया" इति दीर्घे कर्तव्येऽनो नुंडित्यस्यासिद्धत्वं पूर्वत्रासिद्धत्वादि
कल्प्येत तदाऽसिद्धत्वकल्पनैव दोषः । यदि तु 'अनश्व' इत्यादौ दीर्घा
वारणाय तस्य "नुगाचि" इति न्यासेन लुप्तनकारस्य नञो नुगागमः
यते तदा "नलोपः प्रातिपदिकान्तस्य" इति नलोपः प्राप्नोति । नुग्वि-
नसामार्थ्याल्लोपाभावकल्पने तु कल्पनागौरवं स्फुटमेव । (१)

*ष इत्येव सिद्ध इति* । लाघवार्थमित्यादिः । ननु "इणः षीध्व-
इति सूत्रे ढग्रहणमस्त्वित्यत आह—*रषाभ्यामित्यत्रेति* । *एवञ्चेति
पदद्वस्याधिकारत्वे चेत्यर्थः । 'इण्कोः' इत्यत्र समाहारद्वन्द्वः । सौत्र-
त्वम् । *सुक्ष्वित्याद्यर्थमिति* आदिना गवाङ्क्ष्वित्यस्य सङ्ग्रहः । *त-
यवपर इति* । लक्षणया प्रत्ययावयवपर इत्यर्थः । *व्याख्यानादिति
"आत्मनेपदेषु" इत्यादिनिर्देशमूलकात् । तत्र लिङ्गमप्याह—*सातेरि-
बाह्याभ्यन्तरयोर्द्वयोरप्यान्तरतम्यपरीक्षोपयोगित्वं सवर्णसंज्ञायाम-
भ्यन्तरप्रयत्नस्यैव 'तुल्यास्यप्रयत्नम्' इत्यत्र प्रशब्दबलादुपयोग इत्याशये-
ह—*विवृतत्वरूपेत्यादि* । ननु "टाङसि"। इतिसूत्रे सकारोच्चारणसा-
र्थ्यादेव षत्ववारणं भविष्यतीत्यत आह—*टाङसीति सूत्र इति ।

---

(१) नामि इत्यत्र नुटि इति न्यासे कर्तव्ये 'भृञः किन्नुट्च' इत्यौणादिकसूत्रनिष्पन्ने भृङ्गशो दीर्घा-
पत्तिः । नच भृञः किन्नुट्चेतिसूत्रेनुंटः स्थाने नुगेवाक्रियते इति न दोष इति वाच्यम् । अजादिशब्द-
ञा समस्यमाने सति प्रत्ययलक्षणेन ङत्वस्य नुट्परत्वस्य च सत्वात् 'अनश्वकः' 'अनेषकः' इत्या-
षु दीर्घापत्तिः । नुकि कर्तव्ये ङमुडापत्तिः। 'आमित्रम्' इत्यादौ 'नञोजरमरामित्र' इत्यनेन इष्टस्वरा-

सर्वादीनि (पा०सू०१।१।२७) तद्गुणसंविज्ञानो बहुव्रीहिः। आदिशब्दो ऽवयववाची। तेन सर्वशब्दघटित उद्भूतावयवभेदः समूहः समासार्थ इति बहुवचनम्। उद्भूतावयवभेद इत्यस्या-रोपितावयवगतसंख्य इत्यर्थः। तत्र वैयर्थ्यादप्रवृत्तावपि अवयवेषु प्रवर्त्तमाना ऽविशेषात्सर्वशब्दे ऽपि भवति। "सर्वनामानि" इत्यत्र 'पूर्वपदात्' इति णत्वमत एव निपातनान्न। नाप्राप्ते णत्वे कृतस्य निपातनस्य तद्बाधकत्वात् णत्वसहितमसाधु इति स्पष्टं भाष्ये। "प्रयोजनं सर्वनामाव्ययसंज्ञायाम्" इति वार्त्तिकात् शब्दरूपविशेष्यमादाय ज्ञापकात्तदन्तविधिरित्याह—द्वन्द्वे चेतीति। प्रथमार्थे सप्तमी (१) द्वन्द्वः सर्वनामसंज्ञो नेति तदर्थः। न हि तदन्तविधिं विना समुदाये सञ्ज्ञाप्रवृत्तिरस्ति, या निषिध्येतेतिभावः।

ननु तदन्तस्यापि सर्वनामत्वे "सर्वनाम्नः स्मै" (पा०सू० ७।१।१४।) इत्यादिषु सर्वनाम्नो विहितस्य ङेः स्मै इत्यर्थाश्रयणे-नातिसर्वादौ दोषाभावादुपसर्जनप्रतिषेधो न कार्य इति भाष्ये उचितं विरुध्येतेति चेन्न। "प्रयोजनं सर्वनामाव्ययसञ्ज्ञायाम्" इति तदन्तविधिसूत्रस्थवार्त्तिकभाष्यविरोधेनास्य भाष्यस्यैकदेश्युक्तित्वात्, इत एव ऽरुचेर्भाष्ये पक्षान्तरोपादानम्। न च ऋष्युक्तपक्षेषु नारु-

---

*तेन*। तादृशबहुव्रीहिः। तत्र वैयर्थ्यात्सामर्थ्यात्तदङ्गेष्विति न्याये-नाह—*तत्र वैयर्थ्यादिति*। निपातनस्य बाधकत्वाल्लोकेऽपि तथैव प्रयोग इति बोध्यम्। तदेतदुपपादयति-*नाप्राप्त इति*। शब्दस्वरूपं विशेष्यमादाय तदन्तविधिः सत्येव गमके इत्याशयेन ज्ञापकमाह-*मूले द्वन्द्वे चेतीति*। तदेतदुपपादयति-*प्रथमार्थ इति*। एवञ्च द्वन्द्वात्मकसमुदाये सर्वनामसंज्ञाप्राप्तिस्तदन्तविधिं विना नेति ज्ञापकत्वन्निषेधस्य। तदन्तविधौ शङ्कते—*नन्विति*। *विरुध्येतेति*। सत्यपि विहितविशेषणेऽतिसर्वशब्दे संज्ञाप्राप्तिरस्त्येवेति भावः। *इत एव वारुचेरिति*। कृतेऽप्युपसर्जनप्रतिषेधेऽतिसर्वशब्दे दोषतादवस्थ्यमतः प्रतिषेधो न युक्त इत्यरुचेरेवेत्यर्थः। *पक्षान्तरे-ति*। 'अथवा महतीयं संज्ञा' इति पक्षान्तराश्रयणरूपेत्यर्थः।

---

(१) वस्तुत 'आकाशे त्रिदिवे नाकः' इत्यादाविव वाचकत्वं सप्तम्यर्थः। तथा च 'वाचकता सम्बन्धेन सर्वनामपदं द्वन्द्वे न तिष्ठति इति यथाश्रुतमेव संगतमिति प्रथमार्थे सप्तमीत्यस्य नोपयोग इति गुरुचरणाना मतम्।

चिरिति भ्रमितव्यम् । वृद्धिसञ्ज्ञासूत्रे 'अपरितुष्यन् खल्वपि भवान् अनाकृति लिङ्गेन वा इत्याह" इति वार्त्तिककारं प्रति भाष्योक्तेः ।

अकच्चेति "कुत्सित" इति सूत्रोक्तभाष्यरीत्या संख्याकार काभ्यां पूर्णार्थस्येतरान्वयेन सुबन्तादेव तद्धितोत्पत्तेः, प्रत्यासत्त्या सर्वनामप्रकृतिकसुबन्तात् तदर्थगतकुत्सादिविवक्षायां सर्वनामावयवे प्रागकजित्यर्थात्तदन्तसञ्ज्ञाऽभावे तदसिद्धिरिति भावः । एवं त्रलाद्यसिद्धिर्बोद्ध्या । एतेनावयवनिष्ठसर्वनामत्वेन तत्सिद्धि त्यपास्तम् ।

जसः शी (पा०सू०७।१।१७) दीर्घोच्चारणमुत्तरार्थं 'वारि' इति । अदन्तादिति—परस्येत्यनेनान्वेति । अत इत्यस्याङ्गविशेष तया अदन्तादङ्गादित्यर्थः । सर्वनाम्न इति तु विहितविशेषणम् । त तु नाङ्गं विशेष्यमावृत्तौ मानाभावात् । तेन 'वर्णाश्रमेतराः' 'मासपूर्वा' इत्यत्र न । अत एव "विभाषाजसि" (पा०सू०१।१।३२) इति चरि र्थम् । अङ्गसञ्ज्ञानिमित्तस्यादन्तात्सर्वनाम्नो विहितस्येत्यर्थस्तु न

---

ननु वार्तिकस्य ऋष्युक्तत्वेन प्रामाणिकत्वात्तत्रारुचिरनुपपन्नेत्या क्य समाधत्ते-*न चेत्यादिना*। *वृद्धिसंज्ञासूत्र इति*। अस्य इति भाष्ये केरित्यत्रान्वयः । तत्र हि-आचार्याचारात्संज्ञासंज्ञसन्देहं व्यवस्थाप त्रकारं प्रति प्रकृतसूत्रस्यागमकत्वमाशङ्क्य सूत्रकारीयपुनःपुनर्वृद्धिश च्चारणरूपाचार्याचारेण गमकत्वसाधनमयुक्तमित्याशयेनानन्तरमनाकृ लिङ्गेन वा संज्ञासंज्ञसन्देहः साधितः । *तदसिद्धिरिति* । अकजाद्य द्धिः । *एतेनेति* । सर्वनामप्रकृतिकसुबन्तादित्यर्थकरणेन । *उत्त मिति* । 'सर्वे' इत्यत्र तु ह्रस्वादेशेऽपि गुणेन सिद्धेः । *आवृत्ताविति अङ्गस्येत्यस्यावृत्तावित्यर्थः । *तेन* । विहितत्वांशनिवेशेन । *इत्यत्र ति* । उभयत्र समुदायस्य प्रथमार्थसप्तम्यन्तपदघटितेन 'तृतीयासमा 'द्वन्द्वे च' इत्यनेन सर्वनामसंज्ञानिषेधात् । *अत एव* । सर्वनाम्नो विहित त्यर्थकरणादेव । अन्यथाऽनेन समुदायस्य सर्वनामसंज्ञाभावपक्षेऽप्य वस्य सर्वनामतया ततः परत्वाच्छीभावस्य दुर्वारतया विकल्पविधानं स्यादिति भावः । नन्वङ्गस्यावृत्त्यभावेऽपि सर्वनाम्नोऽदन्ताद्विहितस्य संज्ञानिमित्तस्येत्यर्थः कुतो नेत्यत आह-*अङ्गसञ्ज्ञानिमित्तस्येति अदन्ताद्विहितस्येत्यर्थेऽदन्तत्वस्योद्देश्यतावच्छेदकत्वं स्यात्, एवं तद्धर्मावच्छिन्नस्य विधानकाले सिद्धिं विना न सुट्प्राप्तिरिति भावः

ते 'तेषाम्' इत्याद्यसिद्धेः । अत्वविधौ विषयसप्तमी तु न(१) । तस्मिन्निति परिभाषाबाधे मानाभावात् । प्रागित्सञ्ज्ञाया इति । प्रत्ययादित्वज्ञानाभावात्तज्ज्ञानाभाव इति भावः ।

परे तु अनुबन्धत्वयोग्यतया अत्रापि तन्निषेधप्रवृत्त्या शित्वादेव सर्वादेशः । इत्सञ्ज्ञायोग्यशकारत्वमेव तत्सूत्रे शित्वम् । अत एव काणोर्विषये 'नानुबन्धकृतमसारूप्यम्' इति विकल्पाभावः। अन्यथा कादीनां कादेर्वाक्यार्थबोधोत्तरं प्रत्ययत्वज्ञाने इत्सञ्ज्ञादेः प्रवृत्त्या वाक्यार्थबोधरूपतत्प्रवृत्तिकाले ऽनुबन्धज्ञानाभावेन विकल्पो दुर्वारः, पश्चादनुबन्धत्वज्ञाने ऽपि जातनिवृत्त्ययोगात् । यदि तत्र पश्चात्तज्ज्ञाने तन्निवृत्तिः तर्ह्यत्रापि पश्चात्तत्त्वज्ञाने सर्वादेशत्वस्यापि निवृत्त्यापत्तिः ।

---

यदि त्वतः परस्याङ्गसञ्ज्ञानिमित्तस्य सर्वनाम्नो विहितस्येति व्याख्यायते तदा तु नानुपपत्तिरित्यवधेयम् । ननु विभक्तिविषये विभक्त्युत्पत्तेः प्रागेवात्वं भविष्यतीति नायं दोष इत्यत आह—*अत्वविधाविति । *प्रत्ययादित्वज्ञानाभावादिति* । समुदायादेशे हि स्थानिवद्भावेन समुदायस्य प्रत्ययत्वज्ञानं ततः प्रत्ययादित्वज्ञाने सति लशक्वित्यस्य प्राप्तिः ततोऽनुबन्धत्वज्ञानमिति भावः ।

सिद्धान्तार्थमाह—*परे त्विति* । *अत एव* । अनुबन्धपदस्येदृशार्थकत्वादेव । *अन्यथा* । अनुबन्धपदस्य वाचकतासम्बन्धेनेत्पदविशिष्टार्थकत्वे । *विकल्पो दुर्वार इति* । विधानकाले नानुबन्धकृतमसारूप्यमितिवचनस्याप्रवृत्तौ वासरूपसूत्रप्रवृत्त्येति भावः । वासरूपवचनन्तु "स्तम्बशकृतोरिन्" इत्येतद्विषयेऽणव्यावर्त्तकत्वेन चरितार्थमिति बोध्यम् । न च "हलन्त्यम्" इति सूत्रेण व्यवसितान्त्यस्येत्संज्ञाविधानाद्वाक्यार्थज्ञाने सति प्रत्ययत्वेन परिच्छिन्नाद्यान्त्ययोः ककारणकारयोरित्त्वज्ञाने नानुबन्धेत्यस्य प्रवृत्तिरिति विकल्पो दुर्वार इति वाच्यम् । "प्रत्यय" इत्यनेनैकवाक्यतासत्त्वात्तत्सूत्रजन्यशाब्दबोधरूपे प्रत्ययत्वेन ज्ञाने तत्संज्ञायाः प्राप्तिसम्भवात् । *जातनिवृत्त्ययोगादिति* । कविषये जातस्याणो निवृत्त्ययोगादित्यर्थः *तज्ज्ञान इति* । अनुबन्धत्वज्ञान इत्यर्थः । *तन्निवृत्तिः* । अणो निवृत्तिरित्यर्थः । *अत्रापि* । जसः शीत्यत्रापि । *तत्त्वज्ञाने* । प्रत्ययत्वज्ञाने । *निवृत्त्यापत्तिरिति* । नानुबन्धकृतमनेकाल्त्व-

---

(१) अत्र ग्रन्थकृता 'असकौ' इति रूपासिद्धिरूपो दोषोऽपि फल्गुत्वात् नोद्भावितः इति भावः इति केचित् ।

ध्वनितश्चेदं "लुटः प्रथमस्य" (पा०सू०२।४।८५) "अनेकाल्शित्" (पा०सू०१।१।५५) इत्यादिसूत्रेषु भाष्ये इति प्राहुः।

अतः सर्वनाम्न इति। अदन्तादङ्गात्परस्य सर्वनाम्नो वि-हितस्येत्यर्थः। तेन 'मासपूर्वाय' इत्यत्र स्मै न॥

ङसिङ्योः (पा०सू०७।१।१५) स्मात्स्मिनोः 'हलन्त्यम्' इ-

---

मित्यस्य प्रवृत्त्या सर्वादेशत्वस्यापि निवृत्त्यापत्तेरित्यर्थः। *ध्वनितश्चेदमिति*। तत्र लुटः प्रथमस्येति सूत्रभाष्ये "डाविकारस्य शित्करणं सर्वादेशार्थम्। डाविकारः शित्कर्त्तव्यः। किम्प्रयोजनम्? सर्वादेशार्थम्। शित्सर्वस्येति सर्वादेशो यथा स्यात्। अक्रियमाणे हि शकारे अलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येत" इत्युक्तम्। अत्र कैयटः—'डाविकार इति*। डादेश इत्यर्थः। नानुबन्धकृतमनेकाल्त्वमित्यन्त्यस्य स्यादिति डाश्वक्तव्य' इत्याह।

तदग्रे भाष्ये "सिद्धमलोन्त्यविकारात्। सिद्धमेतत्। कथमलोन्त्यविकारात्। अस्त्वयमलोन्त्यस्य। का रूपसिद्धिः? कर्त्ता। डिति टेर्लोपः। डिति टेर्लोपेन लोपो भविष्यति। अभत्वान्न प्राप्नोति। डित्करणसामर्थ्याद्भविष्यति" इत्युक्तम्। *'डितीति*। आकारे डिति परतः टिसंज्ञकस्य लोपो डित्करणसामर्थ्याद्भविष्यति" इति। एतद्भाष्येऽन्त्यादेशत्वमभ्युपेत्य टिलोपेन समाहितम्। पूर्वपक्षिणा च डादेशस्य शित्कर्त्तव्यमित्युक्तमेतेन ध्वनितम्। यद्यनुबन्धपदस्यानुबन्धत्वयोग्ये लक्षणा स्यात्तदा आदेशप्रवृत्तिकालेऽप्युक्तरीत्यानुबन्धत्वाभावेन नानुबन्धेत्यस्याप्राप्त्याऽनेकाल्त्वेनैव सर्वादेशत्वे सिद्धे पूर्वपक्षसमाधानयोर्निर्दलतोपपत्तिरिति।

ततोऽग्रे भाष्ये "अनित्त्वाद्वा। अथवाऽनित्त्वादेतत्सिद्धम्। अनित्त्वाश्चालोन्त्यस्यायम्भवन्न प्रत्ययः स्यात्" इत्यादिनोपपादितम्। *आद्या*। इदम्भाष्यमनुबन्धपदस्य लक्षणाया अभावे नानुबन्धेतिवचनस्यात्राप्रवृत्तिस्वीकारेऽप्यानुपूर्व्यादनेकाल्त्वेनैव सर्वादेशत्वम्भविष्यत्यभिप्रायेण। ततः "प्रश्लिष्टनिर्देशाद्वा। अथ वा प्रश्लिष्टनिर्देशोऽयम्। डा आ डा" इत्युक्तम्भाष्ये। एतेनाकारस्य प्रश्लेषाभावे डकारस्यानुबन्धत्वयोग्यत्वान्नानुबन्धेत्यस्य प्रवृत्त्या सर्वादेशत्वं दुर्लभं स्यादित्युक्तप्रायम्। यत्तु मध्यपठितस्यानित्त्वादित्यस्यैव सिद्धान्त्युक्तित्वं पूर्वोत्तरयोरेकदेश्युक्तित्वमिति कल्पनं तत्प्राचीनमत एव श्रद्धाजाड्येनेति दिक्॥

ननु तृतीयासमास इत्यनेनापि समुदायस्य सर्वनामसंज्ञानिषेधेऽवयवस्य सर्वनामत्वान्मासपूर्वायेत्यत्र स्मैभावो दुर्वार इत्यत आह—*

न । "न विभक्तौ" (पा०सू० १।३।४) इति निषेधात् । यद्यपि इत्त्वप्रवृत्तिकाले न विभक्तित्वज्ञानं तथापि विभक्ताविस्यस्य विभक्तित्वयोग्ये इत्यर्थान्न दोषः । अत एव सूत्रे तुग्रहणं चरितार्थम् ।

आमि सर्व (पा०सू०७।१।५२) "आज्जसेरसुक्" (पा०सू०७।१।५०) इत्यत आदिति वर्तते । पञ्चत्रिंशदिति । तेन सर्वार्थप्रतिपादकत्वेऽपि कृत्स्नसकलादिशब्दानां नेति भावः । सर्वशब्दो बुद्धिस्थाऽनेकसंख्याकावयवारब्धसमुदाये शक्तो । तस्य समुदायस्यानुद्भूतावयवभेदत्वे एकवचनं, यथा 'सर्वो लोक' इति तादृशसमुदायद्व-

---

नाम्नो विहितस्येत्यर्थ इति* । *विभक्तित्वयोग्येति* । विभक्तित्वव्यवहारविषययोग्ये इत्यर्थः । सौत्रं विभक्तिपदन्तत्र लाक्षणिकमिति भावः । अत्र साधकमाह–*अत एवेति । विभक्तिपदस्य तादृशार्थलाक्षणिकत्वादेव । *तुग्रहणञ्चरितार्थमिति* । सर्वस्मिन्नित्यादौ नकारस्येत्संज्ञाव्यावर्तकत्वेनैव तुग्रहणञ्चरितार्थं स्यात् नच्च लक्षणां विना न सम्भवतीति भावः । न च प्राग्दिशीये चारितार्थ्यम् । तेष्वप्रवृत्तेरिष्टत्वात् ।

यत्तु "उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युपसर्गबाधते" इति न्यायेन स्मिन्नादेशप्रतिपत्तिकाले प्राप्तेत्संज्ञाया वारणे सिद्धे विभक्तिपदस्य लक्षणाकल्पनमनुचितमिति । तन्न । उत्सर्गापवादयोरेकवाक्यतया एव विकल्पवारणाय सम्प्रदायसिद्धतया "हलन्त्यम्" इतिसूत्रघटकहल्पदस्य विभक्तिस्थतवर्गादिभिन्नहल्त्वावच्छिन्नबोधकत्वं वाच्यम् । एवञ्च स्मिन्नादेशस्य प्रवृत्तिसमये विभक्तित्वज्ञानाभावादित्वस्यानुपपत्तिस्तदवस्थेति लक्षणाया भवतापि वाच्यतया न्यायानुपयोगात् ।

*तेन*। परिगणनेन। अन्यथाऽन्वर्थसंज्ञया कृत्स्नादिशब्दानामपि स्यादिति भावः ॥ *समुदाये शक्ताविति* । यथा 'सर्वोऽयं धान्यराशिश्चैत्रस्य' इत्यादौ । यदा तद्राश्यवयवा वक्तृबुद्धिस्थास्तदा तदभिप्रायेणायं प्रयोगः । 'मैत्रीयगोमधूराशेः' अपि यदा कदाचिच्चैत्रीयबुद्धिस्थावयवारब्धत्वेऽपि सम्प्रति मैत्रसम्बन्धित्वविवक्षायां 'सर्वोऽयं राशिर्मैत्रस्य' इति प्रयोगो न तु तदा चैत्रस्येत्यतो बुद्धिस्थत्वं विशेषणम् । *तादृशसमुदायद्वयादीति* । बुद्धिस्थानेकसंख्याकावयवारब्धसमुदायद्वयविवक्षायां द्विवचनम् । तादृशसमुदायत्रयादिविवक्षायां बहुवचनम् ।

नन्वेवं 'सर्वोऽप्यात्मा नित्य' इतिप्रयोगानुपपत्तिः । अद्वैतसिद्धान्तेऽन्तःकरणाद्युपाधिभेदादात्मनां भेदेऽपि बुद्धिस्थानेकसंख्याकावयवारब्धसमुदायरूपत्वानुपपादनात् । एवमात्मनां सर्वेषामेकत्वमित्यादिप्रयो-

यादिविवक्षायां द्विवचनादि, 'सर्वौ व्यूढौ' सर्वे 'व्यूढा' इति। यदा ऽप्युद्भूतावयवभेदसमुदायविवक्षा तदापि बहुवचनं—'सर्वे घटा' इति।

---

गानुपपत्तिः। न चात्राशेषत्वावच्छिन्नः सर्वशब्दार्थः। अशेषत्वञ्च विधेय... शून्यावृत्त्युद्देश्यतावच्छेदकवत्त्वम्। प्रकृते विधेयस्य नित्यस्य यस्ताद... त्म्यसम्बन्धावच्छिन्नाभावस्तद्वाननित्यः प्रपञ्चः तन्निरूपितसमवायसम्ब... न्धावच्छिन्नवृत्तित्वाभाववदात्मत्ववत्त्वमात्मनि प्रतीयत इति नानुपपत्ति... रिति वाच्यम्। 'सर्वे घटाः प्रमेयत्ववन्त' इत्यत्रागत्यापत्तेः। विधेयस्य विधेयतावच्छेदकस्वरूपसम्बन्धावच्छिन्नाभावाप्रसिद्धेः।

किञ्च 'सर्वे घटा रूपवन्त' इत्यादौ शब्दाद् घटत्वावच्छिन्ने तादात्म्यस... म्बन्धेन रूपाभाववदवृत्तिघटत्वावच्छिन्नस्य विधेयांशेऽधिकावगाहिनः शाब्दबोधसम्भवेऽपि वारद्वयं घटत्वविषयत्वावगाह्यनुभवस्य सार्वजनी... नस्याभावादनुपपत्तिः। न चोद्देश्यतावच्छेदकव्यापकविधेयवत्त्वमेव स... र्वशब्दार्थः। तदवच्छिन्ने तस्य विधेयतया भानानुपगमात्। न च सर्वश... ब्दार्थौ व्यापकत्वमेव तस्य विधेयेऽन्वयान्नानुपपत्तिरिति वाच्यम्। ना... मार्थयोर्भेदसम्बन्धेनान्वयानुपगमात्। नाप्यभेदेन विधेयान्वयी व्याप... सर्वपदार्थः। एवं सति विधेयबोधकपदसामानाधिकरण्येन सर्वशब्दस्य... लिङ्गत्वापत्त्या 'सर्वे वेदाः प्रमाणम्' इत्यत्रान्वयिप्रमाणशब्दवत्सर्वशब्दे नपुं... सकत्वापत्तिः। एवमेकवचनापत्तिश्चेति चेन्न। उद्देश्यतावच्छेदकव्याप... कविधेयव्याप्यपर्याप्तिको धर्मः सर्वपदप्रवृत्तिनिमित्तम्। स च धर्मः 'स... घटा रूपवन्त' इत्यादौ घटनिष्ठयावत्त्वम्। तदवच्छिन्नस्य चोद्देश्येऽभेदा... न्वयोपगमान्न पूर्वोक्तानुपपत्तिः। यावत्त्वपर्याप्तावुद्देश्यतावच्छेदकव्यापक... श्च उद्देश्यतावच्छेदकसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदक... त्वम्। न च विधेयव्याप्यत्वञ्च विधेयतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगि... ताकविधेयाभाववदवृत्तित्वम्। एवञ्च 'सर्वे घटाः प्रमेयत्ववन्त' इत्यादौ स... रूपसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयत्वाभावाप्रसिद्ध्याऽनुपपत्तिरिति वाच्यम्। व्यभिचारित्वसम्बन्धावच्छिन्नप्रतियोगिताकविधेयतावच्छेद... कावच्छिन्नाभाववत्त्वस्यैव व्याप्यत्वरूपत्वात्। व्यधिकरणसम्बन्धावच्छि... न्नाभावश्च सर्वमतप्रसिद्ध एव। अयं सर्वशब्दार्थश्च यत्र सर्वशब्दस्यो... द्देश्यबोधकपदसामानाधिकरण्यं तत्र। यत्र तु विधेयबोधकपदसामाना... धिकरण्यं तत्र तु विधेयतावच्छेदकव्यापकोद्देश्यतावच्छेदकावच्छिन्नस... म्बन्धव्याप्यपर्याप्तिकयावत्त्वं प्रवृत्तिनिमित्तम्। 'पृथिवी सर्वगन्धवती' इत्यादौ यथा।

पूर्वादिशब्दानां सर्वनामसंज्ञाया अष्टाध्यायीस्थसूत्रेण जसाधारे...

पूर्वपरावर । (पा०सू०१।१।३४) व्यवस्थाऽसंज्ञावर्त्तिन एवेमे सर्वादय इत्यर्थः । एवमुत्तरसूत्रद्वये ऽपि ।

नित्यं द्विवचनान्त इति । द्विवचनान्त एवेत्यर्थः । अकजर्थ इति । ननु काकचोः को विशेषः ? प्रत्ययस्वरचित्स्वराभ्यामन्तोदात्तत्वस्यैव सत्त्वात् । न च सुबन्तात्तद्धितोत्पत्त्या चित्त्वप्रयुक्तमन्तोदात्तत्वम् उभकाभ्याम् इत्यादौ सुबन्तस्य, के तु प्रकृतेरिति विशेष इति वाच्यम् । तद्धितविधौ प्रातिपदिकादित्यधिकारेण प्रातिपदिकस्यैव प्रकृतित्वात् । स च जायमानो न्यायात्सुबन्तात्पर इत्यन्यदेतत् । युष्मदस्मद्विषये तु वचनात्सुबन्तस्यैव प्रकृतित्वं, तस्यैव टेः प्रागकजिति बोद्ध्यम् । न चाकचि तन्मद्ध्यपतितन्यायेन तस्याभग्रहणेन ग्रहणे उभकाववयवौ यस्येत्यर्थे उभकशब्दादयचि उभकयः' इति 'रूपं, के तु नेति विशेषः । 'कश्चेदानीं काकचोर्विशेष' इति भाष्यप्रामाण्येन तेषामनभिधानादिति शङ्कते—न चेति ।

द्विवचनपरत्वाभावेनेति । अकचि तन्मद्ध्यपतितन्यायेनोभशब्दस्य द्विवचनपरत्वं, के तु तेन व्यवधानान्न तस्य तत्त्वमित्यर्थः । "उभादुदात्तः" (पा०सू०५।२।४४) इति सूत्रे भाष्यकृता ऽयचः प्रत्ययान्तरत्वेन व्याख्यानान्महाविभाषासंबन्धस्यावश्यकत्वेन नित्यग्र-

---

हणीभावाख्यं कार्यं तत्र सिद्धेर्गणसूत्रार्थमाह—*व्यवस्थेति* ।

ननु नित्यन्द्विवचनान्त इत्यनुपपन्नं यत्र टाप्तत्रोभस्य द्विवचनान्तत्वासम्भवादत आह—*द्विवचनान्त एवेत्यर्थ इति*।एतेन नित्यं द्विवचनान्त इत्यत्र नित्यशब्दोऽवधारणार्थ इति सूचितम् । तेन संजातीयवचनान्तरस्यैव व्यवच्छेदो न तु टापः।*अन्तोदात्तत्वस्यैवेति*"चित"इति सूत्रे सप्रकृतेरित्युक्तत्वात् । ननु प्रत्ययविधौ यदुद्देश्यतावच्छेदकं तदवच्छिन्नस्यैव प्रकृतित्वमिति विशेषोऽस्त्येवेत्याशयेन शङ्कते—*न चेति* । *प्रातिपदिकस्यैव प्रकृतित्वादिति* । यदुद्देश्यत्वेनोपात्तन्तत्प्रकृतिरित्युच्यते, तादृशञ्च प्रातिपदिकमेवेति भावः । *न्यायात्* । 'स्वार्थे परिपूर्णस्यैवेतराकाङ्क्षत्वम्' इत्येवं रूपात् । *वचनादिति* । "ओकारसकारभकारादौ" इति वक्ष्यमाणवचनादित्यर्थः । * के तु नेति* । कान्तस्य शब्दान्तरत्वात् ।

*प्रत्ययान्तरत्वेन व्याख्यानादिति* । प्रत्ययविधायकसूत्रेषु महाविभाषासम्बन्धस्य बहुशो दर्शनादित्यर्थं दृढीकर्तुमस्योपादानम् ।

हणमयोग्यं सत् योगविभागेनोभयशब्दाद् वृत्तिविषये ऽत्यन्तस्वार्थि-
कायज्विधानार्थम्। अयञ्च तद्विषये सुबुत्पत्तेः पूर्वमेव, स्वार्थिकत्वेना-
न्तरङ्गत्वात्। अत एवायज्विशिष्टस्योभस्य सर्वनामत्वात्सर्वनामप्र-
कृतिकसप्तम्याद्यन्तत्वेन त्रलाद्युत्पत्तिः। अत्र नित्यशब्दस्य वाच्या-
र्थविरोधान्महाविभाषाया असंबन्धः। अयमप्याद्युदात्त एवोदा-
त्तग्रहणानुवृत्तेः। अयञ्च वार्तिकप्रामाण्याद्यत्रोभशब्दस्योभयशब्दस्य
वा द्विवचनविषयत्वाभावसंभावना तत्रैव। अत एव 'उभयोर्वासः'
इत्यादौ "शयवास" (पा०सू०६।३।१८) इत्यलुकि नायच्। तद्
ध्वनयन् वार्तिकमाह—उभयोऽन्यत्रेति।

द्विवचनपरत्वाभावे इति। तत्परत्वाविषयत्वाभावे इत्यर्थः।

---

*वृत्तिविषय इति*। अयं भावः। "उभयोऽन्यत्र" इति वार्तिकस्वा-
रस्येन "उभौ साभ्यासस्य" इति सौत्रप्रयोगेण च यत्र द्विवचनस्याऽश्रव-
तत्रैवायचः साधुत्वं तेन वृत्तिविषय इति लब्धमिति। *अत एव*। सुबु-
त्पत्तेः पूर्वमस्योत्पत्तेरेव। *त्रलाद्युत्पत्तिरिति*। एतेन यस्य मते उभश-
ब्दस्य न सर्वादौ पाठः तं प्रति त्रलादिघटितस्य दृष्टान्तत्वेनोपन्यास
सङ्गच्छते। *अयञ्च*। अयच्प्रत्ययश्च। ननु वृत्तिविषय इत्येतावन्मात्रो-
क्तावुभयोर्वास इत्यत्रायच् दुर्वार इत्यत आह—*उभशब्दस्येति*।
ननूभशब्दस्य द्विवचनपरत्वाभावो वृत्तिविषये पूर्वमयच् यदि स्यात्त-
ऽस्त्येवेत्यत आह—*उभयशब्दस्य वेति*। यद्यत्रायच् स्यात्तदापि प्र-
विभक्तेरलुकि कृते उभयशब्दस्य द्विवचनपरत्वं स्यादेवेति पूर्वमप्ययच्
प्रवर्त्तत इति भावः।

ननु द्विवचनपरत्वाभावेनेत्यसङ्गतम्। "नित्यम्" इति सूत्रेण विधी-
मानस्यायचोऽन्तरङ्गत्वात्समासतद्धिताद्युत्पत्तेः सुबुत्पत्तेश्चः पूर्वमेवोत्प-
त्तिसम्भवात्तदा सर्वत्रैव द्विवचनपरत्वाभावोऽस्त्येवेत्यत आह—*तत्पर-
त्वविषयाभाव* इति। भावप्रधाननिर्देशेन द्विवचनपरत्वविषयत्वाभा-
इत्यर्थः। न च कप्रत्ययेनेष्टसिद्धिरिति यस्य शङ्का तन्मते उभशब्द-
सर्वादिषु पाठाभावेन ततस्तसिलादिविवक्षायाः कर्त्तुमशक्यत्वेन द्विव-
नपरत्वविषयताया एव सर्वत्र सम्भवेन द्विवचनपरत्वविषयत्वाभावस्यास-
म्भवेन 'उभयतः' 'उभयत्र' इति दृष्टान्तेन कप्रत्यये सत्ययच् स्यादित्यसङ्ग-
मिति वाच्यम्। द्विवचनविषयत्वाभावसम्भावनेतिव्याख्यानेनैव समा-
नात्। एवञ्च तन्मते उभशब्दस्य पाठाभावेऽप्युभयशब्दस्य सर्वादौ पाठ

'उभयो मणिः' इत्यादौ तु न । "लिड्यभ्यासस्योभयेषाम्" (पा० सू० ६।१।१७) इति निर्देशेन योगविभागस्येष्टसिद्ध्यर्थत्वेन च तस्य क्वचिदप्रवृत्तेः । अतो रूपाद्यन्ते नायच्, रूपादेरस्मदनभिधानमेव वा । अयच्यकच् तु न वाच्यः । उपजीव्यत्वेन कस्यैव प्राप्तेः । अपवादस्त्वन्यत्र चरितार्थः ।

अत्रेदं चिन्त्यम् । अकज्विधावेवोभग्रहणेन सिद्धे सञ्ज्ञाप्रणयनं किमर्थम् । अभिव्यक्तपदार्थकत्वात्संज्ञाव्यावृत्तिः । सर्वनामसाहचर्याच्च । अत एवोपसर्जनव्यावृत्तिरपि । उभयोऽन्यत्रेति वार्त्तिके तयप्समानार्थको ऽप्ययच् गृह्यते, 'उभयो मणिः' 'उभये देवमनुष्याः' इति भाष्ये तदुदाहरणात् स्वार्थिकस्य च ग्रहणम्, तदुपक्रमेण वार्त्तिक-

सत्त्वात् यद्यत्रायच् स्यात्तदा त्रतसिलादिः स्यात्ततश्च द्विवचनस्य लुक् स्यादेवं रीत्या द्विवचनपरत्वविषयत्वाभावसम्भावनासत्त्वान्नानुपपत्तिः ।

ननु 'उभयो मणिः' इत्यत्र तयपः स्थानेऽजयादेशो यत्र तत्र स्वार्थिकः पुनरयच् स्यादत आह—*उभयो मणिरित्यादाविति* । *रूपवाद्यन्त इति* । उभरूपमित्यादौ, वृत्तिविषय इत्येतद्वाक्यविज्ञाप्यार्थस्य तत्राप्यक्षतत्वात् । अत्रादिना बहुभशब्दसङ्ग्रहः । ननु कुत्साद्यर्थविवक्षायामेव वृत्तिविषयता तत्रायचि कृते उभयशब्दस्य सर्वादौ पाठस्य सर्वमतसिद्धतयाऽकजेव स्यात्तथा सति द्विवचनपरत्वविषयतासत्त्वेन कथमयचः प्रसङ्ग इत्यत आह—*अयच्यकच् त्विति* । *उपजीव्यत्वेनेति* । यद्यत्र कप्रत्ययः स्यात्तदा द्विवचनपरत्वविषयत्वाभावमाश्रित्यायचः प्राप्तिरिति कप्रत्ययस्य भाविनी या उत्पत्तिः सा उपजीव्या । यदि तु कप्रत्ययस्य बाधकोऽकच् प्रकृते स्यात्तर्हि उपजीव्यविरोधः स्पष्ट एवेति भावः ।

नन्वपवादविषये कथं बाध्यप्रवृत्तिरत आह—*अपवादस्त्वन्यत्रेति* । युष्मदस्मच्छब्दविषये । तस्येह पाठस्तूभकावित्यकजर्थ इतिमूलोक्तंसिद्धं तत्राह—*अत्रेदश्चिन्त्यमिति* । नन्वकज्विधावेवोभशब्दपाठे संज्ञाभूतोभशब्दादप्यकच् स्यात्सर्वादौ पाठे तु सर्वनामसंज्ञायास्तत्राभावेन नाकच्प्राप्तिरिति विशेषोऽस्त्येवेत्यत आह—*अनभिव्यक्तेति* । *अत एव* । सर्वनामसाहचर्यादेव । एतेनाभिव्यक्तेति न्यायस्य पदकार्ये प्रवृत्तेः सिद्धान्तितत्वेन कथमत्र तत्सञ्चार इति निरस्तम् । तस्य न्यायस्य प्रवृत्तावेव निर्भरस्याभावात् । अथोभयशब्दविषये विशेषमाह—*उभयोऽन्यत्रेतीति* । *तयप्समानार्थक इति* । एतेन वक्ष्यमाणः प्रत्ययान्तत्वपक्ष एव मुख्य इति सूचितम् । *तदुपक्रमेण* । स्वार्थिकोपक्रमेण ।

प्रवृत्तेः । एवञ्चावयवद्वयारब्धमणिद्वयविवक्षयोद्भूतावयवभेदविवक्ष-या वा द्विवचनमस्याऽसाध्वेव । एतन्मूलकमेवोभयस्याऽसर्वविभक्ति-त्वं 'तद्धितश्च' इति सूत्रे कैयटेनोक्तं तदाह—कैयट इति । हरदत्त इति । अत्रारुचिबीजं प्रागुक्तभाष्यविरोधः ।

भाष्ये तूभशब्दपाठः प्रत्याख्यातः । कप्रत्ययस्याज्ञाताद्यर्थविशिष्टस्वार्थे विधानेन द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधविषयार्थानुवादकत्वरूपद्विवचनत्वेन वार्त्तिके द्विवचनशब्देन तस्यापि ग्रहणमुपशब्दग्रहणवत् । अत एव 'उभयोरुभौ उभोभौ' इत्यादौ नायच् । तदुक्तं भाष्ये "कोऽप्यन्तरेण वचनं द्विवचनपरो भविष्यति । कथं ? स्वार्थिकाः प्रत्ययाः प्रकृतितो ऽविशिष्टा भवन्तीति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवति" इति । इति—हेतोः, प्रकृतेः—कादिप्रकृतेरुभशब्दस्य ग्राहकेण द्विवचनशब्देन स्वार्थिकस्यापि ग्रहणमिति तदर्थः । त्रतसिलौ तु विभक्त्यन्तस्य स्वार्थे विहिताविति तत्तत्कारकशक्तिप्रधानाविति न तयोरुक्तद्विवचनत्वमिति ।

तस्मात्—उभयशब्दात् । जसीति । अवयवद्वयारब्धसमुदायबहुत्वविवक्षायामित्यर्थः । अन्तरङ्गत्वादिति । सर्वार्थबोधक

---

*एतन्मूलकमेवेति* । उक्तभाष्यमूलकमेवेत्यर्थः । *प्रागुक्तभाष्येति* उदाहरणप्रदर्शनपरभाष्येत्यर्थः । यदि द्विवचनमपि स्यात्तदा तदन्तोदाहरणाप्रदर्शनेन न्यूनतापत्तिः स्यादिति भावः ।

सिद्धान्तमाह—*भाष्ये त्विति* । उभयोऽन्यत्रेति वार्त्तिकव्याख्यानावसरे यो द्विवचनशब्द उक्तः स न कृत्रिमस्यैव बोधकः, किन्तु यौगिक इत्याशयेनाह—*द्वित्वसंख्येति* । *अत एव* । द्विवचनशब्दस्य यौगिकत्वादेव । पूर्वोक्तार्थे भाष्यसम्मतिमाह—*तदुक्तमिति* । भाष्यस्थग्रहणशब्दः करणल्युडन्त इत्याशयेनाह—*ग्राहकेणेति* । उभयत उभयत्रेति प्रयोगासङ्गतिम्परिहरन्नाह—*त्रतसिलाविति* । *शक्तिप्रधानाविति* । अपादानत्वाधिकरणत्वशक्तीत्यर्थ । इदं शक्तेर्विभक्त्यर्थत्वमते । कारकस्य विभक्तिवाच्यत्वेऽपि संख्यायाः प्रकृत्यर्थविशेषणत्वभानेन संख्याप्रकारकप्रकृत्यर्थविशेष्यकबोधो यद्यपि भवति, तथापि न विभक्तिवाच्यार्थे संख्यायाः प्रकारत्वमिति निरुक्तद्विवचनत्वाभावः स्पष्टः ।

स्वरूपार्थस्योभयत्रापि निमित्तत्वेन न तत्कृतं नित्यसञ्ज्ञाया बहिरङ्गत्वम् । अत एव सञ्ज्ञोपसर्जनप्रथमादिशब्दे न विकल्पः, अर्थकृतबहिरङ्गत्वस्यानाश्रयणाच्चेति भावः । इदमर्वाचामनुरोधेन ।

परे तु अस्य पक्षे ऽभावबोधकतया "निषेधाश्च बलीयांस" इत्यनेनास्य प्राप्तिः । किं च न 'अन्तरङ्गं बलीयः' इत्यस्या अत्र विषयो युगपत्प्राप्त्यभावात्, सञ्ज्ञानां बाध्यबाधकभावाभावेन प्रातिपदिकसञ्ज्ञासमकालमेव सर्वनामसञ्ज्ञाप्रवृत्तेः । अत एव 'उभये' इत्यत्र सर्वनाम्नो विहितत्वेन शीभावसिद्धिः । पूर्वपरेत्यादि तु पक्षे तदभावमात्रबोधकम् । असिद्धं बहिरङ्गमित्यपि न, अन्तरङ्गोत्तरं बहिरङ्गप्राप्तेः । अन्तरङ्गे कर्तव्ये बहिरङ्गासिद्धत्वेऽपि तत्प्रवृत्त्युत्तरं बहिरङ्गप्रवृत्तेरनया वारयितुमशक्यत्वात् । बहुशस्तथादृष्टत्वात् । तदुत्तरमप्येतत्प्रवृत्त्या पूर्वादिष्विव पक्षे तदभावविशिष्टे साधुत्वबोधनस्य शक्यत्वात् ।

जसीति विषयसप्तमीति पक्षेऽपि प्रातिपदिकादिसञ्ज्ञोत्तरमेवास्याः प्रवृत्तिस्तदुत्तरमेव तद्विषयात्, स्थानिवदतिदेशप्रापिताया निरवका-

---

उभयशब्दाद्बहुवचनोपपत्तये आह-*अवयवद्वयेति* । *अत एव* अर्थस्योभयत्र निमित्तत्वादेव । *न विकल्प इति* । अर्थाभावादित्यादिः । स्वसिद्धान्तरीत्याह-*अर्थकृतेति* । *अर्वाचाम्* । प्रक्रियाकारादीनाम् । *अभावबोधकतयेति* । इदं निषेधाश्चेति वचनप्रवृत्तौ नियामकम् । यदुक्तमन्तरङ्गत्वादिति तत्खण्डयति-*किञ्चेति* । *अत एव* । प्रातिपदिकसंज्ञासमकालसर्वनामसंज्ञाप्रवृत्तिस्वीकारादेव । ननु प्रातिपदिकसंज्ञासमकालमेव चेत्सर्वनामसंज्ञा तदा पूर्वपरेत्याद्यष्टाध्यायीस्थसूत्रवैयर्थ्यमत आह-*पूर्वपरेत्यादीति* । ज्ञापकसिद्धपरिभाषाया अपि न प्रवृत्तिरित्याह-*असिद्धमिति* । अन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्यानेनासिद्धत्वप्रतिपादनात् । एतादृशार्थे साधकमाह-*बहुश इति* । पचावेदमित्यादौ । *तदुत्तरमिति* । नित्यसंज्ञोत्तरमित्यर्थः । *एतत्प्रवृत्त्येति* । प्रथमचरमेत्यस्य प्रवृत्त्येत्यर्थः ।

ननु जसीति सप्तम्या विषयसप्तमीत्वात्पूर्वं विकल्पप्राप्तिः स्यादत आह-*जसीति विषयेति* । *तदुत्तरमेव तद्विषयात्* । प्रातिपदिकसंज्ञोत्तरमेव जस्विषयत्वसत्त्वात् । नित्यसंज्ञायास्तु प्रातिपदिकसंज्ञाप्राप्तिसमानकालप्राप्तिकतया विकल्पेन बाधो न सम्भवतीति भावः । एतेनान्तरङ्गत्वादित्युक्तिर्निरस्ता । स्थानिवद्भावेन या विकल्पप्राप्तिस्तस्याः परेणोक्तमन्तर-

ङ्गत्वाच्च, प्रत्यक्षस्य स्थानिवद्भावस्याऽऽनुमानिकयाऽनया बाधयोगा-च्च। सर्वनामसञ्ज्ञायामुक्तयुक्त्या यथोद्देशपक्षस्यैवौचित्यात्। अत एव "तयादेशे उभयप्रतिषेधः। तयपो ग्रहणेन ग्रहणाज्जसि विभाषा प्राप्नोति" इति स्थानिवत्सूत्रस्थं वार्त्तिकमयच्प्रत्ययान्तरमिति सूत्राशयप्रदर्शनेन भाष्ये प्रत्याख्यातम्, न त्वन्तरङ्गन्यायबलेन। 'उभयी' इत्यत्र ङीप्तु 'टिड्ढा' इति सूत्रे मात्रशब्दादारभ्यायचश्चकारात्प्रत्याहाराश्रयणेन सिद्धः। अत इत्यनुवृत्त्या च 'कति' इत्यादौ नातिप्रसङ्गः। तयप्ग्रहणं सूत्रे ऽवयुत्यानुवादः। द्वित्रिशब्दप्रकृतिकायजन्तस्य जसः शीविषयेऽनभिधानमेव पुंस्येव वाऽनभिधानमिति तदाशय इति वदन्ति।

---

ङ्गत्वाद्बाधमभ्युपेत्यापि प्रकारान्तरेण तन्मतं निरस्यति—*स्थानिवदति-देशेति*। अत्र निरवकाशत्वोक्त्याऽन्तरङ्गस्यापि निरवकाशबाधकत्वासंभवः सूचितः। नन्वन्तरङ्गपरिभाषया स्थानिवद्भावस्यैव बाधोऽस्त्वत आह-*प्रत्यक्षस्येति*। ननु कार्यकालपक्षे द्वयोः संज्ञयोर्युगपत्प्राप्तिः स्यादत आह-*सर्वनामसंज्ञायामिति*। *उक्तयुक्त्येति*। उभय इत्यत्र सर्वनाम्नो विहितत्वासिद्ध्यर्थं यथोद्देशत्वमेव स्वीकर्त्तव्यमन्यथा शीभावो न स्यादिति [illegible] स्येत्यर्थः। उक्तार्थे भाष्यसम्मतिमाह—*अत एवेति*। अन्तरङ्गपरिभाषया प्रकृतेऽनिर्वाहादेव। प्रत्ययान्तरत्वपक्षे ङीबसिद्धिं परिहरति—*उभयीत्यत्रेति*। अतिप्रसङ्गम्परिहरति—*अत इत्यनुवृत्त्येति*।

नन्वेवं सति मात्रज्ग्रहणेनैव सिद्धे टिड्ढेतिसूत्रे तयब्ग्रहणवैयर्थ्यापत्तिरत आह—*तयब्ग्रहणन्विति*। अवयुत्येति ल्यबन्तम् पृथक्कृत्येत्यर्थकम्। अवयुतिशब्दप्रकृतिकतृतीयान्तं वा। समुदायादेकदेशस्य पृथक्करणेनानुवाद इत्यर्थः। ननु द्वित्रिशब्दादवयवे वर्तमानादवयवे यदा तयप् तदा तस्य स्थानेऽयजादेशे स्थानिवद्भावेन तयप्प्रत्ययान्तत्वात् प्रथमचरमेति जसि विकल्पो भवति। अयचः प्रत्ययान्तरत्वे तु न विकल्पप्राप्तिरत आह—*द्वित्रिशब्देति*। जसः शीविषय इति न्यूनम् [illegible] त्रापि प्रयोगाभावादत आह—*पुंस्येवेति*। स्त्रियां नपुंसकत्वे च प्रयोगो दृश्यते। द्वयी विद्या। असती कुलद्वयन्नाशयतीत्यत्र यथा। *तदाशय इति*। "तयादेशे उभयप्रतिषेध" इति वार्तिकप्रत्याख्यानपराशय इत्यर्थः। न च "तस्थपाम्" इति वक्तव्ये "तस्थस्थमिपाम्" इति गुरुनिर्देशात्समुदायानुबन्धस्यावयवानुबन्धत्वाभावो ज्ञापित इति, मात्रजिति प्रत्याहारस्तदाऽयचाश्चित्त्वञ्च स्यादिति वाच्यम्, 'ज्ञापकसिद्धञ्च सर्वत्र' इति परिभाषया क्वचित्समुदायानुबन्धस्याप्यवयवानुबन्ध-

तथापीहेति। "प्रत्ययग्रहणे तदन्तग्रहणम्" इति "प्रयोजनं सर्वनामाव्ययसञ्ज्ञायाम्" इति च तदन्तविधिद्वयेन डतरान्तान्तत्वा-द्यर्थे परमकतरस्य, व्यपदेशिवद्भावेन कतरस्य च सञ्ज्ञासिद्धेति भा-वः। तत्र मानमाह—केवलयोरिति। प्रयोजनाभावात्—फलाभा-वादित्यर्थः। अदन्तादङ्गात्परस्य सर्वनाम्नो विहितस्यैत्यत्र "जसः शी"इत्यादेरर्थादिति भावः। ननु डतरग्रहणेनैव सिद्धेऽन्यतरशब्दपाठो व्यर्थोऽत आह—अन्यतरेति। किंयत्तद्भ्य एव तयोर्विधानादिति भा-वः। अपुरीति। पुःशब्दस्य विशेष्यत्वे नेत्यर्थः। तद् ध्वनयन् स्त्रियामुदाहरति—अन्तरायामिति।

एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा।
साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते

इति केचित्। केवले ऽसहाये। तत्र संख्या ऽन्यार्थासहायवाची "ष्णान्ता षट्" "बहुषु बहुवचनम्" एकादाकिनिच्च" (पा०सू०५। स्वीकारात्।

यत्तु "द्वित्रिभ्याम्" इति सूत्रे तयग्रहणस्याकरणप्रौढ्येदम्। वस्तुन-स्तु उभयशब्दप्रकृतिकायच एव प्रत्ययान्तरत्वम्, अत एव "कर्तृकर्मणोः" इति सूत्रे 'धातोर्द्वये प्रत्ययास्तिङः कृतश्च' इति प्रयोगः सङ्गच्छते। 'व्य-र्थां द्वयेषाम्' इति माघप्रयोगश्च 'द्वयमिच्छन्ति' इति रीत्या यद्यप्युपपद्यते तथाप्युक्तप्रयोगस्यान्यथोपपादनासम्भवादिति। तन्न। अयच्प्रत्यया-न्तरमिति प्रकृतिविशेषानुपादानेन प्रत्ययान्तरत्वोक्त्या द्वये प्रत्यया इति प्रयोगाच्च द्वयशब्दोऽव्युत्पन्नप्रातिपदिकं तस्य च "प्रथमचरम" इति सूत्रस्थचकारेण संग्रहात्सर्वनामसंज्ञासिद्धिरित्याशयात्। 'उभयीं अमि-त्रा' इति प्रयोगश्च छान्दसत्वेन साध्य इति दिक्।

फलाभावमुपपादयति—*अदन्तादङ्गात्परस्येति*। *पुःशब्द-स्येति*। तदर्थस्येत्यर्थः। अत एव 'अन्तरायां नगर्यामिति प्रयोगस्याप्यु-पपत्तिः। एकशब्दस्य यावन्तोऽर्था 'एकोन्यार्थे' इत्यादिनोक्तास्तेषु केषा-ञ्चिदर्थानां सप्रमाणत्वं कस्य चित्तु नेति विशेषं दर्शयितुमाह—*तत्रेति*। "ष्णान्ता षट्" इति सूत्रे सङ्ख्यावाची एको द्वौ बहव इत्यत्र प्रसिद्धः। अन्यार्थकोऽपि तत्रैव 'सधमादो द्युम्न एकास्ता' इत्यत्रोक्तः। असहा-यवाच्यपि तत्रैव 'एकाग्नयः' 'एकहलानि' इत्यत्रोक्तः।

३।८३) इत्यादि सूत्रेषु भाष्ये स्पष्टमुक्तः। "एको गोत्रे" (पा०सू० ४।१।८३ इति सूत्रशेषे भाष्ये प्रथमार्थोऽपि उक्तः। साधारणसमाना-र्थयोः संख्यावाचिन एवार्थतः पर्यवसानं, यथा 'तेनैकदिक्' 'चैत्रमैत्र-योरेका माता" इत्यादौ। 'सर्वस्य द्वे' इति सूत्रे "एकैकश" इति भाष्य-मुपादाय 'केचिदाहुरल्पार्थोऽप्येकशब्दोऽस्ति' इति वदता कैयटेन केचि-दित्युक्त्या तदर्थकाभावो ध्वनित एव। एवं च प्रधानार्थे न दृढं मानम्।

---

*एको गोत्र इति सूत्रशेष इति*। तत्र हि "एका प्रकृतिर्गोत्रप्रत्यय-मुत्पादयति" इत्युक्तम्। तत्रान्येनैकशब्दस्य परमप्रकृतिपरत्वे कथिते सि-द्धान्तिनोक्तम्। "न हीदं लोकाच्छिद्यते लोके हि सङ्ख्यां प्रवर्त्तमानामुपच-रन्ति। एक इति वा प्रथम इति वा। यावद् ब्रूयात्प्रथमो गोत्रे प्रत्ययमु-त्पादयति तावदेको गोत्र इति" इति। अत्र कैयटः। 'लोके योऽर्थ एकश-ब्दस्य दृश्यते स एवेहाश्रीयते। लोके च प्रथमशब्दसमानार्थ एकशब्दो दृश्यते इतीहापि प्रथमवाच्येवाश्रीयते। शास्त्रेऽपि प्रथमार्थ एकशब्दो दृश्यते। *एकेऽल्पप्राणा इति*। प्रथमेऽल्पप्राणा इति गम्यते। *उपचर-न्तीति*। व्यवहरन्तीत्यर्थः। साधारणार्थकस्तु तेनैकदिगित्यत्र दृष्टः। समानार्थकस्तु चैत्रमैत्रयोरेका मातेत्यत्र। एतयोरेकत्वसङ्ख्याप्रकारक-धासम्भवात्। *अर्थत इति*। 'सार्वविभक्तिकस्तसिः'। अर्थवशात्। दि-शो मातुश्चैकत्वं विना साधारणत्वसमानत्वयोरनुपपत्तिः। अल्पार्थकस्तु नेकधान्यवपनयोग्यक्षेत्रेऽपि धान्याल्पत्वात् यदैकजातीयस्यैव धान्यस्य व-कृत्वाऽत्र क्षेत्रे मयैकस्यैव धान्यस्य वापः कृत इति कृषीवलोऽन्यस्मा-प्रयुङ्क्ते तदीयवाक्ये प्रसिद्धः।

*तदर्थकाभावो ध्वनित इति*। पूर्वोक्तप्रयोगघटकैकशब्दस्य तु एक-जातीयत्वार्थकत्वकल्पनेनाप्युपपत्तिरिति भावः। *न दृढम्मानमिति*। यदा तु 'असहायत्वं स्वस्य दुरदृष्टसत्त्वप्रयोज्यमेकाकिभिः क्षुद्रकैर्वी-तम्' इत्यादौ यथा। तदा प्रधानत्वप्रतीत्यभावेऽपि बहुषु राजसु वी-सत्स्वपि प्राधान्यादयमेकवीर इति यदा प्रयोगस्तदा प्राधान्यप्रतीति-यपि सम्भवति तथापि न दृढम्मानं स्वनिष्ठगुणसजातीयगुणवत्त्वकृतत्व-जात्यवदन्याभावप्रयोज्यासहायत्वस्यापि पर्यवसानेन वाक्यार्थनिष्पत्ति-सम्भवादिति भावः।

स्वाभिधेयापेक्षोऽवधिनियमो व्यवस्थेति कश्चित्पाठस्स वायुक-कर्मघञन्तस्यापेक्षशब्दस्यावधिसापेक्षत्वेन नियमेन योगासम्भा-

स्वाभिधेयापेक्षावधीति समस्तः पाठः । नियमेनावधिसापेक्षेऽर्थे वर्त्तमानपूर्वादीनामित्यर्थः । दाक्षिणा गाथका इति । उत्कर्षस्यावधिसापेक्षत्वादत्र व्यवस्थास्तीत्याग्रहे तु 'उत्तरे प्रत्युत्तरे च शक्त' इति प्रत्युदाहरणं बोद्धव्यम् । उत्तराः कुरव इति । सुमेर्वधिकपरदेशरूपोपाधिविशिष्टकुरुषूत्तरशब्दः शब्दं प्रवृत्तिनिमित्तीकृत्य वर्त्तते इति व्यवस्थाविषयत्वं बोद्धव्यम् । दिग्वाचकपूर्वादिशब्दानां मध्याह्नसूर्यसंयोगिदेशावधिकोदयाचलास्ताचलसंनिहितदेशतत्कालिकसूर्यसंमुखयावद्देशतत्कालिकतत्पृष्ठस्थयावद्देशरूपोपाधिविशिष्टदिशि तत्तच्छब्दं प्रवृत्तिनिमित्तीकृत्य प्रवृत्तिरिति उपाध्यन्तर्गततया व्यवस्थास्त्येव; मध्याह्ने सूर्यस्योदङ्मुखत्वात् । देशवृत्तीनान्तत्तदवधिकोदयाचलसन्निहितत्वादिप्रवृत्तिनिमित्तमित्यन्यत्र विस्तरः ।

---

आह—*समस्तः पाठ इति* । एवं च स्वाभिधेयापेक्षशब्दस्यावधिशब्देन समासं कृत्वा नियमशब्देन समासे कृते स्वाभिधेयेनापेक्ष्यमाणस्यावधेर्नियमो व्यवस्थेति वाक्यार्थः सिद्धः । एवञ्च यत्फलितन्तदाह—*नियमेनेति* । नियमेनावधिसापेक्षत्वञ्चावधिबोधकशब्दप्रयोगनिवर्त्तनीयोत्थिताऽऽकाङ्क्षाजनकज्ञानविषयत्वम् । तच्च पूर्वादिशब्दार्थे प्रसिद्धमेवेति भावः । व्यवस्थायामिति सप्तमी तु विषयत्वार्थिकैव । *आग्रहे त्विति* । एवमभिधानेनात्र दक्षिणशब्दस्यावधिसापेक्षार्थवृत्तित्वाभावः सूचितः ।

*उत्तरे प्रत्युत्तर इति* । अत्रोत्तरशब्दः प्रतिवाद्युच्चारितवाक्यपरः । प्रत्युत्तरशब्दस्तु पूर्ववाद्युच्चारितोत्तरनिराकरणसमर्थवाक्यपरः । उत्तराः कुरव' इति वाक्यघटकोत्तरशब्दार्थे व्यवस्थाविषयत्वमुपपादयति-*सुमेर्वधिकेति* । अनेन सुमेरुशब्दस्याकाङ्क्षानिवर्तकत्वं सूचितम् । *मध्याह्नेति* । अस्य तत्पुरुषीयेत्यादिः । एवमेव 'सर्वेषामेव वर्षाणाम्मेरुरुत्तरतः स्थित' इति वाक्यस्याप्युपपत्तिः । दिग्वाचकानां पूर्वादिशब्दानाम्प्रवृत्तिनिमित्तमुक्त्वा, देशवृत्तीनामप्याह—*देशवृत्तीनामपि* ।

अत्र केचित् । असंज्ञायामित्यस्योत्तराः कुरव इति प्रत्युदाहरणमसङ्गतम् । देशविशेषे उत्तरशब्दस्य निरूढत्वादवधेर्नियमेनापेक्षाया अभावेन व्यवस्थाया अभावात् । किञ्च दिग्वाचकपूर्वादिशब्दानामपि सर्वनामसंज्ञा दिक्षु तेषां रूढत्वान्न प्राप्नोति । किञ्च "दिङ्नामान्यन्तराले" इति सूत्र-

भाष्ये—"दिक्समाससहयोगयोश्चाशिष्यो बहुव्रीहिः। किं कारणम्? अन्तरालप्रधानाभिधानात्। दिक्समासे सहयोगे च अन्तरालप्रधानञ्चाभिधीयते तत्रान्यपदार्थ इत्येव सिद्धम्। यद्येवं दक्षिणपूर्वा दिक्, समानाधिकरणलक्षणः पुंवद्भावो न प्राप्नोति। अद्य पुनरियं सैव दक्षिणा सैव पूर्वेति कृत्वा समानाधिकरणलक्षणः पुंवद्भावः सिद्धो भवति। न सिध्यति। भाषितपुंस्कस्य पुंवद्भावः। न चैतौ भाषितपुंस्कौ। ननु च भोः दक्षिणशब्दः पूर्वशब्दश्च पुंसि भाष्येते। समानायामाकृतौ यद्भाषितपुंस्कम् आकृत्यन्तरे चैतौ भाषितपुंस्कौ। दक्षिणापूर्वेतिदिक्शब्दौ। दक्षिणः पूर्व इति व्यवस्थाशब्दौ। एवन्तर्हि 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव' इति वक्तव्यम्। दक्षिणोत्तरपूर्वाणामित्येवमर्थम्" इति भाष्ये उक्तम्।

अत्र कैयटः "दक्षिणस्याः पूर्वस्याश्च दिशो यदन्तरालं दिक् सा दक्षिणपूर्वेत्युच्यते तत्रान्तरालस्यान्यपदार्थत्वात्पूर्वेणैव सिद्धः समासः। *अद्य पुनरिति*। सूत्रारम्भकाले। सूत्रमेवं व्याख्यायते अन्तराले यानि दिङ्नामानि वर्त्तन्ते तानि समस्यन्ते। दक्षिणादीनाञ्च सामीप्यादन्तरालवृत्तित्वं ततश्च दक्षिणा चासौ पूर्वेति समानाधिकरणलक्षणः पुंवद्भावः सिद्धो भवति। सूत्रानारम्भे त्वन्यपदार्थसम्पादनाय दक्षिणापूर्वेतिशब्दयोः स्वार्थ एव वृत्तिरभ्युपेया। ततो "वैयधिकरण्यम्"। ततो 'न सिध्यति' इति प्रतीकमुपादाय प्रवृत्तिनिमित्तभेद एवोपपादितः। *दिक्शब्दाविति*। विना प्रवृत्ति निमितेन दिग्विशेषे रूढ्या प्रवृत्तावित्यर्थः। दिशकालयोश्च व्यवस्थापेक्षप्रवृत्तिनिमित्ताः'। एतेन प्रघट्टकेन दिग्वाचकपूर्वादिशब्दानां व्यवस्थाविषयत्वाभावात्सर्वनामसंज्ञा न प्राप्नोतीत्यभिहितम्।

अपि च दक्षिणा गाथका इत्यत्राप्युत्कर्षस्यावाधिसापेक्षत्वेन व्यवस्थायाः सत्वात्कथन्न सर्वनामसंज्ञेति। तन्न। संज्ञाशब्दत्वञ्च रूढ्या वाच्यशब्दमात्रप्रवृत्तिनिमित्तकशब्दत्वम्। अत एव 'संज्ञायां समजेति' सूत्रेण समूहार्थकसमज्याशब्दस्य सूत्रकृता साधुत्वमुक्तम्। अत एव पशुनामत्वेन नवादयो व्यवह्रियन्ते। न ह्येतेषु पदप्रवृत्तिनिमित्तकत्वम्। इन्द्रशक्रादीनामिन्द्रप्रवृत्तिनिमित्तकत्वापत्त्या पर्यायत्वानापत्तेः। संज्ञोपसर्जनीभूता इत्यत्वाधुनिकसंज्ञाविषय एव गृह्यते। दिक्षु त्वीश्वरः सङ्केतः। कुरुषु त्वाधुनिक इत्यत्र व्याख्यातृवचनमेव प्रमाणम्। एवं देवगणविशेषे विश्वशब्दस्यापीश्वर एव सङ्केत इति विश्वेषां देवानामिति सिद्धम्। उत्तराः कुरव इति प्रत्युदाहरणस्याप्युपपत्तिरुक्तैव।

यच्चोक्तं दिग्वाचकानां व्यवस्थाविषयत्वाभावादिति तदपि न। 'यदि पुनर्दिक्शब्दा अपि व्यवस्थाशब्दाः स्युः' इतिभाष्येणैव समाधानात्

'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये।
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च'॥

कोशोक्तार्थान्तरव्युदासार्थमाह—अन्तरंबहिर्योगेति (पा०सू० १।१।३६)। अयं त्रिसूत्र्या क्रियमाणः सञ्ज्ञाविकल्पो जसाधरे शीभाव एव, न त्वकजाद्युदात्तत्वादाविति बोद्धयम्।

न बहुव्रीहौ (पा०सू०१।१।२९)। चिकीर्षित इति अद्ध्या-

---

अस्य भाष्यस्य स्यात्तर्हि भाषितपुंस्कत्वमिति शेषः। दिग्वाचकानां सर्वनामत्वमेष्टव्यमिति तात्पर्येण चेदं भाष्यम्प्रवृत्तम्। अत्रापि व्यवस्थाशब्दाः स्युरित्यस्य व्यवस्थाविषयप्रवृत्तिनिमित्तका इति पूर्ववद्व्याख्येयम्। दिग्वाचकपूर्वादीनां पृथ्वीमध्यभागावधिकोदयाचलादिपर्यन्तदेशरूपोपाधिविशिष्टदिशि प्रवृत्तिः, तथा च व्यवस्था स्फुटैव। *अयम्भावः*। आकाशवदेकस्यैव दिक्पदार्थस्यौपाधिको भेदः। उपाधिश्च पृथिवीमध्यं तत्प्रान्तस्थाश्चत्वारः पर्वताश्च। तत्राप्युदयाचलसन्निहितत्वादिकमेव प्रवृत्तिनिमित्तम्। अवधिस्तु पृथिवीमध्यमेकमेव। न चैवम्पुंवद्भावे सिद्धे "सर्वनाम्न" इत्यनेन तत्साधनं व्यर्थमिति वाच्यम्। दिग्वाचकानां रूढ्या शब्दस्वरूपं प्रवृत्तिनिमित्तीकृत्य प्रवृत्तिरिति समानायामाकृतौ भाषितपुंस्कत्वन्नास्तीत्यभिप्रायेण तथाभिधानात्।

वस्तुतस्तूपपादितरीत्या व्यवस्थाविषयत्वमस्त्येव। पृथ्वीमध्यस्यावधित्वञ्च रामायणे किष्किन्धाकाण्डे सुग्रीवेण वानरान् प्रति मध्यभागावधिकस्यैव दिग्विभागस्योक्तेः कल्प्यते। पृथ्वीमध्यञ्च मध्यान्हसूर्यसंयोगिदेशः। न च पूर्वादिष्वपरशब्दस्य पाठो व्यर्थः। परशब्दस्य नञ्समासे तदन्तविधिनाऽपरशब्देऽपि सर्वनामकार्यसिद्धेरिति वाच्यम्। एवन्तर्हि परापरशब्दयोः समानार्थकत्वव्यवहाराभावप्रसङ्गात्। किन्तु परशब्दवदपरशब्दस्यापि दिक्कालयोस्तदवच्छिन्ने च रूढिः। अपरशब्दे नञ्समाससत्त्वेऽपि जहत्स्वार्थवृत्त्या परशब्दार्थस्यैवाभिधानम्। तस्मिन् रूढिसद्भावाज्जहत्स्वार्थवृत्तिस्वीकारो न विरुध्यते। अपरेत्यत्र परशब्दस्यानर्थकतया स्वीयसर्वार्थवाचकपरशब्दान्तत्वाभावेनैतदुपादानमावश्यकमेवेत्यवधेयम्।

अन्तरशब्दस्यार्थानाह—*अन्तरमवकाशेत्यादिना*। *अवकाशे*। किञ्चित्कार्यसाधने नियुक्तम्प्रति अन्येन 'मदीयमिदं कार्यान्तरं कर्त्तव्यम्' इत्युक्ते स वदति। 'सत्यन्तरे भवदीयकार्यान्तरं करिष्यामि' इति। *अवधौ*। दिनान्तरे, मासान्तरे। *परिधाने*। अन्तरे शाटकाः। *अन्तर्द्धौ* मेघान्तरे सूर्यः। भेदे—रामायणे रावणम्प्रति सीतावाक्ये।

हारलभ्यं। प्राचीनवृत्तिकृद्रीत्येदं व्याख्यानम्। नेदं सूत्रं बहुव्रीहेरसर्व
निषेधकम्, उपसर्जनप्रतिषेधेन सिद्धेः। प्रक्रिया वाक्ये इति। अलौ
किके इत्यर्थः। न चालौकिके समासप्रवृत्त्यैकार्थीभावस्यापि
कल्पनादुपसर्जनत्वादत्र समास इव तत्रापि निषेधः सिद्ध
वाच्यम्। तत्रैकार्थीभावस्यारोपेऽपि स्वार्थविशिष्टार्थान्तरबोधकत्व
योपसर्जनत्वाभावेन 'अतिभवकान्' इत्यत्रेव प्राप्तस्याकचोऽभावार्थं स
निषेध इत्यत्र तात्पर्यात्। लौकिके तु नास्य प्रवृत्तिस्तत्र समा
चिकीर्षितत्वाभावात्। अतिक्रान्त इत्यादिना पूर्वोक्तस्य लौकि
वाक्यस्य समासस्य च दृष्टान्तद्वयमुच्यते। अकृतव्यूहपरिभाषा
नास्त्येवेति भावः। भाष्यकारस्त्वाह।

"अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयम्"

इति भाष्योक्तेः। वृत्तिकृद्रीत्येदं व्याख्यानमयुक्तमिति भा

ननु स्मृतिद्वयप्रामाण्याद्विकल्पोऽस्तु कथं प्रत्याख्यानमत आ
यथोत्तरमिति। एतच्च 'धिन्विकृण्व्योर च' इति सूत्रे भाष्ये ध्व

---

यदन्तरं वायसवैनतेययोर्यदन्तरम्मद्गुमयोरपि।

इति। *तादर्थ्ये* भवदन्तरे मया धनमर्जितमिति। छिद्रे वि
तत्र अन्तरे शस्त्रम्प्रहर्त्तव्यमिति। *आत्मीये यथा*। अयं ममात्य
मन्तरः। *विनार्थे* अन्तरेण पौरुषमिदन्न साध्यमित्यत्र। *बहिरर्थे*
न्तरे अन्तरा वा चण्डालादिगृहाः। *अवसरे* मम सेवकोऽन्तरमाना
*मध्ये* आवयोरन्तरे विष्णुः। *अन्तरात्मनि*। अन्योन्तरात्मा
नन्दमयः। इदमुपलक्षणम्। तेन सादृश्यस्यापि सङ्ग्रहः। यथा "स्थ
ऽन्तरतम" इत्यत्र।

*तत्त्वनिषेधकमिति*। सर्वनामसंज्ञानिषेधकमित्यर्थः। *सि
ति*। एवञ्चाध्याहारं विना सूत्रवैयर्थ्यापत्त्या चिकीर्षित इत्यध्याहार

नन्वकृतव्यूहपरिभाषयाऽलौकिकप्रक्रियावाक्येऽप्यकज् न भवि
ष्यत आह-*अकृतव्यूहेति*। एतत्तत्त्वमन्यत्रोक्तम्। *स्वरः*। "
शिटाम्" इति विहितः। *प्रत्यङ्गम्*। प्रत्यवयवम्। *ध्वनितमिति
एवं हि भाष्ये उक्तम्। 'धिन्विकृण्व्योर चेति कायमकारः श्रूयते।
चिच्छ्रूते लोपोऽस्य भवति। 'अतो लोप' आर्द्धधातुक इति। यदि
चिच्छ्रूयते किमर्थमयमुच्यते न लोप एवोच्येत। नैवं शक्यम्। लोपे
ति गुणः प्रसज्येत। अत्वे पुनः सति अकारलोपस्य स्थानिवद्भावा

तम्(१) । एवञ्च वृत्तिकृदुक्तार्थकं नेदम् । तस्मादुपसर्जनप्रतिषेधानुवादकम् । यद्वा वार्त्तिककृता तु तस्य कृतत्वात् सूत्रकृतेदमारब्धम् । सञ्ज्ञाया अन्वर्थत्वमपि भाष्यकृदूहितमिति "विभाषा दिक्" (पा०सू० १।१।२८) इति सूत्रे कैयटे स्पष्टम् । सूत्रे सप्तमीनिर्देशः प्रथमार्थ एव । अतएव वृत्तिकृदुक्तः प्रक्रियावाक्ये निषेध इत्यर्थो भाष्यकृता बहुव्रीहिपदस्य तदर्थवाक्यस्थपदलक्षणया साधितः । अन्यथा मूलोक्तरीत्या सिद्धे तादृशलक्षणाप्रयासो व्यर्थः स्यादिति तत्त्वम् ।

तदनुगुणानामेवेति । प्राधान्येनोपस्थितिविषयप्रसिद्धस्वीयसर्वार्थवाचकत्वसमानाधिकरणसर्वनामपदवत्त्वेन बोधकमहासञ्ज्ञया सर्वार्थोपस्थापकसर्वादीनामनुकरणावश्यकत्वेनेतरेषामनुकरणे मानाभावः । नामपदस्वारस्येन प्राधान्येनेत्यस्य लाभः । उपसर्जनं

न भविष्यति । ननु च लोपेऽपि सति न धातुलोप आर्द्धधातुक इति प्रतिषेधो भविष्यति । आर्द्धधातुकनिमित्ते लोपे प्रतिषेधः । न चैष आर्द्धधातुकनिमित्तो लोपः । अपि च प्रत्याख्यायते स योगः । तस्मिन् प्रत्याख्याते गुणः स्यादेव" इत्युक्तम् । अनेन सूत्रमतात्प्रत्याख्यानवादिमतं प्रबलमिति प्रत्याख्यानवादिसम्मतलक्ष्यमेव सूत्रमतेऽपि साध्यमिति ध्वनितमित्यर्थः । एवञ्च प्रत्याख्यानाविरुद्धफलकसूत्राशयकल्पनं वृत्तिकाराणामनुचितमिति सूचितम् । तदाह—*एवञ्चेति* ।

नन्वेवं सूत्रे सप्तमीनिर्देशो विरुध्यतेऽत आह-*सूत्रे इति* । *अत एव सप्तम्याः प्रथमार्थत्वादेव । तदनुगुणत्वं विशदयति-*प्राधान्येति* । ननु सर्वार्थवाचकत्वं सर्वविश्वयोरेव न त्वन्येषामत आह-*प्रसिद्धस्वीयेति* । अत्र सामानाधिकरण्यं स्वरूपसम्बन्धेन तादृशवाचकत्ववत्तदाश्रमत्वरूपम् । *आवश्यकत्वेनेति* । उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयो वाच्यः स चांशतो बाधान्न सम्भवति इत्यत उद्देश्यतावच्छेदकस्य

(१) वस्तुतस्तु वादिप्रतिवादिनो विरोधो यथा लोके न्यायासनासीनो न्यायाधीशः परिहरति । तथाऽत्रापि पूर्वपक्षी सूत्रकारः, उत्तरपक्षी च भाष्यकारः, उभयोर्मतं श्रुत्वा तत्र दर्शितयुक्तीनां युक्तायुक्तत्वं विचार्य निर्णेता तृतीयोऽपेक्षणीयः स तु प्रकृतशास्त्रे अभ्यर्हितो महेश्वर एव । एवंच "यथोत्तरं मुनीनामिति" [illegible]भाषा लण् सूत्रस्थणकारेण ज्ञापिता इत्यवश्यमङ्गीकर्तव्यम् । अन्यथा सूत्रकारः स्वप्रणीतशास्त्रस्य स्वयमेवाप्रामाण्यं बोधयति इति लोकविरुद्धं कल्प्येत । नहि लोके वादी मदीयंमतमसत्यं प्रतिवादिनश्च सत्यम् इति कथयति । एवंच शेखरकारैर्यदुक्तं धिन्विकृण्व्योरितिसूत्रस्थाकारग्रहणेन ज्ञापितेयम् इति तत्तु हेयमेव ।

द्धीतरविशेषणतयैवोपस्थापकमिति तेन तद्व्यावृत्तिः। पूर्वादिसञ्ज्ञाश स्वीयसर्वार्थेति। सञ्ज्ञाव्यावृत्तये 'अभिव्यक्त' इति न्यायमूलकं भाति द्धेतीति भावः।

सर्वादिसूत्रस्य चायमर्थः। "सर्वादीनि तदन्तानि चोक्तसर्वार्थवाचकत्वसमानाधिकरणसर्वनामपदवन्ति" इति। तत्र प्राप्ताप्तविवेकन्यायेन सर्वनामपदवत्त्वांशे एव विधिः, सर्वार्थवाचकत्वा लोकतः सिद्धेः। एतेनान्वर्थसंज्ञोपस्थितसर्वार्थवाचकस्य विशेषण

---

तद्व्यावृत्तत्वसिद्धये तेषामनुकरणमेव नेति भावः। *नामपदस्वारा नेति*। अन्यथा सर्वार्थेति वदेत्। *स्वीयसर्वार्थेति*। तत्तत्पदवा सर्वेत्यर्थः। *अभिव्यक्तेतिन्यायमूलकमिति*। उष्ट्रमुखवत्समासः। भिव्यक्तेतिन्यायस्य यन्मूलं शीघ्रोपस्थितिकत्वं तदेवैतस्यापि मूल अयम्भावः। "संज्ञोपसर्जनप्रतिषेध" इति वार्त्तिकात् तन्मतेऽप्रसिद्धस ज्ञा न भवतीति सिद्धौ 'अथ वा महतीयं संज्ञा क्रियते' इत्यादिना वा कप्रत्याख्यातृभाष्यकारनये वार्तिकैकवाक्यतयाऽप्रसिद्धव्यावृत्तिरवश्यं स्वीकार्या सा च स्वीयस्य प्रसिद्धस्यैवार्थस्य ग्रहणेन भवतीति।

यत्तुप्रातिपदिककार्येऽप्यभिव्यक्तेतिन्यायस्य प्रवृत्त्या प्रसिद्धेति ल गौणमुख्यन्यायादस्य न्यायस्य भेदेनोपादानात्तस्य पदकार्यविषयत्वेऽप्य न्यायस्य प्रातिपदिककार्यविषयत्वमपि। अत एव संज्ञाभूतत्रिशब्दस्य त्रयादेशो नेति। तन्न। अभियुक्तोक्तश्लोकस्यापूर्वत्वाभावसिद्धान्ता अत एव 'अत्वं त्वं सम्पद्यते' 'अमहान्महान्भूतस्त्वद्भवति' इतिभाष्योक त्वादेशदीर्घयोरप्युपपत्तिः। नापि संज्ञाभूतत्रिशब्दस्यामि परे त्रयादेशा पत्तिः। संज्ञाया एकद्रव्योपनिवेशिनीत्वात्तत आमः सम्भवस्यैवाभाव न च तादृशत्रिशब्दानामेकशेषेण तत्सम्भव इति वाच्यम्। "त्रेस्त्रय" सूत्रघटकत्रिशब्दमात्रोच्चारणेन यस्यार्थस्य शीघ्रोपस्थितिस्तदर्थ त्वसंख्याविशिष्टसंख्येयात्मकेन विशिष्टस्य त्रिशब्दस्य ग्रहणात्, अन्यथा त्रिशब्दावयवत्रिशब्दस्याऽप्यादेशप्रसङ्गः स्यात्, न हि तादृशः संज्ञाभूत शब्दोऽस्ति। न चैवमपि संज्ञाभूतयुष्मदस्मदोस्त्वाहाद्यादेशापत्तिरिति व्यम्। उक्तरीत्या तेषामपि परिहारसम्भवात्। अन्यथा त्वाद्यादे स्वरूपमात्राश्रयत्वेन "युष्मद्युपपद" इत्यादिसौत्रप्रयोगानुपपत्ति ति दिक्॥

*सर्वादीनि तदन्तानि चेति*। "येन विधिः" इतिसूत्रभाष्यपर्या योजनं "सर्वनामाव्ययसंज्ञायाम्" इति वार्त्तिकरीत्येदम्। *एतेन*

सर्वादीनीत्यस्य तद्विशेषणत्वात्तदन्तविधिरित्यपास्तम् । एकपदोपस्थाप्ययोरर्थयोः परस्परमुद्देश्यविधेयभावेनान्वयस्याव्युत्पन्नत्वात् । रूढ्यर्थयोगार्थयोरन्यतरवियोगेनान्यत्रान्वयायोगाच्च । तदन्ते सर्वार्थवाचकत्वं त्ववयवद्वारा बोद्धव्यम् । एतेन तदाक्षिप्तस्य विशेष्यत्वमपास्तम् । तद्विनाऽनुपपत्त्यभावेनाऽऽक्षेपायोगादाक्षिप्तस्य शाब्देऽन्वये मानाभावाच्च ।

केचित्तु आवृत्त्या एकस्योद्देश्यताऽपरस्य विधेयतेति वदन्ति । परन्त्वाद्यः पक्ष इतो लघुरिति बोद्धव्यम् । सन्निवेशादिति । तद-

हासंज्ञयोपस्थापितयोर्योगार्थरूढ्यर्थयोर्विशिष्टवैशिष्ट्यावगाहिवाक्यार्थबोधपरया सूत्रार्थवर्णनेन । एकपदोपस्थापितयोरपि विशेषणविशेष्यभावेन शाब्दबोधस्याख्यातोपस्थितिसंख्याकारकयोरिवोत्पत्तौ बाधकाभावात् । *अव्युत्पन्नत्वादिति* । उद्देश्यतावच्छेदकरूपेणोद्देश्यस्य ज्ञानरूपसिद्धिं विना विधेयत्वेनाभिमतस्य तत्त्वेनान्वयासम्भवात् । सिद्धं धर्मिणमुद्दिश्य साध्यो विधेय इति न्यायस्य क्लृप्तत्वादिति भावः । नन्वेकपदोपस्थापितयोः कृतीष्टसाधनत्वयोः परमते धातोः फलव्यापारयोः पृथक् शक्तिवादिमते उद्देश्यविधेयभावेनान्वयापत्तिवारणाय फलावच्छिन्नव्यापारे शक्तेः स्वीकारात्स्वमतेऽपि क्लृप्तत्वात्पृथगुपस्थितयोस्तथान्वय इष्ट एवेत्यत आह—*रूढ्यर्थयोगार्थयोरिति* । यः शब्दः केवलयौगिकस्तत्र पृथगुपस्थितयोरुद्देश्यत्वविधेयत्वाख्यप्रकारताविशेष्यताविलक्षणविषयताशालिबोधः स्वीक्रियते, न तु योगरूढस्थलेऽन्यत्र तथाऽदर्शनादिति भावः । *अन्यतरवियोगेनेति* । अत्र न सम्बन्धाभावो वियोगः । अन्वर्थसंज्ञोपस्थितसर्वार्थवाचकस्य विशेष्यतायास्तेनापि स्वीकाराత्तयोरसम्बन्धस्य वक्तुमशक्यत्वात् । किन्तु योगरूढस्थले योगार्थरूढ्यर्थयोर्यत्रोपस्थितिस्तत्रान्यतरस्य यत्रोद्देश्यत्वं तत्रापरस्योद्देश्यतावच्छेदकत्वं यत्र वा तदन्यतरस्य विधेयतावच्छेदकत्वमिति नियमः क्लृप्तः तस्य भवत्कल्पिते वाक्यार्थबोधे त्याग इति भावः । *एतेन* । उक्तनियमत्यागप्रसङ्गेन । आक्षेपकमपि नास्तीत्यत आह—*तद्विनेति* । *मानाभावाच्चेति* । पदवृत्त्युपस्थापितार्थस्यैव शाब्देऽन्वयप्रतियोगित्वमिति नियमात् । अत एव 'प्रविश पिण्डी' मित्यादौ वाक्यार्थे वाक्यैकदेशस्य शक्तिर्भाष्यसिद्धान्तानुसारिभिः स्वीक्रियते ।

*तदनुमानादिति* । सर्वार्थवाचकानुमानादित्यर्थः । सर्वादिगणपठितानि सर्वार्थवाचकानुकरणानि । महासंज्ञोद्देश्य बोधकत्वेन पाणिन्य-

नुमानादित्यर्थः । अत्रोपसर्जनत्वमितरविशेषणत्वेनार्थोपस्थापकत्वम् । तदोः सः (पा०सू०७।२।१०६) इति सूत्रे "अदस एव दस्य, नान्यस्य" इति नियमेन "द्वीयतेरप्रत्यये 'द्व' इति प्राप्नोति, 'स्व' इति चेष्यते; यथालक्षणमप्रयुक्ते" इति भाष्यन्तु प्रकृतसूत्रनञ्सूत्रस्थानेकभाष्यविरोधादेकदेश्युक्तिरिति न तद्विरोधः ।

**तृतीया समासे** (पा०सू०१।१।३०) । द्वन्द्वे च (पा०सू० १।१।३१) इति सूत्रस्थाकरोक्तरीत्या "न बहुव्रीहौ" (पा०सू०१।१।२९) इति सूत्रस्थाकररीत्या च प्रथमार्थे सप्तमी, अयमपि समासस्य

---

भिप्रेतत्वात् इति व्यतिरेक्यनुमानस्य सम्भवादिति भावः । एतेन तद्गुणानां सन्निवेशे ताल्वादिव्यापारस्य हेतुत्वं तु महासंज्ञाकरणस्येतिमसङ्गतमित्यपास्तम् । *अत्रोपेति* । संज्ञोपसर्जनप्रतिषेध इतिवार्तिके

ननु लौकिकोपसर्जनस्य वार्त्तिके ग्रहणे "तदोः सः सौ" इति सूत्रस्थभाष्यविरोधः । तत्र हि—"किमर्थमनन्त्ययोरित्युच्यते । अन्त्ययोर्मूत् । नैतदस्ति प्रयोजनम् । अत्वमन्त्ययोर्बाधकं भविष्यति । अनवकाशा हि विधयो बाधका भवन्ति । सावकाशश्चात्वम् । कोऽवकाशो द्विशब्दः उदाहरणमात्रमेतत् । अन्यत्र सोः सर्व एव त्यदादयोऽवकाशाः । समपि सावकाशम् । कोऽवकाशः । अनन्त्यम् । एवमुभयोः सावकाशयोः परत्वात्सत्वम्प्राप्नोति । किञ्च स्यात् । हे स इति । एङ्ह्रस्वात्सम्बुद्धेरिति सम्बुद्धिलोपो न स्यात् । न चानन्त्ययोरित्युक्ते ऽपि त्यदाद्यत्वे सन्निपातपरिभाषया लोपो न स्यात् । परिभाषाया अनित्यत्वात् । इह च या इत्यत्र सत्वे टाप्न स्यात् । 'न यासयोः' इति लिङ्गे आश्रीयमाणे अनेकोऽपि कल्प्यः स्यात् । तस्मादनन्त्ययोरिति वक्तव्यं न वक्तव्यम् एवं वक्ष्यामि तदो सः सौ । ततः अदसः । अदसश्च दकारस्य सो भवति । इदमिदानीं किमर्थं नियमार्थम् । अदस एव दकारस्य नान्यस्य दकारस्येति । नियमः क्रियते द्वीयतेरप्रत्ययः । द्व इति प्राप्नोति । स्व इति चेष्यते यथालक्षणमप्रयुक्ते" इति । अत्र त्यदाद्यत्वकरणेन शास्त्रीयस्योपसर्जनस्य ग्रहणम् । लौकिकस्य तस्य वार्तिके ग्रहणे तु भाष्यासङ्गतिः स्पष्टैवेति चेत् । नञ्सूत्रभाष्ये नञ्समासस्य पूर्वपदार्थप्राधान्येऽस इत्यादावत्वसत्वयोरनापत्तिरुक्ता । शास्त्रीयस्य तस्य ग्रहणे तु पूर्वपदार्थप्राधान्यपक्षे उत्तरपदार्थप्राधान्यपक्षेऽप्यत्त्वसत्त्वयोरनापत्त्या तद्भाष्यासङ्गतिः स्फुटैव । तस्मात् न्यायसिद्धानेकभाष्यविरोधात्तदोः स साविति भाष्यस्यैकदेशिस्वात्तदेतदाह-*तदोः स इतीति* ।

निषेधो नावयवानाम्

समुदायस्येति ।

"अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयम्" ।

इति भाष्योक्त्या एतत् प्रकरणविषयस्मृत्या एतत्प्रकरणस्थसप्तमीनिर्देशानां प्रथमार्थकत्वमिति तस्यावयवसञ्ज्ञानिषेधकत्वाभाव उचितः । किं चावयवमात्रस्य निषेधे वर्णाश्रमेतराणामित्यत्र सर्वार्थवाचकसर्वादित्वानपायात् । अवयवस्य, व्यपदेशिवद्भावेन समुदायस्य, च द्वन्द्वे विद्यमानत्वेन निषेधे तु अवयवस्य निषेधे फलाभावः । न च त्वच्छब्दस्य तान्तत्वे काकचोर्विशेषेण फलम् । द्वन्द्वावयवमात्रे सुन्दरादिविशेषणान्वयाभाववत् कुत्सादिविवक्षाया अभावात् । समुदाये तद्विवक्षायां समुदायोत्तरप्रत्ययेनावयवगतकुत्सादेरपि बोधेनोक्तार्थत्वादवयवेभ्यः पृथक् तदनुत्पत्तेः । अन्यथा तव प्रत्येकं कमसयोत्पत्तिः । अत एवोक्तं भाष्ये "अकच् हि न भवति" विभाषा जसि (पा०सू०१।१।३२) इति सूत्रे । समुदायकुत्साविवक्षायामिति तदर्थः । कृताकचा समासस्तु भवत्येव । तत्र सर्वार्थत्वादनेन विकल्पो भवत्येव । "त्वदधरमधुरमधूनि पिबन्तम्" इति जयदेवप्रयोगबलेनान्यार्थ 'त्वत्' छब्दस्य सत्त्वेपि तस्य सर्वनामत्वे मानाभावात् बहुसंमतत्वाच्च । एतेन न बहुव्रीहाविति वदस्यापि द्वन्द्वे चिकीर्षिते इत्यर्थ इत्यपास्तम् । फलाभावात् । जसाधारे शीभावे एव विकल्पविधायकस्य "विभाषा जसि" इत्यस्यासङ्गतेश्चेति भावः ।

---

*फलाभाव इति* । विहितविशेषणाश्रयणेनैव दोषाभावस्योपपादनात् । *विशेषणान्वयाभाववदिति* । एकार्थीभाववशात् । *प्रत्ययेन* । केन । *अत एव* । अवयवनिषेधे फलाभावादेव । पूर्वमेव कुत्साविवक्षा यत्र तत्र तत्सूचकः प्रत्ययः स्यादेवेत्याह—*कृताकचा समासो भवत्येवेति* । *तत्र* । साकच्कघटितसमासे । यदुक्तं त्वच्छब्दस्य तान्तसद्भावे तत्र काकचोर्विशेष इति, तद्दूषयति *त्वदधरेति* । समुदायस्यैव निषेध्यत्वार्थस्यावश्यकत्वमाह—*जसाधारेत्यादि* । तेन हि निषेधस्य विकल्पः शीभावे कर्त्तव्ये क्रियते । यद्यवयवस्य जसाधारे शीभावे कर्त्तव्ये तेन निषेधविकल्पः स्यात्तदा लुग्विषये शीभावाप्रसक्त्या तद्वैयर्थ्यं स्पष्टमेव । एवञ्च

उद्भूतावयवभेदसमूहस्य द्वन्द्वे विशेष्यतयोपसर्जने सञ्ज्ञाया अप्रा-
प्त्या "द्वन्द्वे च" इत्यपि "न बहुव्रीहौ" इतिवदिति तत्त्वम्। अत
एव 'गोस्त्रियोः' इतिसूत्रे 'कुक्कुटमयूर्यौ' इत्यादौ ह्रस्ववारणाय "द्वन्द्वे"
इति वचनमारब्धमिति दिक्।

नाकजिति। समुदायनिष्ठकुत्साबोधको ऽकज् नेत्यर्थः।

---

तस्मिन् सूत्रे द्वन्द्वपदस्य समुदायपरत्वे ऽर्थाधिकारानुरोधात्पूर्वसूत्रे
द्वन्द्वपदं समुदायपरमिति भावः। पर्यवसितार्थमाह-*उद्भूतावयवेति।
*न बहुव्रीहावितिवदिति*। अनुवादकमिति शेषः। इतरेतरयोगद्वन्द्वे
समुदायस्य विशेष्यतायां साधकमाह-*अत एवेति*। समुदाय
विशेष्यत्वादेवेत्यर्थः। *सूत्र इति*। तत्सूत्रभाष्य इत्यर्थः।

केचित्तु परमसर्वादावित्र अवयवद्वारकसर्वार्थवाचकत्वस्य द्वन्द्वेऽपि
त्वादुपसर्जनत्वाभावः, "गोस्त्रियो" इतिसूत्रस्थं वार्त्तिकन्तु तत्रैव द्वन्द्वे
ऽप्युक्तमित्यादिना भाष्यकृता प्रत्याख्यानादेकदेश्युक्तिरत एव "विभा
दिक्समासे" इति सूत्रे "बहुव्रीहाविति किमर्थं द्वन्द्वे मा भूत्। दक्षि
त्तरपूर्वाणामिति। नैतदस्ति। द्वन्द्वेनेति प्रतिषेधो भविष्यति" इति भा
उक्तम्। एवञ्च "न बहुव्रीहौ" इतिवत् "द्वन्द्वे च" इत्यत्रापि चिकीर्षि
इत्यध्याहारेण प्राग्वृत्तेर्निषेधेनाकज् न प्रवर्त्तत इति 'एकद्विका' इत्य
सिद्धिः। अथ वा चिकीर्षित इत्यध्याहाराभावेऽपि इतरेतरयोगेऽव
स्य प्राधान्यात्प्राप्तसंज्ञाया विद्यमानानीत्यध्याहारेण निषेधो भविष्य
त्यकृतव्यूहपरिभाषया पूर्वमप्यकजप्रवृत्तिरित्याहुः।

अत्रेदं चिन्त्यते। अवयवद्वारकसर्वार्थवाचकत्वादुपसर्जनत्वा
इत्यसङ्गतम्। उपसर्जनत्वाभावे विशेषणत्वाभावस्यैकविभक्तिकत्वा
वस्य वा प्रयोजकता न त्वेतस्य। तादृशाभावद्वयञ्च प्रकृते नास्ति, वि
शेषणत्वात्, नञ्सूत्रस्थप्रागुपपादितरीत्या समूहस्य प्राधान्यात्। वि
द्वन्द्वे नेतिवार्त्तिकस्प्रत्याख्यातामिति यत्तदपि भावानवबोधमूलक
द्वन्द्वेऽप्युक्तमितिग्रन्थेनान्यथासिद्धेरेवोद्भावनात्। एवं हि भाष्ये उक्त
'द्वन्द्वेऽप्युक्तम्। किमुक्तम्। परवल्लिङ्गमिति। शब्दशब्दार्थाविति। त
पदेशिकस्य ह्रस्वत्वमातिदेशिकस्य श्रवणं भविष्यति"। एवमेव
क्कुटमयूर्यावित्यत्र परवल्लिङ्गमिति सूत्रभाष्येऽपि ह्रस्वत्वमा
समाहितम्।

तत्र कैयटः। 'शब्दशब्दार्थाविति। लिङ्गशब्देन लिङ्गाभिधायी प्र
योऽर्थश्च तन्त्रेणैकशेषेण वोच्यते इत्यर्थः। आतिदेशिकस्य श्रवणमि
तस्यानुपसर्जत्वात्तदन्तस्य चाप्रातिपदिकत्वाद्ध्रस्वाभावादिति' एवं

प्रथमचरम (पा०सू०१।१।३३) । अत्र सूत्रे नेति न संबध्यते प्रथमादिष्वसंभवात् । 'जसि' इत्यनुवृत्तेरर्थाधिकारादयमपि शीभावे एव विकल्पस्तदाह—जसः कार्यं प्रतीति । तयः । "संख्याया अवयवेतयप्" इति । तदन्ता इत्यत्र हेतुरुक्तः । द्वितीयतृतीयौ "द्वेस्तीयः" "त्रेः संप्रसारणं च" इति साधू । अर्थवदिति । प्रतिपदोक्तस्येत्यपि बोद्ध्यम् । तेनान्तन्ते आद्युदात्तस्य 'द्वितीयाय भागाय' इत्येव, अनभावे तु स्मै भवत्येव ।

जराया (पा०सू०७।२।१०१) 'अष्टनः' (पा०सू०७।२।८४) इततो 'विभक्तौ' इति "अचिर" (पा०सू०७।२।१००) इत्यतो ऽचीति अनुवर्त्तते, तदादिविधिश्चेत्याह—अजादाविति । (१)जरसौ इत्यादौ तु व्यपदेशिवद्भावेन । विभक्तौ किम् ? जराया इदं जारम् । प्रतिपत्तिलाघवाय जराया (२) असुङ् न कृतः । पदाङ्गाधिकारे इ

कैयटेनापीतरेतरयोगद्वन्द्वे समूहस्य प्राधान्यं सूचितमेव । भाष्यकृतापि "द्वन्द्वे च" इतिवार्त्तिकस्य "गोस्त्रियोः" इतिसूत्रस्थस्य युक्त्याऽनावश्यकत्वं सूचितं, न तु तत्र समाहारस्य विशेषणत्वप्रदर्शनेन । अकृतव्यूहपरिभाषयेत्यप्यसङ्गतम् । तस्याः परिभाषाया अभावस्यान्यत्र प्रपञ्चितत्वादिति दिक् ।

*असम्भवादिति* । निषेधस्य प्राप्तिपूर्वकत्वात्प्रथमादिषु प्राप्तेरेवाभावात् । यद्यपि नेमशब्दे सम्भवोऽस्ति तथापि 'बहूनामनुरोधो न्याय्यः इतिन्यायेन नेति न सम्बध्यत इत्युक्तम् । *हेतुरुक्त इति* । केवलस्य संज्ञायाः प्रयोजनाभाव इत्येवंरूपः । 'तीयस्य ङित्सूपसङ्ख्यानम्'इतिवार्तिकस्य द्वितीयतृतीयशब्दयोः प्रवृत्तिसूचनायाह—*द्वितीयतृतीयाविति* । न्यूनतां परिहरति—*प्रतिपदोक्तेति* ।

नन्वर्द्धमात्रालाघवानुरोधेनासुङा देश एव कुतो न कृत इत्यत आह—*प्रतिपत्तीति* । "असुङ्" इति न्यासे आदेशत्वेनाभिप्रेतस्य स्वरूपस्य ज्ञाने हलन्त्यमुपदेशेऽजितिसूत्रद्वयस्यापेक्षासत्त्वाद्गौरवमिति भावः । किञ्च जराशब्दादाचक्षाणणिजन्तात्क्विप्यजादौ विभक्तौ स्थानिवद्भावेन जराश-

(१) नन्वेवं 'जरसौ' इत्यादौ आदेशो न स्यात् विभक्ते रज्झलत्वेनोभयरूपत्वादित्यत आह—जरसाविति ।

(२) केचित्तु जरामततीति जरात् ततो णिचि क्विपि टिलोपे रफस्याऽसुङि जर्सौ, यथान्यासे तु जरसौ इति फलभेदस्य सत्वेन उक्तन्यासे लक्ष्यदोषो ऽपि । अत्र टिलोपस्याज्झलादेशत्वेन णिलोपस्य अल्लुसन्यायेन स्थानिवद्भावाप्रवृत्त्या दोषो दुरुद्धर एव इत्याहुः

ति। पदमङ्गं विशेष्यं विशेषणेन तदन्तविधिरिति भावः। पदश-
ब्देनोत्तरपदाधिकारः केवलपदाधिकारश्च गृह्यते इति 'येनविधिः' इत्य-
त्राकरे स्पष्टम्। निर्दिश्यमानस्येति। 'षष्ठी स्थानेयोगा' इति
सूत्रमावर्त्तते। आवृत्तस्य चायमर्थः—षष्ठ्यन्तमुच्चार्यमाणमेव स्थाने
युज्यते न प्रतीयमानमिति, तेनेदं सिद्धमिति भावः।

नन्वयं जरशब्दो न जराशब्दः, अत आह—एकदेशेति
(१)स्थानिवत्सूत्रेणेति भावः। जरा इत्यक्तपरिमाणस्य ग्रहात्। अत्र
स्थानिबुद्ध्यैव कार्यप्रवृत्त्या निर्दिश्यमानस्येति परिभाषाबाधाभा-
वो बोद्धव्यः। 'येनविधिस्तदन्तस्य' इत्यस्य तु सञ्ज्ञासूत्रत्वात् सूत्रस्थज-
राशब्दो जराशब्दान्तपर इति तदन्ते आदेशप्रवृत्तौ परिभाषाविरो-
स्पष्ट एवेति दिक्। निर्जरसेति। अत्र 'स्वादिषु' इति पदत्वेन
न। भत्वेन पदत्वबाधात्। सूत्रेषूत्तरस्थस्य पूर्वत्रापकर्षवत् अग्रे ल

---

ब्दत्वादसुङादेशे जसौ जस इतिरूपापत्तिरिपि बोध्या। न च णिलोप
स्थानिवत्त्वम्। "क्वौ लुप्तम्" इति निषेधात्। परन्त्वस्य वचनस्यास
त्रिकत्वानुरोधेन प्रतिपत्तिलाघवायेत्येवाभिहितमित्यवधेयम्। *उत्तरप-
दाधिकारः केवलपदाधिकारश्चेति*। उत्तरपदाधिकारे प्रयोज
"इष्टकेषीकामालानाम्" इति। इष्टकचितम्। पक्वेष्टकचितमि
दि। केवलपदाधिकारे। "वसुस्रंसुध्वंस्वनडुहां दः"। परमानडुद्भ्या
मित्यादि। अङ्गाधिकारे महान् परममहानित्यादि। "षष्ठी स्था
योगा" इति सूत्रे षष्ठीपदं षष्ठ्यन्तपरम् उच्चार्यमाणमित्यध्याहार ए
यत्फलितन्तदाह—*षष्ठ्यन्तमित्यादि*। ननु स्थानिवद्भावेन त
बुद्धावपि कथन्निर्दिश्यमानत्वमत आह—*अनेनेति*। तस्मिन्सूत्रे
देशग्रहणेनानुमानिकादेशस्यापि तत्र ग्रहणात्तत्र निर्दिश्यमानपरिभा
प्रवृत्तौ तद्द्वयर्थं स्पष्टमेवेति। एकदेशविकृतन्यायस्य लौकिकत्वाद
चापरिमाणार्थवाचकस्य न्यूनाधिकयोरप्रवृत्तेरतिदेशशास्त्रेण तत्वमवा
तिश्यते। "दृष्टान्तस्यापि पुरूषारम्भो निवर्त्तक" इति भाष्योक्तेः।

न च जराशब्देन तदन्तोपस्थितावपि न कथं तत्त्वबुद्धिरिति
च्यम्। संज्ञाशब्दानामेष स्वभावो यत्तादृशाकृत्यवच्छिन्नस्य
कृता तादृशाकृत्यवच्छिन्नोपस्थापकत्वमेवेत्याशयात्। न च संज्ञा
ब्दविषयेऽपि चेन्निर्दिश्यमानपरिभाषाप्रवृत्तिः तदा "अस्य च्वौ"

---

(१) एकदेशविकृतन्यायस्य लौकिकविषयत्वादाह-स्थानीति। अत्र तदप्रवृत्तौ बीजं दर्शयति-अत

वैचित्र्यायेति बोद्धव्यम् । पक्षे इति । जरसादेशाभावपक्षे इति भावः । इदमर्वाचामनुरोधेन ।

परे तु "विभक्त्यादेशेभ्यः परत्वत्वात् जरस्" इत्यसङ्गतं विभक्त्यादेशानामेव पूर्वविप्रतिषेधेनेष्टत्वात् । अत एव "जरायाः" (पा०सू०७।२।१०१) इति सूत्रे 'अजरांसि' इत्यत्र 'नुम्जरसोः प्राप्तयोः' 'विप्रतिषेधेन जरस्' इति भाष्योक्तं सङ्गच्छते । अन्यथा त्वद्रीत्या शिभावात्पूर्वमेव जरसः प्रवृत्तौ तदा सर्वनामस्थानत्वाभावान्नुमा विप्रतिषेधविचारासङ्गतिः स्पष्टैव । मम तु पूर्वविप्रतिषेधेन जरसः पूर्वं शिभावे प्रवृत्ते तत्सङ्गतिः स्पष्टैव । अत एव "टाङसि" इति सूत्रे कैयटेनोक्तं—"भाष्यकारः सन्निपातपरिभाषया जरसादेशमनभ्युपयन् 'अतिजरेण' 'अतिजरात्' इति भाष्यं, न त्वतिजरसिनाऽतिजरसादिति गौरवमुद्भावितवान्" इति । भवद्रीत्या पूर्वं जरसादेशे इनाद्यप्राप्त्या तदभावपक्षे च तस्याप्राप्त्या "सन्निपातपरिभाषया जरसादेशमनभ्युपयन्" इत्यस्यासङ्गतिः स्पष्टैव ।

वृत्तिकारोऽप्याह—"अतिजरसिन अतिजरसादिति केचिदि-

---

सूत्रस्य 'मालीभवति' इत्यादौ प्रवृत्तिर्न स्यात् । अणुदित्सूत्रेणाकारस्य संज्ञात्वबोधनाद्दीर्घस्यानिर्दिश्यमानत्वादिति वाच्यम् । "न भूसुधियोः" इति ज्ञापकेन ग्रहणकशास्त्रगृहीतानामपि निर्दिश्यमानकार्यबोधनात् । *वैचित्र्यायेति* । इदमेव चात्र वैचित्र्यं यस्य शास्त्रस्य यत्रोपयोगस्तस्य तत्रैव लेख इति नियमाभाव इति । सिद्धान्तमाह—*इदमिति* । परत्वाज्जरसितिकथनम् ।

*अत एव* । पूर्वविप्रतिषेधस्येष्टत्वादेव । कैयटस्याऽप्यत्र सम्मतिमाह—*अत एवेति* । उक्त एवास्याप्यर्थः । तत्र हि भाष्यकृता 'नादेशोऽदादेशश्चास्तु' इति लाघवमभिप्रेत्योक्तम् । कैयटश्च तद्भाष्यं व्याख्यायाह—'अन्ये तु अतिजरसिनातिजरसादिति सिद्धये इन आद्य विहितौ' इत्याहुः । सन्निपातपरिभाषाया अनित्यत्वाज्जरसादेशं वदन्तः । भाष्यकारस्तु सन्निपातपरिभाषामाश्रित्य जरसादेशमनभ्युपयन् । अतिजरेणातिजरादिति भाष्यमिति मत्वा गौरवमुद्भावितवान् इति । *गौरवमिति* । इकारदीर्घोच्चारणरूपमित्यादिः । जरसःप्रवृत्तिकवृत्तिकारसंमतिमप्याह—*वृत्तिकार इति* । अत्र केचिदित्युक्त्या स्वस्य तत्रापरि-

च्छन्ति यथा तु भाष्यं तथा नैतद्विष्यते इति लक्ष्यते" इति। नपुं-
सकद्वितीयैकवचनेऽपि लुग्बाधेन 'अतोम्'(पा०सू०७।१।२४) इत्य-
पि सन्निपातपरिभाषया जरसभावः। न च तत्र न अकारान्तसन्निपा-
तकृत एवाजादिः, किं तु तदभावेऽपि। एषा तु सन्निपातलक्षणवि-
धिं विना न यस्य प्रवृत्तियोग्यता तत्रैवेति अत्र भवत्येव जरसिति
वाच्यम्, मानाभावात्। टाङसि (पा०सू०७।१।१२) इति सूत्रस्थ-
न 'अतिजरेण' इत्येतद्विषयकैयटेन विरोधाच्च। ध्वनितञ्चेदं 'जराया'
इति सूत्रे भाष्ये। तत्र हि पूर्वपक्षिणा "अतिजरसं पश्य इत्यत्र लुक्
कस्मान्न" इति पृष्टे परेण 'प्रथमैकवचनेऽप्यतिजरसं तिष्ठतीत्यत्रा-
कुतो लुक् न शंक्यते' इति पृष्ठे पूर्वपक्षिणा 'प्रथमैकवचनेऽम्भावं
त्तरमेव जरस्, तत्र जरसि कृते सन्निपातपरिभाषया न लुक्' इ-
विशेष उक्तः। यद्वा 'अम्भावे कृते सन्निपातपरिभाषया न जरस्' इ-
पाठभेदेन विशेष उक्तः। ततः परेण 'यद्येवमतिजरसमतिजरसैरित्य-
न प्राप्नोति जरस्' इति द्वितीयैकवचनादौ शङ्किते सिद्धान्तिना-'इ-
मेवैतदतिजरमतिजरैरिति भवितव्यमिति'। अत्र विशेषोपादानेऽन्य-
पाठ एव युक्तः। अन्यथा लुकः प्रथमैकवचने तेनाभावे उपपादि-
द्वितीयैकवचनेऽपि तेन न्यायेन लुको ऽप्राप्तौ विशेषोक्तिरसङ्गतेति
बोद्ध्यम्। एवं स्त्रियां जरसादेशे कृते 'याडापः' (पा०सू०७।३।११३)
इत्यादीनामाकारप्रश्लेषेण वारणं विफलमेव तेषां परत्वात्। अ-
खट्वशब्दे तेषां वारणाय तु प्रश्लेष आवश्यक इत्याहुः।

---

तोषो ध्वन्यते। तमेव स्पष्टयति—*यथा तु भाष्यमिति*। *लुग्बाधे-
ति*। अस्य विशेषविहितत्वेनेत्यादिः। *एषा तु*। सन्निपातपरि-
तु। *न प्रवृत्तियोग्यतेति*। यथा प्रथमैकवचनेऽतिजरं वर्त्तत इत्य-
*मानाभावादिति*। तादृशविशेषविषयतायां मानाभावादित्यर्थः। ह-
कार्थे कैयटस्यापि सम्मतिमाह—*टाङसीतीति*। अत्रैव भाष्यस-
तिमप्याह—*ध्वनितञ्चेदमिति*। अत्र तत्र हीत्यस्योक्त इत्यत्रान्व-
*इति भवितव्यमिति*। एतेन विभक्त्यादेशोत्तरं सन्निपातपरिभाष-
या जरसादेशाभाव इति ध्वनितम्। *तेषां परत्वादिति*। याडाप इ-
दीनामित्यर्थः। विभक्त्यादेशविषये पूर्वविप्रतिषेधाश्रयणेऽप्याकारप्र-
स्य न वैयर्थ्यमित्याशयेनाह—*अतीति*।

परे तु जरसादेशात् विभक्तिसंबन्धिकार्यमात्रं पूर्वविप्रतिषेधेन। तेन जराणाम् इत्यादावामि पूर्वं नुटि जरसोऽभाव एव । एवं च "ह्रस्वनद्यापः" (पा०सू०७।१।५४) इत्यत्राऽऽकार प्रश्लेषे न फलं, नापि मानम् । अत एव 'ङ्याब्ग्रहणे ऽदीर्घः' इति वत् जरसादेशस्य स्थानिवत्त्वप्रतिषेधो वार्त्तिककृता नाऽऽरब्ध इत्याहुः ।

परिभाषाया अनित्यत्वमिति । इनातोरिकारदीर्घोच्चारणम् एसि कर्त्तव्ये ऐस्करणञ्च तदानित्यत्वे मूलमिति तदभिमानः । षष्ठ्येकवचने इति । एकसूत्रोपात्तत्वात्स्यादेशविषये ऽपि पूर्वविप्रतिषेध इति तद्भावः । एतच्च भाष्येति । इनातोरिकारदीर्घोच्चारणप्रत्याख्यानपरभाष्येत्यर्थः । 'इष्टमेवैतत्सङ्गृहीतमतिजरमतिजरैरिति भवितव्यम्' इति 'जरायाः' (पा०सू०७।२।१०१) इति सूत्रस्थभाष्येऽपीति चार्थ इत्यन्यत्र विस्तरः ।

पद्दन्नो ( पा०सू०६।१।६३) आदेशैः स्वानुरूपाः (१)स्थानि-

---

परमसिद्धान्तमाह—*परेत्विति* । *विभक्तिसम्बन्धिकार्यमात्रमिति* । अत्र सम्बन्धि इत्युपादानादादेश एव पूर्वविप्रतिषेध इत्येतन्नेति बोधितम् । *अत एव* । विभक्तिसम्बन्धिकार्यमात्रस्य पूर्वविप्रतिषेधेन प्रवृत्तेः पूर्वमिष्टत्वादेव । *अदीर्घ इतिवदिति* । अत्र वैपरीत्ये दृष्टान्तः । अयं यथाऽऽरब्धस्तथा जरसादेशस्य स्थानिवत्त्वप्रतिषेधो नारब्ध इत्यर्थः । *तदभिमान इति* । इकारोच्चारणं जरसादेशे कृतेऽपीकारश्रवणार्थम् । तच्च सन्निपातपरिभाषाया अनित्यतास्वीकारं विना वक्तुमशक्यमिति तद्भावः । भाष्यान्तरमाह—*इष्टमेवैतदिति* । एतेनैस्करणं परिभाषाया अनित्यत्वे ज्ञापकमिति यत्केनचिदुक्तं तन्निरस्तम् । नद्यैरित्युक्तार्थं तत्सत्वाच्च ।

प्राचीनैः "पद्दन्न" इतिसूत्रस्यादेशविधायकत्वेन व्याख्यानं कृतं तदनुरोधेन व्याचष्टे—*आदेशैरिति* । *स्वानुरूपाः* । स्वस-

---

(१) स्वानुरूपाः स्थानिन इति । अत्र केचित् । स्वानुरूपत्वञ्च पदादिविशिष्टत्वम् । वैशिष्ट्यञ्च । स्वबोध्यार्थबोधकत्वम्—स्वघटकव्यञ्जनघटितत्वम् । एतदुभयसम्बन्धेन । आद्यसम्बन्धदानात् । प्रकारेण युक्तस्य आसनशब्दस्य नाऽऽदेशः । द्वितीयसम्बन्धदानात् । चरणशब्दस्य स्थाने पदादेशो न । एवं रात्रिशब्दस्य निशादेशो न । इत्याहुः । नन्वेवम् । निशीथिनी शब्दस्य स्थाने निशाऽऽदेशो कथं न ? स्वबोध्यरात्रिरूपार्थबोधकत्वस्य स्वघटकनिश्रूपव्यञ्जनघटितत्वस्य च सत्वादिति वाच्यम् । अत्र वैशिष्ट्ये—स्वघटकव्यञ्जनेतरत्वरूपः तृतीयः सम्बन्धो देयः । तथाच—स्वघटकव्यञ्जनानि नश् एतद्रूपाणि तदितराणि 'थ् न्' इत्यादीनि व्यञ्जनानि तैरघटितस्य स्थाने भवतीति निवेशादत्र न दोषः ।

न आक्षिप्यन्ते इत्याह— पाद्दन्तेति । अनुदात्तस्य चर्दुपधस्य (पा०सू०६।१।५९) इत्यतोऽन्यतरस्यामित्यनुवर्त्तते । अत एव तु-ल्यास्यसूत्रादिभाष्ये 'आस्ये तुल्यः' 'पादेनोपहतं' 'मासेन पूर्वा-य' इत्यादिप्रयोगा 'हृदयस्य प्रियः' (पा०सू०४।४।९५) इति सौत्र-प्रयोगाश्चोपपन्ना भवन्ति 'ये च तद्धिते' (पा०सू०६।१।६१) इति सू-त्रस्थे 'वा केशेषु' इति वार्त्तिके वाग्रहणन्तु तत्र सूत्रे वाग्रहणासंबन्ध-बोधकम् ।

यद्यपि निशाशब्दस्य निश्शब्दप्रकृतिकत्वेन भागुरिमतसिद्धः याऽऽपो वैकल्पिकत्वेन च 'वाक् वाचा' इत्युभयवत् निश्निशयोः सु-निश्ग्रहणं विनापि सिद्धिः, तथापि सुटि हलन्तस्यासाधुत्वबोधनाय ग्रहणमिति वृत्त्यनुसारिणः ।

---

दृशाः । सादृश्यञ्चात्र वर्णतोऽर्थतश्च विवक्षितम् । वर्णत इत्यु-श्चरणशब्दस्य न पदादेशः । न च पदादेशस्य वैकल्पिकतया पदा चर-णेतिरूपद्वयमिष्टमेवेति वर्णत इत्युक्तिर्विफलेति वाच्यम् । "ऽयथां प्राङ्-कारात्" इत्यधिकारपठितेन "स्वाङ्गानामकुर्वादिनाम्" इति सूत्रेण क-गेरेफवकारादीन्वर्जयित्वा ऽयचां स्वाङ्गानां द्वितीयमुदात्तमित्यर्थकेन च-णशब्दस्य मध्योदात्ततया शेषनिघातेनानुदात्तादित्वस्यानुदात्तं तत्त्व-च सत्त्वेन विनिगमनाविरहात्तत्तद्धर्मकृतसादृश्यापि परिग्रहात्कद्-त्पदेत्यादिशब्दघटके पच्छब्देऽनुदात्तादित्वानुदात्तत्वस्यापि प्राप्त्या ऽनुदात्तादेः पदेति प्रयोगस्यापत्तिरित्याशयात् । अर्थत इत्युक्तेः द-कपादवाचकस्यादेशाभाव इति ।

*अत एव* । अन्यतरस्यामित्यनुवृत्तेरेव । *उपपन्नो भवतीति* । आदेशानां नित्यत्वे तु आस्येनेत्यादिप्रयोगाणामनुपपत्तिरिति भावः । न्वनुदात्तस्येतिसूत्रस्थान्यतरस्यामितिशब्दस्य चेत्स्वारितत्वेनानुवृत्तिस्त-"ये च तद्धिते" इतिसूत्रेऽपि तत्सम्बन्धः स्यात् एवं सति तत्सूत्रस्थवार्ति-कस्यापि वैकल्पिकत्वं सिद्धमेवेति वा 'केशेषु' इत्यत्र वाग्रहणवैयर्थ्या-रत आह—*ये चेति*। *तत्र सूत्रे* । ये चेति सूत्रे । *वाग्रहणासम्ब-न्धेति* । वार्थार्थकान्यतरस्यामित्यस्यासम्बन्धेत्यर्थः । *निशिनशयो-ति* । शब्दस्वरूपपरत्वाद्द्विरूपत्वेऽपि समानार्थत्वाभावादेकशेषाभाव-*वृत्त्यनुसारिण इति* । एतन्मते 'पद्दन्' इति सूत्रवत् 'ये च तद्धिते' सूत्रस्याप्यादेशविधायकतया तत्रेवात्रापि प्रकृतिविशेषाक्षेपेणैव सिद्धे

परे तु 'अनुदात्तस्य' इति सूत्रे अन्यतरस्याम् इत्यस्य स्वरितत्वं नास्ति। अत एव 'शीर्षंछन्दसि' (पा०सू०६।१।६०) इति सूत्रे 'शीर्षन्निति प्रकृत्यन्तरं द्रष्टव्यम्, आदेशत्वे हि छन्दसि शिरस्शब्दस्य प्रयोगो न स्यात्' इत्युक्तं भाष्ये। अन्यथा विकल्पानुवृत्त्याऽऽदेशत्वेऽपि दोषाभावेन तदसङ्गतिः स्पष्टैव। "ये च तद्धिते" इत्यत्र च "आदेशत्वाय शिरसो ग्रहणं कर्त्तव्यम्" इत्युक्तं, 'वाकेशेषु' इति च वक्तव्यमित्युक्तं, तस्माच्छन्दआदिविषयाणि प्रकृत्यन्तराण्येव पदादयः। एवं मांस्पृत्स्नवोऽपि। अत एव नस्पृतोः स्थानिवद्भावादाबन्तत्वमादाय नसां पृतामित्यादौ न नुडादिः। "नासिकाया नस् यत्तस्क्षुद्रेषु" इति वार्त्तिके आदेशत्वमेव, नासिकाया इत्युक्तेः। अत एव तद्विषये

---

रस्शब्दस्य ग्रहणञ्च कार्यमिति लाघवम्। नसां पृतामित्यादौ नुडादेस्तु आआबितिप्रश्लेषेण न प्राप्तिरिति वदन्तः।

भाष्यानुसारिमतमाह—*परे त्विति*। *अत एव*। अन्यतरस्यामित्यस्यास्वरितत्वादेव। *इत्युक्तमिति*। यदि त्वादेशविकल्पोऽन्यतरस्यामित्येतत्सम्बन्धेन स्यात्तदा शीर्षन्नादेशाभावे शिरस्शब्दस्य प्रयोगः सिद्ध एवेति प्रकृत्यन्तरकथनं व्यर्थमेव स्यात् 'शिरो मे' 'शीर्यते मुखम्'। 'इदन्ते शिरो भिनत्ति'। 'तद्वा अथर्वणः शिर' इति शिरसो ग्रहणं कर्त्तव्यमिति। तदुक्तं भाष्ये—"'ये च तद्धिते' इत्यत्र शिरसो ग्रहणं कर्त्तव्यम्। किम्प्रयोजनम्। आदेशार्थम्। आदेशो यथा विज्ञायेत। प्रकृत्यन्तरं मा विज्ञायि। किञ्च स्यात्। यकारादौ तद्धिते ऽस्कारान्तस्य श्रवणं प्रसज्येत। शीर्षण्योऽहिमुखो भवति। शीर्षण्यः स्वर इति"। ननु शीर्षंश्छन्दसीतिसूत्रस्थं शीर्षन्निति प्रकृत्यन्तरमादेशो मा विज्ञायितिवार्त्तिकमनुपपन्नं स्थानिनिर्देशाभावेनादेशाप्रसक्तेरिति चेत्, अत्र कैयटः। 'यद्यपि शिरस इति स्थानी साक्षान्न निर्दिष्टस्तथापि समानार्थत्वादादेशेनाक्षिप्येत। यद्यपि पूर्वसूत्रादन्यतरस्यां ग्रहणानुवृत्त्या इष्टसिद्धिर्भवति। तथाप्युत्तरत्रानुवृत्तिराशङ्क्येतेति तत्परित्यागेन प्रकृत्यन्तरपक्षो निर्दोष आश्रित' इति। एतेन पद्दन्नादिसूत्रेऽपि प्रकृत्यन्तरत्वमेव द्रष्टव्यम्। अत एव तत्र भाष्ये पादादीनामिति वक्तव्यमिति नोक्तम्।

*उत्तरत्र*। ये च तद्धित इत्यत्र। *निर्दोष इति*। छन्दसि सर्वविधीनां वैकल्पिकत्वमिति त्वगतिकगतिरिति भावः। केशेषु वाच्येऽस्कारान्तस्यापि प्रयोग इष्ट इत्यभिप्रायेणाह—*वाकेशेष्विति चेति*। *अत एव*। प्रकृत्यन्तरत्वादेव। *अत एव*। तद्विषये प्रकृत्यन्तर-

'नासिकाक्षुद्रः' इत्यादि न । अत एव पदादिषु "मांस्पृत्स्नूनामुपसंख्यानम्" इति वार्त्तिके स्थानिनिर्देशो न कृत इत्याहुः ।

प्रत्याहार इति । व्याख्यानादौटष्टकारेणेति भावः । अक्लीबस्येति । पर्युदासपरतया ऽप्यस्य भाष्ये व्याख्यानात् । लघुत्वाच्चेति भावः । प्रसज्यप्रतिषेधेन व्याख्यानेऽत एव ज्ञापकात्केषांचिदसमर्थसमासानां साधुत्वं बोद्धव्यम् ।

स्वादिषु (पा०सू०४।१।१७) सुरत्र प्रथमैकवचनम् । आदिशब्देन कबन्तानां ग्रहणं व्याख्यानात् तदाह—कप्प्रत्ययावधीति तदन्तेष्वित्यर्थः ।

यचि भम् । (पा०सू०१।४।१८) समाहारद्वन्द्वे सौत्रस्त्वात् टच् । यचीत्यनेन स्वादेर्विशेषणात्तदादिविधिः । असर्वनामेति । तेन सुपादौ इत्यादौ पादः पत् । भसञ्ज्ञा पदत्वकार्यप्रतिबन्धरूपे ऽशास्त्रीयेऽपि कार्ये भवति, "न पदान्त" (पा०सू०१।१।५८) सूत्रस्थभाष्यप्रामाण्यात् ।

---

त्वस्यानिष्टत्वादेव । सुडनपुंसकस्येति सुडिति नागमग्रहणम् । "सर्वनामस्थाने चासम्बुद्धौ" इति सूत्रेऽसम्बुद्धाविति विशेषणात् । आगमग्रहणेतु तद्व्यर्थं स्यात् । टाटकारेण प्रत्याहार इत्यपि न । औटष्टित्वसामर्थ्यादित्याशयेनाह *व्याख्यानादिति* । लघुत्वात् । *अत एव ज्ञापकादिति* । अनपुंसकस्येति निर्देशरूपादित्यर्थः । वाक्यभेदाभावाल्लघुत्वात् । *केषाञ्चिदिति* । अश्राद्धभोजी ब्राह्मणः' । 'अलवणभोजी ब्राह्मण' इत्यादेः ।

स्वादिष्वितिसूत्रे स्वादिष्वितिपदेन न सप्तमीबहुवचनादेर्ग्रहणम् । स्वादि सर्वनामस्थानग्रहणादित्याशयेनाह—*सुरत्रेति* । अत्र सूत्रे सुपीत्यनेनापि सुब्मात्रग्रहणे सिद्धे आदिग्रहणं व्यर्थं स्यादित्यादिग्रहणसामर्थ्यादन्येषामपि प्रत्ययानां ग्रहणम् । ते च प्रत्ययाधिकारपठिताः । तेष्वपि स्वादुपात्तस्य कप्प्रत्ययस्यैवाऽवधित्वमित्याशयेनाह—*व्याख्यानादिति* कप्प्रत्ययस्यावधित्वेन निर्देशे सति यत्फलितन्तदाह *तदन्तेष्वित्यर्थ इति* ।

*तेन* । 'यचि भम्' इतिसूत्रेऽसर्वनामस्थानपदसम्बन्धेन । *अशास्त्रीयेऽपीति* । भपदसंज्ञयोराकडारीयतया येन नाप्राप्तिन्यायेन यचि भमितिशास्त्रस्य स्वादिष्वितिसूत्रबाधकत्वे सिद्धे बाध्यस्य बाधकशास्त्रविषयकत्वं कल्प्यते, एतेनाशास्त्रीयस्यापि फलस्य सिद्धिः । *भाष्यप्रा

आकडारा। (पा०सू०१।४।१) "प्राक्कडारात्" इति नावधिः 'तत्पुरुषः' (पा०सू०२।१।२२) 'द्विगुश्च'(पा०सू०२।१।२३) इति लिङ्गात्, समावेशार्थं हि तदित्याह—कडारा इत्यादि। व्याप्त्यर्थकाऽऽङा 'आचार्थात्' इति वक्तुं युक्तम्। एकैवेति। संख्यावाच्येकशब्दोपादानादवधारणं संपद्यते इति भावः। या परेति। द्वयोः सावकाशयोः परा निरवकाशत्वे तु सैवेत्यर्थः। आभ्यामेव बाधसिद्धिस्तु न, अन्यत्र तव्यदादौ कृत्कृत्यप्रत्ययसञ्ज्ञादीनां समावेशदर्शनेन विरोधाभावात्। विप्रतिषेधाप्रवृत्तेः। लौकिकस्य तक्रकौण्डिन्यन्यायस्यापि लोके सञ्ज्ञाविषये ऽदर्शनेन शास्त्रेऽपि संज्ञाविषये ऽप्रवृत्तेश्च। तेनेति। अनवकाशत्वेनेत्यर्थः।

---

व्यादिति*। तत्र हि 'वेतस्वान्'इत्यत्र 'कुमुदनडवेतसेभ्य' इति ड्मतुपि टिलोपे तसौ मत्वर्थ इतिसूत्रविहिता भसञ्ज्ञा सान्तनिष्ठपदत्वप्रतिबन्धद्वारा रुत्वाभावार्था भवति' इत्युक्तम्।

*वक्तुं युक्तमिति*। अस्य ग्रन्थस्य परन्तु नोक्तमाचार्यादित्युच्यते यद्यपि मात्रालाघवमस्ति तथापि पदगौरवं स्यात्। मात्रालाघवेनेति परिभाषा प्रायः पदगौरवविषये नाश्रीयत इति ज्ञापयितुमिति शेषः। *सङ्ख्यावाच्येकशब्दोपादानादिति*। अर्थान्तरबोधकस्यानुपयोगादिति भावः। *अवधारणं सम्पद्यत इति*। सञ्ज्ञाद्वयं यदि स्यात्तदा प्रत्येकत्वस्य प्रत्येकवृत्तितयैका सञ्ज्ञा जातैवेति तदुपादानसामर्थ्यादवधारणलाभः। *द्वयोः सावकाशयोः परेति*। यथा 'धनुषा विध्यति'इत्यत्र परत्वादपादानसंज्ञाबाधिका करणसञ्ज्ञा। निरवकाशत्वे सैव। यथा शसादौ 'याचि भम्' इत्येन पदसञ्ज्ञाबाधिका भसंज्ञा। क्वचित्त्वेवमेव भसंज्ञाबाधिका पदसंज्ञा। यथा भवदीय इत्यत्र, 'भवतष्ठक्छसौ' इति छसि "सिति च" इति पदत्वम्। एतेन सञ्ज्ञानामपि बाध्यबाधकभावेऽन्यत्र बाधकत्वे प्रसिद्धं यद्धि निमित्तं तदेव निमित्तमाकडारीयसञ्ज्ञाविषयेऽप्याश्रीयत इति दर्शितम्, शास्त्रप्रामाण्यात्। *अदर्शनेनेति*। यथा तन्नक्षत्रजातत्वेन नाक्षत्रनाम्नः प्राप्तावपि देवदत्तादिसंज्ञा क्रियते।

*अपादनमिति*। कर्मपदम्। कारकाणीति कर्तृपदम्। *विरोधाभावेन*। संज्ञानां स्वरूपतो विरोधाभावेन। तेन फलद्वारा विरोधसत्त्वेऽपि न क्षतिः। विरोधादिनाबाध्यबाधकभावप्रयोजकान्तरस्य सामान्यविशेषभावस्य परिग्रहः। *तेन*। परत्वेन। *अन्तरङ्गत्वादिति*। पूर्वोपस्थितनिमित्तकत्वरूपेत्यादिः। *ग्रंथ्यसामान्यचि-

परोदाहरणन्तु 'अपादानमुत्तराणि कारकाणि बाधन्ते' इत्याद्याकरे स्पष्टम्। (१)विरोधाद्यभावेन विप्रतिषेधसूत्राद्यप्रवृत्तावपि परत्वादेरन्यत्र बलवत्त्वेन दृष्टतयाऽत्रापि तेन व्यवस्था। अपादानादिसञ्ज्ञानां समावेशे तु तत्कार्ययोः पर्यायापत्तिर्दोषः। भपदसञ्ज्ञयोः समावेशे तु राज्ञ इत्यादौ नलोपाद्यापत्तिर्बोद्धया(२)। न च राजन्य इत्यादौ 'सुप्तिङन्तम्' इति पदत्वं दुर्वारम्। परया भसंज्ञया तु न बाधस्तस्य अन्तरङ्गत्वादिति वाच्यम्, समानावधिकाया अन्तरङ्गाया अप्यन्तरङ्ग बाद्धयसामान्यचिन्तया ऽपवादत्वेनैव बाधादित्याहुः।

आकडारस्थसञ्ज्ञासु च यथोद्देशपक्ष एवेति अदद्यङ्शब्दे निरूपयिष्यते। भपदसञ्ज्ञाविधावङ्गप्रकरणे 'भस्य' इत्यस्य पाठेनाङ्गमित्यनुवर्त्य, अङ्गं सत्पदम्भवति, भं भवति इत्यर्थेन ताभ्यां तस्य समावेशः न पर्याय इति बोद्धयम्। पुरुषसञ्ज्ञापरस्मैपदसञ्ज्ञयोरपि "णलुत्तमो वा (पा०सू०७।१।९,) इति ज्ञापकात्समावेशः। गुरुलघुसञ्ज्ञे वर्णस्य नदीघिसंज्ञे तदन्तस्येति भिन्नावधिकत्वात्समाविशतः। उभे अपि ...

---

न्तेति। "राजन्यबहुवचनद्वन्द्व" इतिसौत्रनिर्देशश्चात्र मानम्। नन्वाकडारीयसंज्ञाविषये परत्वेन व्यवथा इति यत्तन्न कार्यकालपक्षे घटते। ... योरपि कार्यरूपैकदेशस्थत्वादत आह—*आकडारस्थेति*। नन्वेवाङ्गसंज्ञयापि समावेशो न स्यादत आह—*भपदसंज्ञाविधाविति* *इत्यर्थेनेति*। एतेनाङ्गाधिकारे भस्येत्यस्य पाठेनाङ्गसंज्ञया भपदयोः पर्यायो भवत्वित्यपास्तम्। अन्यत्रापि समावेशमुपपादयति-*गुरुसंज्ञेत्यादिना*। ननु पुरुषसंज्ञा परस्मैपदसंज्ञा एतयोः "णलुत्तमो वा" ज्ञापकेन समावेशोपपादनेऽपि पुरुषसंज्ञात्मनेपदसंज्ञयोः समावेशो न पद्यते। न च "तङानावात्मनेपदम्" इति सूत्रेण तङ आत्मनेपद...

---

(१) ननु अत्रोदाहरणे विरोधाभावात् संज्ञाविषये विप्रतिषेधसूत्राप्रवृत्त्या कथं परत्वा... कथनमित्याशंक्याऽऽह—विरोधादीति।

(२) ननु कारकस्थले भवतु पर्यायापत्तिः को दोषः। राज्ञः इत्यादावपि भपदसंज्ञयोः ... दोषः। किं तु संज्ञाद्वयप्रयुक्तकार्यद्वयप्रसक्तिरूपो दोषो दुरुद्धर एवेत्यत आह—राज्ञ इत्यादौ ... यापत्ति र्बोध्या इति।

ननु भसंज्ञया समकालप्राप्तायाः स्वादिष्वितिपदसंज्ञायाः बाधे ऽपि अन्तरंगत्वात् ... सुप्तिङन्तं पदमिति पदसंज्ञायाः बाधो न स्यात्, एवञ्च राजन्य इत्यादौ नलोपापत्तिरस्य... कस्यचिद् मतं दूषयितुं तन्मतमुदाहरति—नचेति।

स्येति पक्ष आकारे उपलभ्यमानोऽप्येकदेशिन एव समावेशानुपपादनादिति दिक् । यलोप इति । हलि सर्वेषाम् (पा०सू०८।३।२२) इत्यनेनेत्यर्थः(१) ।

अल्लोपोऽनः । (पा०सू०८।४।१३४) तपरकरणं किम् ? अनितः क्विप्यान इत्यादौ लोपाभावाय । 'अनूत्वम्' त्वत्रैकदेशविकृतन्यायेनेत्यन्यत्र विस्तरः । पूर्वस्मादिति । 'अचः परस्मिन् (पा०सू०१।१।५७) इत्यत्र पूर्वविधावित्यस्यावृत्त्या पञ्चमीसमासाश्रयणादयमर्थो लभ्यते इति भावः । तेन 'प्रत्यैषिषन्' इत्यादिसिद्धिः, । अन्यथा जुस् स्यात् । अत एव 'उभे अभ्यस्तम्' (पा०सू०६।१।५।) इति सूत्रे "उभेग्रहणं यत्रोभे श्रूयेते तत्रैवाभ्यस्तसञ्ज्ञार्थं, 'ऐत्सन्' इत्यत्राभ्यस्तलक्षणो जुस् मा भूदिति उक्ते शपैकादेशस्य पूर्वविधाविति पञ्चमीसमासेन स्थानिवत्त्वाज्जुसोऽप्राप्तेरसति प्रयोजने उभेग्रहणं स-

---

विधानसामर्थ्यात्समावेशो भविष्यतीति वाच्यम् । पर्यायत्वसम्पादनेनापि चारितार्थ्यसम्भवादिति चेन्न । "प्रथममध्यमोत्तमसंज्ञायामात्मनेपदग्रहणङ्कर्तव्यम्" इति वार्त्तिकेन समाधानात् । एतेनापूर्वात्मनेपदग्रहेणनोभयोः समावेश उपपादनीय इत्युक्तम् । न चात्मनेपदग्रहणे आत्मनेपदस्यैव पुरुषसंज्ञा स्यान्न परस्मैपदानामिति वाच्यम् । आत्मनेपदग्रहणम्पृथक् कर्त्तव्यमित्यभिप्रायात् । एवं सति वाक्यभेदो भविष्यति । पूर्वसूत्रञ्च परस्मैपदविषयकमेव । अथवा "णलुत्तमो वा" इति सूत्रमेव सामान्यापेक्षज्ञापकमाश्रीयते । प्रथमादिसंज्ञा एतत्प्रकरणस्थसंज्ञान्तराणां बाधिका न भवन्तीति ज्ञापकस्य विशेषापेक्षत्वे उत्तमसंज्ञया समावेशोपपादनेऽपि प्रथममध्यमसंज्ञाभ्यां समावेशो न स्यात् ।

*एकदेशविकृतन्यायेनेति* । स्थानिवद्भावेनेत्यर्थः । न तु लौकिकस्यैकदेशविकृतन्यायस्यात्र प्रवृत्तिरर्द्धाधिकविकारात् । *आवृत्त्येति* । अत्रावृत्तिर्न समुदायस्य किन्तु पूर्वविधावित्यस्य । "अचः परस्मिन्" इत्यस्य पूर्ववाक्यस्थस्य तत्रानुवृत्त्यैव वाक्यार्थपर्यवसानसंभवात् । *प्रत्यैषिषन्निति* । वीगतीत्यत्र प्रश्लिष्टस्येकारात्मकधातोः सन्नन्तस्य रूपम् । अत्र शपैकादेशस्य स्थानिवत्त्वान्न जुस् । *अत एव* ।

---

(१) हलि सर्वेषामित्यनेनेति ।

अत्र "लोपः शाकल्यस्य" इत्यनेनैव लोपो 'माभ्यां' 'मायूभ्यां' तत्त्वामिति रत्नाकरकारस्य मतम् । तन्मते 'हलि सर्वेषा' मित्यत्र 'ङञिच पदे' इत्यतः पदे इत्यनुवर्त्य हलादौ पदे परत इत्यर्थात्, प्रकृते हलादिपदपरकत्वाभावात् हलि सर्वेषामित्येतत् न प्रवर्तते इति, तन्मतं खण्डयति—इत्यनेनेति ।

हार्थमित्युक्तम्, तेन उभे यत्र श्रूयेते इत्यर्थेऽपि 'प्रत्यैषिषन्' इति सिद्धि
आवश्यकेन पञ्चमीसमासेन तत्सिद्धाद्युभग्रहणं सहार्थमिति तन्न्याः
इति पक्षे त्विति। तुनाऽस्यानित्यत्वं सूचितम्। "प्रविगण
य्य" इति भाष्योदाहरणमपि तदनित्यत्वे एव सङ्गच्छते। अत एव
'गौः' इत्यत्र वृद्धेः स्थानिवत्त्वान्न सम्बुद्धिलोपः। पूर्वस्मान्नि
त्त्वेनाश्रितादिति व्याख्याने तु न मानम्। केचित्तु(१) पूर्वस्माद

पञ्चमीसमासाश्रयणादेव। *इत्युक्तमिति*। सिद्धान्तिनेत्यादिः।
उभेग्रहणेन। *इत्यर्थेऽपि*। इत्यर्थे स्वीकृतेऽपि। *तत्सिद्धौ*।
ज्ञित्यस्य सिद्धौ।

*अनित्यत्वं सूचितमिति*। "निष्ठायां सेटि" इति सूत्रे सेड्ग्रहण
ताद्धि कारितमित्यादाविटि कृते एव णिलोपो न तु ततः प्रागित्यर्थम्।
न्यथा ण्यन्तादनिण्निष्ठाया असम्भवेनानिटि णिलोपो माभूदित्ये
त्पर्यकत्वे तस्य वैयर्थ्यापत्तेः। इटि कृते एवेत्यवधारणफलन्तु यदीट
णिलोपः स्यात्तदानुदात्तादेकाचः कृञः परत्वादिटो निषेधः स्या
माभूदिति। अयञ्च पञ्चमीसमासस्यानित्यत्वाभावे जातेऽपि णिलोपे
मीसमासेन वारयितुं शक्यते इति कालावधारणवैयर्थ्यं स्पष्टमे
न च ज्ञपेः "सनीवन्त" इतीडविकल्पात्ततो निष्ठायां "यस्य विभा
षा" इतिसूत्रेणेण्निषेधादस्ति सम्भव इति वाच्यम्। दरिद्रित इ
त्सिद्धये "यस्य विभाषा" इतिसूत्रे एकाच इत्यनुवृत्तेः।

अनित्यत्वे ज्ञापकान्तरमप्याह-*प्रविगणय्येतीति*। अत्रादन्ताद्
देर्गणधातोः क्त्वाप्रत्यये समासे ल्यपि "ल्यपि लघुपूर्वात्" इतिण
देशः पञ्चमीसमासस्य नित्यत्वे न स्यात्। अपिना पूर्वोक्तज्ञापक
च्चयः। *अत एव*। अनित्यत्वादेव। *न मानमिति*। वाच्य

(१) केचित्तु पूर्वस्मादिति।
इदमत्र तात्पर्यम्। ल्यपि लघुपूर्वादित्यत्र पूर्वशब्दस्य व्यवहिताव्यवहितसाधारण्येन सत्यपि
वद्भावे 'परिगणय्य' इति भाष्योदाहरणे न दोषः इति न तदुदाहरणं तदनित्यत्वज्ञापकम्, अतो
इति निर्देश एव तदनित्यत्वे ज्ञापक इत्याहुः। तन्न युक्तम्। 'घे ङिति' इति गुणे 'ङसिङसोश्च'
पूर्वरूपैकादेशे कर्तव्ये स्थानिवद्भावो वाच्यः, स च न संभवति। यथा पूर्वविधावित्यत्र पूर्वस्मा
वित्यर्थे पूर्वमात्रस्य विधौ कर्तव्ये स्थानिवद्भावो न पूर्वपरयोः, तथा पूर्वस्माद्विधावित्यर्थे
विधौ कर्तव्ये स्थानिवद्भावो न पूर्वपरयोरित्याश्रयणात् न दोष इति न तन्निर्देशस्य तदनित्यत्व
पूर्वादिशब्दानामव्यवहिते एव मुख्यप्रयोगः, व्यवहिते तु अव्यहितत्वमारोप्य गौणः प्रयोगः।
बाधके अव्यवहिते एव पूर्वशब्दप्रयोग इति। तथा चोक्तोदाहरणस्य तदनित्यत्वज्ञापकत्वं सम्यगेव।
ल्यपि लघुपूर्वादित्यस्य तु अयमर्थः।
लघुवर्णः पूर्वो यस्मात् वर्णात् स लघुपूर्वो वर्णः तस्मात् परो यो णिः तस्यायादेशः स्यात् ल्यपि
प्रविगणय्य' इत्यादौ न दोषः। इति उच्छृङ्खलानुयायिनो निगदन्ति।

हितपरस्यैव कार्ये स्थानिवत्त्वं, 'प्रविगणय्य' इत्यादौ तु स्थानिवद्भावलब्धाकारस्यैव व्यपदेशिवद्भावेन लघुपूर्वत्वमादाय न दोष इति तदनित्यत्वे न मानमित्याहुः ।

पूर्वत्रासिद्धे नेति । अतिदेशदृष्ट्या त्रिपाद्या असिद्धत्वेन न्यायसिद्धानुवादोऽयम् । तत्फलं त्वतिदेशान्तराणां व्रतिघटितानां त्रिपाद्यां प्रवृत्तिबोधनम् । अत एव 'अमी' 'क्षीरपेण' इत्यादौ मीत्वणत्वे भवतः । अत्रेकारस्यादस्सम्बन्धित्वं 'पे' इत्यस्यैकाजुत्तरपदत्वञ्चान्तवद्भावाधीनम् । तस्य दोष इति । इदं वाचनिकमेव 'नमु ने'(पा० सू०८।२।३) इति सूत्रे 'न'इति योगविभागस्तु भाष्ये न दृश्यते । अत एव सिद्धकाण्डं वार्त्तिककृताऽऽरब्धं, "न लोपः सुब्" (पा०सू०८।२।२) इति सूत्रञ्च सूत्रकृता ।

प्रकारार्थमिति । प्रकारः सादृश्यं, तच्च सुप्त्वेन । 'मांसपचनी'त्यादावपि 'नलुमता' (पा०सू०१।१।६३) इति निषेधानित्यत्वाच्छसादिपरत्वं बोध्यम् । शब्दत्वेन सादृश्यमित्यन्ये । तन्न । "वाशोकष्यञ्रोगेषु' (पा०सू०६।३।५१) इत्यस्य वैयर्थ्यापत्तेः । "नासिकाया यत्तस्क्षुद्रेषुनस्"इति भाष्यपठितवार्त्तिकस्य वैयर्थ्यापत्तेश्च । 'आसन्यं प्रा-

---

तादृशार्थालाभात् । यत्तु 'प्रविगणय्य' इति भाष्योदाहरणे लघुपूर्वत्वं व्यपदेशिवद्भावेन णौ जातस्य लोपस्य स्थानिवद्भावे सति तस्याकारस्यैवेति ततः परत्वाल्ल्यबादेशो भविष्यति. अतोऽनित्यत्वफलश्चिन्त्यमिति ।तन्न । 'प्रादीधिषय्य' इत्यत्र दिधिपूशब्दादाख्यानाणिजन्तात् क्त्वाप्रत्यये प्रशब्देन समासे पञ्चमीसमासानित्यत्वपक्षे लघुपूर्वषकारात्परत्वाद्भवति। यस्य स्थानिवद्भावस्तस्यैव व्यपदेशिवद्भावेन लघुपूर्वत्वम्प्रकृते वक्तुमशक्यमूकारस्य दीर्घत्वादित्याशयात् ।

*मूलेऽड्व्यवाय इत्यवेति* । अव्यवधानाभावेन "रषाभ्याम्" इति सूत्रेण न, किन्तु रषाभ्यामित्यनुवर्त्तमाने "अट्कुप्वा" इतिसूत्रेण । न च "रषाभ्याम्" इतिसूत्रे षग्रहणस्यैवं सति वैयर्थ्यमिति शङ्क्यम् । 'पुष्णाति' इत्यत्र चारितार्थ्यात् । यत्तु "तस्य दोष" इतिवचनमपि "न मु ने ' इति सूत्रक्लृप्तयोगविभागाल्लब्धमिति तन्नेति दूषयति—*न मुन इतीति* । *अत एव* । योगविभागस्य भाष्यासम्मतत्वादेव । *सिद्धकाण्डम्* । "सिज्लोपे एकादेशे" इत्यादि । *वैयर्थ्यापत्तेरिति* । शोकादीनामपि

णमूचुः' इत्यत्रापि तद्वदेव शसादिपरत्वम् । अत्र 'सुप्रभृतिषु' इति व्याख्ये 'शस्प्रभृतिषु' इत्युक्त्याऽन्यत्र क्वचिदेव प्रवृत्तिर्बोध्यते । अत एव पदद्न्निशां ग्रहणं चरितार्थम् । तेषां द्विविधानामपि कोशसिद्धत्वे तत्र व्यवस्थार्थताया एव वक्तव्यतया सुप्प्रत्ययमात्रे प्रवृत्तौ तस्या असंभवेन तद्वैयर्थ्यं स्पष्टमेव । प्रकारार्थत्वे प्रमाणमाह—भाष्ये इति। तत्र हि—"शस्प्रभृतिषु" इत्युच्यते अशस्प्रभृतिष्वपि दृश्यते 'शलादोषणी' ककुद्दोषणी, याचते महादेवः" इत्युक्तम् । आद्यस्यांघ्रिगुणैर्वर्तमानस्य 'शलाकाकारे दोषणी' इत्यर्थः । छान्दसः कादिलोपः । एतेन दोष इत्यकारान्तस्य दूषणवाचिनो दोषन्नादेश इत्यपास्तम् ।

तेन पदङ्घ्रिरिति । न च कोशस्थपदादीनां पादाद्यादेशत्वं पादादिभ्यः पृथक्पदादिवचनं तत्र व्यर्थम् । न हि स्थान्यादेशयोः पृथगुपादाने प्रयोजनमस्ति, स्थान्युपादानेनैव तदर्थाभिधानसमर्थादेशस्याप्यर्थबोधनात् । अत एव नसाद्यादेशानां कोशेऽनुपन्यास इति वाच्यम् । पदादीनां भाष्यरीत्याऽनादेशत्वात् । तत्त्वेऽपि 'तृज्वत्क्रोष्टुः' (पा०सू०७।१।९५) इतिवद्व्यवस्थार्थमस्यावश्यकत्वेन सौ परतो हृदादीनां प्रयोगार्थं प्रकारार्थत्वस्याऽऽवश्यकत्वात् । स्पष्टं चैतत् "वाशोक" (पा०सू०६।३।५१) इति सूत्रे मूले ।

---

शब्दत्वात् । न च सुप्त्वेन सादृश्यवादिमतेऽपि न लुमतेतिनिषेधानित्यत्वेन मांस्पचनीत्यादेरिव हृच्छोक इत्यादेरपि सिद्धिर्भविष्यतीति वा शोकेत्यादि व्यर्थमिति वाच्यम् । अनित्यस्यापि वचनस्य [illegible] साधकं तत्राप्रवृत्तिरित्यभिप्रायेण 'वाशोक' इत्यादिवचनचारितार्थ्यात्।

*अन्यत्र* । शस्प्रभृतिभिन्ने ।

*तेन पदङ्घ्रिरितीति* । अत्र पादशब्दस्य पदादेशः । तत्र शङ्कते—*न च कोशस्थेति* । भाष्यरीत्या अनादेशत्वात् । अस्य किन्तु प्रकृत्यन्तरत्वमेषाम् इति शेषः । *तत्त्वेऽपि* । अनादेशत्वेऽपि । अत एव पादहृदयशब्दयोः पदद्हृच्छब्दरूपादेशे सुनिमित्तके कृते सन्निपातपरिभाषया सुलोपो न स्यादिति "पदङ्घ्रिश्चरण" इति "स्वान्तं हृन्मानसम्" इति चोक्तमिति पूर्वपक्षस्य नावसरः ।

केचित्तु शब्दत्वेनैव सादृश्यम् न लुमतेतिनिषेधस्यानित्यत्वादप्रवृत्तिकल्पनापक्षेया सादृश्यप्रयोजकव्यापकधर्मकल्पनायां गौरवाभावात्

कोशे शब्दा अर्थपरा एव । शक्तिग्रहस्तु पदत्वहेतुकानुमानेन सामान्यत एव । एवञ्च 'विष्णुर्नारायणः' इत्यादौ विष्णुपदार्थाभिन्नो नारायणपदार्थ इति क्रमेण बोध इत्यादि मञ्जूषायां नामार्थवादे वि-

एवं सति पदादीनामादेशत्वमेव । "हृदयस्य हृत्" इतिसूत्रन्तु नित्यार्थम् । "वा शोकष्यञ्" इति तु नियमार्थमेष्वेवोभयोः स्थान्यादेशयोः प्रयोगोऽन्यत्र स्थानिन एवेति । एवं "नासिकाया नस्" इत्यपि नित्यार्थमेव । तेन नासिकाक्षुद्र इति । न च "पदन्न" इतिसूत्रे सुप्रभृतिष्वित्येवास्त्विति वाच्यम् । असृग्यकृच्छकृच्छब्देभ्यः सोरन्तरङ्गानपीतिन्यायेन लुकि कृते स्वादिपरत्वाभावेनादेशाभावापत्तेरित्याहुः । अत्रेदञ्चिन्त्यम् । शसः सुप्संज्ञायाः शास्त्रीयतया तेन रूपेण सादृश्यकल्पनापेक्षयाऽशास्त्रीयेन शब्दत्वेन सादृश्यकल्पनेऽक्लृप्तकल्पनाप्रयुक्तं गौरवं स्फुटमेव । किञ्च "वा शोक" इत्यस्य नियमार्थत्वकल्पनापेक्षया विधायकत्वे लाघवमेव । एवञ्च भाष्यरीत्या प्रकृत्यन्तरत्वकल्पनमेव समुचितमिति ॥

ननु कोशपठितानां शब्दानां लोकप्रसिद्धशब्दानुकरणत्वेन तेष्वादेशस्य प्रवृत्तिर्नोचिता । एवञ्च पद्‌ङ्घ्रिरित्याद्युपपत्तये सादृश्यप्रयोजकधर्मचिन्तनमयुक्तमत आह—*कोशे शब्दा इति* । *अर्थपराः* । अर्थविशिष्टशब्दपराः । न त्वनुकरणानीति शेषः । ननु तत्तदर्थनिरूपितशक्तिग्रहस्य कोशाधीनत्वं सुप्रसिद्धं, तच्च नोपपद्यते अर्थानां शक्तिग्रहाभावादनुपस्थितेरत आह—*शक्तिग्रहस्त्विति* । यदा "विष्णुर्नारायण" इत्यादिशब्दघटितकोशजन्यबोधविचारस्तदा तद्घटकमेकं विष्णुपदं पक्षीकृत्यानुमितिः कल्पनीया । इदं विष्णुपदम् अर्थवाचकम् । साधुपदत्वात् । गोपदवदित्येवं रीत्या साध्यहेतुकल्पनयाऽनुमित्या । *सामान्यतः* । सामान्यधर्मावच्छिन्नविधेयताकया ।

अयं भावः । अर्थवाचकत्वत्वे साधुपदत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वावगाहिव्याप्तिज्ञानेनार्थवाचकत्वत्वे व्यापकतावच्छेदकत्वावगाही, साधुपदत्वत्वे व्याप्यतावच्छेदकत्वावगाही परामर्शो जन्यते । ततो विष्णुपदमर्थवाचकमित्याकारानुमितिः । ततोऽर्थो विष्णुपदवाच्य इत्याकारकं मानसं ज्ञानम् । ततस्तादृशः संस्कारः । ततोऽर्थविशेष्यकविष्णुपदवाच्यप्रकारिका स्मृतिर्विष्णुपदोच्चारणे सति तादृशोद्बोधकवशाज्जन्यते । एवमेव नारायणपदादपि । ततः समानविभक्तिकत्वरूपाकाङ्क्षाप्रकारकपदविशेष्यकज्ञानसत्त्वेप्रतिबन्धकाभावे विष्णुपदवाच्याभिन्नो नारायणपदवाच्य इत्याकारक शाब्द बोधस्तदाह—*एवञ्चेत्यादिना* ॥

स्तरेण निरूपितम् (१)। 'एतत्पदममुकवाचकम्' इति शक्तिग्रहस्तु स्वस्व प्रसिद्धिमादाय तत्तत्पुरुषस्यानियतः पश्चान्मनसैव । (२) "अघ्न्ये देवि सरस्वति इडे काव्ये विहव्ये" एतानि ते ऽघ्न्ये नामानि' इत्यादौ यत एतानि तव नामानि अतस्त्वदभिन्ना एषामर्था इति बोधः, अत एव (३) "नामन्त्रिते समानाधिकरणे (पा०सू०८।१।७३) इति सूत्रभाष्ये सामान्यवचनमित्यस्येदं प्रत्युदाहरणं दत्तम् । अन्यथैकार्थबोधकत्वरूपसामानाधिकरण्यस्याप्यभावात्तदसङ्गतिः स्पष्टैव । एकशेषस्तु न, तथा सति तत्तच्छब्दस्वरूपस्य सम्यक् बोधानापत्तेः । अनेक शब्दानां स्वरूपबोधनपूर्वमेकार्थबोधने कोशतात्पर्यात् । अत एव 'यत्तदेतेभ्यः' (पा०सू०५।२।३९) इत्यादौ पाणिनिनैकशेषो न कृतः(४)

---

ननु पर्यायशब्दस्वरूपप्रतिपादनपरं श्रुतिविशेषे यथापदानां स्वरूपपरत्वं तथा कोशेऽप्यपेक्षितमत आह-*अघ्न्येदेवीति* । *तदसंगतिः* प्रत्युदाहरणासङ्गतिः । एतेन पर्यायशब्दस्वरूपप्रदर्शकवाक्यघटकशब्दानामर्थपरत्वे भाष्यसम्मतिरुद्भाविता । एकशेषस्तर्हि विरूपाणामित्यनेन स्यादत आह—*एकशेषस्त्विति* । पूर्वोक्तार्थे सूत्रसम्मतिमाह-*अत एवेति* । तादृशतात्पर्यादेव । एवञ्च "यत्तदेतेभ्य" इतिनिर्देशो "विरूपाणामपि" इत्यस्याप्यनित्यत्वे ज्ञापक इति द्रष्टव्यम् । यथा चोक्तं नृसिंहेन ।

---

(१) ननु पदत्वहेतुकानुमानेन सामान्यतः शक्तिग्रहेऽपि इदं पदं एतदर्थवाचकमिति विशेषतः शक्तिग्रहो न स्यात् । तथा सति विशेषतः शाब्दबोधो ऽपि अनुपपन्नः स्यादित्यत आह —एतत्पदममुकवाचकमिति ।

(२) ननु अघ्न्ये देवि सरस्वतीत्यादौ एतानि नामानि इत्युक्त्या उक्तविधार्थानुपपत्तिरित्यत आह—अघ्न्ये देवि इति । अत एव तृतीयाध्यायस्य तृतीये पादे शारीरके उद्गीथाधिकरणे चतुर्धा सामानाधिकरण्यं निरूपितं भगवत्पादैः । तथाहि—अध्यासेनापवादत्वेन विशेषणत्वेनैकत्वेन चेति । अध्यासेन यथा इयं प्रतिमा विष्णुरिति. न तु तत्रापवादः शक्यते कल्पयितुं विष्णुबुध्या प्रतिमाबुद्धेरनिवर्तनात् । अपवादो यथा-इदं रजतमिति । अत्र हि पश्चाद्भाविन्या तात्विकया शुक्तिबुध्या अतात्विकरजतबुद्धेर्बाधात् अपवादसामानाधिकरण्यमिति व्यवहरन्ति । अनेन निरपवाद सापवादत्वाभ्यामध्यासद्वैविध्यमुक्तम् । विशेषणत्वेन यथा-नीलमुत्पलमित्यादौ । एकत्वेन यथा-द्विजोत्तमो ब्राह्मणो भूदेवेति । इदं च कोशस्थम् । लोके तु नैवं विधं वाक्यं संभवति, एकेनैव विवक्षितार्थसमर्पणात्, अन्यस्याऽनर्थक्येन तत्र सहप्रयोगाभावेन तत्र तथाविधवाक्याप्रयोगात् । एवञ्च कोशस्थपदानां पदपरत्वं नास्तीत्यपि सूचितं भगवता ।

(३) ननु सामानाधिकरण्यस्य भेदघटितत्वात् तच्च पर्यायस्थले अनुपपन्नम् । अत एव घटो घट इति सामानाधिकरण्येन प्रयोगो न भवतीत्यत आह—अत एव नामंत्रिते सामानाधिकरणे इति ।

(४) अत्रैकशेषः "त्यदादीनिसर्वैर्नित्यम्" इत्यनेन ।

एतेन कोशे शब्दानां शब्दपरता, अत एवैकशेषो न। अर्थपरत्वं तु न सम्भवति, इतः पूर्वं शक्तिग्रहाभावात् 'एते शब्दा एकार्थाः' इति बोधः । एवञ्चात्र प्रकारार्थत्वाभावेऽपि न क्षतिरित्यपास्तमिति दिक् ।

संख्यादि (पा०सू०६।३।११०) 'साय्भ्यः' इति वक्तव्ये पूर्वग्रहणम् 'उत्तरपदे' इत्यधिकृतस्य षष्ठ्यन्तत्वलाभाय । एतेन 'द्विप्रिय' इत्येवैतदुदाहरणमित्यपास्तम् ।

विश्वपा इति । विश्वं पातीति विग्रहे 'आतोऽनुपसर्गे' (पा० सू० ३।२।३) इति प्राप्ते बासरूपन्यायेन 'आतो मनिन्क्वनिब्वनिपश्च' इति चेन विच् । स चाऽऽदन्तेभ्यो लोकेऽपि । 'कीलालप आगतम्' इति "विभाषा पूर्वाह्ण" ( पा०सू०४।३।२४ ) इति सूत्रे भाष्यप्र-

---

भेदाख्यानाय न द्वन्द्वो नैकशेषो न संकरः ।
कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते ॥

इति । भेदस्य लिङ्गभेदस्य लिङ्गविशेषस्य आख्यानाय द्वन्द्व एकशेषश्च न कृतः । यथा—

ह्लादिनी वज्रमस्त्री स्यात्कुलिशम्भिदुरम्पविः ।

इति । तथा स्वरूपभेदप्रतिपादनाय समानलिङ्गानामपि तौ न कृतौ । यथा "विष्णुर्नारायण" इत्यत्र । तथा सम्बन्ध्यर्थविशेषभेदेन भिन्नानां भेदाख्यानाय संकरो न कृतः । तथा स्वर्गसम्बन्धिनां भूमिसंबन्धिनाञ्च स्वरादिवर्ग इतिरीत्या पृथङ् निर्देश एव कृत इति । एतदपवादमाह—*क्रमादृत इति* । यत्र स्त्रीपुन्नपुंसकानां क्रम एव विवक्षितस्तत्र संकरो भिन्नलिङ्गानां मिश्रणरूपः कृत एव यथा "स्तवः स्तोत्रं स्तुतिर्नुतिः" इति । प्राचाम्मतं खण्डयति—*एतेनेति* । पूर्वोक्तव्याख्यानेन । *अत एव* । शब्दपरत्वेन भिन्नार्थत्वादेव । अभियुक्तोक्तं शक्तिग्राहकत्वमुपपादयति—*एत इति* । *प्रकारार्थत्वाभावेऽपीति* । यद्यत्र श्रूयमाणपदादीनां शास्त्रनिष्पाद्यत्वं स्यात्तदा प्रकारार्थकतां विना निर्वाहो न स्यात्तदेव तु नास्ति अनुकरणत्वात् तथा चात्रोभादुदात्त इतिवच्छास्त्रस्य न प्रवृत्तिरिति भावः ।

*षष्ठ्यन्तत्वलाभायेति* । एवञ्च संख्यादिपूर्वस्योत्तरपदस्याहञ्शब्दस्येत्यर्थः संपद्यते। ननु "विजुपे छन्दसि" इतिसूत्रे छन्दसीत्युपादानाद्विच् छन्दस्येवेति कथं विश्वपाशब्दस्य लोके साधुत्वमत आह-*स चेति* । न हि 'कीलालप आगतम्' इति वाक्यं छन्द इति भावः । क्वविषये विशेषमाह-

योगात्। क्विपस्त्वादन्तेभ्यो भाष्यानुक्तक्विभ्यो ऽनभिधानमेव। अत एव यू स्त्र्याख्यावित्यत्र विजुक्तो भाष्ये न तु क्विप्। अत एव 'शंस्था' इत्यादिप्रयोगेषु भाष्यकृता ईत्वं न कृतमिति केचित्। अन्ये क्विपमेवाहुः।

दीर्घाज्ज(पा०सू०६।१।१०५)।(१)चेन 'इचि' इत्यनुकर्षः। 'दीर्घाच्छस्येव' इति नियमपरं, दीर्घाच्छसीत्येव तु न सूत्रितं दीर्घादेव शसीति विपरीतनियमापत्तेः। प्रत्याहारेषु जातिपक्षाश्रयणादत्र प्र-

*क्विपस्त्विति*। *अत एव*। अन्यत्रानभिधानादेव। *अत एव* शंस्थेत्यादिषु क्विपोऽभावादेव। *केचिदिति*। ईत्वमवकारादाविति वार्तिकविद्वेषिणः। *आहुरिति*। ईत्वमवकारादावित्यत्र नेत्वं वारयितुं शक्यमिति भावः। यद्यपि वकारादौ प्रत्यये "घुमास्था" इतीत्व-वचनेन चेन्निवार्यते तदा वार्त्तिककारमते प्रत्ययलक्षणसूत्रस्य वि-ध्यर्थत्वेन "यू स्त्र्याख्यौ" इत्यस्य शंस्थेत्यादिपदस्य च क्विपापि साधु-सम्भवति, तथापि विचः प्रथमोपस्थितत्वात्स एवोक्तः।

ननु प्रथमयोरिति सूत्रानन्तरं लाघवात् "दीर्घाच्छसि" इति सूत्र-मस्त्वित्यत आह-*दीर्घाच्छस्येवेतीति*। *विपरीतनियमापत्तेरिति*। अत्रेष्टापत्तिः कर्तुमशक्या। "तस्मात्" इतिसूत्र एव भाष्यकृत्कृत प्र-सान्पश्य कुण्डिनान्पश्य' इतिप्रयोगासङ्गत्यापत्तेः। विश्वपाशब्दादिषु विधिशास्त्रस्य सिद्धान्तरीत्याप्राप्तिमुद्भावयति—*प्रत्याहारेष्विति*।

(१) ननु अकपदोपस्थापिताकारस्योच्चारितत्वेन तेनाणुदित्सूत्रबलात् दीर्घादीनामुपस्थाने ऽपि उपस्थापितेकरादिभिः तदभावात् न गौर्यौ इत्यादौ तत्प्रसक्तिः। किञ्चाकपदोपस्थापिताकारादीनाम् तैरणुदित्सूत्रबलात् उपस्थानेऽपि तेषामकपदोत्तरषष्ठ्याः स्थ निरूबोधने मानाभावः। प्रत्ययानां प्रत्युपस्थाप्य एवान्वयात् सवर्णिनां प्रकृतवाक्यघटकपदजन्यपदार्थोपस्थितिविषयत्वाभावेन शाब्दबोधविषयत्वस्य वक्तुमशक्यत्वाच्च। न च 'द्विरेफमानय' इत्यादौ दिरेफपदोपस्थितभ्रमरपदेनोपस्थितषट्पदस्य रेफपदोत्तरद्वितीयया कर्मत्वबोधवत् अकपदोपस्थापिताकाराद्युपस्थापिताकारादेरकपदोत्तरषष्ठ्या स्थानित्वबोधो भविष्यतीति वाच्यम्, अनैयत्वानुपपत्त्या स्वशक्यवाच्यत्वसम्बन्धेन द्विरेफपदात् षट्पदोपस्थितेरङ्गीकारात्। तथा चैवमपि नात्र तत्प्रसक्तिरित्यत आह—प्रत्याहारेषु जातिपक्षाश्रयणादिति।

केचित्तु अस्मादेव ज्ञापकात् प्रत्याहारपदानां तद्वाच्यवाच्ये निरूढा लक्षणा। न च ह्रस्वादीनां दीर्घादीनां लक्षणयोपस्थितौ युगपद्वृत्तिद्वयविरोध इति वाच्यम्, तस्य न्यायस्य विभिन्नशक्तिस्थले दोषावहत्वम् न तु निरूढशक्तिलक्षणास्थले। अत एव गंगायां मीनघोषौ इत्यादितो ऽपि बोधः। ह्रस्वादीनामपि तद्वाच्यवाच्यत्वेन लक्ष्यतावच्छेदकाक्रान्तत्वाच्च। अत एव "तद्वाच्यवाच्ये निरूढा लक्षणा" इति मनोरमाग्रन्थो ऽपि स्वरसत उपपद्यते। न च वाच्यवाचकभावस्य भेदनियतत्वादभेदे तदयोगात् ह्रस्वस्य ह्रस्ववाच्यता स्यादिति वाच्यम्, सवर्णत्ववत् पुरुषभेदादीना भेदमादाय तदुपपत्तेः। इति वदन्ति। अत्रत्यदोषोद्धारः शब्दरत्ने इकोयणचीति सूत्रे विस्तरेण निरूपयिष्यामः।

धिः । न्याय्यत्वादिति(१)। जसि पूर्वसवर्णदीर्घनिषेधस्य न्याय्यत्वादित्यर्थः। धातोः किम्?—हाहानिति। अव्युत्पन्नमिदम्।(२)अस्य क्रियाशब्दत्वे तु 'सान्' इति प्रत्युदाहरणम्।

(३)परे तु क्त्वः इनः इत्यादिसिद्ध्यर्थम् "आतो ऽनाप" इति वक्तव्यम् इत्युक्ते 'आत' इति योगविभागेन तत्संसाध्य तत्प्रत्याख्यातं भाष्ये(४)। एतच्च साशब्दादेर्यद्यभिधानं तदा योगवि-

*न्याय्यत्वादिति*। लक्ष्यस्योद्देश्यतावच्छेदकाक्रान्ततया निषेधाश्चेतिन्यायेन "दीर्घात्" इतिसूत्रप्रवृत्तेर्न्याय्यत्वादित्यर्थः। *सानिति*। *प्रत्युदाहरणमिति*। हाहाशब्दस्य तु हाहा इत्यवे रूपम्।

---

(१) न्याय्यत्वादिति। केचित्तु न्याय्यत्वादित्यस्य परत्वेनेत्यर्थमाहुः।

तेषामयमाशयः। 'दीर्घाज्जसि च' इति सूत्रम् औङि निषेधार्थमुपन्यस्तम्। तथाच तत्र 'नादिचि' इत्येव सिद्धे सति तदयुक्तं स्यात्। अत अन्यार्थावश्यकस्य निषेधस्य औङि रामौ इत्यादावपि चारितार्थ्यस्य 'नादिचि इति निषेधस्य गौर्यौ इत्यादौ चरितार्थत्वात् 'दीर्घाज्जसि च' इत्यस्य च प्रसक्तौ विप्रतिषेधे परमिति परत्वबोधकन्यायेन परस्य दीर्घाज्जसि च' इत्यस्यैव न्याय्यत्वात् इति। इदञ्च अन्यत्र लब्धावकाशयोरेकत्र प्रवृत्तिमात्रे विरोध इति मतेन। अत्रारुचिबीजं तु भाष्यसंमतासम्भवरूपविरोधाभावात् न विप्रतिषेधशास्त्रप्रवृत्ति न्याय्या इति भावः।

(२) ननु हाहा' इति शब्दो गन्धर्वविशेषवाचके ऽव्युत्पन्नो ऽपि यत्र शोकव्यञ्जको जहातीति व्युत्पत्त्या क्विबन्तो विजन्तो वा तत्र क्रियाशब्दो ऽपि निष्पाद्येत तदा मूलोक्तं नेदं प्रत्युदाहरणं सम्भवति अत आह—अस्य क्रियेति।

(३) इदानीं सान् इति मनोरमोक्तप्रत्युदाहरणासङ्गतिं दर्शयितुं प्रकृतसूत्रस्थभाष्यानुरोधेन सा इत्यादेरनभिधानं, प्रकृतसूत्रस्थधातुपदमावन्तमात्रस्य निवृत्त्यर्थमिति च निगदन्नाह-परे तु इति।

(४) प्रत्याख्यातं भाष्ये इति।

प्रकृतसूत्रे इतिशेषः। तत्राहि—"आतो नाप इति वक्तव्यम् इहापि यथा स्यात् समासे नञ् पूर्वे क्त्वो ल्यबिति, अनाप इति किं खट्वायां मालायाम्" इत्युक्त्वा कथं क्त्वायामिति शङ्किते "निपातनादेतत्सिद्धम्"। तत "अथवा योगविभागः करिष्यते आतः आकारलोपो भवति ततो धातोः, धातोश्चाकारस्य लोपो भवति" इत्युक्तम्। आतो नाप इति वार्तिकमते साशब्दे आकारलोपः प्राप्नोत्येव। आत इति योगविभागेन भाष्यकृदुक्ततत्प्रत्याख्यानपक्षे ऽपि स दुर्वारः। सान् इति प्रयोगसद्भावे तु धातुग्रहणस्य तत्राकारलोपनिवृत्त्यर्थत्वे कल्प्यमाने तद्विषयकभाष्यवार्तिककृतोरज्ञानकल्पना कर्तव्या स्यात्, सा च धातुग्रहणस्यावन्तनिवृत्त्यर्थत्वकल्पनेन विना तदुपपत्तावन्याय्या। तस्मात् सान् इत्यादेरनभिधानं धातुग्रहणं तु आवन्त मात्रनिवृत्त्यथमेवेति न्याय्यमित्येवतत्तात्पर्येणाह—एवञ्चेति।

नच यथोत्तरं मुनीनामितिन्यायेन सूत्रकारापेक्षया वार्तिककारस्याधिकं ज्ञानमिति कल्प्यताम्, एवञ्च न विरोध इति वाच्यम्। सम्भवति फलैक्ये फलभेदकल्पनाया अन्यायत्वात् इति भावः।

उच्छृङ्खलानुयायिनस्तु। योगविभागः करिष्यते इति वदता भाष्यकृता तस्येष्टसिद्ध्यर्थत्वेन क्वचित् क्त्वः इनः इत्यादावधात्ववयवाकारलोपे ऽपि सर्वत्राधात्ववयवाकारलोपे मानाभाव इति सूचितम्। अत एव प्रत्याख्यानपक्षे क्त्वः इनः इत्यनयोरेव सिद्धिमाशङ्क्य निपातेन सिद्धिमभिधाय योगविभागरूपपक्षान्तराश्रयणेन प्रथमयोगेन क्त्वः इनः इत्यनयोरेव सिद्धिमङ्गीकृत्य उत्तरयोगेनाबन्तव्यावृत्तिमङ्गीकुर्वता क्त्वः इत्यादिव्यतिरिक्ताधात्ववयवाकारलोपो नैव भवति इत्यङ्गीकृतं सङ्गच्छते। प्रथयोरिति सूत्रस्थं भाष्यं तु पक्षान्तराभिप्रायेणोक्तमिति न कुत्रापि दोष इत्याहुः।

भागेन लोप इष्ट एव, सूत्रे धातुग्रहणमाबन्तनिवृत्त्यर्थमेव। भाष्य-वार्त्तिककृतोरज्ञानकल्पनापेक्षयेदृशार्थकल्पनस्यैवौचित्यात्। आबन्ता-दाचारक्विबेव न। तदक्विबन्ताद्वा कर्तृक्विब् न, अनभिधानादि-ति न तत्र सूत्रवार्त्तिकयोर्विरोधः। अत एव प्रथमयोरिति सूत्र-भाष्ये पररूपं बाध्यसामान्यचिन्तया दीर्घमात्रस्य बाधकत्वेऽपि पक्षे 'रामान्' इत्यादिसिद्ध्यर्थम् 'अतो दीर्घः'(पा०सू०७।३।१०१) इति 'सुपि च' (पा०सू०७।३।१०२) इति चानुवर्त्तमाने 'बहुव-चने झल्येत्' (पा०सू०७।३।१०३) इति सूत्रे बहुवचने इति यो-गविभागेन पररूपबाधकं दीर्घं विधाय रामाणामित्यादावनेन दीर्घे परत्वात्कृते 'अग्नीनाम्' इत्यादौ सावकाशस्य नुटोऽप्राप्तिमाशङ्क्य 'हस्व-नद्याप (पा०सू०७।१।५४) इति सूत्रे 'आज्जसेः (पा०सू०७।१।५०) इत्यत 'आत्' ग्रहणानुवृत्त्या समाधाय 'कीलालपाम्' इत्यादौ नुड्विधा-यके 'आतो धातोः' (पा०सू०६।४।१४०) इत्यनुवर्त्य लोपेन नुड्बाध-केन समाहितम्। नुड्विधायके आब्ग्रहणं न कार्यमिति तदाशयः। अधात्ववयवाकारान्तानां लोपाभावे तु तदसङ्गतिः स्पष्टैवेत्याहुः।

क्त्वः इनः इति क्त्वाप्रत्ययस्येडित्याद्यर्थकं 'क्त्व इट्' 'प्र-शस्येत्वम्' इत्यादिप्रयोगस्थमत्रोदाहरणम्। एतेनाचारक्विबन्तात् कर्-तृक्विपैते प्रयोगा निर्वाह्या इत्यपास्तम्। आचारक्विबन्तप्रकृतिकक-र्त्तृक्विबन्तस्य भाष्ये क्वाप्यनुपन्यासेन तेभ्यः कर्त्तृक्विपोऽनभिधानस्ये-व लाभाच्च।

जसि च (पा०सू०७।३।१०९) ह्रस्वस्य गुण इति वर्त्तते। ह्रस्वस्य (पा०सू०७।३।१०८)। संबुद्धौ च (पा०सू०७।

*लोप इष्ट एवेति*। वार्त्तिकैकवाक्यत्वात्। *आबन्तनिवृत्त्यर्थमे-ति*। रमाः पश्येत्यादौ। नन्वेवमाबन्तादाचारक्विबन्तात्कर्त्तरि क्विपि स-त्त्वात्सूत्ररीत्या लोपः प्राप्नोति। वार्त्तिककारमते तु नेति फलभेदोऽस्त्ये-त्यत आह-*आबन्तेति*। *अत एव*। यदभावकल्पनेनानुपपत्तिप-रिहारस्तदभावकल्पनादेव। *अधात्ववयवाकारान्तानामिति*। हाहाशब्दा-दीनाम्। *एतेन*। स्वारसिकपूर्वोक्तप्रयोगविरोधेन। *आचारेति*। आदन्तप्रकृतिकेत्यादिः।

१०६) इत्यतः सम्बुद्धाविति च वर्त्तते ॥

शेषोघ्य (पा०सू०१।४।७)। 'यूस्त्र्याख्यौ (पा०सू०१।४।७)इत्यतो यू इति 'ङिति ह्रस्वश्च'(पा०सू०१।४।६) इत्यतो 'ह्रस्व' इति च वर्त्तते । शेषपदार्थमाह—अनदीत्यादि । तदन्तमिति । अनुवृत्तयूभ्यां शेषपदार्थस्य विशेषणात्तदन्तलाभ इति भावः । ननु 'मत्यै' इत्यत्रानवकाशत्वान्नदीसञ्ज्ञैव भविष्यतीति शेषग्रहणं व्यर्थमत आह—एकसञ्ज्ञेति । अधिकारादिति । 'कडाराः कर्मधारये' इत्येतत्पर्यन्तं तस्य बुद्धिस्थत्वादित्यर्थः । स्पष्टार्थमिति । स्पष्टतया तदन्तविधिलाभार्थमिति भावः । मात्रे इति । 'ऋतो ङि' (पा०सू०७।३।११०)इति

---

*इति च वर्त्तते इति* । न च यूपदं तत्रात्यं दीर्घबोधकमिति ह्रस्वपदार्थे नानन्वय इति वाच्यम् । अनुवृत्तस्य यूपदस्य षष्ठ्यन्ततया विपरिणामेन य्वोर्यौ ह्रस्वौ तदन्तमित्यर्थात् । "गुणः कृतात्मसंस्कार" इतिन्यायात् ।

नन्वेकसंज्ञाधिकारादित्यनुपपन्नम् । आकडारादितिसूत्रस्य संज्ञाप्रवृत्तिव्यवस्थापकत्वादित्यत आह—*कडारा इति* । एवञ्चाधिकारपदम्बुद्धिस्थपरम् । एका संज्ञेत्यस्य बुद्धिस्थत्वादित्यर्थः । यद्यप्यसखीतिपर्युदासबलेन शब्दस्वरूपस्य विशेष्यस्य लाभो भवति । तथापि पर्युदासलभ्यस्य विलम्बितोपस्थितिकतया झटितिविशेष्यलाभार्थमिति फलितन्तदाह—*स्पष्टतयेति* । यत्तु 'मत्यै' इत्यत्रानवकाशत्वान्नदीसंज्ञैव भविष्यतीत्युक्तम् । तच्चायुक्तम् । असखीतिपर्युदासात्सखिशब्दे समासाघटके गवां पत्यै स्त्रियै इत्यत्र पतिशब्दे च "पतिः समास एव"इति नियमात् घिसंज्ञाया अप्राप्तनदीसंज्ञायास्तत्र चारितार्थ्यादिति । तन्न । इकारांशे चारितार्थ्येऽप्युकारांशे चारितार्थ्याभावात् "ङिति ह्रस्वश्च"इतिसूत्रेणोकारस्य स्त्रियां वर्त्तमानस्य नदीसंज्ञा भविष्यतीति घिसंज्ञासूत्रे उकारस्यानदीसंज्ञकस्यैव ग्रहणं, तत्साहचर्यादिकारस्यापि तादृशस्यैव ग्रहणम्भविष्यतीति शेषग्रहणं व्यर्थमित्याशयात् । परन्तु साहचर्येणैतादृशार्थकल्पने क्लेश इति स्पष्टप्रतिपत्तये शेषग्रहणम् ।

*मात्रे इतीति* । ननु यूग्रहणाननुवृत्तावृकारान्तमात्रस्य घिसंज्ञायां "घेर्ङिति" इतिगुणे सिद्धे "ऋतो ङि" इतिसूत्रेण ङौ गुणविधानं घिसञ्ज्ञकस्य "ऋतो ङिति" गुणो नेत्यर्थे ज्ञापकं भविष्यतीति 'मात्रे' इतिरूपमन्यथासिद्धं, किन्तु 'पित्रा' इत्यत्र नाभावापादनमेव कर्त्तुमुचितमिति चेन्न । ङौ गुणविधानेनैवं ज्ञाप्यवचनकल्पनायां "घेर्ङिति" इतिशास्त्रस्य बाधकल्पना

तु यू इत्यनुवृत्तावेव तात्पर्यग्राहकमिति भावः।

आङो ना (पा०सू०७।३।१२०) पुंसीति तु नोक्तम्। अमुना कुलेनेत्यत्र मुत्वस्यासिद्धत्वान्नुमनापत्तौ पुंस्त्वाभावेन नाभावस्याप्यनापत्तौ रूपासिद्धेः। 'न मु ने'(पा०सू०८।३।३०) इति निषेधस्तु नुमि 'न मु टादेशे' इति वार्त्तिकविरोधात्। अत एव सूत्रकृता ङिति इतिवत्-'नि'इति नोक्तम्। तथा सति तन्त्रेण नकारनिर्देशोऽपि लभ्येत आगन्तुनाकारेण तस्यापि ने इति निर्देशेन तन्त्रस्वीकारे त्वत्यन्तं ज्ञानगौरवमिति न किञ्चिल्लाघवमिति, स्पष्टं भाष्ये(१)। ङितीति। ङकारविशिष्टा सञ्ज्ञा न त्वस्य ङस्येत्त्वम्। अत

स्यात्तदपेक्षया तेन घिसंज्ञासूत्रे यूग्रहणमनुवर्त्तते इत्येव ज्ञापनीयं स्यात्। एवञ्च 'मात्रे' इत्यत्र गुणाभावस्य 'पित्रा' इत्यत्र नाभावाभावस्य सिद्धिर्भविष्यतीत्याशयादाह-*ङितो ङीतीति*।

पदलाघवाभिप्रायेण शङ्कते-*पुंसीति त्विति*। ननु "न मु ने" इतिसूत्रे नकाराकार उच्चारणार्थः। नकारमात्रे विधायकतायाः नुमि पर्यवसानेऽपि साक्षात्तथानुच्चारणादतो नकारपदस्य नकारघटित [illegible] भविष्यतीति नायं दोष इत्यत आह-*न मु न इति निषेधस्त्विति* *वार्त्तिविरोधादिति*। 'टाया आदेशष्टायामादेश इति च तदर्थः' वार्त्तिकार्थप्रदर्शनपरभाष्येऽप्यादेशपदोच्चारणेनादेशविषय एव तस्य [illegible] रिष्टत्वात्तद्विरोधापत्तेरित्यर्थः। नुमि कर्तव्ये मुत्वस्य निषेधो नेति सूत्रसम्मतिमप्याह-*अत एवेति*। तत्तात्पर्यकत्वे लाघवात् नीति क्त्वीतिवद्वदेत्। नीत्यस्य नकारसम्बन्धिनीत्यर्थसम्भवात्। न इति निर्देशोऽप्युभयलाभ इति चेत्तत्राह-*आगन्तुनेति*। एकस्यैव नेशब्दस्य [illegible] स्थस्य तादृशशब्दद्वयोपस्थापकत्वतात्पर्येण निर्देशकल्पना ततस्तत्त शब्दद्वयोपस्थितिकल्पना। तयोर्मध्ये एकत्रागन्तुकाकारकल्पना [illegible] नकारमात्रोपस्थितिरेकत्र। अपरत्र न इतिशब्दस्येतिरीत्या ज्ञानगौरवमि त्यर्थः। *न त्वस्य ङस्येत्त्वमिति*। न च शब्दार्थयोस्तादात्म्याद्ङ्शब्द औङ्शब्दस्य च प्रत्ययमात्रबोधकतया व्यवसितान्त्यत्वान् ङकारस्येत्स ञ्ज्ञा प्राप्नोतीति वाच्यम्। धातुप्रत्ययेत्यत्र प्रत्ययपदस्य प्रत्ययाधिकार [illegible] ठितप्रत्ययसमानानुपूर्वीकशब्दपरत्वात्। यद्यत्रेत्संज्ञाप्रवृत्तिः स्यात् सामर्थ्यात्तदुपस्थाप्ये इत्त्वप्रयुक्तकार्यं स्यात्तदाह-*अत एवेति*। इत्यादि

(१) स्पष्टं भाष्ये इति। प्रकृत सूत्रे इतिशेषः।

तत्रहि-"किमर्थमस्त्रियामित्युच्यते, आङो ना पुंसि इत्येवोच्येत। का रूपसिद्धिः। अमुना, [illegible] नुमासिद्धं नेवं शक्यं अमुना ब्राह्मणकुलेनेति मुभावस्यासिद्धत्वेन नुम् न स्यात्" इति तत्र भाष्ये [illegible]

हरिणा(१) मत्या इत्यादौ न गुणः। एवम् 'औङ आपः (पा०सू०७।१।१८) इत्यत्रापि । अत एवासम्भवे एवापवादत्वमिति वार्त्तिकमते ऽपि रमे इत्यादौ न याट् ।

घेर्ङिति । (पा०सू०७।३।१११) सुपि च (पा०सू०७।३।१०२) इत्यतः सुपीति वर्त्तते। तेन 'पट्वी' इति सिद्धम्। न च 'घेर्ङि' इत्येव सूत्रं कार्यं, ङकारादावित्यर्थः। 'प्रावहवा' इत्यत्र "आङ्याजयारामुपसंख्यानम्' इत्याङादेशस्तु ङा इत्येव वक्तुं शक्य इति वाच्यम्। मत्यामित्यादौ 'आण्नद्याः' (पा०सू०७।३।११२) इत्यस्यानापत्तेः । अल्विधित्वेन स्थानिवत्त्वाभावात् । इद्ग्रहणे त्वनुबन्धकार्यत्वात् स्थानिवत्त्वं स्पष्टमिति दिक् ।

---

वादेवेत्यर्थः। *न गुण इति*। "घेर्ङिति" इति सूत्रस्य ङिति गुण इत्यर्थकत्वमितिवादिमतरीत्या गुणप्राप्तिर्बोध्या। *अत एव*। औङोऽपि ङकारस्येत्त्वाभावादेव । ननु "रमे" इत्यत्रावश्यं याटि प्राप्ते शीभाव आरभ्यतेऽतोऽपवादे शीभावे कृते न याटः प्राप्तिरित्यत आह–*वार्तिकमतेऽपीति*। असम्भवे एवापवादत्वमिति हि तन्मतं स चासम्भवः प्रकृते नास्तीति भावः ।

*घेङितीति*। अयम्भावः । एतत्सूत्रभाष्योक्तरीत्याऽनुवर्तमानस्य सुपीत्यस्य ङीत्येतद्विशेष्यत्वमस्तु । "यस्मिन्विधिः" इतिपरिभाषया ङकारादावित्यर्थोऽस्तु। एवञ्चाङ् इत्यत्रौङ् इत्यत्र च ङकारस्येत्संज्ञास्वीकारेऽपि न क्षतिः। इदं सूत्रञ्च घेर्ङीत्येवास्तु। "आङ्याजयाराम्" इतिवार्तिकेच ङा इत्येवास्तु । तेन प्रवाहवा इत्यत्र गुणस्य सिद्धिरितिमत्यामित्येति ङेरामादेशे "आण्नद्या" इत्याण् न स्यात् ङादित्वाभावात्। अत्रापि ङीत्यस्यानुवृत्त्या ङकारादित्वस्याश्रयणात्तस्याल्विधित्वात्। न चेष्टापत्तिः। "ह्रस्वनद्याप" इति नुडापत्तेः। सिद्धान्ते तु येन नाप्राप्तिन्यायेन नुड्बाधके आटि कृते परिशेषात्तत्र षष्ठीबहुवचनस्य ग्रहणमिति सिध्यति। न च "ङेराम्" इति सूत्रेऽपि ङेर्ङामित्येवास्तु, एवञ्चैतस्य स्वतो ङादित्वान्न स्थानिवद्भावोपयोग इति वाच्यम्। ङेर्ङामादेशे कृते "लशकु" इतीत्संज्ञाया आडागमस्य च प्राप्तौ वार्णपरिभाषयेत्संज्ञाम्बाधित्वा आट् स्यात्, ततश्च प्रत्ययादित्वाभावात् ङकारस्येत्त्वानापत्तेः। अत एवान्तरङ्गत्वान् ङकारस्येत्संज्ञालोपयोराटः पूर्वम्प्रवृत्तिर्भविष्यतीत्यपि निरस्तम्।

---

(१) ननु हरिणा इत्यत्र 'सत्यपि सम्भवे बाधनं भवति' इति न्यायेन गुणादेशस्य बाधादेव न दोषः इत्यरुचेरुदाहरणान्तरमाह–मत्येत्यादाविति ।

ङसिङ। (पा०सू०६।१।११०) एङो द्वित्वेऽपि अस्वरितत्वात् यथासङ्ख्यं न। (ङितश्चेति तु नासूत्रि, 'ऋत उत्' इत्यत्र ऋदन्तात् ङितोऽति परे पूर्वपरयोरित्यर्थे जाग्रतीत्यादौ दोषः स्यादिति)(१) ङसोरित्येव सिद्धे ङसिग्रहणं स्पष्टार्थम्।

अच्च घेः (पा०सू०७।३।११९) 'इदुद्भ्याम्' इति किं ? घेः परस्य ङेरौदच्चेति, ङिग्रकृतेर्घेरौदच्चेति, वा ऽर्थो मा भूदिति। अदौतोस्तपरत्वं मुखसुखार्थम्। इत्सञ्ज्ञायां च 'तस्यलोपः' इति तयोर्लोपः। न चौतो विभक्तित्वात् "न विभक्तौ" इति निषेधः कथमित्सञ्ज्ञेति वाच्यम्। मुखसुखार्थमित्यस्य तदेव प्रयोजनं न कार्यान्तरं, नापि प्रयोगे श्रवणमित्यर्थात्तत्त्वप्रतिज्ञयैव "न विभक्तौ" इत्यस्य तत्राप्रवृत्तेः। अत एव 'इद्वृद्धौ' (पा०सू०६।३।२८) 'पत्यावैश्वर्ये' (पा०सू०६।२।१८) इत्यादिनिर्देशाः सङ्गच्छन्ते। यदि तु उच्चारणार्थानां विनैव शास्त्रमपगमः स्यात्, तदा इत्सञ्ज्ञकानामपि तत एव निवृत्तिरस्तु किं 'तस्यलोपः' (पा०सू०१।३।९) इत्यनेन ? स्वभाववादस्योभयत्रापि समत्वात्। ध्वनितश्चेदं 'तस्य लोपः' इत्यत्र भाष्ये। इति 'दिव औत्' (पा०सू०७।१।८४) सूत्रे निरूपयिष्यामः।

---

वार्णपरिभाषाया अन्तरङ्गपरिभाषापवादत्वादित्यादिकं दिगित्यनेन सूचितम्।

*अस्वरितत्वादिति*। यथासङ्ख्यसूत्रे स्वरितेनेत्यस्य सम्बन्ध इति भावः। *स्पष्टार्थमिति*। यथासङ्ख्यसूत्रे शब्दतः सङ्ख्यासाम्यं नार्थतः इत्यस्य स्पष्टतया ज्ञापनार्थमिति केचित्। तन्न। यथासङ्ख्यसूत्रभाष्ये "समुदाहरणमिको यणचि" इति कथितं तद्विरोधात्। तत्र हि जातिपक्षाश्रयणेनार्थत एव यथासङ्ख्यस्योपपादनात्। एचोयवायाव इत्यत्रानुपपत्तेः।

*इदुद्भ्यामिति किमिति*। अनुवृत्तिप्रयोजनप्रश्नः। ङेरित्यत्र षष्ठ्यन्तत्वात्तत्साहचर्याद् घेरित्यस्य षष्ठ्यन्तत्वसम्भावनयाऽऽह-*ङिप्रकृतेरिति*। *तत्त्वप्रतिज्ञयेति*। मुखसुखार्थत्वप्रतिज्ञयेत्यर्थः। *अत एव* तकारस्येत्संज्ञासत्त्वादेव। प्राचीनोक्तं खण्डयति-*यदि त्विति*। *स्वभावादस्येति*। परार्थत्ववादस्येत्यर्थः। *उभयत्र*। मुखसुखार्थे इत्संज्ञके च। *समत्वादिति*। यथोच्चारणार्थानामितरोच्चारणे सहायत्वं

---

(१) अयं चिन्हितः पाठः प्रकृते ऽप्रयोजको ग्रन्थकारासंमतश्चेति कस्यचित् मतं, परन्तु टीकाकारैः स्वीकृत्य व्याख्यातत्वात् प्रकृतसंदर्भशुद्धत्वाच्च हेयमेवेदं कथनामिति गुरुचरणा वदन्ति।

न चैवम् 'अग्नौ' इत्यत्रौतः स्वरितत्वापत्तिः । न च 'प्रत्ययाप्रत्ययोः' इत्येव सिद्धे पुनः "तिति प्रत्ययग्रहणं कर्त्तव्यम्" इति वार्त्तिकादौपदेशिकप्रत्ययत्वत्वत्येव तत्प्रवृत्तिरिति वाच्यम् । तस्याः परिभाषाया लक्ष्यसिद्धये भाष्यकृता कल्पनाश्रयणात् । स्पष्टञ्चेदं 'तित्स्वरितम्' (पा०सू० ६।१।१८५) इत्यत्र कैयटे । अङ्गस्य (पा०सू०६।४।१) इति सूत्रे भाष्ये तु तत्प्रत्याख्यानायैकदेशिना सोक्ता, न तु सिद्धान्तिनेति स्पष्टं तद्विदाम् । 'श्नान्नलोपः' (पा०सू०६।४।२३) इति सूत्रे भाष्येऽपि ध्वनितस्तदभाव इति वाच्यम् । 'प्रत्ययग्रहणम्' इत्यस्य विधानकालिकप्रत्ययत्वत्वद्ग्रहणमित्यर्थात् । अत एवादेशेषु दित्त्वमाश्रित्य तत्प्रत्याख्यानेन फलभेदो नेति दिक् ।

अनङ् सौ । (पा०सू०७।१।९३) 'सौ' इति प्रथमैकवचनम् असम्बुद्धाविति पर्युदासात् । नकाराकारस्तूच्चारणार्थ इत्सञ्ज्ञकः ।

अलोऽन्त्यात् । (पा०सू०१।१।६५) अत्रद्ध्यवधिमतोः साजात्यादाह–पूर्वो वर्ण इति । अत एव शिष्ट इत्यादौ शा इति समु-

---

कत्वं तथेत्संज्ञकानामपि स्वसम्बधिनः परिनिष्ठितरूपसाधने सहायकत्वमित्यर्थः ।

*न चैवमिति । अस्य परेण वाच्यमित्यनेनान्वयः । *एवम्* । उच्चारणार्थकानामपि लोपफलकेत्संज्ञास्वीकारे । *तत्प्रवृत्तिः* । तित् स्वरितमित्यस्य प्रवृत्तिः । *ध्वनित इति* । तत्र हि "श्नान्नलोप" इत्यत्र श्नमः शकाराभावे "नान्नलोप" इत्येवास्तु इतिपूर्वपक्षो 'नन्दिता' इत्यत्र प्रसक्तातिव्याप्तेः क्ङितीत्यनुवृत्त्या वारणे 'नन्दमान' इत्यत्रातिव्याप्तिरित्युक्त्वा 'एवन्तर्हि नशब्द एव क्ङितीत्यनेन विशेष्यते । क्ङितौ नशाद्वारितिविभक्तिविपरिणामेनोक्तम् । यदीयम्परिभाषा स्यात्तदाऽनयैव नन्दमान इत्यत्र दोषाभावे सिद्धे विभक्तिविपरिणामक्लेशो व्यर्थः स्यादितिरीत्या परिभाषाभावो ध्वनित इत्यर्थः । प्रत्ययपदस्य विधानकालिकप्रत्ययत्ववति लक्षणायांबीजमाह–*अत एवेति । तादृशार्थे प्रत्ययपदलक्षणासत्त्वादेव ।

साविति सप्तमीबहुवचनस्य ग्रहणमितिशङ्काव्युदासायाह–*साविताति* । अन्त्यस्यालोऽवधित्वादल्त्वेन रूपेण तत्सजातीयोऽवधिमान् गृह्यत इत्याह–*अवध्येति* । *अत एव* । अल एवावधिमत्त्वादेव ।

दायस्य 'शास इत्' (पा०सू०६।४।३४) इतीत्वं न। पञ्चम्यन्तात्पाठ-णाच्च शस्य न।

सर्वनामस्थाने। (पा०सू०६।४।८) "नोपधायाः" (पा०सू०...) इति, "ढ्रलोपे" (पा०सू०६।३।१११) इत्यतो 'दीर्घ' इति चानुवर्त्य।

अपृक्त। (पा०सू०१।२।४१) अपृक्त इति पुंस्त्वमविवक्षितम्। अत एवापृक्तं हलिति सङ्गच्छते। अपृक्तप्रदेशेषु हल्ग्रहणेनैव सिद्धे सञ्ज्ञाविधानमदृष्टार्थम्।

हल्ङ्याप्। (पा०सू०६।१।६८) सुतिसि, इति पृथक् पदम्। हलन्तादिति। सुतिसीनां प्रत्ययत्वेनोपस्थितस्य यस्मात्स विहितः तदादेरित्यस्य विशेष्यत्वेन तदन्तलाभ इति भावः। एवं ङ्या-बंशे तदुपस्थित्या ङ्याबन्तादित्यर्थो द्रष्टव्यः। हल्ङ्याब्भ्य-क्किमिति। राम इत्यादौ दीर्घान्तत्वाभावान्न दोष इति भावः। दीर्घात्किं? निष्कौशाम्बिः, अतिखट्वः, इत्यारभ्य संयोगान्तलोपस्या-सिद्धत्वादित्यन्तोऽपपाठः, मनोरमायां दर्शनात्। सखेति। यद्य-प्यत्रैव "सख्युरसम्बुद्धौ" इति लेख उचितस्तथापि नान्तलक्षणदी-र्घेणैव सिद्धेः "अत उपधायाः" (पा०सू०७।२।११६) इत्यपेक्षया नित्यत्वेन तस्यैवौचित्याच्चात्र नोक्तम्।

अचो ञ्णिति। (पा०सू०७।२।११५) मृजेर्वृद्धिः(पा०सू०७।...)

---

*संज्ञाविधानमदृष्टार्थमिति*। न च वर्णग्रहणे च सर्वत्रेति हल्ग्रह-णस्य सुतिसीत्येतद्विशेषणतया हलन्तानां स्वादीनांग्रहणे 'हन्यात्' इत्यत्र लोपापत्तिस्तद्वारणायाभेदेन लोपनीयविशेषणार्थमपृक्तग्रहणमस्त्विति वा-च्यम्, अपृक्तसंज्ञाविधानाभावेऽपि "सिद्धन्तु विशेषणविशेष्ययोर्यथे-ष्टत्वात्" इत्युक्तत्वेन लाघवाय स्वादीनां विशेषणत्वेनैवातिप्रसङ्गवारणे हलो विशेष्यत्वं स्वीकृत्य अधिकोपादानमयुक्तमित्याशयात्।

*विशेष्यत्वेनेति*। हल्ग्रहणस्य तद्विशेषणत्वेनेति शेषः। *एवं ङ्याबंशे तदुपस्थित्या*। परिभाषोपस्थित्या। अत एवातिखट्व इत्यादौ हल्ङ्यादि-लोपप्राप्तिः। तदन्तविधिद्वयाभावे तु सुतिसीनां यतो विधानं तदा-देराबन्तादित्यर्थस्य न्यायप्राप्तत्वयाऽत्र सुलोपो न प्राप्नोति। *इत्यार-भ्येति*। अस्य उक्त इति शेषः। अन्यथोत्तरकालिकाक्रियान्वयाभावे ल्यपोऽसाधुत्वापत्तेः। *तस्यैव*। नान्तलक्षणदीर्घस्यैव।

१.१४) इत्यतो वृद्धिरित्यनुवर्त्तते, अङ्गस्येति चाधिकृतं तदाह—अङ्गस्य वृद्धिरिति ।

ख्यत्यादिति । (पा०सू०६।१।११२) उच्चारणार्थाकारेण कृतयणः प्रयोगस्थस्यानुकरणादविशेषेणोभयोर्ग्रहणमित्याह—खितीत्यादि । ङस्यादिपरस्तादृशः खिखीतितीशब्दप्रकृतिक एव सम्भवतीति भावः । सुसखेति । "न पूजनात्" (पा०सू०५।४।६९) इति निषेधात् 'राजहःसखिभ्य' इति टज् न । समुदायस्येति । असखीत्यस्य सखिभिन्नावयवाविति वर्णसञ्ज्ञापक्षे ऽर्थः । अत्र पक्षे पर्युदासेन तद्भिन्नप्रातिपदिकान्त्यवर्णादेरेव ग्रहणात् 'कृतं सख्या' इति वाक्ये न दोषः । सिद्धान्तिसंमते तदन्तसञ्ज्ञापक्षे सखिभिन्नावित्यर्थः । पर्युदस्यमानसमर्पकसखिशब्दे तदन्तग्रहणन्तु न, विशेष्यासन्निधानादिति भावः । एतत्सर्वं हरदत्तानुरोधेन ।

'यस्येति च' (पा०सू०६।४।१४८) इति सूत्रभाष्यात्तु "सखिशब्दस्य तदवयवे लक्षणया सख्यवयवाभिन्नयोरिदुतोरित्यर्थः । यथा 'अत्वसन्तस्येति' (पा०सू०६।४।१४) सूत्रे ऽधातोरित्येतद्घटकधातुपदस्य 'पिण्डग्रः' इत्यादिसिद्ध्यर्थं धात्ववयवे लक्षणाऽऽकरे दृश्यते । तदन्तसञ्ज्ञापक्षेऽपि 'असखीति' य्वोरेव विशेषणं, ततस्तदन्तविधिः । 'उतश्च प्रत्ययात्' (पा०सू०६।४।१०६) इतिवत् । ततश्च सख्यवयवभिन्नेवर्णाद्यन्तमित्यर्थः । तदन्तविधिश्च शेषपदार्थविशेषणतया । एवञ्च प्रकृतेनैव घिसञ्ज्ञेति लभ्यते । तत्र हि भाष्ये "इवर्णस्य किमुदाहरणम् ? अतिसखेरागच्छ" इति । यद्यत्र लोपो न स्यात्तदा कृतदीर्घस्य पूर्वान्तवद्भावेन सखिशब्दत्वात् अतिदेशविषये प्रतिपदोक्तपरिभाषाया अप्रवृत्त्योपसर्जनह्रस्वत्वे कृते ऽपि घिसञ्ज्ञा न स्यात् ।

---

खिखीतितीशब्दप्रकृतिकः । तदयवेकारस्थानिकः । *अत्रपक्षे* । वर्णसंज्ञापक्षे । सिद्धान्तार्थमाह—*यस्येति चेतिसूत्रेति* । *पिण्डग्र इत्यादिसिद्ध्यर्थमिति* । अन्यथा पिण्डग्र इतिसमुदायस्य धातुभिन्नत्वाद्दीर्घः स्यादिति भावः *उतश्च प्रत्ययादितिवदिति* ।एतेन "गुणःकृतात्मसंस्कार" इति न्यायसञ्चारः सूचितः यदुक्तं "यस्येति च" इतिसूत्रभाष्यात्विति तद्दर्शयति *तत्र हीति* । अस्य इत्युक्तमित्यत्रान्वयः । अत्रार्थे भाष्यान्तरमपि साध-

लोपे तु लक्षणप्रतिपदोक्तपरिभाषया न दोष" इत्युक्तम्। भवद्री-
त्या विशिष्टस्य सखिभिन्नत्वेन घिसञ्ज्ञा निर्बाधैवेति तदसङ्गति-
स्पष्टैव। न च लोपेऽपि लिङ्गविशिष्टपरिभाषया दोषः। सखिशब्दस्य
तदवयवपरत्वेन प्रातिपदिकग्रहणाभावात्। प्रातिपदिकत्वव्यदुपस्था-
पकपदोपादानं हि प्रातिपदिकग्रहणम्। ख्यत्यात्सूत्रे—"किमर्थं विकृ-
तनिर्देशो न सखिपतिभ्याम् इत्येवोच्येत, अतिसखेरित्यत्र मा भूदिति"
भाष्येऽपि ङ्यन्तप्रकृतिक एवायं। विहितविशेषणानाश्रयणेनैव प्रति-
पदोक्तपरिभाषानाश्रयणेनैवैतत् भाष्यं प्रवृत्तमिति न तद्विरोध इत्यल-

---

कमित्याशयेनाह—*ख्यत्यात्सूत्र इति*। ननु विकृतनिर्देशाभावेऽप्यति-
खेरित्यत्र लाक्षणिकत्वात्सखिशब्दस्य नोत्त्वनिमित्तत्वसम्भव इत्यत आह
*विहितेति*। एतेन 'लक्षणप्रतिपदोक्तपरिभाषया यथाऽसखीति नि-
षेधो न प्रवर्तते तथा "सखिपतिभ्याम्" इत्युच्यमानेऽपि नातिसख इ-
त्रातिप्रसङ्ग" इति "यस्य" इति सूत्रस्थभाष्यं ख्यत्यात्सूत्रस्थभाष्यविरु-
मिति विरोधोद्भावनन्निरस्तम्।

*अलमिति*। अनेनान्यदपि सूचितम्। तथाहि—लोपाभावेऽप्यति-
सखेरित्यत्र पूर्वान्तवद्भावेन सखिशब्दत्वेपि स्वाश्रयसख्यवयवभिन्नत्व-
श्रित्य घिसंज्ञेति तु न युक्तम्। अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्म-
ककार्याभावस्यातिदेशस्वभावसिद्धत्वात्। किञ्च पूर्वान्तवद्भावेन वि-
सखिशब्दत्वातिदेशे तदवयवेकारे सखिशब्दावयवत्वमार्थसमाजप्रस्त-
ति संज्ञा न स्यात्। किञ्च लिङ्गविशिष्टपरिभाषायाः प्रकृते न प्रवृत्ति
विभक्तौ लिङ्गविशिष्टाग्रहणमिति परिभाषया निषेधात्। एवञ्चातिस-
शब्दे घित्वम् भवत्येवेति।

अत्र प्राचीनानुयायिनः। यदि सख्यवयवभिन्नयोरिदुतोस्तन्तस्य
घिसंज्ञा तदा ख्यत्यादितिसूत्रस्थभाष्यविरोधः। तत्र हि अतिसखेरित्यत्र
भूदितिविकृतनिर्देशप्रयोजनकथनावसरेऽतिसखेरितिगुणघटितप्रयोगो
श्यते स भवन्मते नोपपद्यते। ननु तदपि ङ्यन्तप्रकृतिकमसखीतिपर्यु-
सस्तु न प्रवर्तते लाक्षणिकत्वादिति चेत्। एवं सति सखिपतिभ्यामि-
निर्देशेऽप्यतिव्याप्तिर्वारयितुं शक्यते। तेनोत्त्वे कर्तव्ये लक्षणप्रतिपदोक्त-
भाषा न प्रवर्त्तेत इति वक्तुमशक्यम्। एकस्मिन्नेव प्रयोगे तस्यैव परि-
भाषायाः प्रवृत्त्यप्रवृत्तेर्विरुद्धत्वात्।

किञ्च सखिशब्दस्य सख्यवयवे लक्षणाकल्पने गौरवम्। भाष्ये
यस्येति चेतिसूत्रस्थं त्वेकदेश्युक्तिः। तत्र हि "इवर्णस्य ईति किमुदा-

णम् । हे दाक्षि" । दाक्ष्या दाक्षेयः' । आद्ये दाक्षि । ई सु इति स्थिते शब्द-परविप्रतिषेधेन दीर्घात्पूर्वं ह्रस्वत्वं ततो दीर्घे सति तस्यैव श्रवणप्रसङ्गः । न चान्तरङ्गं दीर्घत्वम् । वार्णकार्यस्याबलवत्त्वेन ह्रस्वत्वस्यैव प्राप्तेः । द्वितीये दाक्षि इ आ इति स्थिते शब्दपरविप्रतिषेधेन यणादेशे परस्य कृते पूर्वस्ये-कारस्य श्रवणप्रसङ्गः। सवर्णदीर्घे कर्त्तव्ये यणादेशस्य स्थानिवत्त्वन्तु वक्तु-मशक्यम् । पूर्वपरावधित्वात् । न च यणि कर्त्तव्ये स्थानिवत्त्वम्, वर ई इती-कारप्रश्लेषेणेकारनिमित्तकावधिम्प्रति न स्थानिवदिति निषेधादिति तस्या-शयः । न त्वयं सिद्धान्तः । फलाभावात् । पट्व्या मृद्व्येत्यचः परस्मिन्नि-तिसूत्रस्थभाष्योदाहरणासङ्गत्यापत्तेश्च । तृतीये दाक्षि ई इति स्थिते स्त्री-भ्यो ढगिति ढकि परस्य लोपे पूर्वस्य श्रवणप्रसङ्गः । ताद्धितनिमित्तकः पूर्वस्य लोपस्तु वक्तुमशक्यः । परलोपस्य स्थानिवत्त्वात् । एवं सिद्धा-न्त्येकदेशिनोक्ते पूर्ववाद्याह—"नैतानि सन्ति प्रयोजनानि । सवर्णदीर्घत्वे-नाप्येतानि सिद्धानि" । अत्र कैयटः । 'यत्राङ्गवार्णयोर्युगपत्प्रसङ्गस्तत्र वार्ण-परिभाषाप्रसङ्गः । अन्तरङ्गम्बलीय इत्येतदपवादत्वात् । यद्यपि हे दाक्षी-त्यत्र पदस्य विभज्यान्वाख्यानेऽस्ति युगपत्प्राप्तिस्तथाप्यत्र क्रमेणान्वा-ख्यानमेव कल्प्यत इत्याशयः' । यण्ढकौ त्वाङ्गावेव न भवतः । ततः पुनः सिद्धान्त्येकदेशिनोक्तम् । 'अतिसखेरागच्छति । अतिसखेः स्वम्' इति । अस्याप्येकदेश्युक्तित्वं प्रागुपपादितमेवेत्याहुः ।

अत्रेदमवधेयम् । यदि सखिशब्दस्य तदवयवे लक्षणायाम्भाष्यान्त-रविरोधः स्यात्तदाऽस्य भाष्यस्यैकदेश्युक्तित्वं, तथातु न दृश्यते । किञ्च भाष्यकारस्येवर्णस्येति परे लोप इत्यस्येदम्मुख्यमेवोदाहरणमित्यभिप्रेत-मिति प्रतीयते । यथा हे दाक्षि । दाक्ष्या दाक्षेय इति प्रयोजनत्रयं व्युत्पा-द्य नैतानि सन्ति प्रयोजनानीत्युक्तन्तथाऽतिसखेरागच्छति अतिसखेः स्वमितिप्रयोजनकथनोत्तरमेतदपि न प्रयोजनमिति नोपन्यस्तम् । किन्तु 'इदन्तर्हि प्रयोजनम्' इति प्रदर्शितम् । तेनास्यै सिद्धान्त्युक्तित्वमेव । प्रयो-जनान्तरञ्च नोपन्यस्तम् । "ख्यत्यात्परस्य" इति सूत्रेऽप्येवमेव प्रयोगः कृतः । तस्मान् ङ्यन्तप्रकृतिक एवायम् । उक्तभाष्यद्वययोजनाय विहितवि-शेषणानाश्रयवल्लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिरपि तात्पर्यविषयैव । अत एव "ख्यत्यात्परस्य" इति सूत्रे 'सखिपतिभ्यामित्युच्यमाने इह न स्यात् । सखीयतेरप्रत्ययः । सख्युः पत्युः" इति । व्याख्यातञ्च कैयटेन 'विद्यमानं खमस्य स सखः । तमिच्छत्यात्मन इति क्यच् । क्यचि चेती-त्वम्' । यदि लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तिर्विवक्षिता स्यात्तदात्राव्याप्तिः स्फुटैव । न च "यस्येति" सूत्रेण ईति परे यदीवर्णलोपो न स्यात्तदा ङ्यन्त-स्य सखीशब्दस्य सखी सख्याविति प्रयोगौ दृश्येते तयोरुपपत्तिर्न स्यात्

पतिः समा। (पा०सू०१।४।८) एवकार इष्टतोऽवधारणार्थः। स्मृतिपुराणेषु 'पतये' 'सखिना' इत्यादिव्याकरणानिष्पन्नत्वेनासाधुत्वेव(१)। त्रिशङ्क्वाद्ययाज्ययाजनादाविव तपोमाहात्म्येनासाधुप्रयोगेऽपि ऋषीणां दोषाभावात्। याज्ञे कर्मण्येवासाधुप्रयोगे दोषाच्च(२) अस्माकमपि स्मृतिपुराणाऽध्ययनविधिबलात् तेषां तपोबलाच्च यज्ञ ध्येऽपि तदन्तर्गततत्पाठे दोषाभावः। स्वातन्त्र्येणेदृशं प्रयुञ्जाना अ स्मदादयः प्रत्यवयन्त्येव। अत एव नदीसञ्ज्ञासूत्रे भाष्ये "छन्दो वत्कवयः कुर्वन्तीत्युक्त्वा "न ह्येषेष्टिरस्ति" इत्युक्तम्। यू स्त्र्याख्यौ (पा०सू०१।४।३) इति सूत्रे हरदत्तग्रन्थे स्पष्टतरं चैतत्।

समास इत्युक्ते बहुच्पूर्वे न घित्वम्। अत एव 'पतिर्वृत्तावेव' इ नासूत्रि। वर्णसञ्ज्ञापक्षे पत्यवयवेकार इत्यर्थः। तदन्तसञ्ज्ञापक्षे त्यवयवेकारान्त इत्यर्थः। सूत्रे पतिशब्दश्च तदवयवेकारे लाक्षणिकः

---

"सख्यशिश्वि" इति ङीषि सवर्णदीर्घे एकादेशे पूर्वान्तवद्भावेनानङ् द्भावयोः प्रवृत्तिप्रसङ्गादिति तस्याः कथनेन न्यूनतेति वाच्यम्। प्रकृत भाष्यस्योपलक्षणत्वादिति।

*इष्टतोऽवधारणार्थ इति*। एवकाराभावे पतिशब्द एव समा घिसंज्ञक इत्यपि नियमाकारः स्यात्तथा चातिसखेरागच्छति। अतिस स्वमितिप्रयोगविरोधः स्पष्ट एव। "पतिः समासएव" इतिनियमे 'सीत याः पतये नमः,।

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ'।

इत्यादिस्मृतिपुराणीयप्रयोगाविरोधं परिहरति-*स्मृतिपुराणेष्वि दिना*। पतिरित्याख्यातः पतिरित्येवंरीत्याऽव्युत्पत्तिरन्यत्र स्फुटा। त्वादेरितिनिर्देशाद्विपरीतनियमो नेत्याश्रयणे तु प्रतिपत्तिगौरवम्। च्पूर्वेऽतिप्रसङ्गस्तस्यालक्षत्वे सम्भवति तत्रैव किन्मानमत आह- एवेति*। तस्यालक्ष्यत्वादेव। पतिशब्दस्य पत्यवयवेकारलाक्षणि

---

(१) केचित्तु "नष्टेमृते प्रव्रजिते क्लीबे च पतिते पतौ" इत्यत्र अविद्यमानः पतिः अपतिः इत्याभिप्रायेण 'अपतौ' इत्येव पदमिति वर्णयन्ति। अन्येतु 'सुपतिः' 'सुसखिः' इति सामासिकस्य पतिशब्दघटकस्य पूर्वपदस्य सोः "विनापि प्रत्ययं पूर्वोत्तरपदयो र्लोपो वाच्यः" इत्यनेन लोपेऽपि घिसंज्ञा न निवर्तते इत्याशयं प्रकटयन्ति।

(२) इदं च पू० मी० अध्या० ३ पाद० ४ सूत्रे २० स्पष्टम्। तथाच "नानृतं वदेत्" क्रत्वर्थं पुरुषार्थं वा इत्याशंक्य क्रतुयुक्तपुरुषधर्मस्यायं निषेधः। न केवलस्य पुरुषस्य इत्युक्तम्। विवाहादौ, अन्यस्य प्राणरक्षणे, चानृतवदनं न दोषाय इति स्मृत्युक्तं न विरुध्यते इति भावः।

एतेन 'शेषोध्यसखिपती' 'पतिसखी समास एव' इति वा सूत्र्यतामित्यपास्तम्। 'यस्येति च' इति सूत्रस्थभाष्यरीत्या सुपतिना सुसख्या इत्यादीष्टासिद्ध्या तथा न्यासस्य कर्तुमशक्यत्वादिति स्पष्टमेवेति दिक्।

नित्यं बहुवचनान्त इति। 'किमः संख्यापरिमाणे' (पा० सू० ५।२।४१) इत्यनेन किंशब्दाद् बहुत्वसंख्यावच्छिन्नसंख्येयविषयप्रश्न एव डतिरिति भाष्ये स्पष्टत्वादिति भावः।

बहुगण। संख्याप्रदेशेष्वैतत्सञ्ज्ञाकरणसत्त्वेऽपि तन्मूलकृत्रिमाकृत्रिमन्यायस्य न प्रवृत्तिः कर्त्तरि कर्मेत्यादाविव। अत एव "संख्याया अतिशदन्तायाः" (पा० सू० ५।१।२२) इति शदन्तपर्युदासः सङ्गच्छते। न हि शदन्ता कृत्रिमा संख्यास्ति। तस्मात्संख्याप्रदेशेषूभयगतिः। किं च लोकप्रसिद्धमहासंज्ञाकरणेन प्रदेशेषु लोकप्रसिद्धार्थस्याप्यवगतिरिति स्पष्टं भाष्ये। अत एव पञ्चकृत्व इत्यादिसिद्धिः। एतन्न्यायोपयोगस्त्वभ्यासाम्रेडितादिसञ्ज्ञाविषये द्रष्टव्यः। सूत्रे बहु-

---

फलमाह—*एतेनेति*। *सुसतिना सुसख्या इत्यादीष्टेति*। "शेषो ध्यसखिपति" इतिन्यासे सुपतिनेत्यस्यासिद्धिः। सखिशब्दस्य सख्यवयवलाक्षणिकत्ववत्पतिशब्दस्यापि पत्यवयवे लक्षणा वाच्या। अन्यथा सख्यवयवभिन्नत्वमिकारस्य विशेषणं पतिभिन्नत्वं त्विकारान्तस्य विशेषणमित्येकधर्मावच्छिन्नेऽन्वयाभावेन द्वन्द्वानुपपत्तिः स्यात्तथा च सुपतिनेत्यस्यानुपपत्तिः स्फुटैव। किञ्च पतिश्च मित्रञ्चेति सहविवक्षायां द्वन्द्वे पतिमित्रे इत्येवेष्यते तस्यासिद्धिरित्यपि बोध्यम्। पतिसखी समास एवेतिनियमे सुसख्येत्यस्यासिद्धिर्बोध्या।

कतिशब्दस्य नित्यबहुवचनान्तत्वोपपत्तिमाह—*किमः संख्येत्यादि*। *भाष्ये स्पष्टत्वादिति*। तत्र हि "किमित्येतत्परिप्रश्ने वर्तते। परिप्रश्नश्चानिर्ज्ञाते। अनिर्ज्ञातश्च बहुषु भवति। द्व्येकयोः पुनर्निर्ज्ञातमेव" इत्युक्तम्। एवञ्च बहुत्वावच्छिन्नस्यात्र नियमेनोपस्थित्या बहुवचनान्तत्वं न्याय्यमेवेति भावः। *न प्रवृत्तिरिति*। "उभयगतिरिह भवति" इतिपरिभाषासत्त्वादिति शेषः। *अत एव*। तादृशपरिभाषासत्त्वादेव। एवञ्च शदन्तपर्युदास एव तस्यां परिभाषायां ज्ञापकः। *अत एव*। लोकप्रसिद्धार्थकस्य ग्रहणादेव। *एतन्न्याय इति*। कृत्रिमाकृत्रिमन्यायेत्यर्थः। ननु बहुगणशब्दस्यापि संख्याप्रदेशे एकादिशब्दानामिव ग्रहणे सिद्धे सूत्रेऽनयोरुपादानं व्यर्थमत आह—*सूत्रे बहुगणग्रहणन्त्विति*।

गणग्रहणं तु तयोर्नियतविषयपरिच्छेदहेतुत्वाभावेनासंख्यात्वात्। बहुत्वादि हि त्र्यादिसंख्याव्यापको धर्मविशेषः। अत एव भाष्ये "एतत्सूत्रमतिदेशार्थं यदयमसंख्यां संख्येत्याह" इत्युक्तम्।

यत्तु भाष्ये "एकादिकया चापि संख्यायते" इत्युक्तं। तस्या-यमर्थः—बह्वादिकयापि स्वव्याप्यत्रित्वादिसंख्यया संख्यायते। चापि शब्दोऽपि संख्यानकरणीभूतार्थविषयप्रकृत्यर्थकतया संख्यानकरणम्। एवं च वत्वन्तेऽप्यूह्यम्। यद्वा चापिशब्दौ वाक्यालङ्कारे एकादिकया संख्यायते सापि प्रदेशेषु यथा गृह्येतेति लोकप्रसिद्धमहासञ्ज्ञाकरण-मिति तदर्थः। एतेन 'अर्थान्तरवाचित्वे सति बहुत्ववाचिनश्चेत्संख्या-कार्यन्तर्हि बहुगणयोरेव' इति नियमार्थं तत्। तेन भूर्यादीनां न, तेषां वैपुल्याद्यर्थान्तरवाचित्वात्। वैपुल्यं विशालता। विशेष्यविशेषण-लाभ्यामबहुत्ववाचिन एकशब्दस्य बह्वर्थमात्रवाचिना त्र्यादीनाञ्च व्यावृत्तिः। यद्वा 'अनियतसंख्यावाचिनाञ्चेद् बहुगणयोरेवेति नियमः'। अनन्तशब्दवदनन्तवाचिशतशब्दस्य संख्याकार्याभाव इष्ट एवेत्यपास्तम्। सङ्घवैपुल्यवाचकयोर्नेह ग्रहणं परस्परसाहचर्यात् त्र्यादिसंख्याव्यापकधर्मवाचिनोरेव ग्रहणात्। 'वतु' इति सानुबन्धनिर्देशो 'ब्राह्मणवत्' इत्यादिव्यावृत्त्यर्थः। डतिस्तद्धित एव गृह्यते

---

एतत्तत्त्वं पूर्वत्रावेदितम्। *नियतविषयपरिच्छेद इति*। नियतो यो विषयपरिच्छेदस्तद्धेतुत्वादित्यर्थः। परिच्छेदे नियतत्वञ्चेतरव्यावृत्तविषयकत्वम्। परिच्छेदो ज्ञानविशेषः। बहुगणयोर्न साक्षात्तथात्वमिति भावः। *त्र्यादि-संख्याव्यापकः*। त्र्यादिसंख्या व्याप्या यस्य सः। *अत एव*। बह्वादीनामसंख्यात्वादेव। एवं सति यद्भाष्ये उक्तम् "एकादिकया चापि संख्यायत" इति तद्विरोधः।

अत्रापि शब्दस्वारस्येन यथा बह्वादिकया संख्यायते तथा एकादिकयाप्यतोऽनयोरपि ग्रहणमित्यत आह—*यत्तु भाष्य इति*। *एवञ्च संख्यानकरणत्वं यथाकथञ्चिद्विवक्षितन्न साक्षादिति न विरोधः। प्राचीनोक्तं खण्डयति—*एतेनेति*। उक्तभाष्यविरोधेनेत्यर्थः। *बहुत्ववाचिन इति*। बहुवाचिन इत्यर्थः। लाघवान्नियमशरीरान्तरमाह—*यद्वेति*। ननु यदीदं सूत्रन्न नियमार्थं तदा सङ्घवैपुल्यवाचकयोरपि ग्रहणं प्राप्नोतीत्यत आह—*संघवैपुल्येति*।

सहचर्यादित्यलम् ।

'ष्णान्ता' इत्यतः षडिति वर्त्तते संख्येति च प्रकृतं तदाह-डत्यन्तेति । अत एव 'षट्कति' इति डडनुवादेन थुग्विहितः । अत एव सञ्ज्ञाविधावपि प्रत्ययग्रहणे तदन्तग्रहणम् । संख्येति किम् ? पतयः ।

प्रत्ययस्य (पा०सू०१।१।६१) । अनेकसञ्ज्ञाकरणात् आवृत्त्या विभक्तिविपरिणामेन च तद्भावितसञ्ज्ञाश्रयणम्, अतो न सङ्करः । तेन 'हन्ति' इत्यादौ 'श्लौ' इति द्वित्वं न तदाह-लुक्श्लुलुप्शब्दैरिति । 'अदर्शनं लोपः' (पा०सू०१।१।६०) इत्यतोऽदर्शनमित्युवर्त्तते । प्रदेशेषु भाविसञ्ज्ञाविज्ञानान्नान्योन्याश्रयः । एकसञ्ज्ञाप्रकरणादन्यदेशस्थत्वेन लोपसञ्ज्ञया आसां समावेशः । तेन प्रत्ययलक्षणसिद्धिः ।

षड्भ्यो (पा०सू०७।१।२२) । 'जश्शसोः शिः' (पा०सू०७.१।२०) इत्यतो जश्शसोरिति वर्त्तते । षड्भ्य इति विहितविशेषणम् । तेन गौणे न । परमपञ्चेत्यादौ तु विशिष्टस्यापि संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वेन संख्यावाचितया षट्त्वमस्त्येवेति न दोषः । स्पष्टञ्चेदं "षट्प्रधान एष समास" इत्यादिना सर्वादिसूत्रे भाष्ये । कैयटस्य तु प्रमाद इत्यन्यत्र निरूपितम् ।

---

संख्यानकरणत्वं परम्परयापि न डतिमात्रस्यापि तु तदन्तस्येति संज्ञाविधावपि तदन्तविधिरित्याशयेनाह-*डत्यन्तेतीति* । *अत एव* । तदन्तस्य संज्ञासत्त्वादेव ।

*करणादावृत्त्येति* । अन्यथा समानफलकानेकसंज्ञाकरणस्याप्रामाणिकत्वमितिन्यायविरोधः स्यात् । ननु संज्ञात्रयकरणादसमानफलकत्वं कल्प्यत इत्यत आह-*तेन हन्तीति* । समानफलकत्वाकल्पनेऽप्यतिप्रसङ्गः स्यादेवेति भावः । लोपसंज्ञया आसां समावेशमुपपादयति-*अन्यदेशस्थत्वेनेति* ।

*गौणे नेति* । प्रियपञ्चान इत्यत्र नेत्यर्थः । नन्वेवन्तदन्ते परमपञ्चेत्येव कथन्निर्वाह इत्यत आह-*परमपञ्चेत्यादाविति* । *स्पष्टञ्चेदमिति* । उपसर्जनप्रतिषेधखण्डनाय "अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तदन्तस्येत । यद्येवम्परमपञ्चेत्यत्र लुङ् न प्राप्नोति । षट्प्रधान एष समास" इत्यादिना । *प्रमाद इति* । तेन हि गृह्यमाणविभक्तेरित्वस्यैवं व्याख्या

प्रत्ययलोपे (पा०सू०१।१।६२)। प्रत्ययस्येत्यनुवृत्त्या कि आद्यप्रत्ययग्रहणमवयवलोपे मा भूत्। तेन 'आग्नीये' इत्यादौ नानुनासिकलोप इति स्पष्टं भाष्ये। इदमेव प्रत्ययग्रहणञ्ज्ञापकमवयवेऽपि प्रत्ययत्वव्यवहारस्य। एवञ्च 'आदेशप्रत्यययोः' (पा०सू०८।३।५९) "इणु पधस्य" (पा०सू०८।३।४१) इत्यनयोर्लक्षणादि नाश्रयणीयं "सात्पदाद्योः" (पा०सू०८।३।१११) इति च चरितार्थम्।

स्थानिवत्सूत्रेण सिद्धे इदं सूत्रं नियमार्थमिति भाष्यम्। प्रत्ययस्यासाधारणं रूपं यत्राश्रीयते तत्रैवेति। न चैवं "दाधर्ति" (पा०सू०७।४।६५) सूत्रे "तेतिक्ते इति किं निपात्यते? आत्मनेपदं नैतदस्ति 'अनुदात्तङित' (पा०सू०१।३।१) इत्येव सिद्धं। नियमः तर्हि भविष्यत्यत्रैव यङ्लुगन्तस्य, नान्यत्र वेभिदीति" इत्युक्तम्। अस्य नियमत्वे तेनात्मनेपदं दुर्लभं ङित्त्वस्य प्रत्ययासाधारणत्वादिति वाच्यम्। आत्मनेपदमित्यस्यैव सिद्धान्तत्वात्ततो विद्ध्यर्थमिदमिति वार्तिकानुसारिणा 'अनुदात्तङित' इत्येव सिद्धमिति शङ्किते तदनुसार्येकदेशिन एव तत्समाधानमित्यदोषात्त्यन्यत्र विस्तरः।

---

कृता गृह्यमाणानां सम्बन्धिनी या विभक्तिस्तदर्थगतसंख्याकर्मादिवाचि तस्या इत्यर्थः। *यद्यवमिति*। गृह्यमाणात् या विहिता विभक्तिरित्येवं स्वन्धं मन्यमानस्य प्रश्नः। *आर्थः सम्बन्धो गृह्यते इत्युत्तरेऽभि इति*। परन्त्वस्य भाष्यग्रन्थस्य गृह्यमाणाद्विहितविभक्तेरित्यर्थः स्वारसि प्रतीयते एवं सति परमपञ्चेत्यत्र लुङ् न प्राप्नोति। लोके गणनायां प्र द्धानाङ्ग्रहणं न हि परमपञ्चादयस्तथा प्रसिद्धा इति प्रश्नः। संख्या कारकसंख्येयविशेष्यकप्रतीतिजनकत्वेन विशिष्टस्यापि षट्त्वमस्त्येव नायां प्रसिद्धानामेव ग्रहणमित्यत्र मानाभाव इत्युत्तरेऽभिप्रायः। कमन्यत्र स्फुटम्॥

*मा भूदिति*। प्रत्ययपदम्प्रत्ययत्वपर्याप्त्यधिकरणपरमिति भावः इदमेव प्रत्ययपदम्प्रत्ययावयवेऽपि प्रत्ययत्वव्यवहारस्य गमकमिति युक्त मेव। एतत्फलमाह-*एवञ्चेति*। *प्रत्ययावयवेऽपि*। प्रत्ययत्वव्यवहा रस्य युक्तत्वे साधकान्तरमाह-*सात्पदेति*। अन्यथा सातेः सक प्रत्ययत्वाभावादेव षत्वनिषेधस्तद्वैयर्थ्यं स्पष्टमेव। *तत्रैवेतीति*। तेन

प्रत्ययलोपे प्रत्ययवदिति सिद्धे लक्षणग्रहणं प्रत्ययनिमित्तकमेव न तु प्रत्ययस्थानिकमित्यर्थलाभार्थं । तेन नखभिन्न इत्यादौ ऐसादिकं नेत्येके । अतिदेशेनाहार्यतद्बुद्धिसम्पादनेऽप्युच्चारणाप्रसङ्गरूपषष्ठ्यर्थाभावान्नैसादीति तद्व्यर्थमित्यपरे ।

कार्यमिति । प्राधान्यात्(१)कार्यातिदेशोयमिति भावः । "इहापि परिवीरिति शास्त्रपरविप्रतिषेधेन परत्वादीर्घत्वं भविष्यति" इति भाष्येण(२) तृज्वत्सूत्रे(३) शास्त्रकार्यातिदेशयोरैक्यकथनेन चातिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इत्यङ्गीकारात् 'परिवीः' इत्यत्र तुक्दीर्घौ पर्यायेण न । किं तु दीर्घ एव, परत्वात् । अन्यथानेनैवोभयोर्विधानात्परत्वाभावेन पर्यायो दुर्वार इति बोद्ध्यं, तदाह—जसि चेति गुणे प्राप्ते इति । (जसि चेति विहितेऽनेन गुणे प्राप्ते इति) (४) ।

न लुमता (पा० सू० १।१।६३) लुशब्दयुक्ता लुमन्तस्तदाह-

त्यासाद इत्यत्र दीर्घाभावः । न च 'गवे हितम्' इत्यादावचत्वावच्छिन्ननिमित्तकेऽवादेशेऽल्विधित्वात्स्थानिवद्भावाभावादिदं विध्यर्थमिति शङ्क्यम् । अच्त्वस्यापि प्रत्ययासाधारणत्वाभावात् । *प्रत्ययनिमित्तकमेवेति* । लक्षणशब्दस्य निमित्तपरत्वात् । *इत्येके इति* । प्राञ्चः । *अपर इति* । सिद्धान्तिनः ।

ननु प्रत्ययनिमित्तकं कार्यं स्यादिति व्याख्याने प्रत्ययलोपसूत्रेणैव कार्यप्राप्तिर्वाच्या । एवं सति परिवीरित्यत्र व्येञः क्विपि सम्प्रसारणे कृते क्विपो लोपे प्रत्ययलोपशास्त्रेण तुग्दीर्घत्वयोः प्राप्तौ पर्यायस्तयोः स्यादेकदेशस्थत्वादत आह—*इहापीति* । प्रतिपादितमिति शेषः । *अन्यथा* तद्देशस्थत्वानङ्गीकारे ।

(१) *प्राधान्यादिति* कार्यार्थत्वाच्छास्त्रस्येति शास्त्रातिदेशापेक्षया कार्यातिदेशस्य प्राधान्यमिति भावः ।

(२) भाष्येणेति । प्रकृतसूत्रस्थेनेत्यर्थः ।
इदं भाष्यं-तुक्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिः, एकयोगलक्षणत्वात् परिवीरित्यनुवादपूर्वकं 'नैषदोषो' वक्ष्यत्यत्र परिहारम्' इत्युक्तेरनन्तरं बोध्यम् ।

(३) *तृज्वत्सूत्रे इति* तत्रहि-"किं पुनरयं शास्त्रातिदेशो तृचो यच्छास्त्रं तदतिदिश्यते आहोस्वित् रूपातिदेशः, तृचो यद्रूपं तदतिदिश्यते" इति विकल्पोपपादनावसरे कार्यातिदेशपक्षो नोपक्षिप्त इति शास्त्रकार्यातिदेशपक्षयोरैक्यमकथितमपि कथितप्रायमितिबोध्यम् । अतएव अत्र कैयटः-'कार्यातिदेशस्तु शास्त्रातिदेशादभिन्नत्वात् पृथग् नोपन्यस्त' इति ।

(४) चिह्नितोऽयं ग्रन्थोऽधिकः । क्वचिद्धस्तलिखितग्रन्थे चास्ति ।

लुगित्यादि । अङ्गकार्यमिति । लुप्तप्रत्यये परतो यः पूर्वस्तत्प्रकृतिभूतो लब्धाङ्गसञ्ज्ञकस्तदुद्देश्यकं यत्कार्यमाङ्गमनाङ्गं चेत्यर्थः । तेन 'पञ्च'इत्यादौ पदसञ्ज्ञा भवति । (१)राजपुरुषादौ भसञ्ज्ञा च न । अङ्गसञ्ज्ञा तु यथोद्देशत्वात्प्रत्ययसत्ताकाले जाता तिष्ठत्येव । तत्काले कार्याभावादप्रवृत्तावपि प्रत्ययलक्षणेन सा । तस्या लब्धाङ्गसञ्ज्ञककार्यत्वाभावेन निषेधाप्रवृत्तेः । स्पष्टश्चेदं "युवोरनाकौ"(पा० ७।१।१) इत्यत्र कैयटे । न लुमतेत्यस्यानित्यत्वादङ्गसञ्ज्ञाया...

सूत्रस्य सिद्धान्तार्थमाह—*लुगित्यादि* । *लब्धाङ्गसंज्ञकेति* । लुप्तप्रत्ययनिरूपितेत्यादिः । *तेन* । लुप्तप्रत्यये परतो यः पूर्वस्तदुद्देश्यकनिषेधेन । *भसंज्ञा च नेति* । सुविति पदसंज्ञा यथा समुदायोद्देश्यिका तथा भसंज्ञा न समुदायोद्देश्यिका, किन्तु लुप्तप्रत्यय परतो यः पूर्वस्तदुद्देश्यिकेति भसंज्ञायां प्रत्ययलक्षणप्रतिषेध इति भसंज्ञा नेत्यर्थः । अङ्गसंज्ञा लुप्तेपि प्रत्यये भवति तथोपादयति–*असंज्ञा त्विति* । एवञ्चाङ्गसंज्ञायां नलुमतेतिनिषेधाभावादङ्गसंज्ञायां लब्धाङ्गसंज्ञकोद्देश्यकभत्त्वे प्रत्ययलक्षणप्रतिषेधाद्भत्वे कर्त्तव्ये निषेधः प्रवर्त्तते ।

*कैयटे इति* । तत्र हि–"युवुशब्दान्तस्याङ्गस्यानाकौ भवत इत्युक्ते नन्दनप्रियः कारकप्रिय इत्यत्र वाक्यस्य विभज्यान्वाख्याने नन्दनशब्दात् कारकशब्दात् च या विभक्तिस्तस्याः सुपो धात्विति लुकि कृते स्तार्थप्राप्नुत" इति पूर्वपक्षे अङ्गावयवयोर्युवु इत्येतयोरनाकौ भवत इत्यर्थप्रायेण "मा भूतां यासौ सामासिकी विभक्तिस्तस्यां । यासौ समासाद्विभक्तिस्तस्यां भविष्यत" इति समाधाने कृते "यत्र तर्हि समासाद्विभक्तिर्नास्ति नन्दनदधि । कारकदधि" इति पुनः शङ्कायाम् "एवन्तर्हि न वा परनिमित्तं संज्ञा च प्रत्ययलक्षणेन । न वेह परन्निमित्तमाश्रीयते अस्मिन् युवोरनाकौ भवत इति । किन्तर्हि अङ्गस्य युवोरनाकौ भवतः अङ्गसंज्ञा भवति प्रत्ययलक्षणेन' इति भाष्ये उक्तम् ।

अत्र कैयटः 'न हीह विभक्तिः प्रत्ययान्तरं वा निमित्तत्वेनोपात्तमिति प्रत्ययलक्षणत्वमनाकयोर्नास्तीति नलुमताङ्गस्येति प्रत्ययलक्षणप्रति...

(१) अलक्ष्ये अप्रवृत्युपपादनेनातिव्याप्तिं परिहृत्य अनाङ्गं वा इत्यस्य फलं दर्शयन् ... दर्शयति–*राजेति* ।

ननु वार्तिकमते प्रत्ययलक्षणेन प्रकृते भसंज्ञायाः प्राप्तावपि भाष्यमते ऽल्विधित्वात् सा न ... इत्यत आह–आदाविति । आदिना यशस्विनमाचष्टे 'यशा' इत्यादिसंग्रहः ।

तत्र विन्मतोलुगिति विनो लुकि प्रत्ययलक्षणेन तसौ मत्वर्थे इति भसंज्ञायाः प्राप्तौ ... पदान्तत्वात् विसर्गो न स्यात् उक्तविधनिषेधे तु न दोष इति भावः ।

वृत्तिरिति तत्त्वमिति कश्चित्(१)। अत एव पञ्चभिः क्रोष्टीभिः क्रीतं कुलमिति "तद्धितार्थेति" समासे ठको "अध्यर्द्धेति" लुकि "लुक्तद्धितेति" स्त्रीप्रत्ययलुकि पञ्चक्रोष्टृ इत्यत्र तृज्वत्त्वम् । तदुक्तं भाष्ये तृज्वदिति सूत्रे "न चापरं निमित्तमाश्रीयते किं तर्हि: ? अङ्गस्य क्रोष्टुस्तृज्वदिति; अङ्गसञ्ज्ञा च भवति प्रत्ययलक्षणेन" इति । न चोरदत्ववत् तृज्वत्त्वेऽपि परनिमित्ताश्रयणमिति 'पञ्चक्रोष्टृ' इत्यस्यासिद्धिरिति वाच्यम् । 'उरत्'इत्यत्र शब्दतः परस्य निमित्तत्वानाश्रयणेऽपि अङ्गसञ्ज्ञाद्वारोरदत्वस्यापि परनिमित्तकत्वेन स्थानिवत्त्वप्रवृ-

---

त्त्यायमविषयः । केवलमङ्गस्य युवोरनाकौ भवत इत्युच्यते। अस्ति च प्रत्ययलक्षणेनाङ्गसंज्ञा । नहि तस्यां विधीयमानायां नलुमताङ्गस्येत प्रतिषेधः प्रवर्त्तत लब्धाङ्गसंज्ञकस्य कार्यान्तरे विधातव्ये स प्रतिषेधः प्रवर्त्तते। न चाङ्गसंज्ञाऽङ्गस्य कार्यमिति प्रतिषेधाभाव' इति । अत्र कैयट इत्यनेनारुचिः सूचिता । "न लुमता तस्मिन्" इति वार्त्तिकरीत्याङ्गपदं पूर्वत्वोपलक्षणमित्यङ्गसंज्ञायामपि प्रतिषेधः प्राप्नोतीति तस्मान्नलुमतेतिनिषेधानित्यत्वेनाङ्गसंज्ञा भवतीति भाष्याशयः कल्प्यः । *अत एव* । न लुमतेतिनिषेधानित्यत्वादेव । *स्त्रीप्रत्ययलुकीति* । न चाकृते तृज्वत्त्वङ्गदन्तत्वविरहात्स्त्रीप्रत्यय एव कथमिति शङ्क्यम् । पिप्पल्यादिगणे पृथिवी क्रोष्टु मातामह पितामहेतिपाठात्तृज्वद्भावात् पूर्वमपि स्त्रीप्रत्ययप्रवृत्तेः। ननु तृज्वत्सूत्रस्थभाष्योक्तरीत्या यत्राङ्गस्येत्यस्योपस्थितिस्तस्य परनिमित्तकत्वन्न स्यात्। एवञ्चोरदत्त्वस्य परनिमित्तकत्वाभावात्स्थानिवद्भावस्याप्राप्त्या 'वव्रश्च' इत्यत्र वकारस्य "न सम्प्रसारण" इति सम्प्रसारणनिषेधो न स्यादिति तस्यावश्यम्परनिमित्तकत्वमाश्रयणीयमिति पञ्चक्रोष्टु इत्यस्यासिद्धिरित्याशयेन शङ्कते-*न चेति*। *अङ्गसंज्ञाद्वारेति* । अङ्गस्येत्यनेन सह तस्य

---

(१) *कश्चिदिति* । अनेन 'नलुमता तस्मिन्' इति वार्तिकन्यासानुसारिमते नेदमित्यस्वरस उद्भावितः। प्रकृतसूत्रे भाष्ये हि अङ्गस्येत्यस्य स्वरितत्वेन अङ्गाधिकारपरत्वं परिकल्प्य 'लुमतालुप्ते प्रत्यये अङ्गाधिकारविहितं कार्यं न भवति' इति सूत्रार्थे 'जिगमिषे' इत्यत्र 'अतो हेः' इति लुकि 'गमेरिट् परस्मैपदेषु इति इट् न स्यात्, 'संविवृत्से' इत्यत्र च 'न वृद्भ्यश्चतुर्भ्यः' इति प्रतिषेधो नस्यात्, इति न्यासो वार्तिककृतोऽपक्षिप्तः । लुमता यो लुप्तः प्रत्ययः तस्मिन यत् कार्यं माङ्गमनाङ्गं वा तन्न भवति इति तदर्थः। तथा सति लुमता यो लुप्तः प्रत्ययः तस्मिन् परतः कार्याभावात् निषेधाप्रवृत्त्या जिगमिषे इत्यत्र इड्विधिः । संविवृत्से इत्यत्र च प्रतिषेधश्च सिद्धः । अत्र परस्मैपदस्योपलक्षणत्वं परिकल्प्य परस्मैपदोलक्षितसादेर्धातुकस्येत्यर्थाभ्युपगमे परस्मैपदस्योपलक्षणत्वाश्रयणे गौरवम् । किञ्च 'इह किंचित् त्रपो' इतिसाध्यात् सम्बुद्धे विषये क्लृप्तस्य निषेधानित्यत्वस्याङ्गसञ्ज्ञायामपि तत्र न्यासे कल्पनीयमिति गौरवञ्च बोध्यम् ।

अङ्गसञ्ज्ञानित्यत्वफलं दर्शयन्नाह—*अत एव इति* ।

त्तिरित्येव 'लिट्यभ्यासस्य' (पा०सू०६।१।१७) इति सूत्रस्थभाष्या-
शयात् । नियमतः परबुद्धेः पूर्वप्रवृत्तितया परनिमित्तत्वात् । अत एव
चर्करीति(१)अजर्घा इत्यादौ तत्प्रवृत्तिः । अचिश्नु (पा०सू०६।४।७७)
इत्यादावजादिप्रत्यय इत्यर्थस्तु अङ्गस्येति षष्ठ्या निमित्ते इत्यध्याहा-
रेण तस्य विशेष्यतया यथाकथञ्चिदुपपाद्यः । आकडाराधिकारस्थ
कार्यकालत्वस्याभावाच्च । (वस्तुतस्तु)

एतेन कार्यकालपक्षेऽपि क्रोष्टुशब्दः प्रत्यये ऽङ्गसञ्ज्ञो भवति
अङ्गसञ्ज्ञकस्य च तस्य तृज्वत्त्वं स्त्रियामित्येवार्थः । "उरत्" (पा०
सू०७।४।६६) इत्यादौ तु आवृत्त्याऽत्त्वं प्रति निमित्ततापि वव्रश्चे
लक्ष्यानुरोधात् । तथा प्रकृते, लक्ष्यानुरोधादेवेति तदाशयः । पदै

---

सूत्रस्यैकवाक्यतयाङ्गत्वज्ञानस्य वाक्यार्थज्ञाने कारणतयाऽङ्गत्वज्ञानस्य
प्रत्ययज्ञानप्रयोज्यतयोरदत्वस्यापि परप्रयोज्यत्वेन स्थानिवद्भावप्रवृत्ति-
रित्येव भाष्यप्रामाण्यात्कल्प्यते, न तूरदत्वस्य परनिमित्तकत्वं साक्षादि
भाष्ययोराविरोध इति भावः ।

एतन्मते च लुप्तप्रत्यये परतो यः पूर्वो लब्धाङ्गसंज्ञक इत्यर्थो न, किन्तु
तादृशप्रत्ययपूर्वस्य यत्कार्यमाङ्गमनाङ्गं वा तस्मिन् कार्ये निषेध इत्येव वि-
वक्षितम् । *अत एव* । अनित्यत्वेन "न लुमता" इतिनिषेधाप्रवृत्त्याऽङ्ग-
संज्ञासत्त्वादेव । *यथाकथञ्चिदिति* । शब्दाध्याहारणोपपादनात्क्लेश
अत्र कार्यकालपक्षमाश्रित्य 'वव्रश्च' इत्यस्य सिद्धिः कैयटेनोक्ता सा
चिंतेत्याशयेनाह-*आकडाराधीति* । कार्यकालत्वमभ्युपेत्याप्याह-*व-
स्तुतस्त्विति* । *एतेन* पदैकवाक्यतयाऽन्वयासम्भवेन । *आवृत्त्या*
अङ्गस्येत्यस्यावृत्त्या । *प्रकृते* । "युवोरनाकौ" "तृज्वत्क्रोष्टुः" इत्या-
च । लक्ष्यानुरोधात् । नन्दनदधि । कारकदधि । पञ्चक्रोष्टृ इत्यादि
क्ष्यानुरोधादित्यर्थः । *तदाशय* । युवोरित्यादिसूत्रस्थभाष्याशय
ननूकरीत्योरदत्वस्य परनिमित्तकत्वे चर्करीतीत्यादावत्वं कथं

---

(१) ननु 'प्रत्यये परतो यस्मात् प्रत्ययविधिः तदङ्गतदवयवाभ्यास ऋवर्णस्य अत्' इत्येव
सूत्रस्यार्थः । तथा सति यङ्लुकमादाय 'चर्करीति इत्यत्र नलुमताङ्गस्येति निषेधप्रवृत्तावपि ति
काङ्गसञ्ज्ञाया अक्षतत्वात् अत्वप्रवृत्तिर्दुर्वारा, इत्यरुचेरुदाहरणान्तरमाह—*अजर्घा इति* । अत्र
त्वात् पूर्वं हल्ङ्यादिलोपे प्रत्ययपरकत्वाभावात् तन्निमित्तोरदत्वानापत्तिः । प्रत्ययलक्षणं तु
प्रवर्तते । न च प्रत्ययत्वस्यालानल् साधारणधर्मत्वेन स्थान्यल्साधारणत्वाभावादनल्विधाविति
प्रवृत्त्या प्रत्ययलक्षणं दुर्वारमिति वाच्यम्, स्थान्यल्वृत्तिधर्ममात्राश्रयणे अनल्विधाविति
भ्युपगमात् । यदितु स्थान्यल्साधारणधर्माश्रयणे एव तन्निषेधप्रवृत्तिरित्युपेयते तदा चिन्त्यमेतत् ।

वाक्यतयाऽन्वयस्तु सञ्ज्ञासूत्राणां दुर्लभ इत्यन्यत्र निरूपितम् । 'चर्करीति' 'अजर्घाः' इत्यादौ तु न लुमतेति निषेधानित्यत्वादप्रवृत्तिः 'त्रपो' इत्यादौ गुणवत् । अङ्गाक्षिप्तप्रत्ययनिमित्तं लुकि भवत्येवेति तु 'भ्रुवे हितं भ्रूहित' मित्यादावुवङःपत्त्या चिन्त्यमित्यपास्तम् ॥

त्रिषु सरूपा इति । 'ङेप्रथमयोरिति' (पा०सू०७।१।२८) सूत्रे युष्मान् इत्यादौ 'तस्माच्छसो नः (पा०सू०६।१।१०३) इत्युपन्यासपरेण भाष्येण 'स्वमोर्नपुंसकात्'(पा०सू०७।१।२३) इति सूत्रे "शिशीनुमादिभिर्युष्मदाद्यादेशानां विप्रतिषेध" परेण वार्त्तिकेन तद्भाष्येण च 'न षडिति' निषेधेन च लिङ्गसत्ताबोधनेऽपि लिङ्गबोधकप्रत्ययानुत्पत्त्या रूपे न विशेष इत्यर्थः । 'साम आकमिति' (पा०सू०७।१।३३) सूत्रस्थस्य "अलिङ्गे युष्मदस्मदी" इति भाष्यस्य पदान्तरसान्निधानं विना लिङ्गविशेषो युष्मदस्मच्छब्दमात्रान्न प्रतीयत इत्यर्थ इति दिक् ।

त्रेस्त्रयः (पा०सू०७।१।५३) अयं न सान्तो 'त्रिजां त्रयाणामिति निर्देशात् । (१)त्रेरयङ् न कृतः । "अयङ्यि" इत्यादावित्रोच्चारणार्थत्वशङ्कावारणाय । केचिदिति । 'आमि सर्वनाम्नः' इति-

---

आह—*चर्करीत्यजेति* । चर्करीति अजर्घा इत्यस्य सिद्ध्यर्थमन्यकल्पितमर्थन्निरस्यति—*अङ्गाक्षिप्तेति* । पदैकवाक्यताऽन्वयो न संभवतीत्याशयेनाह—*अपास्तमिति* । किञ्चाङ्गसंज्ञाद्वारकपरम्परयोरादित्यस्य परनिमित्तकतया भाष्योक्तप्रयोजननिर्वाहाद्भाष्यानुक्तावृत्तिकल्पनं गौरवग्रस्तमित्यपि बोध्यम् ।

युष्मदादीनां त्रिषु सारूप्यमात्रमुक्तन्न त्वलिङ्गत्वमत एवालिङ्गाव्ययसन्निधान एवैषान्निरूपणन्न कृतमित्याशयेनाह—*ङेप्रथमयोरमिति सूत्र इत्यादि* । "साम आकम्" इतिसूत्रस्थभाष्यविरोधं परिहरति—*साम आकमितीति* ।

*शङ्कावारणयेति* । न च "त्रिजां त्रयाणाम्" इतिनिर्देशात्सकारान्तत्वशङ्काया इवास्या अप्याशङ्काया वारणम्भविष्यतीति वाच्यम् । अस्य ग्रन्थस्य दोषोपलक्षणत्वात् । तेन परमत्रिशब्दादाख्यानार्थे णिचि टिलोपे तत क्वौ णिलोपे च कृते क्वौ लुप्तमिति स्थानिवत्त्वनिषेधे निर्दि-

---

(१) ननु 'त्रेरयङ्' इति न्यासे ङस्येत्संज्ञा लोपयोः कल्पनेन, त्रयादेशे अधिकैकमात्रोच्चारणेन समत्वेऽपि त्रये त्रयादेशे सान्तत्वाभावे निर्देशाश्रयणेन गौरवात् 'त्रेरयङ्'इत्येव न्यासः कर्तव्य इत्याभिप्रायं खण्डयन्नाह *त्रेरयङ् न कृत इति* ।

साहचर्यादिति भावः । वस्तुतस्त्विति । साहचर्यस्यासार्वत्रिकत्वात् सूत्रान्तरस्थतदाश्रयणे दृढतरप्रमाणाभावाच्चेति भावः । न च गौण मुख्यन्यायेनात्र नेति वाच्यम् । अप्रसिद्धत्वगौणलाक्षणिकत्वान्यतर रूपगौणत्वाभावात् । अत एवोपसर्जनानां सर्वनामत्वनिषेध आरब्धो वार्त्तिककृता । इतरविशेषणतामात्रेण तत्त्वाभावात् । पदकार्य एव तत्र वृत्तेश्चेत्यन्यत्र विस्तरः ।

द्विशब्दो नित्यन्द्विवचनान्त इति । संख्यापरत्वेपीत्यर्थः । अत एव कस्य द्वित्वे इत्यर्थे "कस्य द्व्योः" इति भाष्ये 'बहुषु' (पा०सू०१।४।२१) इति सूत्रे प्रयुक्तम् ।

त्यादादी (पा०सू०७।२।१०२) "अष्टन" (पा०सू०७।२।८४) इत्यतो विभक्तावित्यनुवर्त्तते, तत्फलं तत्कुलम् । सोर्लुक्यत्वं न इष्टिरिति । भाष्यकारस्येति भावः । द्विपर्यन्तानां किमिति युष्मदस्मदोरात्वयत्वलोपैर्बाधात् किमः कादेशविधानाच्च प्रश्नः भवान् भवन्तावित्यभ्युच्चयाय ।

ङौ तु सवर्णदीर्घ इति । इदं सम्भावनामात्रेण । एषां 'ईदूतौ च सप्तम्यर्थे' इति सूत्रस्थभाष्यप्रामाण्येनानभिधानात् कियवन्तत्रातेति । "इत्वमवकारादौ" इति वार्त्तिकस्य

---

श्यमानावयवत्रिशब्दस्य त्रयादेशे परमत्रयाणामित्यत्रान्त्यरेफस्यादेशाप दोषो बोध्यः । *केचिदितीति । प्रसादकारादय इत्यर्थः । तेषामेव शा न्तराभ्तरस्याति-*न चेति* । *अत एव* । गौणमुख्यपरिभाषायां दशस्यैव गौणत्वस्य गौणपदार्थत्वादेव । तदेवोपपादयति-*इतरेति एतच्च गौणमुख्यपरिभाषाप्रवृत्तिसम्भवमभ्युपेत्य । वस्तुतस्तु तस्याः म्भव एव नेत्याह—*पदकार्य एवेति ।

*अत एव* । नित्यद्विवचनान्तत्वादेव । अत्र नित्यपदोपादानेन शब्दप्रकृतिकसुपो द्विशब्दार्थद्वित्वानुवादकत्वमेवेति नियमो बोध्यते द्वित्वमप्रधानम्प्रधानं वेत्यन्यदेतत् । *अभ्युच्चयायेति* । सम्भावित षाणान्नानारूपत्वसूचनाय । तेन भवानित्यस्य द्विपर्यन्तनामिति नियमस्य कारेऽपि व्यक्तिपक्षेऽत्वसन्तेति सूत्रे भवच्छब्दोपस्थितिसामर्थ्यात्सौ त्यद्य द्यत्वाप्रवृत्तिलपनेन सिद्धिसम्भवेऽपि न ग्रन्थासंगतिः । अत एवास्य दाह-*भवन्तावितिं* ।

वान' इत्यादीनां वनिपा साधनरूपस्य तत्प्रत्याख्यानभाष्यस्य च फलैक्यायेदृशेभ्यः क्विपोऽनभिधानमावश्यकमिति धीवरी पीवरीत्यादि 'ध्याप्योः संप्रसारणञ्च' क्विप् क्वनिप् च नेत्यर्थकात् "जनसनखनां सञ्झलोः" (पा०सू०६।४।४२) 'घुमास्थागापा' (पा०सू० ६।४।६६) इति सूत्रभाष्यपर्यालोचनया सिद्धाद्वार्त्तिकात्सिद्धं धीः

---

*भाष्यप्रामाण्येनेति* । "तत्रापि सरसो यदि" इत्यनेन कथनेन । *ईदृशेभ्यः* । आदन्तेभ्यः । *क्विपोऽनभिधानमिति* । अयम्भावः । "जनसनखनाम्" इति सूत्रे धियौ "धियः" 'पियौ' पिय' इत्यादावियङादेशे कर्त्तव्ये इत्वस्यासिद्धत्व म्प्राप्नोतीत्याशङ्क्य "नैतदीत्वङ्किन्तर्हि ध्याप्योः सम्प्रसारणमेतत्" इत्युक्तम् । 'अभ्युपेत्यापीत्वं व्याश्रयत्वादसिद्धत्वन्न भविष्यति' इति तु परत्रोक्तम् । "घुमास्था" इतिसूत्रे च 'घृतपावानः' । 'वसापावान' इत्यत्र पाधातोः क्वनिपि सतीत्वम्प्राप्तमिति तद्व्यावृत्त्यर्थमीत्वे 'वकारप्रतिषेधो वक्तव्यः' इत्युक्त्वा 'यदीत्वे वकारप्रतिषेध इत्युच्यते कथं धीवरी पीवरी' इत्याशङ्क्य 'नैतदीत्वं किन्तर्हि ध्याप्योः सम्प्रसारणमेतत्' इत्युक्तम् । एतस्मिन्वार्त्तिके "यदीत्वे वकारप्रतिषेध" इति एतस्य प्रत्याख्यानस्य तत्प्रयोजनस्य 'घृतपावान' इत्यादेर्वनिपा साधनरूपस्य भाष्यस्य च फलैक्यायानभिधानङ्कल्पनीयम् । "ईत्वे वकारप्रतिषेध" इति सामान्यत एवोक्तन्तत्सत्त्वे वकारादिप्रत्ययसामान्ये प्रतिषेधे क्विप्यपि प्रतिषेधः प्राप्नोति । वनिपा तत्साध्यप्रयोजनसाधनरूपप्रत्याख्यानपक्षे क्विपीत्वम्प्राप्नोति इति फलभेदः स्यादिति ।

नन्वेवं रीत्या धीवर्यादीनामप्यनभिधानम्प्राप्नोतीत्यत आह-*धीवरी पीवरीत्यादीति* । आदिना धीरित्यादिसङ्ग्रहः । अत एव "क्विप्च क्वनिप्च चेन" इतिसङ्गच्छते । *पर्यालोचनया सिद्धाद्वार्त्तिकात्सिद्धमिति* । अत्र पर्यालोचनया सिद्धादित्यनेनैतादृशानुपूर्वीकवार्त्तिकानुपलम्भेऽपि न क्षतिरिति ध्वनितम् । "जनसन" इति सूत्रे 'धियौ' 'धिय' इत्यत्रयङादेशे कर्त्तव्ये धाधातोः क्विपि यदीत्वन्तस्यासिद्धत्वम्प्राप्नोतीत्याशङ्क्य 'नैतदीत्वङ्किन्तर्हि' ध्याप्योः सम्प्रसारणमेतत्' इत्युक्तम् । एवम् "घुमास्था" इतिसूत्रे 'पावान' इत्यत्रेत्वव्यावृत्त्यर्थमवकारादाविति वार्त्तिकस्वीकारे 'कथन्धीवरी पीवरी' इति प्रश्ने 'नैतदीत्वम्' इत्युक्त्वा ध्याप्योः सम्प्रसारणमेतदित्युक्तन्तेन सिद्धादित्यर्थः । सूत्रभाष्य इत्यस्य सूत्रयोर्भाष्य इत्यर्थः । *वार्त्तिकादिति* । ध्याप्योः सम्प्रसारणञ्चेत्यतः ।

ननु 'धीध्र्यायतेर्दधातेः' इति भाष्यविरोध इत्यत आह—*धीध्र्यायतेरित्यादि* । ननु शंस्था शब्दे "स्थः क च" इतिसूत्रस्थचकारेण क्वि·

ध्यायतेर्दधातेर्वेति "क्विब्वचीति" वार्तिकस्थभाष्ये "दधातेर्वा" इत्यु-
क्तिरेकदेशिनः। 'शंस्था' इत्यत्र विजेवेति न दोषः। मीङ् माने इगं-
कारान्तात् क्विबित्येके। वातप्रमीर्निःशृङ्गो मृगाकृतिर्जन्तुविशेषः।
बहुश्रेयसीति। "ईयसो बहुव्रीहेर्न" इति निषेधान्नोपसर्जनह्रस्व।

यू स्त्र्या (पा०सू०१।४।३) दीर्घयोरेव ग्रहणं व्याख्यानात्। 'वा
छन्दसि'इति पूर्वसवर्णदीर्घः। यू किम्? मात्रे। 'आण्नद्याः' (पा०सू०
७।३।११२) इति न। स्त्रियमाचक्षाते स्त्र्याख्यौ मूलविभुजादित्वा-
कः। स्त्र्याख्यावित्युपस्थितस्त्रीवाचकशब्दस्य विशेष्यत्वात्तदन्तविधि-
रित्याह-ईदूदन्ताविति। 'आच्छीनद्योः' (पा०सू०७।१।८०) इत्या-
दौ नदीशब्दस्य तदवयवे लक्षणा बोद्ध्या। आख्याग्रहणान्नित्यत्व
लाभस्तदाह-नित्यस्त्रीलिङ्गाविति। तत्फलन्तु ग्रामण्यादेर्व्यावृत्तिः।
नित्यस्त्रीत्वञ्च प्रवृत्तिनिमित्तैक्ये सति लिङ्गान्तरविशिष्टार्थनभिधायक

---

पि कृते "ईत्वमवकारादौ" इतवार्त्तिकप्रत्याख्यानपक्षे इत्वापत्तिरित्य
आह—*शंस्था इत्यत्रेति*। एवञ्च तत्रत्यं क्विप्पदं क्विबिवाचरतीति क्वि
विजित्यर्थकमिति भावः। 'सव्येष्ठा' इत्यत्राप्येवमेव। यदि 'वातप्रमी' श
ब्दोऽपि प्रामाणिकस्तर्हि सोऽन्यथा साधनीय इति मनसि निधाया
*मीङ् मान इति*।

*व्याख्यानादिति*। 'किम्पुनरिदन्दीर्घयोर्ग्रहणमाहो स्विद्ध्रस्वयोरि
इति विकल्प्य दीर्घग्रहणपक्षे यू इत्यत्र पूर्वसवर्णदीर्घस्य "ङिति ह्रस्वश्च"
इति सूत्रे सामानाधिकरण्यस्य चानुपपत्तिमुद्भाव्य ह्रस्वग्रहणे शकटिबन्धु-
रित्यत्र 'नदी बन्धुनी'ति पूर्वपदान्तोदात्तस्य बहुशकटिरित्यत्र 'नद्यृतश्च'
कपः प्राप्तिश्चोक्ता दीर्घयोर्ग्रहणमिति सिद्धान्ततम्। पूर्वसवर्णदी-
स्तु "दीर्घाज्जसि च" इत्यत्र "वा च्छन्दसि" इत्यनुवृत्त्या साधितः। "ङि-
ह्रस्वश्च" इति सूत्रे तु य्वोर्यौ ह्रस्वावित्येवं वैयधिकरण्यान्वयेन स-
धित इत्येवंरूपाद्व्याख्यानादित्यर्थः। *मात्र इति। जननीवाचकोऽयम्
कर्मण्यण्शङ्कावारणायाह-*मूलविभुजादित्वात्क इति*। तन्त्र्यादिघट-
कारादेरवाचकत्वाद्धीर्यादिघटकस्यापि द्योतकतया तस्याप्यवाचकत्वा-
वर्णसंज्ञापक्षो न युक्त इत्यपि बोध्यम्।

तदन्तसंज्ञायामाच्छिनद्योरित्यत्र प्राप्तामनुपपत्तिम्परिहरति-*आ-
च्छीनद्योरित्यादाविति*। *ग्रामण्यादेर्व्यावृत्तिरिति*। एतत्प्रवृत्तिनिमि-
त्तस्य ग्रामकर्मकनयनकर्तृत्वस्य पुंसाधारणत्वेन लिङ्गान्तरविशिष्टार्था-
भिधायकत्वाभावात्। *प्रवृत्तिनिमित्तैक्ये सतीति*। इदञ्च लिङ्गान्तर

त्वम् । ङ्यन्तकुमार्यादीनां क्यचि निवृत्तेन त्रिलिङ्गेन समानाकारतया नित्यस्त्रीत्वाभाववारणाय प्रवृत्तिनिमित्तैक्ये इति ।

नन्वेवं बहुश्रेयसीशब्दस्य नदीत्वं न स्यात्, अत आह-प्रथमेति । अर्थान्तरसंक्रमात्पूर्वं विद्यमानं नित्यस्त्रीत्वमादाय तस्यार्थान्तरसंक्रमेऽपि नदीत्वं वक्तव्यमित्यर्थः । यथोद्देशे पूर्वप्रवृत्तसंज्ञामादायैव कार्यम् । कार्यकालपक्षेपि कुमारीत्यादौ प्रकृतिभूतकुमारीशब्दस्य नित्यस्त्रीत्वेन वृत्तावपि विशेषणतया नित्यस्त्रीलिङ्गरूपार्थबोधकत्वेन नदीसञ्ज्ञा । समासे तु स्पष्टैव तदवयवस्य तत्प्राप्तिः । तन्मात्रबोधकत्वनिवेशे प्राधान्येन तद्बोधकत्वनिवेशे वा न मानम् । तदुक्तं भाष्ये "अवयवस्त्रीविषयत्वात्सिद्धम्, अवयवोऽत्र स्त्रीविषयस्तदाश्रया नदी-

---

विशिष्टार्थानभिधायकत्वपदार्थकुक्षिप्रवृत्तिप्रतियोगिविशेषणम् । तथा च लिङ्गान्तरविशिष्टार्थस्य येन रूपेणाभिधायकं तैनैवरूपेण स्त्र्यभिधायकं यत्तस्य न नित्यस्त्रीलिङ्गत्वव्यवहारः । स्वजन्यबोधीयलिङ्गान्तरविशिष्टार्थनिष्ठविशेष्यतावच्छेदकावच्छिन्नस्त्रीनिष्ठविशेष्यताशालिशाब्दबोधजनकं यत्तद्भिन्नशब्दत्वं नित्यस्त्रीलिङ्गत्वमिति फलितम । *क्यचि निवृत्तेनेति* । यदा केन चित्पुरुषेण स्त्रीमात्रविषयकबोधेच्छया खलपूशब्दः प्रयुक्तस्तेन च सामग्रीविशेषात्तन्मात्रविषयक एव बोधो जनितस्तस्य च लिङ्गान्तराविशिष्टार्थानभिधायकत्वान्नदीत्ववारणाय लिङ्गान्तरविशिष्टार्थाभिधायकतावच्छेदकधर्मशून्यत्वं वक्तव्यम् । एवञ्च ङ्यन्तकुमार्यादीनां क्यजन्तसमानानुपूर्वीकत्वान्नदीत्वन्न स्यादतः प्रवृत्तिनिमित्तैक्ये इत्युपात्तमिति भावः ।

*नन्वेवमिति* । एवंविधस्य नित्यस्त्रीत्वस्य स्वीकारे बहुव्रीहिघटकसकलपदानामन्यपदार्थबोधकतया एतस्य लिङ्गान्तरविशिष्टार्थाभिधायकत्ववत्त्वात् । *तस्य* । श्रेयसीशब्दस्य । *यथोद्देश इति* । भविष्यति किञ्चिदनेन प्रयोजनमित्यभिसन्धिमात्रेण संज्ञाप्रवृत्तेस्तस्मिन्पक्षे स्वीकारात् । *कुमारीत्यादौ* । कुमारीमिच्छन्कुमारीवाचरन्नित्येवंसिद्धकुमारीशब्दादौ । *अवयवस्त्रीविषयत्वादिति* । अत्रावयवशब्दो वृत्तिप्रकृतिशब्दपरः । तेन क्यजन्ते न दोषः । केचित्तु एवं सत्यग्न्यादिशब्दानामाचारक्विप्प्रकृतिककर्तृविजन्तानां स्त्रियां वृत्तौ "तस्माच्छसो नः" इति नत्वापत्तिः, तथा शकस्यादिस्त्रीलिङ्गशब्दानामुक्तरीत्या पुंवृत्तावाङो नास्त्रियामिति निषेधादनापत्तिरिति चिन्त्यमेतदित्याहुः । तन्न । "तस्माच्छस" इति सूत्रस्य पुमर्थप्रतिपादकशब्दस्य शस्प्रकृतित्वे शसो

सञ्ज्ञा भविष्यति" इति आकडारस्थसञ्ज्ञानां कार्यकालत्वाभावात्। अन्यथा तत्तद्विध्येकवाक्यत्वापन्नयोः कथं बाध्यबाधकभावः स्यादिति बोध्यमित्यपि केचित्।

हे बहुश्रेयसीति। ह्रस्वे कृते गुणस्तु न। प्रक्रियालाघवात् 'अम्बार्थानां ह्रस्वः' "ह्रस्वनद्योर्गुणः" इत्येव वाच्ये ह्रस्वविधानसामर्थ्यात्। 'जसिच' (पा० सू० ७।३।१०९) इत्यत्रैकदेशे स्वरितत्वप्रतिज्ञया ह्रस्वपदस्यैवानुवृत्तिरिति भाष्ये स्पष्टम्(१)। अम्बार्थानामपि गुणः

नस्य पूर्वसवर्णदीर्घात्परस्य नत्वमित्यर्थादत्र नत्वप्राप्तेरभावात्। एवम् ङो नेत्यस्यापि आङो यतो विधानन्तदादेरस्त्रियां विद्यमानात्परस्य नाभाव इत्यर्थः स्यात्तथा चोक्तरीत्या शकटीशब्दस्य पुंवृत्तौ नाभावः पीष्ट एवेति दिक्।

यदुक्तं कार्यकालपक्षेऽपीति तद् दूषयति *आकडारस्थसंज्ञानामिति* *कथं बाध्यबाधकभाव इति*। तत्पक्षे विधिप्रदेशरूपैकदेशगतत्वे संज्ञानां पौर्वापर्याभावेन बाध्यबाधकभावो न स्यादिति भावः। *केचिदिति*। अत्रारुचिबीजन्तु न तेन ग्रन्थेन नदीसंज्ञाविधायकशास्त्रस्य तत्तत्कार्यविधायकशास्त्रैकवाक्यताऽभिप्रेता, किन्तु यदा नदीत्वप्रयुक्तकार्यप्रवृत्तिश्चिकीर्षिता तस्मिन्काले नदीसंज्ञां कृत्वा सा कल्पनीया, तु भविष्यति किञ्चिदितिन्यायेन पूर्वं नदीत्वप्रवृत्तिरेतावताऽपि नद्यन्तकार्यस्य प्रवृत्तिर्भविष्यतीति नानुपपत्तिरिति।

यत्तु केचिदितिप्रतीकमुपादाय संज्ञयोः कार्यार्थमन्यदेशगमनेऽपि स्वदेशीयत्वत्यागो व्यवहारार्थं तत्तद्देशगतानां व्यवहर्तॄणामिवेत्यस्वरसः इति तन्न 'अधिकारो नाम त्रिप्रकारः कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति' इतिभाष्यफक्किकाव्याख्यावसरे 'कश्चित्परिभाषारूप' इति यट्व्याख्यानेन परिभाषाविषय एव स्वदेशात्यागेन कार्यसम्पादनाभिकल्पना। संज्ञाविषये तु कार्यकालपक्षे 'अयादिभ्यः परैव प्रगृह्यसंज्ञा' इति प्रगृह्यसंज्ञायाः परत्वस्य "अदसो मात" इति सूत्रभाष्ये उक्तत्वे संज्ञाविषये स्वदेशत्यागेन व्यवस्थाया भाष्यसम्मतत्वात्।

यत्तु बहुश्रेयसीत्यत्र ह्रस्वे गुणः स्यादिति कश्चिदाह, तद्दूषयति-*ह्रस्वे कृते इति*। *ह्रस्वविधानसामर्थ्यादिति*। एवञ्च ह्रस्वपदं स्वाभाविकह्रस्वपरंभविष्यतीति भावः। *भाष्ये स्पष्टमिति*। एकदेशस्यापि क

(१) ननु जसिचेति सूत्रे यथान्यासे ह्रस्व पदस्यैवानुवृत्तिः। उक्तविधन्यासे तु ह्रस्वनद्योरिति। ह्रस्वनद्योरिति विशिष्टानुवृत्तौ नदीसञ्ज्ञकस्य जसि गुणादेशापत्त्या 'गौर्यः' इति प्रयोगानुपपत्तिः। इत्यत आह *जसिचेति*। ह्रस्वविधानसामर्थ्यात् गुणो न प्रवर्तते। अन्यथा 'अम्बार्थ नद्योर्गुणः' इत्येव ब्रूयात्।

वक्तुमशक्यः । "अनः क्लीबजले शोके मातृस्यन्दनयोरपि" इति रभसाद्युक्तानःशब्दस्याम्बार्थत्वेन गुणापत्तेः । ह्रस्वग्रहणे तु 'अचः' इत्युपस्थित्याऽजन्ताम्बार्थग्रहणान्न दोषः, तस्य नपुंसकत्वेऽपि 'हे वारे' इतिवत् पक्षे गुणः स्यादेव । गुणश्रुत्येकपरिभाषोपस्थितौ तु 'अम्ब' इत्यादावप्यनापत्तिः । अयं ह्रस्वो 'अनन्तरस्य' इति न्यायाद् 'ह्रस्वस्यगुणः' (पा० सू० ७।३।१०८) इत्यस्यैव बाधकः । तेन 'मातः' इत्यत्र 'ऋतोङि'

---

विदनुवृत्तिर्भवतीति भाष्ये स्पष्टम् । यथा "दामहायनान्ताच्च" इति सूत्रे संख्यादेरित्यनुवर्त्तते 'अव्ययादेरिति निवृत्तम्' इत्युक्तम् । ननु मातृवाचकस्याप्यनःशब्दस्य नपुंसकलिङ्गत्वात्स्वमोर्लुका लुप्तत्वेन न गुणापत्तिरित्यत आह—*तस्य नपुंसकत्वेऽपीति* । ननु ह्रस्वपदस्य स्वाभाविकह्रस्वपरत्वे पर्जन्यवल्लक्षणन्यायेन मातृशब्देऽपि तस्य प्रवृत्तिः स्यात्, तथा च 'हेमातः' इत्यत्र गुणानापत्तिरत आह—*अयमिति* ।

अन्ये तु न लुमतेतिनिषेधस्यानित्यत्वेऽप्यनित्यवचनस्यौत्सर्गिकी प्रवृत्तिर्लक्ष्यानुसाराद्प्रवृत्तिरित्येवं व्यवस्था सर्वजनसम्मता, सा च लक्ष्यस्य सम्प्रतिपन्नत्वे भवति । प्रकृते तु गुणादर्शनेनानित्यस्याप्यप्रवृत्तौ न मानमिति चिन्त्यमेतत् । एवं गुणश्रुत्येकपरिभाषाप्रवृत्तिरित्यपि चिन्त्यम् । अम्बार्थनद्योः क्रमात्सम्भवव्यभिचारयोरभावेनेकपरिभाषाया इहानुपपस्थापनादित्याहुः ।

अत्रेदं वक्तव्यम् । पक्षे गुणः स्यादेवेति यत्तदनित्यस्य सामान्यतः प्रवृत्तिमभ्युपेत्य । वस्तुतस्तु गुण इत्यनुक्त्वा ह्रस्वपदोपादानमिकपरिभाषानुपस्थित्यर्थमेव । यतूक्तमम्बार्थनद्योः सम्भवव्यभिचाराभाव इति । तच्चिन्त्यम् । 'हे देवि' इत्यत्राम्बार्थके सम्भवस्य हे 'अम्ब' इत्यत्र व्यभिचारस्य सम्भवात् । एवं सत्यम्बेति न सिध्यतीत्यत्रैव दूषणनिर्भरः । न चेकपरिभाषोपस्थित्याऽम्बार्थकस्येगन्तस्यैव चेद् गुणः स्यात्तर्हि नदीपदोपादानमनर्थकं स्यादिति वाच्यम् । अम्बार्थभिन्ननद्यन्तस्य गुणविधायकत्वेन चारितार्थ्यात् । न चेकपरिभाषयेगन्ताम्बार्थकस्य ग्रहणे नदीपदोपादानेनैव सिद्धेऽम्बार्थग्रहणं व्यर्थमिति वाच्यम् । मातरमतिक्रान्तं कुलम् अतिमातृ तस्य सम्बोधनं 'हेऽतिमातर्' इत्यत्रानः शब्दस्येव "न लुमता" इति निषेधानित्यत्वेन गुणसम्पादकत्वेनाम्बार्थग्रहणस्य चरितार्थत्वात् ।

---

'ह्रस्वस्यगुणः' इत्यत्र गुणग्रहणं न कर्तव्यमिति लाघवम् । इति कश्चित् । अन्ये तु कृतेऽपि ह्रस्वे यदि गुणः स्यात् तर्हि 'अम्बार्थानां-ह्रस्वः' इत्युक्त्वा 'नदी ह्रस्वयो र्गुणः' इत्येव ब्रूयादित्याहुः । अस्मिन् मते पदलाघवाभावेऽपि प्रक्रिया लाघवमस्ति । अपरे तु जसिचेत्यत्र ह्रस्वस्येति एकदेशानुवृत्तिकल्पने क्लेशत्वात् नानुमन्यन्ते इति भावः । तत्रारुचिं दर्शयति-*भाष्ये स्पष्टमिति* ।

(पा०सू०७।३।११०)इति गुणो भवत्येवेति दिक् ।

आटश्च (पा०सू०६।१।९०) 'न माङ्योगे (पा०सू०६।४।
इति सूत्रस्थभाष्योक्ते'अटश्च'इति न्यासे तु वृद्धिरेचीति बोध्यम्
अत्राट् तु वक्तुमशक्यः। 'अस्वपोऽहसन्' इत्यत्र वृद्धिवारणाय
'आटश्च' इत्यत्र धाताविन्त्यपकर्षेण वृद्ध्यनापत्तेः। वृद्धिरेचीत्यस्य
पररूपं बाधकमिति बोद्ध्यम् । ङेरिति सप्तम्येकवचनं व्याख्यानात्
इह परत्वादिति । सकृद्गतिन्यायाश्रयणादिति भावः। स्पष्टं
'ह्रस्वनद्यापः' (पा०सू०७।१।५४) इत्यत्र भाष्ये। यद्यपीह आमपवादः
नद्यां सर्वथाऽनवकाशत्वात्। 'अपवादो नुग्दीर्घत्वस्य'इति "दीर्घोऽकि
(पा०सू०७।४।८७) इति सूत्रभाष्ये उक्तत्वेनाऽऽगमादेशयोरपि ता
सत्त्वात्, तथापि अनवकाशत्वेन बाधेऽपवादप्रवृत्त्यनन्तरमुत्सर्गप्र

---

यदपि नदीसाहचर्यात्स्त्रीलिङ्गस्यैवाम्बार्थस्य ग्रहणेनानः शब्दे स्त्री
दोष इति तदपि न। साहचर्यपरिभाषाप्रवृत्तिस्वीकारे इगन्तत्वेनापि न
साहचर्यसम्भवान्मातृशब्देऽम्बार्थके एव स्यात् नतु अत्वम्बेत्यादाविति
हचर्यपरिभाषाया अनित्यत्वात्प्रकृतेऽप्रवृत्तिरित्येवाभिमतमिति दिक्
*गुणो भवत्येवेति*। इदञ्च ह्रस्वविधानस्य सामान्यापेक्षज्ञापकत्वाभि
येण। यदि तु सम्बुद्धिनिमित्तकगुणस्यैवाप्रवृत्तिकल्पनं तदा तु न
इति दिगित्यनेन सूचितम्।

*अस्वपो हसन्नित्यत्रेति*। स्वपेर्लङ्। सिप्। अड्गार्ग्य गालव
रित्यट्। शब्लुक्। सस्य रुत्वम्। "हशि च" इत्युत्वम्। अत्राद्गुणस्या
त्वाऽटश्चेति वृद्धिः प्राप्नोति। न चान्तरङ्गायां वृद्धौ बहिरङ्गस्योत्वस्या
द्धत्वं शङ्क्यम्। नाजानन्तर्यपरिभाषया निषेधात्। *पररूपमिति
अतो गुण इत्यनेन।

न चाड्विधानसामर्थ्यान्न पररूपमिति वाच्यम्। ङेरामि कृते नुटः
धकतयाऽऽटश्चरितार्थत्वात्। यत्तु "ह्रस्वनद्यापः" इतिसूत्रानन्तरं ङेरा
वदेदिति चिन्त्यमेतदिति। तदेव चिन्त्यम्। एवं सति "षट्चतुर्भ्य"
त्रापि नकारसम्बन्धापत्तौ विधिनिषेधोभयसामर्थ्याद्विकल्पापत्तेः। वि
करणानन्तरं तथा पाठे "श्रीग्रामण्योः" इत्यस्यापि निषेधसम्ब
स्यात्। *व्याख्यानादिति*। व्यवस्थायामित्यादिनिर्देशमूलकात्। न
आडपवादत्वेन तस्मिन्कृते कथमाडिति कस्य चिच्छङ्कायां व्यवस्था
माह-*यद्यपीत्यादि*। *सर्वथाऽनवकाशत्वादिति*। आटि कृते वि
श्यमानस्याटा व्यवधानादिति भावः। आगमादेशयोरपि बाध्यबाधक

न दोषः। अत एव "न गणेरीत्वमपवादत्वाद्धलादिः शेषं बाधते, किं तर्ह्यनवकाशत्वात्" इति "गुणो यङ्लुकोः" (पा०सू०७।४।८२) इति सूत्रभाष्ये उक्तम्। पादः पात् (पा०सू०६।४।१३०) इति सूत्रस्थं "शब्दान्तरप्राप्त्याऽनित्ययोराडामोः परत्वादाम्" इति भाष्यं त्वेकदेश्युक्तिरिति बोद्धव्यम्।

---

दृष्टान्तमाह-*अपवाद इति*। *अत एव*। येननाप्राप्तन्यायेन बाधस्थलीयव्यवस्थाविलक्षणव्यवस्थास्वीकारादेव।

*गुणो यङ्लुकोरितिसूत्रभाष्य इति*। तत्र हि—डोढौक्यते। तोत्रौक्यत इत्यत्राभ्यासहृस्वत्वस्य "दीर्घोऽकित" इतिदीर्घत्वस्य च प्राप्तौ परत्वाद्दीर्घत्वं स्यादिति शङ्कायाम् "अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्त" इतिपरिभाषा उक्ता। ययावित्यत्र ह्रस्वत्वस्यावकाशः। दीर्घत्वस्य तु कृते ह्रस्वत्वेऽवकाशं पूर्वपक्षी मन्यते। तस्याः परिभाषायाः प्रयोजननिरूपणावसरे "गणेरीत्वं हलादिः शेषस्य। गणेरीत्वमपवादत्वाद्धलादिः शेषन्न बाधत' इत्युक्तम्। ततोऽग्रे भाष्ये "न गणेरीत्वमपावदत्वाद्धलादिःशेषम्बाधते किन्तर्ह्यनवकाशत्वात्" इत्युक्तम्। अत्र गणरूपाभ्यासान्त्यस्येत्वमित्यर्थे हलादिः शेषे कृते तादृशाभ्यासाभावेनेत्वन्न स्यादिति तदनवकाशमित्यभिप्रायः।

"दीर्घोऽकित" इतिसूत्रस्थांकिद्ग्रहणेनाभ्यासविकारेषु बाधका न बाधन्त इत्येवं परिभाषा ज्ञापिता। तथा 'अजीगणत्' इत्यत्र हलादिःशेषेण णकारनिवृत्तौ पश्चाद्गकाराकारस्येत्वम्। अनवकाशत्वेन बाधस्थले बाधकत्वेनाभिमतस्य पूर्वम्प्रवृत्तिरित्येव, तत्र कृते यद्युत्सर्गस्य प्राप्तिस्तर्हि भवत्येव। येन नाप्राप्तन्यायेन बाधस्थले तु यत्रोत्सर्गप्रवृत्त्युत्तरमप्यपवादस्य प्राप्तिस्तत्रापवादत्वाभिमतस्य प्रवृत्तावुत्सर्गस्य प्राप्तिसत्त्वेऽपि न प्रवृत्तिरित्येव व्यवस्था। यथा "सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय" इत्यत्र दधिदानोत्तरं तक्रदानस्य प्राप्तिसत्त्वेऽपि तक्रदानेन दधिदानस्य बाध एव। अनवकाशस्थले तु यथा "सर्वे ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविष्टाम्" इत्यत्र भोजनपरिवेषणयोर्विरोधेऽपि परिवेषणानन्तरं माठरकौण्डिन्ययोर्भोजनम्भवत्येवेति। यत्तु हयवरट्सूत्रभाष्ये न्यायोपन्यासानन्तरम् 'न इदानीं तौ भुञ्जाते' इत्युक्तं। तत्तु कालविशेषेण विरोधप्रतिपादनपरमिति न तद्विरोधः। *शब्दान्तरप्राप्त्याऽनित्ययोरिति*। शब्दान्तरप्राप्त्याऽटोऽनित्यत्वमाटि कृतेऽमादेशस्य तु निर्दिश्यमानपरिभाषयाऽप्राप्तिरित्यर्थः। *एकदेश्युक्तिरिति*। आमो निरवकाशत्वेनाड्बाधकतयाऽतुल्यबलत्त्वेन परत्वादित्यनुचितमिति सा एकदेश्युक्तिः।

अङ्यन्तत्वादिति ॥ 'लक्षेर्मुट्‌चे'त्यौणादिक'ई'प्रत्ययान्त-त्वादिति भावः । कुमारीति । ह्रस्वविधायके शास्त्रीयोपसर्ज-नग्रहणाद् "गोस्त्रियोः" (पा०सू०१।२।४८)इति ह्रस्वो न ।

अचि श्नु (पा०सू०६।४।७७) भ्रूशब्दोऽव्युत्पन्नं प्रातिपदिकं भ्रमेर्डूप्रत्ययान्तो वा । इह य्वोरिति धातोः समानाधिकरणं विशेष-णं तदाह-इवर्णोवर्णान्तधातोरिति । इत्यस्येति । इत्यन्तस्ये-त्यर्थः । तेन सुभ्रुवाविति सिद्धम् । आन्तरेति । स्थानत इतिभावः य्वोरिति किम् ? वव्रे । अचि किम् ? युयात् । इतीयङीति सुधीशब्दे यण्निषेधारम्भादत्र प्रकरणे 'धातोः स्वरूपग्रहणे' इति परिभाषाया अप्रवृत्तिरिति भावः ।

एरनेकाचो (पा०सू०६।४।८२) । धात्ववयवसंयोगपूर्वो भवतीति । धात्ववयवसंयोगपूर्वभिन्न इत्यर्थः । तद्भिन्नश्च धात्ववयव एवेति 'उदियौ' इत्यादौ न दोषः । असंयोगादित्येव धात्ववयवसं-योगभिन्नात्परस्येत्यर्थेन सिद्धे पूर्वग्रहणं स्पष्टार्थम् । एः किम्

---

ननु "ऊङ् च गमादीनाम्" इतिनिष्पन्नस्य क्विबन्तभ्रूशब्दस्य धा-त्वादेव सिद्धे भ्रूशब्दोपादानमनर्थकमत आह-*भ्रूशब्द इति*। *समानाधिकरणमिति* । वैयधिकरण्ये क्षियतीत्यादौ जातेऽपीयङि "लोपो व्योः" इति लोपेन यद्यपि सिध्यति, तथापि तुल्यन्यायादुक्त-सूत्रेऽपि तथात्वापत्तौ "दिदिवतुः" इत्यत्र यणापत्तिः । इयङो ङित्व-वैयर्थ्यञ्च स्यादिति भावः । *इत्यन्त्यस्येति* । आङ्गत्वात्तदन्तविधिर्न्या-य्यः । भ्रूशब्दे तदन्तविधेर्ग्रहणवतेत्यनेन निषेधः स्यादिति न शङ्क्यम् । तस्याः परिभाषाया प्रत्ययविधिविषयत्वात् । *अत्र प्रकरण इति*। "दि-दीर्घात्" इति निर्देशेन सामान्यापेक्षज्ञापकमाश्रीयते इति भावः । *इति*। पर्युदासपरतया व्याख्याने फलमाह-*उदियावित्यादाविति*। उदि-याविति धातोः क्विबन्तस्य रूपम् । न चैवमपि लिडियावित्यादौ दोष इति वाच्यम् । प्रत्यासत्त्या यद्धात्वन्तस्य कार्यिता तद्धात्ववयवपूर्वत्वस्य वि-क्षितत्वात् । *स्पष्टार्थमिति* । पूर्वोक्तप्रत्यासत्तेः स्पष्टप्रतिपत्त्यर्थमित्यर्थः । अत्र धातुग्रहणन्तु "अचि श्नु" इति सूत्रादेकदेशे स्वरितत्वादनुवर्तते ।

ननु सूत्रे पूर्वशब्दसत्त्वे धात्ववयवसंयोगपूर्वत्वावच्छिन्नप्रतियोगि-कभेदस्य लाभेन 'सुश्रियौ' इत्यादाविकारे तादृशभेदाभावादतिप्रसङ्गं वारयितुं शक्यते । धात्ववयवसंयोगभिन्नादित्यर्थे तु रेफे संयोगभि-

असंयोगपूर्वग्रहणमिवर्णविशेषणं यथा स्यात्, अङ्गविशेषणं मा भूदिति। तेन 'यवक्रियौ' इत्यादौ नातिप्रसङ्गः। 'लुलुवतुः' इत्यादौ तु नातिप्रसङ्गः 'ओः सुपि'इति नियमात्। विपरीतनियमस्तु न, सुधीशब्दे अचि सुपि यणिनषेधारम्भात्।

कुमार्याविति। अन्तर्वर्तिविभक्त्या पदत्वाच्छाकलं त्वत्र न, 'नः क्ये' इति निषेधात्। प्रधीरिति। प्रकृष्टं ध्यायतीति विग्रहे नित्यस्त्रीत्वाभावान्न नदीत्वं, प्रकृष्टा धीर्यस्येति विग्रहे तु नदीत्वम्। ग्रामणीरिति। अग्रग्रामाभ्यां नयतेरिति णत्वम्। 'गतिकारकपूर्वस्यैव'इति भाष्ये पठ्यते, स च नियमः। तेन गतिकारकपूर्वभिन्नस्य नेति फलति। तद्भिन्नश्च तत्सदृशं सपूर्वपदमेव। तेन 'निन्यतुः' इत्यादौ यण् तदाह–गतिकारकेतरेति। यत्त्वत्र गतिसमासो नित्याधिकारस्थ एव प्रतिपदोक्तत्वाद् गृह्यते इति। तन्न। भाष्ये पूर्वपदग्रहणाभावेन समासोपस्थितेरभावेन विशिष्टरूपोपादानविषयप्रतिपदोक्तपरिभाषाया अप्रवृत्तेः। अत एव नदीसञ्ज्ञासूत्रस्थः 'प्रकृष्टा धीर्यस्या' इति विग्रहाभिप्रायेण प्रवृत्तः "प्रध्यै ब्राह्मण्यै" इति भाष्यप्रयोगः सङ्गच्छते।

शुद्धधियाविति। शुद्धा धीर्यस्येति विग्रहः। 'शुद्धं ध्यायतीति' विग्रहे यणेव। आद्ये सत्त्वभूतार्थकधीशद्वार्थे विशेषणत्वात्। शुद्धत्वस्य कथमपि न कारकत्वमिति भावः। कथन्तर्हीति। 'दुर्ध्यायंती' इति

---

त्वेन ततः परत्वाद्यणादेशो दुर्वार इति पूर्वग्रहणस्यावश्यकतया पूर्वग्रहणस्य स्पष्टार्थत्वकथनासङ्गतिरिति चेन्न। "असंयोगात्" इत्येतदुपादानसामर्थ्यात्संयोगपदस्य संयोगघटकाविषयकप्रतीत्यविषयपरतयातत्त्वस्य संयोगावयवसंयोगोभयसाधारणत्वात्। *यथा स्यादिति*। श्रुतत्वात्तस्यैव विशेषणं यथा स्यादित्यर्थः। ननु लूधात्ववयवोकारेऽतिप्रसङ्गवारणाय एरित्युपात्तमिति कुतो नोक्तमित्यत आह—*लुलुवतुरित्यादाविति*। *नियमादिति*। उवर्णान्तस्य चेत्सुप्येवेतिनियमादित्यर्थः। सुपि चेदुवर्णान्तस्यैवेतिनियमवारणायाह–*विपरीतेति*। *नदीत्वम्*। अवयवस्य धीशब्दस्येति शेषः। *प्रवृत्त इति*। एतेन प्रकृष्टं ध्यायतीत्यर्थे नित्यस्त्रीत्वाभावात्प्रध्यै इत्यनुपपन्नमिति निरस्तम्।

*दुर्ध्यायंतीति*। अत्र दुरित्यस्य गतित्वम्। द्वितीये दुरित्यस्य स-

'दुष्टा धीर्ध्यानं येषा'मिति 'वृश्चिकाद्भी'रिति वा विग्रहाभिप्रायेण प्रश्न
दुस्थितेति । दुःशब्दोपात्तदुष्टत्वस्य स्थितिक्रियाविशेषणत्वमिति
भावः । प्रकृष्टा धीरित्यादौ प्रकर्षः प्रशब्दार्थो धीशब्दोपात्तधात्वर्थ
विशेषणमिति यण् भवत्येव । यत्क्रियेति । या चासौ क्रियेत्यर्थः
तं प्रति तद्वाचकं प्रति । यद्वा यस्य धातोर्वाच्यया क्रियया युक्त
इत्यर्थः । नेहेति संबन्धसामान्यषष्ठ्यैव समासः । 'भीत्रार्था'
इति हेतुत्वप्रकारकबोधे तृतीयाबाधनार्थम् । विभक्तिप्रकरणे तु
कृतं, कारकत्वप्रयुक्तकार्यानापत्तेरिति भावः । किं च हेतुत्वावि
क्षायां सम्बधंत्वेन विवक्षया षष्ठी सूत्रारम्भेऽपीत्यपि बोद्ध्यम् । अभि
येनाह—वृश्चिकसम्बन्धिनीति । अत्र पूर्वपदान्तर्गतोत्तरपद
शाकपार्थिवादित्वात् ।

ननु (पा०सू०६।४।८९) 'अनन्तरस्येति' न्यायेन "एरनेकाच
(पा०सू०६।४।८२) "ओः सुपि" (पा०सू०६।४।८३) इत्यनयोरेव नि
धः । सुपीति वानुवर्त्तते(१) तदाह—सुपीति । लोपाविति
'अतो लोपः' (पा०सू०६।४।४८) "लोपो व्योर्वलि" (पा०सू०६।१।६६)
इत्याभ्यामिति भावः । यलोपे निषेधादल्लोपो न स्थानिवत्
"वेरपृक्तलोपात्पूर्वं वलि लोप इष्यते"। स्थानिवत्त्वादिति। एव
यणादेशे यलोपे 'सख्' इति स्यादिति भावः। अन्तर्वर्त्तिविभक्त्या
पदत्वात् 'नपदान्तेति' निषेधस्तु न स्थानिवत्त्वस्य, 'नः क्ये' इति सा

---

त्वभूतार्थविशेषणत्वशङ्काव्युदासायाह—*धीर्ध्यानमिति* । एतेन दुः
धात्वर्थस्यैव विशेषणमिति सूचितम् । *तद्वाचकमिति* । तच्छब्द
तद्वाचके लक्षणा । एतद्भयादेवाह-*यस्य धातोरिति* । एवञ्च यत्क्रि
त्यत्र षष्ठीतत्पुरुषः। ननु "भीत्रा" इति सूत्रं षष्ठीबाधनार्थमेवास्त्वित
आह—*भीत्रार्थेति* । अन्योक्तिं खण्डयति—*विभक्तिप्रकरण इति*
"भीत्रार्थानाम्" इति सूत्रस्य बुद्धिकृतापायमाश्रित्य प्रत्याख्यातृभा
कारमतेन 'वृश्चिकभिय' इत्यत्र समाधानमभिधाय सूत्ररीत्या समाधा
माह—*किञ्चेति* । *इत्यपि बोध्यमिति* । एवञ्च प्रकृते एवमेव विव
क्षितमिति भावः ।

सुध्युपास्य इत्यत्रापि यण्निषेधमाशङ्क्याह-*अनन्तरस्येतीति*

---

(१) अत्र 'वा' अनास्थाबोधकः। पुस्तकान्तरेच चानुवर्तते इतिपाठः।

न्यापेक्षानियमेनास्यापदत्वात्। परपदस्थाजादेशस्यैव तेन स्थानिवत्त्वनिषेधाच्च। क्विबपेक्षक्यच् संबन्धियलोपस्य यणि बहिरङ्गासिद्धत्वन्तु न, अनित्यत्वात्। क्वौ लुप्तमिति। भावे क्तः। लोप इत्यर्थः। "गोमत्यतेरप्रत्यये गोमान्" इति भाष्योक्तेरस्याप्यर्थस्य क्वचिदङ्गीकारः। क्वो विधिं प्रति नेत्येव तु सार्वत्रिकमित्यन्यत्र विस्तरः।

अनङिति। "अभिव्यक्तपदार्था ये" इति न्यायस्तु गौणमुख्यन्यायवत्पदकार्यविषय एवेति भावः(१)। दीर्घस्यापीति। प्रयोगस्थयकारान्तानुकरणं सूत्रे ऽकारश्चोच्चारणार्थ इति भावः,। लुनीरित्यादि। "ल्वादिभ्यः," 'क्षायोमः,' 'प्रस्त्योन्यतरस्या' मिति नत्वमत्वे। 'शुषः कः,' 'पचो वः,' इति कत्ववत्वे।

व्याख्यानात् प्राधान्याच्च रूपातिदेशोऽयमित्याह—क्रोष्टुशब्द इति। तच्चोदात्तऋकारविशिष्टमतिदिश्यते। तृज्वदितिचकारोच्चा-

प्रकारान्तरमप्याह—*सुपीति वेति*। *अनित्यत्वादिति*। एतेन नाजानन्तर्यपरिभाषाविषयेऽनित्यत्वमेव स्वीकार्यं, सा परिभाषा च न कर्त्तव्या। परिभाषासत्त्वे यत्र तयाऽन्तरङ्गेऽजानन्तर्यसत्त्वेऽसिद्धत्वनिषेधस्तत्रापि नित्यत्वाद्बहिरङ्गपरिभाषया अप्रवृत्तिरिति भावः।

*गौणमुख्यन्यायवदिति*। अत्र वतिप्रत्ययप्रयोगो गौणमुख्यन्यायादेतस्य भिन्नत्वमितिवादिमतेन। वस्तुतस्तु गौणमुख्यन्यायेनैव तदपि गतार्थम्। *व्याख्यानादिति*। यद्यपि निमित्तादिभेदेनातिदेशस्य षड्विधत्वं प्रसिद्धं तथापि प्रकृते रूपातिदेशस्यैव सर्वकार्यसाधकता निमित्तातिदेशे व्यपदेशातिदेशे वा तृजन्तत्वप्रयुक्तकार्यलाभेऽपि ऋदन्तत्वप्रयुक्तकार्यन्न स्यात। अर्थातिदेशस्य तु सम्भव एव न, उभयोरप्येकार्थत्वात्। तदात्म्यातिदेशस्तूभयोः सहप्रयोग एव। यथा परशुना वृश्चिन्नित्यत्र सहप्रयोगे "सुबामन्त्रित" इति वर्त्तते न तथा प्रकृते सम्भवत्येकार्थत्वादेव

(१) स्ववृत्त्यानुपूर्व्यवच्छिन्नविषयताकोपस्थितिजनकं पदं यत्र पदकार्ये उपात्तं, तत्रैवाऽयं न्यायः प्रवर्तते इति फलितम्। पदकार्यत्वं च—स्त्रीत्वानिमित्तकत्वे सति विभक्त्यनिमित्तकत्वम्। तेनच शूद्राचामहत्पूर्वाजातिरिति चारितार्थम्। अन्यथा शूद्रस्य स्त्री सदृशी इत्यर्थे, 'आभीरी तु महाशूद्री' इत्यादौ च गौणत्वात्टापोऽप्राप्त्या जातिग्रहणवैयर्थ्यं स्यात्। अत्वं त्वमित्यादौ गौणे त्वाद्यादेशस्याप्राप्तिः स्फुटैव। अत्र स्त्रीत्वानिमित्तकत्वे सति इति विशेषणदानात् पङ्गुसदृशपङ्गुशब्दात् स्त्रीत्वविवक्षायाम् ऊङ्सिद्धिः। गौरी, युवतिरित्यादावपि ङीष्तिश्च सिध्यतः। विभक्त्यनिमित्तकत्वेतिविशेषणदानात् सखिसदृशार्थकसखिशब्दे सख्युरसुङ्ङाविति न प्रवर्तते इति दिक्।

रणात्। तेन क्रोष्ट्रेत्यादौ "उदात्तयण" इति स्वरसिद्धिर्बोध्या। पक्त्रा-
देस्तु नातिदेशः। अर्थत आन्तर्याभावात्। इदं सूत्रं स्त्रियाञ्चेति
प्रयोगनियमफलकमिति बोध्यम्।

अप्तृन् (पा०सू०६।४।११)। ननु व्युत्पत्तिपक्षे तृन्नन्तत्वा-
जन्तत्वाद्वा दीर्घे सिद्धे नप्त्रादिग्रहणं व्यर्थम्, अत आह-नियमा-
र्थमिति। अन्येषामुणादिव्युत्पन्नानां सञ्ज्ञाशब्दानां नेति। नेष्ट्रा-
दयोऽप्युणादय एवेति भावः। तेषां 'तृन्' (पा०सू०३।२।१३५) इति
सूत्रस्थवार्तिकेन व्युत्पादनात्। नप्त्रादीनामादिग्रहणेन प्रशास्तृशब्द-
ग्रहणमित्यन्ये। अव्युत्पत्तिपक्षे तु विध्यर्थमेवेति बोध्यम्। भाष्य-
प्रयोगादिति। एवञ्चोणादित्वस्य व्युत्पादनमप्रामाणिकमिति
भावः। पङ्कजादिवद्योगरूढोऽयम्। ये त्वौणादिकत्वमेवास्य स्वीकृत्य
भाष्यप्रयोगादेव दीर्घत्वमिच्छन्ति ते मान्याः। भाष्यकृताऽन्यप्रयो-
गस्योदाहरणत्वेन दानेऽप्यस्य भाष्यप्रयोगत्वाभावात्। 'ण्वुल्तृचौ'
(पा०सू०३।१।१३३) इति भाष्ये तु "तृचश्चकारो व्यर्थः। नन्
'अप्तृन्तृच्' इत्यादौ विशेषणार्थः, तृ इत्येव सिद्धेः। न च तृ इति

---

सहप्रयोगस्यासम्भवात्। शास्त्रातिदेशे कार्यातिदेशे वा तृन्नन्तस्य रे-
त्मकयणादेशलाभेऽपि तस्योदात्तस्थानिकत्वाभावात् "उदात्तयणो हल्पू-
र्वात्" इति स्वरो न स्यादिति परिशेषाद्रूपातिदेश एवोचित इत्येवं रू-
दित्यर्थः। *प्राधान्यादिति*। प्राधान्यञ्चात्र सर्वेष्टसाधकत्वरूपम्। क-
कस्यचिद्रूपस्य नातिदेश इत्याह—*पक्त्रादेरिति*। *प्रयोगनियमार्थ-
ति*। असम्बुद्धौ सर्वनामस्थाने स्त्रियाञ्च तृजन्तस्यैव प्रयोग इ-
रूपप्रयोगनियम इत्यर्थः।

*व्युत्पत्तिपक्षे इति*। उणादीनाम्व्युत्पन्नानां सञ्ज्ञाशब्दानां
एतेषामेव। एतेन यत्फलितं तदाह-*अन्येषामिति*। *तेषामिति*
नेष्ट्रादीनामित्यर्थः। *वार्त्तिकेनेति*। "ऋत्विक्षु चानुपसर्गस्यादि-
च' इत्यनेन। प्रशास्तृशब्दस्तु तृजन्त एवोणादिव्युत्पन्नः। *अप्रामा-
णिकमिति*। एवञ्च नायन्नियमव्याव्यावर्त्य इति भावः। ननूणादिशब्द-
रूढत्वमस्ति उणादिभिन्नकृद्व्युत्पन्नानान्तु योगिकत्वमनुभवसिद्धमिति
कथमेतदित्यत आह-*पङ्कजादिवदिति*। प्राचीनसम्मतरीत्या व्याख्याय
व्यरीत्याह-ण्वुल्तृचावितीति*। *तृ इत्येवेति*। "अप्तृन्" इति दी-

च्यमाने मातरौ पितरावित्यादौ प्राप्नोति, तत्र हि तृप्रत्ययो निरनुबन्धक इति वाच्यम् । नप्तृग्रहणस्य योनिसंबन्धवाचिनाञ्चेदस्यैव नान्येषां योनिसबन्धवाचिनामिति नियमात्" इत्युक्तम् । नेष्टृत्वष्टृक्षत्तृहोतृपोतॄणां तृन्नन्तत्वस्य प्रशास्तुस्तृजन्तत्वस्य तृन्निति सूत्रे भाष्यवार्त्तिकयोरुक्तत्वेन तेषाङ्ग्रहणं प्रपञ्चार्थमेव । एवञ्च यथान्यासे नियमफलं चिन्त्यम् । क्रोष्टेति । अनङि 'सर्वनामस्थाने च' (पा०सू० ६।४।८) इति दीर्घः । प्रथमोपस्थितत्वात् । क्रोष्टारावित्याद्यर्थन्तु तल्लेखः । यद्वा विशेषविहितत्वाच्छीघ्रोपस्थितिकत्वेन स एव न्याय्यः ।

विभाषा तृ ॥ (पा०सू०७।१।९७) अयमपि नियम एव(१) । तृतीयादावच्येवोभयमिति । तेन श्यामादौ शसि क्रोष्टुपुत्र इत्यादौ च न दोषः । सर्वत्र विशिष्टाभावस्य सुलभत्वात् । "तृज्वत्क्रोष्टुः"

---

तृ इत्येव वक्तव्यमिति भावः । *इत्युक्तमिति* । एवञ्चायन्नियमो योनिसम्बन्धवाचिविषयक इत्युद्गातृशब्दे दीर्घः स्वत एव सुलभ इति भाष्यप्रयोगाद्दीर्घ इति कथनन्निष्फलमेव । भाष्यान्तरमप्याह—*नेष्टृ त्वष्टृ इति* । *भाष्यवार्त्तिकयोरिति* । "तृन्विधौ ऋत्विक्षु चानुपसर्गस्य" । 'ऋत्विक्षुचानुपसर्गस्येति वक्तव्यम् होता पोता । अनुपसर्गस्येति किमर्थम् । प्रशास्ता । प्रतिहर्त्ता' । एतस्य प्रत्युदाहरणपरतया प्रदर्शनेन तृंस्तृचौ शास्तिक्षदादिभ्यः "सञ्ज्ञायां चानिटौ" इत्यनेन तृजिति कल्प्यम् । "नयतेः षुक् च" । चात्तृन् । नेष्टा । 'त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वञ्च चात्तृन्" इति हि तत्राभिहितम् । *नियमफलश्चिन्त्यमिति* । मूले यन्नियमव्यावर्त्यत्वेनोक्तन्तेन पितृमातृप्रभृतीनान्नेति तदन्यथा सिद्धम् । तेषान्निरनुबन्धकतृप्रत्ययान्ततया तृजन्तत्वाभावेन दीर्घाप्राप्तेरिति भावः । *प्रथमोस्थितत्वात्* । अष्टाध्याय्याम्प्रथमोपस्थितत्वात् । *तल्लेखः* । अप्तृन्नित्यस्योल्लेखः । *विशेषविविहित्वात्* । तृन्तृचोः साक्षादुपादानेन प्रतिपदोक्तत्वात् । *स एव* अप्तृन्नित्येव ।

*तृतीयादावच्येवोभयमिति* । 'एवञ्च सामानाधिकरण्यसम्बन्धेन तृतीयादित्वविशिष्टं यदजादित्वं तदवच्छिन्नस्योभयोः प्रयोगे निमित्तता । तयोर्मध्ये तुन्नन्तस्य प्रयोगः प्राप्त एव । तृजन्तस्य प्रयोगः शास्त्रबोध्य इति तत्रैव विशिष्टधर्मावच्छिन्नस्य प्रयोजकत्वम् । यत्र तु तादृशधर्मावच्छिन्नाभावस्तत्रतृजन्तप्रयोगाभावः । शसि तृतीयादित्वाभावात् । श्यामादा-

---

(१) अयमपिनियमएवेति । अत्र अपि त्वर्थे । अयं तु नियम एवेति भावः ।

(पा०सू०७।१।९५) 'स्त्रियाञ्च' (पा०सू०७।१।९६) इत्याभ्यां सर्वनामस्थाने स्त्रियाञ्च तृजन्तरूपविधानेन तयोः प्रयोगनियमार्थत्वं फलति। एतेन तृज्वत्सर्वनामस्थाने एवेति नियमादिदं विद्ध्यर्थमिति अपास्तम्। न चैवमपि क्रोष्टूनित्याद्यसङ्गतम्। अन्यत्र तृजन्तस्यैव प्रयोगेणाप्युक्तनियमस्य चारितार्थ्यादिति वाच्यम्, "तृज्वत्क्रोष्टु" रिति योगविभागस्यैवं सति वैयर्थ्यापत्तेः। न च "तद्धितेष्वचामादेः (पा०सू० ७।२।११७) "इकोगुणवृद्धी" (पा०सू०१।१।३) इति सूत्रयोः "कौष्टुः क्रौष्ट्रीया" इति भाष्यप्रयोगासङ्गतिरिति वाच्यम्। ऋकारान्तस्यैव ऋषिवाचकत्वेनादोषात्। इदं सूत्रत्रयन्तु शृगालवाचिक्रोष्टुक्रोष्टृशब्दयोर्व्यवस्थार्थमित्यवधेयम्। तदुक्तं भाष्ये "तृज्वद्भावविषये एतत् तृजन्तं मृगवाचीति, तृतीयाद्यजादिविभक्तिषु तृजन्त तुन्नन्तञ्चमृगवाचि" इति च। अनेन हि अन्यत्र तुनन्तमेवेत्यपि सूचितमिति दिक्।

---

वजादित्वाभावात् क्रोष्टुपुत्र' इत्यत्र तु विशेष्याभावादेव विशिष्टाभावः सुलभः। *प्रयोग नियमार्थमिति*। तृज्वदेव सर्वनामस्थाने स्त्रियाञ्च तु तुन्नन्त इत्येवं विधो ह्यत्र नियमः। *फलतीति*। विधेयत्वेन प्रधानभूतस्य तृज्वद्भावसङ्कोचकल्पनापेक्षया निमित्तत्वेनाभिमतस्य सर्वनामस्थानस्य तुन्नन्तनिरूपितपरत्वं यथा न भवति तथा कल्पनमुचितमिति भावः। *एतेन* सर्वनामस्थाने स्त्रियाञ्च क्रोष्टृ शब्द एवेतिनियमेन *अपास्तमिति*। उक्तनियमे तृतीयादावच्युभयोः प्रयोगस्य सिद्धत्वात् तदपि नियमार्थमेवेति नियमस्य वर्णितत्वादिति भावः। *एवमपि* विभाषेत्यस्यानियामकत्वेन अन्यत्र तृजन्तस्यैवेतिनियमफलकल्पनेनक्रोष्टूनित्यसंगतमिति भावः। *योगविभागेति*। तृतीयादावच्येवोभयमन्यत्र तृजन्तस्येत्येवं कल्पनायां सर्वनामस्थाने तृजन्तप्रयोगसिद्ध्या तृज्वत् क्रोष्टुः स्त्रियामित्येव वदेत्। एवञ्चान्यत्र तुन्नन्तमेवेति सिद्धम्। तत्र शङ्कते-*न चेति*। *मृगवाचीति*। मृगशब्दोऽत्र पशुजातीयपरः। पूर्वं अत्रैवादाविदंसूत्रत्रयन्तु शृगालवाचि क्रोष्टुक्रोष्टृशब्दयोर्व्यवस्थार्थमित्युक्तम्, इह तु मृगवाचीत्युक्तमिति पूर्वापरविरोध इत्यपास्तम्। तथाचोक्तं विश्वकोशे।

मृगः पशौ कुरङ्गेऽपि करिनक्षत्रभेदयोः।
याञ्चायाम्मृगयायाञ्च मृगी तु वनितान्तरे॥

ऋत उत् ॥ (पा०सू०६।१।१११) तपरत्वं भाव्यमानस्यापि क्वचित्सवर्णग्राहकताज्ञापनद्वाराऽऽन्तर्यतो द्विमात्रनिवृत्त्यर्थम्, तेनामू इत्यादिसिद्धिरिति 'छ्वोः' (पा०सू०३।४।१९) इति सूत्रे कैयटः। यत्तु तपरत्वं 'ढ्रलोपे' (पा०सू०६।३।१११) इति दीर्घबाधनार्थमिति तन्न।

"सुपत्रपातिता बाणा ज्वलिता इव पन्नगाः।
नैर्ऋतोरस्यभासन्त सवितू रश्मयो यथा" ॥

इतिरामायणप्रयोगविरोधात्। 'उरण् रपर' इति सूत्रे ऽण्ग्रहणाभावे 'ऊ रपर' इति भाष्यप्रयोगविरोधाच्च।

सस्यैवेति। संयोगान्तलोपेन सिद्धे नियमार्थम्। तेनोर्गित्यादौ नेति भावः। विपरीतनियमस्तु न, 'पुमान्स्त्रिया' (पा०सू०१।२।६७) इति निर्देशात्। 'एरनेकाच' इति सूत्रमेरिति पदरहितं सानुवृत्तावृत्तविशेषणं सवार्त्तिकश्चानुवर्त्तत इत्याह—धातवयवेत्यादि। गतीत्यादि च। सकृल्लवावित्यत्र क्रियाविशेषणत्वेन कर्मत्वाद्यण्।

'न भूसुधियोः' (पा०सू०६।४।८५) इति निषेधे प्राप्ते आह—वर्षाभ्वश्चेति। 'वर्षाभूर्दर्दुरे पुमान्'। स्वार्थिक इति। स्वस्याः प्रकृतेरर्थः स्वार्थस्तत्र भव इत्यर्थे ऽध्यात्मादित्वाट्ठञ्। द्वारादिषु स्वग्रामस्वाध्याययोः पाठेन स्वशब्दादेश्चेदेतयोरेवेति नियमार्थकेनैजागमो न। पुनर्भूशब्दस्य रूढस्य नित्यस्त्रीत्वादाह—यौगिक इति।

इत्यूदन्ताः।

वर्णैकदेशानां वर्णग्रहणे रेफाभावादाह—ऋवर्णादिति।

---

इति। *नेन* भाव्यमानस्यापि क्वचित्सवर्णग्राहकत्वज्ञापनेन। कौस्तुभोक्तिं खण्डयति—*यत्त्विति*। तपरत्वेन प्रयोगे श्रूयमाणैकमात्रिक एवादेशः स्यादित्यर्थकल्पनेनेति भावः। रादेव संयोगान्तस्य संस्य लोप इत्याकारकान्नियमान्निरस्यति—*विपरीतेति*। *क्रियाविशेषणत्वादिति*। लुनात्यर्थफलांशविशेषणत्वादित्यर्थः। द्वारादिषु स्वशब्दपाठेन तदादिग्रहणस्य चोदितत्वात्। "श्वादेरिञ्" इति ज्ञापकेन वा तदादेरवैजागमस्येष्टत्वात्स्वार्थिक इत्यनुपपन्नमत आह—*द्वारादिष्विति*। *अग्रहण इति*। इतिपक्षे इति शेषः।

व्युत्पत्तिपक्षे इति अव्युत्पत्तिपक्षे ऽबादिष्वपाठाद्दीर्घशङ्कैव नेति भावः । व्युत्पत्तिपक्षे निरनुबन्धकतृप्रत्ययान्ता एवेति "ण्वुल्तृचौ" (पा०सू०३।१।१३३) इति भाष्यस्वरसः ।

इत्यृदन्ताः ।

वैकल्पिकेति । 'यत्तदेतेभ्य' इत्यत्र त्यदाद्यत्वकरणादतिदेशः 'क्षिय' इत्यादौ धात्वनुकरणे विभक्तिकरणेन वैकल्पिकत्वस्य ज्ञापनादिति भावः । अनुकरणस्यानुकार्यशब्दस्वरूपमात्रमर्थ इति प्रातिपदिकत्वम् । अनुकार्यश्चानुकरणाद्भिन्नमेवेति 'मतौ छः' (पा०सू० ४।२।५९) इति सूत्रे भाष्ये स्पष्टम् । ईषदाऽऽनुपूर्वीव्यत्ययेपि वाचकत्वमस्त्येवेति [illegible] स्यादर्थोपस्थापकत्वमिति अत्र कैयटे। 'प्राग्दीव्यतोऽण्' (पा०सू० ४।१।८३) इत्यत्र भाष्ये च स्पष्टम् । अत एव 'किरः' इत्यादितः, कृधातुबोधः । 'भू सत्तायाम्' इत्यादौ त्वित एव निर्देशात्कदाचिदनुकरणाद्विभक्त्यभावोऽपि । स च सूत्रेष्वेवेति प्रामाणिकाः । गवित्ययमाह इत्यत्र वान्तस्यैवानुकरणम् । अनुकार्यस्वरूपभङ्गभिया च नं वलोपः । झलाञ्जश् (पा०सू०८।४।५३) इत्यादौ जश्त्वाभाववदित्याहुः । इत्याहुः इति। 'किरश्च पञ्चभ्यः' (पा०सू०७।२।७५) इति निर्देशादधातुत्वेऽपि तत्प्रवृत्तिरिति भावः । कीरिति कृधातुरित्यर्थः। गुणो नेति "ऋत" उत् (पा०सू०६।१।१११) इत्युत्वमप्यत एव न । अत एव 'ग्रो यङि' (पा०सू०८।२।२०) इति सूत्रनिर्देशः सङ्गच्छते ।

इत्यॄदन्ताः ।

अनङिति । ऋऌवर्णयोः सावर्ण्यादिति भावः । गमॄनिति ऌवर्णस्य दीर्घाभावादृवर्ण एवेति भावः । ननु तुल्यास्यसूत्रे भाष्ये

---

नन्वनुकार्यानुकरणयोरभेद इति पक्षेऽर्थवत्त्वाभावात्कथं विभक्तिरत आह—*अनुकार्यश्चेति* । नन्वनुकरणे किञ्चिद्विकारे कथमर्थोपस्थितिरत आह—*ईषदिति* । *वाचकेति* । अनुकरणेत्यर्थः । *अर्थ* अनुकार्यम् । तत्र दृष्टान्तमाह—*किर इति* । ननु सूत्र एव विभक्त्यभावस्यैवंरीत्या कल्पने गवित्ययमाहेत्यत्र पदान्तत्वाल्लोपः स्यादत आह—*गवित्ययमाहेतीति* । *आहुरिति* । सिद्धान्तानुसारिणः । *अत एव* ऋत इतितपरत्वादेव । *अत एव* । उत्वाप्रवृत्तेरेव ।

कृता 'ऋति ऋवा' इत्यादिविधेययो रेफद्वयगर्भलद्वयगर्भयोरच्त्वदीर्घत्वाङ्गीकारेणात्र द्विलकार ईषत्स्पृष्टो दुर्वारः । आमि च तथा धातॄणामित्यत्र रेफद्वयगर्भोऽपीति चेन्न । "अकः सवर्णे" (पा०सू०६।१।१०१) इति सूत्रे उक्तोत्तरत्वात् । गम्लेति । यत्तु 'लण्' सूत्रे 'उरण्रपर' इत्यत्राजिति वक्तव्येऽणग्रहणसामर्थ्येनाणपूर्वेणैवेत्युक्तं भाष्ये, लृकारस्य यणि हि तत्र लपरत्वार्थं परेणाण्ग्रहणं स्यादिति सामर्थ्योक्तिरसङ्गता । ऋकारस्य यणि तु 'रोरी'ति लोपेन न विशेष इति तन्न, ऋकारांशे हल्रूपाणि रोरीति प्रवृत्त्या फलाभावेनाप्रवृत्त्या तत्साहचर्याद् लृकारांशेपि हल्रूपाण्यप्रवृत्तिरित्याशयात् । वस्तुतः ईदृशानामभिधाने दृढं मानं चिन्त्यम् ।

---

*ईषत्स्पृष्टो दुर्वार इति* । न च "प्रथमयोः" इतिसूत्रस्य पूर्वसवर्णादेशविधायकत्वमयन्तु प्रयत्नभेदान्न सवर्ण इति कथमियमाशङ्केति वाच्यम् । तत्रत्यसवर्णपदस्य सजातीयपरत्वेनास्याच्त्वविशिष्टदन्त्यत्वेन सजातीयत्वात्प्राप्तिरित्याशयात् । तत्रत्य सवर्णपदं सवर्णसञ्ज्ञकपरमेवेति न तस्य प्राप्तिरितिदूषणस्य स्फुटत्वात्तदुपेक्ष्य दूषणान्तरम् । *उक्तोत्तरत्वादिति* । ह्रस्वऋकारद्वयैकादेशो प्रथमस्य ऋकारलृकारस्थानिकैकादेशो द्वितीयस्य साधुत्वमिति प्रतिपादितत्वादित्यर्थः । केचित्तु लण्सूत्रस्थभाष्यप्रमाणाख्येन लृकारस्य यणादेशो दुर्लभ इति गम्लेत्यसंगतमिति यत्तद्दूषयितुन्तन्मतमाह—*यत्त्विति* । *भाष्येति* । इत्थं हि तत्र भाष्यम् "उरणित्यत्राणंशे सन्देहः । अण्प्रत्याहारः पूर्वेण णकारेण परेण वा । असन्दिग्धं पूर्वेण न परेण । कुत एतत् । पराभावात् । नह्युः स्थाने परेऽणः सन्ति । ननु चायमस्ति । कर्त्रर्थम् । हर्त्रर्थमिति । यदि परेण स्यात्तर्हि यणोऽपि रपरत्वापत्तौ रेफद्वयश्रवणप्रसङ्गः । रो रीतिलोपेन सिद्धम् । एवन्तर्हिसामर्थ्यात्पूर्वेण न परेण यदि परेण स्यादण्ग्रहणमनर्थकं स्यादुरजित्येव ब्रूयात्" इति । तत्र गम्ला इत्यादौ ऋकारस्याणि रपरत्वे यद्यपि लोपेन सिद्धिस्तथाप्यत्र लपरत्वे लद्वयं श्रूयतेति सामर्थ्यवर्णनमयुक्तमिति भावः । *फलाभावेनाप्रवृत्त्या* । उरण्रपरेत्यस्याप्रवृत्त्या । *आशयादिति* । भाष्यकारस्येत्यादिः । आशय इत्यनेन सूचितामरुचिं सूचयन्नाह *वस्तुत इति ईदृशानाम्* । लृकारस्थानिकलादेशघटितानामनार्षप्रयोगाणाम् । *चिन्त्यमिति* । यत्तु सूत्रकारमते ऋकार लृकारयोस्सावर्ण्याभावेन ऋकारस्य लकारेऽपि उः स्थानेऽणोभावान्न लपरत्वप्राप्तिरिति णकारोच्चारणं पूर्वणकारेण प्रत्याहारे ज्ञापकमिति

सोरिति । इना सहेत्यर्थः । 'वोपसर्जनस्ये'ति सत्वम् । एकादे-
शस्य पूर्वान्तत्वेऽपि लिङ्गाद्यन्वय्यर्थप्रतिपादकत्वाद् अव्ययमिति मह-
सञ्ज्ञयाऽस्यानव्ययत्वान्न विभक्तिलुक् । सादेशात्पूर्वमाद्गुणस्तु त-
'नेन्द्रस्य' (पा०सू०७।३।२२) इति ज्ञापकेन 'पूर्वोत्तरपदनिमित्तका-
र्यात्पूर्वमेकादेशाप्रवृत्तेः' । न च 'नान्तः पाद' मिति सूत्रस्थेन '
चैङः पदान्तात्परो रुरस्ती' ति भाष्येण विरोधात् 'सौ' इदंशा
प्रयोगो ऽनुचितः, सावपि पदत्वसत्त्वादिति वाच्यम्, यो
विभागसिद्धस्य सौ पदत्वस्य क्वाचित्कत्वेनादोषाद् । सावप्रयो
एवेत्यन्ये । सय इति । न चास्यान्तर्वर्त्तिविभक्त्या पदत्वात् "ए
पदान्ताद्" इत्यादि दुर्वारमिति वाच्यम् । भाष्ये 'स्वादिषु' इतियो
विभज्य स्वादिषु पूर्वं पदमित्यर्थः । ततः 'असर्वनामस्थाने ऽथचि'

---

भाष्योक्तं युक्तमेव । वार्त्तिककारमते ऋकारऌकारयोः सवर्णसंज्ञा सत्त्व
उः स्थाने जातस्य लकारस्य लपरत्वार्थम्परेण णकारेण प्रत्याहारो भ
ष्यतीत्यपि न । "नाज्झलौ" इत्यत्र दोषवारणाय 'अज्झलोः प्रतिषे
शकारप्रतिषेधोऽज्झल्त्वात्' इति वार्त्तिकारम्भेण तन्मते लोपस्य "झरो
झरि" इति "हलो यमाम्" इतिसूत्रविहितस्य वाऽनित्यतया गम्य
लकारस्य लपरत्वेऽपि लोपेन विशेषाभावादिति । तन्न । भाष्यकार
पस्य "शरोऽचि" इतिज्ञापकेन वैकल्पिकत्वस्य वर्णनात्तन्मते प्रकृते प
णणकारेणाण्ग्रहणे लद्वयं श्रूयते अज्ग्रहणे तु नेति वैषम्यस्य दुरपन्हव
याग्रहणस्य ज्ञापकत्वं वर्णनासङ्गतिरिति यथोत्तरम्मुनीनाम्प्रामाण्यादी
शानामनभिधानस्यावश्यकत्वादिति दिक् ।

नन्वेवमन्तरङ्गत्वाद्गुणे ततः सादेशेऽदन्तरूपापत्तिरत आह—*सा
देशात्पूर्वमिति* । *भाष्येण विरोधादिति* । तत्सूत्रभाष्ये कस्याय
तिषेध इति शंकायां सर्वप्रतिषेध इतिसमाधाने कृते "यद्येवमन्वाग्नि
सामग्रमख्यत् । प्रत्यग्निरुपसामग्रमख्यादित्यत्र यणादेशस्य प्रतिषे
प्राप्नोति" इत्युक्त्वा 'एङ्प्रकरणात्सिद्धम् । एङः अतीति वर्त्तते ।
धमध्यपठितेऽतोरोरप्लुतादप्लुते इत्यत्राप्येङ्ग्रहणसम्बन्धः स्याच्चदा
ग्नेरत्र वायोरत्रेत्यत्रैङः परस्योत्त्वम्प्राप्नोति' इत्याशङ्क्य 'पदान्ताद
म्बद्धमेङ्ग्रहणमनुवर्त्तते न चैङः पदान्तान्यतरोरुरस्ति' इति तत्रोक्त
विरोधादित्यर्थः । *योगाविभागसिद्धस्य* । "उत्तरपदत्वे चापदादि
धौ" इति वार्त्तिकप्रत्याख्यानसमये "स्वादिषु" इतिसूत्रे स्वादिषु पूर्वं

सुबन्तमिति अनुवर्त्तते। अ यचीति प्रसज्यप्रतिषेधः । तेन यजादौ सर्वनामस्थाने पूर्वं पदं मध्ये चेत्सुबन्तं तदपि पदं नेति व्याख्याने-नादोषात् । आतिदेशिकस्याप्ययं निषेध इति स्पष्टमेव। 'उत्तरपदत्वे चापदादिविधा'विति प्रतिषेधाच्च । उत्तरपदस्य तद्घटितस्य वा पदत्वे कर्त्तव्ये ऽन्तर्वर्त्तिविभक्तेः प्रत्ययलक्षणं नेति तदर्थः, अतो न योगवि-भागमूलकप्रत्याख्यानेन फलभेद इति केचित् ।

इतोऽत् (पा-सू-७।१।८६) इत्यतो ऽनुवृत्तं 'सर्वनामस्थाने' इ-ति प्रथमया विपरिणम्यते, णिदित्यनेन सामानाधिकरण्यादित्याह— सर्वनामस्थानमिति । तत्र णितः कार्यस्यासम्भवात् णिति यत्का-र्यं तदतिदिश्यते । शसेति । अचीत्यधिकारात्तद्धितशसो न ग्रह-णमिति भावः । गामिति । परत्वादत्र वृद्धिस्तु न । अनवकाशत्वेन-आत्वस्यापवादत्वात्, तदाह—ओतो णिदिति । सूत्रे तपरकरणेन तस्याविवक्षितत्वमिति भावः । तेन 'चित्रगु' रित्यदौ न दोषः । अन्य-थाऽङ्गाधिकारे तदन्तविधेः सत्त्वेन स्थानिवत्त्वेन गोऽन्तत्त्वाद्दोषः स्यादेव । मम तु ओकारान्तत्वाभावादल्विधौ स्थानिवत्त्वाभावाच्च न दोषः ।

परे तु 'गोतो णित्' (पा-सू-७।१।९०) इति सूत्रे भाष्ये तपर-

---

पदत्वं योगविभागेन साधितं तस्य । ननूत्तरपदस्योक्तरीत्या निषेधेऽपि पूर्वपदस्य पदत्वात्पूर्वान्तवद्भावेन से इत्यस्य पदत्वं स्यादिति पूर्वरूपं दुर्वारमित्यत आह—*आतिदेशिकस्यापीति* । यदि तु प्रत्याख्यान-प्रकारस्य गुरुतया लाघवार्थमुत्तरपदत्वे चापदादिविधाविति वचनमा-रभ्यते तदाप्याह—*उत्तरपदत्व इति* । *तद्घटितेति* । उत्तरपदघ-टितेत्यर्थः । उत्तरपदघटितत्वञ्चोत्तरपदाविषयकप्रतीत्यविषयत्वं तच्च स इत्यत्र समुदायावयवसाधारणमिति भावः ।

*णितः कार्यस्यासंभवादिति* । प्राधान्यात्कार्यातिदेश इति भावः । ननु शसस्तद्धितस्यापि सम्भवादेतत्साहचर्यात्सुब्वेत्यनुपपन्नमत आह—*अ-चीत्यधिकारादिति* । यदुक्तमपवादत्वादात्वे न वृद्धिबाध इति तस्योप-पत्तिमाह—*सूत्रे तपरकरणेनेति* । तद्धि चित्रगुशब्देऽतिप्रसङ्गवारणाये-ष्टम् । तपरसूत्रे चाण्ग्रहणानुवृत्त्या समुदायस्यानण्त्वात् परसूत्रा-प्रवृत्तेस्तपरत्वं व्यर्थमितितदकारस्याविवक्षायां तात्पर्यग्राहकमिति भावः । मूलोक्तं दूषयन् सिद्धान्तमाह *परे त्विति* । नन्वेवं चित्रगुरित्यादौ

त्वं प्रत्याख्यातम् । चित्रगुरित्यादौ तु न दोषः । गोः पूर्वणित्त्वा-
त्वस्वरेषु स्थानिवत्त्वप्रतिषेधात् । 'हे चित्रगो' इत्यादौ तु लाक्षणिकत्वा-
न्नदोष इति अत्रैव सूत्रे भाष्ये स्पष्टम् । "द्योः सर्वनामस्थाने ...

---

दोष इत्यत आह-*चित्रगुरित्यादाविति* । अत्र स्थानिवद्भावेन ...
प्रतिषेधः । *अत्रैव* । गोतोणिदिति सूत्रे एव । नन्वेवं गकारस्य ...
तत्वे द्यौशब्दे दोष एवेत्यत आह-*द्यौः सर्वनामेति* । अत्र हि "...
पसंख्यानम् । गां पश्य । किम्पुनः कारणन्न सिध्यति । वृद्धि...
रत्वात् । परत्वाद् वृद्धिः प्राप्नोति । न वाऽनवकाशत्वात् । अनव...
मात्वं वृद्धिम्बाधिष्यते । सावकाशम् । कोऽवकाशः । द्यां गच्छ । ...
सर्वनामस्थाने वृद्धिर्विधेया । किम्प्रयोजनम् । यद्याव इन्द्र ते शतं ...
भूमिरुत स्युः । यावता चेदानीं द्योरपि सर्वनामस्थाने वृद्धिरुच्य...
अनवकाशमत्वं वृद्धिम्बाधिष्यते" इत्युक्तम् । यद्यपि स्थानिवत्सूत्र...
"गोः पूर्वणित्त्वात्वस्वरेषु स्थानिवद्भावप्रतिषेध" इतिवचनस्थाणित्त्व...
तपरकरणात्सिद्धमित्यनेन प्रत्याख्यातम् । तदनुरोधेनैव "औतोऽ...
सोः" इतिसूत्रे "द्योश्चवृद्धिर्वक्तव्या" इतिवार्त्तिकव्याख्यानावसरे ...
टेन "ओतो णित्' इति सूत्रं पठितव्यम् । गोत इत्योकारान्तोप...
णार्थं वा व्याख्येयम् वर्णनिर्देशे हि तपरत्वमप्रसिद्धम्' इति व्या...
तम् । तथापि गोतो णिदितिसूत्रभाष्ये "तपरकरणं किमर्थमिह मा...
चित्रगुः शबलगुरिति । नैतदस्ति । ह्रस्वत्वे कृते न भविष्यति । स्था...
वद्भावात्प्राप्नोति । अत उत्तरं पठति । तपरकरणमनर्थकम् स्थानि...
प्रतिषेधात् । प्रतिषिध्यतेऽत्र स्थानिवद्भावः । गोः पूर्वणित्वात्वस्व...
स्थानिवद्भावो न भवतीति । स चावश्यम्प्रतिषेध आश्रयितव्यः । ...
रथा हि सम्बुद्धिजसोः प्रतिषेधः । यो हि मन्यते तपरकरणसामर्थ्या...
न भविष्यतीति सम्बुद्धिजसोस्तेन प्रतिषेधो वक्तव्यः स्यात् । हे चित्र...
हे चित्रगव इति अथेदानीं सत्यपि स्थानिवद्भावप्रतिषेधे गुणो...
कस्मादेवात्र न भवति । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति । ...
चेदानीं सत्यपि स्थानिवद्भावप्रतिषेधे एतया परिभाषया श...
पस्थातुम् । नेत्याह । न हीदानीं क्वचिदपि स्थानिवत्स्यात्" इत्यु...

एतद्भाष्ये यत्तपरकरणप्रयोजनमुक्तञ्चित्रगुरिति तद्व्याख्यानावसे...
रस्तत्कालस्येत्यत्राणिति नानुवर्त्तत इत्यनणोऽपि तत्कालस्य प्र...
*इतरथा हीति* । यदि स्थानिवत्त्वनिषेधो नाश्रीयते तदा सत्यपि त...
करणे संबुद्धौ जसि गुणे कृते स्थानिवत्त्वात्तत्कालत्वाच्च णित्वं स्या...
प्रतिषिद्धे तु स्थानिवत्त्वे गुणे कृते गोरूपस्य लाक्षणिकत्वाण्णित्वा...

वक्तव्यम्" इति 'औतो ऽम्' इसत्र भाष्ये उक्तमित्याहुः । सुद्यौरिति । केवलद्योशब्दस्य स्त्रीत्वात् बहुव्रीहिरुदाहृतः ।

विहितमिति । यदि तु वर्णग्रहणेऽपि प्रतिपदोक्तपरिभाषा प्रवर्तेत तदा व्यर्थोऽयं यत्नः ।

स्मृतोरिति । स्मृत उर्येनेत्यर्थः । यत्तु एषामभिधाने अयवायावादिषु "एकादेश उदात्तेनोदात्तः" (पा०सू०८।२।५)इत्यस्य सिद्धत्वं वक्तव्यं तत्स्थानिकायादीनामस्वरितत्वाय" इति वार्तिकव्याख्यावसरे "अवादेशे नास्त्युदाहरणमिति "स्वरितो वा" (पा०सू०८।२।६) इति सूत्रस्थ भाष्यविरोधः । प्रकृते पूर्वपदप्रकृतिस्वरेण स्मृतस्यान्तोदात्तत्वे शेष-

---

इत्युक्तं कैयटेन । एतेन स्थानिवत्त्वप्रतिषेध एव भाष्यकारस्य निर्भर इति कैयटस्यापि सम्मतम् । ओकारोपलक्षणत्वेन व्याख्यानन्त्वेकदेशयुक्तित्वसूचनायेति विभावनीयम् । *उदाहृत इति* । आकृत्वात्तदन्तेऽपि प्रवृत्तिः सिद्धान्तेऽपि ।

गोत इतितपरकरणादोकारमात्रं विवक्षितमितिमते हे भानो इत्यत्र प्रसक्तामतिव्याप्तिं वारयितुं यद्विहितविशेषणतया व्याख्यातं तत्प्रतिपदोक्तपरिभाषयापि सिद्धमित्याह-*यदि त्विति* । अत्र यदीति न पाक्षिकत्वसूचनाय किन्तु शास्त्राणि चेत्प्रमाणानीतिवदसन्दिग्धे सन्दिग्धवचनम् विधेयस्यार्थस्य दार्ढ्यसूचकमेव । वर्णग्रहणेऽप्रवृत्तिसूचकं यद् "आदेच उपदेशेऽशिति" इति सूत्रस्थमुपदेशे इतिपदं तदनित्यत्व एव ज्ञापकमिति भावः । *उरिति* । शम्भुरित्यर्थः ॥

केचित्तु स्मृतोशब्दस्वीकारे तृतीयैकवचनादावप्यस्य प्रयोगः स्यात् तथा च "स्वरितो वा" इतिसूत्रस्थभाष्यविरोधः स्यादतोऽस्यानभिधानमेव युक्तमित्याहुस्तन्मतं खण्डयितुमाह—*यत्त्विति* । *स्वरितो वेतिसूत्रस्थभाष्यविरोध इति* । एवं हि तत्रत्यं भाष्यम्-'एकादेशस्वरोऽन्तरङ्गः । एकादेशस्वरोऽन्तरङ्गः सिद्धो वक्तव्यः । किं प्रयोजनम् । अयवायावेकादेशशतृस्वरैकाननुदात्तसर्वानुदात्तार्थम्' । अयं भावः । उदात्तानुदात्तयोर्य आदेशस्तस्योभयान्तर्यात्स्वरितत्वे प्राप्ते 'एकादेशउदात्तेनोदात्त' इत्यनेनोदात्तत्वं विधीयते । अयश्चोदात्त एचोऽयवायाव इत्येतदृष्ट्याऽसिद्ध इत्यादेशे स्थानिस्वरेण स्वरितबुद्ध्यान्तरतम्यात्स्वरितः स्यादिति । अय् । वृक्ष इदम् । प्लक्ष इदम् । अवादेशो नास्ति । आय् । कुमार्या इदम् ।

अत्र कुमारीशब्द उदात्तनिवृत्तिस्वरेणान्तोदात्तः । तत एकारस्या-

निघातेन उशब्दस्यानुदात्तत्वात्तदेकादेशस्य "एकादेश उदात्तेन" (पा०सू०८।२।५) इत्युदात्तत्वे स्मृतत्वा इत्यादौ तदुदाहरणसंभवादिति तन्न। तृतीयादिष्वनभिधानेऽपि अन्यत्र तत्सत्त्वे बाधकाभावात्। न च 'गोतः' (पा०सू०७।१।९०) इति सूत्रे "द्योश्च वृद्धिर्वक्तव्या" इति वार्त्तिके द्योशब्दस्यैवोपादानादन्यौकारान्ताभाव इति वाच्यम्, उपलक्षणतया व्याख्यानेनादोषात्। (१)परे तु ईदृशानामनभिधानेऽ

नुदात्तस्याडागमे यणादेशे चोदात्तयणो हल्पूर्वादित्याट उदात्तत्वे आ कारयोरुदात्तानुदात्तयोर्वृद्धिरेकादेश उदात्तस्तस्यायादेशः। आव्। क्षावत्र। उदात्तानुदात्तयोरेकादेशस्तस्य एकादेश उदात्तेनोदात्त इत्ये द्भवति तस्य सिद्धत्वं वक्तव्यम्। उदात्त आवादेशो यथा स्यात्। एका शस्वरः। गाङ्गेऽनूप इति। अत्र गाङ्गशब्दोऽणन्तत्वादन्तोदात्तः ततस्स म्येकवचनस्यानुदात्तस्य पूर्ववत्स्वरिते प्राप्ते एकादेश उदात्तेनेति णोदात्तस्य जातस्य सिद्धत्वे सति पुनरनूपशब्दाकारेण सहैकादेश दात्तस्भवति। असिद्धत्वे सति तु स्वरितानुदात्तयोरेकादेश आन्तर स्यात्स्वरित एव स्यात्। शतृस्वरः। तुदती। अत्र तास्यनुदात्तेदिति ताऽनुदात्तः। शप्रत्यय उदात्तस्तयोरेकादेशस्योक्तरीत्योदात्तस्य सिद्धत्वे सति शतुरनुम इत्यनेन नद्या उदात्तत्वम्। अत्र ह्यन्तोदात्तादिति वर्त्तते।

एकानुदात्तः। तुदन्ति। लिखन्ति। अत्राहि एकानुदात्तशब्देन 'अ नुदात्तंपदमेकवर्जम्' इत्येषस्वरोऽभिधीयते। अत्र विकरण उदात्तः। लस वधातुकानुदात्तत्वं तत एकादेशस्वरस्यानेन विधीयमानस्यानुदात्तं प मित्येतदृष्ट्याऽसिद्धत्वे धातोरनुदात्तत्वन्न स्यात्। सर्वानुदात्तः। ब्राह्म स्तुदन्ति। ब्राह्मणा लिखन्ति।। अत्र विकरणैकादेशे कृते 'तिङ्ङतिङ' ति निघाने कर्त्तव्ये 'एकादेश उदात्तेन" इत्यस्यासिद्धत्वादान्तरतम्या स्वरितस्बाधित्वा "तिङ्ङतिङ" इत्यनुदात्ते कृते पश्चादेकादेश उदा नेत्यस्य प्रवृत्तावुदात्तश्रवणप्रसङ्गः।

त्रिपाद्यामेतत्सूत्रपाठफलन्तु—प्रपचतीति। सोमसुत्पचतीति। अ द्ये निपातत्वादाद्युदात्तेतिशब्दस्य य इकारस्तेन सह तिशब्दस्यैकार कादेशे कृते पूर्वान्तवद्भावेन ईकारस्य तिङन्तावयवत्वेन यद्येकादेश अ नेनेत्वस्यासिद्धत्वन्न स्यात्तदोदात्तवत्तिङन्तपरत्वाद् गतिनिघातप्र ङ्गः। द्वितीये "तिङ्ङतिङ" इतिनिघात इकारस्य न भवतीति सामान्यतो ऽस्य शब्दस्यानभिधानमित्याहु तन्मतान्निरस्यति—*तृतीयादिष्विति

(१) ननु 'ओश्चे' तिवक्तव्ये 'द्योश्चेति' गुरुनिर्देशं कुर्वतो वार्तिककारस्योपलक्षणतया व्याख्याने भिप्रेतमत आह—परेतु इति।

न क्षतिरित्याहुः।

रायो हलि ॥ (पा०सू०७।२।८५) "अष्टन आ" (पा०सू०७।२।८४) इत्यत 'आ' "विभक्तौ" इत्यनुवर्त्तते।

इत्यजन्ताः पुँल्लिङ्गाः ॥

---

रमाति। रमयतेः पचाद्यच् टाप्। एकादेशस्य पूर्वान्तत्वेन प्रातिपदकत्वात्स्वादयः(१)। 'वाच' इत्यादौ तु लिङ्गविशिष्टपरिभाषया तत्त्वात्ते। आप इति पञ्चम्यन्तेन सामानाधिकरण्यादङ्गस्येति पञ्चम्या विपरिणम्यते विशेषणेन तदन्तविधिरित्याह—आबन्तादिति। 'जसः शी'(पा०सू०७।१।१७) इत्यतः शीति वर्त्तते। रमे इति। 'यस्येति' लोपो न, अभत्वात्।

सम्बुद्धौ च (पा०सू०७।३।१०६) 'बहुवचने झलि'(पा०सू०७।१।१०३) इत्यत एदिति "आङि चाप" (पा०सू०७।३।१०५) इत्यत आप इति चानुवर्त्तते। एङ्ह्रस्वादिति। सम्बुद्धौ प्रतिपदोक्तत्वेन शीघ्रोपस्थितिकतया हल्ङ्यादिलोपात् प्रथममेवेऽनेन सम्बुद्धिलोप इति भावः। सन्निपातपरिभाषा त्वनित्यत्वान्नात्र प्रवर्त्तते।

---

यत्रावादेशप्रसङ्गस्तस्यानभिधानकल्पनेन भाष्यस्योपपन्नत्वादिति भावः। *उपलक्षणतया*। द्योश्चेत्योकारान्तसामान्यस्योपलक्षणमित्येतत्परतया। वस्तुतः सामान्यत एव पूर्वोक्तभाष्यद्वयसंवादादनभिधानमुचितमित्याशयेनाह—*परे त्वीदृशानामितीति*। *इत्याहुरिति*। भाष्यस्वारस्यविद इत्यादिः।

॥ इत्यजन्ताः पुँल्लिङ्गाः ॥

---

*रमेतीति*। ग्रन्थमध्ये मङ्गलार्थमस्यादावुल्लेखः। ङ्याब्ग्रहणस्यान्यार्थत्ववर्णनादाह—*एकादेशस्येति*। *वाचेत्यादाविति*। इदम्मूलरीत्या। एतेन व्यापकतया लिङ्गविशिष्टपरिभाषया सर्वत्र निर्वाह इति सूचितम्। *अभत्वात्*। सर्वनामस्थानत्वेनाभत्वादित्यर्थः। ननु सन्निपातपरिभाषया लोपो न स्यादत आह—*सन्निपातेति*।

---

(१) अत्राऽवन्तत्वाय पूर्वान्तवद्भावस्यावश्यकत्वेन तत एव स्वादिसिद्धिरिति भावः। एतेन वाचेत्यत्र सिध्यर्थं लिङ्गविशिष्टपरिभाषा आवश्यकी। तयैव प्रकृतेऽपि सिद्धिरिति पूर्वान्तवत्त्वोद्भावनं चिन्त्यमित्यपास्तम्।

आङि चा (पा०सू०७।३।१०५) चेन प्रकृतम् "ओसि" इति परामृश्यते। "घेर्ङिति" इत्यतोऽनुवृत्तं ङितीति आप इति पञ्चम्या षष्ठ्या विपरिणम्यत इत्याशयेनाह-ङिद्वचनस्येति।

सर्वनाम्नः स्या (पा०सू०७।३।११४) आबन्तात्परस्य सर्वनाम्नो विहितस्येत्यर्थः, तेन 'मासपूर्वायै' इति सिद्धम्। अत्र ह्रस्वो न स्याटः, तस्य विधेयत्वेनोद्देश्यत्वासम्भवात्। नापि ङिद्वचनस्य, व्याख्यानात्। अत आपो ह्रस्व इत्याह-आपश्चेति। आबन्तस्य गणे पाठाभावेन सर्वनामत्वाभावादाह-एकादेशस्येति। ग्रहणादिति। सर्वनामशब्देनेत्यर्थः। न चैवमप्याबन्तत्वाभावः। एकादेशनिष्पन्नस्याप्त्वाभावात्। अत एव 'खट्वा' इत्यादौ परादिवद्भावेनाप्त्वमाश्रित्याऽऽबन्तादिति सोर्लोप उक्तः। परादिवद्भावेन तत्त्वं तु न लभ्यम्, उभयत आश्रयणेऽन्तादिवत्त्वाभावादिति वाच्यम्। उभयत आश्रयणे तदभावस्य भाष्ये एकदेशुक्तत्वेऽपि सिद्धान्तिसंमतत्वाभावात्। एतच्च तिङन्ते इणधातौ वक्ष्यामः।

परे तु लिङ्गविशिष्टपरिभाषयाऽऽबन्तस्य सर्वनामत्वम्। आबन्

---

तृतीयासमास इति सप्तम्याः प्रथमार्थत्वेनावयवस्य सर्वनामत्व स्यात् स्यादत आह—*सर्वनाम्नो विहितस्येति*। *उद्देश्यत्वासम्भवादिति*। उद्देश्यस्य षष्ठ्यन्तपदबोध्यत्वस्य दर्शनेन प्रकृते स्याटः षष्ठ्यन्तपदबोध्यत्वाभावादावृत्त्या तथा कल्पने गौरवादिति भावः। *व्याख्यानादिति*। आगमापेक्षया ङितषष्ठ्या अवयवावयविभावार्थकत्वं कल्पनीयम्। एवञ्च स्थानपदार्थनिरूपितसम्बन्धार्थकत्वस्यादर्शनमूलकादिति भावः। *आपश्चेतीति*। वाक्यभेदस्यावश्यकतया पञ्चम्यन्तस्यापि षष्ठ्यन्तत्वं वाक्यान्तरे कल्प्यत इति भावः। *न चैवमप्याबन्तत्वा... इति*। यद्यपि सुड्विधावाबन्तत्वस्य न निवेशस्तथापि तद्विधौ पूर्वान्तवद्भावेन सर्वनामत्वन्तथा तुल्यन्यायात्स्याडागमविधावपि वाच्यम्। एवञ्च पूर्वान्तवद्भावाश्रयणे आबन्तत्वालाभ इति भावः। *अत एवेति*। एकादेशनिष्पन्नस्याप्त्वाभावादेव। *सिद्धान्तिसमतत्वाभावादिति*। एवञ्च पूर्वान्तवद्भावेन सर्वनामत्वं तदवयवस्यैवाकारस्य श्रूयमाण... परादिवद्भावेनाप्त्वमिति समुदायस्याबन्तसर्वनामत्वमार्थसमाज... ति भावः।

त्वन्तु परादिवच्छान्देनेत्याहुः। सर्वस्यामिति। इह परत्वात्स्याटि कृते सकृद्गतिन्यायात्सुण्न॥

प्रतिपदोक्तस्येति। दिक्शब्दमुच्चार्य विहितत्वादस्य तत्त्वम्। योत्तरेति। "अनेकमन्यपदार्थे" (पा०सू०२।२।२४) इति बहुव्रीहिः "सर्वनाम्नो वृत्तिमात्रे" इति मात्रग्रहणात्संप्रत्यसर्वनामत्वेऽपि पुंवत्त्वम्। योत्तरेति। यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वप्रतीत्या योत्तरात्वप्रकारकज्ञानविशेष्या सा प्रसिद्धपूर्वा यस्या इत्यर्थेनोत्तरापदस्य गुणवाचकत्वात्पूर्वनिपात इत्यन्यत्र विस्तरः। स्पष्टार्थमिति। "दिङ्नामानि" (पा०सू०२।२।२६) इत्यस्य बहुव्रीह्यधिकारे सत्त्वादिति भावः। अन्तरायै नगर्यै इति। अपुरीत्यस्य पूःशब्दार्थस्य विशेष्यत्वे इत्यर्थ इति भावः। अत्र मानमन्वेष्यम्।

हे अम्बेति। ह्रस्वे कृते 'सम्बुद्धौ च' इत्येत्वं न, आ आविति प्रश्लेषात्। "द्व्यक्षरं यदि" इति पठितत्वा द्व्यच्काम्बार्थकस्यैव ह्रस्व इति नियममाश्रित्य "डलकवतां ह्रस्वो न" इत्यस्य भाष्ये प्रत्याख्यानात्फलाभेदाय सामान्यतोऽपि वार्त्तिकमसंयुक्तविषयमित्याशये-

---

प्रकारान्तरेणाप्युपपत्तिमाह—*परं रिचति*। *सुट् नेति*। एतेन "ह्रस्वनद्याप" इति सूत्रे परिशेषेण षष्ठीबहुवचनस्यैव ग्रहणमित्यस्यासिद्धिः।

तत्त्वम्। प्रतिपदोक्तत्वम्। *उत्तरापदस्य गुणवाचकत्वादिति*। उत्तरात्वप्रकारकज्ञानविशेष्यस्य लक्षणया तद्बोध्यत्वेन गुणस्योत्तरात्वप्रकारकज्ञानविशेष्यत्वरूपस्य बोध्यतावच्छेदकतया तदवच्छिन्नबोधकत्वादित्यर्थः। न च वाक्यादुद्देश्यविधेयभावस्य प्रतीतावपि समासात्तस्याबोधेन कथमस्य विग्रहस्य समाससमानार्थकत्वमिति वाच्यम्। समासादपि तादृशबोधस्य "लोहितोष्णीषः" इत्यादौ दर्शनात्(१)। ननु

---

(१) श्येनयागे च श्रूयते इदं वाक्यम्-'लोहितोष्णिषः प्रचरन्ति" इति। तत्र ऋत्विजां यागानुष्ठानसमये तद्गतो लोहितत्वरूपो गुणोविधीयते इति तात्पर्यम्। यद्यपि विधेयस्य विस्पष्टप्रतिपत्तये उद्देश्यविधेयबोधकपदयोः समासो नेष्टः। तथापि प्रकृत वेदवाक्ये दृश्यत। तत्रेदमाशंका-भाटमतानुयायिनस्तु लौकिकवाक्यानुसारेण वेदवाक्यानां निर्णय इति कथयन्ति। तेषां मते लोके तादृशोदाहरणाभावेऽपि प्रकृते विशेषविषयत्वादगत्याऽऽश्रयणीयम्। प्रभाकराश्च वेदवाक्यानुसारेण लौकिकवाक्यानां वाक्यार्थबोधः इति मन्यते। तेषामतेन प्रकृते कथनमित्युच्यते चेत्, तैरपि उद्देश्यविधेयबोधकपदयोः समासो नाङ्गीकृतः इत्यन्यत्र विस्तरेण निरूपयिष्यामः।

नाह–असंयुक्ता इति । द्यक्षरं यदीत्यस्याङ्गत्वाद् द्यक्षराम्बार्थ-
काङ्गस्य ह्रस्व इति नियमशरीरात् 'जगदम्ब' इत्यादौ ह्रस्वो भवत्येव।

यद्यपि जरसादेशस्येति । एवञ्चैत्वशीनुड्याडामां नित्यत्वात्
पूर्वमेषु क्वचिदजादित्वाभावात्क्वचित्सन्निपातपरिभाषया जरसो-
ऽनापत्तिरिति भावः । यद्यपि याडामोर्जरसपेक्षया परत्वात्तयोः
कृतयोराद्ये ऽजादित्वविघातात् अन्त्ये सन्निपातपरिभाषया न जरसः
प्राप्तिः एवमेत्वेऽपि, तथापि तत्र प्रश्लेषफलं दर्शयितुमाह–एवमिति।
अत्र यद्वक्तव्यन्तन्निर्जरशब्दे उक्तम् ।

स्वाश्रयमिति । स्वं श्रूयमाण आकारः । स्थानिवद्भावे-
नाप्त्वमिति । न च ङ्याब्ग्रहणेऽदीर्घ आदेशो न स्थानिवदिति

---

"अपुरीति वक्तव्यम्" इत्यस्यान्तरायां पुरीति पूःशब्दसामानाधिकरण्ये
एव निषेधबोधकत्वमिति प्रतीयते । एवञ्चान्तरायै नगर्यै इत्यत्र कथं नि-
षेध इत्यत्र आह—*पूःशब्दार्थस्येति* । *सामान्यतोऽपि वार्त्तिक-
मिति* । तत्र हि "डलकवतीनाम्प्रतिषेधः । डलकवतीनाम्प्रतिषेधो व-
क्तव्य" इत्युक्तम् । अम्बाले । अम्बिके । अत्र वार्तिके अर्थगतेन स्त्री-
त्वेनाम्बार्थाः शब्दा निर्दिष्टाः । इदञ्च वार्त्तिकम् 'अम्बार्थं द्यक्षरं यदि'
इत्यनेन प्रत्याख्यातम् । अत्राक्षरपदमच्परम् प्रत्याख्यानपक्षे 'हे अक्क' 'हे
अल्ल' इत्यत्र द्यच्कत्वसत्त्वाद्ध्रस्वत्वं भविष्यति । डलकवतीनामित्यस्या-
रम्भे तु नेति फलभेदपरिहाराय डलकवतीनामित्यस्यासंयुक्तडकारादि-
मद्भिन्नविषयकत्वमिति भावः ।

'अम्बार्थं द्यक्षरम्' इत्यत्र यद् द्यक्षरमिति तच्छ्रुतत्वादम्बार्थस्यैव विशे-
षणं न त्वङ्गस्येत्याह—*द्यक्षराम्बार्थकेति* ।

मूलोक्तयद्यपीतिशङ्कायास्तात्पर्यमाह—*एवञ्चेति* । जरसादेशे हृ-
स्थानिवद्भावेनाप्त्वादेत्वादीनाम्प्राप्तौ चेत्यर्थः । *नित्यत्वादिति* । उक्ता-
त्या एत्वादीनां कृताकृतप्रसङ्गित्वादित्यर्थः । *क्वजिदचादित्वाभावा-
दिति* । नुड्याटोः । *क्वचित्सन्निपातेति* । एत्वस्य सान्निपातलक्षणत्वं
सन्निपातविघातकस्य जरसोऽनापत्तिः, एवञ्चैतदर्थन्न प्रश्लेष इति भावः।
एवं मूलोक्तरीत्या जरसादेशविषये स्थलत्रयेऽपि न प्रश्लेषफलमित्यभि-
प्रायेण शङ्कते—*यद्यपीति* । *एवमेत्वेपीति* । परत्वात्कृते सकृद्गति-
न्यायान्न जरसादेशस्य प्रसङ्ग इति शेषः । *अत्र यद्वक्तव्यमिति* । विभ-
क्त्यादेशस्यैव जरसादेशात्पूर्वं प्रवृत्तिरित्यादि । स्थानिवद्भावेनाप्त्वमि-
यन्मूलकृतोक्तं तत्र शङ्कते—*न चेति* । अयं भावः । अतिखट्वायेत्य

ह्रस्वे आप्त्वस्य विच्छेदात्कथं दीर्घे स्थानिवत्त्वेन तल्लाभः । ङ्याप्स्था-निको दीर्घभिन्न आदेशो न स्थानिवदिति तदर्थ इति वाच्यम् । "याडापः," (पा०सू०७।३।११३) "औङ आप," (पा०सू०७।१।१८) आङिचापः' (पा०सू०७।३।१०५) 'ङेराम्नद्याप्' (पा०सू०७।३।११६) 'हल्ङ्या' (पा०सू०६।१।६८) इत्येतेष्वाकारप्रश्लेषमाश्रित्य स्थानिवत्त्व-निषेधप्रत्याख्यानात् भाष्यनये सङ्ग्रासत्त्वेनादोषात् । अत्र यत्रोदाहरणे सूत्रभाष्यवार्त्तिकानां फलभेद आपतति तेषामनभिधानम् । यथा अतिखट्वस्य अः अतिखट्वा इत्यादेः वक्ष्यमाणरीत्या दीर्घात्पूर्वं फलाभावेन स्थानिवत्त्वाऽप्रवृत्तौ फलभेदस्यैवाभावाच्च ।

यत्त्वाकारान्तरं प्रश्लिष्याऽऽकाररूप एव यो न कदाचिद्रूपान्तरं प्राप्त इत्यर्थ इति तन्न, मानाभावात्, भाष्ये तस्यानुक्तेश्च । आबन्तंय-दङ्गमिति । प्रत्ययग्रहण इति परिभाषयाऽतिखट्वस्य नाबन्तत्वं, यच्चाब-न्तत्वं खट्वेति न तदङ्गमिति भावः । न चानयाऽऽबन्तग्रहणे तेनाङ्गविशे-षणादाबन्तान्तं यदङ्गमित्यर्थाद् 'अतिखट्वाय' इत्यादौ दोषस्तदवस्थ

---

दीर्घस्य स्थानिभूते ह्रस्वाकारे चेदात्वं, तदा तदादेशे दीर्घे तद्बुद्धिः स्थानिवद्भावेन स्यात् । न च ह्रस्वेऽपि स्थानिवद्भावेनैव तद्बुद्धिः कार्येति वाच्यम् । "ङ्याब्ग्रहणेऽदीर्घ" इतिवार्त्तिकेन निषेधात् । अदीर्घो दीर्घ-भिन्न आदेशो न स्थानिवदिति तदर्थः । अत्र ङ्याब्ग्रहणे ह्रस्वादेशो न स्थानिवदित्येव तु नोक्तम् । श्रविष्ठासु जातः श्रविष्ठ इत्यत्र जातार्थ-प्रत्ययस्य 'श्रविष्ठाफल्गुनी' ति सूत्रेण लुकि 'लुक्तद्धितलुकी' ति टापो लुकि स्थानिवद्भावेन 'श्रविष्ठ' इत्यस्याबन्तत्वाप्तौ हल्ङ्यादिलोपापत्तेः । "अदीर्घ" इत्यत्र दीर्घपदेन सवर्णदीर्घस्यैव ग्रहणमाश्रित्याकारप्रश्लेषेण वार्त्तिकप्रत्याख्यानपरभाष्यप्रामाण्यात् । तेन गङ्गीयतेः क्विप् गङ्गीः । अत्र वार्त्तिकारम्भपक्षेपि सवर्णदीर्घभिन्नस्येकारस्य स्थानिवद्भावेनाप्त्वास्त-दादेशात्परत्वाद्धल्ङ्यादिलोपो न । *भाष्यनय इति* । एतन्मते स्था-निवद्भावेन ह्रस्वे आप्त्वमस्त्येव । तद्बुद्धिश्च पुनर्दीर्घे स्थानिवत्त्वेन स्या-दिति भावः । *अत्र यत्र इति* । अतिट्वस्य अः अतिखट्वाः । अत्र वा-र्त्तिकमते न हल्ङ्याब्दिलोपप्राप्तिः । सूत्रकारभाष्यकारमते तु प्राप्तिरिति फलभेदः । आदिना गङ्गीरित्यस्य परिग्रहः । अत्र सूत्ररीत्या प्राप्तिः वार्त्ति-कभाष्यकारमते तु नेति फलभेदः प्राप्नोतीत्यर्थः । *वक्ष्यमाणरीत्या* । परेत्विति मते वक्ष्यमाणाया स्थानिवद्भावस्य दीर्घात्पूर्वत्त्वफलाभावादप्रवृ-

इति वाच्यम् । अङ्गस्य विशेषणत्वात् । एतेन श्रुतमाकारमादाय स्मृतमनुबन्धमादाय आप्त्वानुसन्धानात्स्यादेव याडित्यपास्तम् । तस्य लाक्षणिकत्वाच्च ।

ननु स्त्रीप्रत्यये वाचनिकस्तदादिविधिनिषेधो भाष्ये पठितस्तत्कथमस्य तत्र प्राप्तिरत आह—उपसर्जनेति । 'स्त्रीप्रत्यये चानुपसर्जनेने'ति वचनस्यैव भाष्ये पाठादिति भावः । अत्रोपसर्जनत्वं लौकिकमेव । स्त्रीप्रत्यये शास्त्रीयोपसर्जनत्वासम्भवात् । यद्यपि स्त्रीप्रत्ययान्ते शास्त्रीयोपसर्जनत्वमस्ति तथापि न तेन 'प्रत्ययग्रहणे' इति तदादिनियमप्रसक्तिः । एतत्सर्वं व्याख्यादर्शाद्यनुरोधेन ।

परेतु अस्याऽऽकारस्य लाक्षणिकत्वान्नात्र याट् वर्णग्रहणेऽपि तत्प्रवृत्ते 'ओत्'(पा०सू०१।१।१५)इत्यादौ भाष्ये स्पष्टमुक्तत्वात् । न च 'सवायै' इत्यत्र याडनापत्तिः, सूत्रन्तु निशायै इत्यादौ चरितार्थमिति वाच्यम् । यस्य रूपस्य लक्षणप्रवृत्तिं विना न सम्भवस्तस्यैव लाक्षणिकस्य तत्परिभाषाविषयत्वात् । न चेह तथा । एकादेशतः प्रागपि तद्रूपसत्वात् । 'पदाङ्गाधिकार' इति वार्त्तिकेनाङ्गस्य विशेष्यताया एवौचित्यबोधनाच्च । अत एवाबन्तान्तं यदङ्गमित्यर्थाभिप्रायेण 'अतिखट्वाय' इत्येतत्सिद्धयेऽतिखट्वा—ए इति स्थिते प्रवृत्तं 'ङ्याप्ग्रहणेऽदीर्घ' इति वार्त्तिकं व्याख्याय श्रुताकारस्मृतानुबन्धाभ्यामाप्त्वानाशङ्कां कृत्वा लाक्षणित्वेन समाधायाकारप्रश्लेषेण तत्प्रत्याख्याय एतत्परिहारायोपायान्तराकथनं भाष्ये ।(१)

---

त्तिरित्येवमाकारादियुक्तिस्तद्रीत्या । *अङ्गस्य विशेषणत्वादिति* । विशेषणविशेष्यभावस्य 'सिद्धन्तु विशेषणविशेष्ययो र्यथेष्टत्वात्' इति ग्रन्थे फलानुसारित्वस्योक्तत्वादिति भावः । *एतेन* । आबन्ताङ्गभावेन *अस्य* । तदादिविधेः ।

मूलन्दूषयति—*परेत्विति* । अतिखट्वायेत्याकारस्य । *ओदिति* दावितिः* । अदोऽभवदित्यादौ दोषवारणायैषा तत्र सञ्चारिता । *न चेहेति* । खट्वा इत्यत्र । *औचित्यादिति* । यत्र विशेषणविशेष्यभा-

(१) *भाष्ये इति* । स्थानिवत्सूत्र इति शेषः । तथा च यतो भाष्यकृद्भिरुक्तविधशंकापरिहाराय लाक्षणिकत्वरूपोपायमुक्त्वा तत्प्रत्याख्यानेऽपि तथैव प्राप्ताशंका परिहारायोपायान्तरं नोक्तम्, अत एवंविध एवोपायो भाष्यकृतामभिमत इति लक्ष्यत इति भावः ।

किं च अङ्गस्य विशेषणत्वे वार्त्तिकस्य तत्प्रत्याख्यानायाऽऽकारप्रश्लेषस्य च वैयर्थ्यं स्पष्टमेव(१)। किं च खट्वाया अर्द्धे ऽर्द्धखट्वायामित्यादौ याडनापत्तिः(२)। किं चाकारप्रश्लेषपक्षेऽपि दीर्घोत्तरं स्वाश्रयाकारत्वं स्थानिवद्भावेनाऽस्त्वमिति शङ्काऽयुक्तैव । दीर्घात्पूर्वं स्थानिवत्त्वस्य फलाभावादप्रवृत्तौ स्थानिन्याप्त्वबुद्धेरभावात्तदादेशे दीर्घे तद्राप्त्वस्य दुर्लभत्वात्(३)। परम्परया कार्यमादाय स्थानिवत्त्वप्रवृत्तौ मानाभावात्(४)। "याडापः"(पा०सू०७।३।११३) इति सूत्रे भाष्येऽपि "अतिखट्वायेत्यत्र स्थानिवत्त्वात् प्राप्तस्य याटः प्रतिषेधो वक्तव्यः,

वानुग्राहकं वचनमस्ति तत्र तदनुसारी विशेषणविशेष्यभाव एवोचितः । *अत एव* । लाक्षणिकत्वेनैव निर्वाहादेव । *स्पष्टमेव* । आबन्ताङ्गाभावेन दोषस्यैवाप्राप्तेः । आबन्तं यदङ्गमित्यर्थे लक्ष्यासिद्धिमप्याह—*किञ्च खट्वाया अर्द्धे इति* । इदमेकदेशिसमासारम्भवादिमतेन । एतत्प्रत्याख्यातृभाष्यकारमते त्वेकदेशिसमासविषये कर्मधारयस्यैव स्वीकारादत्र स्त्रीप्रत्ययस्यानुपसर्जनत्वादेव दोषाभावः । मूले कृतां द्वितपराशङ्कामयुक्तत्वेन निराचष्टे—*किञ्चेति* । लाक्षणिकत्वेन समाधाने भाष्यान्तरसंवाद-

ननूपायस्योपायान्तरादूषकत्वान्नेदं भाष्यमङ्गस्य विशेष्यत्वे नियामकमित्यरुचेराह-*किञ्चेति* ।

(१) ननु न भाष्यवार्तिकयो र्वयं वैयर्थ्यमापादयामः, किंतु भाष्यवार्तिककृत्संमतो ऽप्येकोपायः, अपमन्येकोपायः । सोऽपि येनविधिरितिसूत्रस्थभाष्यसंमत एव । तयो र्यो लघुः स आश्रयणीय इत्येवमित्यरुचेः पुनराह-*किञ्चेति* ।

अथवा श्रविष्ठाफल्गुनीभ्यां जातार्थे णिः तस्य "श्रविष्ठाफल्गुन्यनुराध"इति सूत्रेण लुकि तदवयवयोष्टापङीपोश्च 'लुक्तद्धितलुकी'ति लुकि श्रविष्ठफल्गुनशब्दाभ्यां इलङ्याद्लोपादिवारणाय वार्तिकस्य तत्प्रत्याख्यानायाऽऽकारप्रश्लेषस्य चावश्यकत्वे वैयर्थ्यापादनमयुक्तमित्यरुचेराह-*किञ्चेति* ।

(२) नन्वेवमपि 'याडाप' इत्यत्रेष्टासिद्ध्यर्थं वाक्यभेदाश्रयणेन तत्र वाक्ये अङ्गस्य विशेषणत्वाश्रयणेन तदन्तविधिनाऽर्द्धखट्वायामित्यादौ न याडनापत्तिर्दोषः । स्पष्टा चेयं रीतिः 'उतश्चप्रत्ययात्' इति सूत्रे कैयटे । तत्र हि—कथमियं विज्ञायते उकारात्प्रत्ययादिति आहोस्वित् उकारान्तात्प्रत्ययादिति विशेषणविशेष्यभावव्यत्यासेन पक्षद्वयमुद्भाव्य तत्र दूषणं चाभिधाय अग्रे च गत्वा "यथेच्छसि तथाऽस्तु अस्तु तावदुकारात्प्रत्यया" दित्युक्त्वा "कथं चिनु मनु इति ? तदन्तविधिना भविष्यती"त्युक्तं भाष्ये । तत्र तदन्तविधिनेति प्रतीकमुपादाय उकारस्य विशेष्यत्वात् तदंतविध्यभावमाशंक्य "एवं तर्हि तन्त्रेण सूत्रद्वयमभ्युपगम्यैतदुच्यते तत्रैकस्मिन् सूत्रे प्रत्ययेनोकारो विशेष्यते द्वितीये तूकारेण प्रत्ययः इति दोषाभावः" इति कैयटः । इत्यतः "एवमपि" इत्यन्तस्य 'नचे' त्याद्यन्तस्य कौमुदीस्थशङ्काग्रन्थस्यायुक्तत्वमित्यत आह—*किञ्चेति* ।

(३) ननु स्वाश्रयादेशस्थानित्वरूपे आदेशघटितपरम्परासम्बन्धेन कार्यमादाय मध्येऽपि स्थानिवत्त्वनिर्बाधमित्यत आह *परंपरयेति* ।

(४) *मानाभावादिति* । वार्तिकारंभतत्प्रत्याख्यानयो फलभेदादङ्गस्य विशेषणकल्पनेऽपि उक्तरीत्या परंपरया कार्यमादाय स्थानिवत्त्वकल्पने मानाभावादिति भावः ।

न वक्तव्यो, ङ्याब्ग्रहणेऽदीर्घ इति स्थानिवत्त्वनिषेधात्। न च
दीर्घत्वे आबसौ भूतपूर्व इति याट् प्राप्नोति, लाक्षणिकत्वात्। स्था-
निवत्त्वे तु तत्सामर्थ्यान्नैतत्परिभाषाप्रवृत्तिः" इत्युक्तम्। यद्यपि
स्थानिवत्सूत्रयाडापसूत्रस्थभाष्याभ्यां हल्ङ्याब्सूत्रयाडापसूत्रयोरेव प्र-
श्लेषो लभ्यते तथापि भाष्यमुपलक्षणमितरसूत्रविषयोदाहरणानभि-
धानं वेत्यनयोर्युक्तं सुधीभिर्विचार्यमित्याहुः।

व्रश्च (पा०सू०८।२।३६)॥ अत्र राजिसाहचर्याद् भ्राजिः प-
णादिरेव। तेनान्यस्य 'विभ्राग्'इत्येवाहुः। छशौ वर्णौ ताभ्यां त-
द्रूपं विशिष्यमादाय तदन्तग्रहणमित्याह—छशान्तयोरिति। छ-
शयोरित्युक्तेऽपि न क्षतिरिति चिन्त्यम्। पदस्येति तु 'पृष्ट'मित्यादिसि-
द्धये व्यधिकरणमेव। अन्तादेश इति। 'अलोऽन्त्यस्य' (पा०सू०
१।१।५२) इति वचनात्। अत्र "झलो झलि" (पा०सू०८।२।२६)
इत्यतो झलीति, पदस्येति, "स्कोः"(पा०सू०८।२।२९) इत्यतो अन्ते
इति चानुवर्त्तते। 'च्छ्वोः शूड् (पा०सू०६।४।१९) इत्यत्र क्ङिति
त्यनुवृत्तेः प्रष्टा इत्यादौ शादेशाभावात् अशान्तत्वेन षत्वाप्राप्तौ च्छग्रह-
णम्। अत्रापि सतुक्निर्देशो बोध्यः। तस्यासिद्धत्वादिति
'चयो द्वितीयाः' इत्यस्य 'नादिन्या'(पा०सू०८।४।४८)इतिसूत्रे भाष्ये
पाठादिति भावः। टतयोरिति। धुडभावे टस्य, धुटि तस्येत्यर्थः।
न भवतीति। जश्त्वात्प्राक् षस्य नेत्यर्थः। जश्त्वे तु प्राप्तिरेव
नेति बोध्यम्।

केचिदिवेति।'एकाचः'(पा०सू०८।२।३७)इत्युत्तरसूत्रेऽनुवृत्त

---

माह—*याडाप इतिसूत्रभाष्येऽपीति*। *भाष्याभ्यामिति*। प्रथमे सु
योदाहरणविषये शङ्कासमाधानकरणात्, अन्त्ये त्वतिखट्वायेत्यत्रैव श
समाधानकरणात्। *सुधीभिर्विचार्यमिति*। अनभिधानकल्पने भा
न्तरानुग्रहचिन्तनम् उपलक्षणत्वे तु सर्वत्रैकोक्त्यैव निर्वाह इत्युपलक्षण
युक्तमिति केचित्।

*अत्रेति*। व्रश्चेति सूत्रे इत्यर्थः। *आहुरिति*। भाष्यानुग्रहा
वोऽत्रारुचिः। यत्तु पदस्य विशेष्यत्वेन तदन्तलाभ इति तन्न युक्तमि
शयेनाह—*पदस्येतीति*। छग्रहणप्रयोजनमाह—*च्छ्वोः शूडित्यत्रेति

पक्षेऽपि सम्बन्ध एवोचित इति भावः । जश्त्वेनेति । यत्तु 'जश् शसि' इति निर्देशात् शस्य न जश्त्वमिति । तन्न । अविकृतस्वरूपप्रतिपादने तात्पर्यादयस्मयादित्वेन भत्वाच्च तत्र तदप्राप्तौ न्यायसिद्धार्था ज्ञापकत्वायोगात् । 'उपदेशेऽजनु' (पा०सू०१।३।२) इत्यादिनिर्देशैः कुत्वाद्यनापत्तेश्च । अत्र मते भाष्यानुग्रहो विचार्यः । 'मांसपृतना' इत्यस्य 'पद्दन्'(पा०सू०६।१।६३) इति सूत्रे उपसंख्यातत्त्वादाह–शसादौ वेति । स्त्रीत्वादिति । पुंस्त्वाभावादित्यर्थः । नात्वं नेति । स्त्रीत्वादित्यनुकृष्यते । अत एव पुंस्त्वाभावान्नत्वाभाव इति नोक्तम् । न हि पुंस्त्वाभावो नाभावे प्रतिबन्धकः । नपुंसकेऽपि तदङ्गीकरात् ।

ङिति ह्र ॥ (पा०सू०१।४।६) अत्र वाक्यद्वयम् । आद्ये 'यू' इति, स्त्र्याख्यौ इति, अस्त्रीति, इयङुवङ्स्थानाविति, वेति, चानुवर्त्तते । अन्त्ये 'यू' इति 'वेति' स्त्रीवाचकावित्येतन्मात्रार्थकं स्त्र्याख्याविति च । तत्र ह्रस्वयोरप्राप्ते दीर्घयोस्तु 'नेयङिति' निषेधादप्राप्ते विभाषा । इश्वादिष्वप्राप्तिमाशङ्क्य 'ङिति ह्रस्वश्चे'त्यत्र नित्यस्त्रीलिङ्गावित्येवंविधो नियमो नाश्रीयत इति कैयटस्तु ह्रस्वांशमात्रविषय इत्याशयेनाह–नित्यस्त्रीलिङ्गाविति । अत एवास्य दीर्घांशे विषेधविकल्पत्वं भाष्ये उक्तं "यू स्त्र्याख्यौ"(पा०सू०१।४।३) इति सूत्रे । तत्फलं "कटप्रुवे ब्राह्मण्यै" इति । लिङ्गान्तरविशिष्टार्थाभिधायकत्वेन तत्त्वाभावात् ।

परे त्वत्र विकल्पो भवत्येव आख्याग्रहणरहितस्यैवात्र सम्ब-

---

*अत्रापि* । वश्चेतिसूत्रेऽपि । *तन्न* । झलामिति सूत्रे । *तदप्राप्तौ* । जशत्वाप्राप्तौ । सूत्रनिर्देशमात्रेण शास्त्राप्राप्तिकल्पनायाम् प्रतिवन्दीमाह *उपदेश इति* । *अत्र मते* । केचिन्मते कारणतावच्छेदकावच्छिन्नाभावस्यैव कार्याभावप्रयोजकता दृष्टेति स्त्रीत्वादित्ययुक्तमत आह *पुंस्त्वाभावेति* । *अत एव* । पर्युदासप्रतियोगिसूचनाभिप्रायादेव । *अत एव* आद्यवाक्ये स्त्र्याख्यपदस्य नित्यस्त्रीलिङ्गावित्यर्थकत्वादेव । *कटप्रुव इति* । अस्य लिङ्गान्तरविशिष्टार्थाभिधायकत्वं स्पष्टमेव । सिद्धान्तमाह––*परे त्विति* । *अत्र* । कटप्रुवे ब्राह्मण्यै इत्यत्र । *अन्न* । ङिति ह्रस्वश्चेति सूत्रे । एकदेशे स्वरितत्वाकल्पनलाघवानुरोधे-

न्धात्। यद्वा स्त्र्याविवित्येतदेव स्त्रीवाचकावित्येतन्मात्रार्थकमत्र शब्दा-
धिकारात्। तच्च ङिदाक्षिप्ताङ्गस्य विशेषणम्। अत एव "प्रथमलिङ्ग-
ग्रहणं" इत्यस्यात्राप्रवृत्त्यन्वाख्यायके "ह्रस्वौ चेयङुवङ्स्थानौ च ङि-
क् च प्रवृत्तौ स्त्रीवचनावेव नदीसञ्ज्ञौ भवतो न तु पुंवाचकाविति व-
क्तव्यम्" इति वार्त्तिके "अतिशकट्यै ब्राह्मण्यै क्व मा भूत्? अतिश-
टये ब्राह्मणाय। अतिश्रियै ब्राह्मण्यै श्रियै ब्राह्मण्यै, क्व माभूत्? अ-
श्रिये ब्राह्मणाय" इति "यूस्त्र्याख्याविति" सूत्रशेषे भाष्ये उक्त
एवञ्चास्य निषेधविकल्पत्वमसम्भवि। समुदायस्य केनापि प्राप्त्य-
वात्। अवयवस्य प्राप्तावपि तस्यानेन विकल्पाभावात्। ङिदा-
प्ताङ्गस्यैवानेन विकल्पात्। एतच्च 'प्रवृत्तौ स्त्रीवचनौ' इत्यनेन सू-
तम्। अत एवात्र वाक्यद्वयेऽपि विधिविकल्प एव दर्शितः। एवञ्च
त्र नियमो नाश्रीयते" इति कैयटो वाक्यद्वयपर एवोचितः। उप-
निषेधपरतया व्याख्यानन्तु 'स्त्र्याख्यौ" इत्यस्य नित्यस्त्रीत्वा-
त्वमजानत एकदेशिनो "यू इति ह्रस्वयोर्ग्रहणम्" इति पक्षोपपा-
युक्तिभूतमिति तन्नादरणीयम्।

---

नाह *यद्वेति*। *अत्र*। ङिति ह्रस्वश्चेति सूत्रे। एवञ्च वाक्यद्वये
स्त्र्याख्यापदं स्त्रीवाचकावित्येतन्मात्रार्थकमेव। एवञ्च ङित्परं यदङ्ग
बोधकन्तद्वा नदीसंज्ञकमित्यर्थः पर्यवसन्नः। *अत एव*। एवञ्च
क्यार्थनिष्पत्तेरेव। *अप्रवृत्त्यन्वाख्यायकेति*। *अस्य इति* वा-
इत्यत्रान्वयः। *प्रवृत्तौ*। अर्थान्तरोपसंक्रान्तौ। *अतिश्रियै*। श्रिय-
मतिक्रान्तायै। *अतिशकट्यै*। शकटीमतिक्रान्तायै। *श्रियै*
श्रीरिवाचरते। एषु नित्यस्त्रीत्वाभावात् "यूस्त्र्याख्यौ" इति सूत्रे
प्राप्तौ "प्रथमलिङ्गग्रहणञ्च" इत्यस्य या प्राप्तिः साऽनेन वार्त्तिकेन नि-
क्रियते। "ङिति ह्रस्वश्च" इत्यनेन तु विकल्पो भवति। दीर्घघटित-
चेन्नित्यं स्त्रियां वर्तमानावित्यर्थकस्त्र्याख्यपदसम्बन्धः स्या-
प्रकृतसूत्रस्याप्यवृत्तौ रूपासिद्धिः स्फुटैव। *निषेधविकल्पत्वमस-
वीति*। निषेधस्य प्राप्ति पूर्वकत्वात्प्रकृते च प्राप्तेरेवाभावादि-
भावः। *एतच्च*। अप्राप्तविभाषात्वञ्च। *अत एव*। निषेध-
कल्पत्वासम्भवादेव। नन्वेवमुपक्रमे निषेधविकल्पपरतया कृतं
ख्यानं विरुध्येतेत्यत आह—*उपक्रम इति*। *ह्रस्वयोर्ग्रहणमिति*

यत्तु "दीर्घवाक्ये स्त्र्याख्याविति ईदूतोस्तदन्तस्य वा विशेषणं, पुनरङ्गेन तदन्तविधिः । अङ्गस्य च केवलस्त्रीत्वं विशेषणम् । एवं ह्रस्व-घ्यर्थवाक्येपि स्त्रियामित्येतन्मात्रमुभयोर्विशेषणमिति" तत्तु चिन्त्यम् । भाष्याचदलाभात् । 'नेयङुवङ्' (पा०सू० १।४।४) इत्यत्र तु नेयङा-

---

पपादन इति* । तत्र हि "किम्पुनरिदं दीर्घयोर्ग्रहणमाहोस्विद्ध्रस्वयोः । किञ्चातः । यदि दीर्घयोर्यू इति निर्देशो नोपपद्यते । अथ ह्रस्वयोः । हे शकटे अत्रापि प्रसज्येत । नैष दोषः । अवश्यमत्र विभाषा नदीसंज्ञैषित-व्या" । दीर्घग्रहणपक्षे ह्रस्वान्तस्याप्राप्ता विधेया ह्रस्वग्रहणपक्षे नित्यस्प्रा-प्ता पक्षे बाध्या वचनेनेत्याशयेनोक्तम् 'अवश्यम्' इति । "उभयं हीष्यते हे शकटि हे शकटे इति च । इह तर्हि शकटिबन्धुरिति नदीबन्धुनीत्येष स्वरः प्राप्नोति । अत्र पूर्वपदान्तोदात्तत्वं स्यात् । सिद्धान्ते तु शकटिश-कट्योरिति फिट्सूत्रेण त्रयाणास्पर्यायेणोदात्तत्वात्पूर्वपदप्रकृतिस्वरेण त्र-योऽप्यच उदात्ता भवन्ति । इह च बहुशकटिरिति 'नद्यृतश्चे'ति कप् प्रस-ज्येत" इत्याशङ्क्य "यू स्त्र्याख्यौ नदी । नेयङुवङ्स्थानावस्त्री । वाऽऽमि । ततो ङिति । ङिति चेयङुवङ्स्थानौ यू वा अस्त्री नदीसंज्ञौ न भवतः । ततो ह्रस्वौ । ह्रस्वौ च यू स्त्र्याख्यौ ङिति नदीसंज्ञौ भवतः । इयङुवङ्-स्थानौ वा, नेति निवृत्तम्" इत्युक्तम् । इदञ्च नियमार्थम् । ङित्येव ह्रस्वौ यू नदीसंज्ञावित्येवं नियम इत्यभिप्रायः । एतेन तस्य पक्षस्योपपादनम्भ-वति । न च "यूस्त्र्याख्यौ" इतिसूत्रस्यैवं सति ङिद्भिन्ने प्रवृत्तिर्न स्यादि-ति वाच्यम् । तत्राणुदित्सूत्रसहायेन दीर्घग्रहणसम्भवेन यूग्रहणचारिता-र्थ्यसम्भवात् । यद्यपि "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" इतिसूत्रे उक्तम् अशब्दसंज्ञेत्यनुवर्त्त-नाच्छब्दस्य संज्ञायां सवर्णग्रहणन्नेति ततश्चात्र दीर्घग्रहणासम्भवः प्राप्नो-ति । तथापि नेयङुवङ्स्थानावितिज्ञापकादस्त्रीतिपर्युदासाच्च सवर्णग्र-हणसम्भवः ।

न चास्मिन्पक्षे नित्यनदीसंज्ञया घिसंज्ञाबाधनाच्छकटये इत्यत्र गुणो न स्यादिति वाच्यम् । द्वितीययोगविभागात् तथाहि 'शेषो घ्यसखी'ति-सूत्रे शेषग्रहणञ्च करिष्यते । घि इति योगो विभज्यते । स्त्र्याख्यौ यू ह्रस्वौ ङितीत्यनुवर्त्तते घिसंज्ञौ भवतः स्त्र्याख्यौ यू ह्रस्वौ ङिति । ततोऽसखि । सखिवर्जितौ च यू ह्रस्वौ घिसंज्ञौ भवतः। स्त्र्याख्यौ ङितीति च निवृत्तम् । तेनात्र दोषाभावः । अथ वा नदीसंज्ञायाः परत्वात् घिसंज्ञा पुन्नपुंसकयो-श्चरितार्था बाधिका भविष्यति । परन्तु योगविभागनियमकल्पनायाङ्गौरव मिति "यू स्त्र्याख्यौ" इत्यत्र दीर्घयोर्ग्रहणमिति शिष्टैर्व्याख्यातम् । *भा-ष्यात्तदलाभादिति* । भाष्येहि प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेव

द्याक्षिप्ताङ्गविशेषणं स्त्रीत्वम् । तदाक्षिप्तस्येयङादिविशेषणतया प्र
चित्यात् । 'यस्याङ्गस्येयुवा'विति भाष्योक्तेः स्त्र्याख्याविव्यस्य नित्यस्त्री
लिङ्गावित्यर्थकस्य यू इत्यनेनैव क्लृप्तसन्बन्धत्वाच्च । अत एव'अतिस्त्र
ब्राह्मणाय' इत्यत्रानेन निषेधादवयवनदीत्वप्रयुक्तमपि नदीकार्यं न

ननु यथा 'खरकुट्यै ब्राह्मणाय' इत्यादौ लुबन्तस्य त्रिलिङ्गत्वे
प्रथमलिङ्गग्रहणान्नित्यनदीत्वं भवतीति भाष्ये उक्तम् । 'चञ्चा ब्रा
ह्मणान्पश्य' इत्यादौ युक्तवद्भावेन स्वलिङ्गप्रयुक्तकार्याभावस्या
तिदेशान्न नत्वम् । स्पष्टश्चेदं "तस्माच्छसः" (पा०सू०६।१।१०
इतिसूत्रे भाष्यकैयटयोः । यद्वा, अतिदेशे प्रकृतिलिङ्गप्रयुक्तेन
र्यातिदेशेन तद्विरुद्धस्वाश्रयकार्याप्रवृत्तिः । स्पष्टश्चेदं 'स्त्रियाम्'(पा०
४।१।३) इति सूत्रे भाष्ये । युक्तवद्भावादिप्रत्याख्यानेऽपि यथा
रादिशब्दैः पुंस्त्वेन स्त्रीरूपार्थस्य भानं, तथा प्रकृते स्त्रीत्वेन पुं
भानमिति न नत्वम् । पुंस्त्वे वाच्ये नत्वमित्यर्थात् । नचैवं 'खरकु
इत्यत्रापि युक्तवद्भावेन नित्यस्त्रीत्वात्सूत्रेणैव सिद्धमिति वाच्य
स्त्र्याख्याविव्यस्य स्त्रीत्वविशिष्टमेव य आहेत्यर्थात् । न चायं तथ
स्त्रीत्वेन रूपेण वस्तुतः पुंस्त्वविशिष्टस्याभिधानात् ।

---

इत्येतावदुक्तेर्नित्यस्त्रीलिङ्गावित्यनुक्तेश्च तदलाभः ।

ननु नेयङुवङ्स्थानाविति सूत्रेऽप्येवमेव संबन्धः स्यादिति त
इत्यत आह—*नेयङुवङीति* । अत्रार्थे भाष्यसम्मतिमाह—*यस्
स्येति* । एतादृशव्याख्यानफलमाह—*अत एवेति* । तादृशव्या
नादेव । सिद्धान्ते शङ्कते—*नन्विति* । ननु लुबन्तस्य त्रिलिङ्
पुंस्त्वप्रयुक्तनत्वम् 'चञ्चा ब्राह्मणान्पश्य' इत्यत्रापि स्यादत आह—
ञ्चा ब्राह्मणानिति* । *स्वलिङ्गप्रयुक्तकार्याभावस्येति* । अतिदे
मानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात्
शकार्याभावस्याप्यतिदेशस्वीकारः । तादृशातिदेशस्वभावेनैव सिद्धे
लिङ्गप्रयुक्तकार्याभावातिदेशे गौरवादाह—*यद्वेति* । *कार्याप्रवृ
रिति* । अस्य स्वभावसिद्धेवेति शेषः । *युक्तवद्भावादिति* । आदि
लुब्योगसङ्ग्रहः । *पुंस्त्वे वाच्य इति* । सूत्रे पुंसीति धर्मपरमिति भ
वः । *सूत्रेणैवेति* । "यू स्त्र्याख्यौ" इति सूत्रेणैवेत्यर्थः । एवञ्च 'प्रथ
लिङ्गग्रहणात्' इतिभाष्यमसङ्गतं स्यादिति भावः ।

*स्त्रीत्वविशिष्टमेव य इति* । पूर्वोक्तभाष्यदर्शनादयमर्थः कल्प

यद्यपि पदार्थमात्रे शास्त्रीयलिङ्गत्रयमस्ति तथापि व्यक्तित्वस्तु- पदार्थादिबोध्यत्वकाले तत्तल्लिङ्गोपजननेऽपि स्त्रीपदादिबोध्यत्वदशायां तत्सत्त्वे मानाभावात्। प्रकृते तु 'ब्राह्मणाय'इत्यादिविशेष्यदर्शनेन तत्सत्तानुमानात्। स्पष्टं चेदं भाष्यकैयटयोः। एवं श्रीशब्दात्कानि लुपि श्रियै ब्राह्मणायेत्यादौ विकल्पापत्तिः, युक्तवद्भावेन स्त्रियामङ्कस्य वर्तनात्। अत्र सूत्रे नित्यस्त्रीत्वानिर्देशाच्चेति चेन्न। सत्यभिधाने इष्टापत्तेः। भाष्ये दृश्यमानं 'श्रिये ब्राह्मणाय' इत्यादि तु क्यजन्तात् क्विपि बोध्यम्। विपरीतं नित्यस्त्रीत्वानिर्देशवादिनो लुबन्ते 'श्रियै ब्राह्मणाय' इत्यादौ तदनापत्तिर्दोष इत्याहुः।

यू किम्? मात्रे। यद्यपि यू इति दीर्घपरं तथापि विभक्तिविपरिणामेन य्वोर्ह्रस्वात्रित्यन्वयो बोध्यः। एतत्सर्वं 'वामि (पा०सू० १।४।५) इत्यत्रापि बोध्यम्।

"इदुद्भ्यामौदच्चघेः" इति सूत्रं योगविभागेन व्याचष्टे, इदुद्भ्यामिति। अनदीसंज्ञकेषु 'अच्चघेः (पा०सू०७।३।११९) "औत्' (पा०सू०७।३।११८) इत्याभ्यां बाधात्, ङेराम्' (पा०सू०७।३। ११६) इति सूत्रान्नदीग्रहणानुवृत्तेश्चाह—नदीसञ्ज्ञकाभ्यामिति। मत्यामिति। सन्निपातपरिभाषाया अनित्यत्वाद्यण्।

त्रिचतुरोः (पा०सू०७।२।९९)। "अष्टन आ" (पा०सू०७।२। ८४) इत्यतो विभक्ताविति वर्त्तते। तत्फलं 'त्रिभार्यः'। तृतीयान्तेन

---

स्त्रीत्वविशिष्टमेवेति। नियमासम्भवमाशङ्कते—*यद्यपीति*। *तत्सत्त्वे*। लिङ्गान्तरसत्त्वे। *तत्सत्तेति*। पुंस्त्वसत्तेत्यर्थः। एवञ्च खरकुट्यै ब्राह्मणायेत्यत्र न सूत्रेण सिद्धिरिति भावः। *एवम्*। खरकुट्यै इतिवत्। *अत्र सूत्र इति*। वाक्यद्वयेऽपीति शेषः। कैयटमतेऽयमपि दोष इत्यर्थः। *तदनापत्तिः*। विकल्पाभावापत्तिः। *य्वोर्ह्रस्वाविति*। वाचकत्वमत्र षष्ठ्यर्थः *योगविभागेनेति*। एतेनादितो भिन्नान्येवेतानीति कस्य चिदुक्तिः प्रयुक्ता।

ननु मत्यामित्यत्रेत्सन्नियोगेनामादेशे तस्मिन्यणि कर्त्तव्ये सन्निपातपरिभाषातः स्यादत आह—*सन्निपातेति*।

*त्रिभार्य इति*। अत्र तिस्रादेशे तच्छ्रवणापत्तिः। ननु तथापि पुंवद्भावेन सिद्धमत आह—*तृतीयान्तेनेति*। तिसृभिर्भार्य इति।

समासः । भार्य्यो भरणीयः ।

अचि र (पा०सू०७।२।१००) । अलोन्त्यपरिभाषयैव सिद्धे ऋत इति अनुवर्त्तमानतिसृचतसृ इत्यस्य षष्ठ्यन्ततत्रकल्पनाय। अन्यथा त्रिचतुरोरित्यस्यैव वानुवृत्त्यापत्तौ रादेशेन तिसृचतस्रोर्बाधापत्तिरिति दिक्। नुमचिरेति । अत्राचिरांशे 'न तिसृति' निषेधो मूलम्। एतेन स्त्रीत्वरूपार्थविशेषविभक्तिसञ्ज्ञानिमित्ततिस्राद्यपेक्षया नुडन्तरङ्ग इत्य- पास्तम् । अतो निषेधादेवार्थसंज्ञाकृतबहिरङ्गत्वानाश्रयणम् । अन्यथा आमिति प्रत्ययविशेषापेक्षत्वेपि संज्ञार्थविशेषानपेक्षत्वेनान्तरङ्गत्वात् त्रयादेशे तदसङ्गतिः स्पष्टैव । वस्तुतः स्वरूपेणोपादाने न बहिरङ्गत्वं किं तु केनचिद्विशेषधर्मेणोपादाने एवेति विशेषापेक्षस्य बहिरङ्गत्वम्

---

ननु भार्याशब्दस्य संज्ञाशब्दत्वेन क्रियायोगाभावात्कर्तृकरणे कृतेत्यस्य कथंप्राप्तिरत आह—*भार्यो भरणीय इति* । ऋहलोर्ण्यत् । न तु भृञोऽसंज्ञायामिति क्यपा भाव्यम् । भार्यशब्दस्य क्षत्रिये रूढतयाऽसं- ज्ञायामिति पर्युदासात् । नन्वेवं तिसृभिरित्यनन्वितामिति तु न तिसृभि- र्युक्त इत्यर्थकस्य वाक्यैकदेशन्यायेन प्रयुक्तस्य त्रिशब्दस्य शक्त्यर्थकस्य समासाङ्गीकारात् । इह 'त्रिभरणीय' इत्यपि प्रत्युदाहरणम् ।

*त्रिचतुरोरित्यस्येति* । उद्देश्यतायास्तत्र क्लृप्तत्वात् । "ऋत" इ- त्युपादाने त्वयोग्यत्वान्न तयोरनुवृत्तिः । *रादेशेनेति* । अजादिवि- भक्तावित्यादिः । तिस्रादेशविधानन्तु हलि चरितार्थम् । ननु रादेशस्य वि- ध्यसामान्यचिन्तया गुणाद्यपवादत्ववन्नुडपवादत्वमपि स्यादिवि- विप्रतिषेधासंगतिरत आह—*अत्रेति* । वार्तिक इत्यर्थः । *मूल- ति* । यदि नुम्बाधकत्वं स्यात्तदा रादेशे कृते नुटोऽप्राप्त्या दीर्घ- "न तिसृ" इतिसूत्रवैयर्थ्यमिति तेन सूत्रेण नुम्बाधकत्वाभावो ज्ञाप्य- इति भावः । *एतेन* । वक्ष्यमाणविशेषेण । *अन्तरङ्ग इति* । तथा च नुटा सह विप्रतिषेधविचारासंगतिरिति भावः । तमेव विशेषमाह— तो निषेधादेवेति* । "न तिसृ" इतिनिषेधादेवेत्यर्थः । *अर्थसंज्ञा- ति* । अर्थसंज्ञाशब्दयोर्द्वन्द्वंकृत्वा कृतशब्देन सह समासेऽर्थकृतं सं- कृतं वा नाश्रीयत इति फलितम् । *आमीति* । अस्य त्रयादेश इत्य- न्वयः । यत्तु त्रयादेशस्य विशेषापेक्षत्वाद्बहिरङ्गत्वं, तिस्रादेशस्य तु विभ- क्तिसामान्यापेक्षत्वादन्तरङ्गत्वमिति न त्रयादेशस्यान्तरङ्गत्वात्पूर्वम- न तिसृति सूत्रासङ्गतिरिति तन्मतन्दूषयति—*वस्तुत इति* । *स्व- रूपेण* । यथा "त्रेस्त्रयः" इत्यत्राम आम्त्वेन रूपेण । *केन चिद्वि-

नेति च रुदधातौ निरूपयिष्यामः । तृज्वत्सूत्रे भाष्ये तु "न तिसृचतसृ" इति ज्ञापकाद्रादेशो नुड्विषये न । पूर्वविप्रतिषेधेन तु न सिद्ध्यति । अपवादविषये विप्रतिषेधाप्रवृत्तेः । रादेशस्य सर्वापवादत्वा"दित्युक्तम् ।

त्रिचतुरोर्विशेषणादिति । स्त्रीनिष्ठसंख्यायां वर्त्तमानयोरित्यर्थ इति भावः । नेहेति । त्रिशब्दस्य पुंनपुंसकवृत्तित्वेऽपि समुदायस्य स्त्रियां वृत्तेरङ्गविशेषणत्वेऽपि आदेशः स्यादिति भावः । आमि त्विति । तत्राऽऽम् षष्ठीबहुवचनमेवार्थाधिकारादतो न ङेरामि त्रयादेश इति बोद्ध्यम् । प्रियतिसेति । अङ्गविशेषणत्वेऽत्राप्यापत्तिः स्यादिति भावः । प्रिया जस् त्रि जसिति स्थिते 'अन्तरङ्गानपी'तिन्यायेन विभक्तिलुकि पुनः सुपि तदन्तविधिना निर्दिश्यमानपरिभाषया त्रिशब्दस्यादेशः ततो 'नद्यृतश्च' (पा०सू०५।४।१५३) इति कप्तु न । समासार्थलौकिकवाक्ये ऋकारान्तोत्तरपदत्वाभावात् । 'ऋदुशन' (पा०सू०७।१।९४) इत्यनङ् । प्रियतिसृणि इत्यादि । अत्र नुमः परत्वात्तिस्रादेशे पुनः प्रसङ्गविज्ञानेन नुम् । 'नतिसृ' (पा०सू०६।४।४) इति ज्ञापकेन सामान्यत आगमविषये रादेशो नेति ज्ञाप्यते । 'प्रत्ययोत्तर' (पा०सू०७।२।९७) इति सूत्रे चेमौ भाष्ये प्रयोगौ ।

---

रूपेणेति* । यथा "रुदादिभ्यः सार्वधातुके" इत्यत्र सार्वधातुकत्वेनोपादाने सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं प्रत्ययत्वज्ञानञ्चावश्यकमिति तत्र विशेषापेक्षस्य बहिरङ्गत्वम् । इदमल्पापेक्षमन्तरङ्गं बह्वपेक्षं बहिरङ्गमिति वदतो मतेन वस्तुतस्त्वेतादृशबहिरङ्गत्वं क्वापि नाश्रितमिति भाष्यानुसारिमतेनाह—*विशेषापेक्षस्येति* । मूलोक्तन्दूषयति—*तृज्वत्सूत्रे भाष्य इति* । *इत्यर्थ इति* । श्रुतानुमितयोरितिन्यायोऽत्रानुग्राहकः । सप्तम्येकवचनस्यामि कृते त्रयादेशः स्यादत आह—*तत्रामिति* । त्रेस्त्रय इति सूत्र इत्यर्थः । *अर्थाधिकारादिति* । "आमि सर्वनाम्न" इति सूत्रे षष्ठीबहुवचनग्रहणस्यैव सिद्धान्तत्वात् । ननु पुनः प्रसङ्गविज्ञानेन नुमित्यसङ्गतम् । बाध्यसामान्यचिन्तया रादेशस्य सर्वापवादत्वस्य व्यवस्थापनादत आह—*नतिसृतिज्ञापकेनेति* । *आगविषये इति* । आकेन सामान्यशब्देन मुमोऽपि सङ्ग्रहः । एवं ज्ञाप्यस्य वचनस्य कल्पनायास्भाष्यमेव साधकमाह—*प्रत्योत्तरेति* । *इमाविति* । 'प्रियतिसृणी' 'प्रियतिसृणि' इतिप्रयोगावित्यर्थः । ननु द्वे इत्यत्रापरनि-

ङेरत्वे इति। बहिरङ्गासिद्धत्वन्तु 'न यासयो'रिति निर्देशेनानित्यत्वान्न प्रवर्तते। चिक्षक्काविति। "युवोरनाकौ" (पा०सू०७।१।१) इत्यत्र भाष्ये पाठात् "ङ्याप्" (पा०सू०४।१।१) सूत्रे तत्परिभाषादोषेषु पाठाच्च। "सख्यशिश्वी" इति ङीप् 'यस्येति च' (पा०सू०६।४।१४७) इतीकारलोपः। लक्ष्मीरिति। 'कृदिकारादिति'। ङीषि लक्ष्मी इत्यपि।

स्त्यायतोऽस्यां शुक्रशोणिते इति स्त्री। स्त्यायतेर्ड्रट्, टिलोपयलोपौ, टित्वात् ङीप्। इयङिति स्त्रीशब्दस्येकारान्तत्वादियङेवानुवर्तते इति भावः। गुणनेति। 'जसि च' (पा०सू०७।३।१०९) इति गुणः। 'आङो ना' (पा०सू०७।३।१२०) 'अच्च घे' (पा०सू०७।३।११९) 'ह्रस्वनद्याप' (पा० सू० ७।१।५४) इत्येतैरित्यर्थः। बाध्यते इति। स्त्रीशब्दस्येयङ् इत्यनेनान्वयः। नुम्। इकोचि (पा०सू०७।१।७३) इति। पूर्वकारिकोक्तैर्बाधे सति यत्फलितं तदाह—ओस्याविति। अजादौ य इयादेशो विहितः स उपसर्जने पुंसि विद्यमानस्य स्त्रियाः स्त्रीशब्दस्यौसादिषु चतुर्ष्वेव, न त्वन्यत्र, गुणादिभिर्बाधादिति भावः। पुंवद्भावादिति। 'तृतीयादिषु भाषितपुंस्कम्' (पा०सू०७।१।७४) इत्यनेनेति भावः।

ननु ह्रस्ववाक्येऽप्यस्त्रीत्यस्य संबन्धेन स्त्रीशब्दावयवभिन्नह्रस्वर्णान्तादित्यर्थेन कथमत्र प्राप्तिरत आह—अस्त्रीति। तत्र बीजमाह—तत्संबद्धस्यैवेति। प्रसज्यप्रतिषेधस्तु न, वाक्यभेदापत्तेः। नन्वियङ्स्थानावित्यनेनापि ह्रस्वस्य निषेधः किं नेत्यत आह—दीर्घस्यायमिति। तत्र ह्रस्वपदाभावादिति भावः। श्रयन्त्येनाविति श्री

मित्तकत्वेनान्तरङ्गे टापि कर्त्तव्ये विभक्तिनिमित्तकत्यदाद्यत्वस्यासिद्धत्वाद्रूपासिद्धिः स्यादत आह—*बहिरङ्गासिद्धत्वमिति*। *युवोरनाकावित्यत्रेति*। एतेनेयम्परिभाषा निर्मूलेति कस्य चिदुक्तिः प्रत्युक्ता। वस्तुतो घटघटीग्रहणाल्लिङ्गविशिष्टपरिभाषाऽनित्या तेनैषा गतार्थेत्याशयेनाह—*ङ्याप्सूत्र इति*।

*इयङेवानुवर्त्तत इति*। एकदेशे स्वरितत्वात्। *तत्र ह्रस्व इति* इयवङुवङ्पदघटितवाक्य इत्यर्थः।

'क्विब्वचि' इत्यादिना वागित्यत्रेव कर्मणि क्विब्दीर्घौ। अङ्यन्तत्वान्न सुलोपः।

नेयङ् (पा०सू०१।४।५)॥ ङद्वयोच्चारणं स्पष्टार्थम्। स्थानशब्दो भवल्युडन्तः। इयङुवङोः स्थानं स्थितिर्ययोरिति बहुव्रीहिः। सा च बाधकाविषये एव। तेन प्रकृष्टा धीः 'प्रधीः' 'प्रध्यै' इत्यादौ न निषेधः। सा चोपलक्षणं व्याख्यानात्। तेन 'हे श्रीः' इत्यादौ निषेधसिद्धिः। श्रियावित्यादौ तत्स्थितिसत्त्वात्। यत्र नदीकार्याश्रये अङ्गे बाधकाबाधितेयङादिस्थितिः क्वचित् दृष्टा तस्य तदवयवस्य च निषेध इति फलितम्, अत एव प्रकृष्टा धीर्यस्या यस्य वा प्रधीरित्यत्रावयवधीशब्दस्य नदीत्वं भवत्येव। तदुक्तं भाष्ये—"अवयव स्त्रीविषयत्वासिद्धमिति चेदियङुवङ्स्थानप्रतिषेधे यण्स्थानयोरपि स्त्र्योः प्रतिषेधः प्राप्नोति, अवयवस्येयङुवङ्स्थानत्वात्। आध्यै, प्रध्यै। सिद्धन्त्वङ्गरूपग्रहणात् यस्याङ्गस्येयुवौ भवतस्तस्येदं ग्रहणम्। न चैतस्याङ्गस्येयङुवङौ भवतः" इति। श्रियै इति। 'ङिति ह्रस्वश्च' (पा०सू०१।४।६) इति विकल्पः।

वामि (पा०सू०१।४।४५)। आमीतिच्छेदः। प्रधीशब्दस्येति। प्रकृष्टं ध्यायतीत्यर्थकस्येत्यर्थः। वृत्तिकारादीनामिति। अयं भावः—भाष्ये 'आध्यै' 'प्रध्यै' इत्यादावियङ्स्थानत्वान्निषेधमाशङ्क्य यत्र नदीकार्याश्रयेऽङ्गे इत्युक्तरीत्या समाहितम्। तत्र न बहुव्रीहिः,

---

*इति बहुव्रीहिरिति*। व्यधिकरणबहुव्रीहेरपि सप्तमीविशेषण इतिज्ञापकात्साधुत्वम्। एतेन मूलोक्तार्थस्य वाच्यार्थपरतयैवोपपत्तेरस्याधिकरणल्युडन्तस्थानशब्दस्येयङुवङोः स्थानाविति षष्ठीसमासं कृत्वा फलितार्थपरतया वर्णनमयुक्तमिति सूचितम्। अत्रेयङुवङोरित्यस्य षष्ठ्यन्तस्य यू इत्येतद्विशेषणतयोपपत्तेः स्थानशब्दोपादानसामर्थ्यात् यल्लब्धं तदाह—*सा च बाधकाविषय इति*। अत्रातद्गुणसंविज्ञानबहुव्रीहिलभ्यार्थमाह—*सा चोपलक्षणमिति*। पूर्वोक्तमर्थं प्रमाणयति—*तदुक्तमिति*। प्रथमलिङ्गत्यस्य प्रत्याख्यानावसरे यू स्त्र्याख्याविति सूत्रे।

*प्रकृष्टं ध्यायतीत्यर्थकस्येति*। प्रकृष्टध्यानकर्तृत्वप्रवृत्तिनिमित्तकस्येत्यर्थः। पदान्तरं विना स्त्रियां वर्तमानत्वन्नित्यस्त्रीत्वमित्यस्य वृत्तिका-

कत्वापत्तेः। किं तु प्रकृष्टं ध्यायतीत्याद्यर्थकं तत्। तत्र कैयटोक्त-नित्यस्त्रीत्वाभावेन नदीत्वाप्राप्त्या भाष्यासङ्गतिः। अतः "स्त्रीविषयावेव यौ यू नित्यम्" इत्यत्र भाष्ये एवकारो भिन्नक्रमः। नित्यमेव यौ स्त्रीविषयावित्यर्थः। नित्यमेवेत्वस्य पदान्तरं विनापीत्यर्थः। खलपूकटप्रूग्रामणीत्यादीनां क्रियाशब्दतया पुंसि मुख्या वृत्तिः, पुंसः खल्वयमुचितो धर्मः, शक्तत्वाद्भयरहितत्वाच्च। अतस्तेषां न पदान्तरं विना स्त्रीवृत्तित्वम्। ध्यानादि तु स्त्रीपुंससाधारणमिति। अत्रारुचि-बीजन्तु सूत्रभाष्याद्यक्षरैरीदृशनित्यस्त्रीत्वालाभः। भाष्योदाहरणे ब-हुव्रीहिरेव। कप्तु न, ऋकारसाहचर्येण यस्य वृत्तेः प्राङ्नदीत्वं त-दुत्तरपदके एव तत्प्रवृत्तेः। धीशब्दस्येयङ्स्थानत्वेन प्राङ्नदीत्वनि-षेधात्। गतिपूर्वकत्वाद्यणपि सुलभः। "आध्यै इति चिन्त्यमतत्, क्रियाशब्दत्वेन नित्यस्त्रीत्वाभावात्" इति कैयटस्तु चिन्त्य एवेति दिक्।

लक्ष्मीवदिति। स्त्रियामिति शेषः। पुंवद्रूपमिति। उक्तविग्रहे नित्यस्त्रीत्वाभावात् पुंसीव स्त्रियामप्यनदीत्वादिति भावः। प्रकृष्टाधी-रिति विग्रहे इति। ईदृशपदघटितविग्रहे इत्यर्थः। तेन कर्मधारये बहु-व्रीहौ च सर्वलिङ्गेऽपि मतद्वये ऽपि लक्ष्मीवत् प्रथमलिङ्गग्रहणञ्चेत्यस्य-यत्वधीशब्दस्य नदीत्वात्। 'नेयाङि' ति निषेधस्योक्तरीत्या प्राप्त्य-भावादिति भावः। विशेष इति। लक्ष्मीशब्दापेक्षयेत्यर्थः। श्री-वदिति। स्त्रियामिति शेषः। विशिष्टस्यापीयङ्स्थानत्वेन ङिदामोर्विक-ल्पस्यान्यत्र निषेधस्य च प्राप्तिरिति भावः। पुंसि त्वीदृशबहुव्रीहावा-

---

रादिसम्मतस्य लाभप्रकारमाह—*अयं भाव इति*। *कैयटोक्तेति* पूर्वोक्तेन प्रवृत्तिनिमित्तेनोभयाभिधायकत्वात्। *ईदृशनित्यस्त्रीत्वाला... इति*। किन्तु न कदापि पुंसः प्रतिपादकावित्यवैवकारव्यवच्छेद्यं ...भ्यते। *ऋकारसाहचर्येणेति*। ऋकारस्य वृत्तिप्राग्वर्तिन एव ग्रह...स्य सिद्धान्तिसम्मतत्वात्। अत एव 'प्रियतिसा' इत्यत्र न कप्।... कृते वृत्तेः प्राक् यथा नदीत्वन्न तथोपपादयति—*धीशब्देति*। कै...टोक्तमनूद्य खण्डयति—*आध्यै इतीति*। *मतद्वय इति*। वृत्तिका...रकैयटमतयोरित्यर्थः। *लक्ष्मीशब्दापेक्षयेत्यर्थ इति*। धातुत्वेन यण...देशस्य न्याय्यत्वात्। *विशिष्टस्यापीति*। "न भूसुधियोः" इतिय... निषेधात्।

न नदीत्वं 'नेयङ्'इत्यवयवस्य निषेधात्समुदायस्याप्राप्तेश्च । पुंवदिति । सुष्ठु ध्यायतीति विग्रहे' इति शेषः, तस्य नित्यस्त्रीत्वाभावेन पुंसीव स्त्रियामप्यनदीत्वादिति भावः । इतिविग्रहे त्विति । ईदृशपदघटितविग्रहके स्त्रीलिङ्गबहुव्रीहौ कर्मधारये चेत्यर्थः । तत्र बहुव्रीहाववयवस्य नेयङिति निषेधः । ङिति तु समुदायस्य विकल्प इति बोद्धव्यम् ।

स्त्रियाश्च (पा०सू०७।१।९६) अत्र 'असंबुद्धौ सर्वनामस्थाने' इति न संबध्यते आरम्भसामर्थ्यात् । ऋन्नेभ्य इति । तदन्तशब्दानां बहुत्वाद् बहुवचनम् । प्रातिपदिकविशेषणत्वात्तदन्तविधिः । स्त्रियामितिचाधिकारः । क्वासि हे सुभ्रु इति । रावणेन सीताऽपहारोत्तरम् रामविलापोऽयं । विधिना त्वया हापितस्त्याजितः सः 'हे सुभ्रु क्वासि' इत्येवं बहु विललापेत्यर्थः । नेयङित्यनेनावयवस्य समुदायस्य च नदीत्वनिषेधात्प्रश्नः । प्रमाद इति । विरहपीडितत्वेनानवधानलक्षणोऽत्र प्रमादः । स च विरहपोषकत्वात्काव्ये गुणः ।

एकाजुत्तर (पा०सू०८।४।१२) । एकोऽच् यस्मिन्, तादृशमुत्तरपदं यस्येति सूत्रे बहुव्रीहिगर्भो बहुव्रीहिः । 'उत्तरपदे' इत्यनेनास्य वाक्यस्य समानपदघटितवाक्यैकदेशत्वानुमानात्समासो विशेष्यः इत्याह–तस्मिन्समासे इति । आरम्भेति । 'प्रातिपदिकान्त' (पा०सू०८।४।११) इत्यनेन विकल्पेन णत्वे सिद्धे इत्यर्थः । पुनरिति । णग्रहणेऽनुवर्त्तमाने इत्यर्थः । यणमिति । हन्करोति यणमित्यर्थः । भेकजाताविति ।

शिली गण्डूपदा भेकी वर्षाभ्वी कमठी डुलिः ।

इत्यमरादस्य बह्वादित्वेन वा ङीषिति भावः । अन्ये त्वस्य

---

*आरम्भसामर्थ्यादिति* । तस्यात्र सम्बन्धे प्रकृतसूत्रस्यापि पूर्वसूत्रविषय एव प्रवृत्त्या पूर्वसूत्रेणैव सिद्धेः । *तदन्तशब्दानामिति* । ऋन्नान्तशब्दानामित्यर्थः । ऋन्नाभ्यामितिद्विवचननिर्देशे गौरवञ्चेत्यपि बोध्यम् । *विरहपोषकत्वात्* । 'विरहे सति विरहिणोऽनवधानम्भवति' इति हि लोकप्रसिद्धम् ॥

समास इत्येतल्लाभप्रकारमाह–*उत्तरपद इत्यनेनेति* । *अस्य* ।

गौरादिपाठान्नित्यमेव ङीष्। "भेक्यां पुनर्नवायां स्त्री" इति यादवस्य "सुतः पुत्रः स्त्रियान्त्वमी। आहुर्दुहितरम्" इतिवन्नित्यङन्तत्वेऽप्युपपत्तेरित्याहुः। गौरादित्वादिकल्पने मानाभावात्। अमरे 'वर्षाभूः कमठी दुलिः' इत्येव पाठ इति सुबोधिनीकार इति माधवः। तदनुसारेण मूलं बोद्ध्यम्।

टापूङीपौ नस्त इति। 'स्त्रियां यत्प्राप्नोति तन्न' इति व्याख्यानादिति भावः। स्वस्रादिषु मातृशब्दस्य ननान्दादिसाहचर्यात्सिद्धत्वाच्च ससंबन्धिकजननीवाचकस्यैव ग्रहणम्। सन्निपातपरिभाषयैव तिसृचतस्रोर्ङीबभावे सिद्धे तदनित्यत्वज्ञापनार्थन्तयोर्ग्रहणमिति केचित्। स्वस्रादिषु तिसृचतस्रोः पाठोऽनार्ष इति 'कृन्मेजन्त (पा०सू० १।१।३७) सूत्रस्थभाष्यस्वरसः।

इत्यजन्ताः स्त्रीलिङ्गाः।

---

वर्षाभूशब्दस्य। अमरात् स्त्रीप्रत्ययोऽस्माद्भवतीति ज्ञानेऽपि यादवकोशोपपत्त्यर्थं बह्वादित्वकल्पनमिति भावः। अमरसम्मत्याह-*अन्येत्विति*। *गौरादिपाठादिति*। तस्याकृतिगणत्वकल्पनया। यादवकोशोपपत्तिमाह-*भेक्यामिति*। *इतिवदिति*। तत्रेवात्रापि स्त्रीत्वाप्रकृतिमात्रप्रतिपादने कोशतात्पर्यङ्कल्प्यते इति भावः। मूलासङ्गतिस्परिहरन्तात्पर्यमाह-*गौरादित्वादीति*। *तदनुसारेण*। माधवमतानुसारेण।

अनन्तरस्येतिन्यायेन ङीप एव निषेधः स्यादत आह-*स्त्रियां यत्प्राप्नोतीति*। केचिदित्यनेन सूचितामरुचिं प्रकाशयन्नाह-*स्वस्रादिष्विति। *भाष्यस्वरस इति*। तत्र हि सन्निपातपरिभाषायाः प्रयोजननिरूपणावसरे 'तिसृचतसृत्वं ङीब्विधेः। तिसृचतसृत्वं ङीब्विधेर्निमित्तम्। तिस्रस्तिष्ठन्ति। चतस्रस्तिष्ठन्ति। तिसृचतसृभावे कृते ऋन्नेभ्यो ङीबिति ङीप्प्राप्नोति। सन्निपातलक्षणो विधिरनिमित्तन्तद्विघातस्येति न दोषो भवति' इत्युक्त्वा 'नास्त्येतत्प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति न तिसृचतसृभावे ङीप् भवति। यदयन्न तिसृचतसृ इति ऋतो दीर्घत्वस्य प्रतिषेधं शास्ति' इत्युक्तम्। यदि स्वस्रादिष्वनयोः पाठः स्यात् तदा तेनैव निषेधे सिद्धे ज्ञापकानुसरणक्लेशो व्यर्थः स्यादिति॥

* इत्यजन्ताः स्त्रीलिङ्गाः *



अतोऽम् (पा०सू०७।१।२४) । अत इत्येतदधिकृतस्याङ्गस्य विशेषणम्। 'स्वमोर्नपुंसकात्' (पा०सू०७।१।२३) इति चानुवर्तते। अम् लुग्बाधको 'येन नाप्राप्त' इति न्यायात्। 'अम्' इतिच्छेदो न 'म्' इति। ज्ञानमित्यादौ 'सुपि च' इति दीर्घापत्तेः। सन्निपातपरिभाषया दीर्घवारणे तु 'हे ज्ञान'इत्यादौ सम्बुद्धिलोपस्यानापत्तिः। अनिमित्तस्य प्रकृतिप्रत्ययसन्निपातस्य प्रत्ययलोपेन विनाशात्। अत एव 'एङ्ह्रस्वात्' (पा०सू०६।१।६९) इति सूत्रे ज्ञानेत्यादौ मलोपाय कतरदित्यादौ लोपाभावाय चाङ्गाक्षेपव्यधिकरणान्वयहल्पदानुवृत्तय आस्थिता भाष्ये, न तु 'म्' इतिच्छेद उक्त इत्यलं भाष्यविरुद्धकल्पनयेति दिक्।

---

*येन नाप्राप्त इति न्यायादिति*। उत्सर्गाप्राप्तियोग्ये विषयेऽचारितार्थ्यं ह्येतन्न्यायप्रवृत्तौ बीजं, तत्प्रकृतेऽप्यस्त्येव। न चोत्सर्गशास्त्रस्य प्रवृत्युत्तरं यत्रापवादत्वेनाभिप्रेतस्य प्राप्तिस्तत्रापवादत्वव्यवहारो भवति। प्रकृते तूत्सर्गस्य लुकः प्रवृत्युत्तरं नाम्भावस्य प्राप्तिः स्थान्यभावादिति कथमपवादत्वव्यवहार इति वाच्यम्। अपवादशब्दस्य निरवकाशत्वेन बाधक इत्यर्थात्। यत्त्वपवाद इति कथनमम्भावे लुगभावार्थं तच्च नोचितं सन्निपातपरिभाषयैव लुगभावस्य सिद्धेरिति। तन्न। लुकः पूर्वमम्भावस्य निरवकाशत्वेन प्रवृत्तिरित्येव तात्पर्यात् कृते त्वम्भावे सन्निपातपरिभाषया लुगभावस्य सिद्धिरिति त्वन्यत्।

यत्तु लाघवात् 'अतोम्' इत्यत्र म् इत्येव छेदः। द्वितीयैकवचने "आदेः परस्य" इत्यकारस्य मकारे द्वितीयमकारस्य संयोगान्तलोपेन सिद्धम्। यद्यपि "संयोगान्त्यलोपे यणः प्रतिषेध" इति वार्त्तिकारम्भपक्षे संयोगान्तलोपः प्राप्नोति। झल्ग्रहणापकर्षपक्षे तु नेति फलभेद आपतति। तथापि संयोगान्तलोपसूत्रे झल्ग्रहणस्य वाक्यभेदेन सम्बन्धं कल्पयित्वा फलभेदः परिहरणीय इतिमतं। तद्दूषयति–अमिति छेद इति*। *अत एव*। अमिति छेदस्य सूत्रकाराभिप्रायविषयत्वादेव। *न तु म् इति छेद उक्त इति*। यदि म् इतिछेदोऽभिमतः स्यात्तदा वर्णग्रहणे च सर्वत्रेति तदन्तविध्यर्थमङ्गाक्षेपमात्रं कर्त्तव्यम्। 'येन यदाक्षिप्तं तत्तस्य विशेषणम्' इति न्यायेन तादृशाङ्गात्परा या सम्बुद्धिरित्येव लाघवाद्वदेत् वैयधिकरण्यान्वयो हल्पदानुवृत्तिश्च न कार्येति भावः।

केचित्तु सन्निपातपरिभाषया ज्ञानमित्यत्र दीर्घवारणमयुक्तम्। यथा "एङ्ह्रस्वात्संबुद्धेः" इति सूत्रे हल्ग्रहणानुवृत्त्यभावे कुण्डशब्दात्सम्बुद्धौ

जसः शी (पा०सू०७।१।१७) औङ आप (पा०सू०७।१।१८) इत्याभ्यां 'शी' 'औङ' इति चानुवर्त्तते तदाह—क्लीबादित्यादि।

यस्येति च(पा०सू०६।४।१४८) इश्चाश्च यं तस्येत्यर्थो व्याख्यानात्। भस्येत्यधिकारः, चेन 'नस्तद्धिते (पा०सू०६।४।१४४) इत्यतः तद्धितोऽनुकृष्यते तदाह—भस्येत्यादि। भस्येति किम्? गार्ग्यम्। औङ श्यामिति। इत एव निर्देशादस्य निरस्त्रीत्वं बोध्यम्। 'औङ' इति स्वरूपकथनं 'सर्वे' इत्यस्य भाधिकारेण सिद्धेः।

जश्शसोः (पा०सू०७।१।२०) शस् अत्र सुवैव व्याख्यानात्।

नपुंसकस्य(पा०सू०७।१।७२) 'इदितो नुम्'(पा०सू०७।१।५८) इत्यतो नुम् इति 'सर्वनामस्थाने' इति चानुवर्त्तते। 'अङ्गस्ये'ति च... तम्। तच्च झलज्भ्यां विशेष्यते। नपुंसकस्येति गृह्यमाणस्याभावादङ्गस्य विशेषणम्। 'अस्थिदधि' (पा०सू०७।१।७५) इत्यादौ तु गृह्यमाणस्य प्रकरणात् श्रुतेर्बलवत्त्वात्। अत एव 'त्रिचतुरोः' (पा०सू०७।२।९९) इत्यत्र स्त्रियामिति तयोरेव विशेषणमित्याकरः। उपधादीर्घ इति 'सर्वनामस्थाने चासम्बुद्धा' वित्यनेनेति भावः। शेषमिति

---

अमादेशे "आदेः परस्य" इत्यकारलोपे "लुपि च" इति दीर्घे हे कु... मिति प्राप्नोतीति सन्निपातपरिभाषाया अनित्यत्वाभिप्रायेणोक्तं तथा... इति छेदपक्षेऽपि दीर्घे कर्तव्ये सन्निपातपरिभाषाया अप्रवृत्तिर्भवि... त्याहुः। अत्रेदमवधेयम्। अमिति छेदपक्षेऽदन्तसन्निपातनिमित्तकस्या... देशस्य न साक्षात्तत्सन्निपातविघातकदीर्घम्प्रति निमित्ततेति सन्नि... परिभाषाया अप्रवृत्तिस्तस्मिन् पक्षे संभवति। म् इति छेदपक्षे तु सन्नि... लक्षणविधेर्मकारादेशस्य सन्निपातविघातकदीर्घानिमित्तत्वं सम्... तमेवेति॥

ननु "यस्येति च" इतिसूत्रेण यकारमात्रस्यैव लोपविधानमस्त्विति... आह—*व्याख्यानादिति*। "सूर्यतिष्य" इत्युत्तरसूत्रे यग्रहणोपादाना... कव्याख्यानादित्यर्थः। *स्वरूपकथनमिति*। अस्य न तु व्यावर्त्तक... शेषः। सर्वे इत्यत्रातिप्रसङ्गस्तर्हि स्यादत आह—*सर्व इति*।

*व्याख्यानादिति*। जस्साहचर्यमूलकात्। अत एव "तावि"... सूत्रे 'एकशः' इति प्रयोगसङ्गतिः।

*बलवत्त्वात्*। प्रकरणाद्योपस्थितिस्तदपेक्षया श्रुतार्थस्य शीघ्रोप... स्थितिकत्वेन बलवत्त्वात्। *अत एव*। "श्रुतानुमितयोः" इतिपरि...

कर्मणि घञ्। 'घञबपः पुंसि' (लिङ्गानुशा०) इति प्रायोवादः ।

अदूड्ड (पा०सू०७।१।२५) दुड्डेति पाठः दस्य ष्टुत्वं, डस्य संयोगान्तलोपश्चादेशस्वरूपभङ्गभिया न कृत इति कैयटः । पञ्चभ्य इति । अधिकव्यवच्छेदाय अस्य सर्वाद्यन्तर्गणत्वात् ।

परे तु डतरादिभ्य इति विरुद्धविभक्तिपञ्चम्यन्तत्वादङ्गस्येत्यनेनान्वयानर्हमिति डतरादिभ्यो विहितयोः स्वमोरङ्गसंज्ञानिमित्तयोरित्यर्थ इति सर्वादिसूत्रे भाष्ये स्पष्टम् । एवञ्च परमकतरं कुलमित्यादौ नादड् ।

यत्तु कैयटेन'अर्थद्वारकं विधानमाश्रयितव्यम्, तेन परमकतरद्' इत्युक्तं, तन्न । तस्य यदि डतराद्यर्थगतसंख्याभिधायिन इत्यर्थस्तदा पञ्चम्यन्तात्तादृशार्थप्रतीत्यसम्भवः। यदि षष्ठ्यर्थे पञ्चमी तदा 'विरुद्धभक्तित्वात्' इति भाष्यासङ्गतिः,विधानस्य सर्वथाऽनाश्रयणेनार्थद्वारकं विधानमिति तद्ग्रन्थासङ्गतिश्च । न चैतदर्थे उपसर्जनप्रतिषेधारम्भो व्यर्थः स्यादिति वाच्यम् । तत्प्रत्याख्यानायैवैतद्भाष्यप्रवृत्तेः । परमकतरादिभ्यावृत्तये ऽवश्याश्रयणीयविहितविशेषणेनैवातिकतरादिभ्यावृत्तौ स व्यर्थ इति तदाशयः । 'त्यदादीनामः' (पा०सू०७।२।१०२) इत्यत्र षष्ठ्यन्तत्वात्त्यदादीनामित्यर्थद्वारकं विभक्तिविशेषणम् । 'अस्थिदधि' (पा०सू०७।१।७५ इत्यादावङ्गं तथा तद्विशेषणं व्याख्यानादित्यपि तत्रैव भाष्ये स्पष्टमित्याहुः

डित्वफलमाह—टेः (पा०सू०६।४।१४३) 'तिविंशतेः' (पा०सू०६।४।१४२) इत्यतो डितीति वर्त्तते 'भस्येति' चाधिकृतम्। पञ्चम इति। डटो मटि भत्वाभाव इति भावः ।अन्यतमस्येति । डतरादिष्वपा-

---

पासत्वादेव । भावे घञि प्रस्तुतार्थासङ्गतेराह—*कर्मणीति* । *प्रायो वाद इति* । लिङ्गानुशासनस्य लौकिकत्वात् । अत एव 'सम्बन्धमनुवर्तिष्यते' इति भाष्यस्य'सम्बध्यत इति सम्बन्धम्'इति व्याख्या कैयटेन कृता । *स्वरूपभङ्गभिया न कृत इति* । एवञ्च नित्यस्यापि शास्त्रस्य सूत्रेषु छन्दोवत्सूत्राणीतिवचनेन छन्दस्त्वातिदेशेनाप्रवृत्तिरिति भावः । *विधानस्य सर्वथेति*। डतराद्यर्थगतसंख्याभिधायिन इत्यर्थे विधानक्रियाया अन्वयाभावात्। *अङ्गंतथेति* । अर्थद्वारकं विभक्तिविशेषणमित्यर्थः ।

ठादिति भावः। एकतरमिति। 'एकाच्च प्राचाम्' (पा०सू०५।३।९४) इति डतरच् एकतमस्य त्वेकतमदित्येव। परत्वादिति। नुमपेक्षयेति शेषः। शब्दान्तरप्राप्त्या झलन्ताजन्तलक्षणभेदाच्च नुमप्यनित्य इति भावः। केचित्तु शिभावात्परत्वाज्जरसि ततः शौ झलन्तत्वान्नुमित्यर्थमाहुः। अत्र यद्वक्तव्यं तद् निर्जरशब्दे उक्तम्।

सान्तमहतः (पा०सू०६।४।१०) सान्तेति लुप्तषष्ठीकं पृथक् पदम्। संयोगस्येत्यनेन समानाधिकरणम्। 'नोपधायाः' (पा०सू०६।४।७) 'सर्वनामस्थाने चासम्बुद्धौ' (पा०सू०६।४।८) इत्यनुवर्त्तते तदाह—सान्तसंयोगस्येत्यादि। उपधाग्रहणञ्च पूर्वत्वमात्रोपलक्षणम्। पारिभाषिकार्थस्येहासंभवात्। सर्वनामस्थान इति सान्तसंयोगस्य विशेषणम्। अत एव 'हंसशिरांसि' इत्यादौ न दोषः। यद्वा 'अनन्त्यविकारे ऽन्त्यसदेशस्य' इति न दोषः। मांस

---

*व्याख्यानादिति*। लक्ष्यानुसारिव्याख्यानादित्यर्थः।

अजरांसीतिप्रयोगसाधनाय प्रक्रियामाह-*परत्वादितीति*। *नुमप्यनित्य इति*। अपिना जरसादेशग्रहणम्। तस्य च नुमागमे कृते नुमः समुदायभक्ततया तदवयवजराशब्दस्य नुमागमेन व्यवधानादनित्यत्वमिति बोध्यम्। *अत्र यद्वक्तव्यमिति*। शीभावात्परत्वाज्जरसित्यसङ्गतम्, विभक्त्यादेशानामेव पूर्वविप्रतिषेधेनेष्टत्वादित्याद्युक्तम्।

*असम्भवादिति*। सान्तसंयोगावयवनकारस्यान्त्यालत्वाभावेन तन्निरूपितोपधात्वस्यासम्भवात्। *अत एव*। "सर्वनामस्थान" इत्यस्य सान्तसंयोगविशेषणत्वादेव। अङ्गविशेषणत्वे हंसशब्दावयवाकारस्य स्यादिति भावः। तस्याङ्गांशे उत्थिताकाङ्क्षत्वेऽप्याह-*यद्वेति*। न "अन्त्यविकार" इतिपरिभाषायाः प्रकृतेऽतिप्रसङ्गनिवारकतया स्वाङ्गस्महत इत्येव सूत्रं कर्त्तव्यम्। "नोपधाया" इति वर्त्तते अङ्गस्येति प्राप्तम्। तच्च विशेष्यम्। स्महत इत्यस्य विशेषणतया सान्तं महच्चयदन्तश्च यदङ्गं तदवयवो यो नकारस्ततः पूर्वस्याचो दीर्घ इत्यर्थस्वीकारे सर्वेष्टसिद्धौ संयोगग्रहणमन्तग्रहणञ्च व्यर्थमिति वाच्यम्। अन्ततीत्यन्तः त्सरतीति त्सर्। अन् च त्सर् च अन्त्सरौ। तावाचष्टेऽन्त्सयति। ततः क्विपि अन्त्स इति प्रातिपादिकं ततः 'सुपः प्रतिना' समासे प्रत्यन्त्सशब्दस्य सुप्यौजसादावदीर्घार्थं संयोगग्रहणस्यावश्यकत्वात्। संयोगग्रहणे तु त्यासत्त्या नकाराव्यवहितसान्तो यः संयोग इत्यर्थाश्रयणेन दोषपरि

चन्या' इति । मांसस्य पचनीत्यर्थः । 'मांसस्य पचियुड्घञोः' इत्य- प्येतत्सिद्धार्थानुवाद एव । शब्दत्वेन च सादृश्यं 'नलुमता' (पा०सू० १।१।६३) इत्यस्य च नित्यत्वमित्यभिमानः । वृत्ताविति । भाष्य- स्वरसस्त्वननुवृत्ताविति भावः । मासश्छन्दसीति । मासस्तकारः स्याद्भादौ प्रत्यये छन्दसीत्यर्थः । 'माद्भिः शराद्भिर्दुरोदरं तव' इत्यु- दाहरणम् ।

**ह्रस्वो नपुंसके ।** (पा०सू०१।२।४७) क्लीबवदर्थे वर्त्तमान- स्याजन्तस्यैव सामर्थ्यात्प्रातिपदिकलाभे 'प्रातिपदिकस्य' इत्येतत्स- त्त्वप्रधानस्येत्यर्थकम् । तेन 'काण्डे' इत्यादौ अन्तवद्भावेन प्रातिपदि- कत्वेऽपि न ह्रस्वः । विभक्त्यर्थस्य संसर्गत्वेऽपि प्रकृत्यर्थापेक्षया प्राधा-

---

सम्भवात् । एतादृशप्रत्यासत्तिविवक्षया दोषाभावसूचनार्थमेव बहूनां संयोगसंज्ञोक्तिर्भाष्यीया सङ्गच्छते । णिलोपस्य स्थानिवत्त्वन्तु न । कौ लुप्तत्वात् । सूत्रे संयोगग्रहणाभावे प्रकृतोदाहरणेऽन्त्यवर्ण- तद्वर्णयोरितराव्यवधानाभावेन "अनन्त्यविकार"इति परिभाषाया अ- प्रवृत्त्या आद्याकारेतिप्रसङ्गश्च तद्वर्णविशेषणभिन्नत्वस्यानिवेशेऽपि भेदत्व- विशिष्टेन तकारेण व्यवधानात् । यदि त्वन्त्यवर्णतद्वर्णभिन्नो योऽन्त्यप- र्याप्त्यधिकरणाविषयकप्रतीत्यविषयस्तद्व्यवधानाभावो निवेश्यते तदा नायं दोष इत्यवधेयम् । *'मांसस्य पचि युड्घञोः" इत्यप्येतदिति* । युड्घञोः प्रकृतिभूतो यः पच्धातुस्तस्मिन्मांसस्यान्तं लुपेदिति तदर्थः । प्रभृतिग्रह- णस्य प्रकारार्थत्वेन तयोरपि "पद्दन्न" इतिसूत्रेणैवादेशो भविष्यतीति भावः । *अभिमान इति* । एतद्बीजम्प्रागभिहितम् । मूले "पद्दन्न" इति- सूत्रे च्छन्दसीत्यनुवृत्तं वृत्तावित्युक्तं तत्सूचितामरुचिं सूचयन्नाह-*भाष्य- स्वरस इति* । पदादीनां प्रकृत्यन्तरत्वस्य तत्सिद्धान्तसिद्धत्वात् ।

*क्लीबवदर्थ इति* । न च नपुंसकशब्दस्य सूत्रोपात्तस्य गुणिवाच- कतया क्लीबवदर्थ इत्यनुपपन्नमिति वाच्यम् । नपुंसकशब्दस्यार्श आद्य- जन्तत्वात् । ननु विभक्त्यर्थस्य संसर्गतया भानाभ्युपगमात् प्रकृत्यर्थस्य द्रव्यस्य प्राधान्यमस्त्येवेति, चेत्यत आह—*विभक्त्यर्थस्येति* । 'का- ण्डे' 'कुड्ये' इति विभक्त्यर्थप्रधानमिति भाष्याद्विभक्त्यर्थस्य संसर्गत्वेऽपि प्रकृत्यर्थनिष्ठप्रकारतानिरूपितविशेष्यतायास्तत्र स्वीकारे बाधकाभा- वात् । शब्देन प्रतिपादितेऽर्थे विशेष्यत्वाविरुद्धत्वे साधकभावः । अत एव 'वह्निर्नास्ति' इत्यत्र नञर्थे वह्निपदार्थस्य वह्नित्वावच्छिन्नप्रतियोगि- ताकत्वसम्बन्धेन अन्वये वह्नित्वमवच्छिन्नत्वम्प्रतियोगित्वञ्चेति त्रितय-

न्यमस्त्येव । प्रथमाया अपि अन्याभिहितशक्तिरर्थ इति तत्रापि
त्संसर्गको बोध इति तस्याः प्राधान्यम् । 'काण्डे तिष्ठतः' इत्या
आख्यातार्थकर्त्तुः कर्त्तृक्रियाभावेन क्रियायामन्वये तदभिन्नप्रथमा
स्यापि तेन सम्बन्धेनान्वयात्तस्य प्राधान्यम् । स्पष्टश्चेदं भाष्ये
ज्ञानवदिति । दीर्घान्तत्वप्रयुक्तो न कश्चिद्विशेष इति भावः । 'श्री
पाणि' इत्यादौ "एकाजुत्तरपद" (पा०सू०८।४।१२) इति णत्वं
त्येवेति बोद्ध्यम् ।

इकोचि । (पा०सू०७।१।७३) 'सुपि' इति वक्तव्ये 'विभ
इति चिन्त्यप्रयोजनम् । विभक्तौ किम् ? मधुन इदं माधवम् ।
वारे हे वारीति । अत एव 'इकोऽचि' इति सूत्रस्थम् "इह कि
त्रयो" इति 'एङ्ह्रस्वादिति' (पा०सू०६।१।६९) सूत्रस्थं 'हेत्रपु'
च भाष्यं सङ्गच्छते । वृध्द्यौत्वेति । वृद्ध्यादीनां क्रमेण 'गा
'हरौ' 'क्रोष्टा' 'हरये' इत्यवकाशः' नुमो 'वारिणी' इति ।

तृतीयादिषु । (पा०सू०७।१।७४) भाषितः पुमान् येन
ब्देनेत्यर्थे पीलुशब्दे ऽतिप्रसङ्गस्तस्माद्भाषितः पुमान् यस्मिन् प्र

---

मेव विशेषणविशेष्यभावापन्नं संसर्ग इत्युक्तं परैः । न केवलं सप्तम्य
स्थल एव विभक्त्यर्थस्य प्राधान्यं, किं तु प्रथमाद्यन्तेऽपीति सूचयन्नाह
*प्रथमाया अपीति* । ननु श्रीपं ज्ञानवदित्यनुपपन्नम् । श्रीपाणीत्य
विशेषसद्भावादत आह-*दीर्घान्तत्वप्रयुक्त इति* ।

*माधवमिति* । यद्यत्र नुम् स्यात्तदा टिलोपः स्यात् । अनित्य
वचनस्य पाक्षिकप्रवृत्तौ भाष्यसम्मतिमाह-*अत एवेति* । *पीलुश
ऽतिप्रसङ्ग इति* । अर्थभेदेऽपि शब्दैक्यमितिमतेनेदम् । न च येन श
पुमान् भाषित इत्यस्य वाचकतासम्बन्धेन पुमर्थविशिष्टस्य पुंवद्भाव
र्थो वाच्यः स च न सम्भवति पुमर्थविशिष्टस्य नपुंसकवृत्तित्वासम्भ
दिति वाच्यम् । असम्भवपरिहारायातद्गुणसंविज्ञानबहुव्रीहिसमासा
णेन पुमर्थोपलक्षितस्य पुंवद्भाव इत्यर्थो वाच्यस्तथा सत्यव्ययमतिप्र
इति भावः ।

*यस्मिन् प्रवृत्तिनिमित्त इति* । सत्सप्तम्याश्रयणेन यस्मिन्प्रवृत्ति
निमित्ते सतीत्यनेन यत्प्रवृत्तिनिमित्तप्रकारिका पुमर्थविशेष्यिका प्रती
र्भवति तत्प्रवृत्तिनिमित्तमन्यपदार्थ इति पर्यवसितम् । ततोऽर्थभा
समानप्रवृत्तिनिमित्तकत्वं लभ्यते । एवमपि यदि शब्दस्यार्थभेदे

त्तिनिमित्तरूपेऽर्थे इति बहुव्रीहिः । भाषणक्रियया स्वकरणतयाऽऽक्षि-प्तशब्दश्च क्लीबेन समानानुपूर्वीकः समानार्थश्च गृह्यते प्रत्यासत्तेः । ततोऽर्शआद्यच् । तत्फलितमाह–प्रवृत्तिनिमित्तैक्ये इति । 'इको-ऽचीति' 'नपुंसकस्य' इति चानुवर्त्तते । ते च तत्र षष्ठ्यन्ते अत्रार्थात्स-प्तम्यन्ते । इक इति किम् ? श्रीपेण । टादौ किम् ? अनादिनी । अ-यञ्च ह्रस्वनुमोरभावातिदेशः । क्लीबत्वविशिष्टार्थवाचकस्य शब्दस्य पुंस्त्वविशिष्टार्थवाचकरूपातिदेशे क्लीबत्वरूपार्थनिवृत्तेस्तत्प्रयुक्तसर्व-कार्याप्रवृत्तेरित्यन्यत्र विस्तरः ।

अस्थिदधि । (पा०सू० ७।१।७५) नकारादकार उच्चारणा-र्थः । अनङ उदात्तस्योच्चारणेन सिद्धावुदात्तग्रहणम् 'असति यत्र उदात्तादिशब्दैरनुपात्तो गुणोऽविवक्षित' इति ज्ञापनार्थम् । 'त्रिच-तुरोः' (पा०सू०७।२।८८) इति सूत्रे तिसृचतसृयत्र द्वन्द्वप्रयुक्तेऽन्तो-दात्ते कर्त्तव्ये आद्युदात्तनिपातनं विवक्षार्थम् । निपातनं नामान्या-दृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणम् । वधादेशेऽपि हन्त्यनुरूपे-ऽन्तोदात्ते ऽनुदात्ते वोच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थम् । तदु-

---

तदाऽतिप्रसङ्गः पीलुशब्दे तदवस्थ, इति विशेष्यार्थभेदाच्छब्दभेदः स्वी-कार्यस्तथा सति येन शब्देन यस्मिन् प्रवृत्तिनिमित्ते सति पुमान् भा-षितो भवति तत्प्रवृत्तिनिमित्तवत्त्वं तत्प्रवृत्तिनिमित्तस्यैकत्वे नपुंसकवृत्तेः सम्भवतीत्याशयेनाह—*भाषणक्रिययेति* । विनिगमनाविरहादाह—*समानानुपूर्वीक इत्यादि* । अत्र समानानुपूर्वीकत्वोपादानं प्रद्युशब्दे-ऽतिप्रसङ्गवारणाय । समानार्थ इत्यत्रार्थः प्रवृत्तिनिमित्तरूपः । अतिदे-श फलमाह—*अयञ्चेति* । *तत्प्रयुक्तेति* । क्लीबत्वविशिष्टार्थवृत्तित्व-प्रयुक्तेत्यर्थः । न चैवं "नब्विषयस्य" इतिविहितस्वरस्याप्यातिदेशापत्तिः, भिन्नकर्त्तृकत्वात ।

ननु यद्युदात्तादिशब्दैरनुपात्तस्याविवक्षा ज्ञाप्यते तदा 'चतस्रः पश्य' इत्यत्र "चतुरः शसि" इत्यस्याप्रवृत्तिसिद्ध्यर्थम् "चतसर्याद्युदात्तनिपा-तनं करिष्यते स निपातनस्वरः 'चतुरः शसि' इत्यस्य बाधको भविष्य-ति" इत्युक्तं भाष्ये तन्न सङ्गच्छेत प्रकृतेऽप्यविवक्षा स्यादत आह—*त्रि-चतुरोरितीति* । एवञ्चैतादृशे विषये विवक्षार्थमेवासति यत्न इत्युक्तम् । अन्यत्रापि तत्फलमाह-*वधादेशेपीति* । *अन्तोदात्तेऽनुदात्ते वोच्चार-णीय इति* । हन्तेर्धातुस्वरेणान्तोदात्तत्वात् । अनुनासिकलोपार्थमनु-

क्तम् 'असति यत्ने' इति। परमास्थिशब्दादावन्तोदात्ते उदात्तगुण-स्यापि स्थानित्वेनात्र तद्विवक्षायां न मानमिति भाष्ये स्पष्टम्। उदात्तत्वफलं 'दध्ना' इत्यादावल्लोपे उदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वम्, दधनीत्यादौ श्रवणञ्च। ज्ञापनफलन्तु तृन्तृजन्तानां भिन्नस्वरकान्तानां 'ऋदुशन' (पा०सू०७।१।९४) इत्यनेन तत्स्वरकानङ्सिद्धिरिति दिक्।

तदन्तेति। आङ्गत्वादिति भावः। अत्रापि नपुंसकस्येति सम्बद्ध्यते। तेन धाञः 'आदृगमहन' (पा०सू०३।२।१७१) इति कि-प्रत्यये दधिनेत्यादौ न। एतच्च गृह्यमाणस्यैव विशेषणम्। तेन 'अतिदध्ना ब्राह्मणेन' इत्यादि सिद्धम्। सुधियेति। शोभनज्ञानवत्त्वरूपैकप्रवृत्तिनिमित्तत्वात्पुंवत्। प्रधीशब्दे प्रकृष्टज्ञानवत्त्वमेकं तत्। मध्विवति। मकरन्द-मद्य-माक्षिकवाचिनः पुंनपुंसकयोः सत्त्वात्पुंवत्त्वम्। मृद्वीकाविकारवाचिनो नित्यनपुंसकस्य तु न। स च 'माद्वीकं मधु न द्वयोः' इत्यमरेणोक्तः। भाष्ये 'मधोस्तृप्ता' इत्यस्य लिङ्गव्यत्ययोदाहरणत्वन्तु 'माध्वीर्गावो भवन्तु नः' इति लिङ्गसिद्धक्षीरवाचिनपुंसकमधुशब्दाभिप्रायेणेति दिक्।

---

दात्तत्वप्रतिज्ञानादुपदेशेऽनुदात्तत्वाच्चेति भावः। नन्वेवम् "नञ्विषयस्य" इतिसूत्रेणास्थिशब्दस्याद्युदात्ततया तस्येकारस्यानुदात्ततया तदनुरूपेऽनुदात्ते उच्चारणीये उदात्तोच्चारणेनैव विवक्षासिद्धौ उदात्तशब्दोच्चारणं व्यर्थमित्यत आह-*परमास्थिशब्देति*। अत्र प्रथमादिशब्देन केवलास्थिशब्दस्य द्वितीयेनानुदात्तस्य सङ्ग्रहः। *उदात्तनिवृत्तिस्वरेण* अनुदात्तस्य च यत्रोदात्तलोप इति सूत्रविहितेन। लोपाभावे आह-*दधनीत्यादाविति*। *तत्स्वरकेति*। उदात्तस्वरकेत्यर्थः। *अत्रापि* अस्थिदधीतिसूत्रेऽपि। *एतच्च*। नपुंसकपदञ्च। *पुन्नपुंसकयोः सत्त्वादिति*।

मकरन्दस्य मद्यस्य माक्षिकस्य च वाचकः।
अर्द्धर्चादिगणे पाठात्पुन्नपुंसकयोर्मधु॥

इत्याभियुक्तोक्तेः। *नित्यनपुंसकेति*। पूर्वोक्तभाषितपुंस्कत्वाभावात्। ननु यदि मकरन्दादिवाचकस्योभयलिङ्गत्वन्तदा 'मधोस्तृप्ता' इत्यत्र विनापि व्यत्ययमुपपत्तौ लिङ्गव्यत्ययोदाहरणपरभाष्यविरोध इत्यत आह-*भाष्य इति*। *क्षीरवाचीति*। पुंसि प्रवृत्तौ यन्निमित्तमकारणं

स्नुर्वेति। "मांसपृत्स्नूनां पदादिषूपसंख्यानम्" इति वार्त्तिकेनेति भावः। पूर्वविप्रतिषेधेनेति। न च नित्यत्वादेव नुम्सिद्धः, किं पूर्वविप्रतिषेधेनेति वाच्यम्। तदन्ते नुमि कृते ऽपि अङ्गाधिकारे तदन्तविधेः सत्त्वेन 'यदागमा' इति न्यायेन नुम्विशिष्टस्य तद्ग्रहणेन ग्रहणात् सूत्रे षष्ठीनिर्देशाभावान्निर्दिश्यमानस्य नुमा व्यवधानमित्यस्याभावेन तृज्वद्भावप्राप्तेः सकृद्गतिन्यायान्न पुनस्तृज्वत्त्वम्। नन्वयं 'कृशक्रोष्टुने' इत्यस्यैव भाष्ये उदाहरणात् 'तृतीयादिष्वचि' इत्येतद्विषयक एव। अन्यथा प्रथमोपस्थितसर्वनामस्थानोदाहरणत्यागे बीजानापत्तिरिति चेन्न। उदाहरणस्य सङ्कोचकत्वे मानाभावात्। तदुक्तं 'न चोदाहरणमादरणीयम्' इति। उदाहृतातिरिक्तोदाहरणाभाव इत्येवम्परतया नादरणीयमिति तदर्थ इत्याहुः।

सुल्वेति। अत्र शोभनलवनकर्तृत्वं प्रवृत्तिनिमित्तम्। पुंवत्त्वे ह्रस्वाभावेनाघिसंज्ञाभावो न। नुमभावाच्च यण्। धातृ इति। अनङ् न। नलुपेति निषेधात्। धारणादिकर्त्तृत्वं चास्यैकं प्रवृत्तिनिमित्तम्। हेधातरिति। 'ह्रस्वस्य गुणः' (पा०सू०७।३।१०८) इति गुणः।

एच इक् (पा०सू०१।१।४८) आदेश इति कर्मणि घञ्। ह्रस्वपदेन कर्मधारयः। निर्द्धारणे सप्तमी, सौत्रमेकवचनं, तदाह—आ

---

त्वादि तस्य नपुंसकप्रवृत्तौ निमित्तत्वन्नास्तीति भावः।

*नित्यत्वादेवेति*। तृज्वद्भावे कृतेऽकृते च नुमः प्राप्तेर्नुम्नित्यः। तृज्वद्भावस्यापि नित्यतयोभयोः समत्वात्। तदेवोपपादयति-*तदन्ते नुमि कृतेऽपीति*। *नुम्विशिष्टस्येति*। अङ्गस्येति शेषः। *तद्ग्रहणेन* क्रोष्टृग्रहणेन। ननु निर्दिश्यमानस्य विभक्तिपरत्वाभावात्कथंप्राप्तिस्तृज्वद्भावस्येत्यत आह—*सूत्रे षष्ठीनिर्देशाभावादिति*। निर्दिश्यमानपरिभाषायाः "षष्ठी स्थानेयोगा" इतिसूत्रसिद्धत्वात् प्रकृते तु "तृज्वत्क्रोष्टुः" इतिप्रथमानिर्देशस्य सत्त्वेन परिभाषाया अयमविषय इति भाव।

नन्वेवं नुमागमोत्तरं पुनस्तृज्वत्त्वं प्राप्नोतीत्यत आह—*सकृद्गतीति*। सकृद्गतिन्यायानङ्गीकारे पूर्वविप्रतिषेधारम्भो व्यर्थ एव स्यात्। *अयम्*। पूर्वविप्रतिषेधः। *संकोचकत्वे*। विभाषा तृतीयादिष्वचीतिसूत्रमात्रविषयकत्वे।

दिश्येत्यादि । मद्धये इत्यपपाठः । तद्योगे षष्ठ्या एचौचित्यात् ।
एचां पूर्वभागोऽवर्णसदृशः, उत्तरस्तु इवर्णोवर्णसदृशः। तत्रोभयान्तार्थ
सहूस्वाभावात्पर्यायेणावर्णादेः प्राप्तावदणोभावायेदं, तदाह-इगेवेति
यथाप्राप्तमेव नियम्यत इति न यथासंख्यम् । ह्रस्व एचतु नास्त्येव
'एओङ्' इत्यादौ दीर्घनिर्देशादिति स्पष्टं भाष्ये ।

न चार्द्धमात्रावर्णस्याध्यर्द्धमात्रेवर्णोवर्णयोरिति उत्तरभूयस्त्वा
त्तत्सदृश इगेव भविष्यतीति नार्थः सूत्रेणेति वाच्यम् । अध्यर्द्धमा
त्रावर्णस्यार्द्धमात्रेवर्णोवर्णयोरित्यस्यापि पक्षस्य 'प्लुतावैचः' (पा०सू०
८।२।१०६) इति सूत्रे विनिगमनाविरहाश्रयेण भाष्ये उक्ततया सम
विभागपक्षस्यैव भाष्यकृत्संमतत्वादित्याहुः ।

---

निर्धारणस्यानेकविषये सम्भवाद्बहुवचनापत्तेराह—*सौत्रमेवकव
नमिति* । समप्रविभागपक्षाभिप्रायेणाह—*एचां पूर्वभाग इति* । प्रत्या
हारनिर्देशे जातिपक्षस्यैव सिद्धान्तितत्वात् यथासंख्यं प्राप्नोतीत्यत आह
*यथा प्राप्तमेवेति* । ननु 'सुजाते ए अश्वसूनृते' इत्यत्रैकमात्रिकस्यै
रस्य प्रसिद्धत्वात्स एव ह्रस्वप्राप्तावेकारस्य स्यादत आह—*ह्रस्व ए
तु नास्त्येवेति* । पूर्वोक्तोदाहरणे प्रसिद्धस्तु सात्यमुग्रिराणायनीयैर्वि
शिष्य विहितः स तच्छाखामात्रविषय इति भावः । "ऐचोश्चोत्तरभूय
स्त्वात्" इति प्रत्याख्यानवार्त्तिकानुसारेणाशङ्कते—*न चेति* । *प्लुता
वैच इदुताविति सूत्र इति* । तत्र हि 'ऐ३तिकायन इत्यत्र मात्राऽवर्ण
मात्रा इवर्णोवर्णयोरिति तत्रोभयोः शास्त्रान्तरेण प्लुतविधाने उभयोर्वि
वृद्धिः प्राप्नोति तद्व्यावृत्त्यर्थमिदुतोः प्लुतवचनम्' इतिरीत्या प्रयोजन
दावुक्तम् । अयं च दोषो 'यथा गर्भो विवर्द्धमानः सर्वाङ्गपरिपूर्णो विवर्द्ध
तथेहाप्यैचः शास्त्रान्तरेण प्लुत उच्यमान उभयावयवविवृद्धिरूपः प्राप्नो
ति" इति मत्वा कृतः । ततश्च "अवयवस्य प्लुते सत्येक एवायं वर्णश्च
मात्रः स्यात् । ततः सिद्धं त्विदुतोर्दीर्घवचनात् । सिद्धमेतत्कथमिदुतौ
दीर्घो भवतीति वक्तव्यम् । तदेतत्कथंकृत्वा सिद्धंभवति । यदि समः
विभागः । मात्राऽवर्णस्य मात्रा इवर्णोवर्णयोः" । एतेन भाष्यकृता "ऐ
चोश्चोत्तरभूयस्त्वात्" इति यद् वार्तिककृतोक्तं तन्न युक्तं, पूर्वापरविभा
गादिस्याशयेन पर्यनुयोगः कृतः । तदेवोपपादयति "अथ हि अर्द्धमात्रा
अवर्णस्य अध्यर्द्धमात्रा इवर्णोवर्णयोः अर्द्धतृतीयमात्रः प्राप्नोति । अथ
अध्यर्द्धमात्राऽवर्णस्य अर्द्धमात्रा इवर्णोवर्णयोरर्द्धचतुर्थमात्रः प्राप्नोति इति
सूत्रञ्च भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं तत्र यथेष्टप्रसङ्ग इति

प्रणीनामिति । न च "रायो हलि" (पा०सू०७।२।८५) इति विषयसप्तमीति प्रागेवाऽऽत्वम् । निर्दिष्टपरिभाषाबाधे मानाभावात् । आत्वे कृते नुडनापत्त्या हलादिविषयाभावेन पूर्वमात्वाप्रवृत्तेश्च ।

केचित्तु नुटो निमित्तस्य सन्निपातस्य दीर्घेण विनाशावश्यकत्वेन तद्विषये सन्निपातपरिभाषाया विषय एव न । 'नामि' इति दीर्घस्तु 'सुपि च' इति दीर्घं नित्यत्वाद् बाधते इति माधवाशयमाहुः । 'ग्रामणि कुलम्' इत्यादौ नपुंसकह्रस्वत्वे 'ह्रस्वस्य पिति' (पा०सू० ६।१।७१) इति तुग्न । समुदितप्रातिपदिकापेक्षह्रस्वस्य बहिरङ्गत्वेन

---

तत्र सौर्यभगवतोक्तम् । अनिष्टिज्ञो हि वाडवः पठति । इष्यत एव चतुर्मात्रः प्लुतः" । अत्र भाष्ये पूर्वोत्तरपक्षयोर्विरुद्धयोः कथनेन विषमविभागो विनिगमकाभावान्नयुक्तः, किन्तु समप्रविभाग एवेति दृढीकृतम् । *सौर्यभगवतेति* । सौर्यन्नाम नगरं तत्रत्येनाचार्येणैतदुक्तम् । किम् ? 'वाडवः पठतीति । इष्यत एवेति' । इदञ्चतुर्मात्रिकत्वं समप्रविभागपक्ष एवोपपद्यते इति बोध्यम् ।

*प्रागेवात्वमिति* । नह्येषाशङ्का प्रणीनामितिरूपसाधनाभिप्रायेण, किन्तु नुड्घटितं रूपमसङ्गतमित्यभिप्रायेण । *मानाभावादिति* । एवञ्च पूर्वमात्वाप्रवृत्तौ नुटि सति सन्निपातपरिभाषया पुनरात्वप्रतिबन्धे दीर्घो युक्त एवेति । विषयसप्तमीत्वं प्रकृते वक्तुमप्यशक्यमित्याह-*आत्वे कृते इति* । *निमित्तस्य सन्निपातस्य* । ह्रस्वसन्निपातस्य । *तद्विषये* । नुड्विषये *सन्निपातपरिभाषाविषय एव नेति* । परिभाषाघटकस्य सन्निपातलक्षणविधिपदस्य नुड्भिन्नपरत्वादिति तद्भावः । अत्र विषयशब्दो भावप्रधाननिर्देशेन विषयत्वपरः । नन्वेवमदन्ते षष्ठीबहुवचने परे दीर्घसाधनाय "नामि" इतिसूत्रस्य प्रवृत्तिकल्पनमसङ्गतम् "सुपि च" इत्येव तस्य सिद्धत्वादित्यत आह-*नामीति दीर्घस्त्विति* । *माधवाशयमाहुरिति* । अत्रारुचिबीजन्तु "कष्टाय" इतिनिर्देशेनानित्यायाः परिभाषाया दीर्घे कर्त्तव्येऽप्रवृत्तिकल्पनेऽपि "रायो हलि" इतिसूत्रविहिताकारे कर्त्तव्येऽप्रवृत्तौ पूर्वोक्तार्थकल्पनायाञ्च साधकाभाव इति । नपुंसकविशेषे प्रसक्तातिप्रसङ्गं वारयति-*ग्रामणीति* । *समुदितप्रातिपदिकेति* । सम्प्रति प्रातिपदिकसंज्ञा कृदन्तस्येति ह्रस्वत्वं बहिरङ्गम् । तुक्तु ह्रस्वक्विपावेव निमित्तत्वेनापेक्षत इत्यन्तरङ्ग इति भावः । न च पित्कृतः प्रत्ययत्वात्तेन यस्माद्विहितस्तदादेरित्यस्योपस्थितौ सौत्रह्रस्वग्रहणस्य तद्विशेषणतया पित्कृद्यस्माद्विधीयते तदादेर्ह्रस्वान्तस्य पिति कृति तुगि-

वर्णमात्राश्रयेऽन्तरङ्गे तुकि असिद्धत्वात्। ये तु 'षत्वतुकोरसिद्धः' इति वचनात् 'न लोपः' (पा०सू०८।२।२) इति सूत्रे कृति तुग्ग्रहणात् 'ह्रस्वस्य पिति' इति सूत्रे ऽन्तरङ्गपरिभाषाया अप्रवृत्तिं वदन्ति, तेषामुप-जीव्यविरोधान्न तुक्। अजन्तत्वमुपजीव्य ह्रस्वप्रवृत्तेः। न चैवं स-न्निपातपरिभाषा व्यर्था, तस्या अप्युपजीव्यविरोधमूलकत्वात्। किं च तस्या अपि स एवार्थः। अत एव सन्निपातपरिभाषादोषनिरूप-णावसरे 'वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात्' इत्युक्तम्। न च 'प्रत्ययः सन्निपातलक्षणो न, अङ्गसञ्ज्ञा तर्ह्यनिमित्तं स्यात्' इत्यग्रिमभाष्यविरोध इति वाच्यम्। तस्यैकदेश्युक्तित्वात्। अ-

---

त्यर्थे तुगागमोऽपि समुदायापेक्ष इति वाच्यम्, ङमो ह्रस्वादचीति सूत्रभाष्ये सन्नि-पातपरिभाषयाः प्रयोजननिरूपणावसरे 'ह्रस्वत्वे तुग्विधेर्ग्रामणि कुलम्' इत्युक्तम्। अत्र ह्यौत्तरपदिके ह्रस्वत्वे कृते यदि ह्रस्वस्य तुक् स्यात्तदोत्त-रपदसन्निपातविघातः स्पष्ट एव। व्याख्यातञ्चोपाध्यायैः 'यदा वर्णमात्र-तुगागमोऽवयवावयवश्च समुदायावयवो न भवति तदेदं प्रयोजनमिति' तद्भाष्यप्रामाण्येन यथात्र तुकोऽन्तरङ्गत्वं तथैव कल्पनमुचितमिति प्रकृते पित्कृत्प्रत्ययेनाक्षिप्तस्यापि तदाद्यंशस्य विशेषणत्वमेव, कार्यित्वन्तु वर्ण-मात्रस्येत्याशयात्।

वस्तुतोऽत्रान्तरङ्गपरिभाषा न प्रवर्त्तते ज्ञापकादित्याशयेनाह-*ये त्विति*। *स एवार्थ इति*। उभयोर्भेदमभिप्रत्येदम्। वस्तुतस्तूभयो-रैक्यमेवेत्याह-*किञ्च तस्या अपीति*। *अत एव*। उभयोरप्यैक्या-देव। *अनिमित्तं स्यादिति*। दाक्षिः प्लाक्षिः इत्यत्र यथा। यद्युपजी-व्यविरोधस्यान्याय्यत्वमिति परिभाषान्तरं स्यात्तदाऽनित्यत्वेन सन्निपात-परिभाषाया अप्रवृत्तिं स्वीकृत्य दोषाभावे साधितेऽपि द्वितीयया वर्णवि-चालो न स्यादिति दोषस्तदवस्थ एव स्यात्। तत्र शङ्कते—*न चेति*। *प्रत्ययः*। इञ्प्रत्ययः। *सन्निपातलक्षणो न*। अकारान्तप्रकृतेर्वि-धीयमानः प्रत्ययो न प्रकृतिप्रत्ययसन्निपातलक्षणः। *अङ्गसंज्ञा तर्हीति*। अकारान्तप्रकृतीञ्प्रत्ययसन्निपातनिमित्ताङ्गसंज्ञाऽल्लोपे निमित्तन्न स्यादि-त्यग्रिमभाष्यतात्पर्यार्थः। यद्युपजीव्यविरोधस्यान्याय्यत्वमितिपरिभाषैकै-वाक्यतापन्ना सन्निपातपरिभाषा तदा यत्रोपजीव्यविरोधप्रसङ्गस्तत्रैव सन्निपातपरिभाषाप्रवृत्तिर्वाच्या। अङ्गसंज्ञाविषये चोपजीव्यविरोधाभावे तत्र सन्निपातपरिभाषासंचारे भाष्यविरोध इति भावः। *तस्यैकदेशि*

न्यथा 'शैवः' इत्यादावपि सा लोपनिमित्तं न स्यादित्यन्यत्र निरूपितम्(१)। ग्रामणिपुत्रो ग्रामणिकुलमित्यादौ पूर्वोत्तरपदनिमित्ते ह्रस्वे बहिरङ्गपरिभाषयापि (तुग्वारणं) सिद्ध्यतीत्याशयेन 'ङमो ह्रस्वादचि ङमुण्नित्यम्'... 'क्रन्मेजन्तः'(पा०सू०१।१।३९) इति सूत्रे 'ह्रस्वस्य पिति'(पा०सू०६।१।७१) इत्यादौ तदुपन्यास एकदेशिन इति न तद्विरोध इत्यलम् ॥

इत्यजन्ता नपुंसकलिङ्गाः ।



हो ढः (पा०सू०८।२।३१)। 'झलो' झलि (पा०सू०८।२।२६) इत्यतो झलीति, 'पदस्य' (पा०सू०८।२।१६) इति 'स्कोः' (पा०सू०८।२।२९) इत्यतो ऽन्त इत्यनुवर्त्तते । (२)झलि परे पूर्वस्य पदान्ते विद्यमानस्य हस्येत्यर्थः । डस्तु न विहितः, (झषन्तत्वाभावेन भष्भावाप्राप्त्या) धुडित्याद्यसिद्धेः ।

ददार्धा (पा०सू०८।२।३२) दादिग्रहणमौपदेशिकदादित्वव-

---

बहिरङ्गसंज्ञा तर्हीत्यस्य । *अन्यथा* । एकदेश्युक्तित्वानङ्गीकारे । *सा* । बहिरङ्गसंज्ञा । नन्वेवं 'कृन्मजन्त'इतिसूत्रस्थभाष्ये तुग्विषये बहिरङ्गपरिभाषोपन्यासविरोध इत्यत आह-*ग्रामणिपुत्र इति*। अत्र षष्ठीतत्पुरुषः । *पूर्वोत्तरपदनिमित्त इति* । एतेन ह्रस्वत्वस्य बहिरङ्गत्वं सूचितम् । *एकदेशिन इति* । तत्त्वञ्च पूर्वोक्तज्ञापकबलेन कल्प्यते ॥

इत्यजन्ता नपुंसकलिङ्गाः ॥



झलीति यथौपश्लेषिकाधारे सप्तमी पदान्त इत्यपि तथा स्यादितिभ्रमवारणायाह-*पदान्ते विद्यमानस्येति*। अत्रान्तशब्दस्य चरमावयववाचकतया हस्य तद्वृत्तित्वं व्यपदेशिवद्भावेन बोध्यम् । पदचरमावयवस्य हस्येति तु फलितम् । प्रक्रियालाघवमात्रेण कृतां कस्य चिच्छङ्कां निरस्यति-*डस्त्विति*। *असिद्धेरिति* । झषन्तत्वाभावात् ।

---

(१) परिभाषेन्दुशेखरे सन्निपातपरिभाषायाम् निरूपितम् ।

(२) त्रयाणामनुवृत्तौ फलितवाक्यार्थं दर्शयति-झलीति । पदस्य चरमावयवस्य हस्य इत्यर्थ इति केचित् वाक्यार्थं खण्डयन्, स्वमते लापयति—विद्यमानस्येति । वस्तुतस्तु यथाश्रुतसप्तमीव्याख्यानेऽपि विद्यमानपदाध्याहारः । अन्ते अन्तस्य वर्तमानत्वासंभवेन व्यपदेशिवद्भावाश्रयणम् , अन्तशब्दस्य तदधिकरणदेशपरत्वाश्रयणे तु तदवस्थो वाच्यार्थपरित्यागः इत्यपि ध्येयम् ।

लक्षकं व्याख्यानादित्यभिप्रेत्य फलितार्थमाह-उपदेशे इति एतच्च प्रकृतसूत्रे भाष्ये ध्वनितम्। तत्र हि-घत्वस्यासिद्धत्वाद्ढत्वं प्राप्नोतीत्याशङ्क्यापवादत्वेन समाधाय "अथवा एवं वक्ष्यामि होऽदादेरिति। ततो धातोरिति। दादेरिति वर्त्तते नेति निवृत्तम्" इत्युक्तम्। द्रुहेस्तु "वा द्रुहः" (पा०सू०८।२।३३) इत्यनेन ढत्वस्यापि (१)विधानात्तत्र न दोष इति तदाशयः। तत्र धातोरिति सूत्रे भाष्यकृत्कृतदादेरित्यनुवृत्तेः फलान्तराभावेन तदुपदेशवद्दादित्वलक्षक सामर्थ्यात्। अर्थाधिकारानुरोधाच्च पूर्वत्र निषेधसमर्पकेऽप्येवम्। अत एव नामधातुविषये 'दामलिड्' इत्यादौ ढत्वघत्वाभावौ सिद्धौ। एवञ्च तदेकवाक्यतया ऽपवादत्वपक्षे ऽपि दादिपदस्योपदेशकालिकदादित्वलक्षकतोचिता। तदनन्तरं 'दादेरिति वर्त्तते' इति भाष्य

*व्याख्यानादिति*। एतच्चाग्रे स्पष्टम्। *एतच्च*। दादिपदस्यौपदेशिकदादित्ववति वर्त्तनञ्च। ध्वननं व्युत्पादयति-*तत्र हीति*। *दादेरितीति*। एवञ्च धुगित्यत्र ढत्वस्याप्राप्तिरेव। *नेति निवृत्तमिति*। समासघटकं नञ्पदमत्र विवक्षितम्। अत्र भाष्ये नेतिनिवृत्तमित्युक्त्वतीति तेन निषेधार्थकोऽशब्दो नास्तीति लभ्यते। ननु यद्यदादेरित्युच्यते तदा "वा द्रुह" इत्यनेन घत्वाभावे ढत्वं न स्यादत आह-*द्रुहेस्तिति*। तत्र समुच्चयार्थो वाशब्द इति भावः। *फलान्तरेति*। लक्षणायोज्यशाब्दबोधफलितातिरिक्तफलान्तरेत्यर्थः। दादिपदाभावेऽपि धातुमान्ये प्राप्तघत्वस्यादादिधातौ विधीयमानढत्वेन बाधे परिशेषाद्दादेरेव घ भविष्यतीति भावः। *सामर्थ्यादिति*। अनुवृत्तिसामर्थ्यादित्यर्थः। *अत एव*। दादिपदस्यौपदेशिकदादित्ववल्लक्षकत्वादेव। प्रत्यक्षमाख्यानमुपदेश इति लक्षणलक्षितोपदेशविषतयताविशिष्टदादित्ववद्धेदस्य 'दामलिड्' इत्यत्र सत्त्वेन ढत्वस्य घत्वाभावस्य च सिद्धिरित्यर्थः। *तदेकवाक्यतया*। उत्तरपक्षैकवाक्यतया। अत्रैकवाक्यत्वं समानफलकत्वमेव। चोद्देशोपदेशयोः सङ्करेण व्यवहारो लोक दृश्यत इति वाच्यम्, उभयोः दादिपदानुवृत्तिसामर्थ्येनात्र तयोर्भेदाङ्गीकारात्। एवञ्चोभयोः पक्षयोर्न विसंवादस्तथैव व्याख्यानमुचितम्। न चैवमेव अधोग् इत्यत्रादादित्वकृते दादित्वाभावेऽप्युपदेशे दादित्वस्य सत्वात् घत्वं सिद्धमेवेत्युक्तभाष्यासङ्गतिरत आह-*तदनन्तरमिति*। अजानत इत्यस्य शङ्कायामित

(१) अत्रापिशब्द एतच्छास्त्रप्राप्तघस्य समुच्चयार्थः। मुग्धार्थशेतु उक्तन्यायेन ढस्य पूर्वेण घस्यैवविधानमिति बोध्यम्।

स्योक्ताशयमजानतो 'घो दादेरित्युच्यते 'कथमधोग्' इति शङ्कायाम् "एकाचः" (पा०सू०८।२।३७) इति सूत्रार्थमपि प्रसङ्गान्निर्णेतुं 'धातोरवयवो यो दादिः' इत्यर्थमुक्त्वा गर्दभयतेरप्रत्यये 'गर्द्धब्' इत्यादौ भष्भावायोत्तरसूत्रे आवश्यकं वैयधिकरण्यमुक्त्वा 'दोग्धा' इति तु व्यपदेशिवद्भावात्सिद्धमिति भाष्ये उक्तम् । तत्रोत्तरार्थं वैयधिकरण्यमावश्यकमिति वदता तस्येहानावश्यकत्वं सूचितं, तेन च दादेरित्यस्योक्तार्थकत्वं सूचितमित्यन्यत्र विस्तरः ।

'धुग्' इत्यादिसिद्धये गो नोक्तः । 'औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहणम्' इति परिभाषा तु तत्र तत्रोपदेशग्रहणं कुर्वत्सूत्रविरोधेन "तरप्तमपौ घः"(पा०सू०१।१।२२)"अत्वसन्तस्य"(पा०सू०६।४।१४) इत्यादिसूत्रस्थभाष्यविरोधेन चाप्रामाणिकी । तत्र हि भाष्ये इदमुक्तम् "इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते यत्रास्यैतद्रूपमिति, रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगं, तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते कोऽसौ उपदेशो नाम" इति । अनुबन्धप्रस्तावात्सानुबन्धकेष्वित्युक्तम् । न्यायस्यान्यत्रापि तुल्यत्वादिति बोद्धव्यम् ।

एकाचो (पा०सू०८।२।३७) 'झष् झषन्तस्य' इति वक्तुं युक्तम्(१) । भष्भावशक्तिकल्पनेन लाघवात् । निवृत्तमिति । 'धुग्भ्याम्' इत्यादौ पदान्तत्वादेव सिद्धिरिति भावः । सामर्थ्या-

---

न्वयः । *एकाच इतिसूत्रार्थमिति* । "दादेः" इतिसूत्रे वैयधिकरण्येनान्वयस्य दृष्टत्वात्तद्वदेवैकाच इति सूत्रेऽपि भविष्यतीति भावः । *इहानावश्यकत्वमिति* । दादिपदलक्षणायाः सूचितत्वात् ।

यत्तु सीरदेवादयः । "औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहणम्" इतिपरिभाषया प्रकृते उपदेशे दादेरित्यर्थलाभ इत्याहुस्तेषां मतन्दूषयति—*औपदेशिकेत्यादि* ।

*इति वक्तुंयुक्तमिति* । यथासख्यन्तु न । अस्वरितत्वात् । ननु

---

(१) अत्र यथासंख्यास्वीकारे 'दधधारणे' इत्यस्य यङ्लुकि 'दाधत्ति' इत्यादावेव स्यात्, नतु 'अधोक्' 'गर्धप्' इत्यादौ । यत्रैकाच इति निषेधस्य तु नास्मिन् सूत्रे प्रवृत्तिः 'अजर्धाः' इतिभाष्योदाहरणात् ।

दिति। स्ध्वोर्ग्रहणस्येतरव्यावृत्त्यर्थत्वे तु तदनुवृत्तौ फलाभाव इति भावः। धातोः किम्? तद्वाडित्यादि।

ननु द्रुहेर्घत्वे धात्ववयवमेकाज्रूपं द्रु इति, उषिति च तन्नाश्च न झषन्तोऽन्त्ये न बश् दुघिति तु नावयव इति कथं भष्भावः? अत आह—व्यपदेशिवदिति। विशिष्टोऽपदेशो मुख्यव्यवहारः सोऽस्यास्तीति व्यपदेशी तेन तुल्यमित्यर्थः। इदम् "आद्यन्तवत्" (पा०सू०१।१।२१) सूत्रे भाष्ये स्पष्टम्। एकाचः किम्? दामलिट्। बशः किम्? क्रोत्स्यति। झषन्तस्य किम्? दास्यति। धुगिति। 'अत्वसन्तस्य' (पा०सू०६।४।१४) इति सूत्रेऽधातोरिति निषेधेन कारकं प्रत्ययप्रधानभूतक्रियावाचकस्यापि धातुत्वादिति भावः। नच 'धातोरुच्यमानं कार्यं तत्प्रत्यये भवति' इति परिभाषया कथमत्र घत्वादि? तत्प्रत्ययो धातुसंशब्दनेन विहितः प्रत्यय इति वाच्यम्। अस्य पदान्तनिमित्तत्वेन प्रत्ययनिमित्तत्वाभावात्। अत एवाप्रशानिति चरितार्थम्। अन्यथा 'णो नो धातोः' इत्यत्रापि तत्प्रवृत्तौ नत्वानापत्त्या तदसङ्गतिः स्पष्टैव।

---

स्ध्वोर्ग्रहणमितरझल्व्यावृत्त्यर्थं भविष्यतीत्यत आह—*स्ध्वोर्ग्रहणस्येति*। यथा दधधातोर्यङ्लुकि ह्यौ दादद्धि अत्र हेर्ध्यादेशे कृते भष्भावप्राप्नोति तद्व्यावृत्त्यर्थम्। *तद्वाडित्यादीति*। तद्वहतीति तद्वाट्। नधातुत्वशरीरघटकक्रियायाः प्रधानीभूतायाः ग्रहणस्योचितत्वेन कथमधातुत्वमत आह—*अत्वसन्तस्येतीति*। *अत्र*। धुगित्यादौ। *प्रत्ययनिमित्तत्वाभावादिति*। "दाण्डिनायन" इतिसूत्रेण भ्रौणहत्येत्यत्र तत्वनिपातनेन ह्येषा परिभाषा ज्ञापिता। एवञ्च ज्ञापकस्य प्रत्ययनिमित्तकनस्त इत्येव सिद्धे तत्वनिपातनं व्यर्थमित्येवमेवोपपादनार्हतया प्रत्ययनिमित्तककार्यस्थल एव प्रवृत्तिरिति भावः।

एतदंशे ज्ञापकमप्याह—*अत एवेति*। तस्याः परिभाषायाः प्रत्ययनिमित्तककार्यस्थले एव प्रवृत्तिस्वीकारादेव। नच पदसंज्ञायाः प्रत्ययनिमित्तकतया प्रत्ययनिमित्तकत्वं भष्भावस्यास्त्येवेति वाच्यम्। ज्ञापकसाजात्यात् साक्षात्प्रत्ययनिमित्तककार्यस्थल एव प्रवृत्तेः। अत एव 'प्रत्यङ्भ्याम्' इत्यत्र कुत्वम्। 'सुधियौ' इत्यादावियङ् 'प्रध्यौ' इत्यादौ यण् "न भूसुधियोः" इति निषेधेन परिभाषाया अनित्यता साधनीया। "धातोरुच्यमानम्" इत्यस्य धातुविशेषानुपूर्वीपुरस्कारेणोक्तं न तु

वा द्रुह (पा०सू०८।२।३३) द्रुहेः प्राप्तेरन्येषाममाप्तेरुभयत्र विभाषेयम्।

इग्यणः (पा०सू०१।१।४५) यणः स्थान इति (१)। नन्वेवम् 'अदुहितराम्' इत्यादौ लस्योत्तमैकवचने इटि तस्य संप्रसारणत्वात् 'हलः' (पा०सू०६।४।२) इति दीर्घापत्तिः। न च यथासंख्यसम्बन्धाददोषः 'ऋलृक्सूत्रे' 'लृकारोपदेशः किमर्थः' इत्यादिभाष्यविरोधादिति चेन्न। विधिप्रदेशेषु 'यण इग्' इत्येव सिद्धे सञ्ज्ञाविधानसामर्थ्येन तद्भावितपक्षाश्रयणान्न दोषः(२)। वाक्यस्य सञ्ज्ञेति पक्षे भाष्ये 'संप्रसारणस्य' इत्यादौ संप्रसारणजातस्य संप्रसारणग्रहणेन ग्रहणम्'' इत्युक्ततया तदेकवाक्यतयाऽत्र पक्षे तद्भावितस्य संज्ञेति भाष्ये सूचितम्। तेन 'द्युभ्याम्' इत्यादावपि न दीर्घप्राप्तिः। अत एव अक्षद्यूश्चासावरुणश्च 'अक्षद्यरुण' इत्यादौ पूर्वरूपं न, समानाङ्गग्रहणं तु

संशब्दनेनोच्यमानं तदपि। अत एव 'अचि श्नुधातु' 'एरनेकाच' इत्येतद्विषये न प्रवृत्तिरिति। तन्न। एवं सति 'प्रसृड्भिः' इत्यत्रानुदात्तस्य चर्दुपधस्यान्यतरस्यामिति अमागमापत्तेर्भाष्योक्तायास्तदवस्थत्वापत्तेः।

*नन्वेवमिति*। यणः स्थाने प्रयुज्यमान इति व्याख्याने। *भाष्यविरोधादिति*। यदि 'अदुहितराम्' इत्यत्र यथासंख्येन सम्बन्धमाश्रित्य दोषो वार्यते तदा लृकारोपदेशाभावे यथासंख्यस्य वक्तुमशक्यता लृकारोपदेशस्य प्रयोजनशङ्कासमाधानयोर्निर्दलतया तद्विरोधापत्तेरित्यर्थः। *तद्भावितेति*। तन्त्रन्यायेनेत्यादिः। *वाक्यस्य संज्ञेतिपक्ष इति*। वर्णसंज्ञापक्षे प्रसक्तान्योन्याश्रयपरिहाराय 'यणः स्थाने इग्भवति' इत्येवंरूपवाक्यस्य संज्ञापक्षे इत्यर्थः। *इत्युक्ततयेति*। अनुवादप्रदेशे वाक्यस्य कार्यासम्भवेन लक्षणाया आवश्यकत्वात् *द्युभ्यामित्यादावपीति*। एतेन प्रकृते यथासंख्यसम्बन्धाश्रयणेऽनेकलक्ष्यासिद्धिः सूचिता। *अत एव* सम्प्रसारणजातस्यानुवादप्रदेशे ग्रहणादेव। ननु सम्प्रसारणपूर्वत्वे

(१) यथाश्रुताऽतद्भावितपक्षाश्रयणमादाय शंकते-नन्विति।

(२) तत्त्वंच-संप्रसारणशब्दपूर्वकयणः स्थाने विधीयमानेक्त्वं यथा 'वसोः संप्रसारणम्' इति सूत्रविहितोकारे विद्यते नथा 'दिवउत्' इत्यादि सूत्रविहितोकारे न। एवं च तद्भाविताऽतद्भावितयोस्तद्भावितस्यैव ग्रहणमिति न दोष इति भावः। नन्वतद्भावितस्य ग्रहणं किमर्थं न, तन्न्यायेन भावितस्यैव ग्रहणं कथं कार्यमित्यत्र विनिगमकं दर्शयितुमाह-वाक्यस्येति।

तद्भावितपक्षे अन्योन्याश्रयस्य खण्डशः शक्तिस्वीकारेण वारणप्रकारस्तु गुरुचरणकृत टिप्पण्यां द्रष्टव्यः।

भाष्ये प्रत्याख्यातम् । तथा च भाष्यं—"शकन्ध्वर्थम्" इत्यादौ पूर्वरूपा-भावाय समानाङ्गग्रहणं कार्यम्। न कार्यम्। असंप्रसारणत्वात्, अन्योऽयं संप्रसारणासंप्रसारणयोः स्थाने एक आदिश्यते। यदि नेदं संप्रसारणं 'हल' इति दीर्घत्वं न प्राप्नोति। वचनप्रामाण्याद्भविष्यति" इति "नसंप्र-सारणे" (पा०सू०६।१।३७) इति निषेधोऽपि वचनप्रामाण्यात्पूर्व-रूपोत्तरम् । नच यु उ अन् अस् इति स्थितेऽन्तरङ्गत्वाद्दीर्घे पूर्वरूपं न स्यादिति वाच्यम् , अन्तरङ्गपरिभाषाया अनित्यत्वेनेहाप्रवृत्तेः। न चैवं तत्र सवर्णदीर्घोत्तरं 'न संप्रसारण' इति निषेधो न स्यादिति वाच्यम् । "अचः परस्मिन्" (पा०सू०१।१।५७) इति स्थानिवत्त्वा-दिति दिक् ।

वाह ऊठ् (पा०सू०६।४।१३२) 'भस्य' (पा०सू०६।४।१२९) इत्यधिकारः "वसोः संप्रसारणम्" (पा०सू०६।४।१३१) इत्यतः सं-

---

समानाङ्गग्रहणमितिवार्त्तिकेनाक्षद्युरुण इत्यत्र न दोष इत्यत आह-*स-मानाङ्गग्रहणन्त्विति* । *एक आदिश्यत इति* । सम्प्रसारणञ्चेत्यत्र नेत्यादिः । स्थानिवद्भावेन तु न सम्प्रसारणत्वमल्विधित्वात् । *वचन-प्रामाण्यादिति* । "हल"इति सूत्रारम्भसामर्थ्यादेतस्मिन्कर्तव्येऽनल्विधा-विति निषेधस्याप्रवृत्तिः कल्प्यते इति भावः । तुल्यन्यायादाह-*न सम्प्र-सारण इति* । *अन्तरङ्गत्वादिति* । पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्ग-त्वाश्रयत्वादित्यर्थः । *अनित्यत्वेनेति* । नाजानन्तर्यपरिभाषाज्ञाप-स्यानित्यत्व एव ज्ञापकत्वादित्यर्थः । *इहाप्रवृत्तेः* । एवञ्च परत्वात्पूर्व-रूपे यकारस्य 'न सम्प्रसारण' इत्यनेन निषेधः । सवर्णदीर्घस्य नित्यत्वं तु शब्दान्तरप्राप्त्या परिहरणीयम् । *न चैवमिति* । पूर्वरूपोत्तरं सवर्णदीर्घे पूर्वरूपनिष्पन्ने स्थानिवद्भावेऽपि तदादेशो सम्प्रसारणत्वाप्राप्तेरिति भावः । "न सम्प्रसारण" इति सूत्रन्तु 'विव्याध' इत्यादौ चरितार्थम् । *स्थानि-त्वादिति* । एवञ्च पूर्वरूपनिष्पन्नादेशस्याचः परस्मिन्निति स्थानिवद्भावे "न सम्प्रसारण" इति निषेधः । न च "अचः परस्मिन्" इति पूर्वरूपादे-स्य स्थानिवद्भावेन यकारस्य सम्प्रसारणनिषेध उकारेण व्यवधानान्न प्र-प्नोतीति वाच्यम । "यूनस्तः" इतिनिर्देशेन युवन् शब्दविषयकत्वं नि-षेधशास्त्रस्य विशिष्य कल्प्यते तत्सामर्थ्यान्निर्दिष्टपरिभाषाया अप्रवृत्तेः । एवमेव 'अक्षद्युकुलम्' इत्यत्र सम्प्रसारणजातत्वाभावात् "हल" इति दीर्घो न ।

प्रसारणमित्यनुवर्त्तते तच्चोठो विशेषणम् । तेन 'अलोऽन्त्यस्य' (पा० सू०१।१।५२) इति न, तदाह–भस्येत्यादि । ह्रस्व ऊठ् न कृतः । वृद्ध्यनापत्तेः । वृद्धि विधावपि ह्रस्वग्रहणे जनौः इत्याद्यसिद्धिः । "च्छ्वोः शूड् (पा०सू०६।४।१९) इत्यत्रापि ह्रस्वकरणे 'अक्षद्यूः' इत्याद्यसिद्धिः । अतद्भावितत्वेन तस्यासंप्रसारणत्वाद्धल इति दीर्घाप्राप्तेः ।

संप्रसा (पा०सू०६।१।१०८) 'अमि पूर्व' (पा०सू०६।१।१०७) इत्यतः पूर्व इति "इको यण्" (पा०सू०६।१।७७) इत्यत अचीति, "एकः पूर्वपरयोः" (पा०सू०६।१।८४) इति चानुवर्तते, तदाह–संप्रसारणादचीत्यादि । ऊठष्टित्त्वम् 'एत्यधति' इत्यत्र विशेषणार्थम् ।

छन्दस्येवेति । छन्दसीत्यनुवर्त्तमाने "वहश्च" (पा०सू०३।२।६४) इत्यनेनेति भावः । णिजन्ताद्विजिति । अनेन लोके विश्ववाट्शब्दस्य साधुत्वमात्रमुच्यते, न त्वस्योठः । णिलोपस्य स्थानिवत्त्वात् अङ्गभसंज्ञाक्षिप्तप्रत्ययेन वाहो विशेषणात् । विज्ग्रहणं क्विपोऽप्युपलक्षणम् । 'वच्यादिभ्यो विहिते क्विती'ति व्याख्यानस्य 'अचः

---

*तेनालोऽन्त्यस्येतीति* । "वाह" इतिषष्ठीनिर्देशात्प्राप्ताऽप्यलोन्त्यपरिभाषा सम्प्रसारणग्रहणस्योठ्विशेषणत्वेन ततो व्यावर्त्यते । लाघवमूलिकां शङ्कां निरस्यति—*ह्रस्व इति । *शूडित्यत्रापीति* । इत एव "ज्वरत्वर" इत्यत्रोठ्ग्रहणानुवृत्तेः । 'अक्षद्यू' इत्यत्र "हल" इति दीर्घो भविष्यतीतिशङ्कां वारयति *अतद्भावितत्वेनेति ।

मूले णिजन्ताद्विजित्युक्तम् एतेन सर्वसारूप्यमस्येति प्रतीयते परन्त्वेतन्नेति सूचयति—*अनेनेति* । *अङ्गभसंज्ञेति* । अङ्गसहितभसंज्ञेत्यर्थः । एतेन केवलभसंज्ञाया "वृषण्वस्वश्वयोः" इत्यनेन प्रातिपदिकेऽपि परे दर्शनेन व्यभिचारात् प्रत्ययाक्षेपकत्वाभावेऽपि न ग्रन्थासङ्गतिः । तादृशप्रत्ययाक्षेपे सति अङ्गभसंज्ञानिमित्तप्रत्ययपरो यो वाहशब्दस्तदन्तं यदङ्गं तदवयवस्य निर्दिश्यमानावयवस्य सम्प्रसारणमूठ् स्यादिति वाक्यर्थः सम्पन्नः । एततफलन्तु 'वाहवाट्' शब्दावयवस्य प्रथमवाहशब्दस्य सम्प्रसारणाभावः । अन्यथा वाहान्तं यदङ्गं तदवयवस्य निर्दिश्यमानस्येत्यर्थेन स्यात् । एतेनोठोऽपरनिमित्तकत्वेन णिलोपस्य स्थानिवद्भावेऽपि न क्षतिरित्यपास्तम् । ननु विचः सर्वत्रादर्शनेन णिजन्ताद्विजित्यसङ्गतमत आह *विज्ग्रहणमिति* । ननु क्विपि सति सम्प्रमाणापातिरत आह *वाच्यादि-

परस्मिन्' इत्यत्र 'काम्यच्' (पा०सू०३।१।९) सूत्रे च भाष्ये उक्तं ण्यन्तात्क्वौ संप्रसारणाप्राप्तेः । प्रतिपदोक्ततया क्विशब्दमुच्चार्य विहितविधेरेव 'क्वौ विधिं प्रति न स्थानिवत्' इत्यत्र ग्रहणेन णिलोपस्य स्थानिवत्त्वाच्च । तेन काम्यच्सूत्रोक्तविहितविशेषणपक्षतादर्थ्ययोर्न फलभेदः । वस्तुतो "विभाषापूर्वाह्णापराह्णाभ्याम् (पा०सू०४।३।२४) इतिसूत्रे "प्रष्ठौह आगतं प्रष्ठवाड्रूप्यम्" इति भाष्ये लौकिकविग्रहवाक्ये 'प्रष्ठौहः' इति प्रयोगादन्यत्रापि ण्विः । तदुक्तम्-इति पक्षे इति ।

चतुरनडु (पा०सू०७।१।९८)" इतोऽत्सर्वनामस्थाने" (पा०सू० ७।१।) इत्यतः सर्वनामस्थाने इति वर्त्तते ।

---

भ्य इति* । णिलोपस्य स्थानिवद्भावेनापि सम्प्रसारणं वारयितुं शक्यत्याशयेनाह-*प्रतिपदोक्ततयेति* । सम्प्रसारणन्तु क्विति विधीयते न तु क्विशब्दमुच्चार्य विहितमिति तस्मिन्नानेन स्थानिवत्त्वनिषेधः । *तेन* । क्विशब्दमुच्चार्य विधीयमानकार्यविधायकशास्त्रे कर्त्तव्य इत्यर्थकरणेन ।*काम्यच्सूत्रोक्त इति* । तत्र हि "यतः सुबन्तादयं विहितोऽतः फलाभावात्ककारस्येत्त्वम्" इति व्युत्पाद्य 'इन्तर्हि प्रयोजनम्' 'उपयट् काम्यति क्विति सम्प्रसारणं यथा स्यात् । एतदपि नास्ति प्रयोजनम् । यजादिभिरत्र किंत् विशेषयिष्यामः यजादिभ्यो विहित इति । अयं सुबन्ताद्विहित इति नात्र सम्प्रसारणप्राप्तिः । अथापि कथञ्चिदित्कार्यं स्यादेवमपि न दोषः । क्रियते न्यास एव । सुप आत्मनः क्यच्च काम्यच्चेति" । एवञ्च प्रत्ययादिश्चकारस्तस्य "चुटू" इत्यनेनेत्संज्ञा । अथापीति । यजादिभिः किन्न विशेष्यते कार्यित्वेन यजादयो निर्दिश्यन्त इति भावः । यद्यपि 'वाक्काम्यति' इत्यादौ द्वितीयपक्षे सम्प्रसारणम्प्राप्नोति । तथापि "धातोः कार्यमुच्यमानं तत्प्रत्यये" इति परिभाषया समाधेयम् । *न फलभेद इति* । यदि क्विशब्दमुच्चार्येत्यर्थः स्यात्तदा प्रकृते क्विनिमित्तकसंप्रसारणे कर्त्तव्ये स्थानिवद्भावनिषेधात्सम्प्रसारणं द्वितीयपक्षे प्राप्नोति । प्रथमपक्षे तु नेति फलभेदः स्पष्ट एव । वस्तुतस्तु "छन्दसि सहः" "वहश्च" इतियोगविभागकरणाद्वहश्चेति विधौ "छन्दसीति न सम्बध्यते । न च योगविभागः "कव्य" इतिसूत्रे वहश्च सम्बन्धार्थ इति वाच्यम् । "एकयोगनिर्दिष्टानामेकदेशोऽप्यनुवर्त्तते" इति परिभाषया तावन्मात्रस्याप्यनुवृत्तिसम्भवात् । किन्त्वस्मिन्पक्षे मण्डूकप्लुत्या छन्दसीत्यस्य कव्येतिसूत्र सम्बन्धो वाच्यः । अस्यां मानन्तु 'प्रष्ठौह" इत्यादिभाष्यप्रयोग एवेत्याशयेनाह—*वस्तुन इति ॥

सावन (पा०सू०७।१।८२) 'आच्छीनद्योः' (पा०सू०७।१।८०) इत्यतो नुमनुवर्त्तते, आदिति च । तदाह—आदित्यधीति । विशेषविहितेनेति । यासुटा सीयुडित्येत्यर्थः । न बाध्यते इति । उपजीव्यत्वादिति भावः । अमा चेति । 'अम्संबुद्धौ' इति विशेषविहितेनामेत्यर्थः । नुम उपजीवकत्वेन विरोधाभावाच्चतः प्राक् तस्याप्राप्तेश्चेति भावः । क्वचित्तु "आमा च नुम् न बाध्यते" इति पाठः । तत्रायमर्थः । बहनड्वांहीत्यादौ "नपुंसकस्य" (पा०सू०७।१।७२) इति नुम् परत्वादामा बाध्येत, पुनः प्रसङ्गविज्ञानात्तु न बाध्यते इति । दत्वं नेति । अनड्वांस्तत्रेत्यत्र रुत्वं भवत्येव । तत्रोपदेशवैयर्थ्याभावात् । संयोगान्तलोपस्येति । हस्थानिकस्येत्यर्थः । एवञ्च नस्य प्रातिपदिकान्तत्वाभाव इति भावः । अनड्वानिति । अनः शकटं वहतीत्यर्थे वहेः क्विबनसि, अनसो डश्च, यजादित्वात्संप्रसारणम् ।

ननु हेऽनड्वन् इत्यत्र सम्बुद्धिलोपे ऽवश्यं प्राप्ते अम आरम्भादपवादत्वेन तद्विषये सम्बुद्धिलोपानापत्तिः । विषयभेदेऽप्यचिरादेशस्य नुडपवादत्वमाशङ्कितं सप्तमे भाष्ये, इति चेत् ? न. प्रत्ययलोपविधायकैः प्रत्ययानुत्पत्तेरेवान्वाख्यानेनापवादत्वस्यैवासम्भवात् । ध्वनितश्चेदं प्रत्ययलक्षणसूत्रे भाष्यकैयटयोः । एवमेव 'अतृणेट्'

---

अनडुहशब्दस्यान्त्याचः परदेश एवाऽऽमो नुमश्चोत्पत्तिर्वाच्या सा च विरोधान्न सम्भवतीति विशेषविहितेन नुमा बाधा आमः स्यादत आह *मूले विशेषविहितेनेति* । *नुमं उपजीवकत्वेनेति* । आदित्यधिकारादामोऽमश्च सद्भाव एव नुमः प्राप्त्या नानेन तयोर्बाधः । *वैयर्थ्याभावादिति* । यं विधिंप्रतीति न्यायात् । *विषयभेदेऽपीति* । तदाप्तियोग्ये विषये ह्यचारितार्थ्यमपवादत्वे बीजं तदत्राप्यस्तीति भावः । *अपवादत्वस्यैवासम्भवादिति* । उभयोरपूर्वबोध्यत्व एव बाध्यबाधकभावो युक्तो नैवंप्रकृते सम्भवतीति भावः । *ध्वनितश्चेदमिति* । तत्र ह्याद्यप्रत्ययशब्दस्य प्रयोजनमुक्तं "सति प्रत्यये यत्प्राप्नोति तत्प्रत्ययलक्षणेन यथा स्याल्लोपे यत्प्राप्नोति तत्प्रत्ययलक्षणेन मा भूदिति । किम्प्रयोजनम् ? ग्रामणिकुलम् । सेनानिकुलम् । औत्तरपदिके ह्रस्वत्वे कृते ह्रस्वस्य पिति कृति तुगिति तुग्माभूत्" इति । 'आद्यप्रत्ययग्रहणसत्त्वे यथैतादृशार्थलाभस्त-

(१)'अनड्वान्' इत्यादेस्तत्सूत्रोदाहरणत्वमुपपद्यते इति दिक्।

सहेः सा (पा०सू०८।३।५६) 'अपदान्तस्य मूर्द्धन्य' इत्यधि- क्रियते। लोके त्विति। एतेन 'तुराषाण्मेघवाहन' इति व्याख्या- तम्। 'नहिवृत्ती'त्यनेन क्विबन्तसहावेव दीर्घविधानादाह-अन्ये- षामपीति।

---

थोक्तं' कैयटेन। 'प्रत्ययशब्दोऽत्र लुप्तसप्तमीको निर्दिश्यते। तेन प्रत्ये सति यत्कार्यं दृष्टं तल्लोपेऽपि भवति' इति। न च ग्रामणीरित्यत्र क्विपि सति तुग् दृष्टो ह्रस्वाभावात्। कृते क्विपो लोपे ह्रस्वत्वे च तुक्प्राप्तिः तं भगवता 'यदि तर्हि यत्सति प्रत्यये प्राप्नोति तत्प्रत्ययलक्षणेन भवति लोपोत्तरं यत्प्राप्नोति तन्न भवति। जगत् जनगत् इत्यत्र तुङ् न प्राप्नोति लोपोत्तरं ह्यत्र तुगागम' इत्युक्तम्। अत्र क्विलोपात्पूर्वमपि "गमः क्वौ" इत्यस्य प्राप्तिसत्त्वादनुनासिकलोपे क्विपि सति तुकः प्राप्तिरिति चेत्।

अत्र कैयटः द्युतिगमिजुहोतीनां द्वे च इति गमेः क्विप्। अन्तरङ्गत्वा- त्पूर्वं क्विलोपः। गमः क्वावित्ययं लोपो ऽङ्गविशेषापेक्षत्वाद्बहिरङ्गः। क्विलो- स्यापरनिमित्तकत्त्वेनान्तरङ्गत्वमिति भावः। भिन्नविषयत्वात् येन ना- प्राप्तिन्यायो न भवति। सति त्वस्मिन्न्याये नैव क्विलोपः स्यात्' इति। एतच्चासम्भवे एवापवादत्वमिति वार्त्तिकरीत्या। वस्तुतस्त्वचि रादेश- स्य नुडपवादत्वमाशङ्क्य न तिसृतिज्ञापकेन भाष्यकृता नुट् साधितस्त- द्रीत्या विषयभेदेऽपि गमः क्वावित्यस्यापवादत्वं स्यात्। एवञ्च पूर्वमनुना- सिकलोपे तुकः प्राप्तिसत्त्वेन तुगभावप्रतिपादनपरम्भाष्यमसङ्गतं स्यात्। एतेन लोपेनानुत्पत्तेरेवान्वाख्यानेन प्रत्ययलोपस्याभावरूपस्य पूर्वकाले सिद्धतया अनुनासिकलोपस्यापवादत्वं नेत्याशयः कल्प्यस्तेनेदं ध्वनिता- र्थः।*एवमेव*॥शास्त्रेणानुत्पत्त्यन्वाख्यानस्थले प्रत्ययलोपेऽव्यवहारा- *तत्सूत्रोदाहरणत्वम्*॥ प्रत्ययलोपे प्रत्ययलक्षणमितिसूत्रोदाहरण- मित्यर्थः॥

अनुवादस्थल इव विधेयविषयेऽपि इत्सज्ञां विनैवोच्चारणार्थानां

---

(१) अन्यथा तत्र पदत्वात् इमः पूर्वं प्रवृत्या तस्य तदुदाहरणं नोपपद्यते इति भावः।

ननु तत्र श्नम्-तिलोपयोः प्राप्तौ परत्वात्तिलोपे ततः श्नामि तत इमि तस्य तदुदाहरणत्वं सं- भवतीति न भाष्यासङ्गतिरित्यरुचे रुदाहरणान्तरमाह-अनड्वान् इति। अन्यथा सुलोपात् परत्वादामे- वाविहितत्वात् नुमि सुलोपाप्राप्त्या तस्य तदुदाहरणत्वानुपपत्त्या भाष्यासंगतिः स्पष्टैवेति भावः।

केचित्तु लोपविधायकैः प्रत्ययानुत्पत्तेरन्वाख्यानेऽपि नोक्तविधभाष्योदाहरणानुपपत्तिः। प्रत्यय- सूत्राभावे नित्यानामिमादीनां परत्वेऽपि नित्येनाऽपृक्तलोपेन बाधः। आरब्धे तु तस्मिन् सूत्रे इमा- नित्यत्वमिति परत्वात्तेषु कृतेषु अपृक्तलोपे इति सुविशेषोपपत्त्या सूत्रोदाहरणस्योपपन्नत्वादित्याहुः।

दिव औत् (पा०सू०७।१।८४) ननु विधेयविषये उच्चारणार्थानामपीत्संज्ञोचिता । अन्यथा तान्तस्य विधानमित्यस्याप्यापत्तेः ध्वनितश्चेदम् 'अदड्' सूत्रे भाष्ये । तत्र हि—डित्त्वाभावे ऽदादेशे पूर्वसवर्णदीर्घमाशङ्क्यानुनासिकोपधत्वादिति समाहितम् । न तूच्चारणार्थत्वादिति । किञ्च । द्वितीयवर्णोच्चारणे सहायसम्पादनेन चरितार्थेषु तत्र तत्र विशेषणार्थेष्विव 'हलन्त्य' सूत्राप्रवृत्तौ मानाभावः । अत एव "तस्य लोप" (पा०सू०१।३।९) इति सूत्रे ऽनुबन्धानामेकान्तत्वपक्षे "दिव औत्" इत्यादीनां सर्वादेशत्वापादनं भाष्ये कृतं(१)"तित्स्वरितम्"(पा०सू०६।१।१७२) इति सूत्रे च भाष्ये "तिति प्रत्ययग्रहणं कर्त्तव्यम्" इति वार्त्तिकस्य द्युभ्यामित्यादौ तदभावः फलमित्युक्तम् । (२)दित्त्वमाश्रित्य च प्रत्याख्यातं तत् इत्यन्यत् । किं चाऽऽदेशेषु सर्वत्र तकाराणामुच्चारणार्थत्वेनेत्संज्ञकत्वाभावात्तिति प्रत्ययग्रहणं व्यर्थमेव स्यात् । तथा विधेयविषये उच्चारणार्थानामप्यनुनासिकत्वेनेत्संज्ञा । अत एव "वेरपृक्तस्य" इत्यत्रापृक्तग्रहणाभावे 'दर्विः' इत्यत्र लोपमाशङ्क्य 'अनुनासिकपरस्य वेर्ग्रहणम्' इति भाष्ये

---

डित्त्वादिमतमसङ्गतमिति सूचयितुं शङ्कते—*नान्वति* ॥ *विधेयविषय इति*। एतेनानुवादस्थले लक्षणया निर्वाहेऽपि "न विधौ परः शब्दार्थ इति"न्यायेन विधेयविषये लक्षणाया असम्भवः सूचितः । ननूच्चारणार्थत्वमुत्तरवर्णस्य पूर्ववर्णोच्चारणे साहायकत्वरूपमन्यत्र "हयवरट्" इत्यादौ दृष्टं न तु पूर्ववर्णस्य तथान्यत्र दृष्टमित्यस्वरसादाह—*किञ्चेति* ॥ *द्वितीयवर्ण इति*। स च प्रकृते औकारः । पूर्वोक्तार्थे भाष्यान्तरसंवादमप्याह *अत एवेति* ॥ उच्चारणार्थानामित्संज्ञां विना निवृत्त्यभावादेव । विधेयबोधकशब्दघटकतयोच्चारितहल्विषये व्यवस्थामुक्त्वाऽऽज्विषयेऽप्याह—*तथा विधेयेति* । *अनुनासिकपरस्येति* । अनुनासिकः

---

(१) ननु 'तस्य लोप' इति सूत्रस्थभाष्यस्येदं तात्पर्यम् । लुप्यते इति लोपः इत्यन्वर्थसंज्ञाविधेया ? तेन च तस्येति ग्रहणं व्यर्थं स्यात् । एवञ्चानुबन्धानामेकान्तत्वपक्षो यदास्वीकृतः तदा 'दिवउत्' इत्युक्त्यत्र तकारस्योच्चारणव्यतिरिक्तात् 'अनेकालत्वेन सर्वादेशत्वरूपस्य फलस्याभावात् उच्चारणार्थत्वमेव तकारस्येति । यदाचैकान्तपक्षोऽनुबन्धानामादरणीयः तदोच्चारणातिरिक्तसर्वादेशत्वरूपफलसद्भावात अनुच्चारणार्थत्वमेव तकारस्य नोच्चारणार्थत्वमिति । तथाच तस्यलोप इति सूत्रस्थभाष्ये-'नोच्चारणार्थानामित्संज्ञापकं प्रमाणं भवितुमर्हति' इत्युक्तम् । इत्यरुचेराह—तित्स्वरितमित्यादि ।

(२) यदि वार्तिकस्य द्युभ्यामित्यादौ स्वरितत्वाभावः फलं स्पष्टमित्यङ्गीक्रियते तदा तद्वार्त्तिकस्य भाष्ये प्रत्याख्यातत्वात् तत्फलप्रतिपादनपरं भाष्यं नोक्तविधार्थे दृढं प्रमाणं भविष्यति इत्यभिप्रायेणाह—दित्त्वमाश्रित्येति ।

उक्तम् । अत एव 'इदितो नुम्' (पा०सू०७।१।५८) इति सूत्रे भाष्ये धातोरित्यस्याभावे सिच इदित्वात् 'अभैत्सीत्' इत्यादौ नुममाशङ्क्य सजादेशकरणेन समाहितम् । न तु सिच इकारस्योच्चारणार्थत्वादित्त्वाभावेन, ल्युडादावुकारस्यानाकाभ्यामेव निवृत्तिरिति न तस्य इत्संज्ञा, अनुनासिकत्वाभावात्(१) । अत एव "नन्द्यादिभ्यो" ल्यु प्रत्यये 'नन्दना' इति टाबन्तप्रयोगो गाङ् लिटि (पा०सू०२।४।४९) इति सूत्रे भाष्ये । "ल्युः कर्त्तरि पुंसि" इति त्वमरस्य प्रमादः ।

अनुवादविषये तु हलन्त्यसूत्रभाष्योक्तरीत्या तेषां व्यवसित...

---

परोऽवयवो यस्येत्यर्थः । तादृशश्च क्विबादिरेव तेष्विकारस्योच्चारणार्थ उच्चारितस्यानुनासिकत्वादुपदेशेऽजित्यनेनेत्संज्ञया निवृत्तिरित्युक्तमिति । *अत एव* । उच्चारणार्थानामित्संज्ञासत्त्वादेव । *सजादेशकरणेनेति* । 'अमंस्त' इत्यत्र "अनिदिताम्" इति नलोपापत्तिस्तु "हनः सिच्" इति नलोपार्थं कित्त्वविधानेन ज्ञापकेन वारयितुं शक्या । ... 'भुज्युः' 'शंयुः' इत्यादौ "युवोरनाकौ" इत्यस्यातिप्रसङ्गमाशङ्क्यानुनासिकपरस्य स्थानित्वेन निर्देशः स्वीकृतः । एवञ्च ल्युडादावपि तादृशस्यैवानुवाद आवश्यकस्तथा सति तदादेशस्य स्थानिवद्भावेनोगित्त्वादुगित्कार्यप्राप्नोतीत्याशङ्क्याह—*ल्युडादावुकारस्येति* । नन्वेवमुकारस्य नुनासिकत्वाभावे कथमतिप्रसङ्गवारणमिति चेन्न । युवोर्यवांश एवानुनासिकत्वं स्वीकृत्य तादृशानामेव स्थानित्वेनाश्रयणात् । *अत एव* । अनुनासिकत्वाभावादेव । *टाबन्तप्रयोग इति* ॥ उगित्त्वे तु ङीप्स्यात् । *अमरस्य प्रमाद इति* । यदि तु ण्यन्तप्रकृतिकयुजन्तमित्युच्यते तदा तु न दोषः । परन्तु तदर्थपरत्वसम्पादने क्लेशः ।

यदुक्तंपूर्वत्र विधेयेति तत्फलमाह-*अनुवादविषये त्विति* । यथा "... तो धातोः" इत्यादौ ॥ *व्यवसितान्त्यत्वाभावेन* । धातुप्रातिपदिकप्र...

---

(१) उच्छृंखलानुयायिनस्तु-उच्चारणार्थेत्यस्य स्वाव्यवहितपूर्ववृत्तिवर्णस्य स्वमन्तरेणो... संभवात् तदुच्चारणातिरिक्तप्रयोजनाभाव इत्यर्थः । तथाच स्वाव्यवहितपूर्ववृत्तिवर्णोच्चारणसंपादने... र्थत्वात् न तस्य विधेयान्वयित्वमिति स्वत एव तस्यनिवृत्तेः इत्संज्ञाव्यापारकल्पनं न तत्र युक्तम् । ... दितोनुमधातोः इति सूत्रस्थभाष्यविरोध इति वाच्यम्, तादृशभाष्यस्याचरशस्तथाऽनुपलब्धेः । ... इदितोनुम्धातोरित्यत्र धातुग्रहणाभावे 'अभैत्सीत्' इत्यत्र नुममाशंक्य "नैतदस्तिप्रयोजनं । प्रयोजनं ... क्तव्यं यन्नियोगतः स्यात् यच्चात्रेकारेण क्रियते प्रकारान्तरेण तच्छक्यं कर्तुम्" इत्येतत्तत्रभाष्ये ... तत्र शक्यं कर्तुमित्यनेन भाष्यकृता तत् कर्तुं शक्यं, नतु तत्कृतामित्येतदपि अर्थः सूचितो भवति । ... सकारस्योच्चारणार्थम् इकारः क्रियते इत्यकारेण सच् इत्येवं सकारः शक्य उच्चारयितुम्, तदेवं ... भवति । निरनुनासिक. उच्चारणफलः सिच इकारः इति इदित्वाभावान्नुमभाव' इति तत्र कैयटः । ... उच्चारणार्थेषु प्रमाणाभावमात्रेत्संज्ञा शास्त्रव्यापार इति दीक्षिताद्याशयमाहुः । इति विभावयन्तु विद्वांसः ।

स्यत्वाभावेन फलाभावेन चेत्संज्ञाशास्त्राप्रवृत्तेरुच्चारणार्थवर्णसहितसमुदायस्य तद्रहिते लक्षणा । विधौ तु नोचिता सा । 'न विधौ परः शब्दार्थ' इति न्यायात् । "णौ गमिः" (पा०सू०२।४।४६) इत्यादीनां तुम् तु न, स्थानिवद्भावेन भाष्यातिदेशिकधातुत्वं गृहीत्वेकः सत्त्वात् । 'गमेरिट्' (पा०सू०७।२।५८) इतिवच्च नोपधालोपः । अत एव सुबुत्पत्तिः । अन्यथा "हनो वध लिङि" (पा०सू०२।४।४२) इतिवत् सा न स्यात् । "अस्ते भूः" (पा०सू०२।४।५२) इत्यत्रापि

---

निपातागमादेशानामेव व्यवसितपदार्थत्वेन भाष्ये उक्तत्वात् । न चात इति विभक्तिदर्शनेन प्रकृतिभागस्य प्रातिपदिकत्वमस्त्येवेति वाच्यम् । धात्वादिसाहचर्येण स्वस्वरूपातिरिक्तार्थबोधकानामेव तत्र प्रातिपदिकपदेन ग्रहणात् । न च "नमोवरिवस्" इतिसूत्रपठितचित्रङ्शब्दस्य स्वरूपबोधकतया प्रातिपदिकपदेन तदसङ्ग्रहः स्यादिति वाच्यम् ॥ सर्वस्यापि शब्दस्य स्वस्वरूपबोधकतया स्वस्वरूपातिरिक्तलौकिकार्थस्य विवक्षिततया चित्रङ्शब्दस्य तथात्वात् । शब्दार्थयोर्भेदाभेदौ स्वमतसिद्धावेवेति नाप्रसिद्धिः । विभक्त्युत्पत्तिप्रयोजकप्रातिपदिकत्वमभ्युपेत्याप्याह-*फलाभावेन चेति* । यद्यप्यात इति तकारस्य फलं लाक्षणिकस्याप्याकारस्य ग्रहणं वर्णग्रहणेऽपि लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तेः सिद्धान्तसम्मतत्वात् तथापि तच्छुद्धस्यैव तकारस्य न तु इत्संज्ञकस्य तकारस्येतीत्संज्ञायाः फलाभावोऽस्त्येव । "सुट्तिथोः" इत्यादाविकारादेरुच्चारणातिरिक्तफलाभावोऽस्त्येव । *तद्रहिते लक्षणेति* । उच्चारणार्थवर्णघटितसमुदायस्य स्वंरूपमितिसूत्रबलाच्छक्तत्वेन कल्पस्य तादृशवर्णरहिते लक्षणा । लक्षणाप्रयोजकसम्बन्धश्च स्वघटकसाजात्यम् । *सा* । लक्षणा । *न विधाविति* । विधौ विधेयबोधकपदे परः शक्यादन्यो लक्ष्यार्थः स्वबोधकत्वसम्बन्धेन नास्तीत्यर्थः । एवञ्चौदादिपदे विधेयत्वेन विवक्षिते तकारादेरित्संज्ञयैव निवृत्तिः । न चैतेषु 'प्रातिपदिकाग्रप्रतिषेधोऽकृत्तद्धितान्ताना'मितीत्संज्ञाप्रतिषेधः स्यादिति वाच्यम् । "चित" इत्याद्यनुवादसामर्थ्येन निषेधाप्रवृत्तेः । ननु यदीकानिर्देशस्तदा "गमहन" इतिसूत्रेणोपधालोपः स्यादत आह-*गमेरिडितिवदिति* । अनेन निर्देशेनेकः कित्पदेनाऽग्रहणं कल्प्यत इतिभावः । *अत एव* । इकः श्तिपेन तदन्तस्य प्रातिपदिकत्वादेव । सनादिप्रत्ययानुकरणे तु प्रकृतिवदित्यतिदेशानित्यत्वेन प्रातिपदिकत्वं सुलभम् । अत एवेत्यारभ्य केचिदित्यन्तेनान्यमतानुवादः । अत्रारुचिबीजन्तु प्रकृतिवदित्यतिदेशानित्यत्वेनैव-

निर्विसर्ग एव पाठ इति केचित्(१)। एवञ्च 'अत्र तिरस्वरित'(पा०सू०६।१।१९५) इति स्वरितापत्तिरिति चेन्न। दिव इकारस्योदात्तत्वेन स्रंसनधर्मिणो हलः स्थाने जायमानौकारस्यानुदात्तत्वेनेकारस्य यणि "उदात्तस्वरितयोर्यण" (पा०सू०८।२।४) इति स्वरितसिद्ध्या फलाभावात्। 'तिति प्रत्ययग्रहणं कर्त्तव्य' मिति वार्त्तिकेन तदप्राप्तेश्च 'अन्तोदात्तं द्यो' रिति तु द्योशब्दस्य बोध्यम्।

अल्विधित्वेनेति। अनल्विधावित्यत्र पञ्चमी समासस्याश्रयणादिति भावः।

पदान्तइति। "एङः पदान्तात्" (पा०सू०६।४।६९) इत्यनुवृत्तस्य विभक्तिविपरिणाम इति भावः। अयमुकारोऽन्तोदात्तो निपात्यते। तेन "द्युभिरक्तुभिः" इत्यादौ पठ्यमानमन्तोदात्तत्वं सिद्धम्।

सकलप्रयोगासिद्धिः कार्या। अन्यथा "सुवो वुक्' इत्यादावुपपत्तिर्न स्यादिति। नन्वितिशङ्कायाः पर्यवसानमाह—*एवञ्चेति*। *स्वरितापत्तिः* द्यौरित्यत्रौकारस्य स्वरितापत्तिः। स्वरितत्वम्प्रकारेण प्राप्तमभ्युपेत्य समाधत्ते *दिव इति*। *स्रंसनधर्मिणः*। अनुदात्तत्वधर्मवतः। *फलाभावादिति* "तित्स्वरितम्' इतिसूत्रप्रवृत्तिफलाभावात्। प्रकारान्तरेण तदप्रवृत्तिं साधयति-*तिति प्रत्ययेति*। नन्वेमम् 'पृथिवी उत द्यौः' इत्यत्र पठ्यमानमन्तोदात्तत्वन्नोपपद्यतेत्यत आह-*अन्तोदात्तमिति* "सुद्यौः' इत्यत्र स्थानिवद्भावेन हल्ङ्यादिलोपो यथा न भवति तथा पादयति-*अनल्विधावित्यत्रेति*।

*पदान्तादित्यनुवृत्तस्य*। एङः पदान्तादिति सूत्रात्। *अन्तोदात्तो निपात्यत इति*। अन्तस्य दिवशब्दान्तस्य वकारस्य स्थाने प्राप्नुवन्नुदात्तो निपात्यते इत्यर्थः। तत्फलमाह-*तेन द्युभिरिति* अत्र दिवशब्देकारस्योदात्ततया संसनधर्मिणो वकारस्य स्थाने जायमान उकारोऽनुदात्तः स्यात्ततश्चेकारस्य यणि "उदात्तस्वरित' इत्यनेनोकारः स्वरितः स्यादित्युकारस्योदात्तत्वनिपातनमुदात्तस्य श्रवणार्थम्। न च अनेन निपातनस्वरेण "ऊडिदम्" इतिसूत्रेण प्राप्तविभक्तिस्वरस्यापि बाधो भविष्यतीति "दिवो झल्" इति तन्निषेधो व्यर्थ इति वाच्यम्। 'अहर्दिवलघु' इत्यत्र पूर्वपदप्रकृतिस्वरबाधनेन "दिव उत्" सूत्रस्थनिपातनस्वरस्य चरितार्थतया 'द्युभिः' इत्यत्र विभक्तिस्वरस्य परत्वात्प्राप्तस्य निषेध

(१) *केचिदिति* अत्रारुचि बाजतु, प्रकृतिवदनुकरणं भवति इत्यस्य वैकल्पिकत्वेन यदा प्रकृतिवदनुकरणं न भवतीत्यङ्गीक्रियते तदा अधातुत्वात् सविसर्गपाठोऽसाधुरेव। इति।

अत्र यथा "हलः" (पा०सू०६।४।२) इति दीर्घो न तथोक्तम् । उ-तपरत्वन्तु 'भाव्यमानोऽप्युकारः सवर्णग्राहकः' इत्यर्थज्ञापनार्थमिति तित्स्वरितमिति सूत्रे भाष्ये उक्तम् । 'द्युभ्याम्' इत्यत्रोठ् न, क्ङिती-त्यनुवृत्तेः । यत्तु अस्मात्तपरत्वात्कुरुत इत्यादावुदिति तपरत्वाद् गुणा-भावो यथा स्थानिवत्सूत्रे भाष्ये उक्तः, तथा प्रकृते दीर्घाभाव इति कैयटः, तदेतेन परास्तम् । दीर्घस्य बहिरङ्गतया तेन व्यावृत्तेर-शक्यत्वाच्च । अत एव "ॠत इद्" (पा०सू०७।१।१००) इति तपरत्वेन चिकीर्षतेत्यादौ "हलि च" इति दीर्घस्य न व्यावृत्तिः । अत एव यूचः इत्यादौ "चौ" (पा०सू०६।३।१३८) इति दीर्घसिद्धिः ।

षट्चतु (पा०सू०७।१।५५) रेफान्तस्य षट्संज्ञैव तु न कृता । चत्वार इत्यत्र लुगापत्तेः । तत्र 'रो न' इत्युक्तौ तु पदलाघवाभावः । केचित्तु षडित्यादि षडाद्यर्थपरम् । अर्थात्परत्वञ्चामः शब्दद्वारकं, स

---

र्थम् "दिवो झल्" इतिसूत्रस्यावश्यकत्वात् । प्रकृते तु उदात्तस्वरितयो-रित्यस्यासिद्धत्वान्निपातनस्वरेणोकारस्योदात्तत्वमेव भवति । *तथोक्त-मिति* । सम्प्रसारणजातत्वाभावात् । कैयटाद्युक्तिं खण्डयति-*यत्त्वि-ति* । *एतेन* । प्रागुक्तरीत्या प्रकारान्तरेणैव दीर्घाभावस्य सिद्धत्वेन । बह्वपेक्षस्य बहिरङ्गत्वं प्राचीनमतासिद्धतद्रीत्या दूषणान्तरमाह—*दीर्घस्य बहिरङ्गतयेति* । *अत एव* । दीर्घस्य बहिरङ्गत्वादेव । तस्य दीर्घस्य तु 'जुगूर्षति'इत्यादिरवकाशः स्यात् । *अत एव* । बहिरङ्गत्वादेव । अत्र दीर्घस्य परनिमित्तकत्वेनापि बहिरङ्गत्वम् ।

"ष्णान्ताषट्" इति सूत्रे रेफप्रश्लेषेणैवेष्टसिद्धावत्र चतुर्ग्रहणन्न कार्य-मित्यभिप्रायेण कृतामाशङ्कान्निरस्यति-*रेफान्तस्यापीति* । ' तिस्रश्च तस्र' इत्यत्र प्राप्तातिप्रसङ्गस्य सन्निपातपरिभाषया वारणेऽपि चतुर्श-ब्देऽतिप्रसङ्गमाह—*चत्वार इत्यत्रेति* *तत्र* । "षड्भ्यः" इति सूत्रे । *पदलाघवाभाव इति* । न च षट्चतुर्भ्यो हलादिः" इति सूत्रेऽप्येवं सति चतुर्ग्रहणन्न कार्यमिति लाघवमस्त्येवेति वाच्यम् । एवमपि पदलाघवा-भावस्य तदवस्थत्वात् । न च 'चतसृणाम्' इत्यत्र रान्तत्वमादेशे कृते नास्ति । स्थानिवद्भावस्तु वक्तुमशक्योऽल्विधित्वादिति कथं षडित्यनेन विभक्त्युदात्तत्वमिति वाच्यम् । लक्ष्यानुरोधात्प्रकृते यथोद्देशपक्षस्यैवाश्र-यणेनादेशात्पूर्वं जातषट्त्वस्य तदादेशे स्थानिवद्भावेन सौलभ्यात् । प्राची-नोक्तिं खण्डयति-*केचित्त्विति* । *अर्थपरमिति* । द्विवचनेन निर्देशे कर्तव्ये बहुवचननिर्देशसामर्थ्यात् *शब्दद्वारकमिति* । स्ववाचकशब्दात्

चार्थः प्रधान एवेति न गौणे ऽतिप्रसङ्ग इति; तन्न। शब्दद्वारक-मित्यस्य शब्दानिष्ठपरत्वाद्यवधित्वस्य परत्वस्य वा अर्थे आरो-इत्यर्थः। एवञ्च गौणत्वात्तत्र सम्बन्धे तन्निरूपितसम्बन्धे च विभक्तिः। परम्परासम्बन्धेनान्वय इत्यपि न। प्रकृतिप्रत्यया-र्थयोः साक्षात्सम्बन्धेन क्लृप्तस्यान्वयस्य भङ्गापत्तेः। अत एव "गङ्गायां गाव" इत्यादौ गौणाधारादावधिकरणत्वादिनिमित्ता विभक्तिः स्वरितत्वप्रतिज्ञादिना भाष्ये साधिता। अत एवेदृशस्थले षष्ठ्यपि न। अत एव "स्त्रियाः पुंवत् (पा०सू०६।३।३४) इति सूत्रे 'स्त्रिया इत्यर्थग्रहण' मिति पक्षे भाष्यकृतोक्तं "भाषितपुंस्कानु-

---

परत्वमेवार्थात्परत्वम्। नन्वर्थात्परत्वाश्रयणेऽपि प्रियपञ्चन्शब्दात्परस्याः शब्दात्परत्वमस्त्येवेत्यत आह-*सचार्थः प्रधान एवेति*। तामुक्तिं ख-ण्डयति-*तन्नेति*।

अयम्भावः। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वं व्युत्पत्तिसिद्ध-मिति यद्यत्र षडाद्यर्थः प्रकृत्यर्थः स्यात्तदा तेषु प्रत्ययार्थान्वयो वाच्यः स च न सम्भवतीति। लाघवादाह—*परत्वस्येति*। अवधित्वसम्ब-न्धेनेत्यादिः। *एवं च*। आरोपे सति च। प्रथमपक्षाभिप्रायेणाह-*तत्र सम्बन्ध इति*। द्वितीयपक्षाभिप्रायेणाह—*तन्निरूपितेति*। आरोपितपरत्वनिरूपितेऽवधित्वरूपसम्बन्धे इत्यर्थः। क्रियाकारकयोः सम्बन्धस्य विभक्तिर्वाचिकेति सिद्धान्तात्। ननु प्रत्ययार्थस्यावधित्वस्य स्वाश्रयवाच्यत्वसम्बन्धेन षडाद्यर्थेऽन्वयो भविष्यतीत्यत आह—*पर-म्परासम्बन्धेनेति*। *साक्षात्सम्बन्धेन*। यत्रैकस्मिन्नेव पदार्थात्मक-सम्बन्धे द्वयोः सम्बन्धिनोः प्रतियोगित्वानुयोगित्वयोः सम्भवः स सा-क्षात्सम्बन्ध इत्युच्यते। न च तयोरेकस्मिन्परम्परासम्बन्धघटके सम्भवः। ननु तथात्वाभावेऽपि प्रकृते तथास्त्वित्यत आह—*अत एवेति*। प्र-कृतप्रत्ययार्थयोः परम्परासम्बन्धेनान्वयाभावादेव। *गौणाधारादा-विति*। 'गङ्गायां गावः'। 'कूपे गर्गकुलम्' इत्यादौ। *स्वरितत्वप्रति-ज्ञानादिनेति*। स्वरितेनाधिकारः अधिकंकार्यमित्यर्थात्। गङ्गायां मत्स्या इत्यादौ मुख्ये आधारे चरितार्था सप्तमी गौणेऽपि भवति। यदि परम्प-रासम्बन्धेन प्रकृत्यर्थप्रत्ययार्थयोरन्वयोऽपि व्युत्पन्नः स्यात्तदा 'गङ्गायां गावः' इत्यादौ मुख्ये आधारे सप्तमीं विधाय तत्र प्रकृत्यर्थस्य परम्परासम्बन्धे-नान्वयोपपत्तौ स्वरितत्वकल्पनाक्लेशो व्यर्थः स्यादिति भावः। *अत एव*। साक्षात्सम्बन्धस्य विभक्तिवाच्यत्वादेव। *अत एव*। उक्त-रीत्या परत्वस्यासम्भवादेव। *अर्थग्रहणमितिपक्ष इति*।

पपत्तिश्च, न ह्यर्थेन पौर्वापर्यमस्ति" इति। दिक्शब्दयोगे इत्यस्य दिक्शब्दार्थान्वयभूते ऽवधित्वादौ सम्बन्धे पञ्चमीत्यर्थः। स च सम्बन्धो मुख्य एव साक्षात्सम्बन्ध एव च ग्रहीतुमुचित इति दिक्(१)।

---

तत्र हि—'स्त्रीग्रहणं स्त्रीप्रत्ययग्रहणमुत स्त्रीशब्दग्रहणमाहोस्विदर्थग्रहणम्' इति पक्षत्रयंसम्भावना कृता। तेषु प्रथमपक्षे 'स्त्रीप्रत्ययस्य प्रतिषेधो विज्ञायेत, एवं सति श्येनभार्यः पतभार्यः इत्यत्रार्थस्यानिवृत्तत्वान्नकारश्रवणप्रसङ्गः'। स्थानिवद्भावप्रसङ्गेन पटुभार्य इत्यत्र यणादेशप्रसङ्गेन चायंपक्षो निराकृतः। स्त्रीशब्दग्रहणमिति द्वितीयपक्षे स्त्रीरूपार्थवाचकस्य शब्दस्य पुमर्थवाचकशब्दातिदेशो इत्यर्थके 'अङ्गारका नाम शकुनयः तेषां कालिकाः स्त्रियः कालिका वृन्दारिका अङ्गारकवृन्दारिकाः प्राप्नुवन्ति। हंसस्य वरटा कच्छपस्य डुली। तत्र वरटावृन्दारिका हंसवृन्दारिकाः। डुलीवृन्दारिकाः कच्छपवृन्दारिकाः प्राप्नुवन्ति' इति दोष उक्तः। अर्थग्रहणमितितृतीयपक्षेऽपि अङ्गारकवृन्दारिका इत्यादिदोषमभिधाय शङ्कितम् 'भाषितपुंस्कादित्युच्यते तेनैतेषु न भविष्यति' इति। तत एवमाभिहितम्। 'भाषितपुंस्कानुपपत्तिश्च न ह्यर्थेन पौर्वापर्यमस्ति' इति। ततः सिद्धान्तितम्। 'तस्मादस्तु मध्यमः पक्ष' इति। व्याख्यातञ्चोपाध्यायैः। 'शब्दग्रहणपक्षे साक्षादुत्तरपदेन पौर्वापर्यसम्भवात्' इति। अधिकन्तत्रैव स्पष्टम्।

केचित्तु शब्दावधिरूपरत्वस्यार्थावधिकत्वे न बाधकम्। शब्दार्थयोस्तादात्म्यात्। 'न ह्यर्थेन' इतिभाष्यन्तु तयोरौपाधिकभेदाभ्युपगमेनेति वदन्ति। अत्रेदं वक्तव्यम्। शब्दार्थयोस्तादात्म्यमिति यद्यपि सिद्धान्तिसम्मतम्। तथापि प्रक्रियादशायांभेदेनैव सर्वा कल्पना। अत एव "स्वं रूपं शब्दस्य" इतिसूत्रभाष्ये तत्सूत्रप्रयोजनकथनावसरे "शब्देनोच्चारितेनार्थो गम्यते। अर्थे कार्यस्यासम्भवादिह च व्याकरणे अर्थे कार्यस्यासम्भवः अग्नेर्ढगिति न शक्यते अङ्गारादिभ्यः परो ढक्कर्तुम्" इतिरीत्योक्तम्। यदि तादात्म्याभिप्रायेण व्याक्रिया भाष्यसम्मता स्यात् तर्हि एवं मुक्तिर्विरुध्यते। नन्वेवं दिक्शब्दयोगे पञ्चमीतिव्यवहारानुपपत्तिः। तत्राप्यर्थगतसम्बन्धमादायैव शब्दसम्बन्धस्य वक्तव्यत्वादत आह—*दिक् शब्दयोग इति*।

---

(१) *दिगिति*। परत्वानुवादेन कार्यविधौ 'नह्यर्थेन पौर्वापर्यमस्ति' इति भाष्यात् परत्वं शब्दावधिकमेव वक्तव्यत्वात् उक्तविधदोषसद्भावेऽपि विधानानुवादेन कार्यविधौ स न दोष इति केचिद्दिगर्थमप्याहुः। गुरुचरणास्तु शब्दावधिकस्यार्थावधिकत्वं न बाधकं शब्दार्थयोस्तादात्म्याभ्युपगमात् नह्यर्थेन पौर्वापर्यमस्तीतिभाष्यं तु तयोरौपाधिकभेदाभ्युपगमनेति व्याचक्षते।

णत्वान्द्वित्वमिति । ननु "पूर्वत्रासिद्धीयमद्वित्वे" (वा० इति णत्वात्पूर्वमेव द्वित्वं युक्तम् । "वाक् वाक्क्" इति भाष्योदाहरणसिद्धये वर्णद्वित्वेऽपि तत्प्रवृत्तेरावश्यकत्वात् । अन्यथा चर्त्वस्यासिद्धत्वात् गस्यैव द्वित्वे ऽन्त्यस्य चर्त्वे पूर्वत्र गश्रवणाप- पत्तिः । अवसाने चर्त्वस्यासिद्धत्वात् । खर्परत्वाभावेन तस्य चर्त्वसम्भावनाऽपि न । न च कस्य द्वित्वेऽपि अवसाने चर्त्वस्यासि- द्धत्वात् गकारे झशि परे पूर्वस्य जश्त्वे उक्तरीत्यैव चर्त्वाभावे गश्रवणं दुर्वारमिति वाच्यम्, "न मु ने" (पा०सू०८।२।३) इतिवत् पूर्वत्रा- सिद्धीयमित्यस्य द्वित्वे कृते ऽपि प्रत्यासत्त्या 'द्वित्वाश्रयस्य का- कर्त्तव्ये ऽसिद्धत्वं नेत्यप्यर्थ इति न दोषः । एतेन 'द्वित्वे परसवर्णत्वं सिद्धं वक्तव्यम् । संयन्तेत्यत्र त्रियकारकत्वार्थम्' इति वचनसाम- र्थ्येन वर्णद्वित्वे तदप्रवृत्तिरिरसपास्तम् । एतदवयुत्याऽनुवादरूपत्वं

---

पूर्वत्रासिद्धमितिवचनस्य द्वित्वविषये पूर्वत्रासिद्धत्वन्नेत्यर्थेन द्वित्व- मपि पूर्वत्र कर्तव्येऽसिद्धन्नेत्यर्थोऽपि सम्भाव्यते तदभिप्रायेण शङ्कते- *नन्विति* । *णत्वात्पूर्वमेव द्वित्वमिति* । परत्वादिति शेषः । ननु पद- द्वित्व एव तस्य वचनस्य प्रवृत्तेराह—*वाक् वाक् इति* । *तत्प्रवृत्ते- रिति* । पूर्वत्रासिद्धेतिवचनप्रवृत्तेरित्यर्थः । भाष्यीयोदाहरणे "वावसाने" इतिचर्त्वम् । *अन्यथा* । तद्वचनप्रवृत्त्यभावे । *गस्यैवद्वित्व इति* । न च "वावसान" इतिचर्त्वस्य जश्त्वापवादतया चर्त्वाभावपक्षे एव गश्र- इति कथमेतदिति वाच्यम् । "ष्णान्ता षट्" इतिनिर्देशेन क्वचिदपवाद- त्पूर्वमप्युत्सर्गप्रवृत्तिरित्याशयात् । अत्रार्थे भाष्यीयोदाहरणमपि मान- म् । अन्त्यस्य चर्त्वे "वावसान" इत्यनेन । ननु "खरि च" इति पूर्व- गकारस्यापि चर्त्वं भविष्यतीत्यत आह—*अवसान इति* । वर्णद्वित्ववि- षये परिभाषाप्रवृत्तावपि शङ्कते--*न चेति* । अत्रावसाने जायमान- र्त्वशास्त्रस्यासिद्धत्वे तेन निष्पन्नकार्यस्याप्रवृत्तिबुद्धौ ककार एव गश्र- रबुद्धिः । *गकारे* । गकारबुद्धौ । *उक्तरीत्या* । अवसाने चर्त्वासिद्ध- त्वेन । *गश्रवणम्* । "झलाञ्जश्झशि" इतिविहितगश्रवणापत्तिः । *इत्य- प्यर्थ इति* । एवं सति "झलां जश्' इति जश्त्वे चर्त्वे नासिद्धमिति भावः । *एतेन* । वक्ष्यमाणप्रकारेण । तमेव प्रकारमाह—*एतदवेति* सामान्यतो द्वित्वविषये प्राप्तस्यासिद्धत्वाभावस्यैकदेशानुवादरूपत्वं ति

द्विति(१) चेन्न । पूर्वत्रासिद्धीयमित्यस्य द्वित्वे कर्त्तव्ये ऽन्यदसिद्धं नेत्येवार्थो न तु द्वित्वस्याऽप्यसिद्धत्वं नेति तदर्थ इति णत्वोत्तरमेव द्वित्वमिति भावः ।

रोः सुपि (पा०सू०८।३।१६) अत्र खरीत्यनुवर्त्तते । तेन सप्तमीबहुवचनमेवात्र सुप् । "खरवसानयोः" (पा०सू० ८।३।१५) इति सिद्धे इतरनिवृत्तिफलक एवैष विधिरित्याह—रोरेवेति । विपरीतनियमस्तु न । "हलोऽनन्तराः संयोगः" (पा०सू० १।१।७) इति निर्देशात् । द्वित्वे इति । "अचोरहाभ्याम्" (पा०सू० ८।४।४६) इत्यनेन ।

अचोरहेत्यतो द्वे इति, 'नादिनी' (पा०सू०८।४।४८) इत्यतो नेति च वर्त्तते तदाह—न द्वे स्त इति । झरो झरीति लोपस्तु वैकल्पिकः । प्रियचत्वार इति । आङ्गत्वात्तदन्तस्यापि चतुरनडुहोरित्याम् । गौणत्वे त्विति । अत्र यद्वक्तव्यं तत् 'नामी'त्यत्रोक्तम् । यत्तु 'ष्णान्ता' (पा०सू०१।१।२४) इत्यत्र संख्यापदानुवृत्तेः, तस्य च संख्याबोधकशब्दपरत्वात्प्रधानन्यायेन संख्यारूपार्थस्यानुपसर्जनस्यै-

त्व इतिवचनस्येत्यर्थ । पूर्वपक्षं खण्डयति—*पूर्वत्रेति* । "पूर्वत्रासिद्धीयम्" इत्यस्य पूर्वत्रासिद्धमित्यधिकारभवशास्त्रमित्यर्थः । तत्र उपतिष्ठत इत्यध्याहारः । एवञ्च "रषाभ्याम्" इति सूत्रे पूर्वत्रासिद्धमित्यस्याद्वित्व इत्यस्य चोपस्थितौ रषाभ्यां परस्य नो णो भवति । अयञ्च द्वित्वाभिन्न-पूर्वत्रासिद्धो भवतीत्यर्थः । एतेन यत्फलितंतदाह—*पूर्वत्रासिद्धीयमद्वित्व इति* ।

"रोः सुपि" इति सूत्रे सुपीत्यनेन प्रत्याहारग्रहणं कुतो नेत्याशङ्का-निवारणायाह—*अत्र खरीति* । रोर्यदि विसर्गस्तर्हि सुप्येवेति भवत्वित्यत आह—*विपरीतेति* । ननु चतुर्ष्वित्यादौ सत्यपि द्वित्वे क्षतिविरहः । "झरो झरि" इतिलोपेन रूपसिद्धेरत आह—*झरो झरीतीति* *प्रधानन्यायेनेति* । "प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः" इतिन्यायेनेत्यर्थः । ननु 'पञ्च ब्राह्मणाः' इत्यादावपि पञ्चत्वसङ्ख्यायां

(१) *अनुवादरूपत्वादिति* । पूर्वत्रासिद्धीयमद्वित्व इति परिभाषासिद्धस्येति शेषः । तथाच अयं वाक्यार्थः पर्यवसन्नः । पूर्वत्रासिद्धीयमिति परिभाषासिद्धस्य वार्तिकोक्तपरसवर्णसिद्धत्वस्य च परिभाषासिद्धासिद्धत्वसमुदायात् पृथक्कृत्यानुवादरूपत्वात् नोक्तविधार्थसाधकत्वमिति । अत्रानुवादफलंतु अन्तरंगपरिभाषाप्राप्तासिद्धत्वस्यापि बाध इति भावः ।

वग्रहणेनोपसर्जने षट्त्वमेव न। संख्यापदेन च संख्येयमुच्यते। अन्
संख्येयपरपञ्चादौ तस्य प्राधान्यात् संज्ञा सिद्धा। यद्वा षडित्यन्
र्था संज्ञेति न गौणे सेति। तन्न। "प्रियपञ्चा द्रौपदी" इत्यत्र "
षट् (पा०सू०४।१।१०) इति डाप्निषेधानापत्तेः। आकडारसूत्रे
भाष्येऽस्या डुसञ्ज्ञया व्यवहाराच्च। सर्वनामसंज्ञावदत्रोपसर्जननि
षेधानारम्भाच्च। सर्वनामसंज्ञासूत्रस्थेन 'षड्भ्यः' (पा०सू०७।१।२
इति सूत्रविषयभाष्येण विरोधापत्तेश्चेत्यलम्।

कमलिति। 'तदाचष्टे' इति णिचि ष्ठवद्भावात् टिलोपे "कर्त
क्विपि" 'णेरनिटि' (पा०सू०६।४।५१) इति णिलोपः। वस्तु
लण्सूत्रे "न हि पदान्ताः परेऽणः सन्ति, ननु चायमस्ति कर्तृ ह
इति भाष्यात् 'भोभगो" (पा०सू०८।३।१७) इति सूत्रे 'वृक्षव् क
ति' इति भाष्यस्यैकदेश्युक्तित्वात्,(१) 'कमल्' 'वृक्षव्' इत्यादेर

---

आश्रयांशे विशेषणतया प्राधान्याभावेन तन्न्यायविषयता प्रकृते न
म्भवति, उभयसत्वे हि स न्याय इत्यत आह-*संख्यापदेनेति*। न्याय
नाश्रयणेनापि गौणव्यवृत्तिमाह-*अन्वर्थेति*। 'षड् ब्राह्मणा' इत्यत्र
षट्शब्दे प्रयुक्तेऽन्यव्यवच्छेदो भवति संख्येयस्य प्रधान्येन प्रतीतिर्भव
तथा प्रकृतेऽपि षडिवाचरतीत्यर्थेऽत्र विवक्षित इति भावः। *अस्याः
षट्संज्ञायाः। *डुसंज्ञयेति*। न हि तदा निरुक्तार्थकत्वमस्य सम्भवति
भावः। ननु डुसंज्ञापक्षे तादृशार्थकत्वाभावेऽपि षट्संज्ञापक्षे तु सम्भ
ऽस्त्येवेत्यत आह-*सर्वनामेत्यादि*। मुख्यं समाधानमाह-*सर्वनाम
ज्ञासूत्रस्थेनेति*। 'अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवति' इ
भाष्येणेत्यर्थः। तस्माद्गौणे षट्त्वसत्त्वे नुड्व्यावृत्तिरेव संपादनीयेति
त्तम्। *नन्वयमस्ति कर्तृ हर्तृ इतिभाष्यादिति*। आदौ 'न हि पदान्
परेऽण' इतिसमान्यतोऽभिहितं ततो नचायस्तीत्यनेन परोऽण् अज्रू
एव दर्शितो न तु हल्रूप इति परस्याणोऽनुनासिकत्वयोग्यस्याज्रूप
स्वीकारः सम्भवति न तु हलः। अत्रानुनासिकत्वयोग्येत्याभिधानात्
अन्तर् प्रातरित्यस्य लिह् इत्यस्य सत्त्वेऽपि न क्षतिः। *तेषामनुना

---

(१) *एकदेश्युक्तित्वादिति*। लण्सूत्रस्थभाष्यस्यायमाशयः। अज्रूपाणामणामवश्यं नु
सिकयोग्यानामभिसम्भवेऽपि तथाभूतानां तेषां हलामनभिधानं भवत्येवेति।

स्वर्—लिट्—इत्यादे रेफहकारान्तस्य तु "अमोऽनुनासिका नहौ" इति निषेधेनानुनासिकत्व
ताभावादेव नक्षतिः। अतस्तदेवोक्तम्—कमल्वृक्षव् इत्यादेरिति*।

भिधानमेवोचितम् ।(१)यान्तास्तु नैव सन्ति ।(२)क्विपि 'लोपो व्योः' (पा०सू०६।१।६६) इति यलोपात् । णिलोपस्य स्थानिवत्त्वन्तु न यलोपे तन्निषेधात् ।

प्रशानिति शाम्यतेः क्विप् 'अनुनासिकस्य' (पा०सू०६।४।१५) इति दीर्घः । अयं शान्तिमाश्रयान्यतरवद्वाचकः सत्त्ववाचीति स्वरा-

---

कत्वयोग्यत्वासम्भवात् "अमोऽनुनासिका न ह्रौ" इत्युक्तेः । 'कमल्' इत्यत्र लकारस्य तादृशस्य सम्भवेऽपि नन्वयमस्तीत्यनेनाच एव प्रदर्शनेन तस्याप्यनभिधानम् । ननु यन्तकतिपयादिसम्भवोऽस्त्येवेत्यत आह-*क्विपीति* । न च "प्राग्दीव्यतोऽण्" इत्यत्र यथा दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणं तथा कतिपयशब्दैकदेशयान्तानुकरणे यान्तस्य सम्भवोऽस्त्येवेति वाच्यम् । पूर्वोक्तभाष्यस्वारस्येनानुकार्यस्वरूपभङ्गाभिया च तत्रानुनासिकत्वयोग्यतायाः सम्भवेऽप्यनभिधानं कल्प्यत इति भावः।

ननु प्रशाम्शब्दस्य स्वरादौ पाठनाव्ययत्वमिति प्रशामाविन्याद्यनुमपन्नमत आह-*अयमिति* । "अव्ययम्" इतिमहासंज्ञाबलेनासत्त्ववाचिनो ग्रहणेनास्य तत्र पाठश्चरितार्थः । स्वरादीनां तु पाठसामर्थ्यात्सत्त्वार्थकस्याप्यव्ययत्वम् ।

*मूले किमः कः स्यादिति* । अत्र किम्शब्दो जिज्ञासिते शक्तः । अत्रेदमवधेयम् । उद्देश्यवाचकस्य किंशब्दस्य विधेयवाचकशब्दसमभिव्याहारे तत्पदोपस्थाप्यतावच्छेदकधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वोपलक्षितो यो वक्तृजिज्ञासितो धर्मस्तद्धर्मावच्छिन्नबोधक-

---

(१) यान्तानां तु संभव एव नास्तीत्याह—*यान्तास्त्विति* । अथवा । ननु लण्सूत्रस्थभाष्यप्रामाण्यात् अवसानपरकस्यैव यणन्तस्यैवानभिधानकल्पनमुचितं नत्वौजसादिष्वपि परतः । तथाविधप्रमाणानुपलब्धेः । एवञ्च भोभगोरितिसूत्रस्थभाष्यस्यैकदेशयुक्तित्वकल्पनमपि नेत्यभ्युपेत्याह-यान्तास्त्विति ।

(२) विचस्तु लोपो व्योर्वलि इति सूत्रस्थ 'क्वावुपसंख्यानम्' इति वार्तिकतत्प्रत्याख्यानपरभाष्याभ्यामनभिधानमिति भावः । भोभगोरितिसूत्रेऽपूर्वग्रहणस्य हलि सर्वेषामित्यत्राशोहलो विशेषणात् हल्यशिलोपो यथास्यादिति 'वृश्चव्करोति' इत्यत्र तदभावप्रयोजनं भाष्यकृतोक्तमिति तदनभिधाने प्रमाणाभावः । न च "नपदान्ताः परेणः सन्ति" इति लण्सूत्रस्थभाष्यमेव प्रमाणमिति वाच्यम्, विकल्पासहत्वात् । किं पराण्नावच्छिन्नप्रतियोगिताकाभावस्तदर्थः, उत अनुनासिकत्वयोग्यहलण्प्रतियोगिताकाभावो वा । नाद्यः । ननु चायमस्ति कर्तृहर्तृ इति भाष्यविरोधात् । न द्वितीयः । कण्ठरवेणोक्त वृश्चव् करोति इति भाष्योदाहरणविरोधात् । तथा चानुनासिकत्वाविशिष्टहलणभावः । स च विशेषणाभावप्रयुक्ताविशिष्टाभावः तदाविष्कृतोऽनुगन्तव्यः । एवञ्च नपदान्ताः परेणः सन्ति इत्यस्यानुनासिकरूपकार्यभाजो न सन्तीत्यर्थलाभात् । भाष्यकृतोदाहरणानुकूलमिति तु भो भगो इति सूत्रस्थकैयटाशयमभिप्रेत्य मूलमिति ध्येयम् ।

अत्र—मान्यास्तु सत्यन्यशूग्रहणानुवृत्तौ वृचव् हसतीत्यत्र वकारलोपवारणायानभिधानमवश्यमनुगन्तव्यम् । अन्यथाक्वाभिधानं क्वानभिधानमित्यत्र विनिगमनाविरहः स्यात् । एवञ्चोक्तविधलण्सूत्रस्थभाष्यैकवाक्यतया प्रयोगमात्रावच्छेदेनैवानभिधानाभ्युपगमे लाघवमित्याहुः ।

दिपाठेऽप्यस्य नाव्ययत्वम्। सारूप्यत्वाचिन्त्यसत्त्वार्थके तु स पा
सार्थक इति दिक्।

विभक्ताविति। 'अष्टन आ' (पा०सू०७।२।८४) इत्यत्र

---

ता वाच्या। स च धर्मः 'को ब्राह्मणः?' 'कः पण्डितः'? इत्यादौ चैत्रत्वा
दिरूप एव। न तु जिज्ञासाविषयतावच्छेदकांशे तस्यानुगमकस्य शा
क्यसम्पादकस्य धर्मस्य विशेषणत्वम्। तेन रूपेण जिज्ञासाविषयता
च्छेदकधर्मस्य शाब्दबोधे मानाभावात्। एवञ्च 'को ब्राह्मण' इत्यतो ब्रा
ह्मणत्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन जिज्ञासितो
धर्मस्तद्वान् ब्राह्मण इत्याकारकोऽन्वयबोधः श्रोतुः। वक्तुश्च किञ्चि
र्मावच्छिन्नोद्देश्यतानिरूपितं ब्राह्मणत्वविच्छिन्नविधेताशालिज्ञानं मे जा
तामित्याकारिका जिज्ञासा प्रथमं भवति। सा च वक्तृवाक्यजन्यस
भिव्याहृतब्राह्मणादिपदार्थतावच्छेदकावच्छिन्नविधेयतानिरूपितकिञ्चि
र्मावच्छिन्नोद्देश्यताकबोधेन निवर्तते।

न चैवम् 'प्रमेयो ब्राह्मण' इतिवाक्यादपि तादृशजिज्ञासानिवृत्ति
स्यात्।: एतद्वाक्यस्य किञ्चित्प्रमेयत्वादिरूपधर्मावच्छिन्नोद्देश्यकबोधज
कत्वादिति वाच्यम्, पूर्वोक्तानुगमकधर्मोपलक्षितधर्मस्य विधेयन्यूनवृ
त्तित्वेनापि विशेषणीयत्वात्। विधेयबोधककिम्पदस्य तु समभिव्याहृत
दार्थतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छे
तया जिज्ञासितो यो धर्मस्तदवच्छिन्ने शक्तिः। यथा 'द्रव्यं किमस्ति' इत्या
दौ। यत्र सर्वनामसंज्ञक किंशब्दः प्रयुज्यते तत्र पूर्वोक्तदिशा बोधः कल्पनी
यः। वितर्कबोधककिंशब्दस्य त्वव्ययसंज्ञकस्य प्रयोक्तृसमवेतसम्भाना
कज्ञानबोधकता। यथा

किमिन्दुः किम्पद्मं किमु मुकुरबिम्बं किमु मुखम्।

इत्यादौ। तादृशज्ञाने च प्रकारितासम्बन्धे नेन्द्वादिपदार्थस्यान्वयः
तादृशज्ञानस्य तु विशेष्यतया प्रथमान्तार्थेऽन्वय इति। यत्र तु 'कति
घटाः सन्ति' इति प्रयुज्यते तत्रापि जिज्ञासित एव किम्पदार्थः। डति
प्रत्ययार्थः संख्यात्वावच्छिन्नः। एवञ्च संख्यात्वन्यूनवृत्तिदशत्वाद्यवच्छि
देश्यतावच्छेदकताकज्ञानं जायतामित्याकारेच्छाविषयाभिन्नसंख्याविशि
ष्टाः सन्तीति बोधः। 'दश घटाः सन्ति' इतिवाक्यात्सा आकाङ्क्षा नि
र्तते। यत्र 'कस्य राजा पटुः' इत्यादावुद्देश्यतावच्छेदकीभूतषष्ठ्यर्थे किं
शब्दार्थान्वयस्तत्र यादृशधर्मविशिष्टसम्बन्धे येनसम्बन्धेन जिज्ञासित
न्वयस्तत्र तेनैव सम्बन्धेन विशेषधर्मावच्छिन्नान्वितता दृशसम्बन्धधर्मा
वच्छेदककबोधः। एवं सर्वत्रोहनीयम्।

ऽवृत्तेरिति भावः । अक्कसहितस्यापीति । तन्मध्यपतितन्यायेन तस्यापि किंशब्दत्वात् । अङ्गानपेक्षत्वेनान्तरङ्गत्वादादेशात्पूर्वमकच् । यद्यपि निर्दिश्यमानपरिभाषया न प्राप्नोति । अत एव "भिन्धकी-त्वत्राकचि धित्वन्न प्राप्नोति" इति भाष्ये पूर्वपक्षं कृत्वा "अन्तरङ्गत्वा-द्धित्वेऽकच्' इत्याद्युक्तम्, तथापि 'आवृत्त्याश्रयणेन साकच्कस्या-देश' इति कैयटः । (१)

"तन्वव्ययसर्वनाम्नाम्" इतिसूत्रेण किंशब्दादकाचि कृते शब्दान्त-रत्वादादेशो न स्यादत आह—*तन्मध्येति* । ननु स्वार्थे परिपूर्णस्य कु-त्साद्यर्थसम्बन्ध इत्यन्तरङ्गत्वात्पूर्वकादेशेऽकाचि 'कक' इति स्यादत आ-ह—*अङ्गानपेक्षत्वेनेति* । अङ्गसंज्ञापेक्षप्रत्ययानपेक्षेत्यर्थः । यद्यपि प्रियकुत्सनादियोगः सुबन्तस्यास्ति तथापि सुपः शब्दतो निमित्तत्वेनानु-पादानादन्तरङ्गत्वमकचः । कादेशे तु विभक्तेः शब्दतो निमित्तत्वेनाश्र-यणाद्बहिरङ्गत्वमिति भावः । *अत एव* । तन्मध्यपतितन्यायविषयेऽपि निर्दिश्यमानपरिभाषाप्रवृत्तिस्वीकारादेव । *अन्तरङ्गत्वादिति* । अक-चःकुत्साविषयातिङन्ताद्विधानेन बहिरङ्गत्वं, ध्यादेशस्य तु तदन्तगर्त-हिझलपेक्षत्वेनान्तरङ्गत्वामितिभावः । *कैयट इति* । एतेनारुचिः सूचि-ता । यथा स्थानिवद्भावविषये स्थानिवुध्यैव कार्यप्रवृत्तेस्तत्र निर्दिश्य-मानपरिभाषाया अप्रवृत्तिस्तथा तन्मध्यपतितन्यायेनापि तद्बुध्यैव का-र्यप्रवृत्तेरेतद्विषयेऽपि निर्दिश्यमानपरिभाषाया अप्रवृत्तिकल्पनेनैव साकं-च्कस्यादेशसिद्धावावृत्त्याश्रयणं व्यर्थमिति । एतेन 'निर्दिश्यमानपरिभाषाया व्याख्यानावसरे परिभाषेन्दुशेखरेऽकज्विषये निर्दिश्यमानपरिभाषाया अप्रवृत्तिरुक्ता । इह तु साकत्वस्य कार्यप्राप्तौ निर्दिश्यमानपरिभाषाप्रवृत्तिं स्वीकृत्य समाधानं कृतमिति विरोध' इतितदेतत् प्रत्युक्तम् ।

(१) *कैयट इति* । नच 'किमः कः' इत्यपनीय कादितिन्यासे त्यदादिनामित्यस्यानुवृत्त्या त्यदा-दीनां ककारात्परस्याकार इत्यर्थेनेष्टासिद्धौ किमः कादेशविधानसामर्थ्यात् निर्दिश्यमानपरिभाषाऽप्रवृत्तिद्वारा साकच्कस्यादेशे व्यर्थाऽऽवृत्तिरिति वाच्यम् । कुतः इत्यादौ ककारद्वयश्रवणाय 'किमः' इत्यस्यानुवृत्ते-रावश्यकत्वेन उक्तविधन्यासस्याकिञ्चित्करत्वात् । नच कादित्यस्यानुवृत्तावपि 'ङश्' 'तिहोर्वा' इति न्यासे-न कुत इत्यस्याऽपि सिद्धौ उक्तविधन्यासस्य सुकरत्वमक्षतमिति वाच्यम् । एवमपि एकता एकत्र इत्या-दौ दोषप्रसङ्गेनोक्तन्यासाकिंचित्करत्वस्य तादवस्थ्यात् । यदातु किमः कः इत्यपनीय 'इमः' इत्येवन्यासः कार्यः । त्यदादीनामित्यस्यचानुवृत्तिः । तथासति त्यदादीनामिमअः इति तदर्थः पर्यवसन्नः । तत्रान्त्यस्य त्यदादिनाम इत्येनैव सिद्धावन्त्यार्थं कुतः इत्यादिसिद्धयेतु उक्तविधन्यास एवाङ्गीकार्यः इति सर्वेष्टसिद्धौ न कापि दोष इति विभाव्यते तदा विशिष्टोच्चारणसामर्थ्यादेव निर्दिश्यमानपरिभाषाऽप्रवृत्तिद्वारासाक-च्कस्यादेश इत्यावृत्तिर्विफलेति बोध्यम् । अत एवाकच् विषये "अत्र निर्दिश्यमानस्येति परिभाषा न प्रवर्तते अनित्यत्वाच्चे" ति बृहच्छब्देन्दुशेखरोऽप्येवमेवसगच्छते । इयमेव कैयट इत्यनेनारुचिः सूचिता ।

इदमो मः (पा०सू०७।२।१०८) 'तदोः सः सौ' (पा०सू० ७।२।१०६) इत्यतोऽनुवृत्तेराह—साविति।

इदोय् (पा०सू०७।२।१११) 'यः सौ'(पा० सू०७।२।११०) इत्यतः साविति वर्त्तते।

दश्च (पा०सू०७।२।१०९) इहा "अष्टन" (पा०सू०७।२।८४) इत्यतो 'विभक्तौ' इत्यनुवर्त्तते सौ इदमो दस्यासम्भवात् तदा विभक्ताविति।

हलादाविति। आपीति वर्त्तते। हल्यशिति वक्तुं युक्तम्(१) अक इति पर्युदासादिदं गौणे न प्रवर्त्तते इत्याहुः। नन्विदोऽन्त्य लोपः स्यादत आह—नानर्थके इति। इयमुपधासंज्ञासूत्रे भाष्ये स्पष्टा(२)। फलानामन्यथोपपादनेन भाष्ये प्रत्याख्याता च

---

*इदमो मः*। यद्यपि—

इदमस्तु सन्निकृष्टं समीपतरवर्त्ति चैतदो रूपम्।
अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्॥

इत्यभियुक्तोक्तवचनेन सन्निकृष्टसामान्ये शक्तिरिदमशब्दस्येति लभ्य सन्निकर्षश्च परमाण्वादिसाधारण इति 'अयं परमाणुः' इत्यादिव्यवहारापत्तिः। तथापि सन्निकर्षप्रयोज्या या लौकिकविषयता तच्छालि या बुद्धिस्तद्विषये इदम्शब्दस्य तादृशबुद्धिविषये समीपतरपदार्थे तदः शक्तिः।

मात्रालाघवानुरोधेनाह—*हल्यशितीति*। शित्वात्सर्वादेशोऽयं गौणेऽनादेशाप्रवृत्त्यर्थम् "त्यदादीनाम्" इति केचिदनुवर्त्तयन्ति दयुक्तमिति सूचयन्नाह—*अक इति पर्युदासादिति*। संयोगवद्विभागस्य विशेषावगतिहेतुत्वात् 'अवत्साधेनुरानीयताम्' इत्यत्र सम्भवद्वत्स सम्बन्धवती या गौः सैवानीयते। तथैहाऽक इत्यनेन ककारयोग्यता न व्यावर्त्यत इति भावः। "नानर्थक" इतिपरिभाषाया अभावेऽपि "इ

---

(१) *वक्तुं युक्तमिति*। पदलाघवाभावान्नतथोक्तमिति भावः। नच वर्णलाघवमेव कुतो न कृतं, तस्येत्संज्ञालोपसर्वादेशपररूपप्रक्रियाकृतगौरवपराहतत्वात्। 'लोपः' 'आप्यकः' 'अद्यर्व' विपरीतन्यासस्तु न युक्तः। नानर्थकेत्येतत्प्रत्याख्यानाय आभ्यामित्यादौ अनो निवृत्त्या लोपस्य स्वापत्तेः।

(२) *भाष्येस्पष्टा इति*। अस्यां ज्ञापकंच इदोऽय् पुंसि इति सूत्रस्थं इद् ग्रहणम्। अन्यथा इदमोमः दश्च, यः सौ, अय् पुंसि, इतिन्यासेनैव तद्व्यर्थं स्यात्। ज्ञापितायांच तस्याम् अनर्थकेऽन्त्य विधेरप्रवृत्त्या इयामित्यस्यासिद्धया इदोऽय् पुंसि इति सूत्रस्थमिद्ग्रहणं चरितार्थम्। अनभ्यासग्रहणं स्तु 'अर्तिपिपर्त्योश्चेति' निर्देशेन ज्ञाप्यते इति बोध्यम्।

प्रत्याख्याने 'अनापि' इत्यतो अन् इत्यनुवर्त्य हलीति सप्तम्याः षष्ठीं प्रकल्प्यान एवालोन्त्यस्येति लोपे पररूपे चेष्टसिद्धिर्बोद्ध्या।

ननु दीर्घापेक्षया लोपस्य नित्यत्वात्पूर्वं लोपे अ भ्यामिति स्थिते अस्याकाररूपत्वेनादन्तत्वाभावाद्दीर्घो न स्यादित्यत आह-आद्यन्तवदिति। "आदिरन्त्येन" (पा०सू०१।१।७१) इति सूत्रोक्तरीत्याऽऽद्यन्तशब्दयोर्विशिष्टशक्ततया तत्प्रयुक्तकार्याण्यसहाये न स्युरित्ययमारम्भः। एकस्मिन्निति। असहाये इत्यर्थः। तदादितदन्तयोः क्रियमाणं कार्यं तदादौ तदन्त इवासहायेऽपि स्यादित्यन्वयः। उपमेये सप्तमीदर्शनात्सप्तम्यन्तादिवार्थे वतिस्तदाह-आदाविवेति। एकस्मिन्नित्युक्तेर्दरिद्रातेरिवर्णान्तलक्षणोऽज्न। आदिवत्त्वफलमौपगवेऽण आद्युदात्तत्वम्। कार्यस्य प्राधान्यादयमपि कार्यातिदेश एव तदाह-कार्यमिति।

ननु इद ए इति स्थिते स्मैभावात्परत्वादनादेशे 'सकृद्गतौ' इति न्यायेन स्मै न स्यादत आह-नित्यत्वादिति। स्मै आदेशे तु न अनादेशो हलि लोपेन बाधात्। लक्ष्यानुरोधेन बाधकाबाधितकृताकृतप्रसङ्गस्यैवात्र ग्रहणात्।

---

लोप" इत्यत्र यथा दोषाभावस्तथाह-*प्रत्याख्यान इति*।

आद्यन्तशब्दयोरवयवबोधकतयाऽवयवस्य चावयविनं प्रति नित्यसाकाङ्क्षत्वेनाह—*विशिष्टशक्ततयेति*। आदिशब्दस्य स्वाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वघटितसमुदायघटकवर्णाभावविशिष्टे यत्तादृशसमुदायघटकवर्णस्य स्वपूर्वत्वसम्बन्धेन वैशिष्ट्यं, तद्विशिष्टे शक्तिः। अन्तशब्दस्य तु स्वपूर्वत्वसंबन्धावच्छिन्नतादृशसमुदायघटकवर्णस्य योऽभावस्तादृशसम्बन्धेन तादृशसमुदायघटकवर्णविशिष्टस्तत्र शक्तिः। उभयत्र वैशिष्ट्यं सामानाधिकरण्यसम्बन्धेन। *असहाये न स्युरिति*। सर्वत्र विशिष्टाभावसत्त्वात्।

*उपमेय इति*। एकस्मिन्निति सप्तमीदर्शनादित्यर्थः। 'मथुरावत्पाटलिपुत्रे प्राकारः' इतिवाक्यात्पाटलिपुत्राधिकरणकप्राकारतौल्यप्रतीतेरनुभवसिद्धत्वादिति भावः। *इति स्थित इति*। अस्य त्यदाद्यत्वे कृते इति शेषः। ननु स्मैआदेशे कृतेऽपि अनादेशस्य प्राप्त्याऽनादेशस्यापि स्मैभावतुल्यतया नित्यत्वात् ङेस्मै इत्यनुपपन्नमत आह—*स्मैआदेशे त्विति*।

अकोऽकोरित्यनयोः फलमाह—ककारयोगे त्विति। "अव्ययसर्वनाम्नाम्" (पा०सू०५।३।७१) इत्यकचीति भावः। अस्याव्ययत्वेऽपि तन्मध्यपतितन्यायात्ताद्विशिष्टे प्राप्तिरिति बोद्धव्यम्।

इदमोन्वा (पा०सू०२।४।३२)। अनुदात्तत्वं तु 'आभ्याम्' इत्यादौ 'ऊडिदम्' (पा०सू०६।१।१७१) इति "सावेकाचः" (पा०सू०६।१।१६८) इति वा विभक्त्युदात्तत्वाभावाय उभयत्राप्यनुवृत्तयोः ष्भ्यामन्तोदात्तादित्यस्य सम्बन्धात्। एवञ्च आभ्याम् इत्यादि सर्वानुदात्तम् "एभिरग्ने मेणा तदेषाम्" इत्यादौ तथा श्रवणात्। नन्वेवमपि हलि लोपनाऽऽभ्यामित्यादेः सिद्धावनुदात्तत्वेनैव सिद्धावशविशावर्थमत आह—साकच्कार्थमिति। शित्त्वात्सर्वादेश इति भावः। संज्ञोपसर्जनयोस्तु नेदम्। "एतदस्त्रतसोः" (पा०सू०२।४।२३) इत्युत्तरसूत्रसाहचर्यात्। न च त्यदाद्यत्वेन सिद्धेऽकारविधानमेव साकचि सर्वादेशार्थं भविष्यति किं शित्त्वेनेति वाच्यम्, अन्यार्थतापत्तेः।

द्वितीयाटौ (पा०सू०२।४।३४)। पूर्वसूत्रादिदम इति 'एतदस्त्रतसोः' (पा०सू०२।४।२३) इत्यत एतद इति चानुवर्त्तते, अनुदात्त इति च। विधातुमिति। विधानमत्राज्ञातज्ञापनमेव न तु प्रवर्त्तन

---

*अकोकोरित्यनयोरिति*। "अनाप्यक" इत्यस्य नेदमदसोरकोः इत्यस्य चेत्यर्थः।*उभयत्रापीति*। "सावेकाच" इति सूत्रेऽपकर्षेणान्तोदात्तादित्यस्य"ऊडिदम्" इतिसूत्रे चानुवृत्त्याऽन्तोदात्तादित्यस्य सम्बन्धादित्यर्थः।*सर्वानुदात्तमिति*। प्रकृतिरनेन, प्रत्ययस्त्वनुदात्तौ सुप्पितावितिनेनानुदात्त इति भावः। अत्रार्थे साधकमाह—*एभिरग्न इति*। यथा साकच्कार्थत्वं तदाह—*शित्वादिति* तदुदाहरणम् 'इमकाभ्यां कृतम्' 'आभ्यांभुक्तम्' इति।

*उत्तरसूत्रेति*। तत्र हि त्रतसौ निमित्तत्वेनोपात्तौ तयोश्च संज्ञोपसर्जनयोरसम्भवात्सर्वनामसंज्ञकस्यैव स्थानित्वमित्युत्तरसूत्रेण जायमानादेशस्य संज्ञोपसर्जनभिन्नस्यैव बोध्यत्वमित्यर्थाधिकारानुरोधात्पूर्वत्रस्थमश्ग्रहणमपि संज्ञोपसर्जनभिन्नस्यैव बोधकमिति भावः। *अन्यार्थत्वापत्तेरिति*। अन्त्यस्य त्यदाद्यत्वेन सिद्धावनेनाकारादेशविधानमन्त्यार्थं स्यात्,तथा च "अनन्त्यविकार" इतिपरिभाषया त्यदाद्यत्वबाधनेन दकारस्य स्यात्तदर्थम् "मोराजि" इतिवद्धिकारमात्रबाधनार्थं वा तत्स्यादित्यर्थः।

विषयत्वं, तच्चेदम एवेति नाग्रहः । स्पष्टश्चेदं भाष्य ।

सुगण्द्वस्त्विति । ङ्णोः (पा०सू०८।३।२८) इति टुक् तस्या-सिद्धत्वान्न जश्त्वम् । नलोप इति । नकारलोप इत्यर्थः । न चात्र प्रत्ययान्तत्वात् 'अप्रत्यय' इति निषेधेन प्रातिपदिकत्वाभावात्कथं नलोप इति वाच्यम् । पर्युदासे यथोद्देशेन सिद्धेः । न च कार्यकालपक्षे दोषः । व्यवस्थितपक्षद्वयमध्ये एकतरपक्षेण लक्ष्यसिद्ध्या पक्षान्तरेण दोषदानस्य काप्यदृष्टत्वात् । ध्वनितश्चेदं प्रगृह्यसंज्ञाप्रकरणे भाष्ये । न च प्रसज्यप्रतिषेधे दोषः । तत्पक्षे लोपेनैव जातनिवृत्तेरपि तेन वक्तुं शक्यत्वादिति वाच्यम् (१) । 'नाङिसम्बुद्ध्योः' (पा०सू०८।२।८) इति निषेधेन प्रत्ययलक्षणेन प्रत्ययान्तत्वमादाय निषेधाप्रवृत्त्या दोषाभावात् । स्पष्टश्चेदमर्थवत्सूत्रे भाष्ये(२) ।

न ङि (पा०सू०८।२।८०) । ङौ तु छन्दसीति । 'राजनि'-इत्यादौ भत्वान्नलोपाप्राप्तेः । राजनीवाचरतीत्यर्थे 'अधिकरणाच्च'

*स्पष्टश्चेदम्भाष्य इति* । तत्र हि "अन्वादेशश्च कथितानुकथनमात्रं द्रष्टव्यम् । तद्दृश्यं विजानीयादिदमा कथितमिदमैव यदानुकथ्यत इति सदाचार्यः सुहृदभूतान्वाचष्टे अन्वादेशश्च कथितानुकथनमात्रम्" इति । मूले नलोप इत्युपात्तन्तस्य लोपो नेत्यर्थोऽपि सम्भाव्यत इत्यतो व्याचष्टे—*नकारलोप इति* । कार्यकालपक्षाभिप्रायेण शङ्कते—*न चात्रेति* । *पर्युदास इति* । यद्ययं प्रसज्यप्रतिषेधः स्यात्तदा प्रकल्प्यापवादन्यायेन पूर्वं प्रातिपदिकसंज्ञाया अप्रवृत्तिसम्भावना स्यादिति भावः । *ध्वनितश्चेदमिति* । तत्र हि—कार्यकालपक्षाभिप्रायेण 'अग्नी' इत्यत्राप्रगृह्यस्येत्यनुनासिकप्रतिषेधे क्रियमाणे प्लुतस्य सिद्धत्वात् द्विमात्रत्वाभावात् प्रगृह्यसंज्ञा ईदूदेदिति विधीयमाना न प्राप्नोतीत्याशयेन "एवमपि यत्सिद्धे प्रगृह्यकार्यं तत्प्लुतस्य न प्राप्नोति" इत्याशङ्क्य यथोद्देशपक्षमाश्रित्येदं समाहितम् । यथोद्देशेऽपि शङ्कते—*न चेति* । *निषेधाप्रवृत्त्येति* । 'अप्रत्यय' इतिनिषेधाप्रवृत्त्येत्यर्थः ।

(१) परिहरति-*न ङिसम्बुद्ध्योरिति* । अन्यथा राजानमित्यादौ प्रातिपदिकत्वाभावेन लोपाप्राप्तौ निषेधो व्यर्थः स्यादिति भावः

(२) *अर्थवत्सूत्रे भाष्ये इति* । तत्रहि प्रसज्यप्रतिषेधपक्षे राजा तक्षा इत्यादौ प्रत्ययलक्षणेन प्रत्ययान्तत्वमादाय प्रत्ययो नेति' निषेधेन लोपो न स्यादित्याशंक्य "आचार्यप्रवृत्ति र्ज्ञापयति न प्रत्ययलक्षणे प्रतिषेधो भवतीति यदयं न ङिसम्बुद्ध्योरिति प्रतिषेधं शास्ति" इत्युक्त्या स्पष्टीकृतं भगवता भाष्यकृता ।

इति क्यच् तु लोके नास्त्येव, अनभिधानात् । अत एव 'परमे कं
मन्' इत्यादावयस्मयादित्वाद्भत्वेन सूत्रस्थङिग्रहणप्रत्याख्यानं भ
ष्योक्तं सङ्गच्छते इति भावः । सामर्थ्यादिति' । 'नलुमता' (पा०
सू०१।१।६३) इति निषेधानित्यत्वप्रतिपादनद्वारेत्यर्थः । एतदनित्य
त्वबललब्धमेव 'वान पुंसकानाम्' इति बोद्ध्यम् । न च परमे क्वो
न्नित्यत्र घोषत्वाल्पप्राणत्वादिसादृश्येन पूर्वसवर्णे दकारे 'स्वादि
(पा०सू०१।४।१७) इति पूर्वस्य पदत्वात्प्राप्तनलोपनिषेधेनेदं चरि
र्थमिति वाच्यम् । अन्तरङ्गानपीति न्यायेन संयोगान्तलोपस्यासि
द्धत्वेन च पूर्वसवर्णेऽपि लुक एव प्राप्त्या प्रक्रियालाघवाय लु
एवौचित्यमित्याशयात् । स्पष्टञ्चेदं भाष्ये । ङावुत्तरपदे इति । ए
द्बललब्धमेव—ङौ तु छन्दस्युदाहरणम् इत्युक्तम् ।

न चेति । पञ्चमीसमासेन प्राप्तिः । षाष्ठीमिति । 'वाह ऊ
इत्यत्र ज्ञापितत्वेन तद्देशस्थत्वादिति भावः । कार्यकालपक्षेऽपि वि
द्यां तदप्रवृत्तिः प्रागुक्ता । जत्रोऽञ्ज इति । जत्रयोगे लोकवेदा
द्धतादृशध्वनेर्लिपिविशेषस्य चानुवादकमभियुक्तवचनं न त्विदं वर्ण
न्तरं शिक्षादावपरिगणितत्वेन तत्सत्त्वे मानाभावात् । अत एव
ज्ज्ञानमित्यादौ श्चुत्वसिद्धिः ।

सुब्विधाविति । सर्वविभक्त्यन्तावयवकः समास इति भा

---

यदुक्तं छन्दसीति तदुपपादयति—*राजनीत्यादाविति* । *
एव* । अनभिधानादेव । "न लुमता" इतिनिषेधानित्यत्वे लाघवमा
ह—*एतदनित्यत्वेति* । *अल्पप्राणत्वादीति* । अत्रादिना निरनु
सिकत्वपरिग्रहः । *लुक एवौचित्यादिति* । एवञ्च पूर्वोक्तरीत्या
लुमता" इतिनिषेधानित्यत्वकल्पनमेव वरम् । *एतद्बललब्धमेवेति* ।
निषेधस्योत्तरपदे छन्दसि यत्र 'सुपाम्' इति ङेलुक् तत्र वा सम
तयोर्मध्ये उत्तरपदे प्रतिषेधात् परिशेषाच्छन्दस्येवोदाहरणम् ।

*वाह ऊडित्यत्र ज्ञापितत्वेनेति* । इदमन्यत्र निरूपितम् । ननु "ज
ञ्ज" इत्याकारकं वचनं मुनित्रयानुक्तमित्यप्रामाण्यशङ्कायामाह
*जत्रयोग इति* । *शिक्षादाविति* ।

त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शंभुमते मता

इति तत्रोक्तेः । *अत एव* । वर्णान्तराभावादेव ।

*सर्वविभक्त्यन्तेति* । अत्र सर्वशब्दो यथासम्भवमनेकार्थक

स्पष्टम् । विधिशब्दो भावसाधनः कर्मसाधनश्च । तत्र स्वरादिविषये भावसाधनः । सुब्विषये कर्मसाधनः । कृतीत्येतत्सामर्थ्यात्तुक एव विशेषणमित्याह—कृतितुगिति । पूर्वत्रासिद्धमित्येव सिद्धेऽन्यत्र निवृत्तिफलकोऽयं, तदाह—नान्यत्रेति । अन्यनिवृत्तिफलकसिद्धविषयकविधित्वमेव नियमत्वम्(१) । अत एव पस्पशायां भाष्ये 'पञ्च पञ्चनखा भक्ष्याः' इत्यत्र "भक्ष्यनियमेऽभक्ष्यप्रतिषेधो गम्यते" इ-

तत्राप्येकस्मादनेकविभक्त्यसम्भवादनेकविभक्त्यर्थान्तर्भावाय षष्ठीं कृत्वा समासः कार्य इति भावः । *भावसाधन इति* । अत्र भावो धात्वर्थः तस्मिन् बुद्धिस्थे सति विधिशब्दः क्रियतेऽतो भावसाधन इत्युक्तम् । धात्वर्थस्य प्रथममुपस्थितत्वात्तदनुसारेणाह—*तत्र स्वरादीति* । यद्यपि सूत्रे सुप्शब्दः प्रथममुच्चारितस्तथापि भावसाधनस्य प्रथमोक्तत्वात्तदनुरोधेनादौ स्वरादीत्युक्तम् । स्वरोदाहरणम्-पञ्चार्मम् । अत्र नलोपस्यासिद्धत्वे सति "अर्मे चावर्णं द्व्यच् त्र्यच्" इति स्वरो न । *कर्मसाधनः* । विधीयमान इत्यर्थः । सुब्विधौ यथा । राजभिरित्यादि । अत्रैत्वभावो न । सुब्विधिशब्देऽनेकविभक्त्यर्थान्तर्भावात् 'राजभ्यां' 'राजसु' इत्यादि सिद्धम् । अत्र तुक्शब्दस्य पृथङ्निमित्तत्वे वृत्रहच्छत्रम् । 'वृत्रहच्छाया' इत्यत्र तुक् न स्यादिति—कृति तुगिति । नचैवं कृतीत्युपादानं सफलमेवेति सामर्थ्यात्तुक एव विशेषणमित्युक्त्यसङ्गतिरिति वाच्यम्, सामर्थ्यादित्यस्य स्वार्थान्वययोग्यतावच्छेदकधर्मवत्त्वादित्यर्थात् । *अन्यनिवृत्तिफलक इति* । एवमभिधानेनान्यनिवृत्तेरशाब्दत्वं सूचितम् । *सिद्धविषयकेति* । सिद्धः शास्त्रान्तरासिद्धो विषयो यस्येत्यर्थः । *अत एव* । नियमस्थलेऽन्यनिवृत्तेः फलितत्वादेव । *भक्ष्यनियम इति* । अत्र नियमपदोपादानेन परिसङ्ख्याऽपि नियम एवेति भगवता

(१) विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥ इति मीमांसकानां समान्यतो विधित्रयविषयिणी व्याख्या । तत्र अपूर्वविधि—नियमविध्योरननुष्ठाने प्रत्यवायजनकत्वम् । अत्रापूर्वविधौ न विवादः । नियमविध्युदाहरणं तु 'व्रीहीनवहन्ति' इति । तत्रापूर्वाग्निहोत्रविधिविहितपुरोडाशस्य प्राप्तिसत्त्वेऽपि नखाविदलनघर्षणादिना वैतुषीकरणसंभवात् भिन्नभिन्नयागकर्तुरिच्छया केनचित् नखाविदलनेन, केनचित् घर्षणेन, केनचिदवघातेन, इति भिन्नभिन्नप्रक्रियया कर्मवैगुण्याऽऽपाताच्च व्रीहीनवहन्तीति वाक्यमवघातनिष्पन्नतण्डुलैः यदि पुरोडाशः क्रियते तदाऽपूर्वं ( पुण्यम् ) उत्पद्यते नान्यथा इति नियमयति । एवञ्चाननुष्ठाने प्रत्यवायजनकत्वं यत्र भवति तत्र नियमविधिः ।

परिसंख्याविधौ तु—अनुष्ठाने प्रत्यवायजनकत्वाभावे सति अननुष्ठाने प्रत्यवायाजनकत्वम् । यत्र ... प्राप्तिः तत्रेयं परिसंख्या । यथा मांसभक्षणे पामराणां स्वभावत एव प्रवृत्तिः, तत्रेदं शास्त्रं मांसभक्षणे, ... इच्छाचेत् तर्हि पञ्चनखानामेव मांसं भक्ष । नतु सर्वथैव मांसं भक्षेति । एवञ्च परिसंख्यायाम् अननुष्ठितेऽपि प्रत्ययाजनकत्वरूपोऽधिकोंऽशः । सतु नियमविधौ नास्ति । एवञ्च भाष्यकारै र्यत्किंचित् नियमत्वमादाय 'परिसंख्यानियमरूपा' इति यद्बोधितं तस्य तात्पर्यंतु मीमांसकैरादृतपरिसंख्याया उदाह-

त्युक्तम्, तदाह—इत्थासिद्धत्वादिति। इत्यन्यत्र विस्तरः। सुब्विधि-
शब्देन सुप्त्वतद्व्याप्यधर्मावच्छिन्नोद्देश्यकविधेर्ग्रहणम्। एतेन दण्डि-
ष्वित्यादौ षत्वरूपसुब्विधौ आभात्‌सिद्धत्वविधानार्थमिदमित्यपास्तम्,
वैरूप्यापत्तेश्च। संज्ञाविधौ 'दण्डिदत्तौ' 'दत्तदण्डिनौ' अत्र नलोपे
दण्डिशब्दस्य घित्वे पूर्वनिपातापत्तिः। इष्यते त्वनियमः। असि-
द्धत्वे तु अघित्वात्सिद्ध्यति। न च पूर्वनिपाते नलोपो, नलोपे च
घित्वे पूर्वनिपात इत्ययुक्तम्। यस्य पूर्वपदत्वे घित्वं भवति तत्पूर्व-
मेव प्रयोक्तव्यमिति सूत्रार्थान्न दोषः। न च घित्वे बहिरङ्गतया०

---

ध्वनितम्। *तदाह*। तदेव सूचयन्नाह। *अवच्छिन्नोद्देश्यकेति*।
अत्रोद्देश्यत्वं स्थानित्वनिमित्तत्वान्यतरत्वरूपम्। निमित्तत्वञ्च यद्बुद्धि-
यत्कार्यप्रयोजिका तत्त्वम्। अत एव 'दण्डिषु' इत्यत्र विधायकत्वस-
सङ्गच्छते। तत्रादेशविधायकस्यादेशप्रत्यययोरित्यस्य प्रवृत्तौ प्रत्यय-
वच्छिन्नस्य बुद्धिनिमित्तं प्रत्ययत्वञ्च नैतादृशमिति भावः। *इदमिति*
सुब्विधिपदमित्यर्थः। न च भिस्त्वस्य सुप्त्वव्याप्यत्वाभावेन तदवच्छि-
न्नोद्देश्यके ऐसादेशेऽपि नियमत्वानुपपत्तिरिति वाच्यम्। केवलभिस्त्वस्य
सुप्त्वव्याप्यत्वाभावेऽपि निमित्ततावच्छेदकस्याङ्गसंज्ञाप्रयोजकत्वविशिष्ट-
भिस्त्वस्य सुप्त्वव्याप्यतया तदवच्छिन्नोद्देश्यकादेशस्यापि सङ्ग्रह-
स्सम्भवात् वैरूप्यापत्तेः। किञ्चिदंशे विधायकत्वं किञ्चिदंशे नियामक-
मिति स्वीकारे विभिन्नस्वभावत्वापत्तेरित्यर्थः। यद्यपि "संज्ञाविधौ"
इत्यस्य 'पञ्च' इत्यत्र नलोपे कृतेऽपि षट्संज्ञां प्रति नलोपस्यासिद्ध-
त्वात्पो निषेधरूपं प्रयोजनं मूले एव स्फुटं तथापि तत्र षट्संज्ञां विना लु-
ऽप्राप्त्या नलोपस्यैवाप्राप्तिः स्यादतः प्रथमं षट्संज्ञाप्रवृत्तिर्वाच्या ता-
दाय यथोद्देशपक्षाश्रयणेन तत्प्रयोजनमन्यथा सिद्धम्। न च 'पञ्चभि-
'सप्तभिः' इत्यत्र नलोपासिद्धत्वेन षट्त्वे "झल्युपोत्तमम्" इतिसूत्रप्र-
त्तिः प्रयोजनमिति वाच्यम्। स्वरविधावित्येव सिद्धेरत आह—*संज्ञा-
विधावित्यादि*। *दण्डिदत्तौ*। *दत्तदण्डिनाविति*। एवंरूपौ द्वा-
शब्दौ भाष्येऽत्रैव संज्ञाविधावित्यस्य प्रयोजनकथनादिष्टाविति निश्चीय-
अत एवोक्तम्—*इष्यते त्वनियम इति*। *पूर्वनिपाते नलोप इति*।
रनिपाते तु "उत्तरपदत्वे चापदादिविधौ" इति निषेधः पदसंज्ञायाः स्या-
दिति भावः। *इति सूत्रार्थात्*। एतादृशार्थे प्रकृतोदाहरणे प्रयोजन-

---

रणं स्वशास्त्रे नास्त्येव इति बोध्यम्। अत्र बीजमुक्तलक्षणेऽधिकारस्याभावात्। तदेवच शेखरे-
इत्युक्तम्। गम्यते इत्युक्ते फलतः परिसंख्याना नतु स्वभावत इति सूचितम्।

लोपो ऽसिद्ध इति वाच्यम् । संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात् । कृति तुग्विधौ, वृत्रहभिः । कृतीति किम् ? वृत्रहच्छत्रम् । अस्मादेव संज्ञाकृतं बहिर्भूतनिमित्तकसंज्ञाकृतञ्च बहिरङ्गत्वं परिभाषायां नाश्रीयते । अन्यथा वृत्रहभिरित्यादौ बहिर्भूतभिस्निमित्तकपदत्वनिमित्तो नलोपोऽसिद्धः स्यादिति तद्वैयर्थ्यं स्यात् । भाष्ये तु सन्निपातपरिभाषया वृत्रहभिरित्यादौ तुकं व्यावर्त्येदं प्रत्याख्यातम् । पदत्वद्वारा लोपस्य भिस्सन्निपातनिमित्तकत्वात् । सान्निपातनिमित्तकनलोपविषयाणां वृत्रहधनमित्यादीनामनभिधानमिति तदाशयः । तदभावे कृतीत्यपि व्यर्थमेव । न च सन्निपातपरिभाषया तुङ्मात्रव्यावृत्तौ प्राप्तायां नियमार्थं कृतीति 'कृति तुगेव न, अन्यस्तु भवत्येवेति' वाच्यम्, 'वृत्रहच्छत्र' मित्यत्र नलोपस्य सन्निपातलक्षणत्वाभावात् इति दिक् ।

राज्ञीति । "विभाषा ङिश्योः" (पा०सू०६।४।१३६) इत्यल्लोपविकल्पः । प्रतिदिव्नेति । कनिनन्तम् ।

---

यनपरम्भाष्यमेव मानम् । *कृति तुग्विधाविति* । अत्र गमकत्वाद्वृत्तिः । *अस्मादेवेति* । कृतितुग्ग्रहणादित्यर्थः । यदि संज्ञाकृतं बहिरङ्गत्वमप्याश्रीयते तदाऽन्तरङ्गे तुकि कर्त्तव्ये पदसंज्ञासापेक्षनलोपस्यासिद्धत्वात्तुगभावे सिद्धे कृतितुग्ग्रहणं व्यर्थं स्यात् । नन्वल्पापेक्षमन्तरङ्गं बहुपेक्षं बहिरङ्गमित्याश्रित्य संज्ञाया अधिकाया आश्रयणाद्बहिरङ्गत्वमिति न वदामः । किन्तु बहिर्भूतभिस्निमित्तकपदत्वनिमित्तकत्वेन नलोपस्य बहिरङ्गत्वं वदाम इति चेत् ? तत्राह—*बहिर्भूतनिमित्तकेति* । *सन्निपातपरिभाषयेति* । अवयवावयवस्य समुदायावयवतया 'वृत्रहाभिः' इत्यत्र तुकि सति भिस्सन्निपातविघातः स्पष्ट एव । वस्तुतस्तु नान्तभिस्सान्निपातनिमित्तको नलोपस्तादृशसन्निपातविघातकतुकोऽनिमित्तमिति भाष्याशयः । ननु यत्रान्तर्वर्त्तिविभक्त्याश्रितो नलोपस्तत्रैव 'वृत्रहधनम्' इत्यादौ तुकं व्यावर्त्तयितुं तदस्त्वित्यत आह—*सन्निपातनिमित्तकेति* । *तदभावे* । तुग्ग्रहणाभावे । सन्निपातपरिभाषया छनिमित्तकतुकोऽपि व्यावृत्तिः स्यादिति नियमार्थं कृति तुग्ग्रहणमस्त्वित्यभिप्रायेणाशङ्क्ते—*न च सन्निपातेति* ।

केचित्तु "द्वन्द्वे घि" इतिसूत्रस्थघिशब्दस्य पूर्वोक्तान्योन्याश्रयपरिहाराय भाविघित्वाश्रये लक्षणामाश्रित्यानियमस्य दण्डदत्तौ दत्तदण्डिना-

हलि च (पा०सू०८।२।७७) 'र्वोरुपधायाः' (पा०सू०८।२।७६) इति सूत्रं 'सिपि धातोः' (पा०सू०८।२।७४) इत्यतो धातोरिति चा- नुवर्त्तते। र्वोरिति च धात्तोर्विशेषणम्। पदस्येति सम्बध्यमानम- पीक एव व्यधिकरणं(१) विशेषणम्। तद्व्यञ्जनयन्नाह-प्रातिदीव्न इति

वित्यत्र सिद्ध्यर्थं प्रकृतसूत्रे संज्ञाग्रहणकरणापेक्षया द्वन्द्वसंज्ञाप्रवृत्तिका- यस्य घित्वं तत्पूर्वं प्रयोज्यमित्येवार्थोऽस्तु। प्रकृते द्वन्द्वसंज्ञाप्रवृत्तिका- नलोपस्यासिद्धतयाऽनियमः सिद्ध एवेति प्रकृतसूत्रे संज्ञाग्रहणं न कर्त्तव्य- मिति लाघवम्। किञ्च यदि "द्वन्द्वे घि" इतिसूत्रस्थघिपदस्य भाविघि- त्वाश्रये लक्षणाऽऽश्रीयते तदा 'भानुच्छत्रे' 'छत्रभानू' इत्यनियमः प्रा- प्नोति। भानुशब्दस्य पूर्वपदत्वे तुका भवितव्यमिति भाविघित्वस्याभा- वात्। द्वन्द्वसंज्ञाप्रवृत्तिकालिकघित्वस्य पूर्वनिपातप्रयोजकत्वे तु नियमः सिद्ध्यतीत्याहुः।

तत्रेदञ्चिन्त्यम्। द्वन्द्वसंज्ञाप्रवृत्तिकालिकं घित्वं पूर्वनिपातप्रयोजकमा- श्रित्य पूर्वोक्तानियमसिद्धिमाश्रित्य प्रकृतसूत्रस्थसंज्ञाग्रहणाकरणोपपा- दनमशक्यम्। 'ग्रामणिदेवदत्तौ' 'वातप्रमिवृषौ' इत्यादौ पूर्वनिपातो य- दिगन्तस्य स्यात्तदा "इको ह्रस्वोऽङ्यो गालवस्य" इतिसूत्रेण ह्रस्वे कृते घिसंज्ञा स्यात्ततश्चेगन्तस्यैव पूर्वनिपात इत्येवन्नियमः सिध्यति। ह्रस्वत्व- स्य बहिरङ्गासिद्धत्वन्तु न, बहिरङ्गपरिभाषाया अनित्यत्वात्। प्रकृते च तस्या अप्रवृत्तौ 'दत्तदण्डिनौ' 'दण्डिदत्तौ' इतिभाष्यमेव मानम्। एवञ्च घिपदस्य भाविघित्वाश्रये लक्षणाया आवश्यकत्वे 'दण्डिदत्तौ' 'दत्तद- ण्डिनौ' इत्यादावनियमसिद्ध्यर्थं प्रकृतसूत्रे संज्ञाग्रहणस्यावश्यकत्वात्। अ- त एव प्रकृतसूत्रभाष्ये संज्ञाग्रहणस्येदम्प्रयोजनं दत्तम्। न च घिपदस्य भाविघित्वाश्रये चेल्लक्षणा तदा "द्वन्द्वे घि" इतिसूत्रस्य हरिहरौ इत्यत्र हरिशब्दस्य पूर्वनिपातसिद्धिः प्रयोजनत्वेनोक्ता सा न सङ्गच्छेत। हरि- शब्दस्य घिसंज्ञायां पूर्वनिपातस्याप्रयोजकत्वादिति वाच्यम्। "द्वन्द्वे घि" इतिसूत्रस्थघिपदस्य तन्त्रेण शक्यलक्ष्योभयबोधकत्वात्। यदि तु "ल- क्षणहेत्वोः" इतिसूत्रे हेतुशब्दस्य परनिपातकरणेन पूर्वनिपातप्रकरणम- नित्यमिति विभाव्यते, तदा 'दण्डिदत्तौ' 'दत्तदण्डिनौ' इत्याद्यनायासेन निर्वहतीति प्रकृतसूत्रस्थं संज्ञाग्रहणमकर्त्तुं शक्यम्। *इदमिति*। तुग्ग्र- हणमित्यर्थः। *तदभावे*। तुग्ग्रहणाभावे।

*व्यधिकरणमिति*। तेन पदावयवस्येक इत्यर्थः पर्यवसन्नः।

(१) *इकएव व्यधिकरणमिति*। अन्यथा हलिपरे रेफवान्तस्य धातोरुपधाया य इक् तदन्त- पदस्य दीर्घोभवति इत्यर्थे दधिशब्दपूर्वक-रै-शब्दात्, दधिशब्दपूर्वकवाक् शब्दाच्च णिचि क्विपि

अत्र वान्तस्य भत्वाभावात् 'नभकुर्च्छुराम्' इति निषेधो न । धातोः किम् ? अग्निः करोति ।

न संयोगा (पा०सू०६।४।१३७) । अन्तग्रहणं स्पष्टार्थम् । (१)संयोगस्य वमाभ्यां विशेषणेन तदन्तलाभात् ।

सर्वनामस्थाने चासम्बुद्धावित्येव सिद्धे नियमोऽयमित्याह—शा-वेवेति । उपधाया इति । (२)तेन 'अनुनासिकस्य' (पा०सू०७।४।१५) इत्यस्यापि नियम इति भावः । (३)अत्र सर्वनामस्थानग्रहणं न सम्बद्ध्यते । तेन 'वृत्रहणी' 'वृत्रघ्नः' 'वृत्रघ्नी'त्यादौ नानुनासिकस्येति दीर्घः । इति निषेधे इति । (४)एतत्फलभूते निषेधे इत्यर्थः । शिस्वोरिति वक्तव्ये 'सौ च' (पा०सू०६।४।१३) इति योगविभागः उत्तरार्थः ।

---

*तेनेति* । सर्वनामस्थानग्रहणासम्बन्धेन । यदि चात्र सर्वनाम-स्थानग्रहणसम्बन्धः स्यात्तदा सर्वनामस्थाने परे यदि दीर्घ इनादीनां तदा शावेवेति नियमःस्यात्तदा 'वृत्रहणी' इत्यादौ दोषः स्यादिति । ननु नियमशास्त्राणां विधिरूपेण प्रवृत्तेः सिद्धान्तितत्वादिति निषेधे प्राप्ते इत्यनुपपन्नमित्यत आह—*एतत्फलभूत इति*। नियमस्येतरानिवृत्तिफलक-त्वात् । यद्यपि "शिस्वोः" इतिन्यासे न मात्रालाघवं, तथापि पदलाघवा-भिप्रायेण कृतामाशङ्कां निराचष्टे—*शिस्वोरिति व्यक्तव्य इति*। *उ-त्तरार्थ इति* । अन्वसन्तस्येति सूत्रार्थः ।

---

णिजन्तादचोयदिति यति 'दधीर्य' 'दधीव्य इत्यादावेव स्यात्, नतु प्रतिदिव्न् इत्यादाविति भावः । एवञ्च नभाभूइति निषेधो नपदान्तेति सूत्रे 'प्रतिदीव्न': इति भाष्योदाहरणं च संगच्छते ।

(१) स्पष्टार्थत्वे हेतुमाह- *संयोगस्येति* । केचित्तु अन्तग्रहणाभावे वम इति षष्ठ्यपि संभाव्येत तथा सति वकारमकारसंबन्धी यः संयोग इत्यर्थे "जम्भा सुहरिततृणसोमेभ्यः" इति कृतसमासान्तस्य जम्भादः शसादौ निषेधापत्तेरितिचिन्त्यमतेदित्याहुः ।

वस्तुतस्तु । संयोगादिति पंचम्यतसाहचर्यात् संभवति सामानाधिकरण्यान्वये वैयधिकरण्यान्वयस्या-न्याय्यत्वाच्च न षष्ठीसंभावनेत्यपि ध्येयम् ।

अन्येतु येनविधितदन्तस्येत्यस्यानित्यत्वज्ञापनार्थमेवान्तग्रहणम् । तथासति एतदानित्यत्वबलल-भ्यमेव समासप्रत्ययविधौ प्रतिषेध इति वार्तिकं नापूर्वमित्याहुः ।

(२) *तनेति* । उपधादीर्घमात्रविषयकनियमेनेत्यर्थः ।

(३) ननु सर्वनामस्थाने इत्यस्यानुवृत्त्या सर्वनामस्थाननिमित्तक उपधादीर्घविषयक एव नियमः स्यात् कथमुपधामात्रविषयक इत्यत आह—*अत्रेति* । *न सम्बध्यत इति* । अस्वरितत्वादिति भावः । अन्यथा तदपक्षे एव नियमे वृत्रहणीत्यादौ अनुनासिकस्येति दीर्घः स्यादिति भावः ।

(४) नियमशास्त्राणां विधिमुखेन प्रवृत्तिरिति सिद्धांतमभिप्रेत्याऽऽह *एतत्फलभूत इति ।

हो हन्ते (पा०सू०७।३।५४)। ञ्णिन्नकारा इत्यैव विशेषणम्। तत्र ञ्णिद्विषये येननाव्यवधानन्यायेन द्वाभ्यां व्यवाये घातक इत्यादावेव न तु हननीयते ण्वुल्यनेकव्यवधाने। इदं 'धातोः कार्यमुच्यमान' मिति परिभाषया धातुसंशब्दनेन विहितस्यस्य एव। तेन वृत्रहणमाचष्टे वृत्रहयतीत्यादौ न। ने परे तु वृत्रघ्न इत्यादावेव, स्थानिवत्त्वकृतव्यवधानेऽपि श्रौताव्यवधानसत्त्वात्। न तु हननमित्यादौ श्रौतव्यवधाने इति स्पष्टं भाष्ये।

वृत्रघ्न इत्यादौ णत्ववारणाय हन्तेरत्पूर्वस्येति विभज्य व्याचष्टे-हन्तेरिति। उपसर्गादसमासेऽपीत्यत उपसर्गादिति वर्त्तते रषाभ्यामिति च तात्स्थ्यात्ताच्छब्द्यम्, इत्याह-उपसर्गस्थादिति। प्रकृतोपयुक्तमाह-अत्पूर्वस्येति। अत इति सिद्धे पूर्वग्रहणं स्पष्टार्थम्। (१)अत्रोपसर्गादित्यस्य निवृत्त्या णत्वमात्रस्यायं नियम इत्याह-एकाजुत्तरेति। णत्वमपीति। अपिना प्रातिपदिकान्तेत्यस्य कुमति चेत्यस्य च सङ्ग्रहः। बाध्यसामान्यचिन्ताश्रयणात्सर्वबाधः। इदमत्पूर्वग्रहणं हस्थानिककवर्गाभाववद्धन्तेरुपलक्षणम्। अतो बहुवृत्रहाणीत्यत्र 'प्राघानि' 'प्रघनाघ्नः' इत्यत्र च न दोष इत्यन्यत्र विस्तरः।

---

*तत्र* तेषु मध्ये। ननु येन नाव्यवधानन्यायप्रदर्शनमसङ्गतम्। 'वृत्रहयति' इत्यादौ व्यवधानाभावेऽपि णिति प्राप्तिसत्त्वादित्यत आह-*इदमिति*। *श्रौताव्यवधानसत्त्वादिति*। नकारे परे कुत्वविधानसामर्थ्याच्छ्रौताव्यवधानस्य निमित्तत्वमाश्रीयत इति भावः। *णत्ववारणाय*। कुमति चेतिप्राप्तणत्ववारणायेत्यर्थः। *प्रकृतोपयुक्तम्*। 'वृत्रघ्न' इत्यत्रातिव्याप्तिवारकम्।

*कुमति चेत्यस्य चेति*। तेन 'वृत्रघ्नः' इत्यादौ नातिप्रसङ्गः। यद्यपीदं प्रयोजनं सन्निपातपरिभाषया गतार्थम्। तथापि 'प्रघनाघनः' प्राप्तानीत्यर्थमुपायान्तरस्यावश्यकत्वेन सेह नोक्ता। "हादेशे कुव्यवाय" इति वार्त्तिकमत्पूर्वग्रहणस्योपलक्षणत्वेनैव गतार्थमिति केषांचिन्मतं, तदनुसारेणाह--*इदमत्पूर्वग्रहणमिति*। अत्पूर्वस्यैवेति। यथाश्रुतनिर्देशे

(१) *पूर्वग्रहणं स्पष्टार्थमिति*। नच पूर्वग्रहणाभावे अत इत्यस्य पञ्चम्यन्तत्वे तस्मादित्युत्तरस्येति परिभाषावशादव्यवहिताकारपूर्वस्यैव ज्ञानं स्यात् कृते तु पूर्वग्रहणे तत्सामर्थ्यात् व्यवहिताव्यवहितसाधारणेनाकारपूर्वस्य नस्य तत्त्वेन भाव्यम्, तथासति पर्यघ्नन् इत्यत्रापि णत्वं स्यादिति अस्य तस्य तत्रानिष्टत्वात्। उपदेशग्रहणानुवृत्त्योपदेशकालिकात्पूर्वस्यैवेत्यर्थेन तस्य तत्राप्रवृत्तिश्रयाशयात्।

यत्तु कार्यकालपक्षे बहिरङ्गदीर्घासिद्धत्वाद् बहुवृत्रहाणीत्यादौ न दोषः प्राघानीत्यादौ यथोद्देश एव लक्ष्यानुरोधात् इति तन्न । तत्पक्षेऽपि त्रिपाद्यांतत्परिभाषाया अप्रवृत्तेरुक्तत्वात् । मघनाघन इत्यत्र दोषाच्च । माधवेनोक्तमिति । वृत्रघ्नो वृत्रहणः इति रूपद्वयं तेनोक्तम् । तद्भाष्येति । "कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः" 'वृत्रघ्नः' 'स्रुघ्नः' 'प्राघानि' हन्तेरत्पूर्वस्येत्यत्पूर्वग्रहणं न कर्त्तव्यं भवति" इति भाष्ये इत्यर्थः । अत्पूर्वग्रहणस्य तादृशोपलक्षितार्थत्वे मानाभाव इति तदाशयः ।

अनिनिति । एतच्च "येन विधिः" इति सूत्रे भाष्ये स्पष्टम् । अन्यत्र तु "अलैवानर्थकेन तदन्तविधिर्न तत्समुदायेन" इति हन्ग्रहणे प्लीहन्ग्रहणं न ।

मघवा (पा०सू०६।४।१२८) । षष्ठ्यर्थे प्रथमा तृ इति च वर्त्तते । ऋइदिति । तेनानेकाल्त्वाभावान्न सर्वादेशः ।

उगिदचाम् (पा०सू०७।१।७०) । अचामित्यञ्चुधातोर्ग्रहणं व्याख्यानात् । नलोपिन इति । अकारलोपाकरणपूर्वकं नलोपकरणस्य विवक्षार्थत्वादिति भावः । अत्रोगित् झलन्त एव व्याख्यानात् । तेन शमी शमिनावित्यादौ नातिप्रसङ्ग इति 'युवोरनाकौ' इत्यत्र.

---

तु 'बहुवृत्रहाणि' इत्यत्राव्याप्तिः स्यादिति भावः । *बहिरङ्गदीर्घासिद्धत्वादिति* । प्रत्ययसापेक्षत्वेन दीर्घस्य बहिरङ्गत्वम् । *यथोद्देश एवेति* । एवञ्चान्तरङ्गस्य णत्वस्यासिद्धतया बहिरङ्गपरिभाषाया अप्रवृत्तिरिति भावः । *तत्पक्षेऽपि* । कार्यकालपक्षेऽपि । *इत्यत्र दोषाच्चेति* । एवञ्चात्र सूत्रमते णत्वम्प्राप्नोति वार्त्तिकमते तु नेति फलभेद इति तत्परिहाराय अत्पूर्वग्रहणस्योक्तार्थोपलक्षकत्वाश्रयणमावश्यकम्

वस्तुतस्तु योगविभागकरणमत्पूर्वग्रहणस्योपलक्षणत्वञ्चाश्रयणीयं तदपेक्षया वार्त्तिकारम्भ एवोचित इति । *कुव्यवाये हादेशेष्विति* । अत्र कुव्यवायपदं कुव्यवधाननिमित्तकणत्वविधिलाक्षणिकम् । घटकपदबोध्यत्वमस्यार्थः । हादेशेष्वित्यस्य तेषु सत्सु इत्यर्थः । एवञ्च तद्विधिघटककुपदस्य हादेशबोधकत्वे प्रतिषेधः । बहुवचनं प्रापकशास्त्राणां लक्ष्याणां वा बहुत्वात् ।

*अञ्चुधातोरिति* । नत्वजन्तस्येति शेषः । *व्याख्यानादिति* ।

भाष्ये स्पष्टम् । उपधादीर्घ इति । सर्वनामस्थाने चेत्यनेन । अ-
सिद्धत्वाभावकल्पने मानमाह—तथा चेति । निपातनादिति ।
"वनो र च" (पा०सू०४।१।७) इति सूत्रे भाष्ये तु मघवन्शब्दो ऽव्यु-
त्पन्नं प्रातिपदिकमित्युक्तम् ।

मघशब्दादिति । धनार्थादित्यर्थः । भाषायामपीति ।
अपिना छन्दसि 'मघवानमीमहे' इति मध्योदात्तं च नेति बोध्यम् ।
आकरे इति । "केशाद्वः" (पा०सू०५।२।१०९) इति सूत्रे कैयटे इत्यर्थः ।
एवञ्च मतुपि अत्वसन्तस्ये' ति दीर्घसत्वेन, त्रादेशे तदभावे, फलभेदे
प्रत्याख्यानासंभव इति भावः । नन्वेवमप्यन्तोदात्तस्य त्रादेशे वकारा-
कारस्योदात्तत्वं, मतुपि तु 'ह्रस्वनुड्भ्याम्' (पा०सू०६।१।७६) इति
प्राप्तस्य मतुबुदात्तत्वस्य "नगोश्वन्" (पा०सू०६।१।१८२) इति प्रति-

---

"प्रत्यय" इत्यादिनिर्देशमूलकात् । *विवक्षार्थत्वादिति* । नन्वेतादृश-
विलक्षणार्थबोधकतयाऽचामिति चरितार्थमित्यस्य नियामकत्वकथन-
सङ्गतिरिति वाच्यम् । अत्रामित्यस्य नियमार्थत्वं भाष्ये एव प्रतिपादित-
मिति तत्प्रामाण्येन द्विविधो नियम आवृत्त्या कल्पनीयः । एकश्च मू-
एवोक्तः । 'अञ्चतेश्चेन्नलोपिन एवेति' । द्वितीयोप्यभिप्रेतः । अत्र मानम-
मितिनिर्देश एव । *व्याख्यानादिति* । "नपुंसकस्य" इतिसूत्राज्झल्ग्रह-
णापकर्षेणाचामित्येतत्साहचर्येण वेति व्याख्यानादित्यर्थः । *भाष्ये स्पष्ट-
मिति* । तत्र हि- "युवोरनाकाविति चेत् ? धातुप्रतिषेधः । युता-
युतवान्" । एतच्छङ्कायाम् 'अनुनासिकपरयोर्युवोर्ग्रहणम्' इति सं-
हितम् । अनुनासिकः परावयवो ययोरित्यर्थः । ततो 'यद्यनुनासिकप-
योर्ग्रहणं तदेत्संज्ञा प्राप्नोति' इत्याशङ्क्य "तत्र कोदोषः । नुमागमप्रसङ्ग-
स्तत्प्रतिषेधो वक्तव्यः । अन्यथा नन्दनः कारक इत्यत्र नुम्प्राप्नोति । उ-
विधौ झलग्रहणम् ! झलन्तस्य उगित इष्यते" इत्युक्तम् ।

*मूले निपातनादिति* । महेः कनिप्रत्ययः हस्य घः । अवुगागम-
स्त्वेवन्निपातनेनाश्रीयते इति भावः । वस्तुत इदंपरमतेनेति सूचयन्नाह-
*वनो र चेतिसूत्र इति* । एतेन 'मघोनी' इत्यत्र "वनो र च" इत्यस्य प्र-
सिशङ्कापि निरस्ता । ननु धनार्थान्मघशब्दादन्तोदात्तान्मतुपि "ह्रस्व-
नुड्भ्याम्" इति मतुप उदात्तत्वे मध्योदात्तत्वासिद्धिरत आह—*मघवा-
नमीमह इति* । *कैयट इति* । एतेन

अर्वणस्तृमघोनश्च न शिष्यं छान्दसं हि तत् ।

शेषेन पित्त्वादनुदात्तत्वे घकाराकारस्योदात्तत्वमिति फलभेदोऽस्त्ये-वेति चेन्न । त्रादेशपक्षे दीर्घवत् बहुलग्रहणेन घकाराकारोदात्तत्व-स्याप्यङ्गीकारात् । तत्रैव (१)मानान्तरमाह—हविरिति । 'मघवानृ-जीषी' इत्यस्याप्युपलक्षणमिदम् ।

(२)अर्वणस्तृ मघोनश्च न शिष्यञ्छान्दसं हि तत् ।
मतुब्वन्योर्विधानाच्च च्छन्दस्युभयदर्शनात् ॥

इत्यत्र वार्त्तिकरीत्या मघवन्शब्दस्य लोकेऽसाधुत्वं लभ्यते । (३)तथा च तृज्वत्सूत्रे भाष्यम्—"अविशेषविहिता अपि शब्दा नियतविषया दृश्यन्त" इत्यन्यत्र विस्तरः ।

छन्दस्येवेति । न च वनिबन्तस्य संप्रसारणे 'यस्येति' लोपे मघोन इत्यसिद्धिः । व्याश्रयत्वान्नाभीयासिद्धत्वं लोपे संप्रसारणस्य । नापि बहिरङ्गासिद्धत्वम् , तस्या वाहऊठ्सूत्रस्थतयाऽऽभीयत्वेनाभीयान्तरङ्गस्य तद्दृष्ट्या ऽसिद्धत्वेनात्र तस्या अप्रवृत्तेः । अन्तरङ्गशास्त्राश्रय एव तदाश्रय इति समानाश्रयत्वमव्याहतमिति वाच्यम् । निपातितान्तोदात्तमघवन्शब्दमादाय सिद्धेः । "एकादेश उदात्तेनो-

---

मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात् ॥

इतिभाष्यविरोधरूपाऽरुचिः सूचिता । *अप्यङ्गीकारादिति* । अन्यथा फलभेदे प्रत्याख्यानासङ्गतिः स्यात् । काव्यप्रयोगस्य दृढतरमानत्वाभावादाह—*मघवानृजीषीत्यस्यापीति* । *लोकेऽसाधुत्वमिति* । छान्दसमिति तत्रोक्तेः ।

रूपवैलक्षण्याभावेऽपि स्वरे वैलक्षण्यमस्त्येवेत्यभिप्रायेण शङ्कते-*न चेत्यादि* । ननु निपातितान्तोदात्तमघवन्शब्दस्य 'मघोन' इति रूपं

---

(१) *मानान्तरमिति* । उक्तविधफलभेदप्रत्याख्यानासंभवरूपमानापेक्षया मानान्तरमित्यर्थः ।

(२) ननु भाषायां शब्दद्वयसिध्द्याश्रयणं मूलोक्तमयुक्तम् । अर्वणस्तृमघोनश्चेत्यादिना वार्तिककृता मघवन्शब्दस्य छांदसत्वाश्रयणादित्युक्तमत आह—*अर्वणस्तृमघोनश्चेति* ।

(३) ननु विशेषप्रवृत्तस्य मघवनशब्दस्य कथं विशेषविषयत्वमित्यत आह- *तथाचेति* तथाचैतद्भाष्यप्रामाण्यादविशेषप्रवृत्तस्यापि छांदसत्वरूपं विशेषविषयत्वं बोध्यमिति भावः । श्लोकवार्तिकस्य तु अयमर्थः—अर्वणो मघोनश्च तृनशिष्यं, हि यतस्तच्छांदसम् । तथाच छंदसि दृष्टानुविधिरिति न तदर्थं शास्त्रारम्भः कार्य इति भावः । मतुब्वन्योरिति । ऋधातो र्विजन्तान्मघशब्दाच्च मतुब्वनिभ्यां छंदस्युभयसिद्धिरिति भावः । यद्यपि छंदसिवनिपौचेति वनिपः छंदसि विहितत्वाच्छांदसत्वेऽप्यविशेषप्रवृत्तस्य मतुपः कथं छांदसत्वं ? तथापि भाष्यप्रामाण्यादेतत्प्रयोगविषये छांदसत्वं बोध्यम् । तथाचात्र वार्तिके चोक्तहेतुरिति तात्पर्यम् । ननु सूत्रारम्भपक्षे अर्वन्शब्दस्य नित्यस्तृ आदेशः, प्रत्याख्यानपक्षे तु पक्षे तदभावोऽपि स्यादिति फलभेद इत्यत आह—छंदस्युभयेति ।

दात्तः" (पा०सू०८।२।९) इत्यस्य प्रवृत्त्या तत्र स्वरे विशेषाभावात्
छन्दस्यापाद्यरूपाभावान्नानिष्टापादनम् । आन्तोदात्तं त्विति
कन्यन्तत्वाद्व्युत्पन्नत्वाद्वा तत्त्वम् ।

अन्नन्तानामिति । "अल्लोपोऽनः" (पा०सू०६।४।१३४) इत्य
पकृष्यते । तत्र नकारं प्रश्लिष्य नान्तानामित्यर्थः । तेन 'मघवत' इत्या
दौ नाल्लोपसंप्रसारणे । धीवरीत्यादौ च नाल्लोपः । स्पष्टश्चेदं श्व
क् सूत्रे भाष्ये । परे तु नकारप्रश्लेषाभावे ऽपि न दोषः । (१)"अचः
ऽन्यस्य" (पा०सू०१।१।५२) इत्यस्य सत्वेनानः स्थानित्वाभावे
स्थानिवत्सूत्रेणान्नन्तत्वलाभात् । 'सर्वे सर्वपदादेशाः' इत्यनेन
मघवन्शब्दस्यैव स्थानित्वं, नानः । अर्द्धविकारे प्रत्यभिज्ञाभावाच्चै
देशविकृतन्यायावसरः । ध्वनितश्चेदं 'श्वयुव' इत्यत्र भाष्ये इत्याहु
मघवतीति । पुंयोगेन स्त्रियां वृत्तौ "उगितश्च" (पा०सू०४।१
इति ङीप् । विभक्तौ लिङ्गविशिष्टाग्रहणान्नुम्न ।

शुन इति । ननु संप्रसारणे वार्णादाङ्गस्य बलीयस्त्वेन पूर्व

यद्यपि सिद्धं तथापि वनिबन्तस्य विपरीतं प्राप्नोतीत्यत आह-*छन्दस्य
पाद्येति* । एवञ्च "विभाषा छन्दसि" इत्यनेन "षष्ठीयुक्तश्छन्दसि"
सूत्रे छन्दसीतियोगविभागसिद्धेन सर्वविधीनां वैकल्पिकत्वान्न वनिब
स्य लोपेन विपरीतमिति भावः ।

*नाल्लोपसम्प्रसारणे इति* । नित्यत्वात्तृआदेशे कृते इत्यादिः ।
स्थानिवद्भावेनान्नान्तत्वमाश्रित्य स्याल्लोप इति चेत् ? तत्राह-*अलोऽ
ति* । *मघवन्शब्दस्यैव स्थानित्वमिति* । धीवन्शब्दस्यैव च
नित्वमित्यपि बोध्यम् । *एकदेशविकृतन्यायेनेति* । अन्शब्दैकदेशो
कारः सोऽत्र विकृत इति सम्भाव्यते तन्न्यायप्रवृत्तिः, सा च न सम्भ
अर्द्धविकारसत्त्वादित्याह-*अर्द्धेति* । अत्रार्द्धत्वं भागमादाय । *ध्व
तमिति* । तत्र हि "श्वादीनां सम्प्रसारणे नकारान्तग्रहणमनकारान्त
षेधार्थम्" इतिवार्त्तिकप्रयत्याख्यानाय "श्वयुवा" इति सूत्रानन्तरम् "अल्लोपो
ऽन" "इत्यत्राल्लोप इति विभज्यान इत्युभयोः शेष इत्युक्तम् । उक्तव्या
नञ्चेन्नाद्रियते तदाऽन इत्यस्योभयशेषत्वेऽपि दोषतादवस्थ्यमेवेति
कथनेनैवं व्याख्यानं ध्वनितमित्यर्थः ।

(१) नन्वेवमपि स्थानिवद्भावेनोक्तदोषतादवस्थ्यान्नापकर्षफलमिति, तत्र किं श्रौतस्थान्यंश
दाय स्थानिवद्भावः, उत सर्वे सर्वपदादेश इति न्यायेनानुमितं तमादाय वा । नाद्यः इत्याह-अचो
स्येति । न द्वितीय इत्याह-सर्वे सर्वपदादेश इति ।

बाधित्वा 'अल्लोपोऽनः' इति लोपे 'शुनः' इति सर्वानुदात्तं स्यात् । उदात्तनिवृत्तिस्वरेणान्तोदात्तं वा स्यात्, पूर्वरूपेणाद्युदात्तमिष्यते । तत्र हि वकारस्थानिकोकारस्य स्रंसनधर्महलूस्थानिकत्वेनानुदात्ततया श्वन्शब्दस्यान्तोदात्ततयाऽकारस्योदात्तत्वेन तयोः स्थाने जातस्यैकादेशस्योदात्तत्वात् । किं च लोपे स्थानिवत्त्वेन यण्प्रसङ्गः। "अतः शुनः" (पा०सू०२।४।९६) इत्यादि(१)निर्देशस्तद्वारणे तु 'बहुश्वा' 'बहुपथ्वा' बहुयुवा' इत्यत्र 'अन उपधालोपिनः' (पा०सू०४।१।२८) इति ङीप्विकल्पापत्तिः । 'मघोनः' इत्यादावन्तोदात्तप्रकृतिके उदात्तनिवृत्तस्वरापत्तिश्चेति, चेन्न । वार्णपरिभाषाया अनित्यत्वेन क्वचिदप्रवृत्त्याऽदोषात् । श्वन्शब्दे आभीयतया सम्प्रसारणासिद्धत्वेन 'न संयोगात्' (पा०सू०६।४।१३७) इति निषेधाच्च ।

न सम्प्रसारणे (पा०सू०६।१।३७) अनुवृत्त्यैव निषेद्धुसम्पर्के लब्धे पुनः सम्प्रसारणग्रहणसामर्थ्यात्तन्मात्रनिषेध(२) इति दारस्थस्यास्य "व्यथो लिटि" (पा०सू०७।४।६८) इत्यस्य च निषेधः। न च व्यथिव्यद्ध्यादावस्य चारितार्थ्येन 'यूनः' इत्यादौ पूर्वसवर्णदीर्घरूपैकादेशे तस्याचः परस्मिन्निति स्थानिवत्त्वेन सम्प्रसारणत्वे ऽपि तेनैव स्थानिवत्त्वेनोकारव्यवधानात्कथं निषेध इति वाच्य-

---

*सर्वानुदात्तमिति* श्वन्शब्दे य उदात्तस्तस्य लोपेन निवृत्तावित्यादिः । *उदात्तनिवृत्तिस्वरेण* । 'अनुदात्तस्य च यत्र' इत्यनेन । *बहुश्वेति* । बहवः श्वानो यस्यामित्यर्थः । 'अत्रश्वन्शब्दस्योपसर्जनतया श्वन्शब्दस्य गौरादिपाठेऽपि न ङीषः प्राप्तिः । *वार्णपरिभाषाया इति* । अत्र मानं सतुङ्निर्देशः । स हि विश्नः प्रश्न इत्यत्र तुकोऽश्रवणाय ।

*अनुवृत्त्यैवेति* "ह्वः सम्प्रसारणम्" इत्यतोऽनुवृत्त्येत्यर्थः । *तन्मात्रनिषेध इति* । अनन्तरस्येतिन्यायाप्रवृत्तिकल्पनेनेत्यर्थः । *स्थानिवत्त्वेन सम्प्रसारणत्वेऽपीति* । "हल" इति सूत्रारम्भसामर्थ्यादनल्विधावि-

---

(१) ननु मघवतीत्यत्र मघशब्दस्य पुंयोगेन स्त्रियां वृत्तौ नान्तलक्षणङीपि ततस्तृ आदेशानां तत्वलक्षणनिमित्तविनाशात् तमालोच्याकृतव्यूहपरिभाषया पूर्वमेव ङीप्प्रत्ययो न स्यादित्यत-आह *उगितश्चेति* । वस्तुतस्तु इदं प्राचामनुसारेण । शेखरकारमते अकृतव्यूहपरिभाषाया असत्वान्नान्तलक्षणे ङीप्यपि न दोषः । अङ्गसंज्ञाद्वारा तद्विघातत्वात् सन्निपातपरिभाषाया दोष इति नशंक्यं तस्या 'वर्णाश्रयो ऽपि' इत्यादिना परिगणितत्वात् ।

(२) अत्रादिपदेन 'यूनस्तिः' 'श्वयुवमघोनाम्' इत्यनयो र्ग्रहणम् ।

म्। "व्यथः" (पा०सू० ७।४।६८) इति सूत्रे यग्रहणेनैव सिद्ध्या सम्प्रसारणग्रहणस्यैतन्निषेधकतयैव चारितार्थ्यस्य वक्तव्यत्वेन व्यवहितेऽपि प्रवृत्तेः, 'यूनस्तिः' (पा०सू० ४।१।७७) इति निर्देशाच्चेत्याशयेनाह—ति यकारस्येति। न च कार्यकालपक्षे 'इग्यण' इत्युपस्थितस्य पदैकवाक्यतयाऽन्वये निमित्तस्य यणाऽन्वयेन येननाव्यवधानन्यायेन पूर्वस्य सम्प्रसारणाप्राप्तेरिदं सूत्रं व्यर्थमिति वाच्यम्, तत्पक्षेऽपि संज्ञासूत्राणां वाक्यभेदेनैव सम्बन्धस्योक्ततया विधायकेषु यण इत्यस्याभावात्। अत्र चेदमपि ज्ञापकं बोद्धयम्।

(१)ननु सकृत्प्रवृत्तस्यैवोभयोः सम्प्रसारणे जाते निषेधो व्यर्थः निमित्तत्वानुपपत्तिश्चेत्यत आह—अत एव ज्ञापकादिति। तदुक्तं भाष्ये "(२)इङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रप्रबन्धेनाचार्याणामभिप्रायो गम्यते,। एतदेव ज्ञापयति परस्य पूर्वं भवितव्यमिति" इति। 'लक्ष्ये लक्षणस्य' इति न्यायस्य तु नायं विषयः। कार्याश्रययवर्णभेदेन लक्ष्यभेदात्।

---

तिनिषेधाप्रवृत्तौ पूर्वरूपनिष्पन्नस्य सम्प्रसारणत्वात्। *यग्रहणेनैव सिद्ध्येति*। एतेन तदर्थं प्रकृतसूत्रे सम्प्रसारणं न कार्यमिति सूचितम्। *एतन्निषेधकतयेति*। 'वव्रश्च' इत्यत्र सम्प्रसारणाभावसाधकतया "न सम्प्रसारण" इत्यंशसार्थकयेऽपि सम्प्रसारणग्रहणस्य युवन्शब्दे यकारस्य सम्प्रसारणाभावसाधकतयेत्यर्थः। तथा च प्रकृते निर्दिष्टविकला तस्मिन्नितिपरिभाषाप्रवृत्तिराश्रीयत इति भावः। *अत्र चेदमपीति*। निषेधसूत्रमपीत्यर्थः। अपिना "भस्येत्युपस्थितमिदम्भवति यभम्" इत्यादिभाष्यसङ्ग्रहः।

*लक्ष्यभेदादिति*। यं धर्ममुद्देश्यतावच्छेदकं बुद्धिस्थं कृत्वा यत्र यैःप्रथमं कृतं तद्धर्मावच्छिन्ननिमित्तकन्तदेव कार्यं तस्मिन्लक्ष्ये पुनर्न प्रवर्त्तते इति लक्ष्ये लक्षणं सकृदेवेत्यस्यार्थः। एवञ्च प्रकृते युवन्शब्दावयवत्वं बुद्धिस्थं कृत्वा सम्प्रसारणे कृते पुनर्यत्वावच्छिन्ननिमित्तकं सम्प्रसारणम्प्राप्नोत्येव। एतेन कार्याश्रयवर्णभेदेन लक्ष्यभेदाश्रणे 'उद्वाढ'

---

(१) अन्तरङ्गत्वात् प्रथमयाणि प्रथमं संप्रसारणप्राप्तिः। इत्यवतरणं सम्यक्। अत्र पर्यायपदयति इत्यत्र पथी इ अति इति स्थिते।

(२) इङ्गितेन–इङ्गितपदस्य अभिप्रायसूचकशरीरभवव्यापारे रोमाञ्चादौ शक्तिः। निमिषितस्य–अक्षिव्यापारे शक्तिः। चेष्टापदेन शरीरावयवपरिस्पन्दरूपव्यापारस्य बोधः। इत्यर्थः।

अर्वणस्तृ (पा०सू०६।४।१२७) न तु साविति। पर्युदास एव तूचितः, प्रत्ययत्वेन च सादृश्यम्। अनञ इति बहुव्रीहिः, 'वांजपर्वसु' इति प्रयोगात् तत्पुरुषे ह्यनञः परस्यार्वण इत्यर्थेऽत्र न स्यात्। सुरत्र प्रथमैकवचनम्। अनञः किमिति। अनञ् इत्यस्य कः शब्दो व्यावर्त्य इति प्रश्नः। उत्तरम्—'अनर्वेति'। यज्वशब्दसदृशोऽनर्वन्शब्दो व्यावर्त्य(१) इत्यर्थः।

नन्विह निरनुनासिकोच्चारणेऽपि तपरसूत्रस्यानणीव विधी-

---

इत्यत्र "सहिवहोरोत्" इतिसूत्रेणौकारे कृते पुनर्लक्ष्ये लक्षणस्येतिन्यायेन वृद्धिवारणपरं भाष्यं विरुध्येत। अत्रापि पूर्वमकारस्य पश्चादोकारस्येति वर्णभेदोऽस्त्येवेति निरस्तम्। हलन्तधात्ववयवाच्त्वस्य प्राथमिकवृद्धिप्रवृत्तिनिमित्ततावच्छेदकतया तद्धर्मावच्छिन्ननिमित्तिका वृद्धिर्नेत्यस्य सुवचत्वात्॥

*उचित इति*। लाघवात् आर्वतम्पदमित्यादौ तद्धिते प्रवृत्तये आह-*प्रत्ययत्वेनेति*। *बहुव्रीहिरिति*। न विद्यते नञ् यस्य सोऽनञ्। अव्यवहितोत्तरत्वसम्बन्धावच्छिन्नप्रतियोगिताकनञभाववानित्यर्थः। *अत्र न स्यादिति*। न चैतद्वाक्यघटकाद्वाजमितिपदान्नञ्भिन्नात्परत्वमस्त्येवेति वाच्यम्। पदविभागेन पाठकालेऽर्वत्स्वित्यत्र न स्यादित्याशयात्। *प्रथमैकवचनमिति*। अनुनासिकौकारस्यान्तरतम्याज्जातस्य पाठात्। ननु मूलोक्तमनञित्यस्यानर्वेतिप्रत्युदाहरणमसङ्गतम् सुपरत्वादत आह-*अनञित्यस्येति*। *यज्वशब्दसदृश इति*। एतेन यदागमपरिभाषया तुड्विशिष्टस्यार्वन्ग्रहणेन ग्रहणम्भवतीति बोधितम्। न चैवमपीहागमविशिष्टस्यैवार्थवत्त्वमित्यर्थवत्परिभाषया केवलस्य ग्रहणं कथमिति वाच्यम्। अर्थतोऽवयवस्य निर्दिश्यमानस्येत्यर्थेन 'प्रतिष्ठापयति' इत्यत्र षत्ववत् त्रादेशः स्यादित्याशयात्।

*इह*। पथिमथ्यृभुक्षेतिसूत्रे। नन्वाआदितिप्रश्लेषेण विधानेऽनेका-

---

(१) अनर्वन् शब्दो व्यावर्त्य इति। तत्फलं तु अनर्वाणमित्यादौ बोध्यमिति भावः। मूलानुसारिणस्तु 'अनर्वा यज्ववत्' इत्यत्र अनर्वं अयज्ववत् इति पदच्छेदः। उभयत्रापि नपुंसकबहुव्रीहिः कुलपरो विवक्षितः। नचैवमङ्गेन प्रत्ययाक्षेपे लुकालुप्ते प्रत्ययलक्षणाभावेन ह्यङ्गवैकल्यं तादवस्थ्यमेवेतिवाच्यम्, 'सौनाकावि'तिसूत्रस्थ "नवाऽपरनिमित्तमाश्रीयते" इतिभाष्येण यथोद्देशपक्षे प्रत्ययाक्षेपाकल्पनात्। पर्युदासस्तु मूलकृतो नेष्टः। नत्वसौ इति प्रसज्यप्रतिषेधपरत्वेन व्याख्यातत्वात्। 'बहिरलुप्यतसहस्रसुपर्णैः' इति श्रीहर्षप्रयोग विरोधस्तु न, अर्वणस्तृ मघोनश्चेति वार्तिकेन लोके असाधोस्तस्य विरोधे बाधकाभावादित्याहुः। अत्रारुचि बीजं स्पष्टमेव।

यमाने ऽपि विध्यर्थत्वान्नस्यान्तरतम्यादनुनासिकः स्यात्, (१)तपरसूत्रेऽप्रत्ययग्रहणानुवृत्तावण्ग्रहणानुवृत्तौ च मानाभावादत आह- अआआदिति। विशेष्यविशेषणभावेनान्वयान्न सर्वादेश इतिभावः। भाष्ये त्वनुनासिकविधाने प्रतिपत्तिलाघवाय तस्यैवोच्चारणे कार्ये तदनुच्चारणात् शुद्धस्यैव विधानमित्युक्तम्।

केचित्तु इदं सर्वं 'गुणा भेदका' इति पक्षे वृद्धिरादैच्सूत्रभाष्यसंमते सिद्धान्तभूते 'गुणा अभेदका' इति पक्षे जातिपक्षे च तत्प्राप्तस्यापि सवर्णग्रहणस्याप्रत्ययग्रहणेन निषेधेनादोषात्। अत एव भाष्ये "तपरस्तत्कालस्येति प्राप्नोति" इत्युक्तम्। अप्रत्यय इति च वाक्यभेदेन सर्वप्रतिषेधकम्, अण् ग्रहणस्य च तत्रासम्बन्ध इति तदाशयः। अत एव 'भाष्ये भाव्यमानेन सवर्णानाङ्ग्रहणं न' त्येव पठितं, न तत्स्येति। एतदेवाभिप्रेत्याणुदित्सूत्रेऽनया परिभाषयाऽप्रत्ययग्रहणवैयर्थ्यमाशङ्क्याप्रत्ययग्रहणस्य तत्परिभाषाज्ञापकत्वमुक्तम्। तेन च तस्

---

त्त्वात्सर्वादेशत्वापत्तिरत आह-*विशेष्यविशेषणभावेनेति*। एवञ्च कृतसूत्रे स्थानिवदादेश इतिसूत्रादादेशपदमाकृष्य सम्बध्यमानमादेशत्व- पर्याप्त्यधिकरणंपरं, प्रकृते चादेशत्वपर्याप्तिरेकस्मिन्नेवाकारेऽपरत्र त्वा- आदेशतावच्छेदकत्वमिति भावः। ननु नकारस्यानुनासिकस्यान्तरतम्या- दनुनासिक एव स्यात् प्रश्लेषे तु सर्वाकार इत्येव प्रश्लेषफलं किन्न स्यात् आह-*भाष्ये त्वनुनासिकेति*। तदुक्तम् "अष्टन आ विभक्तौ" इति सू- "अष्टन्जनादिपथिमथ्यात्वेष्वान्तरतम्यादनुनासिकः प्राप्नोति। अष्टाभिः अष्टाभ्यः। जातः। जातवान्। पन्थाः। मन्थाः। सिद्धमनण्त्वात्। स- सवर्णान् गृह्णातीत्युच्यते। न च आकारः अण्। उच्चारणसामर्थ्याद्वा अथ वा शुद्धोच्चारणसामर्थ्याद्भविष्यति" इति। ततः "तपरस्तत्कालस्ये- ति प्राप्नोति" इति शङ्कायामप्युच्चारणसामर्थ्यादित्येवोक्तम्।

*इदं सर्वमिति*। पूर्वपक्षसमाधानरूपम्। *तत्प्राप्तस्य*। पक्षद्वये प्राप्तस्य। *अत एव*। गुणानांभेदकत्वमितिपक्षाभिप्रायकत्वादेव*। तपर- स्तत्कालस्येतीति*। ननु गुणाभेदकत्वेत्युक्तम्। नन्वप्रत्यय इति त्वणुदित्सू- त्रप्राप्तस्यैव निषेधकमत आह-*अप्रत्यय इति चेति*। *अत एव*। अण्- ग्रहणस्य तत्रासम्बन्धादेव। *तत्परिभाषेति*। भाव्यमानेनेति परिभा-

---

(१) ननु अणुदित्सूत्रात् तपरसूत्रे अण्ग्रहणस्य प्रत्ययग्रहणस्य चानुवृत्तौ कथमनाणि भाव्यमाने ऽपि विध्यर्थत्वकल्पनमित्यत आह-*तपरसूत्रे इति*। *मानाभावादिति*। "अत इञ्" इति तपरो गुणः" इति भाष्यादिविरोधस्यापि उपलक्षणं बोध्यम्।

व्यापकत्वं सूचितम् । अप्रत्ययग्रहणस्य मदुक्तरीत्या व्याख्यानञ्च सूचितम् । तेन जातिग्रहणप्राप्तस्य गुणाभेदकत्वपक्षप्राप्तस्य चानया ऽणनणूसाधारण्येन निषेध इति सूचितम् ।

(१)वस्तुतो ऽणुदित्सूत्रस्थाप्रत्ययग्रहणज्ञापकत्वपरभाष्यस्यैकदेशानुमतिद्वारा परिभाषा बोद्ध्यत इत्यर्थः । प्रतीयते इत्यस्य विधीयत इत्यर्थप्रसिद्ध्या कैयटोक्तव्याख्या चिन्त्या । परिभाषायां सवर्णपदेन समानजातीयो भिन्नधर्मा उच्यते । तेन जशादिविधौ जत्वादिजात्याश्रयसर्वजकारादिग्रहणसिद्धिरित्याहुः(२) ।

एतेन पथीयतेः क्विपि पन्था इत्यादीत्यपास्तम् । अत्र शुद्धार्थन्तदनुच्चारणस्यावश्यकत्वेन भाष्यासङ्गतेः । तस्मात्तदनभिधानमेवोचितम् । न च अदित्येवास्तु, नकारेकारयोरत्वे सवर्णदीर्घेण रूपसिद्धेः, पररूपं तु न, "पथिमथ्यृभुक्षां लोपः, भस्य टेः, इतोऽत्सर्वनामस्थाने" इति न्यासेन नकाराश्रवणसिद्धावकारविधानसामर्थ्यादिति वाच्यम्, ज्ञानगौरवपरिहारेण स्पष्टार्थमाकारोच्चारणात् ।

---

त्यर्थः । *तस्याव्यापकत्वमिति* । अप्रत्ययग्रहणस्याव्यापकत्वमित्यर्थः । *मदुक्तरीत्येति* । प्रत्ययसंज्ञकपरत्वेन व्याख्यानमित्यर्थः । *तेन* । भाष्यमानेनेतिवचनेन । *समानजातीयो भिन्नधर्मेति* । सूत्रोच्चारितशब्दबोध्यतावच्छेदकसामान्यधर्मस्य व्याप्यो यस्तद्व्यक्तित्वान्यधर्मस्तद्वान् उच्यते इत्यर्थः । सूत्रोच्चारितशब्दबोध्यतावच्छेदकत्वविशेषणाज्जत्वस्य सामान्यधर्मगुणत्वव्याप्यत्वेऽपि न क्षतिः ।

*एतेन* । वक्ष्यमाणदूषणेन । तदेवाह-*अत्र शुद्धार्थमिति* । *भाष्येति* । शुद्धोच्चारणसामर्थ्यादितिपूर्वलिखितभाष्येत्यर्थः । तेषामनभिधानाभिप्रायेणैव शङ्कते-*न चेति* । *ज्ञानगौरवेति* । पररूपापत्तिशङ्कायाः क्लेशेन वारणे ज्ञानगौरवेत्यर्थः ।

---

(१) न प्रत्ययः अप्रत्यय इत्यन्वर्थमाश्रित्य तेन परिभाषार्थ संग्रह इति कैयटमतम् । तत्रारुचीं सूचयन् प्रकारान्तरेणाह-*वस्तुत इति* ।

(२) *इत्याहुरिति* । अत्र कोचित् एकदेशानुमत्याऽप्रत्ययग्रहणस्य स्वांशे चारितार्थ्याभावः । किञ्च गुणाभेदकत्वेन प्राप्तस्य सवर्णग्रहणस्याप्रत्यय इत्यनेन प्रतिषेध इत्यपि वक्तुमयुक्तम् । गुणाभेदकत्वस्य गुणभेदेऽपि व्यक्तेरैक्यमित्याशयात् । तथाच व्यक्तिभेदप्रयुक्तसवर्णत्वजातिपक्षप्राप्तसमानधर्मत्वे न सम्भवः । भाष्यकृतातु शुद्धव्यक्तेरुच्चारणसामर्थ्यात् गुणाभेदकत्वस्य, गुणभेदकत्वप्रयुक्ततत्प्रयुक्तसवर्णग्रहणस्य, जातिपक्षप्रयुक्त जात्याश्रयव्यक्ति ग्रहणस्य, बाध एवाभिप्रेत इत्यस्वरसमुद्भावयांचक्रुः ।

इतोऽत् (पा०सू०७।१।८६) आदित्यनुवृत्त्यैव सिद्धे ऽद्वचनं 'ऋभुक्षण' मित्यादौ "वा षपूर्वस्य" इति दीर्घविकल्पे पक्षे ह्रस्वश्रवणार्थम्। इत इति अदिति च तपरत्वं मुखसुखार्थम्। एरदित्युक्तौ ततो लाघवाभावात्। अन्यथा विधेयेऽपि तपरकरणात् कुरुत इत्यादौ गुणाभाववत् पन्थानावित्यादौ दीर्घाभावापत्तिरित्यन्यत्र विस्तरः।

थो न्थ (पा०सू०७।१।८७)। थो नुडिति नोक्तम्। इत्संज्ञाया आद्यन्तावित्यस्य चानुसन्धाने प्रक्रियागौरवात्।

भस्य टेः (पा०सू०७।१।८८) भस्य किम्?। पथिभ्याम्। संबुद्धौ नपुंसकानामिति। इदं 'नलुपता' (पा०सू०१।१।६३) इति निषेधानित्यत्वमूलकमित्युक्तम्।(१)यद्यपि भाष्ये 'वानपुंसकाना' मित्येव पठितं तथापि सूत्रे ङिग्रहणस्य प्रत्याख्यातत्वेन 'हे चर्मन्' 'हे चर्म' इति संबुद्धावेवोदाहृतत्वेन तावन्मात्रविषयताऽस्येति भावः।

ष्णान्ता (पा०सू०१।१।२४) विशेष्यसाकाङ्क्षात् स्त्रीलिङ्गनिर्देशात् प्रकृतं संख्येत्याकृष्यते। संख्याशब्देन च संख्याप्रकारकबोधजनकाः पञ्चादयो गृह्यन्ते। संख्येतिशब्दे बहुगणडतिषु च तदन्तत्वासम्भवात् तदाह—संख्येति। सन्निपातेति। बहिरङ्गासिद्धत्वं न, संज्ञायाः कार्यकालपक्षत्वेन समत्वात्। स्पष्टश्चेदं भाष्ये।

नोपधा (पा०सू०६।४।७) नलोपस्यासिद्धत्वाद् 'नामि' (पा०सू०६।४।३) इति दीर्घाप्राप्तेरयमारम्भः। नामीत्यस्याङ्गविशेषणत्वे

---

ननु ह्रस्वाकारानन्तरं चेत् दीर्घस्तदा आद्ग्रहणानुवृत्त्यैव सिद्धेऽदिवचनं व्यर्थमत आह—*आदित्यनुवृत्त्यैवेति*। *अन्यथा*। तपरकरणस्य कालान्तरसाधकत्वे।

*भस्य टेः*। केचित्तु "भाङ्कित" इत्येव सूत्रमस्तु भसंज्ञकात्परो यः प्रत्ययस्तस्य ङित्वातिदेशो टेरित्येव सिद्धमित्याहुः। अत्रेदमूहनीयम्। भस्य ङित्वातिदेशयोग्यस्य प्रत्ययस्येहानुपस्थितेरतिदेशासम्भवात्। भसंज्ञया तस्याक्षेपं कल्पयित्वा आक्षिप्तस्य शाब्दबोधे भानं स्वीकृत्यैवं कल्पने टेरितिसूत्रान्तरानुसंधाने गौरवमिति। *संख्येत्याकृष्यत इति*। तत्र पूर्वत्र यद्यपि शब्दपरम्, तथापि प्रकृते लौकिकार्थपरम्। *नलोपस्यासि-

---

(१). ननु भाष्ये सामान्यतो 'वानपुंसकाना' मित्येव वार्तिकाकारः। तथाच-संबुद्धौ नपुंसकानां विशेषतो वार्तिकाकारप्रदर्शनं मूलोक्तं तद्विरुद्धश्चेत्याशंकते–यद्यपि इति।

न्यायया, नाम: प्रत्ययत्वात्, एवञ्च 'पञ्चाना' मित्यादौ पकाराकारस्य दीर्घवारणायोपधाग्रहणम्। नेति किम्? चतुर्णाम्। नामि किम्? चर्मणाम्। नलोप इति। "सुप: पञ्चानाम् (पा०सू०३।४।८४) इति लिङ्गान्न सन्निपातपरिभाषाविरोधः।

अष्टन आ (पा०सू०७।२।८४)। "अनण्त्वान्नानुनासिक" इति भाष्ये स्पष्टम्। जातिग्रहणेन गुणाभेदकत्वेन तु न सः, भाव्यमानत्वात्। शुद्धोच्चारणादिति तु नात्र वक्तुं शक्यम्। 'रायो हलि' (पा०सू०७।२।८५) इत्युत्तरार्थन्तस्य चारितार्थ्यात्। प्रश्लेषेणापि न निर्वाहः। वाच्यवृत्त्यानुनासिकव्यावृत्तेस्तेनालाभात्। प्रत्युत तत्रापि गुणाभेदकत्वादेर्दुर्वारत्वेनाऽऽन्तरतम्यादनुनासिकस्यैव प्राप्तेः। प्रश्लेषस्य पर्यायेण सकलाकारविधानार्थत्वं स्यात्। एवमन्यत्रापि बोद्धव्यम्। 'रायो हलि' इत्यतो हलीत्यपकृष्यते।

अष्टाभ्य औश् (पा०सू०७।१।२१)। उङिति तु नोक्तम्। सकारस्योकारे अष्टा अ उ इति स्थिते "इण्ङशीनामाद्गुणः सवर्ण-

---

दत्वादिति*। नामृत्वस्य सुप्त्वव्याप्यत्वात्तत्रासिद्धत्वस्य नियमेनाव्यावृत्तेः। *पकाराकारस्य दीर्घवारणायेति*। ननु पकाराकारस्य दीर्घव्यावृत्तिः 'अन्त्यविकार' इतिपरिभाषयैव भविष्यतीत्युपधाग्रहणं व्यर्थमिति चेत् न। अप्तृन्नेति सूत्रार्थमिन्हन्निति सूत्रार्थञ्च तत्सत्त्वात्। आद्ये उपधापदासम्बन्धेऽयं दीर्घो येन नाप्राप्तिन्यायेन तृन्तृजन्ते "ऋतो ङि" इति गुणस्य बाधकः स्यात्। तथा च 'कर्त्तारौ' 'नप्तारौ' इत्यादिरूपासिद्धिप्रसङ्गः। द्वितीये-उपधापदासम्बन्धे स नियमः, उपधादीर्घस्यैवेति नियमो न स्यात्तथा च 'वृत्रहायत' इत्यादौ "अकृत्सार्वधातुकयोः" इति दीर्घोऽपि न स्यादिति बोध्यम्।

ननु 'पञ्चानाम्' इत्यत्र नान्तसन्निपातेन नुटि कृते तदादिनिमित्तकपदत्वे सन्निपातपरिभाषाया नलोपो न स्यादत आह—*सुप: पञ्चानामिति।

ग्रहणकशास्त्राविषयत्वं सूचयन्नाह—*अनण्त्वादिति*। *न स इति*। अनुनासिक इत्यर्थः। पथिमथ्यृभुक्षामित्यत्रेवात्र न निर्वाह इत्याह—*प्रश्लेषेणापीति*। *वाच्यवृत्त्या*। वाच्यनिष्ठया वृत्त्या। शक्त्येतियावत्।

"अष्टाभ्य औश्" इत्यत्र "अष्टभ्य उङ्" इत्येवास्तु ङित्वादन्त्यादेशे

दीर्घत्वादु" इति न्यायेनान्तरङ्गत्वात्सवर्णदीर्घे (१)तत आद्गुणे अष्टौ
इत्यस्यासिद्ध्यापत्तेः(२)। हलीत्यपकर्षे कृताकारादित्यनुपपन्नमत
आह—कृतात्वेति। कृतात्वानुकरणमित्यर्थः। लक्षणत्वसम्पन्ने
हि तस्य वैकल्पिकतया लाघवादष्टभ्य इत्येव वदेत् इति भावः।
ज्ञापयतीति। अयं भावः—हलीत्यपकृष्यमाणं वाक्यभेदेन पुनर्वि-
धानार्थम्। तेन 'अष्टन' इत्यस्य क्वचिदन्त्रपि प्रवृत्तिरिति। आ-
त्वमिति। आत्वमात्रमित्यर्थः।

सूत्रे इति। दीर्घान्तादष्टनः परोऽसर्वनामस्थानविभक्तिरुदा-
त्तेति तदर्थः। ज्ञापकादिति। तद्धि 'अष्टभि' इति ह्रस्वेऽन्तोदा-
त्तव्यावृत्त्यर्थम्। एवञ्च ह्रस्वव्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणमात्वस्य

---

अकारोकारयोरेकादेशे वृद्धिरेचीतिवृद्धावष्टाविति भविष्यतीति कस्य चि-
च्छङ्कां निरस्यति-*उङिति तु नोक्तमिति*। *इतिन्यायेनेति*। 'अथ
इन्द्रम्। ग्रामे इह। सर्वं इत्थम्' इत्यत्र यथा पूर्वोपस्थितनिमित्तकत्वरूपा-
न्तरङ्गत्वमादाय सवर्णदीर्घं बाधित्वा गुणः प्रवर्त्तते तथात्रापि अकारोकारयोः
प्राप्तगुणस्वाधित्वाऽन्तरङ्गत्वात् सवर्णदीर्घे पश्चाद्गुणे रूपासिद्ध्यापत्तेः। य-
दि चायज इ इन्द्रमित्यादिस्थितौ सवर्णदीर्घस्य पदान्तरसम्बन्धिवर्णापेक्ष-
त्वेन बहिरङ्गत्वं गुणस्य तु तत्पदसम्बन्धिवर्णापेक्षत्वेनान्तरङ्गत्वमिति यु-
क्तस्तत्र गुणेन दीर्घबाधः, प्रकृते तु जश्शसोरकारसकारस्थानिकोकार-
स्य य एकादेशः स प्रत्ययमात्रसम्बन्धिवर्णापेक्षत्वादन्तरङ्गः प्रत्ययावयव-
प्रकृत्यवयवसम्बन्ध्येकादेश एव तु बहिरङ्ग इति "इण्ङिशी" इतिन्याय-
षम्यमिति विभाव्यते तदा उङितिन्यासे यद्यपि मात्रालाघवं तथापि
क्रियागौरवं दूषणमस्मिन्न्यासे बोध्यम्। *तस्य*। लक्षणसम्पन्नाऽऽका-
रस्य। "अष्टाभ्यः" इतिनिर्देशस्यैवापूर्वार्थकल्पकत्वे हल्येव तथा कल्प-
नापत्तिरत आह-*अयम्भाव इति*। इदमः सन्निकृष्टार्थबोधकतया ज्ञा-
पकसिद्धस्यैव वैकल्पिकत्वं प्रतीयते तच्चानुपयुक्तमत आह-*आत्व-
मात्रमिति*।

---

(१) ग्रन्थोऽयं प्रकारान्तरेण व्याख्येय इति केचित्। तथाहि-यद्यपि इण्ङिशीनामाद्गुणः अन्त-
दीर्घत्वादितिन्यायेन आद्गुणे कृते रूपं सेत्स्यति तथापि अन्तरङ्गत्वात्सवर्णदीर्घ इत्यादि।

(२) *असिद्ध्यापत्तेरिति*। नन्वेवमपि प्रक्रियालाघवाय उङ् इति वक्तव्ये उङ्विधाने अन्तरङ्गे-
न्तरङ्गपरिभाषाया बाधः स्यात्। तथाच-अष्ट आ उ इतिस्थिते नित्यत्वाद्गुणे वृद्धौ चाष्टाविति-
रूपस्येवेति असिद्धिरयुक्तेति चेत्? न। एवमपि "आतो धातोः" इतियोगविभागादष्टेत्यत्राकारलोपे
तद्रूपासिद्धिप्रसङ्ग इत्याशयात्।

कल्पिकत्वे ज्ञापकम् । न चाष्टाभिरित्यत्र सावकाशस्य 'अष्टन (पा० सू०६।३।१२५) इति सूत्रस्याष्टभिरित्यत्र परत्वात् 'झल्युपोत्तमम्' (पा० सू०६।१।१८०) इत्यनेन बाधे सकृद्गतिन्यायेन पुनरप्रवृत्तौ व्यर्थमेव तत्, न ह्यष्टाभिरित्यत्र 'झल्युपोतम' मिति प्राप्नोति, कार्यकालपक्षे ऽनान्तत्वेन षट्त्वाभावात् । अल्विधित्वेन स्थानिवत्त्वाभावाच्चेति वाच्यम् । पुनः प्रसङ्गविज्ञानबोधनद्वारैतद्विषये यथोद्देशपक्षस्यैवाश्रयणबोधनद्वारा वा तद्विकल्पे ज्ञापकत्वमित्याशयादित्यन्यत्र विस्तरः ।

अष्टानामिति । (१)हलीत्युक्तेरादौ नुट् तत आत्वम् । यत्तु सन्निपातपरिभाषया ऽत्र नात्वं, किन्तु "नोपधायाः" (पा०सू०६। ४।७ इति दीर्घे नलोपः । अन्तोदात्तत्वन्तु "षट्त्रि" (पा०सू०६।१। १७९) इत्येव सिद्धम् । नलोपे तु नं सन्निपातपरिभाषा नलोपस्या-

---

*आत्ववैकल्पिकत्वे ज्ञापकमिति* । आत्वस्य नित्यत्वे हि ह्रस्वस्यैवाभावात्तद्व्यर्थमिति भावः । *सावकाशस्येति* । अनान्तत्वेन षट्त्वाभावात् । "झल्युपोत्तमम्" इति तु पञ्चभिरित्यत्र चारितार्थम् । ननु स्थानिवद्भावेन नान्तत्वमस्तीत्यत आह-*अल्विधित्वेनेति* । *पुनः प्रसङ्गविज्ञानेति* । तस्य न्यायस्य प्रकृते प्रवृत्तिबोधनद्वारेत्यर्थः । सकृद्गतिन्यायपक्षेऽप्याह-*यथोद्देशेति* । अयम्भावः । भविष्यति किञ्चित्प्रयोजनमित्यभिसन्धिमात्रेण विभक्त्युत्पत्तेः प्रागेवान्तरङ्गत्वात षट्संज्ञायां विभक्तौ नान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपषट्त्वस्य स्थानिवद्भावेनातिदेशे 'अष्टाभिः' इत्यत्रापि "झल्युपोत्तमम्" इत्यस्य प्राप्तिरित्यष्टन्स्वरो निरवकाशतया झल्युपोत्तममित्यस्य बाधकः, तथा चाष्टाभिरित्यत्रेवाष्टभिरित्यत्रापि स्यादित्येतद्व्यावृत्त्यर्थं क्रियमाणं ज्ञापकमिति ।

*सन्निपातपरिभाषयेति* । नान्तसन्निपातेन जायमानस्य नुटस्तद्विघातकात्वनिमित्तत्वञ्चेत्यर्थः । ननु यदि नात्वन्तर्हि "अष्टनो दीर्घात्" इत्यस्याप्राप्तेर्विभक्त्युदात्तत्वं न स्यादत आह-*अन्तोदात्तत्वमिति* *नलोपस्यासिद्धत्वादिति* । "नलोपः प्रातिपदिकान्तस्य" इतिसूत्रे सम्बध्यमानं यत्पूर्वत्रेति तस्य पूर्वसम्बन्धिकार्ये इत्यर्थः । पूर्वशास्त्रञ्चात्र नुड्विधायकमपि तत्सम्बन्धिकार्यं नुट् तत्संबन्धिनान्तसन्निपातोऽपीति परम्परया पूर्वसम्बन्धिसंनिपातस्तस्मिन्कर्त्तव्ये नलोपस्यासिद्धत्वम् । न च सन्निपातस्य नलोपः "सुप्स्वर" इत्यत्रापाठात्कथन्तत्रासिद्धत्वमिति वाच्यम्

---

(१) *हलीत्युक्तेरादौनुट् तत आत्वमिति* । अन्यथाऽष्ट नाम् इति स्थिते परत्वान्नित्यत्वाच्चात्वे कृते ऽनान्तत्वेन षट्त्वाभावान्नुट् न स्यात् इति भावः ।

सिद्धत्वादिति । तन्न । (१)पूर्वत्र कर्त्तव्ये नलोपासिद्धत्वेऽपि तत्र क्रो-
ऽसिद्धत्वे मानाभावात् । सन्निपातस्याशास्त्रीयत्वेन तस्य नलोपा-
सिद्धत्वेनालाभाच्च । आरोपितासिद्धत्वेऽपि वस्तुतो नलोपे तद्विघात-
स्य जायमानत्वेन नलोपे ऽपि तस्या दुर्वारत्वाच्च ।

अत एव 'गाव्यिता' 'नाव्यिता' इत्यादौ सन्निपातपरिभाषया य-
लोपो न । अन्यथा "यस्य हल" (पा० सू० ६।४।४९) इति यलोपस्य शब्दि-
भूततृजनिमित्तकत्वेन बहिरङ्गतयाऽन्तरङ्गात्रादेशं प्रत्यसिद्धतया निमि-
त्तविघाताभावः स्पष्ट एव । तस्मान्नलोपस्यापि परिभाषाऽनित्यत्वेने-
व(२)साध्यतया तस्यासिद्धत्वादात्वमेव युक्तं तदनित्यत्वेन । (३)कि-

---

नुटः सुप्त्वव्याप्यधर्मावच्छिन्नसम्बन्धितया परम्परया तत्सम्बन्धिसन्नि-
पातस्यापि सुप्त्वव्याप्यधर्मावच्छिन्नसम्बन्धित्वादित्यभिमानः । तमभि-
मानन्निराचष्टे-*पूर्वत्रेति* । *तत्र* । नुटि अभ्युपेत्याह-*सन्निपातस्ये-
ति* । शास्त्रासिद्धत्वस्य सिद्धान्तिसम्मततयाऽशास्त्रीयकार्ये एवासिद्ध-
त्वमुचितमिति भावः । *तस्याः* । सन्निपातपरिभाषायाः ।

*अत एव* । वास्तविकसन्निपातविघातमादय सन्निपातपरिभाषाया
प्रवृत्तिस्वीकारादेव । *परिभाषानित्यत्वेन* । सन्निपातपरिभाषाया अनि-
त्यत्वेन । *तस्यासिद्धत्वात्* । नलोपस्यासिद्धत्वात् । सन्निपातविघा-
तमभ्युपेत्य दोषम्परिहृत्य वस्तुतः सन्निपातविघात एव नास्तीत्यभि-

---

(१) ननु हलीत्युक्ते सत्यपि पूर्वं नुटि अत्वानापत्तिः । कुतः ? षट्त्वसन्निपातेन जातस्य नु-
दविघातकत्वाभावात् । अनिष्टप्रसङ्गस्तु 'नोपधायाः' इति दीर्घे न लोपे च पञ्चानामितिवदष्टाना-
सिद्धत्वान्नभवति । नच यथाऽऽत्वे सन्निपातपरिभाषाविरोधः तथा नलोपेऽपि तत्प्रसङ्गः । षट्स-
पातजातस्य नुटस्तदविघातकत्वासम्भवात् इति वाच्यम् , नलोपस्यासिद्धत्वेन नुट्दृष्ट्या स-
विघातादित्याशङ्कां यत्तु इत्यादिनाऽनूद्य परिहरति—तत्रेति* । नलोपस्यासिद्धत्वादिति शङ्काग्रन्थे
पस्यासिद्धत्वं तु पूर्वत्रासिद्धमित्यस्य पूर्वसम्बन्धिकार्ये परमसिद्धमित्यर्थाभिप्रायेण 'पूर्वशास्त्रं
विधायकम् । तत्सम्बन्धिकार्यं यथा नुट् तथा नान्तसन्निपातोऽपीति तत्र कर्तव्ये नलोपस्यासिद्धत्वं
नचात्र नलोपः सुप्स्वेरीति नियमनाऽसिद्धत्वव्यावृत्तिरिति वाच्यम् , नुटः सुब्विधित्वेन तत्सम्बन्धि
सन्निपाते नलोपः सुविति नियमेनापि तद्व्यावृत्तेरशक्यत्वादिति बोध्यम् ।

(२) परिभाषाऽनित्यत्वेनेति* । नुटः पञ्चानामित्यत्र पञ्चानाम् इति निर्देशरूपज्ञापकवशा-
*तदनित्यत्वेनेति* । उक्तविधज्ञापकात् सामान्यतो नुड्विषये परिभाषाया अनित्यत्वं ज्ञापितं
नाष्टानामित्यस्यापि सिद्धिः । अत्र विशेषापेक्षज्ञापकाश्रयणे तु शमामष्टानामित्यत्राष्टानामिति निर्दे-
दनित्यत्वे ज्ञापको बोध्यः ।

(३) ननु कृन्मेजन्त इति सूत्रे भाष्ये प्रकृतपरिभाषाऽनित्यत्वपरिगणने एतदनित्यत्वस्यापरि-
तत्वान्न तेनात्राऽऽत्वं कल्पयितुं युक्तमिति नोपधाया इति दीर्घेण नलोप एव युक्तः कल्पयितुम् ।
सन्निपातपरिभाषाप्रवृत्तिस्तु पञ्चानामित्यत्रोक्तविधया पराहतैवेत्यत आह—*किञ्चेति* ।

षट्संज्ञासन्निपातेन जातस्य नुट आत्वे नलोपे वा न तद्विघातकत्वम्, स्थानिवद्भावेन कृतात्वेऽपि, षट्त्वसत्त्वात् । कार्यकालपक्षे तत्तद्विध्येकवाक्यतापन्नषट्त्वस्य बहिरङ्गतयाऽऽत्वे कृते ऽनान्तत्वेन षट्त्वाभावान्नुट् न स्यादिति हलीत्यपकर्षः ।

दीर्घग्रहणाज्ज्ञापकादाकारान्तस्य षट्संज्ञाश्रयणे, अत्र यथोद्देशस्यैवाश्रयणेनान्तरङ्गत्वात् पूर्वं षट्त्वे नान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य स्थान्यल्धर्मत्वाभावेन स्थानिवद्भावादाकारान्ते आश्रयणे वा प्रतिपत्तिगौरवमिति बोद्धयम् ।

वृत्त्याद्यनुसारेणाह—गौणत्वे त्वित्यादि । स्थानिवद्भावादिति । पूर्वत्रासिद्धे इति तु 'तस्य दोष' इत्यनेन निषिद्धमिति भावः । कार्यकालपक्षे इत्यादि तु प्राचामनुरोधेनेत्युक्तम् । प्राधान्य एवेति । बहुवचननिर्देशात् । एवञ्च गौणे आदेशाप्रवृत्तौ तज्ज्ञाप्याऽऽत्वमपि नेति भावः ।

परे तु 'ष्णान्ता' (पा०सू०१।१।२४) इति सूत्रे भाष्ये 'अष्टानाम्' इत्येतत्सिद्धये हलीत्यपकर्षमुक्त्वा तत्र पक्षे "प्रियाष्टौ प्रियाष्टा इति न सिद्ध्यति 'प्रियाष्टान' इति प्राप्नोति" इति शङ्किते "यथालक्षणमप्रयुक्ते" इति समाहितम् । तत्र यथालक्षणमिति प्रतीकमुपादाय "यस्य विशिष्टप्रयोगो न स्मर्यते, नापि प्रयोगनिषेधस्मृतिः, तद्यथालक्षणमनुगन्तव्यं तदत्र मा भूदात्त्वमित्यर्थः" इत्येकमर्थमुक्त्वा "नैव वा लक्षणमप्रयुक्ते प्रवर्त्तते । प्रयुक्तानामेव लक्षणेनान्वाख्यानात्" इति व्याख्यान्तरमुक्तम् । तत्रान्त्यव्याख्यानमेव न्यायः । अप्रयुक्ते ल-

---

णाह—*किञ्चेति* । *कृतात्वेऽपीति* । अपिना नलोपसङ्ग्रहः । नन्वेवं कृतात्वेऽपि चेत् षट्त्वमाश्रीयते तदा हलीत्यपकर्षो व्यर्थ इत्यत आह—*कार्यकालपक्ष इति* । *प्रतिपत्तिगौरवम्* । हलीत्यस्यापकर्षेण व्याख्यानापेक्षयेत्यादि । *प्राचामनुरोधेन* । त्रिपाद्यां सर्वथा बहिरङ्गपरिभाषाया अप्रवृत्तेः । *आदेशेति* औत्वादेशेत्यर्थः ।

*विशिष्ट*: । आनुपूर्वीप्रकारकनिश्चयविषयः । अस्मिन्पक्षे यथालक्षणमित्यस्य कार्यं कर्त्तव्यमिति शेषपूरणेन पदार्थानतिवृत्तौ समासं कृत्वा लक्षणमनतिक्रम्य कार्यं कर्त्तव्यमित्यर्थः कार्यः । द्वितीयपक्षे तु नञ्समा-

क्षणाभावस्यैव योग्यता, (१)न तु लक्षणप्रवृत्तेरित्यर्थसङ्गतेः । आ
व्याख्यायामप्रयुक्ते इति वाक्यशेषासङ्गतिः, प्रयुक्तेऽपि लक्षणानभि
भात् । प्रयुक्तानामिदमन्वाख्यानमित्यन्यत्र भाष्योक्तेश्च । किं च
ष्यकारस्य लक्ष्यैकचक्षुष्कतया इयमेव व्याख्योचिता । एकस्यैव प्र
योगस्य भाष्यफक्किकाव्याख्यानभेदेन साधुत्वासाधुत्वयोरनौचित्या
च्च । 'नवा' (पा०सू०१।१।४४) इति सूत्रे भाष्ये पक्षभेदे
एकस्यैव साधुत्वासाधुत्वयोस्तिरस्काराच्च(२)। अत एव हलङ्
दिसूत्रादौ 'अस्याप्रयुक्ते लक्षणाभाव' इत्येव व्याख्याऽऽदृता कैयटे
"नाम्रेडितस्य" (पा०सू०६।१।९९) इति सूत्रेपि कैयटः-"प्रयो
मूलत्वादस्य शास्त्रस्य प्रयोगाभावे न प्रवृत्ति"रिति । एवञ्चैषाम
भिधानमेवोचितम् । अत एव 'अष्टाभ्य औशि'ति सूत्रे भाष्ये "
भाषा आत्वं, यदयमात्वभूतस्य ग्रहणङ्करोति अष्टाभ्य इति, अन्य
अष्टन इत्येव ब्रूयात्" इत्युक्तम् । कैयटरीत्या गौणे प्रवृत्त्यभावाय
हुवचननिर्देशस्यावश्यकतया तदसङ्गतिः स्पष्टैव । एवञ्च तत्प्रयोगो
चारः सर्वोऽपि निष्फल एवेत्याहुः ।

---

सेन लक्षणाभावप्रतिपादकस्यालक्षणशब्दस्य योग्यतार्थकयथाशब्देन
मासः । एवं सति यत्र लक्षणाभावस्य योग्यता तस्य शास्त्राविषयत
ऽनभिधानमेव लभ्यते । तथा चास्यासाधुत्वम् । प्रथमपक्षे चात्वाभा
क्तस्य साधुत्वमित्येवं विरुद्धार्थप्रतिपादनन्न युक्तमित्याह-*किञ्चेति
*अत एव* । अन्त्यव्याख्यानस्य युक्तत्वादेव ।

*कैयटेनेति* । एवञ्च कैयटस्याप्यनभिधान एव तात्पर्यमिति भा
*अत एव* । एतादृशानामनभिधानादेव । केचित्तु वस्तुतस्तु स

---

(१) यथालक्षणमप्रयुक्त इति भाष्ये यथालक्षणमित्यत्र अलक्षणमिति छेदः । तत्राविद्य
त्रिवार्थाभावेऽव्ययीभावः । तथाच तस्य लक्षणाभाव इत्यर्थः । तदर्थकालक्षणशब्दस्य च योग्यता
यथाशब्देनाव्ययीभावः । तथा सति अप्रयुक्ते लक्षणाभावस्य योग्यतेत्यर्थः पदशक्तिमर्यादैव
इति तदाशयः ।

(२) तिरस्काराच्चेति* । अत्र चो हेतौ यतो नवेति सूत्रे भाष्ये एकत्र तयोस्तिरस्कारः अ
स्तदनौचित्यमित्यर्थः ।

नवेति विभाषेतिसूत्रे हि-साधुत्वप्रतिपादनार्थत्वाच्छास्त्रस्य । साधुत्वस्यैव प्राधान्याद् विकल्पे सम
न्धः स्यादित्याशंकायाम् "अस्तु यः साधुः स प्रयोक्ष्यते, असाधुर्न प्रयोक्ष्यते" इत्युक्त्वा "न वै
चिद् व्याकरणं राजपुरुष इत्येतस्यामवस्थायामसाधुत्वमिष्यते" इत्युक्तम् । तदुक्त्या च एकस्यै
त्वासाधुत्वयोस्तिरस्कारः स्पष्टं प्रकटीकृत इति बोध्यम् ।

निरुपपदादिति । नुमोऽसमास एव विधानेन सोपपदे "चोः कुः" इति कुत्वेनैव सिद्धत्वेन क्विनि क्विपि च(१) विशेषाभावादिति भावः । ककाराविति । इदमुपलक्षणमुच्चारणार्थेकारस्यापि । ककारो गुणप्रतिषेधाद्यर्थः । नकारः 'क्विन्प्रत्ययस्य' (पा०सू०८।२।६२) इत्यत्र विशेषणार्थ इति भाष्ये स्पष्टम् ।

सन्निहित इति । तत्फलन्तु णिजादीनां संज्ञाऽभावः । अतिङ् किम् ? 'रुरुदिव' इत्यादौ "नेड् वशि कृति" (पा०सू०७।२।८) इति

---

भक्तिपरस्य प्रियाष्टन्शब्दस्य नानभिधानं किन्तु अजादिविभक्तिपरस्येत्याहुः । तन्न । एवमप्यष्टन इत्येव ब्रूयादितिग्रन्थस्वारस्यभङ्गापत्तेः ।

यन्मूले निरुपपदादित्युक्तन्तल्लाभप्रकारमाह—*नुमोऽसमास एवेति* । असमास एव क्विन्प्रत्ययस्येत्यस्य प्रवृत्तेः फलमिति निरुपपदाद्विधानेन क्विनो विधानमिति भावः । *उच्चारणार्थैकारस्यापीति* । उच्चारणार्थमुच्चारितानां विधेयविषये इत्संज्ञां विना निवृत्त्यभावस्य पूर्वमुपपादितत्वात् । *क्विन्प्रत्ययस्येत्यत्रेति* । एवञ्च नकारोच्चारणस्य चरितार्थत्वान्नकारोच्चारणसामर्थ्यात्स्रगित्यत्राऽमागमस्यागमानुदात्तत्वं बाधित्वा अनुदात्तत्वमित्येवं सामर्थ्यवर्णनमसङ्गतमिति सूचितम् । इदन्नकारोच्चारणफलम् "तदनुबन्धकग्रहणे नातदनुबन्धकस्य" इतिपरिभाषामनाश्रित्य । तदाश्रयणे तु क्विप्रत्ययस्येत्युक्तावप्यदोष इत्यवधेयम् । *रुदिवेति* । अत्र प्राप्तस्य "रुदादिभ्य" इतीटः प्रतिषेधः स्यादिति भावः । क्वचित्तु रुरुदिवेति पाठः । न चात्र "नेड्वशि" इतिप्राप्तस्यापि प्रतिषेधस्य क्रयादिनियमेन निवृत्या रूपसिद्धिर्निर्बाधैवेति वाच्यम् । क्रयादिनियमो हि मध्येऽपवादन्यायेन "एकाच उपदेश" इति "श्र्युकः किति" इति सूत्रेण वा प्राप्तस्य निवर्त्तको न तु 'नेड्वशि' इति सूत्रप्राप्तस्येत्याशयात् । परन्त्वेवं सति 'बभूविव' इति रूपस्य पुरःस्फूर्त्तिकत्वात्तस्यागस्य निर्बीजत्वापत्तेः । अशोकवनिकान्यायेन योजनन्तु क्लिष्टम् । ननु तिङः कृत्संज्ञाभावे "अकृत्सार्वधातुक" इति सूत्रे सार्वधातुकग्रहणमेवज्ञापकं, ताद्धि 'चिनुयात्' इत्यादौ दीर्घाभावाय । यदि तिङः कृत्संज्ञा स्यात्तदा कृत्पर्युदासेनैव दीर्घाभावे सिद्धे तद्वैयर्थ्यं स्पष्टमेव । किञ्च तिङः कृत्संज्ञायां कृदन्तत्वात्प्रातिपदिकसंज्ञायाम् "अतिशायन" इति सूत्रेणैवातिशायनिकप्रत्ययस्य सिद्धौ "तिङश्च" इति सूत्रमपि व्यर्थं सत्तस्मिन्नर्थे ज्ञापकम्भवि-

---

(१) क्विनि क्विपि चेति* । चो भिन्नक्रमः । सोपपदे क्विनि, क्विपि विशेषाभावे चेत्यर्थः । प्रकृते च भावात् निरुपपदे एव क्विन् विधीयते इति भावः ।

निषेधो मा भूत् इति। ज्ञापकेन निर्वाहस्तु व्याख्यानाद्वरं करण-
मिति न्यायाननुगृहीत इति सूत्राशयः।

युजेर (पा०सू०७।१।७१)। "उगिदचाम्" (पा०सू०७।१।७०)
इत्यतः सर्वनामस्थाने इति, 'इदितो नुम्' (पा०सू०७।१।५८) इत्यतो
नुमिति चानुवर्त्तते।

क्विन्प्रत्यय (पा०सू०८।२।६२) प्रत्ययग्रहणसामर्थ्यादतद्गुण-
संविज्ञानो बहुव्रीहिः।(१) न च तदभावे वस्यैव कुत्वापत्तिः। तथा स-
'क्विनो घः' इत्येव वदेत्, 'नशेर्वा' (पा०सू०८।२।६३) इत्यत्र धातुग्र-
वप्यदोषादिति बोद्ध्यम्।

चोः कुः (पा०सू०८।२।३०) 'स्कोः' (पा०सू०८।२।२९) इत्य-
तोऽन्ते इति, 'झलो झलि' (पा०सू०८।२।२६) इत्यतो झलीति चानु-
वर्त्तते, 'पदस्य' (पा०सू०८।१।१६) इति चाधिकारः। कुत्वस्य

---

ष्यतीत्यत आह-*ज्ञापकेनेति*। *वरं करणमिति*। तादृशार्थबोध-
शब्दोपादाने शब्दात्तदर्थोपस्थितिः। व्याख्यानेन कल्पने विवक्षितार्थ-
स्यानुमितिर्वाच्या। अनुमितिसामाग्री च गुरुतरव्याप्तिज्ञानादिघटिते-
ति भावः।

*वस्यैव कुत्वापत्तिरिति*। न च वस्य कुत्वलोपयोः प्राप्तौ कुत्व-
पूर्वत्रासिद्धत्वाद्वलोपस्यैव प्राप्तिरिति वाच्यम्। एवं सति सूत्रारम्भसा-
मर्थ्यात्क्विन्नन्तस्येत्यर्थोऽपि सम्भाव्येत स चानिष्ट इत्याशयात्। सूत्रारम्भ-
सामर्थ्येन पूर्वत्रासिद्धत्वबाधेऽप्याह—*तथा सतीति*। न च घोषवदल्प-
ल्पप्राणस्य च वकारस्य तादृशो गकार एव वक्तुमुचित इति वाच्यम्,
'वर्गाणां तृतीयचतुर्था अन्तस्था हकारानुस्वारौ यमौ च तृतीयचतुर्थौ
वृतकण्ठा नादानुप्रदाना अघोषा' इति शिक्षायां घकारवकारयोः सम-
धर्मत्वप्रतिपादनेनास्य ग्रन्थस्य तच्छिक्षानुसारित्वात्। एवं दन्त्योष्ठ्य-
स्यापि महाप्राणता तत्रोक्ता। मूलोक्तरीत्या तु क्विनो ग इत्येवोचित-
उत्तरार्थत्वमपि न कुग्रहणस्येत्याह-*नशेर्वेत्यत्रेति*।

ननु निरुपपदाद्युजेरिति पूर्वमुक्तन्तेनात्रक्विनोऽभावात्कथन्तस्य प्राप्ति-

---

(१) ननु प्रत्ययग्रहणस्य न वैयर्थ्यं सम्भवति तदभावे प्रत्ययग्रहणपरिभाषया क्विन्नन्तस्य इत्यर्थे
वस्य कुत्ववारणाय तस्य चारितार्थ्यात्। तथासति नातद्गुणसंविज्ञानबहुव्रीहौ तस्य ज्ञापकत्वम्।
च कुत्वस्य बहिरङ्गत्वात् पूर्वत्रासिद्धमित्यसिद्धत्वाच्च वेरपृक्तस्येति पूर्वलोपे वस्य कुत्वस्य च प्राप्तिरे-
ति वाच्यम्, क्विबादिषु सावकाशस्य वेरपृक्तस्येति लोपस्य निर्दिश्यमानपरिभाषया विशेषविहितत्वात्
बाधे वस्य कुत्वप्राप्ते दुर्वारत्वादित्याशंकते-*नचेति*।

सिद्धत्वादिति । अतद्गुणबहुव्रीह्याश्रयणात्प्राप्तिः । सुयुगिति । 'सत्सूद्विष' (पा०सू०३।२।६१) इति क्विप् । धातुपाठेति । व्याख्यानादिति भावः । युगिति । 'क्विप् च' (पा०सू०३।२।७६) इति क्विप् । इहेति । 'स्रजिदृशोः' (पा०सू०६।१।५८) इति सूत्रे 'रज्जुसृड्भ्याम्' इति भाष्यप्रयोगात् 'काम्यच्' (पा०सू०३।१।९) सूत्रे भाष्ये 'उपयट्काम्यति' इति प्रयोगात् 'क्विन् प्रत्ययस्य' इति कुत्वं नेत्यर्थः परिमृडिति । 'धातोरुच्यमानं कार्यन्तत्प्रत्यये' इति परिभाषया ऽत्र सुब्निमित्तिका 'मृजेर्वृद्धिः' (पा०सू०७।२।११४) न । क्विब्निमित्तिका तु 'क्ङिति च' (पा०सू०१।१।५) इति निषेधान्न । परौ व्रजेः । 'क्विब्वचि' इत्युणादिपठितमिति मते ततः क्विब्दीर्घावनुवर्तेते, व्याख्याख्यानाच्च । ताभ्यां पदान्त इत्यस्यासम्बन्धः, किन्तु षेणैवेत्याह—क्विबित्यादि ।

विश्वस्य (पा०सू०६।३।१२८) 'ढ्रलोपे' (पा०सू०६।३।१११) इत्यतो दीर्घ इत्यनुवर्त्तते । ननु षत्वादीनामसिद्धत्वेन राट्शब्दपराभावः, अत आह—पदान्तेति । तेन विश्वराजौ इत्यादौ न, 'विश्वाराड्भ्या' मित्यत्र च भवति । 'आदित्यविश्ववसवः' (अ०को०) इत्यत्र तु न दीर्घः । 'नरे संज्ञायाम्' (पा०सू०६।३।१२९) इत्यतः संज्ञापदापकर्षणात् ।(१)

---

त आह—*अतद्गुणेति* । *धातुपाठेतीति* । तस्य प्रथमोपस्थितत्वात् । *व्याख्यानादिति* । शीघ्रोपस्थितिमूलकाद् व्याख्यानादित्यर्थः । *इति मत इति* । एतेनेदं न पूर्वं किन्तु "अन्येभ्योऽपि दृश्यते" इतिसूत्रस्थदृशिग्रहणस्यैवेदम्फलमिति सिद्धान्तः सूचितः । *व्याख्यानादिति* । 'परिव्राजौ' इत्यादिलक्ष्यदर्शनमूलकाद्व्याख्यानात् ।

*संज्ञापदापकर्षणादिति* । एवञ्च यत्र पूर्वोत्तरपदघटिता संज्ञा तत्रैव दीर्घः कोशघटकपदानि तु प्रत्येकं संज्ञास्वरूपबोधकानि न तूभयघटिता संज्ञा तत्रोपात्तेति भावः ।

स्कोरितिसूत्रस्य मूलोक्तयथाश्रुतार्थे 'पृथक् स्थाता' इत्यादावतिप्रसङ्गः

---

(१) संज्ञापदापकर्षणादिति* । अत्र केचित्—दीर्घविधावुत्तरपदाधिकारेण तस्य पूर्वपदाक्षेपकत्वे पूर्वपदभूतविश्वशब्दस्य दीर्घ इत्यार्थाश्रयणादनेकपदद्वन्द्वघटककोशस्थविश्वशब्दस्य दीर्घप्राप्तिरेव न, पूर्वपदशब्दस्य समासपूर्वावयवे रूढत्वादित्याहुः ।

स्कोः सं (पा०सू०८।२।२९) (१) "झलो लोपः संयोगान्त-लोपः" इति भाष्योक्तेरत्र झल इत्यस्यासम्बन्धः। तेन झलः परयो स्कोर्लोप इति नार्थ इत्यन्यत्र प्रपञ्चितम् । झलीत्यनुवर्त्तमानं झला-दिप्रत्ययपरं "झलोझलि" (पा०सू०८।२।२६) इत्यत्र "उदःस्था" इत्या-रम्भेण तदर्थकृतयाऽर्थाधिकारात् । तेन 'पृथक्स्थाता' 'पयः स्थितिः' इत्यादौ न दोषः । 'सडी'ति(२) वार्तिकाच्च सनस्सकारमारभ्याऽऽम-हिङो ङकारात्सडिति प्रत्याहारः । 'भूयास्ता'मित्यादौ 'व्यञ्जनपा-स्ये'ति न्यायेन लोपाभावेऽपि न क्षतिः । केचित्तु अप्रत्यये संयोगा-दिलोपप्राप्तियोग्योदाहरणानामनभिधानमेवोचितम् 'सडीति वक्तव्यं काष्ठशक्स्थाता'इति वार्तिकस्य प्रत्याख्यानपरेण "काष्ठशगेव नास्ति कुतः काष्ठशक्स्थाते'ति भाष्येण तथैव बोधनादित्याहुः ।

प्रत्याख्यानमेकदेशयुक्तिः सडीति वक्तव्यमेवेति परे ।

"चोः कुः" (पा०सू०८।२।३०) इत्येतत् षत्वेनापवादत्वा-

---

प्राप्नोति तत्परिहारायाह-*झलीत्यनुवर्त्तमानमिति* । *सडीतिवार्तिका-च्चेति* इदञ्च नापूर्वं वार्त्तिकं किन्तु "परेश्च घाङ्कयोः" इतिसूत्रभाष्ये "सडि लत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वानि वक्तव्यानि". 'गिरौ' 'गिर' इति लत्वम् 'पयो धावति' इत्यत्र 'धि चे'ति सलोपः । काष्ठशक् स्थातेत्यत्र स्कोरि-तिकलोपः । क्रुञ्चेत्यत्र चोः कुरिति कुत्वम् । धुर्य इत्यत्र हलि चेतिदीर्घत्व-पतद्यावर्त्यन्तत्रोक्तम् । तदेकदेशोऽयम् । *केचित्त्विति* । वार्त्तिकप्रत्या-ख्यानवादिमतमेतदिति स्पष्टमेव । स्वमतमाह— *प्रत्याख्यानमेकेति* 'पृथक् स्थाता । 'पयः स्थितिः' इत्यादिप्रयोगाणां लोकप्रसिद्धत्वादनभि-धानकल्पनायाम्मानाभावादिति भावः ।

---

(१) संयोगान्तलोपे यणः प्रतिषेधो वक्तव्यः, 'दध्यत्र' मध्वत्र' संयोगादिलोपे च यणः प्रति-वक्तव्यः काक्यर्थम वार्यर्थम् । इत्यस्यानन्तरं "नवा झलो लोपाद्बहिरङ्गलक्षणत्वाद्वेति" परिहारद्वयं [illegible] गान्तस्येति सूत्रे भाष्येऽभिहितम् । तत्रोत्तरस्यैव पूर्वस्यापि परिहारस्य संयोगादिलोपाविषयकत्वाय [illegible] झलीति सूत्रे झल इति पञ्चम्याः षष्ठीं प्रकल्प्य उभयत्रानुवृत्त्यपकर्षाभ्यामन्वयकल्पनेन झलन्तसंयो-स्कोः तादृशसंयोगान्तस्य पदस्य इत्यर्थकल्पनात् यथेष्टसिद्धौ 'संयोगादिलोपलत्वे'ति वार्तिके [illegible] लोप इति ग्रहणं न कर्तव्यमिति केचित् । तन्मतं निराकर्तुमाह-*झलोलोप इति* । नवा झलो [illegible] दिति वार्त्तिकव्याख्यायां भाष्यकृतो "झलो लोपः संयोगान्तस्य लोपः" इत्येवोक्तं न तु संयोगादिलोपस्य-प्युल्लेखः कृतः । झल्ग्रहणस्य संयोगादिलोपेऽनुवृत्तौ तु भाष्यासङ्गतिः स्पष्टैव स्यादिति भावः ।

(२) सनः सकारमारभ्य महिङः ङकारपर्यंतं सड् इति प्रत्याहारः । गुप्तिज्किद्भ्यः सन् (पा० ३।१।५) तिप्तस् (पा०सू०३।४।७८) इति सूत्रानुक्रमो बोध्यः ।

वाध्यते । क्विन्प्रत्ययस्येत्यस्य तु क्विन्विधानसामर्थ्यादेव न बाध इत्याह—क्विन्नन्तत्वादिति । ऋत्विक्शब्दो यज्ञसंम्बन्धिपुरुषविशेषे रूढः ।

त्यदादीनामित्यनुवृत्तेराह—त्यदादीनामिति । तेन 'आतपः' इत्यादौ न । तदोः किम् ? यः । तोरिति तु नोक्तम् । 'अनेषा' इत्यादौ

---

*तदोः सः सौ* । अत्रानुवर्त्तमानत्यदादीनामित्यस्यावयवार्थकषष्ठ्या त्यदाद्यवयवतकारयोरित्यर्थः । त्यदूतच्छब्दयोर्बुद्धिविषयचैत्रत्वाद्यवच्छिन्ने शक्तिः । न चात्र बुद्धिविषयत्वं चैत्रत्वस्य तदाश्रयस्य वा विशेषणं वाच्यम्, एवं सति बुद्धिविषयत्वस्योक्तविशेष्यांशे प्रकारतया शाब्दबोधे भानापत्तिरिति वाच्यम् । चैत्रत्वमैत्रत्वावच्छिन्ने त्यदादीनां शक्तिस्वीकारे शक्यतावच्छेदकानां नानात्वाच्छक्त्यानन्त्यस्य, यदा चैत्रत्वावच्छिन्नविषयकबोधस्तदा मैत्रत्वाच्छिन्नविषयकबोधस्य चापत्तिरिति स्वविषयतावच्छेदकत्वसम्बन्धेन बुद्धिविशेषोपलक्षिते धर्मावच्छिन्ने शक्तिः स्वीक्रियते । बुद्धिविशेषश्चोपलक्षणीभूय शक्यतावच्छेदकतया अनुगमक इति न तेन रूपेण शक्यतावच्छेदकस्य शाब्दबोधे भानापत्तिः । अनुगतधर्मावच्छिन्ना शक्यतावच्छेदकता चैकेति न नानार्थत्वापत्तिश्च ।

तच्छब्दः क्वचित्प्रक्रम्यमाणपरामर्शकः । 'स देवदत्तो यस्तत्र स्थितः' इत्यादौ । एतस्यैव तत्पदस्य यत्पदेनार्थप्रत्यायने नियमेनापेक्षा । तत्पदसमभिव्याहारज्ञानं विना यत्पदस्यापि तादृशानुगमकधर्मग्रहाभावेन शक्तिग्रहासम्भवाच्छाब्दबोधाजनकत्वस्योपपत्तेः । अत एव 'तमानय य इहास्ति' इतिवाक्यस्य वक्तृबुद्धिस्थघटकर्मकानयनबोधकत्वम् । अत्रैव "यत्तदोर्नित्यसम्बन्ध" इति व्यवहारः । यत्र तु प्रक्रान्तपरामर्शकस्तत्र यत्पदाभावेऽप्यर्थबोधो भवत्येव । यथा 'समृद्धपुरो राजास्ति' इत्यादिकथनानन्तरं 'तमभिगच्छ' इत्युच्यते तत्र यत्पदाभावेऽप्यर्थबोधो भवति । एवं यच्छब्दस्य तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितो यो धर्मस्तदवच्छिन्ने शक्तिः । अत एव नियमेन तत्पदापेक्षा ।

लाघवमूलिकां कस्य चिच्छङ्कान्निरस्यति—*तोरिति त्विति* । अनेष इत्यत्रैतच्छब्दस्य नञा समासे नलोपे "तस्मान्नुडचि" इतिनुटि नकारस्यैतच्छब्दावयवतया सस्यापत्तेः । स्पष्टञ्चेदं 'तस्मान्नुडचि' इतिसूत्रे भाष्ये । तत्र हि—तस्मादित्यस्याभावे नञ एव नुटः प्राप्तिमाशङ्क्य "एवं तर्हि पूर्वान्तः करिष्यते" तत्रायमप्यर्थः । "तदोः स सावितिसूत्रे तदोर्ग्रहणञ्च कर्त्तव्यं भवति । तवर्गनिर्देशे इह प्राप्नोति । अनेषः करोति" । न चात्र निर्दिश्यमानपरिभाषया न भविष्यतीति वाच्यम् । अर्थवत्परिभाषैक-

नस्याप्यापत्तेः । न च नुटो बहिरङ्गत्वेनासिद्धत्वम् । बहिर्भूतसुनिमि-
त्तकत्वेनास्यैव बहिरङ्गत्वात् । इदञ्च 'तस्मान्नुडचि' इति सूत्रे भाष्ये
ध्वनितम् । सौ किम् ? तौ । अत्वसत्वे नेति । गणकार्यत्वादिति भाष्य-

वाक्यतया निर्दिश्यमानपरिभाषायाः प्रवृत्तौ तकारस्यापि न स्यादिति
तादृशरूपप्रदर्शनपरभाष्यप्रामाण्येन द्वयोरपि परिभाषयोस्त्यागात् । "ग-
वता पूर्वान्तः । एष दोषो न भवति" । ततः पूर्वान्तत्वेऽनेष इत्यत्र न-
पंसाशङ्क्य नुग्विधानसामर्थ्येन तं वारयित्वा ङमुटः प्राप्तिमुद्भाव्य परादि-
त्वपक्ष एव स्थापितः । न चाजादिपदसन्निपातेन जातस्य नुकः कथ-
द्विघातकङमुट्प्रति निमित्तत्वमिति नायं दोष इति वाच्यम् । नमे-
ऽचि त्वादन्तोदात्तत्वे च कृतेऽमेशब्देन नकशब्दस्य समासेऽकनमे-
त्यत्र "अमे चावर्णं द्व्यच्त्र्यच्" इति पूर्वपदाद्युदात्तत्वाभावापत्तेरतः प-
दित्वस्यावश्यकत्वात् ।

अत्र कैयटः । 'परादावपि नुटि तस्यासिद्धत्वात् 'तदोः सस्सौ' इति
क्रियमाणे सत्वं न भविष्यतीति चिन्त्यमेतत्' इति तद्दूषयितुमुपक्रमते-अ-
चेति* । *अस्यैव* । सत्वस्यैव । नुटो यद्यपि पूर्वोत्तरपदसापेक्षत्वं त-
थाप्यङ्गसञ्ज्ञानिमित्तबहिर्भूतसुबनपेक्षत्वेनान्तरङ्गत्वं, सत्वस्य तु त-
दपेक्षत्वाद्बहिरङ्गत्वमिति भावः । यत्त्वन्तर्भूतसुबपेक्षत्वेन सत्वमन्तरङ्ग-
मिति तन्न अन्तर्भूतसुपः प्रत्ययलक्षणेनापेक्षा वाच्या । सा च न सम्भव-
ति "न लुमताङ्गस्य" इति प्रतिषेधात् । वस्तुतस्तूत्तरपदाधिकारस्थ-
बहिरङ्गस्य परिभाषाया अनित्यत्वान्नासिद्धत्वमित्यवश्यं वाच्यम् । अ-
एवात्मानं श्रियम्मन्यते यत्तत्कुलं 'श्रीमन्यम्' इत्यत्र खशि "इच एकाचो-
इत्यमि स्वमोर्नपुंसकात्" इति लुक्सिद्धिः । श्रीशब्दस्य नपुंसकवृत्ति-
त्वन्तु प्रष्ठादीनां पुंयोग्यात्स्त्रियामिव श्रीशब्दस्य परित्यक्तस्य लिङ्ग-
स्वीक्रियते अत एव ह्रस्वत्वस्य सिद्धिः ।

युष्मच्छब्दस्य स्वसम्बोध्यतावच्छेदकत्वोपलक्षितचैत्रत्वाद्यवच्छि-
शक्तिः । त्वं युष्मच्छब्दोच्चारयिता । सम्बोध्यत्वञ्चोच्चारितशब्दजन्य-
धाश्रयत्वेनेच्छाविषयत्वम् । इच्छापि प्रत्यासत्त्या स्वसम्बन्धिनी वि-
क्षिता । एवञ्चोच्चारणकर्तृसम्बधिनी योच्चारितवाक्यजन्यशाब्दबोधाश्र-
प्रकारिकेच्छा तद्विशेष्यतावच्छेजकत्वोपलक्षितधर्मावच्छिन्ने युष्मच्छब्द-
स्य शक्तिः ।

अस्मच्छब्दस्य तु स्वोच्चारणकर्तृतावच्छेदकत्वोपलक्षितधर्मावच्छि-
शक्तिः । अत्र स्वपदमस्मच्छब्दपरम् । न चैवं देव्युवाच ।

गर्जगर्जक्षणंमूढ मधु यावत्पिबाम्यहम् ।
मया त्वयि हतेऽत्रैव गर्जिष्यंत्याशु देवता ॥

ङे प्रथम (पा०सू०७।१।२८) "युस्मदस्मद्भ्यां ङसोऽश्" (पा० सू०७।१।२७) इत्यतो युष्मदस्मद्भ्यामिति वर्त्तते । ङे इति पृथक्पदम् । अत एव "प्रथमयोरित्युच्यते, कयोः प्रथमयोः ? विभक्त्योः, वचनयोस्तु न ग्रहणं "शसो न" (पा०सू०७।१।२९) इति लिङ्गात्" इति भाष्यं सङ्गच्छते ।

त्वाहौ (पा०सू०७।२।९४) (१)यद्यपि युष्मदस्त्वादेशः "त्वमावेकवचने" (पा०सू०७।२।९७) इति सिद्धः, तथापि युष्मानतिक्रान्तो ऽतित्वमित्यर्थमत्र विधानम् । न चैवं तत्रास्य चारितार्थ्यात्केवले पर-

इतिवाक्यस्य युष्मदस्मच्छब्दाभ्यां देवीमाहिषासुरयोर्बोधानुपपत्तिः । देव्या एतद्वाक्योच्चारणकर्तृत्वाभावादिति वाच्यम् । अस्मिन्वाक्ये देव्युच्चारितत्वस्य महिषासुरे च सम्बोध्यत्वस्य भ्रमाच्छ्रोतुर्देव्यादिप्रतीतिः, न तु तत्रैतद्वाक्यघटकास्मच्छब्दस्य शक्तिरित्यभ्युपगमात् । यद्वा तादृशानुपूर्वीज्ञानरूपसामान्यलक्षणया देवीवाक्यस्यापि ज्ञाने तस्मिन्देव्युच्चरितत्वं मानसज्ञानेन गृह्यते । एवमस्मच्छब्दार्थघटकोच्चारणांशे स्वातन्त्र्यविशेषणदानेनानुकरणादिस्थले नानुवादकादिबोधः । स्वातन्त्र्यश्च स्वार्थतात्पर्यकान्यदीयोच्चारणानधीनत्वमिति दिक् ।

*पृथक् पदमिति* । लुप्तषष्ठीकम् । *अत एव* । पृथक् पदत्वादेव । "ङेप्रथमयोः" इत्यस्यैकपदत्वे प्रथमयोरितिद्विवचनस्याञ्जस्येनोपपत्तिसम्भवेऽपि कयोः प्रथमयोरितिशङ्काया असङ्गतिस्स्फुटैव । *लिङ्गादिति भाष्यमिति* । तत्र हि ङेप्रथमयोरितिप्राप्तस्य निषेधोऽयम् नत्वंतु द्वितीयाया अत्यात्वे पूर्वसवर्णदीर्घे 'तस्माच्छस' इत्येव सिद्धमित्याशङ्कितम् । नकारादेशविधायकत्वे हि न वदेदिति तद्भावः । 'युष्मान्ब्राह्मणी' इत्याद्यर्थन्नत्वविधानमिति त्वन्यत् । यद्वा विभक्त्योर्ग्रहणमित्यर्थे "द्वितीयायाञ्च" इतिसूत्रं ज्ञापकम् । यदि प्रत्यययोर्ग्रहणं स्यात्तदा "द्वितीयायाञ्च" इत्यस्याभावेऽप्यात्वं युष्मदस्मदोरित्यनेनानादेशत्वात्सिद्धमेवेति तद्यर्थमेव । न च "योऽचि" इत्येतद्बाधनार्थमस्त्विति वाच्यम् । "योऽचि" इतिसूत्रेऽनमोरितिकरणेनैतेषु यत्वे प्रतिषिद्धे आत्वस्य भावात् । युष्मानस्मान् इत्यपि "शसो न" इत्यनेनादेर्नकारे शेषे "सुपि च" इति दीर्घत्वे संयोगान्त्यलोपेन सिद्धम् ।

*अतित्वमित्यर्थमिति* । अत्र युष्मद एकार्थबोधकत्वाभावेन त्वादे-

(१) ननु त्वाहावित्यत्राहावित्येवं वक्तव्यं त्वग्रहणं च मास्तु युष्मदस्मदोरनादेशे इत्यत्र एकदेशे स्वारितत्व प्रतिज्ञानादस्मदित्यस्य सम्बन्धः तस्य षष्ठ्येकवचनान्तत्वेन विपरिणामे अस्मदः 'आह इत्यादेशः स्यात् सौपरतः' इत्यर्थेन हामित्यस्य सिद्धिः । त्वामित्यस्य तु त्वमावेकवचने इत्यनेन त्वादेशेन सिद्धिरित्याशङ्क्य—यद्यपीति* परिहरति—तथापि इत्यादि* ।

त्वाद्त्वमाभ्यां भाव्यमिति वाच्यम् ।

त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः ।

इत्यस्य वक्ष्यमाणत्वात् । 'युष्मदस्मदोरनादेशे' (पा०सू०७।२।८६) इत्यतो युष्मदस्मदोरिति वर्त्तते ।

शेषे(पा०सू०७।२।९२) आत्वयत्वयोः प्रागुक्तत्वेन तद्विषया-तिरिक्तविभक्तिरिह शेषशब्दार्थस्तदाह–आत्वयत्वेत्यादि । स्पष्टं चेदं "युष्मदस्मद्भ्यां ङसः" (पा०सू०७।१।२७) इत्यत्र प्रकृतसूत्रे च भाष्ये(१) । अत एव 'साम आकम्' (पा०सू०७।१।३३) इति ससुट्कनिर्देशः सङ्गच्छते । एवञ्च शेषग्रहणं स्पष्टार्थम् । विशेषवि-हिताभ्यामात्वयत्वाभ्यां स्वविषये बाधसंभवात् । अन्त्यस्येति अलोऽन्त्यपरिभाषयेति भावः । 'त्वाहादयो ऽकारान्ता' इति वृत्त्याद्य-नुसारेणाह–अतो गुण इति । "त्यदादीनामः" (पा०सू०७।२।१०२) इति सूत्रभाष्यकैयटाभ्यां हलन्ता एवादेशा इति लभ्यते तदा पररू-पस्य प्राप्तिरेव न । यद्यप्युच्चारणार्थानामपीत्संज्ञालोपाभ्यां निवृत्ति-कार्या, तथापि 'अतो गुणे' (पा०सू०६।१।९७) इत्यस्याप्रवर्त्तनं प्रक्रियालाघवमत्र पक्षे । इत्संज्ञालोपयोस्तु सूत्र एव प्रवृत्तिरिति प्रयोगसाधुत्वज्ञाने गौरवम् । "त्वाहौ सौ" इति गुरुनिर्देशस्तु 'श्वेत-होक्थशस्' इतिवन्नार्थसाधकः । णिजन्तात्क्विपि युष्म् अस् इति प्राति-पदिकयोरादेशा एव नेति तदाशयः । 'मपर्यन्तस्य' इति भाष्यसं...

---

शाप्राप्तिरिति भावः ।

*अत एव* । अन्त्यलोपस्वीकारादेव । *निर्देशः सङ्गच्छत इति* । अन्त्यलोपे हि सुटः प्राप्तेरिति शेषः । *वृत्त्याद्यनुसारेणेति* । वक्ष्य...णोऽभिप्रायः । तमेवाह–*त्यदादीनामिति* । ननु हलन्तत्वेऽपि त्वाद्यादे...यवाकारस्योच्चारणार्थकस्येत्संज्ञालोपाभ्यां निवृत्तिर्वाच्येति नात्र पक्षे ला...वमत आह–*यद्यप्युच्चारणार्थानामिति* । ननु हलन्तादन्तपक्षयो...

---

(१) तत्रहि—"आद्ये यः शेषे लोपप्रदेशे सविज्ञायते" इत्युक्तम् । अनादेशे आत्वयत्वविषय...शः शेषः इति तत्रत्यः कैयटः । एवञ्चाऽऽत्वयत्वानिमित्तानादेशविभक्त्यतिरिक्तैव विभक्तिः शेषपदार्थ...स्पष्टमेवोक्तम् । द्वितीये प्रकृतसूत्रे च "शेष ग्रहणं शक्यमकर्तुं कथमविशेषेण लोप उत्सर्गः, ... यत्वमपवादो हलादावात्वमित्युक्तम् । तथाचैवं प्रत्याख्यानं कुर्वता भाष्यकृता प्रत्याख्यानाभावपक्षे ... विभक्तेः शेषपदार्थत्वं स्पष्टमेव सूचितम् ।

श्चायमर्थ इत्यनुपदं स्फुटीभविष्यति । अन्तरङ्गत्वादिति । परानिमित्तानपेक्षत्वेन तत्त्वमिति भावः ।

अलिङ्ग इति । एवञ्च स्त्रियामनयोरवृत्तेर्न टाविति भावः । 'साम आक' मित्यत्र भाष्ये स्पष्टम् । यद्वेति । इदं 'त्यदादीनामः' इति सूत्रे भाष्ये स्पष्टम्, 'सामआक'मित्यत्र च । मपर्यन्ताच्छेषस्येति । इदमुपलक्षणं, तेन त्वमित्यादौ लोपप्रवृत्तिवेलायां मपर्यन्ताच्छेषत्वाभावेऽपि न क्षतिः । ननु अदन्तत्वे आदेशानां वार्णादाङ्गमिति परिभाषया पररूपात्पूर्वमेव टिलोपे टाबभाव उपपादयितुमशक्यः । अकारस्य कार्य्यद्वयेपि स्थानित्वेन समानस्थानिकत्वमस्तीति चेन्न । 'हलन्ता एवादेशा' इति कैयटेनात्रैवोक्तत्वेनादोषात् । शेष इत्यस्य सामर्थ्यात्तन्न्यायाप्रवृत्तिरत्रेत्यन्ये । तन्न । युष्मभ्यं युष्मत् युष्माकमित्यादौ टाब्निवृत्त्या चारितार्थ्यात् । तस्मादनित्यत्वात्तदप्रवृत्तिरित्येके । तदाह—अतो गुणे कृते इति ।

अत्र वदन्ति । तत्तद्भाष्यप्रामाण्याच्छेषग्रहणससुट्कनिर्देशाभ्यामस्य सूत्रस्याऽऽवृत्त्याऽर्थद्वये तात्पर्यम् । तच्च लक्ष्यानुरोधाद् व्यवस्थितम्, तेन भ्यमि टिलोपे युष्मूभ्यमिति न । अत एव 'भ्यसोभ्य' मिति सूत्रे "यदि भ्यमादेशः शेषेलोपोऽन्त्यलोप इति एत्वं प्राप्नोति । अथ भ्यमादेशः शेषे लोपष्टिलोप इत्यन्तस्योदात्तनिवृतिस्वरः प्राप्नोतीति,

---

त्वेनैकरूपसाधकत्वमत आह—*णिजन्तादिति* । *न टाबितीति* स्त्रियामित्यस्य प्रकृतिविशेषणतायाः क्लृप्तत्वादिति भावः । *इदम्* । अन्त्यस्य लोप इत्येतत् । *उपलक्षणमिति* । तेन दृष्ट इत्यस्याध्याहारेण सूत्रार्थः कार्य इति भावः । उपलक्षणत्वे मानाभाव इति चेत् ? शेषग्रहणमेवेत्यवधेहि अन्यथा टिग्रहणमेव कुर्यात् । आदेशविधौ यस्योपयोगस्तदितरभाग एव शेषपदार्थः । ननु यत्र न मपर्यन्तस्यादेशस्तत्र का गतिरिति चेत् । त्वाद्यादेशविधावुद्देश्यतावच्छेदिका या आनुपूर्वी तदवच्छिन्नभिन्नत्वस्य विवक्षितत्वात् । वार्णादाङ्गमितिपरिभाषाप्रवृत्तिमुपपादयति *अकारस्येति*। परोक्तं खण्डयति—*शेष इत्यस्येति*। *तदप्रवृत्तिरिति*। वार्णादाङ्गमितिन्यायाप्रवृत्तिरित्यर्थः ।

नन्वेवं टिलोपान्त्यलोपयोरन्यतरपक्षस्यैवाश्रयणे 'युष्मभ्यम्' इत्यादौ टिलोपपक्षे हलन्तस्यैव श्रवणापत्तिरत आह—*अत्र वदन्तीति*। *उदात्त-

यथेच्छसि तथास्तु" इत्येवोक्तं, न तु भ्यमादेशे टिलोपपाद
फलभेद उक्तः।

वस्तुतस्तु टिलोपो व्यर्थः। अत एव "लिङ्गाभावट्टिलोपवचना-
नर्थक्य" मिति 'सामआक' मित्यत्र भाष्ये उक्तम्। अत्र लिङ्गाभावा-
दित्युपलक्षणम्। "शिशीलुङ्मुम्विधिभ्यो युष्मदस्मदोर्विभक्त्यादे
विप्रतिषेधेन" इति "नेतराच्छन्दसि" (पा०सू०७।१।२६) इति सू
स्थभाष्यवार्त्तिकबलेन लिङ्गवत्त्वेऽपि सन्निपातपरिभाषया टावभाव
पपादयितुं शक्यत्वम्। अत एव सन्निपातपरिभाषया 'बुद्धौ' इत्य
टावभावः कृन्मेजन्तसूत्रे भाष्ये उक्तः। शेषग्रहणन्तु भाष्ये प्र
ख्यातमेव। "त्यदादीनामः" इति सूत्रस्थं "टिलोपष्टावभावार्थ"
तु वार्त्तिकैकदेशिवचनमिति न दोषः। एतच्च भाष्यप्रदीपो
निरूपितम्। अभ्यम्सूत्रे 'यथेच्छसि तथाऽस्तु' इति प्रौढ्योक्त्या भ्यमि
च्छेदस्य प्रौढिवादत्वं भागवतैव सूचितं 'त्वं यथेच्छसि तथास्तु, तत्र यु
षोद्धारो मया सुकरः' इति तत्तात्पर्यात्। अभ्यमित्येव तु च्छेदो न्या
य्यः। अत एव "युष्मदस्मदोरनादेशे" (पा०सू०७।२।८६) इति
सूत्रे "न चादेशो हलादिरस्ती" ति भाष्योक्तिः सङ्गच्छते इति। पर
त्वमिति॥ आङ्गत्वात्तदन्तविधिरिति भावः। गौणेऽप्रवृत्तौ बी
भावादाह-'अतित्वामिति'।

युवावौ (पा०सू०७।२।९२)। द्विवचनशब्दोऽत्र यौगिको, व्या
ख्यानात्। द्वयोर्वचनं बोधनं, तत्र समर्थयोर्युष्मदस्मदोरित्यर्थो भा

---

निवृत्तिस्वर इति*। मदिक्प्रत्ययान्तत्वेनान्तोदात्तत्वात्।

स्वसिद्धान्तमाह—*वस्तुतस्त्विति*। ननु लिङ्गाभावादित्यनुपपन्न
ङ्गयोगस्य सत्त्वादत आह-*अत्र लिङ्गाभावादीति। ननु त्यदाद्यकारा
धेरित्यनेन टापि कर्त्तव्ये यथा सन्निपातपरिभाषायाः प्रवृत्तौ भाष्यं
शिष्ट्य साधकं तथा न प्रकृते साधकमत आह-*अत एवेति*। टापि
व्येऽपि क्वचित्सन्निपातपरिभाषायाः प्रवृत्तिस्वीकारादेवेत्यर्थः।

नन्वेवं "भ्यसोऽभ्यम्" इतिसूत्रस्थपक्षद्वयाभ्युपगमसूचकभाष्यविरो
इत्यत आह-*अभ्यं सूत्र इति* । न्याय्य इत्येतदेवोपपादयति-*अत
वेति। अभ्यमितिछेदादेव।

*व्याख्यानादिति। वचनशब्दोपादानमूलकाद्व्याख्यानादित्यर्थः।

प्रामाण्यपाच्च तद्गृह्यमाणयुष्मदस्मदोरेव विशेषणं न तदन्तस्य। अ-
ङ्गाधिकाराद्धि तदन्तग्रहणमित्याशयेनाह–द्वयोरुक्ताविति। एत-
दुक्तलक्षणोदाहरणेषु मूले एव स्फुटम्।

मपर्यन्तस्य किमिति। अधिकारसूत्रं किमर्थमिति प्रश्नः।

ननु समुदायादेशत्वेऽपि "ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच् अन्यत्र तु सुबन्तस्य टेः प्राक्" इति व्यवस्थाया युष्मदस्मद्भ्यां त्वयकेत्यादिसिद्धये वक्ष्यमाणत्वादन्तरङ्गत्वात् 'युवाम्' इत्येतसिद्ध्वत्युरमकाजिति 'युवकाम्' इत्यत्र न दोषः, अत आह–त्वयेति। नन्वत्रापि 'अच्ये' इति न्यासेनैकारादेशे ऽयादेशे च सिद्धेराह–युवकाभ्यामिति। हलन्ता आदेशा इति पक्षे तु 'त्वया' इत्यादेरसिद्धिः,

---

यथा द्वित्वे इत्येव वदेत्। नन्वेवमपि द्विवचने इत्यस्य ससम्बन्धिकतया कस्य विशेषणमित्यत आह–*तत्र*। समर्थयोरित्यर्थः। *गृह्यमाणयुष्मदस्मदोरेवेति*।

ननु तथाप्यङ्गाधिकारपठितेषु "अङ्गस्य" इत्यस्य यथाऽधिकारवशाल्लाभस्तथा "युष्मदस्मदोः" इत्यस्याप्यनुवृत्त्यैवलाभ इत्यनयोः को विशेष इति चेत्? अवान्तरवाक्यार्थबोधपूर्वको महावाक्यार्थ बोध इति हि सुप्रसिद्धम्। प्रकृते च "युष्मदस्मदोः" इत्यारभ्यावान्तरवाक्यार्थबोधो युष्मदस्मदोरित्येतत्पदार्थोपस्थितिजन्यः कल्प्त इति "युवावौ" इत्येतत्सूत्रघटकपदाभ्यां नियताकाङ्क्षया युष्मदस्मदोरित्येतच्छीघ्रोपस्थितिकतयापेक्ष्यते। अङ्गस्येत्यस्य तु पश्चादपेक्षेत्यभिप्रायेण गृह्यमाणयुष्मदस्मदोरित्युक्तमिति गृहाण। यत्पदार्थं विनाऽवान्तरवाक्यार्थबोधो निराकाङ्क्षो न भवति तस्मिन्पदार्थे गृह्यमाणत्वव्यवहारः। अधिकारस्य मपर्यन्तस्येत्यस्याभावेऽपि युवकामावकामित्यस्य सिद्धिरिति शङ्कते–*नन्विति*। *त्वयकेत्यादिसिद्धय इति*। अनुपदोक्तव्यवस्थाया अभावे त्वकयेत्यादिप्रकृते स्यादिति भावः।

मपर्यन्तस्येत्यस्याभावे समुदायस्य त्वमादेशोऽपि "अच्ये" इतिन्यासेनाकारस्यैकारादेशे त्वया मयेत्यस्य सिद्धिरित्याह—*नन्वत्रेति*। *युवकाभ्यामितीति*। अत्र भकारादिविभक्तिपरत्वेन पूर्वमेवाकाचि मपर्यन्तस्येत्यस्याभावे समुदायस्य युवावादेशेऽकचः श्रवणानापत्तिरिति भावः। अकचि कृते तन्मध्यपतितन्यायेन स्थानिबुद्ध्यैव स्थानिवद्भाव इव समुदायस्यादेशापत्तिः। एतादृशे विषयेऽकजुर्घटते निर्दिश्यमानभिन्नत्वसम्भवेन निर्दिश्यमानपरिभाषया युवकाभ्यामित्यस्यासिद्धिरिति ना-

एवमादेशस्य सर्वादेशत्वञ्च न स्यादिति बोद्धयम्।

नन्वेवमपि मान्तस्येत्येवोच्यतां किं परिग्रहणेनेति चेन्न युष्मयत्यादेः क्विपि सुप्यादेशाभावार्थं तत्सत्त्वात्। पर्यन्तशब्देन मान्तापेक्षया शेषस्य लाभात्। कटिपर्यन्तं वासः' इत्युक्तेऽग्रे किञ्चिदवशिष्टस्य नियमेन (१)प्रतीतेः। एवञ्च मान्ताद्यत्राग्रे किञ्चिदवशिष्टं तत्रैव युष्मदस्मदोरादेशाः। अत एव भाष्ये "अवधिद्योतनार्थं परिग्रहणं कर्तव्यं, मान्तस्येत्युच्यमाने यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशाः स्युः क्व च मान्ते ? युष्मयतेरस्मयतेश्चाप्रत्यये" इति उक्तम्। अवधिद्योतनार्थमित्यस्यान्तशब्दस्यावधिवाचकताद्योतनार्थमित्यर्थः, पर्यन्तशब्दस्य लोके तथैव प्रयोगात्। अग्रे किञ्चित्सत्त्वे देशकालयोरवधित्वव्यवहारस्य लोके दर्शनाच्च। तत्रैवेत्यस्य 'अनिष्ट एव' इत्यर्थः। परिग्रहणं तु "यतः पूर्वोस्ति परश्च नास्ति सोऽन्त्य" इति भाष्योक्तेर्मान्तपदस्य मुख्यार्थत्वलाभायात्रैव स्यात्। "क्वौ लुप्तम्" इत्यस्य प्रवृत्तिः स्यात्। (२) 'अभिव्यक्तपदार्था' इति न्यायश्च पदकार्यविषय

---

शङ्कनीयम्। *त्वयेत्यादेरसिद्धिरिति*। अधिकाराभावे समुदायस्य त्वादेशे "अच्ये" इतिन्यासेऽपि वकारस्यान्त्यस्यैकारादेशे वश्रवणानापत्तिरिति भाव। नन्वच्येगितिन्यासः कार्यस्तेन हलन्तादेशेऽप्येगागमविधानादिष्टसिद्धिर्भविष्यतीति चेन्न। अतियुष्मया अत्यस्मयेत्यस्य वक्ष्यमाणरूपस्यासिध्यापत्तेः। *न स्यादिति*। एवं सति मयेत्यस्यासिद्धिः सति स्यादिति भावः। *तत्सत्त्वादिति*। पर्यन्तशब्दसत्त्वादित्यर्थः। पर्यन्तशब्दसत्त्वे यथा न दोषस्तदुपपादयति-*पर्यन्तशब्देनेति*। *अनिष्ट एव*। एतादृशस्थले आदेशाभावस्येष्टत्वादेव। *अत्रैव स्यादिति*। युष्मयत्यादिविषय एव स्यादित्यर्थः। ननु णिलोपस्य "अचः परस्मिन्" इतिस्थानिवद्भावेन नायं दोष इत्यत आह-*क्वौ लुप्तमिति*। *प्रवृत्तिश्च स्यादिति*। सूत्रोदाहरणसिद्धय इत्यस्यादिः। नन्वभिव्यक्तेति

---

(१) नियमेनेति। इदं चिन्त्यमिति। इति केचित्। "आब्रम्हस्तम्भपर्यंतम्" इति प्रयोगे किञ्चिदवशिष्यत इति ज्ञायते। किन्तु अभिव्याप्तमर्यादा प्रतीयते। एवं च नियमेनेत्यस्य देशिकविवक्षावेन प्रतिभासेत इत्यर्थः। अन्येतु आब्रह्मस्तम्भपर्यंतमित्यादौ इत्यत्रैव परिरत्रनिरर्थक एव। तेन द्योत्यनैॉथन पर्यथो गतार्थ एव इत्याहुः।

(२) नन्वेवमपि गौणमुख्यन्यायेनात्रादेशप्रवृत्तिरेव न स्यादित्यत आह—*अभिव्यक्तेति*। अभिव्यक्तपदार्थाये स्वतंत्रालोकविश्रुताः। शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु॥ इति। अभिव्यक्तपदार्था इत्यनेनात्रसिद्धसंज्ञाशब्दानां व्यावृत्तिः। स्वतंत्रा इत्यनेन प्रकरणादिसहकारनिरपेक्षाः

(१)इतितदाशयः । अत एव भाष्ये प्रयोगदर्शनं न कृतम् ।

यत्तु परिग्रहणाभावे मान्ते यत्र ते तत्रैव स्यात् सामानाधिकरण्येनान्वयस्योचित्यात् । सति तु तस्मिन् सामर्थ्याद्युष्मदस्मदोर्यौ मपर्यन्ताविति व्याख्यानात् दान्ते व्यपदेशिवद्भावेन युष्मयत्यादेः क्विपि च सिद्ध्यति । "व्यपदेशिवद्भावोऽप्रातिपदिकेन" इति तु प्रत्ययविधिविषयमिति तत्र परिग्रहणस्य वैयधिकरण्यान्वये मणिमन्त्रादिन्यायेन नियामकत्वकल्पनापेक्षयोक्तस्यैव न्याय्यत्वात् । तत्र हि सामानाधि-

---

त्वेन नायं दोष इत्यत आह—*अभिव्यक्तेति* । *अत एव* । तत्रादेशाभावस्येष्टत्वादेव ।

केचित्तु णिजन्तप्रकृतिकक्विबन्तेऽप्यादेश इत्यभिप्रायेण व्याचक्षते तन्मतमुपन्यस्यति—*यत्त्विति* । *तत्रैव स्यादिति* । न चैतन्मतेऽभिव्यक्तेतिन्यायस्य प्रातिपदिककार्येऽपि प्रवृत्तेः कथमेतदिति वाच्यम् । सूत्रारम्भसामर्थ्येन तन्न्यायाप्रवृत्तेः । *सति तु तस्मिन्निति* । परिशब्दे सतीत्यर्थः । *सामर्थ्यात्* । परिशब्दोपादानसामर्थ्यादित्यर्थः । *दान्त इति* । तत्र मपर्यन्तशब्दार्थस्य मुख्यस्य सम्भवात् । *क्विपि च सिध्यतीति* । न च कटिपर्यन्तमितिप्रागुपपादितार्थस्य जागरूकत्वात्कथमेतदिति वाच्यम् । मस्तकप्रभृतिपादाङ्गुष्ठपर्यन्तम्पटेनाच्छादितेयमित्यादावङ्गुष्ठात्परस्य भागस्याभावेपि तादृशव्यवहारदर्शनेन निरुक्तनियमाभाव इत्याशयः । *मणिमन्त्रादिन्यायेनेति* । यद्यग्रिमभागाभावेऽपि पर्यन्तशब्दप्रयोगस्तदा परिशब्दसत्त्वेऽपि सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्सामानाधिकरण्येनान्वयस्स्यात्तत्प्रतिबन्धाय मणिमन्त्रन्यायावलम्बनमेव तैः कर्त्तव्यमिति भावः । किञ्च यः कटिपर्यन्तं वास इत्युक्तेऽर्थः प्रतीयते स एव पादाङ्गुष्ठपर्यन्तं वास इत्यत्रार्थो न प्रतीयतेऽपि तु ततो विलक्षण इति पर्यन्तशब्दस्य स्वावधिकपरभागसत्ता-

---

लाक्षणिकादीनां व्यावृत्तिः । लोके विशेषणार्थबोधकत्वेन श्रुता इत्यर्थक लोकविश्रुता इत्यनेन सर्वथाऽर्थशून्यानामनुकरणादीनां व्यावृत्तिः । अर्थसद्भावेऽप्यप्रयुक्तानां वचन्तीत्यादीनां च निवृत्तिः । एवञ्च गौणमुख्यन्यायमूलक एवाभिव्यक्तपदार्थायेति न्याय इति तदाशयः ।

केचित्तु संज्ञाभूतयोरादेशापत्त्या गौणमुख्यन्यायस्यैव पदकार्यविषयत्वम् । अभिव्यक्तपदार्थाये इति न्यायस्तु प्रातिपदिककार्येष्वपि प्रवर्तते । अत एव सर्वनामसंज्ञाप्रकरणे अभिव्यक्तपदार्थाये इतिन्यायेन संज्ञाप्रवृत्तेः स्वयमेवाभिहितं संगच्छते । अन्यथैतदुक्त्या तद्विरोधापत्तेरिति चिन्त्यमेतदित्याहुः ।

अस्मिन् मते भाष्यसङ्गतिस्तु अन्यालाभे सामर्थ्यात् 'अभिव्यक्तपदार्थाये' इति न्यायाप्रवृत्तिः बोध्या ।

(१) पदकार्यत्वञ्च सुबनिमित्तकत्वे सति ङीत्वानिमित्तकत्वम् । तेन गौणेऽपि 'श्रेयसः' इति भवति । अन्येतु विभक्तिसामान्यनिमित्तकत्वं पदकार्यत्वम् । तेन 'बभूव' इत्यादौ वुगागमः सिद्ध इत्याहुः

करण्यासम्भवाद्वैयधिकरण्यान्वय इत्यन्यत् । किं चात्र व्याख्याने ऽवधिद्योतनार्थमिति भाष्याक्षरास्वारस्यम् । मपर्यन्तस्येति च तद्गुणसंविज्ञानो बहुव्रीहिरिति दिक् ।

अङ्गकार्ये इति । अङ्गाधिकारस्थे इत्यर्थः । मकारान्तरमिति । "शसो न" (पा०सू०७।१।२९) इत्यनेन संहितया पा इति शेषः । परे तु शेषविभक्तिभूताऽमादियुष्मदादिसन्निपातेन जा स्य लोपस्य तद्विघातकश्यादिनिमित्तत्वं नेति सन्निपातपरिभाषा श्याद्यभावः । सुटस्त्वाकमवयवत्वान्न तेन सन्निपातविघात इति

---

विशिष्टावधिवाचकत्वं वक्तव्यम् । अङ्गुष्ठपर्यन्तमित्यत्र त्वङ्गुष्ठान्तमित विलक्षणार्थानवगतेः पर्यन्तशब्दस्तत्र लाक्षणिको वाच्य इति मणिक न्याय एव पर्यवसानम् । *सामानाधिकरण्यासम्भवादिति* । वाच्य सामानाधिकरण्यासम्भवादित्यर्थः । तादृशव्याख्यानकर्तृमते भाष्या वादमप्याह *किञ्चेति* । *तद्गुणसंविज्ञान इति* । अतद्गुणसंविज्ञा स्वीकारे मकारस्परित्यज्यैवादेशः स्यादिति भावः ।

"अङ्गकार्ये पुनर्नाङ्गकार्यम्" इत्यत्राङ्गस्य कार्यमिति न षष्ठीतत्पुरुषः अतिरिच्छत्रमित्यत्र ह्रस्वत्वे कृते तुगनापत्तेः । किन्तु परिभाषायामङ्ग ब्दोऽङ्गाधिकारपरः । सप्तम्यन्तेन सुप्सुपेतिसमासस्तथा च यत्फलित दाह-*अङ्गाधिकारस्थ इति* । अत्र च ज्ञापकम् "ज्यादादीयस" इ द्विधानमन्यथा "बहोर्लोप" इत्यतो लोपग्रहणानुवृत्त्या "आदेः परस इत्यादेर्लोपे "अकृत्सार्वधातुक" इति दीर्घे 'ज्यायान्' इत्यस्य सि तद्व्यर्थम् । एषा च परिभाषा "द्वयोरेकस्य" इतिनिर्देशादनित्येति छमन्यत्र । ननु मकारान्तरप्रश्लेषे तच्छ्रवणापत्तिः । न च संयोगान्त प्राप्तिः । मकाररूपविशेषणबोधकतया तस्य पदान्तरत्वेन तदप्राप्ते आह-*शसो नेत्यनेनेति* । अत्र मानन्तु "त्यदादीनाम" इतिसूत्र स्भाष्यमेव ।

"टिलोपष्टाबभावार्थः शेषे लोप इति स्मृतः ।
लुप्तशिष्टे हि तस्याहुः कार्यसिद्धिम्मनीषिणः" ॥

इत्यत्र टाबभावस्यैव टिलोपफलत्वमुक्तन्न तु श्यादेशाभावस्य । लुप्तशिष्ट इति* । लुप्ते सति यः शिष्टस्तस्मिन्सति कार्यस्य टाबभावस्य सिद्धिरित्यर्थः । तत्र सन्निपातपरिभाषया टाबभावोपपादने तु प्रकृते पि सन्निपातपरिभाषयैव टाबभावसम्भव इत्याशयेनाह-*परे त्विति सन्निपातपरिभाषाप्रवृत्तिस्वीकारे ससुट्कनिर्देशस्य वैयर्थ्यमपरिहार्य

कारनिर्देशः 'साम आकम्' (पा०सू०७।१।३३) इत्यत्र । अत एव ङ्नम-न्तसूत्रे 'ह्रस्वत्वं तुग्विधेर्ग्रामणि कुलम्' इति सन्निपातपरिभाषाप्रयो-जनव्याख्यावसरे "यदा ह्रस्वमात्रस्य तुगागमो, न तदन्तस्य तदिदं प्रयोजनम्" इति व्याख्यातं कैयटेन । मूलोक्तं तु न युक्तं, भाष्या-नुक्तेः । अत एव "नेतराच्छन्दसि" (पा०सू०७।१।८६) इति सूत्रे "नपुंसकादेशेभ्यो युस्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन" इति वा-र्तिकं व्याख्याय "तेषु कृतेषु पुनः प्रसङ्गाच्छिशीलुग्विधयः कस्मा-न्न भवन्ति ? सकृद्गतिन्यायात्" इत्युक्तम् । त्वद्रीत्या पुनः प्रसङ्गस्यैवा-भावेन तदसङ्गतिः स्पष्टैव । अत एव च तत्र युष्मदादेर्विभक्त्यादे-शस्य "यूयं ब्राह्मणा" इत्याद्यवकाशप्रदर्शनं कृतम् । अन्यथा तत्रापि जसः शीप्राप्त्या तदसङ्गतिः । 'यूय' मित्यादिप्रयोगकरणेन तत्र श्या-दिशङ्कासमाधानाकरणेन च भाष्यकृतात्र सन्निपातपरिभाषाविषयत्वं सूचितम् । अङ्गवृत्तपरिभाषया वारणमपि चिन्त्यम्, तस्या अङ्ग-संबन्धिकार्यविषयत्वात् । सूत्रभाष्यस्वरसोऽप्यवमेव । वस्तुतो नैषा ल-क्ष्यसंस्कारिका । 'द्वयोः' इत्यादिनिर्देशासङ्गतेः । अत एव भाष्ये 'किमेतस्या ज्ञापने प्रयोजन'मिति प्रश्ने "पिबेर्गुणप्रतिषेधो वक्तव्यः" इत्येव प्रयोजनमुक्तं न तु प्रयोगसिद्धिः प्रयोजनमुक्तमित्याहुः ।

त्वमाविति (पा०सू०७।२।९७) । अत्रापि विभक्ताविति स-म्बध्यते । अन्यथा प्रत्ययोत्तरपदयोश्चेति व्यर्थं स्यात् । (१)तत्फलं

---

*सुट इति* । *अत एव । आगमस्यागमिसम्बन्धिसन्निपाताविघातकत्वा-भावादेव । मकारप्रश्लेषे भाष्यान्तरविरोधमप्याह—*अत एवेत्यादिना* । *अत एव* । मकारप्रश्लेषाभावादेव । *तदसङ्गति* । भाष्यासङ्गतिः । *अत एव* । सन्निपातपरिभाषया श्यादेशप्रतिबन्धादेव । *अङ्गसम्ब-न्धिकार्यविषयत्वादिति* । ज्ञापकसाजात्यादङ्गाधिकारीयकार्ये कृते पुन-रङ्गाधिकारीयाङ्गसम्बन्धिकार्यान्तरप्राप्तावविधिरिति तस्यार्थ इति भावः । *नैषेति* । अङ्गवृत्तपरिभाषेत्यर्थः । *अत एव* । तस्या अनन्यथासि-द्धप्रयोजनसाधकत्वाभावादेव । न च परिभाषाभावे 'पिबति' इत्यत्र गुणः स्यादिति शङ्कनीयम् । पिबादेशस्यादन्ततया लघूपधत्वाभावेन गुणाप्राप्तेः । *व्यर्थं स्यादिति* । तस्यापि सूत्रस्यैकार्थत्व एव प्रवृत्तेः । *तत्फल-

---

(१) ननु 'त्वमावेकवचने' इत्यत्रविभक्तावित्यस्य सम्बन्धाभावे प्रत्ययोत्तरपदयोरपि तेनैव सिद्धौ प्रत्य-

तु त्वं सुन्दरः पुत्रो यस्य युष्मत्सुन्दरपुत्र इति त्रिपदबहुव्रीहौ नो
श इति । अत्रैकवचनशब्दो यौगिको(१) व्याख्यानात् । तदाह-
कस्येति ।

अविभक्तिकमिति । व्याख्यानात् ।

योऽचि (पा०सू०७।२।८९) अनादेश इति किम् ? त्वत् मत्
पञ्चम्या अत् इत्यदादेशः । आत्वविधायके च भ्यम् व्यावर्त्यः
वस्तुत उत्तरार्थमेव तत् 'अभ्यम्' इत्येव च्छेदादिति भाष्ये स्पष्ट

हलादाविति । परिशेषलब्धम् । हलीत्यनुवृत्तौ तु "योऽचि
(पा०सू०७।२।८९) इत्यज्ग्रहणं मास्तु ।

भ्यसोभ्य (पा०सू०७।१।३०) । अत्र यदुक्तव्यं तदुक्त
पक्षद्वयेऽपीति । तत्रान्त्यलोपे द्वयोरकारयोः पररूपे "एकादेश
दात्तेन" (पा०सू०८।२।५) इत्यभ्यम आद्याकार उदात्तः । टिलोपे
यत्रानुदात्ते वर्णे परे उदात्तो लुप्यते स वर्ण उदात्त इत्यर्थकेना 'अ
दात्तस्य च यत्र' इत्यनेन स उदात्त एवेति न विशेष इति भावः ।

नन्वाकमः पूर्वं लोपाभावेनादन्तत्वाभावात्सुडागमाप्रसक्तेः स
सुट्कनिर्देशो व्यर्थः सूत्रासङ्गतिश्चेत्यत आह—भाविन इति । अ
कमि शेषे लोपे कृते प्राप्तस्येत्यर्थः । अयं भावः । साम्ः प्रसङ्गे
कमित्यनेन सुडामोरत्र विषयेऽत्यन्तमप्रयोगो बोध्यते । स्थान्यादे

---

मिति* । विभक्तावित्येतत्सम्बन्धफलमित्यर्थः । "प्रत्यय" इतिसूत्रस्य
न प्राप्तिरुत्तरपदपरत्वाभावात् । *व्याख्यानादिति* । अत्र भाष्ये के
मयोरितिप्राप्तस्यामः प्रतिषेधोऽयमित्याशङ्कितं तद्दर्शनमूलकादित्यर्थः ।

*परिशेषलब्धमिति* । अस्याजादौ यत्वेन बाधादित्यादिः । *ह
स्यनुवृत्ताविति* । आत्वाविधायक इत्यादिः । *तदुक्तमिति* । अभ
त्येव तु छेदो न्याय्य इत्यादिना ।

ससुट्कनिर्देशफलमुपदर्शयितुमाशङ्कते-*नन्वाकम इति* । 
ससुट्कनिर्देशसामर्थ्यादाकमि कृतेऽपि सुट्नेति केचिद्वदन्ति तन्न युक्त

---

योत्तरपदयोरिति सूत्राकरणे लाघवं तस्य पृथक्फलाभावादित्यत आह—*तत्फलंत्विति* । अन्यथा
बहुव्रीहावपि त्वमावेकवचने इत्यनेनादेशः स्यात् । तत्र विभक्तावित्यस्य सम्बन्धे प्रत्ययोत्तरपदयोरि
सूत्रसत्त्वे तत्रोत्तरपदस्य समासचरमावयवरूढत्वात् त्रिपदबहुव्रीहावुत्तरपदपरत्वाभावात्आदेश इति

(१) *व्याख्यानादिति* । एकत्वे इत्येव सिद्धे युवावाविति सूत्रोक्तविधया वचनग्रहण
रूपादित्यर्थः ।

भावविषये सर्वत्रैवमेव । यथार्द्धधातुकविषये ऽस्तेरप्रयोगो भूप्रयोगश्च 'अस्तेर्भूः' ( पा०सू०२।४।५२ ) इत्यनेन प्रतिपाद्यते न तु सतो निवृत्तिः। शब्दानित्यत्वप्रसङ्गात् । किं तु प्रसक्तबुद्धेरेव निवृत्तिः । सकारबुद्धिप्रसक्तेश्च प्रकृते सांप्रतिकया असंभवाद्भाविन्या ग्रहणं सकारोच्चारणसामर्थ्यादिति (१)प्रथमप्रवृत्त्यैव सुटो निवृत्तिर्न तु प्रवृत्त्यन्तरकल्पनयेति भाष्ये स्पष्टम् । तन्निवृत्तिश्चाऽऽमोऽभावात् । अत्र सामः स्थानित्वोक्त्या स्थानिवत्त्वेन साम्त्वमेव न त्वाम्त्वम् । उक्तरीत्या च न स्थानिवद्भावप्रसक्तिः सैवाप्रसक्तिः ससुट्कनिर्देशेन बोध्यते इति बोद्धव्यम् । अत एव 'आतित्वाकम्' इत्यादौ 'प्रत्ययोत्तरपदयोः' ( पा०सू०७।२।९८ ) इति भाष्योदाहृते आकम्नुडभावौ सिद्धौ । आम्येव साम्त्वस्याहार्यारोपेणादेशः । आदेशस्याम्त्वाभावाच्चात्र न नुट् । च न यत्र साम्भावी तत्रैवायम्, सामो भावित्वस्य सर्वथा दुरुपपादत्वात् , साम्त्वस्याशास्त्रीयत्वेनातिदेशालभ्यत्वादिति भाष्यविरुद्धकल्पना व्यर्थेति दिक् । ह्रस्वादिरकम् तु न कृतः । अत्यलोपेऽ प्यकारस्यैत्वानिवृत्त्या चारितार्थ्येन पररूपापत्तौ युष्माकमि-

---

त्याशयेनाह *अयम्भाव इति* । *एवमेव* । आदेशस्य प्रयोगः स्थानिनोऽप्रयोग इतिरीत्यैव । यद्धर्मावच्छिन्नविषयकबुद्धिप्रसङ्गे आदेशबुद्धिः कर्त्तव्यत्वेन शास्त्रेण बोध्यते कृते आदेशे तस्मिन्स्थानिवद्भावेन तद्धर्मावच्छिन्नबुद्धिरेव भवतीति प्रकृते आकमादेशे कृते साम्त्वबुद्धिरेव भवति न त्वम्त्वाबुद्धिरित्युद्देश्यतावच्छेदकावच्छिन्नाभावान्न सुटः प्रसक्तिरिति भावः । *न स्थानिवद्भावप्रसक्तिः* । न स्थानिवद्भावेनाऽऽम्त्वप्रसक्तिः। ननु यत्राकमादेशोत्तरं स्थानिवद्भावेनाम्त्वबुद्ध्या सुटः प्राप्तिस्तत्राकमि कृते ससुट्कनिर्देशसामर्थ्यात्सुट्न भवतीत्येव किन्न स्यादत आह—*अत एवेति* । साम्त्वावच्छिन्नबुद्ध्यैवादेशप्रवृत्तिस्वीकारादेव । सा बुद्धिश्च सर्वत्राकमादेशात्पूर्वमाहार्यैव वाच्या अत एव नुडागमोऽपि न, तदाह—*आदेशस्येति* । *आकम्नुडभावाविति* । आकम् च नुडभावश्चेति द्वन्द्वः । प्राचीनोक्तं खण्डयति—*न च यत्रेति* । *भाष्यविरुद्धेति* । 'अतित्वाकम्' इति प्रयोगासाधनेन भाष्योक्तरूपासाधकतया भाष्यविरुद्धेत्यर्थः । *एत्वानिवृत्त्ये-

---

(१) *प्रथमप्रवृत्त्यैवेति* । सांप्रतिकी आम्बुद्धिः भाविनीच सकारबुद्धिः या प्रसक्ता तयोः 'सामाकम्' इति प्रथमप्रवृत्त्यैव निवृत्तिः । अत्र विषये सुडामोरत्यन्तमप्रयोग इति, ननु आम्बुद्धेः साकम्बुद्ध्या निवृत्त्यनन्तरं सुट्बुद्धिप्रसक्तौ सामित्यस्य प्रवृत्त्यन्तरकल्पना इति भावः । अत उत्तर बुद्धेः निवृत्तिप्रकारमाह—तन्निवृत्तिश्चेति ।

त्यसिद्ध्यापत्तेः।

द्विवचनैकवचनशब्दयोरर्थपरतया व्याख्याने फलं दर्शयति-द्व्येकत्वेति। द्वित्वैकत्वविशिष्टवाचिनी इत्यर्थः। समासार्थो मुख्य-विशेष्यः। अन्यसंख्यः। युष्मदाद्यर्थगतसंख्येतरसंख्यायुक्त-दित्यर्थः। स्त इति। अर्थपरत्वाश्रयणादिति भावः। एते इति कर्तृपदम्। युवावाविति। कर्मपदम्। एवन्त्वमावित्यपि। पूर्व-विप्रतिषेधत इति। विप्रतिषेधे पूर्वत्र इति, सुप्सुपेति समासः। अत एव (१)'प्रत्ययोत्तरपदयोश्च' इति सूत्रभाष्ये 'त्वमौ' इति सूत्रे शेषे इत्यनुवर्त्य 'सुजमूङेङस्व्यतिरिक्तविभक्तावेतौ' इति व्याख्या-तम्। त्वमौ न चेति। अर्थपरत्वाश्रयणादेवेति भावः। इति विग्रहे इति। एवं विग्रहे यादृग्रूपाणि तानि वक्ष्यन्त इति शेषः। अतित्वाकमिति। अत्र यथाऽऽकम्नुडभावौ (२)तथोक्तम्।

पदस्य। (पा०सू०८।१।१६) "अपदान्तस्य मूर्द्धन्यः" (पा० सू०८।३।५५) इत्यतः प्रागयमधिकारः, तत्फलन्तु राजनावित्यादौ (३)नलोपाभावः। इयं क्वचित्स्थानषष्ठी क्वचिदवयवषष्ठी, 'होढः' इ-त्यादावाद्या, 'मादुपधायाः' (पा०सू०८।२।९) इत्यादावन्त्या। ...

ति*। अकारोच्चारणाभावे "बहुवचने झल्येत्" इत्यनेन प्राप्तस्यैत्वस्य ... वृत्त्येत्यर्थः।

नन्वनयोः केवलाद्वित्वैकत्ववाचकत्वमनुपपन्नमिति द्व्येकत्ववाचि... त्यनुपपन्नमत आह-*द्वित्वैकत्वविशिष्टेत्यर्थः*। *मुख्यविशेष्यः* प्रकारतानात्मकविशेष्यतावान्। *त्वमावित्यपीति* कर्मपदमिति शेषः। *अत एव*। पूर्वविप्रतिषेधाश्रयणादेव। *शेष इत्यनुवर्त्यैति*। ... पूर्वविप्रतिषेधाश्रयणापेक्षया "शेष" इत्यनुवर्त्य व्याख्यानमेव युक्तम्। ... चेति सूचितम्।

*अन्त्येति*। अवयवषष्ठीत्यर्थः। तेन पदावयवस्य मवर्णावर्णा...

(१) ननु सुटः प्राधान्ये एव प्रवृत्त्या गौणे तदारोपे मानाभाव अत आह—*प्रत्ययोत्तरपदयोश्चे...* अत्रभाष्योदाहृतप्रयोगस्यैव मानत्वमिति भावः।

(२) अत्र आकम् च नुडभावश्चेति द्वन्द्वः।

(३) ननु होढ इत्यत्रान्तपदानुवृत्त्याऽवयवषष्ठ्येवेत्यत आह—*आदाविति*। अत्रादिपदेन ... धातोरित्यादिसंग्रहः। *अन्यथेति*। अवयवषष्ठ्यङ्गीकारेत्यर्थः। *न स्यादिति*। मतुप... स्थाने मवर्णावर्णान्तमवर्णावर्णोपधाच्च परस्य निर्दिश्यमानस्य वो भवति इत्यर्थकेन 'मादुप... मतोर्वोऽयवादिभ्यः' इत्यनेन वृक्षवन्तावित्यादौ न स्यात्, वृक्षवानित्यादावेव स्यादिति भावः।

वृक्षवन्तावित्यादौ नत्वासिद्धिः । अन्यथा मत्वन्तपदत्वाभावान्न स्यात्। अत एव 'नलोपः' (पा०सू०८।२।७) इति सूत्रे ऽन्तग्रहणं चरितार्थमिति स्पष्टं भाष्ये । "नः संख्यायाः" इत्यत्र नलोपाभावस्तु 'झलाञ्झशि' इत्यत्र जश्त्वाभाववद् बोद्धव्यः ।

पदात् (पा०सू०८।१।१७) 'कुत्सने च सुपि' (पा०सू०८।१।६९) इत्यतः प्रागयमधिकारः । 'अनुदात्तं सर्वम्'(पा०सू०८।१।१८) इत्यादिपदत्रयमापादसमाप्तेः । सर्वग्रहणन्तु 'तिङ्ङतिङः' (पा०सू०८।१।२८) इत्यादौ सर्वानुदात्तत्वस्य विनिगमनाविरहाल्लाभेऽपि स्पष्टतया तल्लाभार्थमित्याकरे स्पष्टम्। 'आदेः परस्य' 'अलोऽन्त्यस्य' इत्यनयोस्तु न प्राप्तिः। पदस्येत्यस्य 'अनुदात्त' 'तिङ्' इत्यादिश्रुतप्रथमान्तानुरोधेन प्रथमया विपरिणामेन स्थानषष्ठ्यभावात् । तत्र पादशब्देन ऋक्पादः, श्लोकपादश्चाविशेषात् गृह्यते। अपादादिशब्देन पादान्तपादमध्यस्थवत् छन्दोहीनवाक्यस्थस्यापि ग्रहणम् 'ग्रामे कम्बलो मे स्वम्' इति भाष्यात् ।

---

स्येत्यर्थः सम्पद्यते । तफलमाह—*वृक्षवन्ताविति* । *अत एव* । अवयवषष्ठीत्वस्वीकारादेव । अन्तपदाभावे प्रातिपदिकाभिन्नपदावयवस्येत्यर्थे नमनमित्यत्र नलोपापत्तिः । यदि तु पदस्येति विशेष्यं प्रतिपदिकेति नेति च तद्विशेषणमिति प्रातिपदिकाभिन्नं नान्तं यत्पदमिति व्याख्यायते तदा सौत्रमन्तग्रहणं स्पष्टार्थम् । ननु मुख्यस्य प्रतिपदिकान्तस्य लाभार्थमन्तग्रहणमस्तु व्यपदेशिवद्भावेन यत्प्रातिपदिकान्त्यं तस्य मा भूत् तेन "नः संख्याया" इत्यत्र तदभावसिद्धिरत. आह—*नः संख्याया इत्यत्रेति* । *कुत्सने च सुपीति* । सगतिरपि तिङित्यनुवर्त्तते । कुत्सने पागोत्रादौ सुबन्ते परे सगतिरपि तिङन्तमनुदात्तमित्यर्थः । पचति प्रति । प्रपचति पूति ।

*अतः प्रागिति* । अत्रापि पदादित्यधिकारश्चेत् देवदत्तः पचति पूति इत्यत्रैव निघातः स्यान्न तु पचति पूतीत्यादावित्यत प्रागित्युक्तम् । *तल्लाभेति* । सर्वानुदात्तत्वलाभेत्यर्थः । ननु "आदेः परस्य" इत्यादिनिवृत्त्यर्थमेव सर्वग्रहणङ्कुतो नेत्यत आह—*आदेरिति* । *स्थानषष्ठ्यभावादिति* । स्थानषष्ठीनिर्देशे ह्यलोन्त्यपरिभाषायास्तदपवादभूताया "आदेः परस्य" इत्यस्याश्च प्रवृत्तिः । *छन्दोहीनवाक्यस्थस्यापीति* । अत्र मानमाह—*ग्रामे कम्बल इति* ।

षष्ठ्यादीति । (१)'सर्वस्य' 'पदस्य' इत्युभयाधिकारसामर्थ्यादिदं लभ्यत इत्यन्यत्र विस्तरः । तौ चानुदात्ताविति । अनुदात्तत्वगुणविशिष्टयोर्विधानादिति भावः ।

उक्तविधयोरिति । पदात्परयोरपादादौ स्थितयोरित्यर्थः । द्वितीयायां त्वामयोरपवादत्वादाह—षष्ठीचतुर्थ्यैकेति । विभक्तिक्रमक्लृप्तद्वितीयादिक्रमेणोदाहरति—श्रीश इति । दत्तादित्यनेन चतुर्थ्यन्तत्वं स्फुटीकृतम् । संवेद्योऽस्मानिति । नन्वत्र सन्ध्यभावे नवाक्षरत्वेनानुष्टुप्पादत्वानापत्तिः । सन्धौ तु उभयत आश्रयणेऽन्तादिवत्त्वाभावेन कथमादेशप्राप्तिरिति चेन्न । संवेद्यो इत्येकादेशविशिष्टस्य पूर्वान्तवत्त्वेन पदत्वात् । स्मानित्यस्य चैकदेशविकृतन्यायेन द्वितीयान्तास्मच्छब्दत्वेन तत्प्राप्तिरित्याशयात् । सन्धिश्चान्तरङ्गत्वादादेशात्पूर्वमेव । आदेशे सति "नः कृष्णः सर्वदाऽवतु" इति पादादित्वापत्त्योपजीव्यविरोधान्नाऽऽदेश इत्यन्ये । (२)उभयत आश्रयणेऽपि

ननु "तौ चानुदात्तौ" इत्यनेन विहितादेशानुवादेनानुदात्तत्वविधानमिति प्रतीयते तच्चायुक्तम् वाक्यभेदापत्तेरत आह—*गुणविशिष्टयोरिति* । अनुदात्ताभिन्नौ वान्नावौ भवत इत्यादिक्रमेणार्थात् ।

षष्ठ्या "युष्मदस्मदोः" इतिसूत्रे प्रथममुपादानेऽपि प्रसिद्धक्रममादायोदाहरणमाह—*श्रीश इत्यादि* । *उभयत आश्रयण इति* । पदात्परत्वस्य सिद्ध्यर्थं पूर्वान्तवद्भावस्य षष्ठ्यादिविशिष्टत्वसिद्ध्यर्थं परादिवद्भावस्य चाश्रयणादिति भावः । *आदेशे सतीति* । सन्धेः पूर्वं नवाक्षरत्वेनापादादित्वात् । पूर्वपक्षिण उक्तिंखण्डयति—*उभयत आश्रयणेऽपीति* ।

---

(१) *सर्वस्य पदस्येत्युभयाधिकारसामर्थ्यादिति* ।

ननु विशिष्टस्यैव पदत्वसंभवात् पदस्येत्यधिकारेऽपि विशिष्टयोरित्यर्थलाभात् सर्वस्येत्यधिकारो व्यर्थ, इति तु न । षष्ठ्याद्यविशिष्टस्यापि युष्मदस्मद्रूपस्य तदन्तस्य वा भ्यामादौ पदत्वसंभवात् षष्ठ्यादितीययोरसंभवेऽपि पदावयवयोरित्यर्थलाभेनापि सिद्धावुक्तार्थकल्पने मानाभावाच्च । नच तदनुवृत्तिसामर्थ्यादेवोक्तार्थलाभः । अन्यथा पदावयवत्वस्याव्यभिचरितत्वेन तदनुवृत्तेर्वैयर्थ्यापातादिति वाच्यम् । तदनुवृत्ते रुत्तरत्रावश्यकत्वेन सामर्थ्यायोगात् । सर्वस्येत्यनुवृत्तौ तु तत्सामर्थ्यात् युष्मदस्मदवयवपदलक्षणायामुक्तार्थलाभान्नदोष इति भावः । भाष्यादौ तु सर्वमित्यस्येदं प्रयोजनमित्युक्तम् । अत्रारुचिबीजं तु विभक्तिविपरिणामाकरणलाघवेनेदमेवानुवर्तनीयम् । नचैवमपि युवाभ्यामित्यादौ चतुर्थ्यन्ते प्रकृतिभागस्यापि व्यपदेशिवद्भावेन तदवयवकत्वादादेशापत्तिरिति वाच्यम् । षष्ठीद्वितीया [illegible] हचर्येण सुप्तिङन्तमिति पदसंज्ञावत एवादेशप्रवृत्त्यभ्युपगमेनादोषात् । एतदेवाहाग्रे—*इत्यन्यत्र विस्तर इति* ।

(२) *उभयत आश्रयणेऽपीति* । उभयत आश्रयणे नान्तादिवद्भाव इति निषेधो हि युगपदे

तस्य स्वीकार इति इण्ग्रातौ निरूपयिष्याम इति परे ।

ननूक्तरीत्या षष्ठ्याद्यन्तानामेवादेशा भविष्यन्ति किं स्थग्रहणेनात आह–स्थेति । अहानौ स्थशब्द इति भावः । युष्मत्पुत्र इति । युवयोर्युष्माकं वा पुत्र इत्यर्थः । यद्यपि वृत्तौ संख्याविशेषानवगम इति भाष्ये स्पष्टं, तथापि सम्बोद्ध्यत्वेनैवानेकव्यक्त्यवगतिर्न तु द्वित्वादेर्भानं, नाप्येकत्वस्येति त्वमौ न कृतौ । विग्रहे तु संख्याविशेषभानात् द्विवचनादि भवत्येव । तस्य लुक्यपि प्रत्ययल-

---

*उक्तरीत्येति* । "सर्वस्य पदस्य" इत्यधिकारात् श्रूयमाणविभक्तिकस्यैतस्य लाभो यथा तथाह—*अहानौ स्थशब्दइति* । त्वमयोरप्राप्तये आह—*युवयोरिति* । वृत्तावित्युक्तन्तस्य फलमाह—*विग्रहे त्विति* । *संख्याविशेषभानादिति* । तत्र बहुत्वव्याप्यतावच्छेदकधर्मावच्छिन्नवाचकतत्तच्छब्दसत्त्वादिति शेषः । अयम्भावः । उच्चारितः शब्दः प्रत्यायक इतिरीत्या यत्र विशेषधर्मावच्छिन्नवाचकविभक्तिश्रवणं तत्र तत्तद्धर्मावच्छिन्नविषयकः शाब्दबोधो भवति । यथा सरसिजमित्यादौ । यदि तु तादृशेषु रूढिस्वीकारादेतद्घटकसरःपदादिशक्यार्थभानं चेत्, तदा तत्तद्विभक्त्यर्थसंख्याभानेऽपीष्टापत्तिः । पदान्तरार्थस्याभानञ्चेदनुभवसिद्धं तदा विभक्त्यर्थस्याप्यभानं भविष्यतीति मन्यते तदा 'स्तोकान्मुक्त' इत्यादौ तस्य भानं बोध्यम् । यत्र तु न विभक्तिश्रवणं तत्र न संख्याविशेषभानम् । किन्त्वभेदैकत्वसंख्याया भानम् । अजहत्स्वार्था वृत्तिरितिपक्षेऽपि पूर्वपदस्य संख्याविशेषबोधकत्वे यत्र गमकसद्भावस्तत्र तस्या अपि प्रतीतिः । यथा 'द्विपुत्रो' 'मौद्गिको' 'मासजातः' 'तावकीन' इत्यादौ । प्रथमे द्विशब्द एव बोधकः, द्वितीये एकेन मुद्गेन क्रयणाभावाद्बहुत्वावगतिर्न तु तद्व्याप्यसंख्यायाः । तृतीये कालविशेषबोधनाय मासपदप्रयोगादस्त्येव संख्याविशेषभानम् । चतुर्थे तवकादेशकरणादेकत्वावगतिः । 'युष्मत्पुत्र' इत्यत्र तु तादृशगमकाभावान्न द्वित्वस्य नाप्येकत्वस्य भानमिति ।

न च विग्रहवाक्यजन्यशाब्दबोधे यदि संख्याविशेषभानं तादृशविग्रहसमानार्थवृत्तौ नचेद् भानं तदा वृत्तिविग्रहयोः समानार्थत्वभङ्ग इति वाच्यम्, विग्रहवाक्यजन्यशाब्दबोधीया या विभक्त्यर्थसंख्यावृत्तिविषयताविशेषा प्रकारता तदवच्छेदकधर्मावच्छिन्नप्रकारतानिरूपिता या तादृशविशेष्यतावच्छेदकावच्छिन्नविशेष्यता तच्छालिशाब्दबोधजनकत्वमेव वृ-

---

कस्मिन् विरोधादन्तादिवद्भावाभाव इत्येतन्न्यायमूलकः । स च न्यायः शास्त्रीयाऽऽहार्यारोपे युगपदेकस्मिन्नन्यत्वद्वित्वे विरोधाभावान्नावतरतीति भावः ।

क्षणेन द्विवचनाद्यन्तत्वम् । अत एव "वध्वोरगारं वध्वगारम्" । इति प्रगृह्यसञ्ज्ञासूत्रे भाष्ये प्रयुक्तम् । वचनद्वयविषयसूत्रप्रत्युदाहरणला-भाय 'इति त्वत्पुत्रः' इति न प्रत्युदाहृतम् ।

**समानवाक्ये इति** । निमित्तनिमित्तिनोरेकवाक्यस्थत्वे इत्य-र्थके समानवाक्ये इति प्रकृत्यविधेया इत्यर्थः । निघातो नामाऽनुदात्तः।

**एकतिङिति** । बहुव्रीहिरेकातिङन्तघटितमित्यर्थः । तेन पच-तीत्येतन्मात्रस्य न वाक्यत्वम् । इदं स्वशास्त्रकार्योपयोगि एकवाक्य-त्वलक्षणम् । तेन "पश्य मृगो धावति" इत्यादौ लौकिकैकवाक्यत्वे-ऽप्यपि नाव्याप्तिः । समर्थसूत्रे भाष्ये स्पष्टमेतत् । अत एव "तिङ्ङ-तिङः" (पा०सू०८।१।२८) इत्यत्रैतदाश्रित्य 'अतिङ्' इति प्रत्याख्यातं भाष्ये । लौकिकवाक्यत्वञ्च—

सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता ।

इत्यमरेणोक्तं । वाशब्दश्चेदर्थे कारकान्वितक्रिया चेद् बोद्धव्येति शेषः । तेन निरर्थकशब्दसमुदायव्यावृत्तिः । सुप् च तिङन्तश्च सुप्तिङ-न्ते, सुब्विशिष्टन्तिङन्तं सुप्तिङन्तं, तेषामेकशेषः । तेन कारकान्वितक्रि-याबोधकसुबन्तचयतिङन्तचय-सुप्तिङन्तचयानां त्रयाणामपि वाक्यत्व-लाभः । तत्र सुबन्तचयो-देवदत्तेन शयितव्यम्' । द्वितीयं-पचति भ-वतीत्यादि । तृतीयं-चैत्रः पचतीइत्यादि ।

---

त्तिविग्रहयोः समानार्थत्वमिति स्वीकारादिति । *अत एव* । विग्रह-वाक्यजन्यशाब्दबोधे संख्याविशेषभानादेव । प्रथमत्यागे बीजमाह—*व-चनद्वयेति* ।

*बहुव्रीहिरिति* । एकं तिङ् यस्मिन्नित्यर्थः । नन्वेकपदस्य स्वसजा-तीयद्वितीयरहितार्थकतया 'पश्य मृगो धावति' इत्यस्यैकवाक्यत्वं न स्या-दत आह—*इदं स्वशास्त्रेति* । *लौकिकेति* । लोकविदितमेकवाक्य-त्वमित्यर्थः । *अत एव* । अस्यैवैकतिङित्यस्य स्वशास्त्रोपयोगित्वा-देव । *निरर्थकशब्दसमुदायेति* । दश दाडिमानीत्यादिः । *सुप् च ति-ङन्तश्चेति* । अत्र सुप्पदं सुबन्तपरम् । सुप्तिङन्तयोश्चय इति समासः । द्वन्द्वान्ते श्रूयमाणस्य चयशब्दस्य प्रत्येकं सम्बन्धात्सुबन्तचयतिङन्तचय-लाभः । सुबन्ततिङन्तचयलाभायाह—*सुब्विशिष्टमिति* । *कारकान्वि-तेति* । अस्य सविशेषणेत्यादिः । तेन नीलमुत्पलं पश्य । इत्यस्य सं-

(१) ( एतत्समानार्थकमेव 'तिङ्ङतिङः' ( पा०सू०८।१।२८ ) इति सूत्रे अतिङ इति वदत्सूत्रकाराभिमतं वाक्यलक्षणम् 'आख्यातं सविशेषणं वाक्यम्' इति समर्थसूत्रभाष्ये उक्तम् । तत्राऽऽख्यातपदेन क्रियाप्रधानं लक्ष्यते । तेन 'त्वया शयितव्यम्' इत्यादेः संग्रहः । सविशेषणमित्यस्य साक्षात् परंपया वा यद्विशेषणं, तत्सहितेत्यर्थः । तेन 'नद्यास्तिष्ठति कूले' इत्यादौ नद्यादेः समान वाक्यस्थत्वसिद्धिः । सविशेषणत्वेन विभागे साकाङ्क्षत्वं लब्धम् । एतदेवैकोद्देश्यकैकविधेयकत्वरूपैकार्थत्वगर्भमेकवाक्यत्वलक्षणं बोध्यम् । "अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेत् विभागे स्यात्" ( जै०सू०द्वि०अ०१पा०सू०४६ ) इति जैमिन्युक्तेः । अनेन च 'ब्रूहि ब्रूहि' इत्यस्यासंग्रहो, विशेषणानुपादानेन सविशेषणत्वाभावात् । वाक्यत्वफलं त्वत्र प्रश्नोत्तरे 'अनन्त्यस्यापि प्रश्नाख्यानयोः' (पा०सू०८।२।१०५) इत्यनेन वाक्यस्य टेः प्लुतसिद्धिः । अत स्वशास्त्रपरिभाषितं लक्षणम् "एकतिङ् वाक्यम्" इत्युक्तम् । अत एव एतदुदाहरणं 'ब्रूहि ब्रूहि' इत्येव भाष्ये दत्तम् । यत्तु अत्रोदाहारणे देवदत्तेति विशेषणं पूरणीयमिति, तन्न । पूर्वलक्षणेनैव सिद्धेः, द्विःप्रयोगस्य भाष्ये व्यर्थत्वापत्तेश्च । यद्यपि पदद्वित्वेऽवान्तरपदत्वमप्यस्ति, तथापि 'एकतिङ्' इत्यस्य एकानुपूर्वीकैकतिङन्तवदित्यर्थ इति न प्रकृते दोष इत्यलम् ) ।

ओदनं पचेत्यादि । समर्थपरिभाषा त्वत्र न प्रवर्त्तते, एकार्थीभावः । एतच्च साक्षात्परम्परया वा कारकनिष्ठविषयतानिरूपिता या क्रियानिष्ठा विषयता तच्छालिशाब्दबोधजनकतत्तत्समुदायत्वं यत्र तत्रैकवाक्यत्वमिति । यदुक्तं समानवाक्य इत्यत्र स्वशास्त्रमात्रोपयोग्येकवाक्यत्वेऽपि तेन यत्सिद्धं तदाह-*ओदनं पचेत्यादीति* । अत्र तवेत्यस्य नादेशः । समानवाक्यस्थत्वाभावात् । समर्थपरिभाषोपस्थित्या यत्र तादृशं सामर्थ्यं तत्रैवादेशेन भाव्यमिति शङ्कावारणायाह—*समर्थपरिभाषा त्वत्रेति* । ननु "पदस्य" "पदात्" इत्यधिकारसत्त्वेन पदत्वेनोद्देश्यतासत्त्वात्समर्थपरिभाषोपस्थितिः स्यादेवेति चेन्न । एवमपि साक्षात्तद्विध्युद्देश्ययोरुद्देश्यविधेययोर्वा सामर्थ्यस्य समर्थपरिभाषायामाश्रयणेऽप्यन्येन सामर्थ्यस्य तत्राश्रयणे प्रमाणाभावात् । न च पूर्वोक्तैकवाक्यत्वस्वीकारे 'देवदत्तेन

(१) चिह्नितोऽयं ग्रन्थः क्वचित्पुस्तकेऽधिकः ।

वविषये एव तत्प्रवृत्तेरिति भावः । एते वांनावादय इति । इदञ्च
"सपूर्वायाः" ( पा०सू०८।१।२६ ) इत्यत्र भाष्ये स्पष्टम् ।

न चवा ( पा०सू०८।१।२४ ) चादयः—समुच्चयविकल्पाद्युप-
स्वेदावधारणार्थाः । तेषामन्यतमेन योग इत्यर्थः । ननु तृतीयानिर्देशेनैव
सिद्धे युक्तग्रहणं व्यर्थमत आह—युक्तग्रहणादिनि । साक्षादि-
ति । युष्मदस्मदर्थगतसमुच्चयादिद्योतकत्वे इत्यर्थः । परम्परेति ।
स्वार्थाश्रयान्वय्यन्वयित्वादिरूपेत्यर्थः ।

चेतसेति । अनालोचनार्थैरित्येव पर्युदासेन सिद्धे पश्यार्थै-
रित्येतत् इन्द्रियजन्यसकलज्ञानसङ्ग्रहार्थमिति भावः । परम्परेति ।
स्वान्वितान्वयित्वादिरूपे इत्यर्थः । तदुक्तं भाष्ये "पश्यार्थैश्च प्रति-

---

शयितव्यम्' इत्यस्याप्येकवाक्यत्वं लभ्यते । 'आख्यातं साव्ययकारकविशे-
षणं वाक्यम्' इत्यनेन तु नेति विरोध इति वाच्यम् । तत्राख्यातपदस्य
धातुपरत्वात् । कारकान्वितक्रियाबोधकत्वमात्रोक्तौ 'पचति' इत्येतन्मात्रस्य
वाक्यत्वापत्तिरतस्तादृशसमुदायनिवेशः । *इदञ्च सपूर्वाया इत्यत्रेति* ।
तत्र हि—"युष्मदस्मदोरन्यतरस्यामनन्वादेश इति वक्तव्यम् । ग्रामे कम्बल-
स्तव स्वम् । गामे कम्बलस्ते स्वम् । ग्रामे कम्बलो मे स्वम् । ग्रामे कम्बलो
मम स्वम्" । एतदुदाहरणदर्शनेन 'तेमयावेकवचनस्ये'त्यस्यैव वैकल्पिक-
त्वमिति प्राप्ते अपर आह—"सर्व एव वांनावादय अनन्वादेशे वा वक्त-
व्याः । न तर्हीदानीमिदं वक्तव्यम् सपूर्वाया विभाषेति । वक्तव्यञ्च किं
प्रयोजनम् ? अन्वादेशार्थम् । अन्वादेशे विभाषा यथा स्यात्" इत्युक्तम् ।
एतेन प्रघट्टकेनान्वादेशे युष्मदस्मदोरित्यारभ्य ये आदेशा विहितास्तेषां
नित्यत्वं लभ्यते तदेतदत्रोक्तम् '*अन्वादेशे नित्यमिति* ।

*न च वाहाहैव* । एतत्सूत्रोपात्तैः सर्वैर्योग एकस्मिन् प्रयोगेऽर्थद्वा-
रको न सम्भवतीति *तेषामन्यतमेनेति* । चादीनामवाचकत्वादाह—
*समुच्चयादिद्योतकत्व इति* । साक्षाद्योगश्च 'हरिस्त्वां मां च रक्षतु'
इत्यत्र सुप्रसिद्ध एव । अत्र चकारद्योत्यसमुच्चये युष्मदस्मदर्थयोरन्वयात्
'हरो हरिश्च मे स्वामी' इत्यत्र तु स्वार्थहरिहरान्वितस्वामिपदार्थान्वयि-
त्वमस्मदर्थस्य, न तु साक्षात्तदन्वयित्वमतो न निषेधः ।

"पश्यार्थैः" इतिसूत्रे "अनालोचने" इतिपर्युदासेन बहिरिन्द्रियजन्य-
ज्ञानार्थकधातुयोग एव स्यादत आह—*अनालोचनेति* । इन्द्रियाणां
बहिष्ट्वं पर्युदासेन न विवक्षितमिति भावः । *स्वान्वितान्वयित्वेति* ।
'भक्तस्तव रूपं ध्यायति' इत्यत्रेन्द्रियजन्यं यन्मानसं ज्ञानं ध्यानत्वधर्मेण
युक्तस्य रूपपदार्थस्य युष्मदर्थेऽन्वयः । उक्तार्थे प्रमाणमाह—*तदुक्तमिति*

षेधः 'समानवाक्ये' इति प्रकृत्य वक्तव्यः, । इतरथा हि यत्रैव पश्या-
र्थानां युष्मदस्मदी साधनं तत्र प्रतिषेधः स्यात् । ग्रामस्त्वां संप्रेक्ष्य
गत इति । इह न स्यात् ग्रामस्तव स्वं संप्रेक्ष्य गतः" इति । 'समा-
नवाक्ये इति करणेन समानवाक्ये पश्यार्थैर्युक्ते युक्तयुक्ते च युष्म-
दाद्यर्थे आदेशप्रतिषेधः' इति कैयटः । एतञ्च 'नचवा' ति सूत्रे युक्त-
ग्रहणं स्पष्टार्थमेव, तदभावेऽपि(१) प्रकृतसूत्रस्येव तस्यापि साक्षात्सं-
बन्धे एव प्रवृत्तिः स्यात् । समानवाक्ये इत्येतत्सम्बन्धात्तु अस्य यु-
क्तयुक्तेऽपि प्रवृत्तिरित्यन्यत् । अत एव 'देवदत्तस्य पुत्रात् यज्ञदत्तः
पृथक्' इत्यादौ देवदत्तशब्दान्न पञ्चमीत्याहुः । भक्तस्तवेति । इह
तवेत्यस्य रूपेण सम्बन्धो न तु साक्षाद्ध्यायतिनेति भावः ।

सपूर्वा (पा०सू०८।१।२६) सहशब्दो विद्यमानवाची । अत्रधे-
ऽपि सम्बन्धित्वेन विवक्षायां षष्ठ्यर्थेऽन्यपदार्थे 'अनेकम्' (पा०सू०
२।२।२४) इति समासो 'वोपसर्जनस्य' (पा०सू०६।३।८२) इति सः,
तदाह-विद्यमानपूर्वादिति । प्रत्ययग्रहणे तदन्तग्रहणमित्याह—
प्रथमान्तादिति । ननु 'एते वांनावादय' इत्यनेनैव विकल्पसिद्धेः
किमेतेनेत्यत आह–अन्वादेशेऽपीति । अत्र नेति निवृत्तं, तदाह–आ-
देशा वेति । तेनेति । भक्तत्वेनेत्यर्थः । प्रक्रान्तार्थत्वान्न यच्छ-
ब्दोपादानापेक्षेति भावः । स्पष्टश्चेदं सप्तमोल्लासे काव्यप्रकाशादौ(२)
अत्र 'हरिस्त्वाम्' इत्येकमुदाहरणं 'स माम्' इत्यपरं त्रायते इत्यस्य
च मध्यमणिन्यायेन तन्त्रेणोभयत्रान्वयः । तेन स इत्यस्यापि स-

---

ति* । *अत एव* । तत्तच्छब्दयोगे विधीयमानकार्यस्य साक्षाद्योग एव
प्रवृत्तेरेव ।

भक्तस्त्वमितिवाक्ये यच्छब्दोपादानाभावात्कथन्निराकाङ्क्षप्रतिपत्तिर-
त आह–*प्रक्रान्तार्थत्वादिति* । *तेनेति* । मध्यमणिन्यायेन 'त्रायत'

---

(१) *तदभावेऽपि* । युक्तग्रहणाभावेऽपीत्यर्थः । *प्रकृतसूत्रस्येवेति* । पश्यार्थैरितिसूत्र-
स्येत्यर्थः।

अत्र केचित् इयं दृष्टान्तोक्तिः समानवाक्ये इत्येतत्संबन्धात्प्रोक्तं भवेत्, तथा सति अस्य दार्ष्टान्तिक-
त्वेन दृष्टान्तत्वव्याघातः स्यात् । समानवाक्ये इत्यस्य सम्बन्धे तु युक्तयुक्तेऽपि प्रवृत्त्या दृष्टान्त-
त्वे संभव एव नास्तीति चिन्त्यमेतत् । तस्मात् विनानानाभिस्तृतीयान्यतरस्यामित्यस्य दृष्टान्तत्वं
दर्शयितुमित्याहुः ।

(२) *काव्यप्रकाशादाविति* । अत्रादिपदेन वाक्यप्रदीपस्य ग्रहणम् । एवञ्च—

मानवाक्यस्थत्वेन विद्यमानपूर्वत्वं बोद्धयम् ।

साऽऽमन्त्रितम् (पा०सू०२।३।४८)। 'सम्बोधने च' (पा०सू० ३।२।२५) इत्यतः सम्बोधने इति वर्त्तते। 'सा'इत्यनेन प्रथमा परामृश्यते। आमन्त्रणमामन्त्रितमिति महासञ्ज्ञाबलात्तदन्तविधिरित्याह-तदन्तामिति। अत एव 'है हे भो' इत्यादीनामपि संज्ञासिद्धिः। अन्यथाऽन्तरङ्गानपीति न्यायेन पूर्वं विभक्तिलुकि प्रथमाया अभावेन 'नखनिर्भिन्न' इत्यत्रैसभाववदत्र संज्ञा न स्यात्। यद्यप्येषां सम्बोधने शक्तेः प्रातिपदिकार्थसूत्रेणैव प्रथमा तथापि सम्बोधनविषयप्रथमाभावान्न दोषः। एतदर्थमेव 'प्रथमा' इत्यनुवर्तमाने सेति पदम्।

---

इत्यस्योभयत्रान्वयस्वीकारेणेत्यर्थः।

*आमन्त्रणमामन्त्रितमिति*। अत्रामन्त्रणशब्दः करणसाधनः। *तदन्तविधिरिति*। अस्य अन्यथा संज्ञाविधित्वान्नस्यादिति शेषः। *अत एव*। तदन्तविधिस्वीकारादेव। *संज्ञेति*। आमन्त्रितसंज्ञेत्यर्थः। *हे है भो इत्यादीनामपीति*। आदिपदेन नपुंसकवार्यादिशब्दसंग्रहः। *अन्यथेति*। तदन्तविध्यभावे। *अन्तरङ्गानपीतिन्यायेनेति* अत्रान्तरङ्गत्वं संज्ञायाः प्रतिसम्बन्ध्यन्तरापेक्षत्वेन। लुकस्त्वव्ययत्वनपुंसकत्वप्रातिपदिकत्वापेक्षत्वेन बहिरङ्गत्वम्। न च निमित्तनिमित्तिनोर्भेदस्यान्यत्र दृष्टत्वेन प्रकृते संज्ञासंज्ञिनोर्भेदाभावेन कथमस्य संचार इति वाच्यम्। तादात्म्यस्य भेदाभेदरूपतया तद्धटकभेदमादायान्तरङ्गपदार्थस्य सम्भवात्।

वस्तुतस्तु नात्रान्तरङ्गन्यायसञ्चार उचितः। अन्तरङ्गनिमित्तविनाशकलुक एवानेन लुग्विधानात्। प्रकृते तु निधातविधायकामन्त्रितस्येति ज्ञापकेन तदन्तविधिसम्भवेन लुक्यपि प्रत्ययलक्षणेनाऽऽमन्त्रितसंज्ञायाः प्राप्तिरस्त्येव। तद्धि पदात्परस्यामन्त्रितस्य निघातविधायकम्। यदि विभक्तिमात्रस्य संज्ञा स्यात्तदा पदात्परस्य संज्ञायोगस्याभावेन तद्वैयर्थ्यं स्पष्टमेव। ननु 'परमगोदुहौ' 'परमगोदुह' इत्यादौ संभवः। अत्र धुत्तरपदस्य कार्यित्वाभावेनान्तर्वर्त्तिविभक्त्योत्तरपदस्य पदत्वादिति चेन्न। "अनुदात्तौ सुप्पितौ" इत्येव सिद्धेः। *संबोधने शक्तेरिति*। एवञ्च रामशब्दात्सम्बोधने यथा प्रथमा प्रातिपदिकार्थ इत्यनेन, तथा प्रकृतेऽपि

---

कार्तवीर्य केवलानीतिः शौर्यं श्वापदचेष्टितम् ॥
अतः सिद्धिसमेताभ्यामुभाभ्यामन्वियेष सः ॥ १ ॥

इत्यादौ तथा दृष्टमिति भावः।

अन्ये तु 'सम्बोधने च' इत्यस्य तत्र वर्त्तमानादित्यर्थे अन्यत्रेवा-प्यपि 'सम्बोधने च' इत्येव प्रथमा । प्रातिपदिकोक्तत्वस्याऽव्यावर्त्तकत्वेन विभक्त्यप्रतिबन्धकत्वात् । "तिङ्कृत्तद्धितसमासैः" इति परिगण-नाच्च । सेति तु विधेयसमर्पिकाया अनुवाद्यत्वाय स्पष्टार्थ-मित्याहुः । (१)

अविद्यमानवदिति । (२)'गोतो णित्' ( पा०सू०७।१।९० ) इतिवत्सिद्धे वत्करणमतिदिश्यमानविरुद्धस्वाश्रयस्यापि लाभार्थम्, तेन 'आम् भो देवदत्त' इत्यादौ "आम एकान्तरमामन्त्रितमनन्तिके" (पा०सू०८।१।५५) इति एकान्तरत्वप्रयुक्ताऽऽमन्त्रितनिघातनिषेध-सिद्धिरिति स्पष्टं भाष्ये(३)। न चात्र "नामन्त्रिते समानाधिकरणे" इत्य-नेन निषेधादविद्यमानवत्त्वमेव नेति वाच्यम्, अस्य संबोधनमात्रद्योतक-त्वेन विशेष्यवचनत्वाभावात् । देवदत्तस्यैव विशेष्यत्वाच्च ॥

---

प्रथमेत्यनुवृत्त्यैव सिद्धे सेतिपदं सम्बोधनविषये या प्रथमा, त-दन्तस्य संज्ञासिद्ध्यर्थम् । सम्बोधने शक्तिरितिकोशप्रामाण्यात् क-ल्प्यत इति भावः ।

स्वसिद्धान्तमाह—*अन्ये त्विति* । *अन्यत्र* । राम इत्यादौ । *अत्र* । हे हे इत्यादौ । उक्तार्थानामिति न्यायस्य नात्र विषयते-त्याशयेनाह—*प्रातिपदिकोक्तत्वेति । नन्वेवं सेति व्यर्थमत आह—*सेति त्विति* ।

*निघातनिषेधेति* । भोशब्दस्यामन्त्रितस्येत्यनेन निघाते कर्त्त-व्येऽविद्यमानवत्त्वेऽप्याम्शब्दात्परत्वेन प्राप्तस्येत्यादिः । न च भोशब्द-

---

(१) अत्रास्वरसस्तु प्रातिपदिकमात्रस्य संबोधने शक्तत्वेऽपि केषांचिदुद्भूतशक्तिमत्त्वमनभिहितत्व-मनुद्भूतशक्त्याऽविधीयमानत्वम् । अभिहितत्वञ्च उद्भूतशक्त्या तत्त्वम् । तथाच हे है भो इत्यादिभि-रनुद्भूतशक्त्याऽविधियमानत्वरूपस्य प्रातिपदिकोक्तत्वस्य व्यभिचारवारकस्य विभक्तिप्रतिबन्धकत्वं दुर्वारम् । परिगणनं तु उपलक्षणमिति न सेति पदस्यानुपयुक्तत्वमिति ।

(२) ननु गोतो णिदित्यत्रेव वार्तिं विनापि तदर्थलाभे वत्करणं व्यर्थम् । तदभावे निवृत्तिपरप्रयोगा-पत्तेर्न । लोपः परेति वासिद्धे अविद्यमानग्रहणस्य वैयर्थ्यादित्यत आह—गोतो णिदितीति* । तत्फल-माह—*तेनेति* ।

(३) ननु यथाति निर्दिश्यमानधर्मविरुद्धस्वाश्रयकार्यलाभार्थं वत्करणम् 'अग्ने तव' इत्यादावा-मन्त्रिताद्यदोष. । अविद्यमानवत्त्वातिदेशसाधर्म्यादादेशे स्वाश्रयकार्यस्य बाधकल्पने तु एकान्तरत्वेऽपि न्यायेन सभाप्नोति इत्यत आह—स्पष्टं भाष्ये इति* । तथाच वचनसामर्थ्यात् साक्षात्पदात् परस्य कार्ये कर्तव्ये स्वाश्रयकार्यस्य बाधकल्पनेऽपि परंपरयैकान्तरत्वे तथाकल्पने प्रमाणाभाव इति भाष्यकृदाशय इति भावः ।

इहेति। 'अग्ने तव' 'देवास्मान्' इत्यत्रादेशाः, 'अग्ने त्वम्' इत्यत्र 'तिङ्ङतिङः' (पा०सू०८।१।२८)इति निघातः, 'अग्न इन्द्र' इत्यत्र 'आमन्त्रितस्य च' ( पा०सू०६।१।१९८ ) इति निघात इति विवेकः। अत्र पूर्वमित्यनेन परस्याऽऽक्षेपात् पूर्वं परस्य कार्ये ऽविद्यमानवदित्यर्थः। तेन देवास्मानित्यत्र देवेत्यस्याऽऽमन्त्रिताद्युदात्तत्वं भवत्येव। पूर्वं किम्? 'पाहि देव' अत्रामन्त्रितनिघातो भवत्येव।

प्राचीनामिति। एवमेव "लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि" इत्यादिसिद्धिः। "नृसिंहाश्रम ते ख्यातिः" इत्यादौ, (१)"गेये केन विनीतौ वाम्" इत्यादाविव विभक्त्यन्तप्रतिरूपकनिपाताङ्गीकारेणादोषः। अयं समाधिः प्रकृतेऽपि, 'नः' इत्यस्य विभक्तिप्रतिरूपकत्वात्। अन्यार्थन्तु मूलोक्तकल्पनावश्यकत्वम्,तदाह–एवमिति सर्वेषां निघात इति। अस्य प्राप्त इति शेषः। तत्र यमुने सरस्वतीत्यनयोर्बाधकाभावाद्भवति। शुतुद्रीत्यस्य तु न, पादादिस्थत्वात्। एतेन 'आदि-

स्याविद्यमानपरत्त्वेऽपि स्वाश्रयमादाय ततः परत्वादेव निघातः प्राप्नोतीति वाच्यम्। एवं सति 'राजन् तव राज्यम्" इत्यादौ तवेत्यस्य "तेमयौ" इत्यनेन ते आदेशः स्यादिति अविद्यमानवद्भावविधानस्यैव वैयर्थ्यं स्यात्। तस्माद्यदामन्त्रितादव्यवधानेन कार्यम्प्राप्नोति तत्कार्यमविद्यमानवद्भावेन प्रतिबध्यते। एतावता राजन् तवेत्यादिसिद्धिः। यत्तु व्यवधानेनामन्त्रितात्परस्य प्राप्नोति तद्भवत्येवेत्यभिप्रायात्। आमन्त्रितम्पूर्वमितिसूत्रे पूर्वशब्दोपादानेन पूर्वम्परस्य कार्येऽविद्यमानवन्न तु स्वापेक्षया यत्पूर्वं ततो व्यवहितपरस्येति भावः।

अविद्यमानमद्भावप्रयोजनमाह–*अग्ने तवेत्यादि*। आदिना "विद्याबलन्दैवबलन्तदेव लक्ष्मीपते तेऽङ्घ्रियुगम्" इत्यस्य परिग्रहः। नन्वेवं 'नृसिंहाश्रमते ते ख्यातिः" इत्यत्रोक्तप्रकारासम्भवात्ते आदेशो न स्यादत आह–*नृसिंहेति*। *विनीतौ वामित्यादाविवेति*। अत्र वामित्यस्य प्रथमान्ततया विभक्तिप्रतिरूपकत्वस्वीकारं विना कथमपि साधुत्वासम्भवः। वक्ष्यमाणरीत्या प्राप्ताया मूलासङ्गतेः परिहारायाह–*अस्येति*।

(१) *नासिंहाश्रम ते ख्यातिरिति*। अत्र–अख्यातिरन्यथाख्यातिरसत्ख्यातिस्तु ते द्विषाम्। नृसिंहाश्रमते ख्यातिरनिर्वचनीयाख्यातिरेव च॥ इति श्लोकः पूरणीयः। यदि तु अख्यातिरन्यथाख्यातिरसत्ख्यातिस्तु ते द्विषामित्यत्र पूर्वार्द्धेऽस्तीत्यध्याहाराद् न पारिभाषिकैकवाक्यत्वमिति विभाव्यते तदा नृसिंहाश्रमेति पदद्वयं परिकल्प्य नामन्त्रिते समानाधिकरणे इत्यविद्यमानत्वप्रतिषेधान्न दोष इति बोध्यम्।

यथा 'सर्वेषाम्' इति बहुवचनमसङ्गतमित्यपास्तम् ।

अग्ने तेजस्विन्निति । अनुदात्तं सर्वमित्यनयोः संबन्धानर्हत्वेन निवृत्त्या तत्साहचर्येणापादादावित्यस्याप्यविद्यमानवत्सूत्रे निवृत्ति-रिति भावः । आमन्त्रिते किम् ? देव करोषि । सामान्यवचनं किम् ? "अघ्न्ये देवि सरस्वति इडे काव्ये" इत्यादौ पर्यायेषु परेषु निषेधो मा भूत्, (१)सामानाधिकरण्यञ्चैकार्थविशेष्यकबोधजनकत्वमेव, न तु प्रवृत्तिनिमित्तभेदगर्भमिति दिक् ।

सुपादिति । शोभनौ पदावस्येति बहुव्रीहिः । संख्यासुपूर्व-

---

ननु 'अग्ने तेजस्विन्' इत्यत्राग्ने इत्यस्य पादादिस्थत्वेनापादादाविति निषेधो भविष्यतीति मूलासङ्गतिरत आह—*अनुदात्तमित्यादि* । *सम्बन्धानर्हत्वेनेति* । अस्य सूत्रस्याविद्यमानवद्भावनिषेधकत्वादनुदात्तपदस्यासम्बन्धः । न चानुदात्तत्वविधानार्थमेव तस्य सम्बन्धोऽस्त्विति वाच्यम् । वाक्यभेदापत्तेश्चकारस्य तदर्थमनुपादानाच्च । सर्वमिति तु व्यर्थत्वान्न सम्बद्ध्यत इति भावः । *देव करोषीति* । अत्र 'देव' इत्यस्याविद्यमानवद्भावनिषेधे करोषीत्यस्य निघातः स्यात् ।

न च "भावप्रधानमाख्यातम्" इतिसिद्धान्तादत्र 'करोषि' इत्यस्य क्रियाविशेष्यकबोधजनकतया न देवेत्यनेन समानविशेष्यकबोधजनकत्व-मिति सामानाधिकरण्याभावादेव निषेधाप्राप्तिरिति वाच्यम् । "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्" इत्यौत्सर्गिकनियमाभिप्रायेणास्योपादानम् । यद्वा 'देवाक्षिक मास्पाहि' इतिवाक्यार्थव्युत्पादकं यद् 'दीव्यत्यक्षैर्भवान्' इति वाक्यं तदेकदेशस्य 'देव दिव्यति' इत्यस्योपलक्षणमि-दम् । तत्र गुणप्रधानभावविपर्ययः स्पष्ट एव । *पर्यायेष्विति* । नन्वत्र प्रवृत्तिनिमित्तभेदाभावात्कथं सामानाधिकरण्यमत आह-*सामेति*। ननु

---

(१) ननु सामान्यवचनं किमित्यस्य 'अघ्न्ये देवि' इत्यादि प्रत्युदाहरणत्वे मूलोक्तप्रतिवचनमयुक्तम् । प्रवृत्तिनिमित्तकत्वे सत्येकार्थविशेष्यकबोधजनकत्वं सामानाधिकरण्यमिति भेदघटितसामानाधिकरण्यस्य प्रकृतेऽभावान्नामंत्रिते ऽस्याप्राप्तेरित्यत आह—*सामानाधिकरण्यञ्चेति* । अत्रत्य भाष्य प्रामाण्याच्चैकार्थविशेष्यकबोधजनकत्वमात्रसामानाधिकरण्यमप्यत्रत्येन सामानाधिकरणपदेन गृह्यते । अत्रत्यंभाष्यं हि—"नामंत्रिते समानाधिकरणे" इत्येकं सूत्रम् । ततः "सामान्यवचनं विभाषितं विशेषवचने" इति द्वितीयमिति पाठाभिप्रायेण "इहकस्मान्नभवति ? अघ्न्ये, दवि, सरस्वति, इडे काव्ये विहव्ये एतानि ते अघ्न्ये नामानि" इत्याशंक्य "योगविभागः कारिष्यते नामंत्रितसमानाधिकरणे सामान्यवचनम्" ततो "विभाषितं विशेषवचन" इत्युक्तपाठवैपरीत्येन पाठभेदमाश्रित्य समाहितम् । तथाच यदि सामानाधिकरण्यपदेन भेदगममेव सामानाधिकरण्यं गृह्यते तदाऽघ्न्ये देवीत्यादि पर्यायेषु सामानाधिकरण्याभावादेव नामंत्रितेत्याकारकयोगविभागमाश्रित्य समाधानं भाष्यकृतामयुक्तं स्यादितिभावः ।

स्य" (पा०सू०५।४।१४०) इत्यकारलोपः समासान्तः,

अञ्चेः सुपीति । निपातनैः साहचर्यादिति भावः ।

अनिदिताम् (पा०सू०६।४।२४) इत्संज्ञेकारवद्भिन्नानामि-त्यर्थः । अङ्गस्येत्यधिकारः । अञ्चतेर्भस्येति । "अल्लोपोऽनः" (पा०सू०६।४।१३४) इतिवद् अस्यापि भत्यञ्चमञ्चति तेन 'प्रत्यञ्चा' इत्यादौ पूर्वाकारे न प्रवृत्तिः । अच इत्यञ्चतेर्लुप्तनस्य ग्रहणं व्याख्या-नात् । भस्य किम् ? प्रत्यञ्चौ । लुप्तनस्येति किम् ? पूजायां प्रत्यञ्चा ।

चौ (पा०सू०६।३।१३८) नेदं वर्गग्रहणं व्याख्यानात् । तदाह-लुप्तेत्यादि । अण इति । "कर्तृच" इत्यादीनामनभिधानमिति भावः । एवञ्चाण्ग्रहणमुत्तरत्र 'सम्प्रसारणस्ये'त्यत्र 'तृतीय' इत्ये-द्व्यावृत्त्यर्थमावश्यकमिहापि सम्बद्ध्यते, न त्वत्रास्य व्यावर्त्यमस्ति

---

ऋत्विगादिसूत्रे उपपदानुपादानात् 'अञ्चेः सुपि' इत्यनुपपन्नमत आह-*निपा-तनैः साहचर्यादिति* । उष्णिक्शब्दसाहचर्यादित्यर्थः । अत एव सुपीति प्रकरणाबाधः ।

ननु "अनिदिताम्" इत्यत्र यदि नञ्समासं कृत्वा बहुव्रीहिस्तदा नन्द्या इत्यत्र नलोपापत्तिरत आह-*इत्संज्ञेकार इति* । एवञ्च बहुव्रीहिगर्भ नञ्तत्पुरुषः कार्य इति भावः । *न प्रवृत्तिरिति* । भसंज्ञाक्षिप्तप्रत्यय-स्याञ्चतिविशेषणत्वमिति भावः । नन्वच इतिप्रत्याहारग्रहणमेवास्त्वत आह-*व्याख्यानादिति* । "आतो धातोः" इतिलोपविधानसामर्थ्या-नप्रत्याहारस्य, "मिदचोऽन्त्यात्" इतिनिर्देशान्न तादृशशब्दसामान्यस्य, "वचोऽशब्द" इति निर्देशान्न तादृशानुपूर्वीकानर्थकशब्दस्य ग्रहणमित्ये-रूपादित्यर्थः । *प्रत्यञ्चाविति* । यद्यप्यत्र नुम् तथापि पूर्वकालिकस्य नस्य लोपोस्त्येवेति लुप्तनकारत्वस्याविघातः ।

*नेदं वर्गग्रहणमिति* । चवर्गग्रहणमित्यर्थः । *व्याख्यानादिति* "अजादी गुणवचनादेव" इति निर्देशमूलकादित्यर्थः । ननु "चौ" इति सूत्रेऽण इत्यस्य सम्बन्धे 'कर्तृचः' इत्यादिरूपासिद्धिरतआह-*कर्तृ च इत्यादीनामिति* । तदुक्तं "हल" इतिसूत्रे "इह कस्मान्न भवति तृतीयः । अण्प्रकरणादृकारस्याप्राप्तिः । अण इति वर्तते । क्व प्रकृतम् ढ्रलोपे पूर्वस्य दीर्घोण इति । तद्वै "इकः काश" इत्यनेनेग्ग्रहणेन व्यव-च्छिन्नं न शक्यमनुवर्तयितुम् । इग्ग्रहणस्य चाण्विशेषणत्वात् अण्-विशेषणमिग्ग्रहणम्' । 'अण इक इति । यदि तर्हि अण्विशेषणमि-ग्ग्रहणं चौ दीर्घो भवतीतीह न प्राप्नोति । अवाचा अवाचे। नैष दोषः

इत्याकारे स्पष्टम् । अकृतेति । तत्परिभाषाऽभावे तु "चौ प्रत्यङ्गस्य प्रतिषेधो वक्तव्यः" इति वचनमेव भाष्योक्तं शरणम् ।

विष्वग्दे । (पा०सू० ६।३।९२) चात् 'आ सर्वनाम्नः' (पा०सू० ६।३।९१) इत्यतः सर्वनाम्न इत्याकृष्यते । सामर्थ्यादुपसर्जने प्रवृत्तिः अप्रत्यय इति पाठे ऽविद्यमानः प्रत्ययः क्विबादिरित्यर्थः । वप्रत्यय-इति पाठेऽप्यकारस्याविवक्षितत्वात्स एवार्थः । अद्यादेशसध्र्यादेशात्र-न्तोदात्तौ निपातनादिति स्पष्टं भाष्ये ।

अदसो (पा०सू० ८।२।८०) असेरितीकार उच्चारणार्थः । अदस इत्यवयवषष्ठी । सग्रहणं तत्स्थानिकौकाररेफयोरप्युपलक्षणं, तेन 'अदस्यति' 'अदोऽत्र' 'अदः' इत्यादौ न दोषः । दादिति किम् ? अमुयोरित्यत्रान्त्यस्य मा भूदिति । समाहारद्वन्द्व इति । इदमर्वाचामनुरोधेन(१) ।

वस्तुतो ऽयुक्तमेतत् । उम् ऊम् इति द्वन्द्वे सुलोपे घ्यन्तत्वाद्भ्र-स्वस्य पूर्वनिपाते नपुंसकह्रस्वसवर्णदीर्घयोः प्राप्तयोर्दीर्घस्य शब्दान्त-

---

इग्ग्रहणमनुवर्त्तते इग्ग्रहणन्निवृत्तम् । एवमपि कर्तृचः कर्तृचा अत्र न प्राप्नोति । यथालक्षणमप्रयुक्ते । मा भूद्दीर्घत्वम्' इति कैयटः । 'अथ सोमयन्निवृत्तम् । कस्मान्न भवति तृतीय इति । निपातनात् । द्विती-यतृतीयचतुर्थतुर्याण्यन्यतरस्याम्' इति । *प्रत्यङ्गस्येति* । अन्तरङ्ग-स्येत्यर्थः ।

*सर्वनाम्न इत्याकृष्यत इति* । "अदसोद्रेः" इति वार्त्तिक-मते एव संगच्छते । उपसर्जनत्वेऽप्यस्य यथा प्रवृत्तिस्तदाह-*सामर्थ्यादिति* ।

*अवयवषष्ठीति* । तेनादसो दात्परस्य तदवयवस्योकारो दश्च म इति सूत्रार्थ इति भावः । *उपलक्षणमिति* । "अदोऽनुपदेश" इति निर्दे-

---

(१) अर्वाचामनुरोधेनेति* । तेषामयमाशयः-उश्च-ऊश्च-ऊश्चेति समाहार द्वन्द्वे तत्र उ-ऊ-ऊ-इत्य-स्यत्रां ह्रस्वदीर्घयोः प्राप्तावुभयोर्नित्ययोः परत्वात्पूर्वं दीर्घे ततो ह्रस्वे सो लुंकि कृते उ इति रूपमिति । एवं दर्शयति-*वस्तुतस्त्विति* । इत्यादि । वस्तुतस्तु "भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति" इति परिभाषायां न तपरकरणं ज्ञापकम्. ज्ञापिते तस्मिन् स्थानेऽन्तरतमपरिभाषासहकारेणार्द्धमात्रा-स्यार्द्धमात्रिकदीर्घाद्यपेक्षया एकमात्रिकह्रस्वेनैवान्तरतम्यात् तस्यैव प्रवृत्त्या स्वांशे चारितार्थ्या-त्, 'तस्मादित्यु' इत्यादिनिर्देशेनान्तरङ्गपरिभाषाया बाधात् कृताकृतप्रसङ्गित्वेन नित्यत्वात् ह्रस्वात् पूर्वं दीर्घस्य भाविनत्वम् । तपरकरणं तु अतद्भावितसंज्ञापक्षे हल इति सूत्रप्राप्तदीर्घव्यावृत्त्यर्थम्, अथवा स्पष्टार्थं नेत्याहुः ।

रप्राप्त्या ऽनित्यत्वेन नित्यात्वादपरनिमित्तकत्वेनान्तरङ्गत्वाच्च ह्रस्वे ततः सवर्णदीर्घे ऊ इति रूपासिद्धेः। अत एव 'ऊकाल' इत्यत्र उकाल इति न कृतम्। तस्मात् 'दिव उत्' 'ऋत उत्' इति च तपरत्वेन भाव्यमानोकारस्य सवर्णग्राहकत्वात्सिद्धमिति बोद्धव्यम्।

"ष्यङः संप्रसारणम्" (पा०सू० ६।१।१३) इति सूत्रे भाष्ये 'अनन्त्यविकारेऽन्त्यसदेशस्ये'ति परिभाषापठिता। अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत् प्राप्तावन्त्यसदेशस्यैवेति तदर्थः। अनन्त्यविकार इति च लिङ्गम्। तामर्थतः पठति—अन्त्यबाधे इति। अन्त्यस्य बाधे कार्याप्राप्तावर्थादनेकानन्त्यस्य प्राप्तावित्यर्थः। अन्यथा "णो नः" (पा०सू०६।१।६५)इत्यादि 'नेता' इत्यादावेव स्यान्नतु 'नमति' इत्यादाविति भाष्ये स्पष्टम्। "अल्लोपोऽन" (पा०सू०६।४।१३४) 'अचः' (पा०सू०६।४।१३८) 'सान्त (पा०सू०६।४।१०) इत्यादावनेकक्लिष्टकल्पनापेक्षयेयं न्याय्या।

किं च भसंज्ञायां कार्यकालपक्षाश्रयणमशक्यम् परत्वेन पदसं

---

शात्। *इदमिति*। सामाहारद्वन्द्व इतिव्याख्यानमित्यर्थः। *नित्यत्वादिति*। कृताकृतप्रसङ्गित्वात्। ननु ह्रस्वत्वमपि शब्दान्तरस्येतिन्यायेनानित्यमत आह-*अपरनिमित्तकत्वेनेति*। यथाश्रुतमूलग्रन्थादन्त्यबाध इत्येव परिभाषायाः स्वरूपमिति प्रतीयते, तच्च "ष्यङ" इतिसूत्रविरुद्धमत आह-*ष्यङः सम्प्रसारणमितिसूत्र इति*। *अनन्त्यविकार इति*। अनन्त्यस्य विकारो येन शास्त्रेण तत्रान्त्यसदेशस्येत्युपतिष्ठते इतिपरिभाषार्थः स्यात्। एवञ्च "णो नः" धात्वादेः षः स" इतिसूत्रयोरन्त्यसदेशस्यान्त्यस्योपस्थितौ "णो न" इतिसूत्रेण नकारादेशो नेत इत्यादिष्वेव स्याच्च "धात्वादेः" इति सत्वं 'सोता' इत्यादावेव स्यान्न तु 'नमति' 'सिञ्चति' इत्यादौ। न चेष्टापत्तिः। "नेर्गदनद" इति सूत्रे नदेत्यस्य "उपसर्गात्सुनोति" इति सूत्रे "स्तौतिसेध" इत्यादिनिर्देशस्यानुपपत्तिप्रसङ्गादतोऽन्त्यसदेशानन्त्यसदेशयोरित्येतत्पूरणेन व्याचष्टे—*अन्त्यसदेशानन्त्यसदेशयोरिति*। एतस्या परिभाषाया आवश्यकत्वमाह—*अल्लोपोऽन इत्यादि*। या क्लेशेनान्यथासिद्धिरुद्भाविता सापि कार्यकालपक्षे न तु यथोद्देशे।

आकडारीयभपदसंज्ञाविषये तु यथोद्देशपक्ष एव न तु कार्यकाल इत्या

बाधकत्वानुपपत्तेः । 'राज्ञ' इत्यादौ नलोपस्यासिद्धत्वात्पूर्वम् 'अल्लोपोऽन' इति लोपे पश्चात्प्राप्तनलोपैकवाक्यतापन्नपदत्वस्यैतदेकवाक्यतापन्नभत्वेन बाधायोगान्नलोपापत्तेश्च । तस्मादाकडारस्थसंज्ञासु विधेयांशाश्रयणमेवावश्यकमिति 'यजादिस्वादिपरो योऽन्' इत्यर्थस्य न तत्र लाभः । "ष्यङः सम्प्रसारणम्" (पा०सू०६।१।१३) इति सूत्रस्थं-"कार्यकालं सञ्ज्ञापरिभाषं भस्येत्युपस्थितमिदं भवति, यचि भमिति, तत्र यजादिपरतया ऽन्कारं विशेषयिष्यामः । अनाऽकारम्" इति भाष्यन्त्वेकदेश्युक्तिः । यजादिप्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षतया तेनानो विशेषणायोगाच्च । अत एव सर्वफलानामन्यथासिद्धिं प्रदर्श्यापि तस्मात् "यान्येतस्याः परिभाषयाः प्रयोजनानि तदर्थमेषा कर्त्तव्या" इति उपसंहृतं भाष्ये इति भावः ।

अन्त्यसदेशस्येति । अन्त्येन समानो देशो यस्येत्यर्थः । तत्त्वञ्चान्त्यवर्णतद्वर्णयोरितराव्यवधाने भवति । 'चलीक्लृप्यते इत्यादौ

---

शयेनाह-*किञ्चेति* । *एतदेकेति* । अल्लोपैकवाक्यतापन्नेत्यर्थः । नन्वेवं भाष्य विरोध इत्यत आह-*ष्यङःसम्प्रसारणमितीति* । एवञ्च परिभाषैव भाष्यकाराभिप्रेता न प्रत्याख्यानमित्याशयेनाह—*अत एवेति* । अस्याः परिभाषाया न्याय्यत्वादेवेत्यर्थः । केचित्तु यदत्रोक्तं कार्यकालपक्षे नलोपैकवाक्यतापन्नपदत्वस्य भत्वेन बाधो न स्यादिति । तन्न युक्तम् । आकडारादेकेत्येव सिद्धे संज्ञापदोपादानेन सम्यक् ज्ञायमानेत्यर्थेन कार्यार्थम्प्रधानदेशे गमनेऽप्युपदेशदेशीयत्वव्यवहारन्न त्यजतीत्यर्थो विवक्षितः । तथा च भसंज्ञया पदसंज्ञाबाधः सुघट एवेति वदन्ति । तन्न । उपदेशदेशीयत्वव्यवहारात्यागेपि समानकालप्राप्तिकयोर्भत्वपदत्वयोर्बाध्यबाधकभावो युक्तः । यत्रादौ भसंज्ञायान्तत्प्रयुक्तं कार्ये च कृते पश्चात्पदसंज्ञा प्राप्ता सा पूर्वजातभसंज्ञया बाधयितुन्न शक्यते, भसंज्ञायाः पूर्वजातत्वात् । एवञ्च प्रकृते नलोपापादनं युक्तमेव । किञ्च संज्ञायाः कार्यार्थतया यत्र न भसंज्ञया स्वीयंकिञ्चिच्छास्त्रीयङ्कार्यं साधनीयमस्ति तत्र तस्याः प्रवृत्तिर्न स्यात्, तथा च पदसंज्ञायाः स्वादिष्वितिविधीयमानायाः प्रवृत्तिः स्यादेव । एवं सति 'श्वलिहा' 'गोदुहा' 'वाचा' इत्यादौ ढत्वघत्वकुत्वादिकार्याणामापत्तिः स्यादेवेति दिक् ।

परिभाषार्थं विवृणोति-*अन्त्यसदेशस्येतीति* । *तत्त्वञ्च* । अन्त्यसमानदेशत्वञ्च । *तद्वर्णेति* । अन्त्यसमानदेशत्वेनाभिमतवर्णेत्यर्थः ।

ऋकारान्तर्गतरेफस्योत्तराज्भागेन व्यवधानान्नान्त्यसदेशत्वसम्भव इति न तत्रैतत्परिभाषाप्रवृत्तिः, अत एव "न सम्प्रसारणे" (पा०सू०६।१।३७) इत्युदाहरणीभूतस्य 'विद्ध' इत्यादेर्नानया सिद्धिः। अत एव 'न सम्प्रसारणे' इति सूत्रं सार्थकम्। "नैतस्याः परिभाषायाः प्रयोजनानि" इति तत्सूत्रस्थभाष्यस्य त्वयमर्थः। एतत्सूत्रसाध्यानि 'विद्ध' इत्यादीन्युदाहरणानि नैतस्याः परिभाषाया भवन्तीति अन्त्यसदेशत्वाभावादिति च तद्भावः।

परस्यैवेति। द्रशब्दस्यैवेत्यर्थः। अः सेरिति। अत्र अकारेण आकारस्यापि ग्रहणं, तेनामूदृगित्यादिसिद्धिः। तत्र हि "आसर्वनाम्नः" (पा०सू०६।३।९१) इति पूर्वपदान्तस्यात्वम्। त्यदाद्यत्वेति। त्यदादीनामत्वविषय इत्यर्थः। पक्षे इति। अत्र तन्त्रेणार्थद्वयेऽपि सूत्रतात्पर्यम्। तत्र लक्ष्यानुरोधाद्व्यवस्था। अत्र प्रमाणमुपन्यस्यति—उक्तञ्चेति। लत्ववदिति। 'चलीक्लृप्यते' इत्यत्र यथा लत्वं रीगृकारयोर्भवति तथेत्यर्थः। अत्र 'अदमुयङ्' इति रूपत्रादिमतं न्याययुक्तं लत्वे उक्तरीत्यैतन्न्यायाप्रवृत्तावपि अत्रैतदप्रवृत्तौ मानाभावात्। अत्र

---

इतराव्यवधाननिवेशस्य फलमाह—*चलीक्लृप्यत इति*। न च 'हंसशिरांसि' इत्यत्राप्यन्त्यवर्णः सकारस्तद्वर्णो रकाराकारः तयोर्नकारो व्यवधायकोऽस्तीति व्यवधानाभावघटितायाः परिभाषाया अप्रवृत्त्यापत्तौ हंसाकारस्यापि दीर्घत्वं स्यादिति वाच्यम्। तत्तत्कार्यविधायकशास्त्रोद्देश्यघटको योऽन्त्यो वर्णो यश्च तत्समानदेशत्वेनाभिमतो वर्णस्तदितराच्त्वपर्याप्त्यधिकरणाविषयकप्रतीत्यविषयो विवक्षितः। एवं सति नकारस्याच्त्वपर्याप्त्यधिकरणाविषयतया तादृशो यो वर्णोऽकारादिस्तद्व्यवधानस्य प्रकृते सत्त्वान्नानुपपत्तिः।

*अत एव*। इतराव्यवधाननिवेशादेव। *अनया*। अनन्त्यविकार इतिपरिभाषया। *अत एव*। तदुदाहरणस्यानयाऽसिद्धेरेव। परिभाषास्वीकारे भाष्यविरोधं परिहरति *नैतस्या इति*। "अः सेः" इत्यत्राकारजातीयवर्णपरमकारग्रहणम्। नन्वेवं त्यदाद्यत्वविषय इत्यनुपपन्नमत आह—*त्यदादीनामिति*। ननु सकृदुच्चारितादसेरितिपदात्कथमर्थद्वयलाभ इत्यत आह—*अत्र तन्त्रेणेति*। वार्त्तिकोक्तमतत्रयान्यतमस्य यस्य युक्तत्वन्तदाह—*अत्रादमुयङितीति*। *अत्र*। अदद्र्यङ्शब्दे। *लत्वे उक्तरीत्येति*। 'चलीक्लृप्यते' इत्यत्रान्त्यवर्णतद्वर्णयोरितरव्यवधानसत्वा-

त्र भाष्ये "अदसोऽनोस्त्रेः" इति वार्त्तिकप्रत्याख्यानाय, अथवा अःसेः' इति पक्षमुक्त्वा "यद्येवम् 'अमुमुयङ्' इति न सिद्ध्यति, अदद्र्यङिति प्नोति, अदमुयङिति भवितव्यम् । अनन्त्यविकारे इति" इत्यु-म् । अत्र 'इति प्राप्नोति' इत्युक्त्या च तत्रासंमतिरुक्ता, इति भवितव्यमित्यनेन पृथक् सुत्रमिति पक्षे संमत्यभावो दर्शितः । 'इति भवितव्यम्'इत्युक्त्या च तत्र शब्देऽप्रयुक्तत्वं सूचितमित्याहुः ।

विष्वग्देवयोः किमिति । चस्याप्युपलक्षणमिदम् । ननूत्त-रपदाधिकारादञ्चुरूपे उत्तरपदे इत्यर्थाद्विष्वगश्वनमित्यादेर्व्यावृत्तौ व्यर्थमप्रत्ययग्रहणमत आह—अप्रत्ययेति । तेनेति । अन्यथा "अतः कृ" (पा०सू०८।३।४६) इत्यत्र "नित्यं समासे" (पा०सू०८।३।४५) इत्यतोऽनुवृत्तसमासग्रहणेनोत्तरपदाक्षेपेऽपि कृधातुरूपे उत्तरपदे इत्य-र्थापत्तौ "अयस्कृत्" इत्यादावेव स्यादिति भावः ॥

उद ईत् (पा०सू०६।४।१३९) । अत्र 'अचः' (पा०सू०६।४।१३८) इत्यनुवर्त्तते ।

समः स (पा०सू०६।३।९३) । 'समो मिङ्' इति "सम इङ्" इति त्रा न कृतम्, परिभाषाज्ञानकृतगौरवापत्तेः ।

---

। *अत्र* । अदद्र्यङ्शब्दे । न्याययुक्तत्वमुपपादयति—*अत एवेति* । *नोस्त्रेरिति* । ओकारसकाररेफान्तभिन्नस्यादस इति तस्यार्थः । *अःसेरिति पक्षमिति* । तृतीयपक्षमित्यर्थः । नन्वेतावता न्याययुतत्वं कथ-मत आह *अत्रेति प्राप्नोतीति* । *अत्र* । भाष्ये । *इतिभवितव्यमि-ति* । एतेन न्याययुतत्वं स्पष्टमेवोक्तम् । परन्तु तदग्रे इदमेवेष्यते इत्येवं नोक्तं, किन्तु 'भवितव्यम्' इत्येवोक्तं तेन सम्प्रत्यभाव उक्तोऽतोऽप्र-युक्तत्वलाभः ।

ननु "विष्वग्देवयोः" इत्यस्याभावेऽपि चकारसमुच्चेयसर्वनाम्न उपस्थि-त्वात्कथम् 'अस्त्राचि' इत्यत्रातिप्रसङ्ग उक्तोऽत आह-*चस्याप्युपलक्षण-मिति* । तथा चोत्तरपदेन पूर्वपदस्याक्षेपेऽप्रत्ययान्तेऽञ्चतौ परे यत्पूर्वपदं तस्यादेश इत्यर्थापत्याऽतिप्रसङ्गः स्यादिति भावः । अत्र ज्ञाप्यांशो 'धा-तुरूपे तदादिविधि'रित्येव । एतद्वचनफलमन्यत्रेत्यभिप्रायेण मूलेऽन्य-थोक्तम् । प्रकृतसूत्रे तु न फलमप्रत्ययग्रहणसत्त्वात् । *अन्यथा* । ज्ञा-पकस्य वचनस्याभावे ।

*परिभाषाज्ञानेति* । न च "समः समि" इतिन्यासेऽपि "अनेकाल्"

तिरसस्ति (पा०सू०६।३।९४)। 'अलोपे' इत्यत्र शकन्ध्वा-दित्वात्पररूपेणाकारः प्रश्लिष्यते। अस्य अलोपो लोपाभावो यस्मि-न्नञ्चतावित्यर्थस्तदाह-अलुप्ताकारेति। तिरश्चेति। श्चुत्वेऽल्लो-पस्य स्थानिवत्त्वन्तु न पूर्वत्रासिद्धीये तन्निषेधात्।

पूजार्थस्येति। पूजारूपार्थस्य गम्यत्वे इत्यर्थः। (१)अत ए-वाव्याकुलं गच्छतीत्यर्थकेऽञ्चितं गच्छतीत्यादौ नलोपो न। अव्या-कुलगमनेन च पूजा गम्यते न त्वञ्चतेरेव सोऽर्थ इति स्पष्टम् 'अञ्चोऽ-नपादाने' (पा०सू०८।२।४८) इति सूत्रे (२)भाष्यकैयटयोः। 'प्राच'

इतिपरिभाषाया ज्ञानस्यापेक्षाऽस्त्येवेति साम्यमिति वाच्यम्। भवन्मते इत्संज्ञाया "ङ्च्चि" इत्यस्य चापेक्षा। मन्मते तु "अनेकाल्" इत्यस्यैवे-लाघवम्। इगितिन्यासे च "आद्यन्तौ" इत्यस्यापेक्षेति गौरवमिति भाव-ननु "अव्ययसर्वनाम्नाम्" इति समोऽकचि कृते सम्यादेशपक्षे ककार-श्रवणम्भवति मिङादेश इगागमपक्षे वा ककारस्य श्रवणमिति रूपे-विशेषस्य स्पष्टतया कथं परिभाषाज्ञानकृतगौरवस्यैवाभिधानमिति चेन्-प्रकृतसूत्रभाष्येऽकचि कृतेऽपि ककाराश्रवणं समिरितिसमुदायरूपा-देशस्य फलमिति नोक्तमिति न्यूनतापरिहाराय यत्र कुत्साविवक्षा त्रापि प्रथममुत्तरपदनिमित्तकादेशस्ततोऽकजिति स्वीकारात्। अथ-वोत्तरपदार्थे समूशब्दसमभिव्याहारेण प्रकर्षप्रतीत्यैतादृशे विषये कुत्सा-दिविवक्षैव नेति।

यदुक्तमलुप्ताकारेऽञ्चताविति तल्लाभप्रकारमाह—*अलोप इत्यत्रेति* न लोपो यस्येति व्याख्यानेऽवयवार्थकपदस्येत्यस्य यदवयवस्येत्यर्थकत्वे-गतौ नलोपविषये तिर्यादेशाभावापत्तेरत एवं व्याख्यातम्। मूलोक्तसा-मानाधिकरण्येन व्याख्याने वक्ष्यमाणानुपपत्तिरत आह—*पूजारूपार्थस्ये-ति*। *पूजा गम्यत इति*। कर्त्तुरित्यादिः। ननु 'प्राच' इतिप्रयोगो यदि तत्र चेत्पूजा विवक्षिता तदा नलोपो न स्याद्यदि तु न पूजाविवक्षा तदा-ल्लोपस्यापि प्रवृत्तिः स्यात्तथा चोदात्तनिवृत्तिस्वरस्यापत्तिरत आह-*प्राच इत्यादीति*। अत्र हि प्रकर्षेणाञ्चतीतिशब्दसाधुत्वाय व्युत्पत्ति-

(१) ननु अनेकार्था अपि धातवो भवन्ति इति 'अञ्चोऽनपादाने' इतिसूत्रस्थभाष्यप्रामाण्येन अ-तः पूजार्थत्वेऽपि न क्षतिरित्यत आह-अत एवेति।

(२) भाष्यकैयटयोरिति। तत्रहि-"अञ्चेर्नत्वे व्यक्तप्रतिषेधः" इतिवार्तिकम्, "अञ्चि विज्ञाने-द्धं. नहि तदञ्चे रूपम्, अञ्जतेरेतद्रूपमिति प्रत्याख्याय, अञ्चत्यर्थौ वा गम्यते" इति शंकावसरे "कः पुनर-त्यर्थः" इति पृष्टे "अञ्चतिः प्रकाशने वर्तने। अञ्चितं गच्छति प्रकाशयत्यात्मानमिति गम्यते" इत्युक्तं नवा लोके अञ्चितं गच्छति इति प्रकाशं गम्यते, किं तर्हि ? समाधानं गम्यते" इत्युक्तम्। तत्र समाधान-मिति गौणस्याव्याकुलत्वेन पूजागम्यते, नत्वञ्चतेरर्थं इति स्पष्टमेव प्रतीयते इति भावः।

इत्यादि चिरन्तनादिरूढस्येति बोद्धयम् । एतेन 'अञ्चेर्गतौ' इति नियमेनैव सिद्धौ "नाञ्चेः पूजायाम् (पा०सू०६।४।३०) इति व्यर्थ- त्वमित्यपास्तम् ।

नलोपाभाव इति । ञोपधत्वबोधनद्वारेत्यर्थः । स्पष्टञ्चेदं "परेश्च घ" (पा०सू०८।२।२२) इति सूत्रे भाष्ये । अपिना चसम- प्रधाने 'चोः कुः' (पा०सू०८।२।३०) इति कुत्वाभावो 'निरुपपदा- त्विन्' इति च निपात्यते इति बोद्धयम् । 'साङि' इति वचनाद्वा कु- त्वाभावः । षत्वं, स्कोरितीति । (१)सलोपे षत्वस्यासिद्धत्वा- त्सलोपे कृते षत्वम् । व्रश्चेः क्विपि 'ग्रहिज्या' (पा०सू०६।१।१६) इ- ति संप्रसारणे पूर्वत्वे श्चुत्वस्यासिद्धत्वात्सलोपः । सुवृट्त्स्विति । षत्वस्यासिद्धत्वाद् 'डः सि' (पा०सू०८।३।२९) इति वा धुट् ।

---

मात्रन्त्वर्थोऽवयवयोर्विवक्षितः । "प्राचामवृद्धात्" इत्यादिनिर्देशा- देनादेशेष्वल्लोपो न । यदि तु स स्यात्तदा कृदुत्तरपदप्रकृतिस्वरेणा- न्तोदात्तस्य प्राक्शब्दस्यावयवो लुप्यत इत्युदात्तनिवृत्तिस्वरः स्या- दे । *एतेन* । प्रागुक्तस्याञ्चितं गच्छतीत्यस्य 'प्राच' इत्यादिरूपा- पाञ्चासाधनेन ॥

ननु क्रुङित्यत्र नलोपाभावोऽपि निपात्यत इति यथाश्रुतमूलोक्तम् "परेश्च घाङ्क" इतिसूत्रभाष्यविरुद्धमत आह-*ञोपधत्वेति*। *सूत्रे भा- ष्ये इति*। तत्र हि सङीतिवचनस्य क्रुञ्चा इत्यत्र चोः कुरितीति कुत्वाभा- वः फलमित्युक्त्वा 'निपातनादेतत्सिद्धम् । किन्निपातनम् । ऋत्विग्दधृ- क्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' इत्युक्तम । यद्ययं स्वतो नकारोपधः स्या- त्तदा कुत्वस्याप्राप्ते भाष्यमसङ्गतमेव स्यात् । अत एव क्रुञ्च्यादित्यत्र लोपो न ।' यदुक्तम्मूले नलोपाभावोऽपीति तत्रापिशब्दार्थमाह—*अपिने- ति* । सङीतिवचनस्य प्रत्यख्यानपक्षे इदम् । *कुत्वाभाव इति* । अस्ये- त्यादिः । तदारम्भपक्षे आह-*सङीति* । ननु षत्वे "स्कोः" इति सलोप इति क्रमेणाभिधानमयुक्तं सलोपे षत्वस्यासिद्धत्वादत आह—*सलोप- इति* । एवञ्च मूलकारस्यापि तादृशः क्रमो न विवक्षितः किन्तु लक्षणयोः प्राप्तिमात्रमिति भावः ।

---

(१) *सलोपेषत्वस्येति* । पाठक्रमादर्थक्रमस्य बलीयस्त्वादिति भावः । यथा दर्शपूर्णमासप्रकरणे श्रूयमाणे वाक्ये "अग्निहोत्रं जुहोति" । "यवागुं पचति" इति । तत्र प्रयोजनवशेन यः क्रम अपेक्ष्यते स आ- श्रयणीयः । यथा यवागुपाकात् प्राक् अग्निहोत्रहोमस्य सिद्धिरेव नास्तीति पाठक्रमं त्यक्त्वाऽत्राऽऽर्थक्रम आश्रितः ।

निपात्यन्ते इति। अतिप्रत्ययान्ता इति शेषः। तत्र पृषद्बृहतोर्गुणाभावश्च, गमेर्जगादेशश्च, महेः कर्मणि प्रत्ययश्च, निपातनात्। शतृवदिति। प्रत्ययग्रहणपरिभाषया शतृप्रत्ययान्तवदित्यर्थः। 'शतुरनुमः' (पा०सू०६।१।१७३) इति सूत्रे "बृहन्महतोरुपसंख्यानम्' इति तु पृषदादिव्यावृत्तये नियमार्थमिति बोध्यम्।

अत्वसन्त (पा०सू०६।४।१४) चस्त्वर्थे। 'अतु' इतिलुप्तषष्ठीकं पृथक् पदम्। 'अधातोः' इत्यसन्तस्यैव विशेषणं तुशब्दात्। तदाह-धातुभिन्नेति। अत एव 'उगिदचाम्' (पा०सू०७।१।७०) इति सूत्रे 'गोमत्यतेरप्रत्यये 'गोमान्' इति प्रयोगो भाष्ये सङ्गच्छते। अङ्गविशेषणतया ऽर्थसिद्धतदन्तविधेरेवानुवादकमन्तग्रहणम्। परमिति।

---

ननु नात्र सकार इति कथं सलोप इत्यभिधानमत आह—*वस्वेः इ पीति*। ननु यदि शतृवद्भावस्तदा "शतुरनुम" इतिसूत्रे "बृहन्महत" इति वार्त्तिकं व्यर्थमत आह-*शतुरनुम इतीति*। शतृवदित्यत्र तृतीयान्ताद्वतिर्न तु सप्तम्यन्तात्तेन 'महतीतरा' इत्यत्र "उगितश्च" इति ह्रस्वविकल्प सिध्यति।

*अत एव*। "अधातोः" इत्यस्यातुपदार्थविशेषणत्वाभावादेव नन्वतुशब्दस्य पृथक्पदत्वेऽपि तस्याङ्गविशेषणत्वेन यथाऽत्वन्तस्येत्यर्थलाभस्तथाऽसन्तस्येत्यस्यापि लाभे सौत्रमन्तग्रहणं व्यर्थमत आह—*अङ्गविशेषणत्वेति*। अत्रेदमवधेयम्। सूत्रेऽत्विति भवतुक्तवतुमतुप्वतुप्डवतुडमतुपामवयवानां सामान्येनानुकरणम्। अत एव भवान् कृतवान् घटवान्तावान्कुमुद्वानित्यादिसिद्धिः।

नन्वत्वन्तत्वमङ्गविशेषणमुत प्रत्ययस्य विशेषणम्। नाद्यः। दीर्घप्रवृत्तिसमये तस्यात्वन्तत्वाभावात्। 'भवान्' इत्यत्रापि सर्वादिपठितवतुशब्दावयवोकारस्य 'उपदेशेऽजनुनासिक' इतिसूत्रेणेत्संज्ञायां तस्य लोपेऽनुबन्धरहितस्यैव सत्त्वात्। "सर्वेष्वपि सानुबन्धकानिर्देशेषु रूपमाश्रीयते रूपनिग्रहश्च नान्तरेण लौकिकं प्रयोगं तस्मिंश्च सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते कोऽसौ उपदेशो नाम" इति घसंज्ञासूत्रीयभाष्योक्तरीत्योपदेशे योऽत्वन्तस्य ग्रहणमिति विज्ञायते इति चेत्? एवं सति सर्वादिपठिताव्युत्पन्नभवतुशब्दस्य भवानिति यद्यपि सिध्यति तथापि भातेर्डवतुरिति व्युत्पन्नस्योपदेशाभावाद्दीर्घो न स्यात्। व्युत्पत्तिपक्षेऽवयवायवस्य समुदायावयवत्वेनात्र सिध्यत्येवेति चेत्? एवमपि मतुप्वतुबन्तेन सिध्यति। अत एव न द्वितीयः। प्रत्ययस्याप्र

वचनसामर्थ्यादुपधापदासम्बन्धेन(१) चारितार्थ्यादित्यभिमानः। अथवाभ्युच्चय इत्याह—नित्यमिति। कृताकृतप्रसङ्गित्वमात्रेणेत्यर्थः। सामर्थ्यादिति। वाक्यार्थबोधकाले विरोधाभावेनोपधासम्बन्धे सामर्थ्यात्पूर्वं दीर्घप्रवृत्तिरेव कल्प्यत इति भावः।

धीमानिति। (२)न चैकानुबन्धकपरिभाषया मतुपोऽत्राग्रहणं, सूत्रन्तु सर्वादिपठितेऽनुनासिकोकारविशिष्टे भवतुशब्दे चारितार्थमिति वाच्यम्, पकारादेः समुदायानुबन्धत्वेऽप्यतोऽनुबन्धकत्वाभावात्। अवयवानां नान्तरीयकतया समुदायोपदेश एव कथिता-र्थमित्यर्थस्य "आदेच उपदेशे" (पा०सू०६।१।४५) इति सूत्रस्थ-

त्वाच्च। शब्दस्वरूपस्याध्याहारेण वाक्यार्थबोधसम्भवेऽप्युपदेशोऽत्वन्त-त्वाभावाद्दोष एवेतिचेत्।

अत्राहुर्वार्त्तिककाराः। "अत्वन्तस्य दीर्घत्वे पित उपसंख्यानम्" इति। "तर्हि उपसंख्यानं कर्तव्यं न कर्तव्यम् पकारलोपे कृते नातुबन्तमेतद्भवति अत्वं तव"। यथैव तर्हि पकारलोपे कृते नातुबन्तमेवमुकारलोपे नात्वन्तम्। ननु च भूतपूर्वगत्याऽत्वन्तम्। सूत्रेऽत्वन्तस्योपादानात्तदंशे भूतपूर्वगतिः। अतुबन्तस्य त्वनुपादानान्न भूतपूर्वगतिस्तदंशे इति भावः। तत उक्युक्त्या भूतपूर्वगतिर्व्यवस्थापिता। तदनुबन्धकपरिभाषया क्तवत्वन्तानामग्रहणं प्राप्नोतीति तु नाशङ्कनीयम्। उकारपकारयोः समुदायानुबन्धत्वेन तस्याः परिभाषाया इह विषयाभावात्।

एतेन प्रकृतसूत्रे सत्यन्तग्रहणेऽतोरन्तोऽत्वन्त इति समासं कृत्वा तदंशात्वन्तशब्दस्याङ्गविशेषणत्वेनात्वन्तान्तं यदङ्गमित्यर्थस्यावश्यकतया मतुबन्ते मुख्यस्य तस्य सत्वेन भवतुशब्दे च व्यपदेशिवद्भावेन तस्य सत्त्वमुपपाद्य सौत्रान्तशब्दस्य सार्थक्योपपादनं परास्तम्।

ननु परमित्यसङ्गतं दीर्घस्य नुमोऽप्राप्तिविषये चारितार्थ्याभावादत आह-*वचनसामार्थ्यादिति*। वस्तुत एवं प्रकारेण चारितार्थ्यमयोग्यमित्याशयेनाह-*अभिमान इति*। सत्यपि सम्भवे बाधनमितिभाष्यकारमताभिप्रायेणाह-*अभ्युच्चय इति*। उक्तमेवार्थमाशङ्कासमाधानाभ्यां

(१) नन्वन्यत्र लब्धावकाशस्यैव बाधः। नचान्यत्र दीर्घो लब्धावकाशोऽस्तीत्यत आह-*वचनसामर्थ्यादिति। *उपधापदासंबन्धेनेति*। नुमि कृते दीर्घस्यावकाशसंभव इति भावः।

(२) ननु धीमानित्यादौ मतुप्प्रत्ययान्ते अत्वसन्तस्येत्यस्योकारपकारोभयानुबन्धकत्वेनैकानुबन्धकत्वेऽनुबन्धकस्याग्रहणमिति अत्वसन्तस्येति दीर्घो न स्यात्। नचोकारमात्रानुबन्धकस्यातोरप्रसिद्ध्या सामर्थ्यादेवैकाविधपरिभाषाया अप्रवृत्तिरितिवाच्यम्। सर्वादिगणपठितानुनासिकोकारविशिष्टभवतुशब्दे चारितार्थ्येन तेन तदप्रवृत्तिज्ञापनासंभवादित्याशङ्क्य परिहरति-*नचैकानुबन्धेत्यादि*।

भाष्यसंमतत्वेन यदुपदेशप्रयुक्ता यस्येत्संज्ञा तस्य तदनुबन्धतया एव स्वीकारात् । न चोकारलोपे ऽत्वन्तत्वस्याप्यभावः । उकारस्याश्रयणेन तदंशे भूतपूर्वगतिस्वीकारात् । एतेन तदाश्रयणे ऽतुबन्तत्वेऽप्यात्वन्तमित्यपास्तम् । तदाश्रयणाभावात् । तस्मात् 'अनुनासिकोकारविशिष्टो य उपदेशेऽत् तदन्तस्य प्रयोगस्थस्य दीर्घः इति सूत्रार्थः इति न दोषः ।

नियमार्थमिति । 'धातोश्चेदुगित्कार्यन्तर्हि नलोपिनोऽञ्चतेरेव' इति नियम इति भावः । तेनोखास्रत् ब्राह्मणीत्यादौ नुम्ङीपौ न । न्यायप्राप्तास्लोपाकरणपूर्वकं नलोपकरणस्य विवक्षार्थत्वमित्याशयः। यद्यपि 'अञ्चतेश्चेन्नलोपिन एव' इति नियमेऽप्यञ्चतिग्रहणं चरितार्थं तथापि भाष्यप्रामाण्येन (१)सामान्यापेक्ष उक्तनियमो युक्त इति बोध्यम् ।

नन्वत्र धातुत्वात्कथं नुम्? अत आह—अधातोरिति । नचौपदेशिकधातुविषयक एव नियमोऽस्तु किमनेनेति वाच्यम् । औपदेशिकत्वानन्तर्भावेण सामान्यापेक्षनियमज्ञापनार्थत्वात्, तत्फलं 'पयस्वत्' इत्यादाविव 'गोमान्' इत्यादित्यादिनामधातौ 'उगितश्च' (पा० सू० ४।१।६) इति ङीबभाव इति दिक् । क्यच्प्रक्षेऽल्लोपो न स्थानिवत् क्वौ लुप्तत्वात् । अत्राचारक्विबर्वाचीनमनेन । वस्तुतो हलन्तेभ्यस्तदभाव इति 'ह्रस्वनद्यापः' (पा० सू० ७।१।५४) इत्यत्र भाष्ये स्पष्टम् ।(२)

माह—*न चेत्यादिना* । उपसंहरति—*तस्मादिति* । अनुनासिकोकारविशिष्ट इति । अनुनासिकोकारोपलक्षित इत्यर्थः ॥

*नलोपिनोऽञ्चतेरेवेति* । तेन 'प्राङ् सुमुखी' इत्यादौ पूजायाम् 'उगितश्च' इति ङीप् नेति बोध्यम् । *तेन* । उक्तनियमाश्रयणेन । उक्तनियमलाभे बीजमाह—*न्यायेति* । *अञ्चतेश्चेन्नलोपिन एवेति* । एतादृशनियमस्य फलं पूर्वोक्तमेव । तत्र गोमन्तमिच्छतीत्यर्थकगोमानित्यत्र धातुत्वात्कथं नुमिति । सनाद्यन्तत्वेन धातुत्वात् । *औपदेशिकधातुविषयक इति* । ज्ञापकसाजात्यात् ।

(१) *भाष्यप्रामाण्येनेति* । "अञ्चतिग्रहणं नियमार्थं भविष्यति । अञ्चतेरेवोगितो धातो र्नान्यस्य उगितोरिति" इति उगिदचामिति सूत्रस्थभाष्यप्रामाण्येनेत्यर्थः ।

(२) *ह्रस्वनद्याप इत्यत्र भाष्ये स्पष्टमिति* । तत्रहि—इत्संज्ञाकार्याभावात् कासुप्रत्ययादाम्मन्त्रे हि

: उभे अभ्य (पा०सू०६।१।५) । लक्ष्यानुसारेण गर्गदण्डनन्या-यादत्र समुदाये वाक्यसमाप्तिरित्याह—उभे समुदिते इति । द्वे इ-त्यनुवृत्त्यैव सिद्धे उभेग्रहणं स्पष्टार्थम् । यत्तूभेग्रहणं सामर्थ्यात्सह-भावोपसर्जनद्वित्वविशिष्टार्थकं, तेन समुदिते इत्यर्थलाभ इति । तन्न, अशब्दार्थत्वात् । शब्दाधिक्याद‍र्थाधिक्यस्य बहुशो भाष्यकृतोपहासि-तत्वाच्च । ध्वनितश्चेदम् "तदसति प्रयोजने उभेग्रहणं सहार्थं विज्ञा-स्यते" इति ग्रन्थेन भाष्ये । अत एव सूत्रशेषे भाष्ये गर्गदण्डनन्या-येनैतदर्थसिद्धिमाश्रित्य "सहग्रहणं कर्त्तव्यम्" इति वार्त्तिकं प्रत्या-ख्यातम् । तुल्यन्यायात् तदर्थकत्वेन पराभिमतमुभेग्रहणञ्च प्रत्याख्या-तप्रायमिति सुधियो विभावयन्तु । तत्र श्र्यादिशब्दानामेकापाये ऽप्रवृ-त्तेः 'एत्सन्' इत्यदावभ्यासलोपे कार्यकालपक्षे न संज्ञेति न जुस् । एकादेशात्पूर्वमायन्नादिषूपदेशिवद्वचनेनान्तरङ्गत्वादन्तादेशेऽपि 'सर्वे

---

*द्वे इत्यनुवृत्त्यैवेति* । यद्यप्येकाच इतिसूत्रे द्वे इतिविधेयसमर्पकं तथापि तस्य तस्यागः पूर्वोऽभ्यास इत्यत्र क्लृप्त इत्यत्रानुवाद्यसमर्पकत्वे बाधकाभा-व इति भावः । *द्वित्वविशिष्टार्थकमिति* । उभेग्रहणसामर्थ्यात्प्रकृते द्वि-त्वस्य पर्याप्तिसम्बन्धेनाभ्यस्तसंज्ञोद्देश्यतावच्छेदकत्वं विवक्षितम् । अ-न्यथा आश्रयतया तस्योद्देश्यतावच्छेदकत्वं स्यात् । "एकाचो द्वे" इति-सूत्रे द्वित्वाश्रयस्य द्वितीयोच्चारणविषयस्य विधेयत्ववत् । *अशब्दार्थत्वा-दिति* । लक्ष्यानुसारिगर्गदण्डनन्यायेनैव पर्याप्तिसम्बन्धस्योद्देश्यताव-च्छेदकतावच्छेदकत्वलाभे तदर्थमधिकोपादानं गौरवग्रस्तमिति । एतच्च भाष्ये "असति प्रयोजने" इत्येवमभिधानेन सूचितम् । *विभावयन्त्विति* । यथा वार्त्तिककृदुक्तं सहग्रहणं प्रत्याख्यातं तथा पराभिप्रेतं सहग्रहणमपि प्रत्याख्यातमेव 'पेत्सन्' इत्यत्राभ्यासलोपे जुसभावार्थं तथा 'ईत्सन्' इत्य-त्र 'नाभ्यस्तात्' इति नुम् निषेधश्च स्यादिति तदभावार्थं चोभेग्रहणमिति कस्यचिन्मतं तन्निराकरणायाह—*तत्रेति* । ननु शपा सहैकादेशेऽप्युभ-यत आश्रयणेन न जुस्प्राप्तिरत आह—*एकादेशात्पूर्वमिति* । सनकारश-प्रकारयोरित्यर्थः । *अन्तादेशे इति* । तत एकादेशे इति शेषः । न प्रकृते

---

...ते सूत्रविहिताऽऽमो मकारस्य नेत्संज्ञेति तत्परित्राणार्थोऽकारानुबन्धो निरर्थकः । किन्तु ह्रस्वनद्याप इति सूत्रे आम्ग्रहणेन तद्ग्रहणाभावाय इति प्रकृते इदमस्ति इव कार्यम् मिदचोन्त्यात्पर इति । अचाम-न्त्यादेरपेक्षा स्यादित्युक्तौ प्रत्ययान्तादयं विधीयते तत्र नास्ति विशेष इत्युक्तम् । यदि हलन्तेभ्य आचार क्विप् स्यात् तदा तत्र विशेषसद्भावात्तत्र नास्ति विशेष इति भाष्योक्तिरयुक्ता स्यात् । अतः तद्भाष्यप्रामा-ण्यात् हलन्तेभ्य आचार क्विपोऽनभिधानं स्पष्टं प्रतीयते इति भावः ।

'सर्वपदादेशाः' इति न्यायेन स्थानिवद्भावात् झित्वेन जुसापत्तिः। किं चैकादेशे जुसोपवादविषयस्य जायमानत्वेन "प्रकल्प्य चापवादविषयम्" इति न्यायेन पूर्वमन्तिभावाप्रवृत्तौ एकादेशे जुसापत्तिः। यथोद्देशे पूर्वं समुदाये प्रवृत्तसञ्ज्ञायाः स्थानिवद्भावेनाभ्यासलोपे सत्येव पञ्चमीसमासेनैकादेशस्य स्थानिवत्त्वान्न तत्प्रवृत्तिः। अत एव 'मरुत्वैषिषन्' इत्यादौ न दोष इत्यलम्।

नाभ्यस्ता (पा०सू०७।१।७८)। बहुयोगव्यवच्छिन्नोऽपि नुमित्यनुवर्त्तते सामर्थ्यात्। तदाह–नुम्नेति। दायः शतरि शपः श्लौ 'श्लौ' (पा०सू०६।१।१०) इति द्वित्वे ऽभ्यासहस्वत्वे "श्नाभ्यस्तयोः" (पा०सू०६।४।११२) इत्यालोपे 'ददत्' इति।

त्यदादिषु (पा०सू०३।२।६०) आलोचनमिह ज्ञानमात्रम्।

आ स (पा०सू०६।३।९१) 'दृग्दृशवतुषु' (पा०सू०६।३।८९) इति सूत्रमनुवर्त्तते। षत्वापवादत्वादिति। 'कुः क्विन्यतः' इति न्यासेन दृष्ट इत्याद्यध्याहारेण च बहुव्रीहिफले सिद्धे प्रत्ययग्रहणमन्यपदार्थांशे वीप्सागर्भबहुव्रीहिणा लब्धं तादृशादिक्विन्नन्तविषयं लक्षणमचरितार्थमिति भावः। खकार इति। अघोषमहाप्राणशकारतुल्यत्वादिति भावः। कैयटेति। क्विन्प्रत्ययस्येति सूत्रस्थेत्यादिः। आसिद्धत्वादिति। यद्यपि जश्त्वापवादोऽपि कुत्वं,(१) तथापि शस्थानिक...

स्थानिवद्भावोपयोग इत्याशयेनाह–*किञ्चेति*। यदुक्तं न जुसिति तत्र हेतुं सूचयति–*यथोद्देश इत्यादिना*। अस्मदुक्तप्रकार एवावश्यक इति दर्शयति–*अत एवेति*। पञ्चमीसमासाश्रयणादेव।

*सामर्थ्यादिति*। सूत्रारम्भसामर्थ्यात्। न त्वनन्तरस्य 'अस्थिदधि' इतिसूत्रस्थस्याऽनङ इति शेषः। तस्यात्राप्राप्तेः।

*ज्ञानमात्रमिति*। न तु "पश्यार्थैः" इतिसूत्र इव चाक्षुषं ज्ञानं विवक्षितं साधकाभावादिति भावः।

ननु षत्वापवादत्वादित्यसङ्गतम्। कुत्वस्य षत्वाप्राप्तिविषये चारितार्थ्यादिति तथावक्तृणामाशयमाह–*क्विन्यत इत्यादि*। *जश्त्वापवा...

(१) ननु जश्त्वं प्रति कुत्वस्यासिद्धत्वादिति मूलोक्तमयुक्तम्। प्रत्ययग्रहणमहिम्ना षत्वापवादत्ववत् जश्त्वापवादत्वस्याप्यक्षतत्वेन तद्विषयेऽसिद्धत्वाकल्पनात् इति। यद्यपीत्यादिनाऽऽशंक्य परिहरति–*तथापीत्यादि*।

इदानीं कैयटेत्यादिना सूचितामरुचिमप्रकटयितुमाह–*वस्तुत इत्यादि*।

कस्यैव, न तु खस्यापीति भावः। वस्तुत इदं चिन्त्यं, प्रत्ययग्रहणस्य बहुव्रीहिमात्रफलकताया एव भाष्यकृतोक्तेः। तस्मात् दधृगञ्चुयुजिक्रुञ्चां अस्य चारितार्थ्येन जश्त्वषत्वापवादता न युक्तेति। (१) तदेव कृते इति वदता सूचितमिति दिक्।

कुत्वविषये जश्त्वस्यावश्यं प्राप्तेः। *इदञ्चिन्त्यमिति*। जश्त्वापवादत्वकथनमित्यर्थः। *भाष्यकृतोक्तेरिति*। एवं हि क्विन्प्रत्यये-तिसूत्रभाष्ये उक्तम्। "प्रत्ययग्रहणं किमर्थम्। न क्विनः कुरित्येवोच्येत। क्विनः कुरितीयत्युच्यमाने वकारस्यैव कुत्वम्प्रसज्येत। ननु च लोपे कृते न भविष्यति। अनवकाशकुत्वं लोपं बाधेत। सावकाशं कुत्वम्। कोऽवकाशः। अनन्त्य इति। क्विन्प्रत्ययापेक्षया अनन्त्यः। पदस्य त्वन्त्य' इति कैयटः। "कथम्पुनः सत्यन्त्येऽनन्त्यस्य कुत्वं स्यात्"। सत्यपि सम्भवे बाधनं भवतीति न्यायेन लोपं बाधित्वा कुत्वं स्यादिति भावः। "आचार्यप्रवृत्तिर्ज्ञापयति नान्त्यस्य कुत्वं भवति। यदयं क्विनः कुरितिकवर्गनिर्देशं करोति। इतरथा हि तद्गुणमेवायं निर्दिशेत्"। तद्गुणम् वकारगुणम्। "इदन्तर्हि प्रयोजनम्। येभ्यः क्विन्प्रत्ययो विधीयते तेषामन्यप्रत्ययान्तानामपि कुत्वं यथा स्यात्। मा नो अस्राक्। मा नो अद्राक्" इति। 'सृजिदृशिभ्यां माङि लुङ्। तिप्सिच्। बहुलञ्छन्दसीति इडभावः। हल्ङ्यादिलोपः। सृजिदृशोरित्यमागमः। वदव्रजेति वृद्धिः। बहुलञ्छन्दस्यमाङ्क्यत्र बहुलग्रहणादडागमः। संयोगान्तलोपः। व्रश्चेतिषत्वे प्राप्ते कुत्वम्। जस्य गः शस्य श्वः। वायसान इति चर्त्वम्। अत्र सृजेर्विशेषविहितेन षत्वेन पदान्ते 'रज्जुसृड्भ्याम्' इत्यत्रेव कुत्वं प्राप्तं बाध्येत इति कैयटेनोक्तं पूर्वत्रासिद्धमित्यसिद्धत्वं कुत्वस्य नास्ति प्रत्ययग्रहणसामर्थ्यात्। सर्वाद्यपवादत्वात्कुत्वस्येति। अत्रापवादत्वं वीप्सागर्भबहुव्रीह्याश्रयणेनोपपादनीयम्। तच्च भाष्योक्तप्रयोगदर्शनमात्रेण न युक्तं प्रयोगद्वयस्यापि

(१) *अपवादता न युक्ता इति*। नचेदमयुक्तं लक्ष्यद्वारा लक्षणोपप्लुत्या तत्तल्लक्ष्यविषये लक्षणचारितार्थ्येनापवादत्वसंभवादितिवाच्यम्। व्यक्तिपक्षे तथासंभवेऽपि जातिपक्षेऽचारितार्थ्यासंभवेनापवादत्वासम्भवः। नकारान्तरेणापि लक्ष्यसिद्धेश्चेत्याशयात्।

केचित्तु प्रत्ययग्रहणफलीभूतबहुव्रीहिफलत्वेन प्रकृतसूत्रे भाष्ये 'मानो अस्राक्' इति भाष्योदाहरणात् षत्वापवादत्वमप्यत्राभिप्रेतं भाष्यकृतः। अन्यथा सृजो विशेषविहितेन षत्वेन रज्जुसृड्भ्यामित्यत्र पदान्ते कुत्वबाधवत् प्रकृतेऽपि तद्बाधप्रसङ्गात् तदसङ्गत्यापत्तेः। एवञ्च 'तादृग्भ्याम्'- इत्यादौ कुत्वेन खकारे षत्वं न प्रवर्तते। सिद्धत्वाभावात् जश्त्वं तु दिगादिभ्यो यदिति निर्देशात् प्रवर्तत एव। एवमपि काम्यच्सूत्रस्थ-'उपेड्काम्यति' इति भाष्यप्रयोगं सृजिदृशोरितिसूत्रस्थ 'रज्जुसृड्भ्याम्' इति भाष्यप्रयोगश्च कथं संगच्छतामिति वाच्यम्। क्विन् प्रत्ययो यस्मादिति बहुव्रीहिबोधितावधित्वस्य निरवकाशलक्षणसृजेरनुपसर्गोपपदयुजश्चाभ्युपगमेनादोषादित्याहुः।

नगिति । षडगकाः प्राग्वत् । नड्भ्यामिति । 'मस्जिनशो' (पा०सू०७।१।६० ) इति नुम् तु न, धातुप्रत्यये तद्विधानात् ।

स्पृशोऽनु ( पा०सू०३।२।५८ ) अनुदके किम् ? उदकस्पर्शः(१) । अन्तोदात्तत्वमिति । नित्त्वादाद्युदात्तत्वं प्राप्तम् । कुत्वस्य जश्त्वं प्रत्यसिद्धत्वादाह–कुत्वात्पूर्वमिति ।

वोरु (पा०सू०८।२।७६)'सिपि धातोः' (पा०सू०८।२।७४) इत्यतो धातोरिति वर्त्तते तच्च वार्भ्यां विशेष्यते पिपठिषतेः क्विपि अतो लोपे प्रातिपदिकत्वात्सौ हल्ङ्यादिलोपे प्रत्ययलक्षणेन पदान्तत्वाद्रुः । रुत्वे ऽल्लोपो न स्थानिवत् पूर्वत्रासिद्धे तन्निषेधात् ।

नुम्वि ( पा०सू०८।३।५८ ) 'इण्कोः' ( पा०सू०८।३।५७) इति वर्तते व्यवधानेऽप्राप्तेरिदम् । अयमप्यधिकारः । अत एव 'निंस्स्व' इत्यत्र धातोः सस्य नानेन षत्वम् । व्यवायशब्दस्य प्रत्येकं सम्बन्धो व्याख्यानात्तदाह–प्रत्येकमिति । अपिना ऽव्यवधानेऽपि ।

---

छान्दसतया छन्दसि सर्वविधीनां वैकल्पिकतयाऽसिद्धत्वस्याप्यभावकल्पनेन प्रयोगद्वयस्याप्युपपत्तेरिति भावः ।

*उदकस्पर्श इति* । कर्मण्यण् ।

*पूर्वत्रासिद्धे तन्निषेधादिति* । न च "न पदान्त" सूत्रस्थभाष्ये 'वितस्वान्' इत्यत्र रुत्वस्य प्राप्तिनिरूपणावसरे पदचरमावयवविधायकातिरिक्तस्य त्रैपादिकस्य ग्रहणमिति व्यवस्थापितमिति रुत्वस्य पदचरमावयवतया तस्मिन्कर्त्तव्ये कथन्निषेधप्रवृत्तिरिति वाच्यम् । प्रत्यासत्त्या लोपनिमित्तनिमित्तकपदत्ववच्चरमावयवविधायकातिरिक्तस्य त्रैपादिकस्य ग्रहणमित्यर्थकल्पनेनापि तस्य भाष्यस्योपपत्तेः ।

*इदम्* । नुम्विसर्जननीयेतिसूत्रम् । *अत एव* । अधिकारत्वादेव । एवञ्चैतदेकवाक्यतयाऽऽदेशाविधायकम् 'आदेशप्रत्यययोः" इतिसूत्रमेव तस्य त्वत्र न प्राप्तिर्धातुसकारस्यादेशप्रत्ययावयवभिन्नत्वादिति भावः ।

*प्रत्येकं सम्बन्ध इति* । द्वन्द्वान्ते श्रूयमाणत्वात् । *व्याख्यानादिति* । अत्रैव सूत्रे 'निसेः प्रतिषेधो वक्तव्य' इत्येतद्वार्त्तिकप्रत्याख्यानपरभाष्ये 'निंस्स' 'निंस्स्व' इत्यत्र षत्वं प्रत्ययसकारस्य प्राप्तं तद्वारणाय व्यवायशब्द-

---

(१) *उदकस्पर्श इति* । यद्यपि तत्र क्विपि क्विन् प्रत्ययौ यस्मादिति बहुव्रीह्याश्रयणात् कुत्वे कृते प्रयोगापत्त्या 'अनुदक' इत्यस्य व्यावर्त्याप्रसिद्धिः, तथापि अनुदके इति निषेधसामर्थ्यादत्र क्विप्कल्पनया न व्यावर्त्याप्रसिद्धिरितिभावः ।

तुस्थानिकेति । प्रकृतसूत्रस्थं हयवरट्सूत्रस्थञ्च भाष्यमत्र मानम् । व्रश्चेति ष इति । (१)सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यायां त्रिपादीस्थस्याप्रवृत्तेर्हल्ङ्याादिलोपोत्तरं विविश्स् इत्यवस्थायां षत्वस्यासिद्धत्वात्संयोगान्तलोपे ष इत्यर्थः । कलोपे इति । पदान्तसंयोगादिलोपस्य संयोगान्तलोपापवादत्वादिति भावः ।

तडिति । तक्ष्णोतेः क्विप् । ण्यन्ताभ्यामिति । (२)णिलोपस्य स्थानिवत्त्वात् 'तक्स्थाता' इत्यादौ संयोगादिलोपाप्राप्तेः "काष्ठशगेव नास्ति, कुतः काष्ठशक्स्थाता" इति "परेश्चघाङ्कयोः" ( पा०सू० ८।२।२२ ) इति सूत्रस्थभाष्येण न विरोधः । तत्र झल्परसंयोगादिलोपाशङ्का तथोक्तम् । तस्य दोष इति । क्वौ लुप्तमिति तु न सार्वत्रिकमिति भाव इत्यन्यत्र विस्तरः । कुत्वस्यासिद्धत्वादि-

---

स्य प्रत्येकं सम्बन्ध उक्तस्तन्मूलकादित्यर्थः । *हयवरट्सूत्रस्थमिति* । तुमो योऽनुस्वार इतिव्याख्यानेन शर्ग्रहणेन गतार्थत्वाभावस्तत्रोक्तः । विविडित्यत्र शास्त्राणां यथाप्राप्तिस्तथा दृष्टान्तपरतया शिष्यबुद्धिवैशद्याय क्रियामाह-*सपादसप्तेत्यादि* *तक्ष्णोतेः क्विबिति* । एतेन ण्यन्ते कलोपाप्राप्तावपि न क्षतिरिति सूचितम् । न च "परेश्च" इतिसूत्रस्थभाष्यरीत्या एभ्यः क्विबेव नास्तीति कथमेतदिति वाच्यम् । तस्य भाष्यस्य विशेषविषयत्वात् । तदेवाह—*णिलोपस्येति* । एवञ्चाण्यन्ते एव तदभावो न तु ण्यन्त इति भावः । *इत्यन्यत्र विस्तर इति* । यथा "स्वरितो वा" इतिसूत्रे कैयटेनोक्तं 'मधुश्चुतमाचष्टे मधुगितीष्यते' इति । एतच्च संयोगादिलोप एव सच्छते । अत्र हि पूर्वत्रासिद्धे न स्थानिवदित्यस्य "तस्य दोष" इतिवचनेन निवारणे णिलोपस्य स्थानिवत्त्वात्संयोगादिलोपोदुर्लभः । सकारोच्चारणं तु संयोगान्तलोपेऽपि सकारस्य रुत्वविसर्गयोश्चरितार्थम् । परन्तु "क्वौ लुप्तम्" इति वचनसत्त्वे तेन स्थानिवत्त्वनिषेधे सति सिध्यति । एतदभिप्रायेणोक्तं—"क्वौ लुप्तम्" इति तु न

---

(१) *सपादसप्ताध्ययीस्थकार्येति* । अत्र सपादसप्ताध्यायीशब्दो षत्वशास्त्रपूर्वः यः सूत्रसमुदायो [illegible] तत्परः । तथा सति तत्स्थकार्यशब्देन संयोगान्तलोपस्य ग्रहण सिद्धं भवति । यथा श्रुते तु [illegible] सिद्धेरितिबोध्यम् ।

(२) ननु ण्यन्तस्य तक्ष्यादेः क्विपि झल्परसंयोगादिलोपमाशंक्य "काष्ठशगेव नास्ति कुतः काष्ठशक्स्थाता" इति परेश्च घाङ्कयोरिति सूत्रस्थभाष्यविरोधः । तेन भाष्येण तथा विधेभ्यः क्विपो न विधानमुक्तम् अत आह-*णिलोपस्येति* । णिजन्ते णिलोपस्य स्थानिवत्त्वेन संयोगादि लोपाप्राप्त्या झल्परसंयोगादिलोपमाशङ्क्य प्रवृत्तस्य भाष्यस्य णिजन्तविषये एवाभ्युपेयत्वमिति भावः ।

ति । 'विपचूस्' इत्यत्रस्थायाङ्कुत्वस्यासिद्धत्वात्तदभावे 'स्कोः' इत्यस्य प्राप्तेः संयोगान्तलोप इति भावः । दिधगिति । "दादेः" (पा०सू० ८।२।३२) इति घः । "एकाचः" (पा०सू०८।२।३७) इति भष्भावः । विद्वानिति । विदेः शतुर्वसावदादित्वाच्छपो लुकि शतुर्ङित्वाद् गुणाभावे उगित्वान्नुमि 'सान्त' (पा०सू०६।४।१०) इति दीर्घे संयोगान्तलोपे तस्यासिद्धत्वान्नलोपो न ।

वसोः (पा०सू०६।४।१३१) । 'प्रत्ययग्रहणे तदन्तग्रहणम्' भस्येत्यधिकारस्तदाह—वस्वन्तस्येत्यादि । (१)न च विदेः शतुर्वसोरेकानुबन्धकत्वात्तस्यैवात्र ग्रहणं स्यान्न लिडादेशक्वसोरिति वाच्यम्, वसुसादेशेन तस्यापि द्व्यनुबन्धकत्वात्, इति भाष्ये स्पष्टम् । विदुष इति । (२)सम्प्रसारणपूर्वत्वस्य 'षत्वतुकोः' इत्यसिद्धत्वं न । पदान्तपदाद्योरेकादेशस्यैव तेनासिद्धत्वात् ।

---

सार्वत्रिकम् । न तु तद्वचनमेव नास्तीति । अधिकमन्यत्र स्पष्टम् ।
*तदभावे इति* । ककाराभाव इत्यर्थः ।

*वसुसादेश इति* । न चैवमपि "वसु स्तम्भु" इतिधातोरेवैकानुबन्धकत्वाद्ग्रहणं स्यादिति वाच्यम् । सामान्यग्रहणार्थेन वसुसादेशस्य सकारेणैव "वामदेवाद् ड्यड्ड्यौ" इतिसूत्रज्ञापितपरिभाषाया इहाप्रवृत्तेः । किञ्च शत्रादेशवसोः स्थानिवद्भावेनैकानुबन्धत्वलाभे वस्वादेशे उकारोच्चारणन्तदनुबन्धकपरिभाषाया अप्रवृत्यर्थमिति क्वसोर्ग्रहणस्य सिद्धिः । धातोरपि तर्हि ग्रहणं स्यादिति चेत् । वसुसादेशे सकारोच्चारणेन द्व्यनुबन्धयोर्ग्रहणमित्याशयात् । *पदान्तपदाद्योरेकादेशस्येति* । तदुक्तम्भाष्ये । 'शकहूषु वृक्षेच्छत्रम अपचेच्छत्रम्' इत्यादावसिद्धत्वमाशङ्क्य 'सम्प्रसारणङीट्सु सिद्ध एकादेशः । कुतः । पदान्तपदाद्योरेकादेशस्यासिद्धत्ववचनात्' । अत्र कैयटः । 'पदस्येति वर्त्तते । अन्तादिग्रहणञ्च

---

(१) नचैकानुबन्धग्रहणे द्व्यनुबन्धकस्याग्रहणमिति परिभाषया वसोः संप्रसारणमिति सूत्रे वसुग्रहणेन विदः शतुर्वसोरेव ग्रहणं स्यात्, न लिडादेशक्वसोः, । तथासति 'सेदुषः' इत्यादौ संप्रसारणं न स्यादित्यत आह—*नचेत्यादि* ।

परिहरति—*वसुसादेशेनेति* । वसोरुकारानुबन्धकरणस्य क्वसुसामान्यग्रहणार्थत्वाददोष इति बोध्यम् । तत्र तदकरणे उगित्वं तु स्थानिवद्भावेनापि सिद्धम् ।

(२) ननु विदुषः इत्यत्र संप्रसारणे 'संप्रसारणाच्च' इति पूर्वरूपे तत्र षत्वे कर्तव्ये षत्वतुकोरसिद्ध इत्येकादेशस्यासिद्धत्वादकारव्यवधाने इणः परत्वाभावात् षत्वं न स्यादित्याशंकां तत्प्रतीकमादाय परिहरन्नाह—*संप्रसारणपूर्वत्वस्येति* । बहिर्भूतविभक्तिनिमित्तकसंप्रसारणनिमित्तकं तथा बहिरङ्गासिद्धत्वं तु न नाज नन्तर्येति निषेधादिति भावः ।

सेदिवानिति। षदॢधातोः 'भाषायां सद' (पा०सू०३।२।१०८) इति लिटः क्वसौ द्वित्वे 'अत एक' (पा०सू०६।४।१२०) इत्येत्वाभ्यासलोपयोः "वस्वेकाजात्" (पा०सू०७।६।७) इतीट्। कृतेति। परे तु पदावधिकेऽन्वाख्याने सेद्वस् आसिति स्थिते इट्सम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात्पूर्वं संप्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेति 'सेदुषः' इत्यादिसिद्धिरित्यकृतव्यूहपरिभाषा निष्फला। लक्ष्यानुरोधादत्र पदावधिकमे-

पूर्वसूत्रादनुवर्त्तते तेन पदादिपदान्तयोरेकादेशो ऽसिद्धो भवतीत्यर्थो लभ्यत' इति। अत्र "धात्वादेः" इत्यत आदिग्रहणम् "पदान्ताद्वा" इत्यतोऽन्त ग्रहणमनुवर्त्तत इति बोध्यम्।

*वस्वेकाजादितीडिति*। नियमशास्त्राणां विधिमुखेन प्रवृत्तिरितिसिद्धान्ताभिप्रायेणेदम्। मूलन्दूषयन् स्वसिद्धान्तमाह—*परे तु पदावधिकेऽन्वाख्यान इति*। पदसंज्ञाप्रयोजकविभक्तिपर्यन्ताविभागेन प्रकृतिप्रत्यययोः स्थापनङ्कृत्वाऽन्वाख्यान इत्यर्थः। *प्रतिपदविधित्वेनेति*। न च "वस्वेका" इतिसूत्रेऽपि वसोरित्यस्योच्चारणात्प्रतिपदविधित्वं समिति वाच्यम्। "वस्वेका" इतिसूत्रजन्यवाक्यार्थबोधस्य एकाजाद्यर्थापेक्षत्वेन तदपेक्षया वसोरितिसूत्रजन्यवाक्यार्थबोधस्य पूर्वं सम्भवात्।

वस्तुतस्तु प्रतिपदेत्यत्र पदशब्दो न शक्तपरः। किन्तु पदसंज्ञायोग्यपरः। एवञ्च पदसंज्ञाप्रयोजकविभक्तिप्रकृतिबोधकशब्दविशेषमुच्चार्य तदुद्देशेन विहितत्वम्प्रातिपदविधित्वम्। यथा 'स्वामृपि' इत्यत्र नित्यात्पराद्दपि नुमः प्राक् प्रतिपदोक्तत्वेन "अप्तृन्" इति दीर्घो भवति। न च 'सेदुषः' 'पपुषः' इत्यादौ विभक्तौ न प्रकृतिभागस्य पदसंज्ञा भसंज्ञया बाधादिति वाच्यम्। तथात्वेऽपि प्रकृतेः पदत्वयोग्यताऽक्षतैव। योग्यताप्रयोजकत्वस्यैव विवक्षितत्वात्। एवञ्च वस्वेकाजादितिसूत्रस्य वसोः परः वलाद्यार्द्धधातुकस्येड्विधायकत्वन्न तु विभक्तिप्रकृतिबोधकशब्दविशेषोद्देश्यकविधित्वमिति नैतस्यैतादृशप्रातिपदविधित्वम्। वसोरितिसूत्रस्थवसुशब्दस्तु आत्मान्तस्य संज्ञेति तादृशविभक्तिप्रकृतिबोधकत्वमस्त्येवेति प्रतिपदविधित्वेन सम्प्रसारणस्य पूर्वम्प्रवृत्तिर्युक्तैव। न च पूर्वं सम्प्रसारणेऽपि जातस्य संम्प्रसारणस्यासिद्धत्वादिट् स्यादिति वाच्यम्। तस्याः परिभाषाया अनित्यतया लक्ष्यानुरोधेनाप्रवृत्तिस्वीकारेऽपि लक्ष्यसिद्धिसम्भवात्। *निष्फलेति*। नन्वकृतव्यूहपरिभाषाया न कृतो व्यूहो निमित्तविनाशेपि कार्यस्थितिरूपो यैरित्यर्थिकाया अस्वीकारे 'तस्थौ' इ-

वान्वाख्यानमित्याहुः ।

साहचर्यादिति । न च महत्यतेः क्विपि महतोऽपि धातुत्वसं-
भव इति वाक्यम् । औपदेशिकधातुत्वासम्भवेन तत्साहचर्येणौपदे-
शिकधातुभिन्नसान्तसंयोगस्य ग्रहणमित्याशयात् । सुहिंनिति
नान्तलक्षणदीर्घस्तु संयोगान्तलोपस्यासिद्धत्वान्न । हिंसीत्यस्येदि-
त्त्वात् "अनिदिताम्" (पा०सू०६।४।२४) इति नलोपो न । ध्वदि-
ति । स्रंसु ध्वंसु अवस्रंसने, क्विप् । अनिदित्त्वान्नलोपः । 'वसु' (पा०
सू०८।२।७२) इति दत्वम् ।

विवक्षिते इति । भाष्ये "असुङ्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं
बहिरङ्गलक्षणत्वात्" इत्युक्तेरिति भावः । (१)वस्तुतो वचनमेव न्या-
यः । विवक्षितसप्तम्यामपि विभक्तिबुद्धिनिमित्तकत्वेन बहिरङ्गत्वात्ततः
पूर्वं "परमपुमान्" इत्यादौ स्वरप्रवृत्तौ दोषात् ।

---

त्यादौ पूर्वप्रवृत्तष्टुत्वस्यानवृत्तौ रूपासिद्धिरिति चेन्न । "स्तौतिस्तो-
ति" इत्यादिनिर्देशेन सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्ये विषये त्रैपादि-
कस्य पूर्वमप्रवृत्तिरिति ध्वननात् । ननु पदावधिकेऽन्वाख्याने यद्यपि प-
रिभाषां विनापि सिध्यति तथापि क्रमेणान्वाख्यानपक्षेऽकृतेतिपरिभा-
षा स्वीकार्यैवेत्यत आह-*लक्ष्यानुरोधादिति* ।

*औपदेशिकेति* । महत इत्यादिः । *भिन्नसान्तसंयोग इति*
औपदेशिकधातुसम्बन्धिभिन्नो यः सान्तसंयोग इत्यर्थः । 'विवक्षित' इत्य-
स्य यथा लाभस्तं प्रकारं दर्शयति-*भाष्ये इति* । *स्वरसिद्ध्यर्थमिति*
परमपुमानित्यत्र परत्वादेवं सति पूर्वमसुङि कृते समासान्तोदात्तत्वम-
वदसुङ एव यथा स्यादित्येवमर्थमित्यर्थः । यदि "सर्वनामस्थाने" इति
विषयसप्तमी न स्यात्तदाऽन्तरङ्गत्वादादौ पुंशब्दोकारस्योदात्तत्वे स-
रस्य स्रंसनधर्मणो हलः स्थाने जायमानस्यादेशस्याऽऽन्तरतम्यादनुदात्त-
त्वम्प्रसज्येत । न चासुङि कृते उकारस्यान्तत्वं गतमित्यसुङः पुनः स्व-
स्यादिति वाच्यम् । अन्तरङ्गे स्वरे कर्त्तव्ये बहिरङ्गस्यासुङोऽसिद्धत्वात् ।

*इति भाव इति* । यदुपदेशिवद्भावेन साध्यन्तद्विषयसप्तम्यापि सा-
धयितव्यमिति भावः । *वचनमेव* । असुङ्युपदेशिवद्वचनमिति व-
मित्यर्थः । *ततः पूर्वम्* । विभक्तिबुद्धिनिमित्तत्वेन बहिरङ्गादसुङः पूर्व-
मित्यर्थः । *स्वरप्रवृत्तौ* । समासान्तोदात्तत्वप्रवृत्तौ । *दोषात्* । प-

---

(१) सर्वनामस्थाने इति विषयसप्तम्यां तु तद्वचनं न कर्तव्यम् । अथवा तत्रैव वा आरम्भ-
णीयं तत् इति मूलकारस्याशयः । तमाशयं प्रकटयति--*वस्तुत इति* ।

बहुपुंसीति। विभक्तौ लिङ्गविशिष्टाग्रहणान्नुमुड्। (१)विभक्तिविवक्षाया लिङ्गकार्योत्तरमेव सत्त्वेन न ङीपः प्रागनुमुडिति भावः। पूत इति। पातेरिति पाठान्तरम्। 'स्त्रियाम्' (पा०सू०४।१।३) इति सूत्रे भाष्ये तु 'सूतेः सस्य पः ह्रस्वः म्सुन्प्रत्यय' इत्युक्तम्। वस्तुत उच्चारणार्थानामपीत्सञ्ज्ञावश्यकत्वादियमुक्तिर्निष्फला। पुमानिति। 'सान्त' इति दीर्घः।

उशनेति। वशेः कनसि 'ग्रहिज्या'(पा०सू०६।१।१६)इति सम्प्रसारणम्। अस्य संबुद्धाविति। एतच्च वृत्तौ वाचनिकं पठितं वृत्तिधातौ। माधवस्तु—

"सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्॥

इति श्लोकवार्त्तिकमित्याह। भाष्यानुक्तत्वादिदमप्रमाणमेवेति प्रामाणिकाः। उशना शुक्रः। अनेहा—कालः। 'नञिहन एहच' (उ०सू०६७३) इत्यसुन् हन एहादेशश्च। सुव इति। अधातोरित्यस्य धात्ववयवभिन्नासन्तस्येत्यर्थ इति भावः। अन्यथा समुदायस्य धातुभिन्नत्वाद्दीर्घः स्यादेवेति बोद्धव्यम्।

अदस औ (पा०सू०७।२।१०७) अदस इति षष्ठी 'तदोः सः' (पा०सू०७।२।१०६) इत्यतः साविति वर्त्तते। औत्वं सदाद्यत्वाप-

---

पुमानित्यत्र पूर्वसमासान्तोदात्तत्वप्रवृत्तौ मकाराकारस्योदात्तस्याश्रवणप्रसङ्गात्। *स्त्रियामिति सूत्रभाष्ये त्विति*। एतेन डुम्सुन्प्रत्ययेनास्य साधनम्भाष्यविरुद्धमिति सूचितम्। *निष्फलेति। उच्चारणार्थत्वस्वीकारेऽपि लाघवाभावात्।

ननु सुव इत्यत्र मूले यथोक्तं धातुभिन्नस्यासन्तस्येति तथा व्याख्याने धातुभिन्नस्य समुदायस्यासन्तत्वाद्दीर्घः स्यादेवेत्यत आह—*अधातोरित्यस्येति*। एवं सत्यधातोरित्यत्र धातुपदं धात्ववयवलाक्षणिकन्तच्च नञा समस्तमसो विशेषणमन्तपदेन चासमर्थसमासः सौत्रत्वाद् द्रष्टव्यः।

*षष्ठीति*। एवञ्चालोन्त्यपरिभाषयोपस्थितस्येदं विशेषणमित्यदसोऽवयवस्यान्त्यस्यौकारः स्यात् सुलोपश्चेतिसूत्रार्थः। एवं सति येन नाप्राप्तिन्यायेनेदं त्यदादीनाम इत्यस्य बाधकं तदाह—*औत्वन्त्यदाद्यत्वा-

---

(१) ननु विषयसप्तम्यां ङीपः प्रागेवानुमुड् स्यादित्यत आह—*विभक्तिविवक्षाया इति*।

वादः । ननु सोर्डौ इत्येवास्तु इति चेन्न । असावित्यत्र टिलोपे इते नित्यत्वात्सत्वं बाधित्वा त्यदाद्यत्वे ऽसावित्यसिद्धेः । असुक इति । अमुक इत्यादौ त्वव्युत्पन्नोऽदःशब्दपर्यायो ऽमुकशब्द इत्याहुः ।

एत ईत् (पा०सू०८।२।८१) बहुवचनशब्दो यौगिक इत्याह-बह्वर्थेति । तेन 'अमी' इति सिद्धम् । पश्चादुत्वेति । उत्वेत्युपलक्षणमीत्वस्यापि ।

ननु मुत्वस्यासिद्धत्वात्कथं नाभाव इत्यत आह-नमुन इति । कर्त्तव्ये कृते चेति । एवञ्च ने इति विषयसप्तमीति भावः । भाष्ये तु ने यत्कार्यं तत्रासिद्धत्वं नेत्यर्थेनैव नाभावोऽप्यासिद्ध

---

पवाद इति* । *नन्वदस इति* । पञ्चम्येवास्तु । "तदोः स" इतिसूत्रादनुवर्त्तमानस्य सावित्यस्य अदसः पञ्चम्या षष्ठ्यन्तत्वकल्पनया सोरेव डौ आदेशो विधेयः । विभक्तिविपरिणामक्लेशपरिहारानुरोधेन तु "सोर्डौ" इत्येवास्त्वित्युक्तमित्याशयेन शङ्कते *ननु सोरिति* । *टिलोप इति* नित्यत्वादित्यादिः । डित्त्वसामर्थ्यादित्यप्यस्यादिः । *नित्यत्वात्सत्वम्बाधित्वेति* । न च "त्यदादीनाम्" इति सङ्ग्राहकशब्दाददस इत्यस्य पार्थक्येन कल्पनायामदसो दः स इत्यंशो न चरितार्थ इति तत्सामर्थ्यादिदमेव वाक्यन्त्यदाद्यत्वस्य बाधकं भविष्यतीति वाच्यम् । साकच्केऽसचारितार्थ्यात् । ननु डौआदेशः "सत्यपि सम्भवे बाधनम् भवति" तिन्यायेन त्यदाद्यत्वापवाद इति प्रथमं डौआदेशे कृते परत्वाच्छब्दान्तरात् प्राप्त्याऽनित्यं टिलोपं बाधित्वा सत्वे पुनः प्रसङ्गविज्ञानन्यायेन टिलोपेऽसावि ति सिद्धम । न च सकृद्गतिन्यायाङ्गीकारे कृताकृतप्रसङ्गित्वमात्रेण नित्यत्वाट्टिलोपप्रवृत्तेः स्वीकारेऽपि वा दोष एवेति वाच्यम् । प्रकृतसूत्रे "अदस" इति योगं विभज्य "तदोः स" इत्यनुवर्त्यादस एव दकारस्य सत्वं नान्यस्य दकारस्येतिनियमेनान्त्यग्रहणप्रत्याख्यानरीत्याऽधुनापि विशेषकस्यादस इत्यस्यारम्भसामर्थ्यात्त्यदाद्यत्वबाधकतयेष्टसिद्धेरिति चेन्न । अनन्त्यग्रहणप्रत्याख्यानरीत्या दोषाभावेऽपि योगविभागादिक्लेशेन प्रत्याख्याने गौरवमित्यनन्त्यग्रहणमन्त्यव्यावर्त्तकमावश्यकमिति सूत्रकारमतं तन्मते टिलोपे पूर्वोक्तरीत्या पूर्वम्प्रवृत्तेऽन्त्यत्वात्सत्वाप्राप्तौ रूपासिद्धिप्रसङ्ग इत्याशयात्

"एत ईत्" इतिसूत्रे "बहुवचन" इत्यस्य बहुवचने परे इत्यर्थकरणे पूर्वपरयोरेकादेशे दात्परैकारस्य बहुवचनपरत्वासंभवादसंगतिः स्यादत आह-*बहुवचनशब्द इति* । एवञ्च मूले विभक्तिकार्यम्प्रागित्यस्य प्रत्यय

इति व्याख्यातम् । मु इति समाहारद्वन्द्वः कृते चेत्युक्तेर्मुत्वे 'सुपि च' (पा०सू०७।३।१०२) इति दीर्घो न । अमीभिरिति । नेदमदसोः" (पा०सू०७।१।११) इत्यैस्न ।

इति हलन्ताः पुंल्लिङ्गाः ॥

नहो धः (पा०सू०८।२।३४)। "झलो झलि" (पा०सू०८।२।२६) इत्यतो झलीति, पदस्येति "स्कोः" (पा०सू०८।२।२९) इत्यतोऽन्त इति चानुवर्त्तते । झलि परे पदान्ते विद्यमानस्येत्यर्थः । 'अलोऽन्त्यस्य (पा०सू० १।१।५२) इत्यतल्लब्धं-हस्येति । उपपूर्वाण्णहबन्धने इत्यतः क्विप् । "नहिवृति (पा०सू०६।३।१०६) इति पूर्वपदस्य दीर्घः । सोर्हल्ङ्यादिलोपे (१)धत्वजश्त्वचर्त्वादि ।

दलोपषत्वे इति । पूर्वपदान्तस्य लोपो, धातोः सस्य षत्वम् । "आदेशप्रत्यययोः" (पा०सू०८।३।६७) इति तु न षत्वं, पदादादिरिति पक्षे 'सात्पदाद्योः' (पा०सू०८।३।१११) इति निषेधात् । हस्य घ इति कैयटादिमते षत्वस्येव ढत्वस्यापि कुत्वेन बाधादिति भावः । 'ञ्णिगन्चु' इति निर्देशात्कुत्वस्य जश्त्वेनासिद्धत्वं स्वरीत्या तु ढडगका इति बोद्ध्यम् ।

---

विन्यायेन पूर्वपरान्वयित्वं द्रष्टव्यम् ।

एकवचनोपपत्तये आह-*मु इतिसमाहार इति* । *ऐस्नेति* । तन्तु "बहुवचने झल्येत्" इत्येत्वे एत इदितीकार इति शेषः ॥

इति हलन्ताः पुंल्लिङ्गाः ॥

*पदान्ते विद्यमानस्येति* । न च हस्यैव पदान्तत्वम् तु तस्य पदान्ते विद्यमानत्वमिति वाच्यम् । पदचरमावयवस्यैव व्यपदेशिवद्भावेन पदान्ते विद्यमानत्वसम्भवात् । *पदादादिरिति पक्ष इति* । एवञ्च यन्मूलकृता षत्वांशे निपातनमाश्रितं तत्सिद्धान्तरीत्या । *कैयटादिमत इति* । यथा वीप्सागर्भबहुव्रीह्याश्रयणात् कुत्वं षत्वस्य बाधकं तथा ढत्वस्यापि

---

(१) नहोधः इति सूत्रे 'नहोद्धः' 'नदत्वम्' इति वा न्यासान्तरं न कृतम् । तथासति 'नद्धम्' इत्र रदाभ्यामिति नत्वप्रसङ्गात् । झषस्तथोरिति धत्वानापत्तेश्च । एवञ्च सन्निपातपरिभाषया नत्ववारणं ... सुशकमित्ययुक्तं वेदितव्यम् । नचैवमपि झषस्तथोर्धत्वे सान्निपातपरिभाषया जश्त्वनत्वानापत्तिरिति वाच्यम् । 'पास्पर्धि' इत्यादिप्रामाणिकप्रयोगानुरोधेन तस्या जश्त्वविषयेऽनित्यत्वादितिभावः । ... चित् ।

द्यौरिति । "दिव औत्" (पा०सू०७।१।८४) इत्यौत्वं यण् । चतस्र इति । परत्वादामं बाधित्वा चतस्रादेशे सकृद्गतिन्यायान्नुम्। राज्ञेति स्थानिवत्सूत्रे भाष्ये । चतसृणामिति । 'नतिसृ' (पा० सू०६।४।४) इति दीर्घनिषेधः । सर्वाचवदिति सर्वाशब्दवदित्यर्थः । अत एव 'सर्वनाम्नो वृत्तिमात्रे' इति न पुंवत्त्वम्, शब्दपरस्य कदापि सर्वनामत्वाभावादिति भावः ।

यः सौ (पा०सू०७।२।११०) । पुंस्यया बाधात्, क्लीबे सोर्लुका लोपात्, स्त्रियामिदम् । वागिति । वचेः 'क्विब्वचि' इत्यादिना क्विप् दीर्घोऽसंप्रसारणञ्च ।

अपोभि (पा०सू० ७।४।४८) । "अच उपसर्गात्तः" (पा०सू० ७।४।४७) इत्यतस्त इत्यनुवर्त्तते । अबिति न प्रत्ययो व्याख्यानात्(१) । दिगिति । दिश् अतिसर्जने क्विप् षडगकाः प्राग्वत् । त्विष गतौ, अस्मात् क्विप् । जश्त्वचर्त्वे । जुषीप्रीतीत्यतः क्विप् । सहस्य सभावे सजूः । अमूभिरिति । अदन्तत्वाभावादेत्वाभावेन 'एत ईत्' (पा०सू०८।२।८१) इत्यस्याभावे मूत्वमेव ॥

इति हलन्ताः स्त्रीलिङ्गाः ॥

---

बाधकमिति भावः ।

*व्याख्यानादिति* । "अद्भिः संस्कृतम्" इतिनिर्देशस्य दर्शनमूलकादित्यर्थः । यथा "अणो द्व्यचः" इत्यत्राण इत्युपात्तं तादृशश्च शब्दः प्रयोगे नास्तीति द्वितीयस्यौपदेशिकस्य ग्रहणन्तथा सानुबन्धकस्य ग्रहणं चेत् प्रकृतेऽपि विवक्षितं स्यात्तदपि निर्गतानुबन्धकस्य पकारोपलक्षिताकारस्योद्देश्यता स्यादिति प्रकृते पकारविशिष्टस्य प्रयोगे उपलम्भादद्भिरिति सूत्रे निर्देशो नोपपद्येतेति न प्रत्ययग्रहणम् । *सजूरिति* । षत्वस्यासिद्धत्वाद्रुत्वम् र्वोरितिदीर्घः । *मूत्वमेवेति* । इदन्न भिस्येव किन्तु यद्विभक्तौ पुस्येत्वं तस्यां सर्वत्र ॥

इति हलन्ताः स्त्रीलिङ्गाः ॥

---

(१) केचित्तु अद्भिः संस्कृतमित्यादिदर्शनमूलकव्याख्यानानुधावनं विफलमेव । तथाहि—निरनुबन्धकप्रातिपदिकस्य लौकिकप्रयोगे उपलंभात् नात्र शास्त्रीयस्य सानुबन्धकस्याश्रयणम् । उपात्तरूपस्य लौकिकप्रयोगानुपलब्ध्यैव तदाश्रयणात् । अतो नात्र प्रत्ययग्रहणप्रसक्तिरिति व्याख्यानपर्यन्तानुधावनं निष्प्रयोजकमित्याहुः ।

दत्वमिति । "वसुस्रंसु" (पा०सू०८।२।७२) इत्यस्य पदा-
धिकारस्थत्वात्तदन्तेऽपि दत्वम् । एवमाङ्गत्वादामपि । पूर्वपदस्यैवेति ।
प्रत्ययलक्षणेनेति भावः । अत एव राजपुरुषादौ नलोपादिसिद्धिः ।
उत्तरपदत्वे चेति । उत्तरशब्देनोत्तरपदं लक्ष्यते उत्तरपदशब्दश्च
समासचरमावयवे रूढः । तेन तस्य पदत्वे तत्प्रयुक्तकार्ये कर्त्तव्ये लुम
ता लुप्ते प्रत्ययलक्षणं न । पदादिविधौ त्वयं निषेधो नेत्यर्थः । तेन
'परमवाचा' इत्यादौ न कुत्वं 'दधिसेचौ' इत्यादौ 'सात्पदाद्योः' इति
षत्वनिषेधश्च 'निरुपपदादेव क्विचि षष्ठीसमासोऽत्र सोपपदाद्क्विचो
ऽनभिधानमिति कैयटः । सेचयतेः क्विबित्यन्ये । पदादिविधिश्च
प्रतिपदोक्तत्वात्सात्पदाद्योरित्येव । तेन 'परमबुधौ' इत्यादौ भष्भावो
न । "उत्तरपदादिः, कर्णो वर्णलक्षणात्" इत्यादौ तूत्तरपदशब्दस्य
समासचरमावयवमात्रे रूढेर्न दोषः । अयश्च निषेध उत्तरपदस्य का-
र्यित्व एवेति ङमुट्सूत्रे उक्तम् । बहुच्पूर्वके 'बहुवाचौ' 'बहुसेचौ"
इत्यादावपि न दोषः । बहुच्पूर्वस्य च पदादिविधावेव प्रत्ययलक्षण-
मिति वचनान्तरात् । पूर्ववार्त्तिकमपि उत्तरपदत्वे च पदादिविधावि-
त्येवमेव पठितम् । एतत्प्रत्याख्यानप्रकारस्तु गुरुतर इति न युक्त इति

---

विमलदिवौ इत्यत्रोत्वशङ्काव्यावृत्तये मूले आह—*अन्तर्वर्त्तिनीमित्या-
दि* । *अत एव । पूर्वपदस्य पदत्वादेव । *दधिसेचाविति* । निरुपप-
दात्सिचेर्क्विचि सुबुत्पत्त्यनन्तरं समास इति पक्षे इदम् । *भष्भाव इति* ।
तस्य वस्तुतः पदादेः कार्यविधायकत्वेऽपि पदादिशब्दानुवादेन विधाय-
कत्वाभाव इति भावः । नन्वेवं 'शुक्लकर्णः' 'शङ्कुकर्ण' इत्यादौ "कर्णो वर्ण-
लक्षणात्" इत्यनेन वर्णलक्षणवाचकात्परो यः कर्णशब्द उत्तरपदभूतस्तस्य
आद्युदात्तो भवतीत्यर्थकेनाद्युदात्तत्वन्न प्राप्नोतीत्यत आह-*उत्तरपदा
दिति । एवञ्च परिभाषायामुत्तरपदशब्दः केवलयौगिक एव विवक्षित इ-
ति भावः । *उत्तरपदस्य कार्यित्व एवेति* । तत्फलम् 'माषकुम्भवापेन'
इत्यत्र "पदव्यवायेपि" इतिसूत्रेण निषेधसिद्धिः । अधिकमन्यत्रोक्तम् ।
नन्वेवं बहुच्पूर्वके बहुवाचौ इत्यादौ दोष एवेत्यत आह-*बहुच्पूर्व-
स्येति* । *इत्येवमेव पठितमिति* । एवञ्चैतादृशनियमेन यल्लब्धं तदेव
"उत्तरपदत्वे चापदादिविधौ" इत्यनेन प्रदर्शितम् । नन्वेतावता वार्त्ति-
कारम्भपक्ष एव लब्धो न प्रत्याख्यानपक्ष इत्यत आह-*एतत्प्रत्याख्याने

भाष्ये ध्वनितम्, प्रत्याख्यानोत्तरं पुनर्नञ्घटिततद्वचनपाठेनेति न प्र
लिखितः। उत्तरपदशब्देन मध्यमपदत्वानाक्रान्तोत्तरपदस्य ग्रहणं
व्याख्यानात्। तेन 'पूर्वदण्डिप्रियः' इत्यादाववान्तरतत्पुरुषोत्तरपदे
ऽपि नलोपादिसिद्धिः। क्वादेशो नेति। इदम्शब्दे "यः सौ"
(पा०सू०७।२।११०) इति च नेत्यपि बोध्यम्।

वक्तव्य इति। "द्वितीयाटौस्सु" (पा०सू०२।४।३४) इति अ-
त्र संबध्यते। अयञ्च सामर्थ्याल्लुका लुप्तेऽपि भवति। एनादेशोऽपि
एनमित्यादिसिद्ध्यर्थं वक्तव्यः येननाप्राप्तिन्यायेनैनतस्त्यदाद्यत्वाप-
वादत्वेन तत्र कृते त्यदाद्यत्वाप्राप्तेः। अत एव भाष्ये "नपुंसकैक-
वचने एनद्वक्तव्यःकुण्डमानय प्रक्षालयैनत्" इत्युक्तम्। अत्र नपुंस-
कैकवचने इत्युक्त्याऽन्यत्रैनो वक्तव्य इति स्पष्टमेवोक्तं वार्त्तिककृता

---

इति*। *गुरुतर इति*। स च शब्दरत्ने विवेचितः। *नञ्घटिततद्वच-
नपाठेनेति*। पदादिविधावेव प्रत्ययलक्षणन्न पदान्तविधाविति नियमा-
र्थेनोत्तरपदत्वे च पदादिविधावितिवचनेनेत्यर्थः। *नस इति*। प्रत्या-
ख्यानप्रकार इत्यर्थः। नन्वेवमपि पूर्वदण्डिप्रिय इत्यत्र त्रिपदे बहुव्रीहाववा-
न्तरतत्पुरुषे दण्डिशब्दस्योत्तरपदत्वात्प्रत्ययलक्षणप्रतिषेधे पदत्वाभा-
वान्नलोपो न स्यादत आह-*उत्तरपदशब्देनेति।

*व्याख्यानादिति*। वार्त्तिकप्रत्याख्यानपक्षेऽसर्वनामस्थाने यची-
त्यत्र सुबित्यनुवर्त्य यकारादावजादौ सर्वनामस्थाने पूर्वम्पदन्न यदि
चेत्तत्परकं सुबन्तमस्ति तदपि पदन्न इतिरीत्या व्याख्याने निर्दिष्टप-
रिभाषयाऽव्यवहितसुबन्तस्यैव पदत्वनिषेधो लभ्येत तदेकवाक्यतया
वार्त्तिकारम्भपक्षेऽपि तथैव युक्तमित्यभिप्रायकात्। एवञ्च तत्समास-
योजकैकार्थीभावप्रयोज्यसमासीयचरमपदाव्यवहितपूर्वत्वानाक्रान्तस्य पद-
त्वव्यपदेशे कर्त्तव्ये तस्य कार्यित्वे च प्रत्ययलक्षणप्रतिषेध इति बोध्यम्।
*अयञ्चेति* एनदादेशश्चेत्यर्थः। *सामर्थ्यादिति। द्वितीयापदोपस्था-
पिते अमि एनदित्येतद्वाक्यबोधितस्यादेशस्य विधानं प्रति याधिवि-
त्तत्वं द्वितीयैकवचनस्य तत्सामर्थ्यादित्यर्थः। *एनादेशोपीति*। सु-
सीति शेषः।

ननु सूत्रे एवैनत्कर्त्तव्यः, एनामिति तु त्यदाद्यत्वेन सिद्धमित्यत आह-
*येन नेति*। अत एव*। एनादेशस्यावश्यकत्वादेव। *अन्यत्रैनो वक्त-
व्य इतीति*। अन्यथा एनादेशस्य श्रवणमेव न स्यात्। ननु त्यदाद्य-
त्वस्यैनदादेशो यद्यपवादस्तदा भाष्ये यद्येनात्क्रियते एनो न वक्तव्यस्त-

सिद्धान्तिना । अपवादत्वमजानत एकदेशिनो "यद्येनत्" इत्यादिरु-क्तिर्यदिगर्भवाक्ये पूर्वपक्ष्युक्तित्वस्यैवौचित्यात् । भाष्यकृता तु फ-लवानात्रोत्तरमुक्तम् ।

सिद्धान्ती तु 'किमुच्यते नपुंसकैकवचने इति सर्वत्र एनदेव वक्तव्य' इत्येवंशब्दैः प्रत्याख्यानं कुर्यात् । अनयोरप्यादेशयोः 'एतद-स्रतसो:" इत्येतत्साहचर्येणोपसर्जने न प्रवृत्तिः 'त्यदाद्यत्वेन सिद्धम्' इति भाष्यसङ्गतेश्च । एनतमादायैनादेशप्रत्याख्यानपरं 'यद्येनत्क्रि-यते' इत्यादि भाष्यं त्वेकदेश्युक्तिरिति भाष्यप्रदीपोद्द्योते निरूपि-तम् । अन्वादेशविषयेदमेतदोः समासस्यानभिधानमेव । "यद्येन-त्क्रियते एनो न वक्तव्यः, कथमेनमित्यादि ? त्यदाद्यत्वेन सिद्धम् । यद्येवमेतच्छ्रितको न सिद्ध्यति, एनच्छ्रितक इति प्राप्नोति । यथा-लक्षणमप्रयुक्ते" इति भाष्यात् ।

---

द्यत्वेन सिद्धम्' इत्युक्तं तद्विरुध्येतेत्यत आह-*अपवादत्वमजानत इति* । तर्ह्यग्रे भाष्ये एनादेशस्यावश्यकत्वं कुतो नोक्तमत आह-*भा-ष्यकृतात्विति* । *अत्र* । एकदेश्युक्तौ । अत्र विशेषमाह—*अनयोरि-ति* । *एतदस्त्रतसोरिति* । ननु सूत्रान्तरसाहचर्याश्रयणं सूत्रान्तरस्य व्य-वस्थापकमित्येतत्सिद्धान्तविरुद्धमिति चेन्न । तस्मिन्सूत्रे "त्रतसोः" इत्यु-पादानेन तयोश्च सर्वनामत्व एव सम्भवनमित्युपसर्जने तेनसूत्रेणादेशाभाव एव किन्तु प्राधान्येन प्रसिद्धस्वीयसर्वार्थवाचकस्यैतच्छब्दस्य तस्मिन्सूत्रे स्थानित्वेन ग्रहणमित्यर्थाधिकारानुरोधेन प्रकृतसूत्रेऽपि सर्वनाम्न एवैत-च्छब्दस्य ग्रहणमित्येव साहचर्यपदेन विवक्षितमित्याशयात् ।

*न प्रवृत्तिरिति* । एतेनोपसर्जने एनदादेशस्य चारितार्थ्येन त्यदाद्य-त्वापवादत्वोक्तिर्विरुद्धेति दूषणस्य नावकाश इति सूचितम् । तत्रार्थे भा-ष्यमपि साधकमित्याशयेनाह-*त्यदाद्यत्वेनेति* । *एनतमादायेति* । इत आरभ्य पूर्वोक्तमेवार्थं तस्यैव दृढीकरणाय निरूपितमित्यन्तेन पुनराह । यद्यप्येनदस्त्यदाद्यत्वापवादत्वेनेत्यत्रैनदो दान्तत्वमुक्तमिह तु तान्तमुक्त-मिति विरुद्धमाभाति । तथापि समासे दान्तेपि चर्त्वे सति रूपे न वि-शेष इत्याशयेन तान्तोल्लेखः ।

ननु यद्युपसर्जनेऽस्यादेशस्याप्रवृत्तिस्तदा 'यद्येवमेनश्रितको न सि-ध्यति एनच्छ्रितक' इति प्राप्नोतीतिभाष्यविरोधः, तत्रादेशोच्चारणन्तु स-र्वनाम्नीलुका लुप्तेपि भवतीतिपूर्वमुक्तन्तदभिप्रायेणेत्यत आह-*अन्वादे-

ब्रह्मणी इति। "न संयोगात्" (पा०सू०६।४।१३७) इति निषेधादल्लोपो न। रोस्सुपि अहर्भानीति। 'अहन्' (पा०सू०८।२।२८) इति रुत्वे ऽह्नो भातीति स्यादिति भावः। नलोपे प्राप्त इति। न च नलोपेऽकारस्य रौरेवाविशेषभावेनान्यतरेणैवोपपत्तावुभयविधानसामर्थ्यादेव लोपो नेति वाच्यम्, सम्बुद्धौ नलोपनिषेधेन 'अहर्गच्छ' इत्यादावुत्वाभावेन 'दीर्घाहो निदाघ' इत्यादावुत्वसम्पादनेन चारितार्थ्यात्। न च नकारोच्चारणसामर्थ्यलब्धेन नकारान्तानुकरणेन नान्तस्याऽहशब्दस्येति व्याख्यानान्नलोपो नेति वाच्यम्। दीर्घाहो निदाघेत्यादौ सम्बुद्धौ प्रवृत्त्या भ्यामादौ व्यावृत्त्या नकारस्य चारितार्थ्यात्तेन नलोपबाधे मानाभावादिति भावः।

आवर्त्येति। आवृत्तौ मानं च 'रूपरात्री'ति वार्त्तिकमेव। अन्यथा नलोपे ऽकारस्य रेफादेशेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव। भाष्यप्रामाण्याच्च तस्य सम्बुद्धावप्रवृत्तिः। तज्ज्ञापकसिद्धवचनकल्पनापेक्षया आवृत्तिर्लघीयसीति भावः। आवृत्तस्य पदान्तेऽहनिति नियम्यत इत्यर्थः। इदमसम्भवे एवापवादत्वमिति वार्त्तिकमतेऽहन्नित्यस्य नलोपोत्तरश्चारितार्थ्याभिमानेन। वस्तुतः "सत्यपि सम्भवे बाधनं भवति" इति भाष्यसिद्धान्तात् रुत्वरत्वे नलोपापवादभूते

---

शा इति*। *विशेषाभावेनेति*। नकारस्य रुत्वे सति यदुत्वम्भवति तस्याधुनाऽप्राप्तेः। *नकारोच्चारणसामर्थ्येनेति*। 'अह' इति वक्तव्ये विभक्तिलोपङ्कृत्वाऽकारोत्तरन्नकारे प्राप्तस्यापि लोपस्याकरणेनेत्यर्थः। *भ्यामादौ व्यावृत्त्येति*। नकारोच्चारणेन यत्र न नकारस्य श्रवणं तत्र रुत्वस्याप्रवृत्तिरितिकल्पनेनेत्यर्थः। पूर्वपाक्षिमते भ्यामि नलोपस्य सत्त्वे तत्र रुत्वव्यावृत्तिस्तन्मते स्यादिति भावः। *अन्यथा*। आवृत्त्यभावे ननु 'आगच्छाहो रूपन्दर्शयिष्यामः' 'आगच्छाहो रात्रिरेषा गता' इत्यादौ रुत्वकृतो विशेषः स्पष्ट एवेत्यत आह-*भाष्यप्रामाण्याच्चेति*। वार्त्तिकस्य ज्ञापकतापरं यद्भाष्यन्तत्प्रामाण्यादित्यर्थः।

ननु तद्भाष्यप्रामाण्यादत्र नलोपो नेत्येव कल्पनमास्त्वित्यत आह-*तज्ज्ञापकेति*। आवृत्तेन तेन सूत्रेण यथा नलोपाभावलाभस्तत्प्रकारमाह-*आवृत्तस्येति*। मूलकारोल्लिखिताशङ्कासमाधानविषये विशेषमाह-*इदमिति*। *नलोपापवाद एवेति*। येन नाप्राप्तन्यायेनेत्यर्थः

त्वं । निषेधविषयेऽपि प्राप्तिमात्रेण येननाप्राप्तिन्यायविषयसत्त्वान्निषे-
धेनापि तस्य बाध इत्यन्यत् । एतेन सम्बुद्धौ चारितार्थ्यमित्यपा-
स्तम् । ध्वनितश्चेदम् 'अपवादो रुर्नलोपं बाधिष्यते' इत्यर्थकभाष्ये-
ण । एतदग्रे नलोपे कृतेऽकारे सावकाशत्वशङ्का तत्समाधनादि वा-
क्यविकानुसारिणोरित्यलम् ।

तदन्तस्यापीति । पदाधिकारस्थत्वात् । ग्रहणवतेति निषेध-
स्तु प्रत्ययविधिविषय इति "असमासे निष्कादिभ्यः" (पा० सू० ५।१।
२०) इति सूत्रे भाष्यकैयटयोः स्पष्टमिति भावः । तस्यासिद्धत्वा
दिति । अकृतव्यूहपरिभाषया दीर्घाप्रवृत्तिः स्यादित्यभिमानेनेदम् ।
दीर्घस्तु परत्वाद्धल्ङ्यादिलोपात्पूर्वमेव बोध्यः । सम्बुद्धौ त्विति ।
रुपोऽत्र हल्ङ्यादिलोपादसम्बुद्धावित्युक्तेर्दीर्घाभावे रुत्वे "हशि च"
इत्युत्वे आद्गुणः । स्रग्वीणीति । इन्ग्रहणेऽनर्थकस्यापि ग्रहणा-
द्दीर्घ इति भावः । बहुवृत्रहाणीति । अत्र यद्वक्तव्यन्तदुक्तम् ।

पदान्ते कुत्वमिति । क्विन्प्रत्ययस्येत्यसिद्धत्वाद् "व्रश्च"(पा०
८।२।३६) इति षत्वे कुत्वमित्यर्थः । षत्वन्तु सृष्टमित्यादौ साव-
काशमिति भावः । भाष्यप्रयोगादिति । अनेन भाष्यप्रयोगेणा-
नव्ययपूर्वपदे कुत्वाभावो बोध्यते तेनासृगित्यत्र न दोषः । कु-
त्वापवाद इति । सृजियज्योः पूर्वोत्तरसाहचर्येण पदान्तेऽपि विशि-
ष्य षत्वबाधनेन तत्सामर्थ्यात्कुत्वबाध इति भावः । अत एव "उ-

---

दि । ननु सम्बुद्धौ नलोपाप्राप्तिविषये तयोश्चारितार्थ्यात्कथं येन नाप्राप्ति-
न्यायप्रवृत्तिरत आह—*निषेधविषय इति* । *ध्वनितश्चेदमिति* । येन
नाप्राप्तन्यायविषयत्वमित्यर्थः । *प्रत्ययविधिविषय इति* ज्ञापकसाजा-
त्यादित्यादिः । *तस्य* । रुत्वस्य । ननु यदि रुत्वरत्वयोरासिद्धत्वन्तदा
पूर्वं दीर्घ एव स्यादिति कथमेतदित्यत आह—*अकृतेति* । ननु 'ब-
हुवृत्रहाणि' इत्यत्रात्पूर्वत्वाभावात्कथं णत्वमत आह—*अत्र यदिति* ।
अत्पूर्वग्रहणं हस्थानिककवर्गाभाववद्धन्तेरुपलक्षणमित्यादि ।

सृज्धातुविषये षत्वस्य आपवादत्वात्कथमसिद्धत्वमतस्तस्य चारि-
तार्थ्यमाह—*षत्वन्त्विति* । भाष्यप्रयोगस्य विशेषविषयत्वमुपपाद-
यति—*अनेनेति* । *अनव्ययेति* । भाष्योक्तप्रयोगसाजात्यात् । ननु
'सृष्टम्' इत्यादौ झलि षत्वस्य सावकाशत्वमुक्तमिति कथङ्कुत्वापवाद-

पयट्क्षास्यति" इति काम्यच्सूत्रस्थो भाष्यप्रयोगः सक्कूच्छे । निपातनादेवेति । निपातनेन त्वनयोरपवादाप्रवृत्तिमात्रबोधनं, कुत्वन्तु स्वशास्त्रेणैव । एतेन निपातनादपदान्तेऽपि कुत्वापत्तिरिति निरस्तम् ।

अस्रुक्शब्दस्त्विवाति । इदमेव न्याय्यम् । ऊर्गिति । अं पुंलिङ्गोऽपि "नपुंसकस्य" (पा०सू०७।१।७२) इति सूत्रे बहु ऊर्ज् इति कैयटात् । नरजानामिति । 'बहूर्जि नुम्प्रतिषेध' इति वार्त्तिकरीत्येदम् । 'अचः परो यो झल् तदन्तस्य नुम्' इति तत्र त्याख्यातृभाष्यमते तु नुमोऽत्र प्राप्तिरेव नेति बोद्धव्यम् । न चैवं कु ण्डानीत्यसिद्धिः । 'इकोऽचि' (पा०सू०७।१।७३) इति सूत्रे ऽचः स वनामस्थाने इत्यनुवृत्त्या ऽनुवृत्तिसामर्थ्यादिक इत्येतत्साहचर्याच्च स

---

त्वमित आह-*सृजियज्योरिति* । *अत एव* । षत्वस्य पूर्वमप्रवृत्ति स्वीकारादेव । ननु स्रगृत्विक्शब्दयोर्निपातनेन कुत्वस्वीकारे निपात स्याच्यपि कुत्वसाधकत्वापत्तिरत आह-*निपातनेनेति* । *अनयोः* स्रगृत्विक्शब्दयोः । *इदमेवन्याय्यमिति* । षत्वप्राप्तिशङ्काप्येवं सति भवतीतिभावात् ।

ननु पूर्वोक्तरीत्याऽस्रुक्शब्दसाधनेऽव्ययपूर्वपदप्रकृतिस्वरो, अनुपर करीत्या साधने त्वन्तोदात्तत्वापत्तिरिति स्वरभेदापत्तिरिति चेन्न । यद्याद्युदात्तोऽयमिष्टस्तदा "उणादयो बहुलम्" इति बहुलवचनेन साध वेदे तु "बहुलं छन्दसि" इत्यस्त्येवेत्याशयात् । *वार्त्तिकरीत्येति* तस्मिन्बहूर्जीति पाठेन केवले ऊर्जशब्दे तत्प्रवृत्तिः सम्मतैव । *न चैवमि ति* । अचः परो यो झल् इतिव्याख्याने । *इत्यनुवर्त्त्येति* । अचपद पञ्चम्यन्तमेवेह सर्वनामस्थान इति सप्तमीबलात् षष्ठ्यन्तं भविष्यति नन्वच इति पञ्चमी "नपुंसकस्य" इतिसूत्रे कृतार्था । "सर्वनामस्थाने इति सप्तम्यपि सर्वनामस्थाने परत उगितो नुम्विधायकत्वेन "उगिद चाम्" इतिसूत्रे "युजेरसमा" इतिसूत्रे च चरितार्थेति प्रकृतसूत्रे "उभय निर्देशे पञ्चमीनिर्देशो बलीयान्" इतिपरिभाषया "सर्वनामस्थाने" इति सप्तम्यन्तस्यैव षष्ठ्यन्तत्वं भविष्यतीति चेन्न । "सर्वादीनि" इति सर्वना मानीतिनिर्देशेन पञ्चम्यन्तस्यैव षष्ठ्यन्तत्वकल्पनात् । युक्त्यन्तरमाह *अनुवृत्तिसामर्थ्यादिति* ।

नन्वेवं 'काष्ठतक्षि' इत्यत्र नुम्न स्यादचः परस्य झलोऽभावादत आ

र्नाप्रत्यस्थाने इति सप्तम्या षष्ठीं प्रकल्प्य वाक्यभेदेनाजन्तस्य क्लीबस्य तत्र नुम्विधानाददोष इति भाष्ये स्पष्टम् । काष्ठतक्षीत्यादौ "दिव औत्" इति सूत्रभाष्योदाहृतेऽचःपरझल्त्वजातेराश्रयणान्न दोषः ।

अन्त्यादिति । इदं वाचनिकमत्र बहूर्ज्शब्दमात्रविषयकम् । बहूर्ञ्जीति । श्चुत्वस्यासिद्धत्वादनुस्वारे परसवर्णो बोध्यः । स्थानिवत्त्वादिति । क्वौ लुप्तं नेति त्वसार्वत्रिकमिति भावः । स्पष्टञ्चेदं "दीधीवेवीटाम्" (पा०सू०१।१।६) इति सूत्रे कैयटे ।

जायन्ते नव सौ तथाऽमि च नव भ्यांभिस्भ्यसां सङ्गमे
षट्संख्यानि नवैव सुप्यथ जसि त्रीण्येव तद्वच्छसि ।
चत्वार्यन्यवचःसु कस्य विबुधाः शब्दस्य रूपाणि तत्
जानन्तु प्रतिभाऽस्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः ।

इति प्राचीनस्य शुष्कप्रक्रियातार्किकस्य प्रश्ने तदनुसारेणैव श्लोकद्वयेनोत्तरमाह–गवाक्शब्दस्येति । शब्दपरत्वेनापूजार्थकत्वाञ्चस्य लोपः । भेदत इति । आद्यादित्वात्तसिः । भेदेनेत्यर्थः । नवेति । द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकं नवेत्यर्थः । अग्रेऽपि प्रत्येकमेव

---

*काष्ठेति* । *झल्त्वजातेरिति* । "वर्णग्रहणे जातिग्रहणम् इतिपरिभाषायाः सत्वात् । *बहूर्जशब्दमात्रेति* । बहूर्जि नुम्प्रतिषेध इति वार्त्तिकानन्तरमस्य पाठादिति । *अल्लोपस्येति* । यङोऽकारलोपस्येत्यर्थः । *जायन्त इति* । अस्य नवसावित्यादौ प्रत्येकं सम्बन्धः । *द्वन्द्वान्ते श्रूयमाणस्येति* । ननु द्वन्द्वान्तेश्रूयमाणस्य द्वन्द्वघटितसमासघटकस्य प्रत्येकं सम्बन्धोऽन्यत्र दृष्टः । इदन्तु न तथेति कथमेतदिति चेन्न । नेदं द्वन्द्वान्त इत्यपूर्वं वचनङ्किन्तु साहित्यविशिष्टानां द्वन्द्वविधानात्साहित्यस्य चैकधर्मावच्छिन्नान्वयित्वरूपतयाऽन्वयितावच्छेदकावच्छिन्नस्य च समासघटकपदोऽस्यापि तस्यापि 'धवखदिरौ छिन्दि' इत्यादिवाक्यजन्यशाब्दबोधे भानात्तद्वदत्र विभक्तिव्यवधानेऽपि नवपदार्थेऽन्वयो भविष्यतीति भावः ।

*प्रत्येकमेवेति* । प्रत्येकान्वितनवपदसाहचर्यात् । सोर्लुका लुप्तत्वादौतीति । यत्तु "अनपुंसकस्य" इतिपर्युदासान्नपुंसके स्वमोः सर्वनामस्थानसंज्ञाभावान्नुमः प्राप्तेरेवाभावाच्चिन्त्यमेतदिति । अत्राहुः । यथा पुंसि हलृङ्यादिलोपेऽपि प्रत्ययलक्षणेन नुमागमो भवति तथाऽत्रापि कुतो

संख्याऽन्वयः। गवागिति। सोऽलुका लुप्तत्वान्नुम्न। षष्ण्णा-
मिति। कुक्पक्षे त्रयाणां गतौ त्रयाणामित्यर्थः। चत्वस्येति। के
गतौ त्रयाणामाधिक्यं नेत्यर्थः। कुक्पक्षे इति। पूजायामित्यर्थः।
अरवाचीति। सप्तविंशत्यधिका पञ्चशतीत्यर्थः।

यः शातेति। शतृप्रत्यय इत्यर्थः।

आच्छीन (पा०सू०७।१।८०)। वेति वर्त्तते उत्तरसूत्रे नित्य

---

नेत्याशङ्कावारणायाह-*लुका लुप्तेति*। एतेन लुका लोपो नपुंसके स
तीति पञ्चम्यन्तेनास्य नपुंसकत्वादिति स्मारितन्नतु लुका लोप एव
मभावे हेतुत्वेनोपात्तः। एवञ्च नपुंसकत्वान्नपुंसकेच सर्वनामस्थान
भावादितिशेषो बोध्य इति। अपरे तु गवाक्शब्दस्येतिपद्यस्थगवाक्
ब्दस्य शब्दशब्दसामानाधिकरण्येन पुंल्लिङ्गतया तत्रैव प्रत्ययलक्षणे नु
शङ्कायामेवमुक्तं प्रत्ययलक्षणनिवृत्त्यर्थमिति सञ्जगदिरे।

अन्ये तु गवाक्शब्दौ द्वौ। एकः सुबन्ते गोशब्दे उपपादे अञ्चतेः
न्नन्तः। अपरो निरुपपदाञ्चेः क्विनि कृते तदन्तात्सुबुत्पत्त्यनन्तरं सुब
स्याच्शब्दस्य गोशब्देन सह समासे कृते निष्पन्नः। तयोर्मध्ये प्रथम
नपुंसकत्वेपि द्वितीयगवाक्शब्दे उत्तरपदस्य पुंलिङ्गतया तत उत्प
यः सुप् समाससंज्ञाप्रयोजकः प्रत्ययलक्षणेन तमाश्रित्य नुमाशङ्कानिवा
णायोक्तमत्र लुका लुप्तत्वादिनेतीति वदन्ति।

वस्तुतस्तु कारणाभावस्य कार्याभावप्रयोजकता सुप्रसिद्धैव। का
णाभावश्च न कारणप्रतियोगिकाभावः। किन्तु कारणतावच्छेदकावच्छि
न्नप्रतियोगिताकाभाव एव। अन्यथा कारणाधिकरणेपि कारणगगनोभय
भावसत्त्वात्कार्याभावस्यापत्तेः। प्रकृते च न प्रत्ययमात्रस्य नुमागमकार
त्वं किन्तु सर्वनामस्थानसंज्ञापरत्वोभयविशिष्टस्यैव। अन्यतरविशेषणा
च्च विशेषणाभावप्रयुक्तस्य विशिष्टाभावस्य सम्भव इति परत्वात्मकवि
शेषणाभावप्रयुक्तो यः कारणतावच्छेदकावच्छिन्नाभावः सोऽत्र लुका लु
इत्यनेन दर्शितः। सर्वनामस्थानसंज्ञाभावश्च न दर्शितः। संज्ञिसत्त्वे
संज्ञया भवितव्यम्। संज्ञी च लुका लुप्तत्वान्नास्तीति न काचिदवधु
क्षतिरिति चिन्त्यमेव चिन्त्यम्।

"वा नपुंसक" इतिसूत्रे "नाभ्यस्तात्" इति सूत्राच्छतुरित्यनुवर्तते त
स्याभ्यस्तात्परत्वं 'ददन्ति' 'ददति' इत्यत्र सम्भवति अतो मूले व्याख्या
शता इति तदर्थमाह-*शतृप्रत्यय इत्यर्थ इति*।

*वेतिवर्त्तत इति*। न चेह वाग्रहणानुवृत्तिर्मास्तु यद्यपि

ग्रहणात् । "नाभ्यस्तात्" (पा०सू०७।१।७८) इत्यतो नेति तु नानुवर्त्तितं निषेधस्य प्राप्तिपूर्वकत्वात् । अत्र च प्राप्त्यभावात् । नुमग्रहणन्तु स्पष्टार्थम् । शतुरवयव इति । परो यः शतेति तु नोक्तम्, 'तुदन्ति' इत्यादावेकादेशे उभयत आश्रयणेऽन्तादिवद्भावाभावेन तेन व्यपवर्गालाभेन च नुमभावापत्तेः । अवर्णश्च शतृभिन्नावयव एव गृह्यते शत्रकारेणाव्यभिचारात् ।

शप्श्यनोः (पा०सू०७।१।८१) ॥ आदिति किम् ? 'भाति' इत्यादौ नित्यनुमभावाय । अन्यथा प्रत्ययलक्षणेन स्याद् । आदिलुकौ तु वर्णप्राधान्यान्न प्रत्ययलक्षणम्, "नलुमता" । (पा०सू०१।१।६३) इति निषेधस्तु प्रत्यासत्त्या लुप्तप्रत्ययनिमित्ताङ्गस्य कार्ये ए-

---

स्यात्तदाऽनेनैव सिद्धे "शप्श्यनोः" इति सूत्रं व्यर्थमेव स्यादित्युत्तरसूत्रारम्भादस्य वैकल्पिकत्वमुत्तरसूत्रस्य च नित्यत्वमिति व्यवस्थासम्भवादुत्तरसूत्रे नित्यग्रहणञ्च न कार्यमिति वाच्यम् । वैपरीत्यस्याप्यापत्तेः । एवन्तर्ह्युत्तरसूत्रे नित्यग्रहणमस्तु तद्घटितोत्तरसूत्रसामर्थ्यङ्कल्प्यम् इति चेत् । सामर्थ्यकल्पनापेक्षया कृतस्यैव वाशब्दस्यानुवृत्तौ लाघवमित्याशयः ।

*नुमग्रहणन्तु स्पष्टार्थमिति* । "इदितो नुम्" इतिसूत्रान्नुमग्रहणानुवृत्त्यैव सिद्धेः । न चानुवर्त्तमानन्नुमग्रहणं वाशब्दसम्बद्धं "वा नपुंसक" इतिसूत्र इतीह नित्यार्थम्पनर्नुमग्रहणमिति वाच्यम् । उत्तरसूत्रे नित्यग्रहणादिह वाशब्दानुवृत्तेरिष्टत्वात् । उत्तरसूत्रे तु नित्यग्रहणसत्त्वाद्वाच्यार्थविरोधेन केवलनुम्शब्दस्यैव सम्बन्धो भविष्यतीतीह नुमग्रहणन्निष्प्रयोजनमेव । यद्यस्मिन्नपि सूत्रे वाशब्दः सम्बध्यते तदाऽनुवर्त्तमाननुमशब्दस्य "एककार्यनिरुक्तानां सहैव प्रवृत्तिः" इतिन्यायेन केवलनुमशब्दस्य "शप्श्यनोः" इतिसूत्रे सम्बन्धो न स्यादिति चेत् "एककार्यनियुक्तानां क्वचिदेकदेशोऽप्यनुवर्तते" इतिन्यायेन केवलस्य नुमः सम्बन्धो भविष्यतीत्यस्तु । एतादृशार्थस्य यद्यपि लाभस्तथापि स्पष्टार्थन्नुमग्रहणमिति भावः ।

उभयत आश्रयण इतिवचनस्य स्वमतेऽभावादाह-*तेन व्यपवर्गालाभेनेति* । व्यपवर्गो व्यपवृक्तम्भेद इति यावत् । *अन्यथा* । आदिलुकौ त्वित्यानुकौ । अत्र क्वचिद्भ्रान्तीति पाठः स तु युक्तः । भावाभावयोर्मध्ये भावानुष्ठानस्य युक्तत्वात् । *अङ्गस्य कार्य इति* । तस्मिन्सूत्रेऽङ्गग्रहणात् । ननु 'पचन्ती' इत्यत्र शीनदीपरत्वाभावात्कथं नुमित्यत आह-

वेति भावः। पचन्तीत्यादि बहुवचने 'नपुंसकस्य झलच' इति नुम्

निरवकाशत्वमिति। इदं "छदिरुपधिबलेर्ढञ्" (पा०सू०४।३।१९३) इति सूत्रे "शेषाद्विभाषा" (पा०सू०५।४।१५४) इति सूत्रे भाष्ये स्पष्टम्।

परे तु निरवकाशत्वरूपप्रतिपदोक्तत्वस्य बाधकतामप्रयोजकत्वे प्रकृते तदभावेनाबाधकत्वेऽपि प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात् पूर्वं प्रवृत्तौ नियामकत्वे बाधकाभावेन पूर्वं दीर्घे ततो नुमि स्यादेव्यतस्त्येवेत्याहुः।

धनुरिति। "र्वोः" (पा०सू०८।२।७६) इति दीर्घस्तु न, ...

---

*पचन्तीत्यादीति*। *इदमिति*। निरवकाशत्वमप्रतिपदोक्तत्वमित्येतत्। *छदिरुपधीति*। अत्र "उगवादिभ्यः" इतिसूत्रे इति वक्तुं युक्तम्। अथ वा "छदिरुपधिबलेर्ढञ्" इति सूत्रे इत्यत्र बहुव्रीहिसमासेन छदिरुपधीतिसूत्रं यत्सूत्रव्याख्यानावसरे व्याख्यातन्तत्सूत्र इत्यर्थः।

तत्र हि 'यञ्ञ्यावञः पूर्वविप्रतिषिद्धम्। सनङ्गूपानहौ प्रयोजनम्। यञ्ञ्यौ भवतोऽञः पूर्वविप्रतिषेधेन। किम्प्रयोजनम्। सनङ्गूपानहौ प्रयोजनम्। यतोऽवकाशः शङ्कव्यन्दारु। पिचव्यः कर्पासः। अञोऽवकाशः। वार्ध्रम्। वारत्रम्। अत्र नद्ध्रीवद्ध्रीशब्दाभ्यां वरत्रापर्यायाभ्यामञ्। सनङ्गुर्नाम चर्मविकारस्तस्मादुभयम्प्राप्नोति। सनङ्गव्यं चर्म। ढञोऽवकाशः। औपानह्यं दारु। अञः स एव। उपानन्नाम चर्मविकारस्तस्मादुभयं प्राप्नोति। औपानह्यं चर्म। ढञ् च। ढञ् च भवत्यञः पूर्वविप्रतिषेधेन। ढञोऽवकाशः। छादिषेयन्तृणम्। अञः स एव। छदिर्नाम चर्मविकारः। तस्मादुभयम्प्राप्नोति। छादिषेयश्चर्म। ढञ् भवति पूर्वविप्रतिषेधेन इति। छदिर्नमेति। छादनं छादः तच्च चर्मविकारोपि सम्भवति। छादनमित्यत्र करणे ल्युट्। तच्च तृणविकारः। कचिच्चर्मविकारोपि।

अत्रकैयटः। अत्राहुः छदिरुपानहोः प्रतिपदम्प्रत्ययविधानादयुक्तो विप्रतिषेधः। तथा चोक्तम्। "परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषाम्मिथः प्रसङ्गे परबलीयस्त्वम्" इति चिन्त्यमेतदिति। अत्राहुरित्यस्वरसबीजन्तु निरवकाशत्वे सत्येव प्रतिपदविधित्वम्बाधकत्वे प्रयोजकं नान्यथेति। एतादृशकल्पनायामत्रत्यं विप्रतिषेधपरम्भाष्यमेव मानम्। *शेषादिति*। तत्र हि शेषग्रहणमनर्थकम्। ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्तीत्याशङ्क्यानवकाशा हि विधयो बाधका भवन्ति समासान्ताश्च कबभावे सावकाशा इत्युक्तम्। स्वसिद्धान्तमाह-*परे त्विति*।

न्तस्यापातुत्वात् । श्रेयांसीत्यादौ युगपद् द्वयोरन्त्यादचः परत्वा-भावाद्विरोधेन परत्वाज्झलन्तलक्षणे नुमि कृते उगिल्लक्षणो न, सकृ-द्गतिन्यायात् । किं च 'अन्त्यादचः परो मित्प्रयोक्तव्य' इति "मिदचः" (पा०सू०१।१।४७) इत्यस्यार्थेन द्वयोर्मिलितयोरन्त्यादचः परप्रयो-गासंभवेन नात्र नुमद्वयप्रसक्तिः पुनः प्रसङ्गविज्ञानेऽपि । किंच सत्यपि नुमद्वये परस्यानुस्वारे तस्य झल्ग्रहणेन ग्रहणात्पूर्वस्यानुस्वारे द्वयो-रनुस्वारयोः श्रुतौ न विशेष इति "नपुंसकस्य" (पा०सू०७।१।७२) इति सूत्रे भाष्ये स्पष्टम् ॥

इति हलन्ता नपुंसकलिङ्गाः ॥

---

स्वरादि (पा०सू०१।१।३७) ॥ स्वरादीनामपि निपातसंज्ञैव तु न कृता स्वरादौ "निपाता आद्युदात्ताः" (फि०सू०४।१२) इत्या-पत्तेः । एतेन चादीनामप्यव्ययसञ्ज्ञैव कार्येत्यपास्तमित्यन्यत्र वि-स्तरः । स्वरित्यादि । अनुकरणान्येतानि तत्रैत एव निर्देशान्नस्वा-द्युत्पत्तिः तेन विसर्गादिकं न । स्वरादीनामनेकशक्तिप्रधानता । स्व-

---

*सकृद्गतिन्यायादिति* । वस्तुनस्त्वेतन्न्यायस्य प्रकृतेऽनुपयोग एव । ए-कस्मिन्नुमि कृते द्वितीयस्य नुमो वाच्यार्थविरोधादप्रवृत्तेर्न नुमद्वयप्रसङ्गः किन्त्वनयोर्यत्परन्तदेव पूर्वम्प्रवर्त्तते इत्याशयेनाह-*किञ्चान्त्यादच इति*। परोक्तमभ्युपेत्याह-*किञ्च सत्यपीति* । झलग्रहणेनेति अयोगवाहानां गर्णूपदेशात् ॥

॥ इति हलन्ता नपुंसकलिङ्गाः ॥

---

*निपातसंज्ञैवेति* । "प्राग्रीश्वरान्निपाता" इतिसूत्रानन्तरं स्वरादीती त्यादि अव्ययीभावश्चेत्यन्तम्पठित्वा "चादय" इति पठनीयमित्यभिप्रायः । तत्राव्ययग्रहणन्तत्र निपातग्रहणमेवास्तु । *इत्यापत्तेरिति* । ननु तत्रापि चादय आद्युदात्ता इतिपठनीयमिति चेन्न । येषां क्रुञादियोगे निपातसं-ज्ञा तेषां तद्योगाभावेऽप्याद्युदात्तत्वापत्तेः । यद्यपि "न्यङ्स्वरौ स्वरितौ" इति फिट्सूत्रेण विशिष्य स्वरितत्वविधानेन "निपाता आद्युदाता" इत्यस्य बाधो वक्तुं शक्यस्तथापि स्वरादावित्यादिपदग्राह्ये प्रातरादावयमतिप्र-सङ्गो बोध्यः । *एतेन* । इष्टव्यवस्थाया अलाभेन । *अन्यत्र* उद्यो-

रागतः, स्वः स्थितः, स्वः पश्य, इत्यादिदर्शनात् । गणे च तन्त्रेण स- वेषामुच्चारणम् । उच्चैरित्यादीन्यधिकरणशक्तिप्रधानानि शब्दशक्ति- स्वभावात् । हिरुगादीति क्रियाप्रधानानि । क्रियाप्राधान्यश्चैषां क्रि- यायामेव विशेषणत्वेन । स्पष्टश्चेदं "तद्धितश्च" (पा०सू०१।१।३८) इति सूत्रे कैयटे । "सायश्चिरं"मान्तं अव्यये सायश्चिरमिति सूत्रस्थ- भाष्यप्रामाण्याच्चिरमित्यस्याव्ययत्वमप्रामाणिकमिति परे ।

वदिति । 'तेन तुल्यम्' (पा०सू०५।१।११५) "तत्र तस्येव" (पा०सू०५।१।११६) 'तदर्हम्' (पा०सू०५।१।११७) इति विहितः । "उपसर्गाच्छन्दसि" (पा०सू०५।१।११८) इति विहितस्य चछान्द- सत्वादेव न संज्ञा । वस्तुतः "तद्धितश्च" (पा०सू०१।१।३८) इत्येव सिद्धेर्वद्ग्रहणं व्यर्थम् । अन्तरान्तरेणेति । "अन्तरान्तरेण युक्ते" (पा०सू०२।३।४) इति सूत्रे भाष्ये ऽनयोर्निपातत्वोक्तेः स्वरादिष-

---

तादौ । *अनुकरणेति* । प्रयोगस्थानामित्यादिः । *सर्वेषामिति* । अ- पादानत्वाधिकरणत्वकर्मत्वशक्तिप्रधानानाम् । *अधिकरणशक्तिप्रधाना- नीति* । अत एव वृत्त्यघटकानामेषां क्रियायामेवान्वयः ।

ननु क्रियाप्रधानमाख्यातमितिवन्न 'हिरुक्' इत्यस्य स्वार्थक्रियाविशे- ष्यकबोधजनकत्वं दृष्टमत आह-*क्रियाप्राधान्यमिति* । *भाष्यप्रामा- ण्यादिति* । तत्र हि स्यतेर्घञन्तस्य प्रत्ययसन्नियोगेन मान्तत्वं सूत्रे नि- पात्यते एवं चिरशब्दोऽपि कालविप्रकर्षाभिधायी "चिरेण तवागमनम- हमपश्यामि' 'त्वञ्चिरात्तस्माद्देशादागतोऽसि' इत्यादावकारान्तो दृश्यते तस्यापि मान्तत्वं प्रत्ययसन्नियोगेन निपात्यते इत्यर्थकवाक्यान्युक्तानि ।

इदं त्वत्र बोध्यम् । सायंशब्दस्य घञन्तस्य "संख्याविसायपूर्वस्य" इ- तिनिर्देशादकारान्तस्य प्रामाणिकत्वेऽपि मान्तोऽव्ययसंज्ञकोऽव्ययमस्ति । अत एव 'प्रातःसन्ध्या सनक्षत्रा, सायंसंध्या सभास्करा' इतिप्रयोगस्योप- पत्तिः । चिरशब्दस्त्वनव्ययमेव । स च शब्दशक्तिस्वभावादेकवचनान्त एव । 'तस्यतावदेवचिरम् यावन्न विमोक्ष्ये चिरम्भुङ्क्ते' इत्यादौ परिदृश्य- मानस्तु क्रियाविशेषणम् । यत्र तु क्रियावाचकम्पदन्न श्रूयते तत्र तदन्वय- योग्यक्रियावाचकशब्दाध्याहारो बोध्य इति । *इतिविहित इति* । विहि- गमनाविरहात्सर्वेषाङ्ग्रहणम् । ननु "यदुद्वतो निवतः" इत्यादिप्रयोगविरो- ध इत्यत आह-*उपसर्गेति* । *वद्ग्रहणं व्यर्थमिति* । अत एव परि- गणनसमये "तसिवति" इति वत्प्रत्ययोऽपि पठितः । *निपातत्वोक्तेरि-

नयोः पाठः प्रक्षिप्तः ।

अस्तीति । धनवानित्यर्थके अस्तिमानित्यादौ धनवाचिनः सत्त्ववचनस्य विभक्तिप्रतिरूपकत्वेन न सिद्धिरित्यस्य पाठः । अनिगमनाविरहेण विभक्तिप्रतिरूपकस्य शब्दतोऽर्थतश्च ग्रहणात् । तेनैव सिद्धिरिति तु मतुप्सूत्रे भाष्यकैयटयोः । सत्ताकर्तृत्वेनैव धनबोधादस्ति कथञ्चिदर्थतः साम्यमिति तद्भावः । एवञ्चास्तीत्यस्याप्रामाणिकः पाठ इति तत्त्वम् । नमसिति । 'महसां नमसाम्' इति प्रयोगस्तु सत्त्ववाचकत्वे बोद्धव्यः । प्रताम् प्रशामिति । प्रतानिति नान्ताव्ययस्य पृथक् पाठसामर्थ्यादपदान्तत्वाच्चास्य नत्वाभावः । प्रशानिति नान्तपाठो ऽसांप्रदायिकः । मान्तानुकरणे नत्वाप्राप्तेः, स्वरादौ रुत्वादिवत् । ङ्‌मेजन्तसूत्रस्थभाष्यस्वरसोऽप्येवमेव । नञः

---

रिति* । तत्र हि परस्परसाहचर्येण निपातयोरेव ग्रहणमित्युक्तम् ।

नन्वस्तीत्यस्य विभक्तिप्रतिरूपकत्वादेवाव्ययत्वे सिद्धे पृथक्पाठो व्यर्थ इत्यत आह—*धनवानित्यर्थकमिति* । *सत्त्ववचनस्येति* । एतेन विभक्तिप्रतिरूपकत्वाभावो ध्वनितः । *न सिद्धिरिति* । "अस्ति नास्ति दिष्टम्" इतिसूत्रनिर्दिष्टस्य तेनाव्ययत्वसिद्धावपि धनवाचिनो न सिद्धिरित्यर्थः । स्वसिद्धान्तमाह—*तेनैवेति* । यथाऽधिकरणशक्तिप्रधानस्यापि प्रातरादेर्वृत्तिविषये शक्तिमत्प्रधानत्वं तथाऽस्यापि अस्तिमानित्यादिवृत्तिविषये सत्त्ववाचित्वकल्पनेन सत्ताकर्तृबोधकत्वन्न विरुध्यते । *धनबोधादिति* । न तु सत्ताकर्तृसामान्याभिधायकत्वम् । शब्दशक्तिस्वभावात् । *कथञ्चिदिति* । विशेषार्थाभिधायकत्वे नियतस्य कस्यचित्तात्पर्यग्राहकस्य कल्पनेन । *सत्त्ववाचकत्वे बोध्य इति* । असत्त्ववाचकस्यैवाव्ययत्वमिति भावः ।

न च स्वरादिषु सत्त्ववाचकानामपि दर्शनेनेदमसङ्गतमिति वाच्यम् । प्रयोगदर्शनवशादन्यत्र तथा कल्पनेऽप्यस्य सत्त्ववचनस्याव्ययत्वे प्रमाणाभाव इति भावः । अत एव "विधेव चास्मै नमसा सह त्वया" इतिप्रयोगस्याप्युपपत्तिः । के चित्तु एतादृशानां विभक्तिप्रतिरूपकत्वमिच्छन्ति । बहुषु स्थलेषु क्लेशसहनेन मान्याः । ननु प्रपूर्वकात्तमुधातोः क्विपि सति प्रशान्शब्दावयवस्य धातुत्वान्नत्वापत्तिरत आह—*प्रतानितीति* । *अपदान्तत्वादिति*। तादृशानाम्प्रयोगस्थानामिदमनुकरणमिति भावः। *अस्* । प्रतामादेः । भाष्यस्वरसोऽप्येवमिति । न च तस्मिन्नेव भाष्ये यदव्ययानुशब्दं स्वरादिषु पठतीत्युक्तन्तद्विरोध इति वाच्यम् । तस्य भा-

स्वरादिष्वप्रामाणिकः पाठः । "अव्यये नञ्कुनिपातानाम्" इत्यत्र पृथक् नञ्ग्रहणं तु 'अकरणिः' इत्यादौ परस्यापि कृत्स्वरस्य बाधनार्थमित्याकरः । एवं माङोऽपि स्वरादौ प्रक्षिप्तः पाठः । यावत्तावच्छब्दावव्युत्पन्नौ ।

उपसर्गविभक्ति । अत्र प्रतिरूपकत्वं विनिगमनाविरहादर्थतः शब्दतश्च गृह्यते । "गेय केन विनीतौ वाम्" इत्यत्रापि वामित्यस्य

---

व्यस्यान्यथैवोपपत्तेः । तथाहि । कृदन्तं यन्मकारान्तमिति पाठे प्रतामौ प्रताम इत्यत्रातिप्रसङ्गमाशङ्क्य 'आचार्यप्रवृत्तिर्ज्ञापयति न प्रत्ययलक्षणेनाव्ययसंज्ञा भवति । यदयम्प्रशान्शब्दं स्वरादिषु पठति' इत्युक्तम् ।

अत्र 'प्रशामौ' 'प्रशाम' इति शान्तिमद्वाचकस्य । गणे तु शान्त्यर्थकस्य लिङ्गाद्यनन्वय्यर्थकस्य पाठः । तत्र यथा स्वरादीनामप्रयोग एव विसर्गौ न तु गणे तथाऽस्यापि प्रयोगे नत्वम् । अत्र यद्यपि कैयटेन "मो नो धातोः" इतिनत्वस्यासिद्धत्वात्सिद्धमव्ययत्वमिति व्याख्यातम् । अथापि स्वरादिसंवादेन गणे विकाराभावकल्पनेऽक्लृप्तकल्पना नेति *अप्रामाणिकः पाठ इति* । निपातत्वादेव सिद्धेः । ननु "अव्यये नञ्कुनिपातानाम्" इत्यत्र पृथक्पाठवैयर्थ्यमस्य निपातत्वे स्यादत आह-*अव्यये नञिति* । *अकरणिरिति* । अत्र समासस्वरबाधकाव्ययपूर्वपदप्रकृतिस्वरबाधककृदुत्तरपदप्रकृतिस्वरेण रकाराकारस्योदात्तत्वे प्राप्ते पुनर्नञः पृथक्पाठात्पूर्वपदप्रकृतिस्वर एव भवति । अयं हि "आक्रोशे नञ्यनिः" इत्यनिप्रत्ययान्तः । *प्रक्षिप्तः पाठ इति* । चादिगणे पाठेनाव्ययत्वसिद्धेः ।

न चैवमसत्त्वार्थकस्यैवाव्ययत्वं स्यान्न तु सत्त्वार्थकस्येति सत्त्वार्थकस्य लक्ष्मीवाचकतया तस्य ङकारेत्संज्ञकत्वाभावात् निरनुबन्धको निषेधार्थकमाशब्दोऽसत्त्वार्थस्तु पठित एव । "माङि लुङ्" इति सूत्रे ङकारोच्चारणात्तस्मिन्नुपपदे लुङन्तस्यैव साधुत्वम् । एतेन मास्त्वित्यादिप्रयोगाणाम् वैदिकानामसाधुत्वम्बोध्यम् ।

मा निषाद प्रतिष्ठान्त्वमगमः शाश्वतीः समाः ।

इति रामायणस्थपद्ये माङो न प्रयोगः किन्तु निरनुबन्धकस्य । अत एवाऽऽटो निषेधाभावः । *अव्युत्पन्नाविति* । वतुबन्तयोः सत्त्वार्थकतया निपातसंज्ञाया अप्राप्तेः । *अत्र* । उपसर्गविभक्तिविषये । प्रतिरूपकत्वं सादृश्यम् । *अर्थतः शब्दतश्चेति* । शब्दत एव सादृश्यविवक्षायां विप्रशब्दावयवप्रशब्दस्याप्यव्ययत्वं स्यात् । अर्थत एव सादृश्यस्य ग्रहणे प्रशब्दसमानार्थकस्य विकल्पशब्दस्यापि स्यात् । न च विकल्पशब्द

युष्मदस्मत्प्रकृतिकविभक्त्यन्तसमानार्थत्वमस्त्येव । स्वरांशे तु नार्थतो-ऽसम्भवात् । एतेन युगं पततीत्यादिव्युत्पत्त्याश्रयणेन युगपदित्यादीनां विभक्तिप्रतिरूपकत्वादेव सिद्धे तेषां गणे पाठो व्यर्थ इत्यपास्तम् । एवं तदित्यपि लुप्तषष्ठीकं विभक्तिप्रतिरूपकमव्ययम् । अत एव "अविद्यातच्चितोर्योगस्तत्तदर्थविभागः" (वे०सू०) इत्यादौ त्यदादीनीति नैकशेषः । अवदत्तमिति । अत्र क्रियायोगेपि

"अवदत्तं विदत्तञ्च प्रदत्तञ्चादिकर्मणि ।
सुदत्तमनुदत्तञ्च निदत्तमिति चेष्यते" इति ॥

भाष्यवचनेनोपसर्गत्वाभावबोधनद्वारा तादेशाभावो बोध्यते इत्याशयः । आकृतीति । अह इत्यहनीत्यर्थे । ओमिति च स्वरादिषु तच्च अश्च उश्च म् चेति व्युत्पत्त्या शिवादिवाचकम् । अत्रेतोष्टि-

---

सत्त्वार्थकतया न वाशब्दसमानार्थकत्वमिति वाच्यम् । आराच्छब्दसमानार्थकस्य समीपशब्दस्याव्ययत्ववारणाय शब्दतः साम्यस्याऽऽवश्यकत्वात् । *विनीतौ वामिति* । अयं न "युष्मदस्मदोः" इतिसूत्रेण व्युत्पन्नः । षष्ठ्यन्तत्वाभावात् । न च तत्समानार्थत्वाभावः । सम्बोध्यार्थबोधकतयाऽर्थतः साम्यमस्ति शब्दतस्त्वस्त्येव । यत्रयत्र सदृशग्रहणन्तत्र किञ्चिन्न्यूनत्वमस्त्येव । अन्यथा तत्त्वमेव स्यात् ।

*एतेन* । अर्थतोऽपि सादृश्यस्य विवक्षणेन । *अत एव* । तदित्यस्याव्ययत्वादेव । *तच्चितोर्योग इति* ।

जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा ।
अविद्यातच्चितोर्योगः षडस्माकमनादयः ॥

इत्यत्र तदित्यव्ययम्, अन्यथाऽस्य तच्छब्दस्य चिच्छब्देन द्वन्द्वो न स्यादित्यर्थः । तच्चितोरित्यत्र तच्छब्दचिच्छब्दौ षष्ठ्यन्तसमानार्थकौ प्रथमान्तौ तयोः समासः । *क्रियायोगेऽपीति* । अस्योपसर्गत्वाभाव इत्यत्राशयः । *तादेशाभाव इति* । यद्युपसर्गत्वं स्यात्तदा "अच उपसर्गात्तः" इति तादेशः स्यात् । न चोपसर्गसंज्ञाभावकल्पनापेक्षया तत्वाभावकल्पनमेव किन्न स्यादिति वाच्यम् । गुणप्रधानसन्निधौ प्रधानबाधापेक्षयाऽप्रधानबाधस्यौचित्यादिति भावः । *शिवादीति* । सत्त्वं रजस्तमः क्रमेण शिवादीत्यत्रापि सत्त्वादिप्रधानमायोपाधिकं ब्रह्मैव विवक्षितम्, तेन विष्णवादीति वक्तव्ये शिवादीत्युक्तिः "अकारो वासुदेवः स्यात्" इत्यभियुक्तोक्तिविरोधेतिशङ्काया अनवकाशः ।

लोपश्चेति सिद्धम् । ब्रह्मण्यङ्गीकारे च उभयोरपि स्वरादित्वं व्या-
ख्यानात् । अन्त्ये "कृन्मेजन्तः" (पा०सू०१।१।३९) इति तु न
सिद्ध्यति 'च्विरव्ययम्' इत्युणादिपठितेन नियमादप्राप्तेः । उणादि
व्युत्पन्नानाञ्चेच्चादिस्वरादिपठितानां भवति तर्हि च्व्यन्तानामेवेति
तदर्थः । अन्यथा च्व्यन्तानां निपातत्वादेव सिद्धे तद्वैयर्थ्यं स्पष्टमेव।
स्वरादिनिपातमित्यत्र निपातपदे गौणमुख्यन्यायाप्रवृत्तिरनित्यत्वात्।
अन्यथा 'ओत्' (पा०सू०१।१।१५) इति प्रगृह्यत्वमित्रेदमपि न स्यात्।
एवमतिशयेन साधुरित्यर्थे साधीय इत्यपि ।

सर्वशब्दोऽत्र सर्वः पटो दग्ध इतिवद् अवयवकार्त्स्न्ये इत्याशये-
नाह—यस्मात्सर्वेति । वचनत्रयात्मिकेत्यर्थः । नेति । किन्त्वेव

---

*व्याख्यानादिति* । लाक्षणिकत्वाविशेषमूलकादित्यर्थः । *अन्त्ये*
'अवतेष्टिलोपश्च' इत्यनेनावतेर्मन्प्रत्ययो भवति प्रत्ययस्य टेश्च लोपो भवती-
त्यर्थकेनौणादिकेन सिद्धे । *नियमादप्राप्तेरिति* । अयञ्च नियमो यद्यपि
कौमुद्यामुणादौ च्विरव्ययमित्यत्र डौरित्यस्यानुवृत्तिङ्कृत्वा सूत्रव्याख्याने
सति डौप्रत्यान्तस्य चेदव्ययसंज्ञा तर्हि च्व्यन्तस्यैव, न तु तद्रहितस्येति
लभ्यते । तथाऽप्येतादृशनियमे "रातेर्डैः" "गमेर्डोः" इतिसूत्राभ्यां सि-
द्धयो रैगोशब्दयोरव्ययसंज्ञाया व्यावृत्तिर्न प्राप्नोतीत्यतः सामान्यत उ-
णादिप्रत्ययान्तानां चेत् च्व्यन्तानामेवेत्याकारक उक्तः । परन्त्वेवमपि
उच्चैर्नीचैरित्यनयोर्डैसिप्रत्ययान्तयोरव्ययसंज्ञा न प्राप्नोति । अनयोः स्व-
रादिषु पाठो व्यर्थो भवेदिति चेत्सामर्थ्यकल्पनयाऽव्ययसंज्ञास्वीकारापे-
क्षया नियमसंकोच एव उचित इत्याशयेनाह—*गुणादीत्यादि*।

ननु "च्विरव्ययम्" इति सूत्रस्य नियमार्थत्वमनुपपन्नम् 'अदोभवद्' इ-
त्रेव च्यन्तानामपि गौणत्वेनाग्रहणसम्भवात्तस्य विधायकत्वमेव समुचि-
तमत आह—*स्वरादिनिपातमित्यत्रेति* । *अनित्यत्वादिति* । अस्
अर्थवद्ग्रहणपरिभाषामूलकत्वादर्थवद्ग्रहणपरिभाषायाश्च "इणः षी-
ध्वम्" इतिसूत्रस्थाऽङ्गग्रहणेनानित्यत्वस्य ज्ञापनात्तदनित्यत्वेनैवेयमप्यनि-
त्येति भावः। *साधीय इत्यपीति* । अत्रेदमव्ययम्बोध्यम् । नत्वेतद्धि
सुबन्तम् । पटीयानितिवत्प्रकर्षस्य तत्राप्रतीतेः । अत एव कस्तत्र साधीय
इति प्रयोग सङ्गच्छते । "तद्धितश्च" इतिसूत्रे सर्वशब्दो न प्रकारकार्त्स्न्ये
सर्वाङ्गीणो भिक्षुरितिवद्वर्त्तते । 'अव्ययेभ्यः सप्तानामपि विभक्तीनामेक-
चनान्युत्पद्यन्ते' इति पक्षे सूत्रस्यासम्भवदुक्तिकतापत्तेः । किन्तु 'सर्वः
पटो दग्धः' इत्यत्रेवावयवकार्त्स्न्ये वर्त्तते तेन यत्फलितन्तदाह—*वच

वचनमेवेत्यर्थः । ननु संख्याकारकबोधकैरेकवाक्यतया सुपां विधानमिति पक्षे ऽव्ययार्थे संख्याकारकयोरभावात्कथं विभक्तिः । "अपादादौ सुप" (पा०सू०८।४।८२) इति ज्ञापकाश्रयणे च सर्वापि । किञ्च, विहितानां नियमपक्षेऽपि नास्योपपत्तिः, तत्पक्षे सर्वेष्वर्थेषु विधेयतया प्रधानप्रत्ययानुरोधेन गुणभूतप्रकृतिभेदकल्पनेन सर्वविभक्त्युत्पत्तौ लोपेनैव जातस्य निवृत्तिः । तन्निवृत्तौ च कल्पितगुणस्वरूपं स्वत एव निवर्त्तते ।

नियमश्च द्विविधः, अर्थनियमः प्रत्ययनियमो वा । अन्त्योपि द्विविधः, प्रकृतार्थापेक्षः सामान्यापेक्षो वा । तत्र कर्माद्यर्थयोग्यप्रातिपदिकाचेत्कर्मणि विभक्तिस्तदा द्वितीयैव । कर्मादिरहिते तद्योग्यप्रातिपदिकात्प्रथमैवेत्यादिरर्थनियमः । अत्र पक्षे सर्वाः सप्तापि विभक्तयो ऽव्ययेभ्यो, विभक्तीनामनियतत्वात् ।

कर्माद्यर्थयोग्यप्रातिपदिकाच्चेद् द्वितीया तदा कर्मण्येव । न कर-

---

प्तिमिकेति* ।

अवयवकात्स्न्यार्थकसर्वशब्दस्वीकारेऽपि नोपपत्तिरित्याशङ्क्यते । *नन्विति* । *सुपां विधानमिति* । स्वौजसेतिसूत्रेणेति शेषः । ननु सर्वेषां सामान्यसूत्रेण जातानां कर्मणि द्वितीयेत्यादिसूत्रेण नियमः क्रियत इति पक्षेऽस्य सूत्रस्योपपत्तिर्भविष्यतीत्यत आह--*किञ्च विहितानामिति* । नन्वेकस्मात्प्रातिपदिकात्सर्वेषां विधानमेवानुपपन्नं प्रत्ययविधौ निर्दिष्टपरिभाषया प्रातिपदिकाव्यवधानेनैवोत्पत्तिर्भवति, अव्यवधानञ्चैकत्रैव सम्भवति न सर्वत्रेति चेन्न । प्रकृतिभेदकल्पनेन तत्तत्प्रकृतिपरत्वस्य तत्रतत्र प्रत्यये सम्भवादित्याह-*प्रधानप्रत्ययानुरोधेनेत्यादि* । *तत्र* । तेषु नियमेषु । अर्थनियममुपपादयति-*कर्माद्यर्थयोग्येति* । कर्मणि द्वितीयैवेति नियमेन हि यत्र कर्मादिसम्भवस्तत्रैवान्यासां निवृत्तिः सम्पाद्यते इति प्रत्यासत्त्या कर्माद्यर्थयोग्येत्यस्य लाभः । आदिपदादेकत्वाद्यर्थयोग्यप्रातिपदिकाच्चेदेकत्वादौ विभक्तिस्तदैकवचनाद्येवेत्येवरूपः ।

*अनियतत्वादिति । अव्ययानाङ्कर्माद्यर्थयोग्यत्वाभावेन तत्तदर्थे विकल्पान्तरव्यवच्छेदेन निबतानां तत्तद्विभक्तीनामनियमादित्यर्थः । प्रातिपदिकार्थेतिसूत्रस्यापि नियामकतया तद्विषये यथा नियमसम्भवस्तथाह-*कर्मादिरहित इत्यादि* । मात्रपदव्यवच्छेद्यार्थकथनमेतत् । *अत्र पक्षे* । एवंविधार्थनियमपक्षे । अथ प्रत्ययनियममाह-*कर्माद्यर्थयोग्ये-

णादौ; कर्मादियोग्ये तद्रहितप्रातिपदिकार्थे एव प्रथमा; न कर्मादौ; संख्यावदर्थयोग्यप्रातिपदिकादेकत्वादावेवैकवचनादि, न द्वित्वादौ वित्यादिः प्रकृतार्थापेक्षप्रत्ययनियमः। अत्रापि पक्षे सर्वाः समावि विभक्तयो ऽव्ययेभ्यो लभ्यन्ते।

अथ प्रातिपादिकाच्चेद् द्वितीया तदा कर्मण्येव, नान्यत्र। प्राति- पदिकाच्चेत्प्रथमा तदा मात्रग्रहणात्पर्युदासन्यायेन कर्मादियोग्यत्व- हितप्रातिपदिकार्थे एवेत्यादिः सामान्यापेक्षः प्रत्ययनियमः। तद- ऽव्ययेभ्यो विभक्तिप्राप्तिरेव नेति पूर्वोक्तज्ञापकादेव सा इति सर्वापि यद्यपि सुपान्तिङां संख्याकर्मोभयार्थकत्वेन कर्मण्येव नान्यत्रेति वक्तुमशक्यं तथापि कर्मण्येव न तु तदभावे इत्याकारो वक्तुं शक्यः स्पष्टश्चेदं सर्वं 'बहुषु' (पा०सू०१।४।२१) इत्यादिसूत्रेषु भाष्ये। त हि अर्थनियमे प्रकृतार्थापेक्षप्रत्ययनियमे च सप्तापि विभक्त संपूर्णा उक्ताः सामान्यापेक्षप्रत्ययनियमे च सुपो ऽप्राप्तिरेवोक्ता 'अव्ययादाप्सुपः' (पा०सू०८।४।८२) इति सूत्रे भाष्ये ऽपि स्फुटमि- दम् इति चेत् ?

अत्र "तद्धितश्च" (पा०सू०१।१।३८) इति सूत्रे भाष्यकृ 'एकवचन'मित्येव सूत्रं कार्यम्। एकग्रहणञ्च न कार्यं विभक्तिविधा वुद्देश्यतावच्छेदकावच्छिन्नादेकवचनमित्युत्सर्गस्तस्य द्वित्वबहुत्वयोरि बाधके भविष्यतः। एवञ्चैकत्ववत्यपि भविष्यति। अलिङ्गासंख्ये ऽव्ययेभ्यश्चैकवचनम्, द्विवचनादिविधायकयोर्द्विबहुग्रहणसामर्थ्यान्

ति*। *अत्रापि पक्षे*। प्रकृतार्थापेक्षप्रत्ययनियमपक्षे। *अव्ययेभ्यो लभ्यन्त इति*। कर्मादौ विहितानान्द्वितीयादीनाङ्करणादावेव व्यावृत्ते सामान्यापेक्षप्रत्ययनियममाह--*अथेति*। *पूर्वोक्तज्ञापकादेवेति* "अव्ययादाप्सुप" इति ज्ञापकादेवेत्यर्थः। *वक्तुमशक्यमिति*। एक स्मिन्नर्थे नियतताया विभक्तेरर्थद्वयबोधकताया वक्तुमशक्यत्वात्। *न तदभावे*। कर्मत्वाद्यभावे इत्यर्थः। सुप्तिङ्साधारण्येनास्य प्रवृत्तिमभि यितुं सामान्येनार्थमाह—*विभक्तिविधावुद्देश्यतावच्छेदकेति*। *इत रे*। द्विवचनबहुवचने। *एवञ्च*। सामान्यसूत्रसिद्धो च।

नन्वेकस्य वचनमेकवचनमिति व्युत्पत्त्या एकवचनमितिसूत्रेणैकव नमव्ययेभ्यो न प्राप्नोतीत्यत आह--*द्विबहुग्रहणसामर्थ्यादिति*। अ

सुसंज्ञावोद्ध्यैकत्वाभावेऽपि तत्प्रवृत्तेः । द्वित्वबहुत्वयोर्द्विवचनबहुवचनो-त्सर्गकत्वात् एकवचनस्य एकवचनम् इत्येतद्वचनं विनापि द्वित्वाद्यभावे कर्मादौ सिद्धत्वेन सामर्थ्यादप्राप्तप्रापणार्थमेतदिति कर्माद्यभावेऽप्येत-त्प्रवर्तते इति विनिगमनाविरहात्सर्वविभक्त्येकवचनमनेन । अत एव "अव्ययादाप्सुपः" (पा०सू०८।४।८२) इति प्रत्याहारग्रहणं चरितार्थं 'तृतीयासप्तम्योः' (पा०सू०२।४।८४) इति च । प्रथमापि मात्रग्रह-णात् यत्प्रातिपदिकार्थस्य कर्मत्वाद्याधिक्यसम्भावना तत्रैवेति तस्या अप्यप्राप्तिरव्ययेभ्यः । पचतिकल्पमित्यादौ तु नानेन सर्वैकवचनम् । सर्वथा ऽप्राप्तावेव तस्य विध्यर्थत्वात् । अत्र च न तथा कर्तृत्वकर्म-त्वसत्त्वेन क्रियायां स्वत एकत्वसत्त्वेन सर्वथा तदप्राप्त्यभावादिति बोध्यम् ।

यत्तु कैयटेन प्रथमातिक्रमे कारणाभावादनेकनियमबाधे गौर-वाच्च प्रथमैकवचनस्यैवानेनोत्सर्गत्वं बोध्यते इति 'तद्धितश्च' (पा०

---

भावः । यद्यप्येता महासंज्ञा इत्यासामन्वर्थत्वं सम्भाव्यते तथापि सूत्रे बहुग्रहणसामर्थ्यादन्वर्थत्वं त्यज्यते । अधुनास्य सूत्रस्यौत्सर्गिकत्वमुपपा-दयति—*द्वित्वबहुत्वयोरिति* । नन्वेतावतापि प्रथमोपस्थितः सुरेवैता-दृशे विषये स्यादत आह—*विनिगमनाविरहेति* । ननु प्रथमोपस्थित-त्वमेव विनिगमकन्तत्राह—*अत एव* । सर्वविभक्त्येकवचनस्वीकारदेव । *चरितार्थमिति* । सोरेवोत्पत्तौ तस्यैव निवृत्तिः स्यादिति प्रत्याहार-निर्देशो व्यर्थः स्यात् ।

नन्वव्ययार्थे कर्मत्वाद्यभावाद्द्वितीयैकवचनादीनामप्राप्तावपि प्रथमा तु स्यादिति कथमेतदप्राप्तप्रापणार्थमित्युक्तमतः प्रथमाया अप्राप्तिमुपपादय-ति—*प्रथमापीति* । *नानेन* । एकवचनमित्युत्सर्गसूत्रेण । कर्तृत्वक-र्मत्वसत्त्वेन । एतेन कर्त्तरि कर्मणि या या विभक्तयो विहितास्तासामुत्प-त्तिरुक्ता । तद्यथा । पचतिकल्पं भवति । पचतिकल्पस्य भवनम् । पचति-कल्पेन स्थीयते । पचतिकल्पस्पश्य । पचतिकल्पस्य दर्शनम् । पचतिकल्पाय गच्छति इति । *स्वत एकत्वेन* । एका क्रियेतिभाष्यान्निवृत्तभेदायाः क्रि-याया आख्यातेभ्यः प्राधान्येन प्रतीयमानाया एकत्वात्तदनुरोधेन तत्र क-ल्पबाद्यन्तादेकवचनस्यैवोत्पादेनेन चास्याप्राप्तप्रापणार्थत्वेऽव्ययेभ्यस्ति-ङन्तेभ्यश्चैकवचनापत्तिरितिवाच्यम् । सुब्विधायकशास्त्रैकवाक्यतयाऽस्य विधायकत्वात् । *अनेकनियमेति* । "कर्मणि द्वितीया" इत्यादिनियमे-

सू०१।१।३८) इति सूत्रे रूपप्सूत्रे चोक्तम्। तन्न। स्वादिसूत्रे प्रथमाया: प्राथम्येऽपि नियमशास्त्रपर्यालोचनया द्वितीयाया अपि तस्तेन तस्याविनिगमकत्वात्। 'निजान्त्रयाणाम्' इत्यत्र त्रयाणाङ्ग्रहणेन "आद्युदात्तश्च" (पा०सू० ३।१।३) इति सूत्रे आदिग्रहणेन पाणिनिना स्वशास्त्रे एतन्न्यायानाश्रयणज्ञापनाच्च।

अत्र प्रथमा सम्पूर्णाव्ययेभ्यः प्रथमाया एवैकवचनमित्यादि पक्षान्तराणि अर्वाचीनग्रन्थे दृश्यन्ते तान्यसङ्गतानि उक्तरीत्या तेषामुक्तिसम्भवाभावात्। 'घटः' इत्युक्ते एकत्वनिश्चयस्तु द्विवचनाद्यभावेन द्वित्वाद्यप्रतीतौ संख्यावदर्थत्वेन सत्त्वभूतत्वात् प्रकरणाच्च।

---

त्यर्थः। यदि द्वितीयादीनामप्येकवचनं स्यात्तदा द्वितीया कर्मण्येवेत्यादि सामान्यापेक्षनियमबाधः स्पष्ट एव।

ननु नियमस्य विधिमूलकत्वाद्विधेरुपजीव्यत्वेनाभ्यर्हितत्वात्तत्रत्यमेव प्राथम्यं ग्रहीष्यत इत्यत आह--*निजामिति*। अत्रत्यबहुवचनेन बहुत्वस्योपस्थितौ तस्य बहुत्वस्य स्वव्यापकसंख्याद्वारैव सङ्ख्येयपरिच्छेदकतया प्रथमोपस्थितत्वेन त्रित्वस्य विषयपरिच्छेदकत्वं स्यात्तथा च त्रयाणां लाभः सिद्ध एवेति त्रयाणामिति व्यर्थं स्यादिति भावः। *अत्र*। अव्ययविषये। *इत्यादिपक्षान्तराणि*। अत्रादिना सप्तानामपि विभक्तीनामेकवचनानीत्यस्य सङ्ग्रहः। असङ्गतानीतिबहुवचनं समुदायापेक्षया बोध्यम्। तेन सर्वविभक्त्येकवचनमिति पूर्वोक्तिविरोधो न।

नन्वेकत्वे एकवचनमिति यद्युच्यते तदा घट इत्यादिशब्दोच्चारे सति तत एकत्वप्रकारकनिश्चयस्सम्भवति। तेनैवैकत्वसंशयप्रतिबन्धो निर्वहति। एकस्मिन्नित्यस्याभावे तु कथमेकत्वनिश्चयः शक्तिग्राहकाभावादत आह-*घट इत्युक्ते इति*। *संख्यावदर्थत्वेनेति*। एतेन सत्त्वभूतत्वात्मकस्य विशेष्यस्य लाभः। तथा च घटः एकत्ववान्। द्वित्वाद्यभावविशिष्टत्वे सति सत्त्वात् इत्याकारको न्यायो बोधितः। अत्र चाक्षुषविषयघट एव दृष्टान्तः। यद्वा सत्त्वरूपत्वेनाखिलसंख्योपस्थितौ द्वित्वाद्यभावनिश्चये सति स्मृतैकत्वप्रकारकोपनीतभानम्भवतीत्याशयेनाह—*प्रकरणाच्चेति*। यथा 'सम्पन्नो व्रीहिः' इत्यत्र जातावेकत्वान्वयः 'पशुना यजेत' इत्यत्र व्यक्तौ तदन्वयः प्रकरणात्तथेति भावः। यत्र तु स्वरूपे कर्मत्वाद्यन्वययोग्यता तत्र द्वितीयाद्येकवचनम्भवत्येव। द्वितीयादीनां तेषु नियतत्वात्। अव्ययीभावात्तु "नाव्ययीभावात्" इत्युक्तेः सर्वविभक्त्येकवचनम्॥

'बहुषु' (पा०सू०१।४।२१) इत्यादिसूत्रभाष्योक्तपक्षास्त्वेकदेशिनो न सिद्धान्तिन इति तत्त्वम् ।

असर्वविभक्तिरिति बहुव्रीहिलभ्यो विशेष इत्याह—तद्धितान्त इति । केवलस्य तस्य तद्धितस्य प्रयोगाभावेन फलाभावात्संज्ञाविधावपि तदन्तविधिरिति भावः । नन्वेवमपि पचतिकल्पमित्यादावतिव्याप्तिः । उक्तरीत्या तेषामसर्वविभक्तित्वात् । उभयशब्दे चातिव्याप्तिस्ततो द्विवचनानुत्पादादत आह—परिगणनमिति । एवञ्च सूत्रं न कार्य्यमिति भावः । तसिलादय इति । 'पञ्चम्यास्तसिल्' (पा०सू०५।३।७) इत्यारभ्य "द्वित्र्योश्च धमुञ्" (पा०सू०५।३।४५) इत्यन्ता इत्यर्थः । शस्प्रभृतय इति । 'बह्वल्पार्थाच्छस्' (पा०सू०५।४।४२) इत्यारभ्य 'अव्यक्तानुकरणात्' (पा०सू०५।४।५७) इति डाजन्ताः । यस्तु 'इवे प्रतिकृतौ' (पा०सू०५।३।९६) इत्यधिकारे "प्रत्नपूर्वविश्वेमात्थाल्छन्दसि' (पा०सू०५।३।१११) इति थाल्, तस्य स्वरादावास्थालाविति पाठेनाव्ययत्वम् । तत्र "इण आसि" इत्युणादिसूत्रविहित आसिः 'अयाः' इत्युदाहरणम् । आसिविधायके छन्दसीति नानुवर्त्तते । एवञ्च लोके विभक्तिरहितप्रयोगायाव्ययत्वमावश्यकम् । अत्र च स्वरादावासि पाठ एव लिङ्गम् । 'अयासावयस' इति तु छान्दसम् ।

अम् आमिति । 'अमु च छन्दसि' (पा०सू०५।४।१२) 'किमेत्तिङ्' (पा०सू०५।४।११) इति विहितौ । कृत्वोऽर्था इति कृत्वसुच्सुजधाः । तसिवतीति । "तेनैकदिक्" (पा०सू०४।३।११२)

---

न च तेभ्यो द्वितीयादीनां द्विवचनबहुवचने तेन ज्ञापकेन कथन्न स्यातामिति वाच्यम् । "असर्वविभक्त्यव्ययम्" इति न्यासपक्षे सर्वत्रानेनाव्ययसंज्ञासिद्धौ पञ्चसूत्री न कार्येति भाष्येण द्विवचनानुत्पत्तिबोधनात् । *भाष्योक्तपक्षा इति* । अव्ययेभ्यः सप्तानामपि विभक्तीनां त्रीण्यपि वचनानीत्यादयः । *तत्र* । आस्थालावित्यत्र पठितो य आस् तेनेण आसिरिति सूत्रविहित आसिर्गृह्यत इति शेषः । *नानुवर्त्तत इति* । वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यश्छन्दसीत्यत इत्यादिः । *अत्र च* । छन्दसीत्यस्याननुवृत्तौ च । छान्दसत्वे तु सुपां सुलुगित्येव लुकः सिद्धेः । ननु मेजन्तशब्दस्याविशेषणत्वे 'कारयाम्' इत्यादौ सुपो लुङ् न स्यादत आह—*आम्

'तसिश्च' (पा०सू०४।३।११३) 'तेन तुल्यम्' (पा०सू०५।१।११५) इत्यादि विहितौ । एवञ्च स्वरादिषु वदिति पाठे फलं चिन्त्यम्। नानाञाविति । "विनञ्भ्यां नानाञौ न सह" (पा०सू०५।२।२७) इति विहितौ ।

कृन्मेजन्तः (पा०सू०१।१।३९) कृत यो मान्त इति। कारयामित्यामन्ते आम इति लुकेष्टसिद्धिरिति भाव इत्याकरे विस्तरः। कृदन्तस्य तु नैतद्विशेषणं, गणे प्रशाम् शब्दपाठात् । अन्यथा श्रुत्या मान्तत्वेन प्रत्ययलक्षणात्कृदन्तत्वे चानेनैव सिद्धे तत्पाठवैयर्थ्यं स्पष्टमेव । तेन प्रतामौ लवमाचक्षाणो लौरित्यादौ नातिप्रसङ्गः। न च 'आधये' 'हे आधे' 'कुम्भकारेभ्य' इत्यादौ गुणे एत्वे च कृतो एजन्तत्वेन सञ्ज्ञापत्तिः । न च बहिरङ्गत्वं गुणादेः सञ्ज्ञायाः कार्यार्थत्वात्सञ्ज्ञाकार्यस्य तत्त्वेन सञ्ज्ञाया अपि तत्त्वात् लिङ्गसंख्याद्यन्वयित्वेऽप्यव्ययीभावादावित्रात्राप्यापत्तेरिति वाच्यम्। सन्निपातपरिभाषया बाधात् । न च तया सन्निपातविघातकलुको बाधेपि सञ्ज्ञाबाधे मानाभाव इति वाच्यम् । एज्विषये सन्निपातनिमित्तकस्वीयसन्निपातविघातकस्य 'क्ङिति च' (पा०सू०१।१।५) इति निषेधस्य तया निवृत्तावपि 'उपादास्त' इत्यत्र कित्वापत्तेः । किञ्चफल-

---

इतीति* । *तेन* । कृदन्तविशेषणत्वाभावेन । *कृत एजन्तत्वेनेति*। स्थानिवद्भावेन कृत्त्वम् । एजन्तत्वन्तु व्यपदेशिवद्भावेन । यथा चात्राल्विधाविति निषेधाप्रवृत्तिस्तथान्यत्र प्रतिपादितम् ।

यथोद्देशपक्षाभिप्रायेणाह—*न च बहिरङ्गत्वमिति* । लुग्विधायकसूत्रैकवाक्यतया संज्ञाशास्त्रस्य कार्यकालपक्षे प्रवृत्त्यङ्गीकारात्समत्वमित्याशयेनाह—*संज्ञायाः कार्यार्थत्वादिति* । *संज्ञाकार्यस्य* । लुकः। *तत्त्वेन* । सुपसम्बन्धित्वेन । *तत्त्वात्* । बहिरङ्गत्वात् । ननु महासंज्ञाकरणेन लिङ्गाद्यनन्वयिन एवैषाऽव्ययसंज्ञा प्रवर्त्तेत इत्याधये इत्यस्य कथमव्ययसंज्ञाप्राप्तिरत आह—*लिङ्गसंख्येति* । *बाधादिति* । अव्ययसंज्ञाया इत्यादिः । *मानाभाव इति । संज्ञामात्रेण सन्निपातविघाताभावात् । *एज्विषयेति* । एज्विषयसन्निपातनिमित्तकं यदात्वन्तदीयो यः सन्निपात एज्विषयत्वरूप एव तद्विघातकश्च "क्ङिति च" इति निषेधस्तस्य निवृत्तावपीत्यर्थः । "क्ङिति च" इतिनिषेधसूत्रस्य यत्र प्रवृ-

तु तत्सन्नियोगशिष्टे त्वसिद्धिः । एवञ्चोपादिस्तेति स्यात् । तत्र हि क्ङि-
दिति व्यपदेशातिदेश एव इत्वप्रवृत्तिकाले क्ङित्कार्यस्यातिदेशस्याभा-
वात् । तस्मादनया सन्निपातविघातकशास्त्रस्येव तत्तच्छास्त्रप्रवृत्तिनि-
मित्तातिदेशसञ्ज्ञानामपि निवृत्तिरवश्यं वाच्या । साक्षात्परम्परया
वा स्वसन्निपातविघातकस्य स्वयमनिमित्तमिति परिभाषार्थः ।
एतेनात्राकजादि स्यादित्यपास्तम् । अकजाद्येकवाक्यतापन्नाव्यय-
सञ्ज्ञायां गुणादेरसिद्धत्वाच्च । लुगेकवाक्यतापन्ना तु न गुणोदितो
ऽन्तरङ्गा उभयोरपि शब्दतः सुबाश्रयत्वात् ।

---

विस्तत्र नैचः प्रवृत्तिरित्येज्विषयत्वनिषेधविषयत्वयोः परस्परं विरोध
इत्यतो निषेधशास्त्रं परम्परया सन्निपातलक्षणत्वसम्बन्धिसन्निपातविघा-
तकन्तस्य निवृत्तिरस्त्विति समुदायार्थः ।

ननु क्ङिदिति कार्यातिदेशः, अतिदिश्यमानञ्च कार्यन्निषेधरूपमेव तस्य
सन्निपातपरिभाषया निवृत्तौ तत्सन्नियोगशिष्टत्वमपि न भविष्यतीत्यत
आह—*तत्र हीति* । *व्यपदेशातिदेशः* । व्यवहारातिदेशः । कार्या-
तिदेशं वारयति—*इत्वप्रवृत्तिकाल इति* । यदीत्वभवनसमानकालिक-
भवनकर्तृकित्कार्यङ्किञ्चित्प्रसिद्धं स्यात्तदा स्यात्कार्यातिदेशस्तथाऽत्र ना-
स्तीति भावः । *तस्मात्* । अनन्यगतिकत्वात् । *अनया* । सन्निपात-
परिभाषया । *अतिदेशसंज्ञानामपीति* । अत्र बहुवचनं लक्ष्यभेदाभि-
प्रायेण । *साक्षात्परम्परयेति* । साक्षाद्यथा । ग्रामणिकुलमित्यत्रोत्तर-
पदसन्निपातनिमित्तकं ह्रस्वत्वन्तादृशसन्निपातविघातकस्य तुकोऽनिमि-
त्तम् । अतिदेशविषये परम्परया यथा । उपादास्तेत्यत्रैज्विषयसन्निपात-
निमित्तमात्वं स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो य एज्विषयसन्निपातस्त-
द्विरोधित्वेन विघातकः, क्ङिद्व्यपदेशस्तन्निमित्तकप्रवृत्तिको यो निषेधस्त-
स्यानिमित्तं यथा भवति तथा तादृशव्यपदेशस्याप्यनिमित्तम् । संज्ञा-
विषये परम्परया यथा 'आधये' 'चिकीर्षवे' 'कुम्भकारेभ्यः' इत्यत्र विभ-
क्तिसन्निपातनिमित्तकं यद्गुणत्वरूपं कार्यन्तत्स्वप्रवृत्तेः प्राक् स्वनि-
मित्तभूतो यः सन्निपातस्तद्विघातकलुक्प्रयोजकाव्ययसंज्ञाया अप्य-
निमित्तकम् ।

*एतेन* । पूर्वोक्तार्थकल्पनेन । अव्ययसंज्ञाया अप्रवृत्तौ समाधाना-
न्तरमाह—*अकजाद्येकेति* । नन्वेवमेव लुगेकवाक्यतापन्नाया अप्यव्यय-
संज्ञाया वारणसिद्धौ सन्निपातपरिभाषया वारणपरभाष्यविरोधः, प्राप्तेरे-
वाभावादित्यत आह—*लुगेकेति* । *शब्दतः* । शब्दरूपस्य निमि-

अव्ययादा (पा० सू०२।४।८२) "ण्यक्षत्रिये" (पा०सू०२।४।५८) इत्यतो लुगनुवर्त्तते। विहितेति। अङ्गसञ्ज्ञायां विहितत्वांशप्रवेशेन विहितप्रत्ययनिरूपिताङ्गविशेषणादित्यर्थः। आप्सुप्भ्यामाक्षिप्ताङ्गस्याव्ययरूपस्यैव प्रत्यासत्त्या ग्रहणमिति भावः। तेन 'कुम्भकारेभ्य' इत्यादौ सन्निपातपरिभाषया ऽव्ययसञ्ज्ञानिवृत्तिद्वारा लुग्निवृत्तिपरभाष्येण न विरोधः।

अत्युच्चैसाविति। अत्राधिकरणशक्तिप्रधानस्याप्युच्चैश्शब्दस्य वृत्तिविषये शक्तिमत्प्रधानत्वाद् द्वितीयान्ततया ऽत्यादयः क्रान्ताद्यर्थे इति समासे अवयवभूतोच्चैः शब्दादव्ययात्परत्वेन लुक् स्यात्,

---

त्तस्य सत्त्वेन। न च निमित्तपदेन सप्तम्याद्यन्तमेव निमित्तं गृह्यते। लुकि तु सुपः स्थानित्वेनाश्रयणन्न सप्तम्यन्तशब्दोपात्तत्वेनेति वाच्यम्। "अव्ययादाप्सुपः" इति सूत्रे सुपः स्थानित्वेनाश्रयणेऽपि सुपः प्रत्ययतया प्रत्ययग्रहणपरिभाषैकदेशस्य सुप् यस्माद्विधीयते तदादेरित्यस्योपस्थितौ "कृन्मेजन्त" सूत्रैकवाक्यतया सुब्भिन्ने प्रत्यये परे यदव्यवहितं पूर्वं कृदन्तं मेजन्तं ततः परस्य सुपो लुगित्यर्थादेकनिमित्तकत्वं गुणत्वलुकामस्त्येवेत्याशयात्।

वस्तुतस्तु आधये इत्यादावप्यसिद्धत्वेन निर्वाहः सम्भवति। साक्षात्सुपः षष्ठ्यन्तशब्दोपात्तत्वान्निमित्तत्वेनाग्रहणाल्लुगेकवाक्यतापन्नसंज्ञाया अन्तरङ्गत्वात् भाष्यकृता "तूपायस्योपायान्तरादूषकत्वात्" इति न्यायेन प्रयोजनान्तरफलकपरिभाषयापि लक्ष्यसिद्धिर्भवतीत्याशयेन परिभाषैव दोषवारकतयोपन्यस्ता। नन्वत्युच्चैसावित्यादौ लुग्व्यावृत्तये विहितविशेषणत्वमवश्यं वक्तव्यम्। तथा चाधये इत्यादावपि लुङ्न भविष्यतीति तेष्वतिप्रसङ्गमाशङ्क्य सन्निपातपरिभाषया समाधानपरम्भाष्यमनुपपन्नमत आह—*अङ्गसंज्ञायामिति*। अङ्गसंज्ञाविधायकसूत्रे इत्यर्थः।

यद्यपि लुग्विधायकसूत्रमङ्गाधिकारीयन्न भवति तथापि सुपः प्रत्ययत्वात्प्रत्ययग्रहणपरिभाषया सुपो यस्माद्विधानन्तदादेरव्ययात्परस्येति सूत्रार्थो भविष्यति। एवञ्चात्युच्चैसावित्यादौ यस्मात्सुपो विधानं तदादेर्नाव्ययत्वमाधये इत्यादौ तु विधानकाले यद्यपि नाव्ययत्वं तथापि यस्माद्विधानन्तदादेरुत्तकालिकाव्ययत्वमाश्रित्य प्राप्तस्य लुकः सन्निपातपरिभाषया वारणमुचितमेवेति भावः। ननु स्वरादीनां यद्यपि 'स्वः पश्य' इत्यादौ कर्मार्थकत्वसम्भवेन द्वितीयैकवचनान्तत्वं सम्भवति। तथाप्यधिकरणशक्तिप्रधानाव्ययस्य न कर्मार्थकत्वसम्भव इत्यत्युच्चैसावित्यादौ

समुदायस्य तु नाव्ययत्वं लिङ्गाद्यन्वयित्वादित्यभिमानः। समुदा-
यस्यापि तत्त्वमाशङ्क्य समाधत्ते—यद्यपीति। तदन्तेति। शब्द-
स्य विशेष्यत्वात् 'प्रयोजनं सर्वनामाव्ययसञ्ज्ञाया'मिति वाचनिक-
तदन्तविधिरिति भावः।

न गौणे इति। अयं भावः। सामानाधिकरण्यसंबन्धेन लिङ्गा-
द्यनन्वय्यर्थबोधकत्वविशिष्टाव्ययपदत्वत्त्वेन ह्यव्ययपदं बोधकमिति ता-
दृशमहासञ्ज्ञाकरणात्तादृशार्थानां गणे ऽनुकरणावश्यकत्वे इतरेषाम-
नुकरणे मानाभावेन समुदायस्य नाव्ययत्वमिति भावः। वस्तुतोऽ-
त्रार्थस्य प्रधानाप्रधानन्यायेन सर्वनामसञ्ज्ञासाहचर्येण च प्रसिद्धा-
न्तरङ्गपदान्तरानपेक्षानुपसर्जनीभूतस्यैव लिङ्गाद्यनन्वयिनो ग्रहणेन न

---

समासानुपपत्तिरत आह—*अधिकरणेति*। *अव्ययत्वमिति*। तद-
न्तविधिना प्राप्तमपीति शेषः। *अभिमान इति*। वक्ष्यमाणोऽभिप्रायः।
*वाचनिक इति*। विशेष्यस्याप्रक्रान्तत्वेऽपि प्रयोजनं सर्वनामाव्ययसं-
ज्ञायामितिवचनबलाच्छब्दस्वरूपस्य विशेष्यत्वेऽपि तदन्तविधिर्भवतीति
भावः। *तादृशार्थानामिति*। लिङ्गाद्यनन्वय्यर्थानामित्यर्थः।

*आवश्यकत्व इति*। यदि सर्वस्याप्यनुकरणमेतत्स्यात्तदा सर्वेषु
विवेचितार्थभेदस्य विरहाच्छब्दस्य विपर्यासरूपाप्रमितिजनकत्वं स्यात्त-
च्चानुचितमिति भावः। यदुक्तमभिमान इति तत्सूचितङ्कथयन्स्वसिद्धा-
न्तमाह—*वस्तुत इति*। *अत्रार्थस्य*। महासंज्ञाबललब्धस्य। ननु प्र-
धानाप्रधानन्यायो ह्यर्थनिर्देशविषयः। यथा "पुमान् स्त्रिया" इत्यत्र पुं-
शब्दस्य स्त्र्यर्थकस्य च निर्देशः। अत्र हि ब्राह्मणवत्सा ब्राह्मणीवत्सश्चे-
त्येवं सहोक्तौ प्रधानाप्रधानन्यायेन प्रधानस्त्रीपुंसभिन्नाप्रधानस्त्रीपुंसकृत-
स्यापि विशेषस्य सत्त्वादेकशेषो न भवति। प्रकृते तु स्वरादिनिपातेति-
शब्दपरं नत्वर्थपरमिति न प्रधानाप्रधानन्यायावसर इत्यत आह—*सर्वना-
मसंज्ञासाहचर्येणेति*। साहचर्यमत्र सादृश्यम्। तत्र यथा सर्वनामेति-
महासंज्ञाकरणेन विलक्षणोऽर्थः क्लृप्तस्तथाऽत्राप्यव्ययमितिमहासंज्ञाकर-
णेनैतादृशोऽर्थः कल्प्यते इति भावः।

*प्रसिद्धान्तरङ्गेति*। प्रसिद्धश्चान्तरङ्गश्चेति समासङ्कृत्वा प्रसिद्ध-
त्वादिस्वव्याख्यानभूतं यत्पदान्तरानपेक्षानुपसर्जनभूतमिति तेन कर्म-
धारयः समासः। अत्र प्रसिद्धमित्यनेन संज्ञाशब्दव्यावृत्तिः संज्ञाशब्दा हि
परसंज्ञिबोधनाय प्रयुज्यते तदा 'चैत्रनामकोऽय'मित्येवंरीत्या प्रयोगो भव-
ति तथात्रापि स्वरनामक इत्येव प्रयोग इति पदान्तरसापेक्षता स्फुटैव।

समुदायस्य नाव्ययावयवस्य सञ्ज्ञा । अत एव भाष्ये सर्वनामसञ्ज्ञासूत्रस्थोपसर्जनप्रतिषेधानुवृत्त्या 'अत्युच्चैसौ' इत्यादावव्ययत्वाभावमुक्त्वा तत्प्रत्याख्यानरीत्यैवात्राप्येतत्प्रत्याख्यानमुक्तम् । एवञ्च विशिष्टविशेषणमङ्गाक्षेपो वा व्यर्थ एव । अव्ययात्परत्वस्याप्यभावात् । 'उच्चैरौ' 'उच्चैराभ्या'मित्यादेरभिधाने तु न मानम् । अत एव भाष्ये एतन्नोक्तम् ।

अलिङ्गत्वादिति । नन्विदं 'सदृशं त्रिष्वि' ति विरुद्धम् आह–लिङ्गत्यादि । अयं भावः । यथोपक्रमोपसंहाराभ्यां ब्रह्मपराया अप्यस्याः श्रुतेर्भाष्यप्रामाण्यादत्रोपसंहारः, तथा तत्प्रामाण्यादेव लिङ्गाद्यभावपरतापीति विभक्तिवचनशब्दौ कारकसंख्यापरौ, प्रत्ययपरत्वेऽन्यतरवैयर्थ्यापत्तेः । लिङ्गेष्वित्यादिविषयसप्तमी । तत्तद्विषये

---

अन्तरङ्गमित्यस्य व्याख्यानमनुपसर्जनीभूतमिति । उच्चैः शब्दो हि केवलः प्रयुक्त ऊर्ध्वदेशनिष्ठाधिकरणतां प्रतिपादयति तस्य स्वार्थमात्रप्रतिपादकतयाऽन्तरङ्गत्वम् । अत्युच्चैसावित्यादौ तु यथा वृत्तिघटक राजपुरुष इतिसमासावयवस्यैकार्थीभावबलाद्राजशब्दस्य राजसम्बन्धिपुरुषप्रतिपादकता पुरुषशब्दस्य च राजसम्बन्धिपुरुषप्रतिपादकता तथोच्चैःशब्दस्याप्यूर्ध्वदेशाभिन्नाधिकरणकर्मकातिक्रमणकर्तृप्रतिपादकतया बहिरङ्गत्वमिति भावः ।

एतेन प्रसिद्धानुपसर्जनीभूतेत्येव सिद्धेऽधिकविशेषणद्वयोपादानमनर्थकमिति शङ्काया निरासः । अव्ययात्परयोराप्सुपोरित्यर्थे उच्चैरौ उच्चैराभ्यामित्यत्रातिप्रसङ्गशङ्कायामाह—*उच्चैरावित्यादि* । अततेडप्रत्यये टिलोपे प्रथमे अशब्दस्य द्विवचनेन सहैकादेशे परादिवद्भावात्सुप्त्वम् तस्य द्वितीये तादृशादशब्दाट्टापि तथैव आप्त्वाल्लुक् प्राप्नोति । अथवा प्रथमे वासुदेववाचकादशब्दाद्द्विवचने द्वितीये इदंशब्दस्याभ्यां ब्राह्मणाभ्यामित्यस्यैकदेशे आभ्यामित्यस्मिन्नातिप्रसङ्गशङ्का ॥ *अत एव* । मानाभावादेव । *नन्विदमिति* । आलिङ्गत्वमित्यर्थः । *अत्रोपसंहार इति* । अव्यय उपसंहार इत्यर्थः । *प्रत्ययपरत्वे* । विभक्तिसंज्ञकप्रत्ययपरत्वे कारकशब्दश्च कारकशक्तिपरः । यद्वा कारकस्य तादात्म्येनाभावोऽत्र विवक्षितः । *अन्यतरेति* । विभक्तिवचनशब्दयोरन्यतरेत्यर्थः । *तद्विषय इति* । लिङ्गविषय इत्यर्थः ।

स्वरादीनामत्र लिङ्गाभाववत्त्वेन सादृश्योक्तिर्न सर्वत्रादिपदबोध्ये किंत्वव्ययीभावातिरिक्ते तत्र नपुंसकत्वस्य विशिष्य विधानादित्याह–*अ

सादृश्यञ्च लिङ्गाद्यभावाश्रयत्वेन । लिङ्गाभावेन सादृश्यमव्ययीभावातिरिक्तविषये तस्य लिङ्गयोगसत्वात् । संख्याभावस्तु सर्वसाधारणः । तदभावादिसादृश्यादेव यद्विविधं रूपं तन्न प्राप्नोतीत्यर्थः । प्रसङ्गादाप्वष्टीति । वशेश्छान्दसत्वेनेह प्रयोगश्चिन्त्यः । भागुरिराचार्यः । आपिसाहचर्यादवेऽप्यादेरकारस्यैव लोपः । इदं भाष्ये न दृश्यते । निशूदिशोरिगुपधलक्षणे के ऽन्तत्वादेव टाप् । क्विनि, दिगित्यपि । अत एव "ङ्याप्प्रातिपदिकात् (पा० सू० ४।१।१) इति सूत्रे "आप्ग्रहणं नार्थमकारान्ताट्टाप् तत्रान्तवद्भावात्प्रातिपदिकत्वेनैव सिद्धम् । यस्तर्ह्यनकारान्तात् 'क्रुञ्चा' 'उष्णिहा' 'देवविशे'ति, अत्राप्याकारान्तादेव क्रुञ्चानालभेते उष्णिहककुभौ देवविशमिति । अन्त्ये "कप्प्रत्यय एवं विषयः" इत्युक्त्वा 'बहुराजे' ति डाबन्तार्थमाप्ग्रहणमिति भाष्ये उक्तं सङ्गच्छते तस्माद्वाचेत्यसाध्वेवेति शिवम् ।

इति अव्ययानि ॥

---

भावेनेत्यादि* । *तदभावादिसादृश्यादिति* । तदभावादिकृतसादृश्यादित्यर्थः । यद्विविधं रूपमिति अस्य लिङ्गसम्बन्धकृतमित्यादिः । *प्रसङ्गादिति* । अव्ययनिरूपणस्य प्रक्रान्तत्वात्तेषु अवाप्योः प्रवेशादेतयोः स्मरणे सति निरूपणमेतयोरावश्यकमिति स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गनिर्वाहः *चिन्त्य इति* । केचित्तु 'छान्दसा अपि क्व चिद्भाषायाम्भवन्ति' इत्याश्रित्य समादधुः । ननु कथं वाचेत्यादिप्रयोगाणां सिद्धिरत आह—*निशा दिशोरिति* ।

*अत एव* । एतद्वचनसाध्यहलन्तप्रकृतिकटाबन्तस्य प्रयागाभावादेव । अस्य भाष्योक्तमित्यत्रान्वयः । *अन्त्ये* । देवविशमित्यत्र । *एवं विषय इति* । तत्रैव भाष्ये यस्तर्ह्यनकारान्तात् 'क्रुञ्चा' 'उष्णिहा' 'देवविशा' इति तत्र हलन्ताट्टापि कृते सुब्रुत्पत्तिराब्ग्रहणप्रयोजनमित्युक्त्वा अनाप्यकारान्तान्ते प्रवृत्तिर्लक्ष्यते । *क्रुञ्चानालभेति* । उष्णिहककुभौ देवविशाश्च मनुष्यविशाश्चेति । ततः शङ्कितन्नास्ति विशेषः अकारान्तादम्प्रत्ययौ सत्यां व्यञ्जनान्ताद्वेति । स्वरे विशेषः । यदि क्विबन्तोऽयन्तदा कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तात्परविभक्तेरनुदात्तत्वम्भवति । यदा तु इगुपविसुजादित्वात्कान्तत्वन्तदा थाथादिस्वरेणान्तोदात्तात्परविभक्त्या सह एकादेशपदमन्तोदात्तमिति । तस्मात्क एष एवं विषयः । *तस्मादिति* । प्रयोगकानामन्यथासिद्धत्वात् ॥

इत्यव्ययप्रकरणम् ।

स्त्रियाम् (पा०सू०४।१।३) (१)अचेतनखट्वावृक्षादिसाधारण लिङ्गन्तु सत्त्वादीनां गुणानामुपचयापचयस्थितिरूपं क्रमेण पुंस्त्री

नमस्कुर्वे जगद्वन्द्यं सीतापतिमजं विभुम् ॥
यं ध्यात्वा सिद्धिमखिलाम्प्राप्नुवन्ति महर्षयः ॥ १ ॥

*स्त्रियाम्* । एतत्सूत्रं व्याख्यातुम्भाष्ये शङ्कितम् 'स्त्रियामित्युच्यते का स्त्री नाम' इति । अयमभिप्रायः । अयं शब्दो न क्वचिदर्थविशेषे शास्त्रे संकेतितोऽतः पारिभाषिकमर्थमभिधातुन्नालम् । नाप्ययं जाति शब्दः । 'रमा' 'मानुषी' 'खट्वा' गवादिसाधारण्येन प्रयोगदर्शनात्सर्वसा धारणस्यानुगतसंस्थानस्याभावेन तद्व्यङ्ग्यत्वस्य तत्रासम्भवात् । नापि लोके यत्प्रसिद्धं शेफस्यवयवे समवेतत्वे सति प्राणित्वम् । योनिसमवे तत्वे सति प्राणित्वम् । तदुभयासमवेतत्वे सति प्राणित्वं क्रमेण पुंस्त्व स्त्रीत्वन्नपुंसकत्वमिति घटखट्वाज्ञानादिसाधारणस्य पुंस्त्वादिव्यवहा स्यानुपपत्तेरत आह—*अचेतनखट्वावृक्षादिसाधारणमिति* ।

*सत्त्वादीनामिति* । सत्त्वरजस्तमसां गुणानामुपचयः पुंस्त्वम् । ते षामपचयः स्त्रीत्वम् । साम्यञ्च क्लीबत्वमित्यर्थः । साम्यमेव च स्थितिप नोच्यते । तदुक्तम्भाष्ये-'तटे सर्वलिङ्गानि दृष्ट्वा कोऽध्यवस्यति । अ यम्पुमान् । इयं स्त्री । इदन्नपुंसकमिति । तस्मान्न वैयाकरणैः शक्यं लौ किकं लिङ्गमास्थातुम् । अवश्यङ्कश्चित्स्वकृतान्त आस्थेयः । कोऽसौ स्व कृतान्तः । संस्त्यानप्रसवौ लिङ्गमास्थेयौ । किमिदं संस्त्यानप्रसवाविति ।

संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप् प्रसवे पुमान् ।

— इति । अत्र सांख्यमतावष्टम्भेन स्वकृतान्त इत्युक्त्या सांख्यशास्त्रानु सारित्वं व्याकरणस्येति सूचितवान् । अत्र संस्त्यानप्रसवशब्दाभ्यां त तीयाऽवस्थापि लक्ष्यते । संस्त्यानं तिरोभावः । एतदेवापचयशब्देनो च्यते । यद्यपि संस्त्यानं संघः स्त्यायेते शुक्रशोणिते यस्यामितिव्युत्पत्त्या लोकेऽपि स्त्रीशब्दो ड्रट्प्रत्ययान्त एतस्यैवार्थस्य प्रतिपादकः । तथापि स्त्रीत्वस्य खट्वादिसाधारण्योपपत्तये तिरोभावपरत्वमेव तस्य स्वीकृ तम् । एव सूतेः सबित्यनेन सूङ्धातोरौणादिकां म्सुन्प्रत्ययः सप् प् इत्यादेशो ह्रस्वश्चेत्येवंरीत्या पुमस्शब्दो व्युत्पादितः सूतेऽपत्यम तीत्यर्थेन यद्यपि प्राणिनि पुरुषे एव पुमस्शब्दस्य शक्तिर्लभ्यते, तथापि तस्य वृक्षादिसाधारण्योपपत्तये प्रवृत्तिराविर्भावरूपा पुमानित्यनेनोच्यते । एवं यदा न तिरोभावो न वा प्रवृत्तिः किन्तु साम्यावस्था सैव स्थिति नपुंसकशब्देनोच्यते । ततः पुनः शङ्कितम् 'कस्य पुनः संस्त्याने स्त्री

(१) ननु स्तनकेशवती स्त्री स्यादित्यादिलौकिकलिङ्गस्य अचेतन खट्वादिषु अभावेन तत्र भावात् तत्र खट्वादिशब्दे टाप्प्रत्ययाद्यनुपपत्तिरित्यत आह-*अचेतनेति* ।

पुंस्त्वकारुण्यम् 'एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्व'मिति भाष्योक्तेरर्थनिष्ठं केवलान्वयि । इयं व्यक्तिरिदं वस्त्वयं पदार्थ इति त्रिविधव्यवहारस्य पदार्थमात्रे सत्त्वात् । केनचिच्छब्देन किञ्चिद्वस्तु एकैकविशिष्टमेव केनचित्पर्यायेण लिङ्गद्वयविशिष्टं केन चिल्लिङ्गत्रयविशिष्टमिति लिङ्गानुशासनादितो निर्णयम् । तत्र ।

स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः ।

---

प्रवृत्तिर्वा पुमानिति । गुणानाम् । केषाम् । शब्दस्पर्शरूपरसगन्धानाम् । सत्त्वरजस्तमांसि गुणाः तेषाम्परिणामरूपा एव तेभ्योऽभिन्नाः शब्दादयः पञ्च गुणाः । सर्वाः पुनर्मूर्त्तय एवमात्मिकाः । गुणसमुदायो द्रव्यम्' । सर्वस्य जगतः सुखदुःखमोहरूपतया तत्कारणत्वेन सत्त्वादिरूपत्वङ्कल्प्यते । ततः सर्वपदार्थव्यापित्वं पुंस्त्वादीना दर्शितम् । 'प्रवृत्तिः खल्वपि नित्या' । 'अत्र प्रवृत्तिरित्यनेन लिङ्गसामान्यलक्षणं निदर्शितम् । नित्या । सार्वदिकत्वात्सार्वत्रिकत्वाच्च । सत्त्वादीनामाविर्भावादिरूपः प्रवृत्तिशब्दवाच्यो नित्यः परिणाम' इति कैयटः ।

यद्यपि पुरुष आत्मपदव्यवहार्यो नित्यो परिणामी, तथापि भोक्तृत्वाप्रकृतिधर्मापन्न इव भवति । अत एव पुरुषश्चितिश्चैतन्यमिति लिङ्गत्रययोगः । भोक्तृत्वावस्थायाम्भोग्यवस्तुशबलितमेव चैतन्यम्प्रतीयते तदेव शब्दगोचरम् । यथा 'गच्छति पुरुष' इति क्रियायोगस्तद्वत् । 'नहीह कश्चिदपि स्वस्मिन्नात्मनि मुहूर्त्तमप्यवतिष्ठते वर्द्धते वा यावदनेन वर्द्धितव्यम् । अपायेन वा युज्यते । तच्चोभयं सर्वत्र । यद्युभयं कुतो व्यवस्था । विवक्षातः । संस्त्यानविवक्षायां स्त्री । प्रसवविवक्षायां पुमान् । उभयोरविवक्षायान्नपुंसकम् ' इति । एतेन प्रघट्टकेन शास्त्रीयलिङ्गस्य केवलान्वयित्वन्निदर्शितम्भवति—*अर्थनिष्ठमिति* । अत एव "स्वमोर्नपुंसकात्" इति सूत्रभाष्ये 'नपुंसकादित्यनेनासन्दिग्धेनार्थग्रहणेन भवितव्यम्, न हि नपुंसकन्नाम शब्दोऽस्ति' इत्युक्तम् । अर्थनिष्ठत्वञ्च तादात्म्येन ।

यद्यपि शब्दार्थयोरपि तादात्म्येन 'तदभिन्नाभिन्नस्य' इतिन्यायेन शब्दनिष्ठत्वमपि सम्भाव्यते तथापि तादात्म्यस्य भेदाभेदरूपतयाऽर्थाभेदेन प्रतीयमानत्वमेवोक्तभाष्यात् कल्प्यते । पुंलिङ्गः शब्द इत्यादिव्यवहारस्तु वाच्यवाचकयोरभेदाध्यवसायात् । अथवा मतुप्प्रत्ययं कृत्वा 'गुणवचनेभ्य' इति लुक् । *केवलान्वयीति* । अत्र केवलान्वयित्वमन्योन्याभावप्रतियोगितानवच्छेदकत्वम् । तदेवोपपादयति—*इयमित्यादिना* अत्र त्रयाणामपि लिङ्गानां केवलान्वयित्वे दारशब्देन स्त्रीत्वस्याप्रशब्देन पुं

इत्यादि लौकिकलिङ्गसम्भवे शास्त्रीयं कार्यं शास्त्रीये उक्त एव। तत्सम्भवे तु शास्त्रीयविशिष्टे लौकिके शास्त्रीयमपि शब्दतो बुद्धौ तथा ऽनुभवात्। उपचयापचययोः स्थितेरपि सत्त्वेन तन्मात्रविव- क्षायां 'सामान्ये नपुंसकम्' इति प्रवाद इत्यन्यत्र विस्तरः।

अत इति। वर्णग्रहणात्तदन्तविधिस्तदाह-अकारान्तस्य चेति। वाच्यं यत् स्त्रीत्वमिति। तद्वाच्यार्थगतं यत्तद्वाच्यं स्त्रीत्वमित्यर्थः। एवं व्याख्याने फलमग्रे स्फुटम्। तत्र द्योत्ये इति। प्रत्ययार्थत्वे हि तस्य विशेष्यत्वापत्तिः। द्योत्यस्य तु विशेषणत्वमेवेति स्पष्टमाकरे। वागादिषु विनापि टाबादिकं तस्य बोधाच्च। अत एव 'व्यावक्रोशी' इत्यादौ "कर्मव्यतिहारे णच् स्त्रियाम्" (पा०सू०३। ३। ४३) इति णचि "णचः स्त्रियाम्" (पा०सू०५।४।१४) इत्यञि ...

---

स्त्वस्य ज्ञानशब्देन स्त्रीत्वस्यापि प्रतिपादनापत्तिरत आह—*केन चि- च्छब्देनेति*। *तत्सम्भवे त्विति*। यथा "पशुना यजेत" इत्यत्र लौ- किकपुंस्त्वविशिष्टस्य शास्त्रीयलिङ्गस्य शब्दसंस्कारकत्वमिति न स्त्रिया यागाङ्गत्वम्। पशुशब्दो हि स्त्रीलिङ्गोऽपि "पश्वानता पुम्" इति दर्शनात्।

अजादिशब्दवाच्ये स्त्रीत्वे टाबितिमूलोक्तार्थस्यैव स्वीकारे तुरगीत्यत्र टाप्प्राप्नोति। अजादिष्वश्वशब्दस्य पाठेनाऽश्वशब्दवाच्यस्त्रीत्वस्य तुरग- शब्दार्थे सत्त्वादत आह—*तद्वाच्यार्थगतमिति*। एवमुक्तौ तु तद्वा- च्यार्थस्य यादृशविशेषणविशिष्टस्य तच्छब्दजन्योपस्थितिविषयता ता- दृशविशेषणावच्छिन्नतद्विषयताविशिष्टं यत्स्त्रीत्वमिति विवक्षितम्। श- ब्दादुपस्थितिश्चार्थस्य शब्दप्रकारिकाऽर्थविशेष्यिका जायते। अश्वशब्द- जन्योपस्थितिविषयताविशिष्टं यत्स्त्रीत्वं तदश्वशब्दसामानाधिकरण्येन भासते, न तु तुरगशब्दसामानाधिकरण्येन। तथा च तत्तच्छब्दसामा- नाधिकरण्येन भासमानं यत्तच्छब्दवाच्यस्त्रीत्वन्तस्मिन्द्योत्ये तत्तच्छब्- दाट्टाबितिफलितम्।

*अग्रे*। मूले। *तस्य*। स्त्रीत्वस्य। *विशेष्यत्वापत्तिरिति*। 'प्रकृतिप्रत्ययौ सहार्थम्बूतस्तयोः प्रत्ययार्थः प्रधान'मितिन्यायात्। द्योत्य- त्वे तु न विशेष्यत्वापत्तिः प्रकृतिप्रत्ययावितिन्यायस्य वाचकविषयकत्वा- त्। लिङ्गस्य द्योत्यत्वे युक्तिमाह—*वागादिष्विति*। *अत एव*। स्त्री- त्वस्य द्योत्यत्वादेव। ननु द्योतकविषयेऽप्युक्तार्थानामितिन्यायस्य...

स्त्रीसिद्धिः । 'व्यतिलुनीत' इत्यादौ 'द्विर्बद्धं सुबद्धं भवति' इति न्यायेन द्योतकसमुच्चयस्य दृष्टत्वात् । टाप्स्यादिति । स चाधिकाप्रातिपदिकादेव, तच्च सन्निधानादजादिरूपमेव ।

नन्वजादिष्वकारान्तपाठो व्यर्थोऽत इत्येव सिद्धेरत आह—अजाद्युक्तिरिति । येन नाप्राप्तिन्यायादिति भावः । एतेन(१) ङीपि कृतेऽपि लिङ्गविशिष्टपरिभाषया टाप् चरितार्थ इत्यपास्तम् । ननु कुतो नेत्यत आह—*व्यतिलुनीत इति* । स्त्र्यादिशब्दा धर्मपरा घर्मिपरा अपि । अतः स्त्रियामित्यधिकारेऽपि स्त्रीत्वे द्योत्ये इत्युक्तिर्न विरुध्यते ।

तदुक्तम्भाष्ये । 'स्त्रियामिति । स्त्र्यर्थाभिधाने चेट्टाबादयो भवन्ति द्विवचनबहुवचनयोरनुपपत्तिः । कुमार्यौ कुमार्यः । किङ्कारणमेकत्वात्स्त्रीत्वस्य" । यद्यपि तत्तदर्थभेदेन तत्तत्सम्बन्धिविशिष्टं स्त्रीत्वमपि भिद्यते तथापि शब्दभेद एव स्त्रीत्वस्य भेदक इत्यभिप्रायेणेदम् । अनेकप्रत्ययानुपपत्तिश्च गार्ग्यायणी कारीषगन्ध्या इत्यादौ । "एकोऽयमर्थः स्त्रीत्वन्नाम तस्यैकेन प्रत्ययेनोक्तत्वाद् द्वितीयस्य प्रयोगेण न भवितव्यमुक्तार्थानामप्रयोग" इति । ततः सिद्धान्तितम् । "स्त्रियाः प्रातिपदिकविशेषणत्वस्वार्थे टाबादय" इति । ननु ये नित्यं टाबन्ता एव प्रयुज्यन्ते तेषामयनेनैव साधुत्वमन्वाख्येयम् । तत्र चेदकारान्तस्य काचिच्छक्तिनिर्णयः स्याच्चदा टाप्समभिव्याहारेऽधिकस्य स्त्रीत्वस्याभिव्यक्त्या टापो द्योतकत्वनिर्णयो भवेत् । न तथा खट्वामालादिष्वत्रधारयितुं शक्यते । न च 'अतिखट्व' 'अतिमाल' इत्यत्र तथा दृश्यत एवेति वाच्यम् । तत्राकारान्तस्यैव ह्रस्वत्वन्न तु स्वतोऽदन्तत्वं तस्येति चेन्न । 'सर्वेषां स्वरवर्णानुपूर्वीज्ञानार्थं उपदेशः कर्त्तव्यः शशः षष इति मा भूत् । पलाशः पलाष इति मा भूत् । मञ्चको मञ्जक इति मा भूत् । तस्मात्सिद्धमेतद्भवति" इति भाष्येण क्वचिद्वर्णविशेषे खट्वमालयोः पाठकल्पनेन समाधानात् । 'सर्वं नामधातुजमाह' निरुक्ते, व्याकरणे 'शकटस्य च तोकम्' इति भाष्याक्षरेण समाधानाच्च । एवं पञ्चभिः खट्वाभिः क्रीतः पटः 'पञ्चखट्वः' इत्यादौ टापो लुक्यदन्तताया दर्शनाच्चेति ।

नन्वजादीनामुक्तिर्ङीपो ङीषश्च बाधनायेत्युक्तं तच्चायुक्तमजादिशब्दोपादानेन विधीयमानस्य टापो ङीषि कृतेऽपि चारितार्थ्यादत आह—*नेति* । ननु वक्ष्यमाणज्ञापकेन तदन्तविधावजादिभ्यस्तदन्तेभ्य-

(१) एतेनेति । येननाप्राप्तिन्यायेन बाधकत्वकल्पनेनेत्यर्थः । उत्सर्गप्रवृत्तेः प्राक् तदुत्तरं वा तच्चारितार्थ्ये तेन न्यायेन बाधकल्पनामिति भावः ।

प्रत्ययविधौ पञ्चम्या युक्तत्वेनाजादिभ्यष्टाप्स्त्रीत्वे द्योत्ये इत्यर्थ एव युक्तः। स्त्रीत्वञ्च प्रत्यासत्त्या प्रकृत्यर्थनिष्ठमेवेत्यत आह-अजादिभिरिति। व्याख्यानादेतत् षष्ठ्यन्तमिति भावः(१)। अन्यत्र स्त्रियामिति। तदन्तस्यापि विशेषणं व्याख्यानादेव। एवञ्च पञ्चसुत्वानो यस्यां सा 'पञ्चसुत्वरी' इत्येव।

पञ्चाजीति। पञ्चानामजानां समाहार इति द्विगौ 'अकारान्तोत्तरपद' इति स्त्रीत्वे 'द्विगोः' (पा०सू० ४।१।२१) इति ङीप्। अजादिभ्य इति व्याख्यानेऽमहत्पूर्वग्रहणेनानुपसर्जनाधिकारेण च 'वनो र च' (पा०सू०४।१।७) इत्यत्रेवात्रापि तदन्तविधिसम्भव इति भावः। न च तदन्तविधावपि(२) श्रुतत्वात्स्त्रियामित्यजादीनामेव विशेषणमिति वाच्यम्। अनुपसर्जनाधिकारेण तदन्तग्रहणस्येव स्त्रि-

श्च टाप् स्त्रीत्वे द्योत्य इत्यर्थः स्यात्तथा च पञ्चाजीत्यत्र दोषः स्यादत आह-व्याख्यानादिति*। एवञ्च सूत्रेऽजादीति लुप्तषष्ठ्यन्तम् पृथक् पदम्। व्याख्यानादित्यस्य लक्ष्यदर्शनमूलकादित्यादिः। एवञ्च प्रकृतसूत्रे स्त्रियामित्येतदजादीत्यस्यैव विशेषणम्। *अन्यत्र*। "वनो र च" इत्यादौ *व्याख्यानादिति*। वक्ष्यमाणज्ञापकमूलकादित्यादिः। तत्फलमाह-*एवञ्चेति। *पञ्चसुत्वरीति*। "सुयजोर्ङ्वनिप्"। "वनो र च" इति सूत्रे विहितयो ङीब्रयोर्विकल्पेन विधायकम् "बहुव्रीहौ वा" इतिवार्त्तिकमिति केषाञ्चिन्मतेनेदम्। वस्तुतो वक्ष्यमाणरीत्यात्रानुपधालोपित्वान्न तेन ङीप्। एवञ्च बहुधीवरीत्यस्योपलक्षणमिदम्।

नन्वजादीत्यस्य पञ्चम्यन्तत्वेऽपि पञ्चाजीत्यत्र टाप् न प्राप्नोति। "यस्मिन्विधिः... सप्रत्ययविधौ" इति "ग्रहणवता" इति परिभाषया वा तदन्तविधिनिषेधादत आह-*अजादिभ्य इतीति*। *वनो र चेत्यत्रेति*। अत एवातिधीवरी सिध्यति। *अजादीनामेवेति*। एवं सति स्त्रियां यदजादि तस्मात्तदन्ताद्वेत्यर्थेऽपि नात्र टाप्प्राप्तिरिति भावः। *अनुपसर्जनाधिकारेणेति*। तद्धि बहुकुरुचरेत्यत्र ङीपोऽनुत्पत्तये क्रियते। यदि स्त्रियामित्यजादेस्तस्यैव विशेषणं स्यात्तदा टितस्तत्र स्त्रियां वृत्त्यभावात्सोऽनर्थकः स्यादिति भावः।

(१) व्याख्यानादिभि*। "अजादिभिः स्त्रियां विशेषयिष्यामः। अजादीनां या स्त्री" इति भाष्ययुक्तत्वादिति भावः। भाष्ये या स्त्रीत्यस्य यत्स्त्रीत्वमित्यर्थो बोध्यः। *एतादिति*। अजादित्वेनेत्यादित्यर्थः। *षष्ठ्यन्तमिति*। लुप्तषष्ठ्यन्तमित्यर्थः।

(२) श्रुतत्वादिति*। 'श्रुतानुमितयोः श्रुतसम्बन्धो बलवान्' इति न्यायादित्यर्थः।

ग्रामित्यस्य तदन्तविशेषणत्वमित्यर्थस्यापि बोधनात्। अत्र हीति। समासे ऽजशब्दसत्त्वेऽपि समाहारनिष्ठं स्त्रीत्वं समुदायवाच्यं नाऽजशब्दमात्रवाच्यम्। सामर्थ्येनाजादिमात्रवाच्यस्त्रीत्वस्यैव ग्रहणादिति भावः। चटकेति। क्षिपकादित्वादित्वं न। ह्रस्व इति। अङ्गसंज्ञाभावात्तु भस्त्राफलेत्येव 'सम्भस्त्रेति' 'सदच्' इति मूलान्नञ' इति च(४) 'पाककर्ण' (पा०सू०४।१।६४) इति प्राप्तस्य ङीषो बाधनार्थम्। एवञ्च 'श्वेतफला' 'त्रिफला' इत्यप्यत्र बोद्ध्यम्।

शूद्रा चेति। जातिलक्षणङीषोपवादः। जातिश्चेद्वाच्येत्यर्थः। 'पञ्चशूद्री' इति समाहारे जातिवाचकत्वाभावात्, शूद्रशब्दार्थगतस्त्रीत्वाभावाच्च न दोषः। जातिश्चेदित्यस्य कृत्यमाह—पुंयोगे त्विति।(५)न चात्र गौणत्वम्। सदृशलाक्षणिकस्यैव गौणत्वात्।

*सामर्थ्येनेति*। अजादिशब्दवाच्यं यत्स्त्रीत्वमिति व्याख्यानसामर्थ्येनेत्यर्थः। तदुक्तम्भाष्ये। तादन्तविधिज्ञापनानन्तरं "यद्येतज्ज्ञाप्यते पञ्चाजी" 'दशाजी' अत्रापि प्राप्नोति। नैष दोषः। अजादिभिरत्र स्त्रियं विशेषयिष्यामः। अजादीनां या स्त्री" इति। अत्र कैयटः। 'अजादिप्रातिपदिकाभिधेयसमवेतस्त्रीत्वमिह गृह्यते' इति 'ये तु अनुपसर्जनाधिकारे ये उपाचास्तेषामेव विशेषणं स्त्रियाम्' इति। एवं सति बहुकुरुचरेत्यत्र प्राप्तेरभावेनानुपसर्जनाधिकारो न कार्यः। एवम् "अजाद्यत" इति सूत्रे "स्त्रियाम्" इत्यस्याजादीत्यस्य पञ्चम्यन्तत्वेऽप्येतद्विशेषणत्वमिति पञ्चाजीत्यत्र न प्राप्तिः। "वनो र च" इत्यत्र तु तदन्तविशेषणत्वमपीति वदन्ति। तेषामर्धजरतीयत्वस्वीकारः स्पष्ट एव।

"शूद्राचामहत्पूर्वा" इत्यत्र महच्छब्दस्यानुकरणत्वाल्लौकिकार्थानभिधायकतयात्वन्न। *जातिश्चेदिति*। स्वप्रवृत्तिनिमित्तभूता जातिश्चेदित्यर्थः। एतत्फलमाह—*पञ्चशूद्रीतीति*। *जातिवाचकत्वाभावादिति*। पञ्चव्यक्तिविवक्षायामेव समासविधानात्। एवञ्च यत्र शूद्रत्वजातिं प्रवृत्तिनिमित्तीकृत्य शूद्रशब्दस्य वाच्यार्थे प्रवृत्तिस्तत्रैव टाप्। *पुंयोगे त्विति*। आरोपितशूद्रत्वपुरस्कारेण स्त्रियां बोधेऽपि न शूद्रत्वजातेर्मुख्यः सम्बन्धोऽत्र विवक्षित इति भावः। *न चात्र गौणत्वमिति*। न च पद-

(१) *सदिति। मूलान्नञ इति चेति*। अत्र वार्तिकद्वयमितिशेषः। तच्च बाधनार्थमित्यत्रान्वयि *सम्भस्त्रेति*। अजाद्यन्तर्गतोक्तगणवार्तिकद्वयस्य पाककर्णेति प्राप्तङीषो बाधकत्वे चेत्यर्थः।

(२) ननु अमहत्पूर्वग्रहणसामर्थ्यात् प्रत्ययविधावपि तदन्तविधौ पञ्चशूद्रशब्दादनेन टाप् स्यादिति चेत्, किं समुदायार्थनिष्ठजातिमादाय टाब्बाधते उत अवयवार्थनिष्ठजातिमादाय वा बाधते। नाद्यः।

गौणमुख्यन्यायस्य पदकार्यविषयत्वाच्चेति भावः। अमहत्पूर्वेत्यत्रा-पि जातिश्चेदिति संबद्ध्यते। महत्पूर्वो न टापं लभते जातिश्चेद्वाच्येति तदर्थः। तत्फलन्तु जात्यन्तरनिवृत्तिपरत्वे पूर्वञ्जातिमात्रविवक्षया महच्छब्दस्य शूद्रशब्देन मृगक्षीरकुक्कुटाण्डवत्समासे ततः स्त्रीत्वविव-क्षायां महतीशूद्रेत्यर्थे 'महाशूद्रा' इति टाबेव। अमहत्पूर्वेत्यत्र जातिरित्य-स्यासंबन्धेऽनुपसर्जनाधिकारेण प्रधानेन तदन्तविधिसत्त्वात् 'जातेः'

---

कार्येष्वयं न्याय इति "आत्" सूत्रे सिद्धान्तितमिति कथमियमाशङ्केति व-च्यम्। यत्र प्रातिपदिकावस्थायामेव गौणत्वप्रतीतिस्तत्र प्रातिपदिका-र्येष्वपि तत्रत्यपदशब्दस्य गौणवृत्त्याश्रयत्वोपलक्षणत्वादिति गौणमुख्य-न्यायप्रवृत्तिरिति भावः। सिद्धान्तितार्थमाश्रित्य दूषयति—*सद्दशेति* परिभाषास्थपदशब्दः पदसंज्ञकपर एवेति भावः।

अमहत्पूर्वाशब्देऽसमर्थसमासोऽसूर्यम्पश्येतिवत्तेन यत्फलितं तदा-ह-*महत्पूर्वो न टापमिति*। महाशूद्रशब्दसमुदाय एवाभीरजाति-वचनः गौरखरेन्द्रगोपादिशब्दवत्। तत्र समुदायव्युत्पादनायाऽवयवे स्त्रीत्वमविवक्षित्वैव समासः क्रियते ततः समुदायार्थे स्त्रीत्वविवक्षायां समु-दायस्य जात्यन्तरबोधकत्वादनेन टापो निषेधे जातेरिति ङीष्। अनेन य-दा समुदायस्य जातिप्रवृत्तिनिमित्तकत्वविवक्षा तदा प्रतिषेधः, यदा तु महत्त्वविशिष्टा शूद्रा न त्वन्यजातीयेति विवक्षा तदा महाशूद्रा इत्येव। न च जातेरित्यस्याभावेऽपि नायन्दोषः। अन्तरङ्गत्वात्सुबुत्पत्तेः प्राक् टापि ततः समासे जातस्य टापो निवृत्त्ययोगान्निषेधो जातावेव पर्यवस्यतीति तो दोषमुपपादयति—*तत्फलमिति*। *जातिमात्रेति*। अत्र मात्रपदे-न स्त्रीत्वव्यवच्छेदः। जातिपरत्वे दृष्टान्तो "मृगक्षीरकुक्कुटाण्डवत्" इति।

एतेन यथा "कुक्कुट्यादीनामण्डादिषु" इतिवचनस्य कुक्कुटस्याण्ड-मितिविवक्षया समासं कृत्वा प्रत्याख्यानं कृतं तथाऽत्रापि समास इति वि-दर्शितम्। *ततः स्त्रीत्वविवक्षेति*। एतेन पूर्वं टाबुत्पत्तिशङ्काव्युदासः। *जातिरित्यस्यासम्बन्ध इति*। अमहत्पूर्वेत्यनेन टापो निषेधे सति शेषः। ननु समुदायस्य जातिवाचकत्वाभावात्कथं ङीषः प्राप्तिरत आह-*अनुपसर्जनाधिकारेणेत्यादि*। एवञ्च जातिवाचकात्तदन्तादिति तद-र्थः स्यादिति भावः। जातिरित्यस्योभयत्र सम्बन्धश्च भाष्यकारीयव्या-ख्यानेन लभ्यते। तत्र हि—"शूद्रा चामहत्पूर्वा। शूद्रा चामहत्पूर्वेति वक्त-

---

इत्याह—*पञ्चशूद्रीति*। *समाहारेति*। न द्वितीयः। इत्याह—*शूद्रशब्दार्थेति*।

ननु पुंयोगे प्रतीतस्यार्थस्य गौणत्वात् गौणमुख्यन्यायप्रवृत्त्यैव तद्वारणसम्भवात्तदंशे जातिरिति व्यर्थ-मित्याशङ्क्ते—*नचात्रेति*।

(पा०सू०४।१।६३) इति ङीष् स्यात् । शूद्रशब्दे जातिवाचकत्व-स्य स्त्रीत्वे शूद्रशब्दार्थसमवेतत्वस्यापि सत्त्वेनात्र टाप् निर्बाध इति भाष्यप्रदीपोद्द्योते निरूपितम् । महाशूद्रीति । "आभीरी तु महाशूद्री" इत्यमरः । ब्राह्मणादुग्रकन्यायाम् आभीरः । नृपाच्छूद्रायामुत्पन्नोग्रजातिकन्या । अत्रानुलोमसङ्कराणां मातृजातिवृत्तित्वात्तत्र तां जातिमारोप्य शूद्रशब्दप्रयोग इत्ययं शूद्रशब्दो ऽर्थत्रानेवेति शूद्रशब्दार्थसमवेतस्त्रीत्वमप्यत्रास्ति-तदर्थसमवेतस्त्रीत्वेऽपि शूद्रशब्दादेव टाप्स्यान्न तदन्तात्, 'ग्रहणवता' इति निषेधादिति तदन्तविधिज्ञापकता नासङ्गता । अत एव शङ्खस्मृतौ 'ब्राह्मणक्षत्रियवैश्यैः क्षत्रियावैश्याशूद्रासूत्पन्नाः क्षत्रियवैश्यशूद्रा एव भवन्ति' इत्युक्तमिति भावः ।

यत्तु शूद्राभीरमित्यादौ सामान्यविशेषवाचित्वात् द्वन्द्वाभावमाशङ्क्य 'आभीरा जात्यन्तराणि' इति 'त्यदादीनि' (पा०सू०१।१।७४) इति सूत्रे भाष्ये उक्तं, तत्तु अनारोपाभिप्रायेणेति न तद्विरोधः । अजादिराकृतिगणः । (१)तेन 'न मु ने' (पा०सू०८।२।३) इति सूत्रे 'टा-

---

च्यम्। शूद्री । अमहत्पूर्वेति किमर्थम् । महाशूद्री । जातिः । जातिरिति वक्तव्यम् या हि महती शूद्रा महाशूद्रा सा हि भवति" इति । महाशूद्रे-तिसमुदायस्य जातिवाचकत्वं व्युत्पादयति—*आभीरी त्विति* ।

आभीरी तु महाशूद्री जातिपुंयोगयोः समा ।

इत्यमरः ।

वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।
ब्राह्मणादुग्रकन्यायामाभीरो नाम जायते ॥

*मातृजातिवृत्तित्वमिति* । प्रतिपादकतासम्बन्धेनेत्यादिः । तेन शूद्रत्वावच्छिन्नविषयताशालिबोधजनकत्वम्फलितम । तत्र शूद्रत्वमारोपितं मुख्या तु सा सा जातिः । *अत्रास्तीति* । तथा चास्त्येव टापः प्रसङ्गः । नन्वेवं तदन्तविधिज्ञापकत्वङ्कथमत आह—*तदर्थसमवेतेत्यादि* । अनुलोमसङ्कराणाम्मातृजातिवृत्तित्वे मानमाह—*अत एवेति* । आरोपितमातृजातिवृत्तित्वादेवेत्यर्थः ।

पूर्वोक्तार्थे प्रसक्तम्भाष्यविरोधमुद्धर्तुमाह—*यत्त्विति* । अत्रत्यश-

---

(१) अजादेरकृतिगणत्वे फलमाह—तेनेति* ।

यामादेश' इति भाष्यप्रयोगः सिद्धः। प्रथमाध्यायचतुर्थपादे (१) चमसवदविशेषात् (वै०सू०अ१।१।०४।अ०८) इति सूत्रे शाङ्कर-भाष्यवाचस्पत्योरजायाम् 'छागा' इति टाबन्तप्रयोगो दृश्यते ऽतः छागशब्दोऽप्यजादिष्विति केचित्।

उगितश्च (पा०सू०४।१।६) उगिच्छब्देन प्रातिपदिकस्य वि-शेषणात्तदन्तविधिः। प्रत्ययविधाविति निषेधस्तु न। (२)"उगिद्व-र्णग्रहणवर्जम्' इत्युक्तेस्तदाह—उगिदन्तादिति। भवन्तीति। 'व्यपदेशिवद्भावो ऽप्रातिपदिकेने'ति निषेधस्तु सूत्रोपात्तान्तादिशब्द-विषये(३) एवेति भावः। भवतु इति उगितः प्रातिपदिकस्यापि स-त्वात् प्रत्ययमात्रग्रहणाभावेन 'प्रत्ययग्रहणे' इति परिभाषाया अप्रवृ-त्त्या 'निर्यवमती'इत्यादौ न दोषः। अञ्चतेस्त्विति। नलोपिनोऽञ्च-तेरित्यर्थः। नियमोऽपि नलोप्यञ्चतिविषय एवेति निरूपितम्।

---

ङ्काग्रन्थेन मातृजातिवृत्तित्वं स्पष्टमेव लभ्यते। *केचिदिति*। अत्र रुचिबीजयन्तु यदि छागशब्दस्याजादौ पाठस्तदा छागीतिप्रयोगस्यो-च्छेद एव स्यादिति। यदि छान्दसस्तादृशः प्रयोगस्तदा व्यत्ययेन सा-साधनीयो नो चेदसाधुरेवेति। नन्वेवमपि प्रत्ययग्रहणपरिभाषया निर्य-वमतीत्यत्र न स्यादत आह—*भवत्विति* । अत्र मानन्तु 'कथमिदं वि-ज्ञायते उगितः प्रातिपदिकादिति आहोस्विदुगिदन्तात्प्रातिपदिकादिति यदि विज्ञायते उगितः प्रातिपदिकादिति सिद्धम् भवती, महती, अतिभ-वती अतिमहतीति न सिध्यति' इति भाष्यमेव।

"वनो र च" इतिसूत्रे उपात्तस्य वनः प्रत्ययत्वात्प्रत्ययग्रहणपरिभा-षया तद्वन्नन्तपरं तस्य पुनः प्रातिपदिकविशेषणत्वेन वन्नन्तान्तादित्यर्थः

---

(१) चमसवदविशेषादिति*। सूत्रार्थस्तु।

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाम्।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥"

इत्यनेन मंत्रेण न प्रधानं श्रुतिमत्त्वं शक्यमाश्रयितुम्। अविशेषात्—विशेषावधारणकारणाभावा[illegible] तदर्थः। तत्र दृष्टान्तश्चमसवदिति। यथा "अर्वाग्बिलश्चमस ऊर्ध्वबुध्न" इत्यस्मिन् मन्त्रे स्वातन्त्र्येणायं [illegible] चमसाभिप्रेत इति न शक्यते निरूपयितुं, सर्वत्रापि यथाकथंचिदर्वाग्बिलत्वादिकल्पनोपपत्तेः। तथा[illegible] मेकामितिमन्त्रे प्रधानैवाभिप्रेतेति न शक्यते नियन्तुमिति। एतदधिकरणपूर्वपक्षावसरे 'नन्वजाशब्द[illegible] रूढः' इत्याद्युक्तौ छागे यदि टाबन्तप्रयोगो भाष्यादिसंमतो दृश्यते इति छागशब्दोऽप्यजादिष्विति भावः।

(२) *वर्जमित्युक्तेरिति*। एतच्चानुपसर्जनाधिकारेण तदन्तविधे र्ज्ञापनादित्यस्याप्युपलक्षणं बोध्यम्[illegible]

(३) अन्तादिशब्दविषय इति*। अन्तशब्द आदिर्येषां ते अन्तादयः। ते च ते शब्दास्तद्विषये इ-त्यर्थः। तेन पूर्वशब्दस्यापि संग्रहः।

व्यपदेशिवद्भावात्लब्धमर्थं स्पष्टप्रतिपत्तये आह-वन्नन्तादिति । नन्वेवं प्रत्ययग्रहणपरिभाषया 'बहुधीवरी' न सिद्ध्येदत आह-तदन्ताच्चेति । तत्परिभाषालब्धवन्नन्तेन प्रातिपदिकस्य विशेषणाभाव इति भावः । सामान्येति । (१)सूत्रे ऽनुबन्धानुच्चारणात्तदनुबन्धकपरिभाषाया विषयो नेति भावः । इदं 'मतुवसोः' (पा०सू०८।३।१) 'जाग्रो वि' (पा०सू०७।३।८५) इति सूत्रेषु भाष्यकैयटयोः स्पष्टम् । इदं सूत्रं न ङीब्विधायकं किं तु 'ऋन्नेभ्यः' (पा०सू०४।१।५) इति प्राप्तङीबनुवादेन तत्संनियोगशिष्टरभावमात्रविधायकम्, उभयविधौ गौरवात्(२) । शर्वरीति । शृधातोः 'अन्येभ्योऽपि दृश्यते' (पा० सू०३।२।१७८) इति वनिप् । (३)एतत्सिद्ध्यर्थमाह—हश-न्ताद्विहित इति । अर्थवतो ग्रहणान्नेह 'मघोनी' । कनिप्प्रत्ययान्तनिपातितस्येदम् ।

बहुव्रीहौ वा (वार्त्ति०) । "अनो बहुव्रीहेः"(पा०सू०४।१।१२)

---

बहुधीवरीत्यस्य सिद्धावपि 'धीवरी' 'सुत्वरी' इत्यस्यासिद्धिरत आह-*व्यपदेशिवद्भावेति* । येन विधिस्तदन्तस्येतिसूत्रस्थ 'तस्य चेतिवक्तव्य'मिति वार्त्तिकपर्यालोचनया तु तदन्तविधिलभ्य एवायमर्थः । तस्यापर्यालोचनयेदम् । ननु तदनुबन्धकपरिभाषया वनिप एव ग्रहणमुचितमत आह-*सूत्रे इति* । अन्यतरानुबन्धोच्चारणे तदनुबन्धकपरिभाषाप्रवृत्तिरिति भावः । न चैवं हाकः ककारो "हश्च व्रीहिकालयोः" इतिसूत्रे सामान्यग्रहणार्थ इतिग्रन्थविरोध इति वाच्यम् । तस्य ग्रन्थस्य "गस्थकन्" "प्रुसृल्व" इति पूर्वोत्तरसाहचर्यादेकानुबन्धकस्यैव ग्रहणं स्यादिति सामान्यग्रहणार्थं ककार इत्येतत्परत्वात् । *एतत्सिद्ध्यर्थमिति* । धीवरीत्यस्य सिद्ध्यर्थमित्यर्थः । परविशेषणत्वे तु न स्यादिति भावः । *अर्थवत इति* । कर्तृरूपार्थविशिष्टस्य ग्रहणमिति भावः ।

---

(१) सूत्रेऽनुबन्धेति* । अन्यतरानुबन्धोच्चारणे एव तत्परिभाषाप्रवृत्तेरिति भावः ।

(२) रभावमात्रविधायकमिति* । अप्राप्ते शास्त्रमर्थवदितिन्यायात् तदुक्तं "नचेदन्येन शिष्टाः" इति । (जै०सू०) अत एव 'अग्निहोत्रं जुहोति' इति प्राप्तहोमानुवादेन दध्ना जुहोतीत्यत्र दधिमात्रविधानं संगच्छते । विपक्षे बाधकं दर्शयति-उभयविधाविति* ।

(३) विहितविशेषणस्य फलंदर्शयन्नवतरति-एतत्सिद्ध्यर्थमिति* । एतस्यापि सिध्यर्थमिति तदर्थः । धीवरीत्यादि सिद्धिरिति भावः ।

ननु मघवन् शब्दस्यापि वन्नन्तत्वेन ङीपश्चान्तादेशः स्यात् । तथाच मघोनीति न सिध्येदित्यत आह-अर्थवत इति* ।

इति प्रतिषेधे प्राप्ते इदम् । एतच्च वार्त्तिकम् 'अन उपधा' (पा०सू० ४।१।२८) इति सिद्धङीबनुवादेन रादेशविधायकम् । अत एवैत् 'अनुपधालोपिनि सुपर्वेत्यादौ नेति विकल्पोऽर्थसिद्धः(१)। 'वनोर' इत्येतत्तु 'ऋन्नेभ्य' इत्येतन्ङीपूर्विषयमेवेत्युक्तम् । पक्षे डाबिति तेन द्विवचने रूपत्रयम् ।

कृतसमासान्त इति । उत्तरसूत्रे ऋच्यभिधेयायां तस्यैव सम्भवेनार्थाधिकारानुरोधादिति भावः । तेन पादयतः क्विबन्तस्य ग्रहणं न । द्विपदीति। द्वौ पादावस्या इति बहुव्रीहौ 'संख्यासुपूर्वस्य' (पा०सू०५।४।१४०) इति पादशब्दान्तलोपस्ततो ङीपि पादः पत्।

टाबृचि । (पा०सू०४।१।९) पूर्वसूत्रप्राप्तङीपोपवाद (२)इति प्राञ्चः, तच्चिन्त्यम् । 'शेषाद्विभाषा' (पा०सू०५।४।१५४) इति सूत्रस्थ भाष्यविरोधात् । तत्र हि प्रतिपदविहितसमासान्तानां कपो वैकल्पिकत्वेन कबभावे सावकाशत्वमुक्तम्, तद्रीत्या ऽस्यापि पूर्वसूत्रस्य वैकल्पिकत्वेन तदभावे सावकाशत्वात् । "बहुव्रीहेरूधस" (पा०सू०

---

ननु "वनो र च" इतिसूत्रभाष्ये रविधाने बहुव्रीहेरुपसंख्यानं प्रतिषिद्धत्वादित्येवोक्तमिति वेत्येतदनुपपन्नमत आह—*एतच्चेति* । *सिद्धङीबिति* । अस्य वैकल्पिकेत्यादिः । एवञ्च विकल्पलाभः स्पष्ट एव । *अत एव* । एतस्य वार्तिकस्य "अन उपधालोपिन" इतिसूत्रसिद्धङीबनुवादत्वादेव । नन्वेतद्विषये "वनो र च" इत्येव सिद्धमत आह— *वनो र चेत्येतत्त्विति*। प्रकृतोदाहरणे बहुधीवरीत्यत्र न "ऋन्नेभ्य" इति ङीप्। "अनो बहुव्रीहेः" इति सूत्रेण निषेधात् । डापि सति यत्र वैलक्षण्यन्तदाह-*द्विवचन इति ।

कृतसमासान्त इत्येतल्लाभप्रकारमाह-*उत्तरसूत्र इति*। दण्डयुक्तं खण्डयति-*पूर्वसूत्रे इति* । *तत्र हीति* । 'ये प्रतिपदं विधीयन्ते तेऽस्य बाधका भविष्यन्ति' इति शङ्कायामित्यादिः ।

*सावकाशत्वादिति*: । एवञ्चापवादत्वोक्तिर्विरुद्धेति भावः । *बहुव्रीहेरूधस इत्यत्रापि भाष्ये इति* । तत्र हि "ऊधसो नकारो लिङ्गार्थे

---

(१) विकल्पोऽर्थसिद्ध इति । अन उपधालोपिनोऽन्यतरस्यामित्यनेन विकल्पेन डांप् विधाने, वा ङीप्विषये बहुव्रीहावित्यनेन रादेशविधानेऽर्थात्सिद्धो विकल्प इत्यर्थः । एवञ्च बहुव्रीहौ वेति वार्तिकांशे द्वावकल्पांनुवादको वाशब्द इति भावः ।

(२) ङीपोऽपवाद इति* । पादोऽन्यतरस्यामितिविकल्पस्यावश्यंप्राप्तौ एतान्नित्यारंभादिति भावः । तच्च 'शषाद्विभाषा' इति सूत्रस्थभाष्यविरुद्धमित्याह—तच्चिन्त्यमिति ।

४।१।२५) इत्यत्रापि भाष्ये स्पष्टमेतत्। अत एव 'ङ्याप्प्रातिपदि-कात्' (पा०सू०४।१।१) इति सूत्रे पादशब्दसमानार्थमकारान्तं पद-शब्दमङ्गीकृत्यैतत्प्रत्याख्यातम्। "श्रूयते च छन्दसि तस्याः सप्ताक्ष-रमेकं पदम्, एकः पाद इत्यर्थ" इति च भाष्योक्तं सङ्गच्छते। तदा हि ऋच्यपि 'एकपदी' 'एकपात्' इतीष्यत एव। (१)एवञ्च 'एकपा-

कारे" इति वार्त्तिकम् बहुव्रीहेरूधस इतिसूत्रानन्तरं 'नश्चे'ति कर्त्तव्यम्। समासान्तप्रकरणे 'ऊधसो न'ङिति सूत्रञ्च कार्यम्। बहुव्रीहेरूधस इति सूत्रे एव नश्चेत्यपि वाच्यम्। अलोऽन्त्यपरिभाषया नकारादेशे 'कुण्डोध्नी' इति भविष्यति। समासान्तेषु "धनुषोऽनङ्" इति वाच्यमिति भावः। तेन 'कुण्डोधः पर्जन्यः' 'कुण्डोधो धैनुकम्' इत्यत्र पुंनपुंसकयोर्नानङ्। न वा समासान्ताधिकारे स्त्रीग्रहणात्। समासान्ताधिकार एव स्त्रीग्रहणं कर्त्तव्यम्। ऊधसो नङिति सूत्रानन्तरं स्त्रियामिति वक्तव्यम्। इतरथा हि कब्विधिप्रसङ्गः। ङीषुत्पत्तेः प्राक् "शेषाद्विभाषा" इति कप् स्यात्। तत्रैवावश्यमूधसो नङिति वाच्यम्। समासान्तस्य कपो बाधनार्थमिति भावः।

'कस्याम्पुनरवस्थायां कप्प्राप्नोति। प्राक् ङीषुत्पत्तेः। प्राक् तावन्न प्राप्नोति। किङ्कारणम् न हि ङीष् विभाषा यद्यत्र कप् स्यात्तदा ङीष् विधानमनवकाशं स्यात्" इतिकैयटः ततो 'न हि ङीष् विभाषा। कप् तु विभाषा कपोऽवकाशः। अन्योबहुव्रीहिः। अयवकः। अव्रीहिकः। ङीषोऽवकाशः। विभाषा कप्। यदा न कप् सोऽवकाशः। कुण्डोध्नी घटोध्नी। कप्प्रसङ्गे उभयं प्राप्नोति परत्वात्कप् स्यात्। तस्मात्सुष्ठूच्यते न वा समासान्ताधिकारे स्त्रीग्रहणात् इतरथा हि कब्विधिप्रसङ्ग' इत्येवमुक्तम्। *अत एव*। "टाबृचि" इत्यस्य तदनपवादत्वादेव पादशब्दसमानार्थ-त्वमद्रढयति-*श्रूयते चेति* प्रत्याख्यानैकवाक्यतया यत्पर्यवस्यति त-दाह-*तदा हीति*। 'कृतसमासान्तस्यैकपदीति'। 'अकारान्तस्य तु एकपदेति'। 'ङीपो वैकल्पिकत्वेन तदभावे एकपादिति'। *एव-ञ्चेति*। प्रत्याख्यानैकवाक्यतयेत्यर्थः। ननु कृतसमासान्तस्य ऋच्यन-

(१) नन्वेवमपि भाष्यकारमते तत्सिद्धावपि सूत्रकारमते कथं तत्सिद्धिरित्यत आह—एवञ्चेति*। सूत्रकारमते रूपत्रयस्य सिद्धत्वे चेत्यर्थः।

*सूत्रकारीत्येष्टत्वेति*। अन्यतरस्यां ग्रहणानुवर्त्तिं विनापि ङीबनपेक्षत्वेनान्तरङ्गत्वात्तेषामन्याविवक्षायां तत्प्रयोगस्यापि ऋत्विग् वाचकस्य सिद्धत्वेनेष्टस्येति भावः।

अत्र केचित्। पादोन्यतरस्यामितिङीपोऽनृचि चरितार्थस्य ङीबभावपक्षे चरितार्थेन टाबृचीत्यनेन बाधदर्शनात् ऋचि ङीबन्तप्रयोगस्य सूत्रकृदीत्याऽनिष्टत्वेन तदेकवाक्यतासंपादनार्थम् "ऋचि पादं

दु ऋग्' इत्यस्य सूत्रमते सिद्धये 'टाबृचि'त्यत्राप्यन्यतरस्याङ्ग्रहणमनुवर्त्यम् । पादन्तस्य ऋच्यनभिधानमिति तु न भाष्याशयः । ङीबन्त-प्रयोगस्य सूत्ररीत्येष्टस्यासिद्ध्यापत्तेरिति बोद्ध्यम् । केवलपाच्छब्दस्य स्त्रियां (१)ऋचि वाऽसम्भवेनात्र तदन्तविधिः ।

असिद्धत्वादिति । आपः परिगणितेष्वभावान्न तत्र नलोपासिद्धत्वम् । इदञ्च कार्यकालपक्षे । अयं निषेधः 'प्रियपञ्चा द्रौपदी' इत्यादौ तदन्तेऽपि 'स्त्रियां यत्प्राप्नोति तन्न' इत्यर्थात् "अन उपधा" (पा०सू०४।१।२८) इति ङीबपि नेति बोद्ध्यम् । ध्वनितश्चेदं भा-

---

भिधानेनाप्येकवाक्यता कुतो नेत्यत आह-*पादन्तस्येति* । *सूत्री-त्येति* । एतत्सूत्रस्य विकल्पेन ङीब्विधायकतया टाबृचीत्यस्य प्रत्याख्याने ऽपि ङीबन्तं स्यादेवेति टाबृचीतिसूत्रारम्भेऽपि तत्रान्यतरस्यांग्रहणानुवृत्त्या तत्साधनीयम । अत एव भाष्यकृता पदशब्दाट्टाबुत्पत्तिर्भविष्यतीत्युपपादितन्न तु पादन्तस्यानभिधानेन पादोऽन्यतरस्यामित्यस्याऽप्रवृत्तिरुद्भावितो ।

नतु 'पञ्च' इत्यत्र टापि कर्त्तव्ये पूर्वत्रासिद्धमित्येवासिद्धत्वे सिद्धे षट्संज्ञाम्प्रति नलोपासिद्धत्ववर्णनमनुपयुक्तमत आह-*आपः परीति* नन्वेवमपि नलोपासिद्धत्वस्य न फलम् । पूर्वकालजातषट्त्वस्य समुदायनिष्ठस्य स्थानिवद्भावेन सिद्धेरत आह-*इदमिति* । *तदन्तेपीति* अधिकारलब्धस्य प्रातिपदिकादित्यस्य विशेष्यस्य षडादि विशेषणमिति तदन्तविधिप्रवृत्तेः । न च बहुवचननिर्देशादप्रवृत्तिः । तस्य व्याप्तिबहुत्वाभिप्रायकत्वात् । *ध्वनितमिति* । एततसूत्रभाष्ये कस्यायम्प्रतिषेध' इति प्रश्ने 'आचार्यदेशीयेन ङीबनन्तरस्य प्रतिषेध' इत्युत्तरिते 'टाप् कस्मान्न' इति शङ्कायान्नलोपासिद्धत्वेनाचार्यदेशीयेनैव समाहितम् । ततः पुनः परिगणितेष्वेव नलोपस्यासिद्धत्वशङ्कायां शिष्यबुद्धिपरीक्षार्थम् "नलोपः सुब्" इतिसूत्रे सुबिति न प्रत्ययग्रहणङ्किन्तर्हि स्वौजसेति सुशब्दमारभ्य चापः पकारेण प्रत्याहार" इत्युत्तरे बहुत्वमिकेत्यत्रत्य-दोषे शिष्येणोद्भाविते 'स्त्रियां यत्प्राप्नोति' इति व्याख्यानेन सिद्धान्तितम् 'सर्वनिषेध' इत्युक्तं तेन "अन उपधा" इति ङीपोऽपि निषेध इति ध्वनि-

---

तस्यानभिधानम्" इत्येव भाष्याशयस्य वक्तव्यत्वादिदं चिन्त्यम् । पादशब्दसमानार्थक-पदशब्दाट्टाबुत्पत्त्यमते ऋचि द्विपादेति टाबन्तप्रयोगोऽप्यनभिधानादेव वारणीय इति । एवञ्च टापृङीपोऽपवाद इति ग्रन्थेऽपवादशब्दो बाधकपर इत्यंशे न कस्यापि संमतिरित्याहुः ।

(१) ननु पादयते र्णिजन्तात् क्विपि कृते केवलस्य पाद्शब्दस्यापि स्त्रियां संभवोऽस्तीत्यत आह-*ऋचिवेति* ।

र्थं । परे त्वत्र बहिरङ्गासिद्धत्वाप्राप्तिः । नलोपस्य तत्त्वाभावात् । संज्ञाकृतबहिरङ्गत्वानाश्रयणात् 'पञ्च' इत्यत्र तु 'स्त्रियां यत्प्राप्नोति त-न्न' इत्यर्थाश्रयणबलाद् भूतपूर्वषट्त्वाश्रयो निषेधः । अत एव षट्संज्ञा-यां न लोपासिद्धत्वस्य न फलमिति "न लोपः सुप्' (पा०सू०८।२।२) इत्यत्र भाष्ये उक्तमित्याहुः ।(१)

मनः । (पा०सू०४।१।११) न ङीबिति । अयम् 'अन' इति उक्तरीत्या टाबङीपोरुभयोरपि निषेधः । एतेन 'सीमभ्यां' 'बहु-धन्वभ्यां' 'बहुधीवभ्या'मित्यत्र डाबूङीपोरभावे नलोपे टाप् दुर्वार इ-त्यपास्तम् ।

डाबुभा (पा०सू०४।१।१३) उभाभ्यांग्रहणाभावे संनिहितस्य 'अन' एवानुवृत्तिः सम्भाव्येत । वचनसामर्थ्यात् डाबनिषेधयोः प-र्याये सिद्धे 'अन्यतरस्याम्' इति स्पष्टार्थम् । भाष्ये त्वन्यतरस्यांग्र-हणं वाक्यभेदेन 'अनो बहुव्रीहेः' (पा०सू०४।१।१२) इत्यनुवर्त्य ततः पक्षे 'ऋन्नेभ्य' इति ङीबर्थम् । एवञ्च 'अन उपधा'इति सूत्रं निय-मार्थमिति 'बहुधीवरी' इत्यत्र 'ऋन्नेभ्यः' इति ङीबिति तत्सन्नियोगेन

---

तमित्यर्थः । मूलकाराद्युक्तन्दूषयति—*परे त्विति* । अन्योक्तम्बहिर-ङ्गासिद्धत्वन्दूषयति—*अत्र बहिरङ्गासिद्धत्वाप्राप्तिरिति* । *अत एव* । भूतपूर्वगत्याश्रयणादेव । एवञ्च लक्ष्यसिद्धये यथोद्देशपक्ष एव प्रकृते आ-श्रीयते इति कथितम्भवति ।

*अयम्* । मन इतियोगः । उक्तरीत्या स्त्रियां प्रत्प्राप्नोतीति व्या-ख्यानेन ।

*वचनसामर्थ्यात्* । यदि नित्यो डाप् तदाऽनो बहुव्रीहेर्मनश्च डाबित्येव सूत्रङ्कर्त्तव्यमिति भावः । *वाक्यभेदेति* । योगविभागङ्कृत्वे-त्यादिः । एवञ्चान्नन्ताद्बहुव्रीहेर्ङीबन्यतरस्यामिति वाक्यनिष्पत्तिः । अ-तश्च ङीप् नापूर्वः किन्तु नान्तात्प्राप्तस्यैव ङीप उज्जीवनमिति फलितम् *नियमार्थमिति* । अनो योऽसौ विकल्पः स उपधालोपिन एवेति नियमार्थमित्यर्थः । एवं सति बहुधीवरीत्यत्रैतत्प्रकरणस्थ एव ङीप् । ननु नियमशास्त्राणान्निषेधरूपेण प्रवृत्तिरितिपक्षे यद्यप्युक्ता व्यवस्था

---

(१) इत्याहुरिति* । अत्र केचित् । संज्ञाकृतबहिरंगत्वस्याऽनाश्रयणे 'वाह ऊठ्' इति सूत्रे ऊठ्ग्रहणस्य परिभाषाज्ञापकत्वा-देवासिद्धत्वकचित्बीजं मुद्भावयन्ति। संज्ञानिमित्तभूतप्रत्ययनिमित्तताश्रयणेतु परंपरया निमित्तकल्पनेन बहि-रङ्गकल्पनमेव दोषः ।

रेफादेशः सिद्ध्यतीति 'बहुव्रीहौ वा' इति वचनं प्रत्याख्यातम् । 'अन उपधा' इति 'ऋन्नेभ्य' इत्यस्यैवानुवाद इति नियमस्य विधिमुखेन प्रवृत्तावपि न दोषः ।

अन उप (पा०सू०४।१।२८) बहुव्रीहेरूधसः' (पा०सू० ४।१।२५) इत्यतो बहुव्रीहिरिति 'संख्याव्ययादेः' (पा०सू०४।१।२६) इत्यतो ङीबिति चानुवर्त्तते । 'अनुपसर्जनात्' (पा०सू०४।१।१४) इत्यनुवृत्तमप्यत्र न सम्बद्ध्यते तस्य गृह्यमाणविशेषणतया गृह्यमाणस्य चान्नन्तस्य बहुव्रीहावनुपसर्जनस्यासम्भवात्(१) । ध्वनितश्चेदं 'वनो र च' (पा०सू०४।१।७) इति सूत्रे भाष्ये । तत्र हि 'अनो बहुव्रीहेः' इत्यनन्तरम् 'उपधालोपिनो वा' इति न्यासो दर्शितः । विद्धा

तथापि विधिरूपेण प्रवृत्तिरितिसिद्धान्ते बहुधीवरीत्यत्र प्रकरणान्तरस्थ एव ङीप्स्यादत आह-*अन उपधेति चेति* । "अन उपधा" ।

यद्यपीदं सूत्रमष्टाध्याय्यामप्रकरणान्तरे पठितन्तथापि भाष्ये 'वनो र चेति सूत्रे अनो बहुव्रीहेरुपधालोपिनो वा' इतिपठितं तत्तुल्यतया व्याख्यानयोग्यमितीह मूले व्याख्यातं, तदेतदभिप्रेत्याह—*न सम्बध्यत इति* । वाच्यार्थविरोधात् । तदुपपादयति-*तस्य गृह्यमाणेति* गृह्यमाणस्य—अन्नन्तस्य । असम्बंधे प्रामाणमाह-*ध्वनितश्चेदमिति* *इदमिति* । अनुपसर्जनादित्यस्यानेन सह मिलित्वा वाक्यार्थबोधजननम् । *बहुव्रीहेरित्यनन्तरमुपधालोपिनो वेति* । "वनो र च" इति सूत्रे एवानो बहुव्रीहेरिति पठित्वा उपधालोपिनो वेति पठितम् । एवं न्यासे उधालोपिन इत्यत्रानुपसर्जनादित्यस्य सम्बन्धयोग्यतैव न अस्य योग्यस्य पूर्वत्वात् । न बहूनि दामानि येषान्ते 'बहुदामानः' तानतिक्रान्ताऽतिबहुदामा इत्यत्र ङीबभावार्थमनुपसर्जनादित्यस्य सम्बन्ध आवश्यक इति वाच्यम् । "स्त्रियाम्" इत्यस्य गृह्यमाणबहुव्रीहिविशेषणतयैवातिप्रसङ्गभङ्गे सम्भवत्येतदर्थमनुपसर्जनाधिकारो न कार्य इत्यभिप्रायात् ।

यत्तु 'मनोरमायां यत् 'अनो बहुव्रीहे'रित्यस्यानन्तरमुपधालोपिनो वेति सूत्रमस्त्वित्युक्तम्, तत्रत्यम् 'इत्यस्यानन्तर'मितीति प्रतीकमुपादायोक्तम् "अनो बहुव्रीहेर्डाबुभाभ्याम् "अनुपसर्जनात् ।" "उपधालोपिना वा" इति पाठ्यमिति शब्दरत्ने । यथाश्रुतेऽनुपसर्जनादित्यस्य सम्बन्धो दुर्घटः । अत एव बहुदामानि 'पुराण्यतिक्रान्ता नगरी' इत्यत्र ङीबन्नेत्युक्तं" तेनास्य वि

(१) असंभवादिति*। अत्र केचित्। बहुनि दामानि येषां ते बहुदामानः, ताननतिक्रान्ता 'अतिबहुदामा' इत्यत्र ङीबभावार्थमनुपसर्जनादित्यतद सबन्धस्यावश्यकत्वाच्चिन्त्यमेतद इत्याहुः ।

विदम् । अन्यतरस्यांग्रहणं तु अनुपधालोपिसुपर्वेत्यादौ सात्त्वकाशयो-र्ङीप्प्रतिषेधयोरुपधालोपिन्यनवकाशेन ङीपा बाधो मा भूदिति । अ-न्यथा विधानसामर्थ्येन त्रयाणां पर्यायसिद्धौ तद्वैयर्थ्यं स्पष्टमेव ।

ककारादिति । अनेन वर्णमात्रं विवक्षितम्; अकार उच्चारणार्थ इति सूचयति । न च 'कारिका' इत्यत्राकारेण व्यवधानादाप्परककाराभावेनेत्त्वानापत्तिः, एकादेशेऽपि "अचः परस्मिन्" इति स्थानिवत्त्वाद्व्यवधानमेव । आपि परतो ऽकारस्य कात्पूर्वस्येत्यर्थेऽपि निर्दिष्टपरिभाषोपस्थिते व्यवहिते न प्राप्नोतीति वाच्यम् , आनन्तर्यांशोपस्थितावपि 'येन नाव्यवधान'मिति न्यायेनाकारव्यवधानेऽपि प्रवृत्तेः । रथकट्यादौ च नातिप्रसङ्गः । क इति सङ्घातग्रहणे तु 'एतिका' इत्याद्यसिद्धिः, अकच्यकारस्योच्चारणार्थतया कशब्दाभावात् । "न

---

राध इति । तन्न । मनोरमाव्याख्यानपरशब्दरत्नग्रन्थस्य स्त्रियामिति प्रातिपदिकविशेषणमिति पक्षेऽनुपसर्जनादित्यस्यारम्भ इति पक्षाभिप्रायकत्वात् । *विध्यर्थमिदमिति* । अन उपधेतिसूत्रमित्यर्थः । नन्वत्रापि विधिसामर्थ्यान्ङीन्निषेधडापां पर्यायसिद्धावन्यतरस्यामिति व्यर्थमत आह *अन्यतरस्याङ्ग्रहणन्त्विति ।

केचित्तु "डाबुभाभ्यामन्यतरस्याम्" । "अनुपसर्जनात्" । "उपधालोपिनो वा" इति ङीप्सूत्रे च योगविभागेनोक्तरीत्या "अनो बहुव्रीहेः" इत्यनुवर्त्यान्नन्ताद्बहुव्रीहेर्डाब्वा । एतेन ङीपा सह विकल्पसिद्धिः । "अन उपधालोपिन" इतिसूत्रन्तूक्तरीत्या नियमार्थम् । एतत्फलार्थमेव तत्र वेति । अनुपसर्जनस्येत्यस्य प्रयोजनन्तूक्तमेव । बहुराज्ञीत्यादौ ऋन्नेभ्यः इत्येव ङीप् । अत एव बहुधीवरीत्यस्य सिद्धिः । एवञ्च बहुव्रीहौ वेति न कार्यमित्याहुः ।

*अनेन* । कारप्रत्ययकरणेन । यदि केति समुदायो विवक्षितः स्यात्तदाऽकचि न स्यात् । आपीत्यस्य ककारविशेषणत्वं साक्षादुद्देश्यविशेषणत्वं वा । उभयथाऽनुपपत्तिरित्याशयेन शङ्कते-*न चेति* । ननु परेणाकारेणैकादेशे परादिवद्भावेन भविष्यतीत्यत आह-*एकादेशेऽप्यचः परेति* । साक्षादुद्देश्यविशेषणत्वकल्पेऽप्याह *आपि परत इति* । ननु सूत्रारम्भसामर्थ्याद्व्यवधानेऽपि प्रवृत्तिरिति चेन्न । रथकट्यादावतिप्रसङ्गात् । समाधत्ते--*आनन्तर्यांश इति* । *अकारव्यवधानेऽपीति* । अनेनापीति ककारविशेषणमिति सूचितम् । ननु केतिसङ्घातग्रहणमिति पक्षेऽपि "न यासयोः" इतिज्ञापकेन सौत्रमकारवैशिष्ट्यमादायेत्त्वप्रवृत्ति-

यासयोः" (पा०सू०७।३।४५) इति ज्ञापकेन वर्णग्रहणमित्येव ज्ञा-प्यते (१) अकज्विधायकस्थमकारवैशिष्ट्यमादायेत्त्वप्रवृत्तिज्ञापकत्वा-श्रयणे तु गौरवम्। (२) तावतापि प्रत्ययस्थत्वांशानुपपत्तेश्च।

न च वर्णग्रहणपक्षे एतिका इत्यादावकारद्वयव्यवधानादित्त्वा-प्राप्तिः। द्वयोरकारयोरेकादेशे टापा सहैकादेशस्य स्थानिवद्भावादे-केनैवाकारेण व्यवधानात्। पुनः स्थानिवत्त्वन्तु न। लक्ष्ये लक्ष-णस्य सकृदेव प्रवृत्तेः। टापा सहैकादेशस्य स्थानिवत्त्वं विना पूर्वै-कादेशस्य स्थानिवत्त्वन्तु वक्तुमशक्यम्। तस्य टावेकादेशेनापहार-णादर्शनात्। अत एव "न यासयोः" इति निषेधसार्थक्यम्।

स्थग्रहणन्तु स्पष्टार्थम्, केवलककारस्य प्रत्ययस्याभावात्। 'असु-प' इति बहुव्रीहिणा नाङ्गविशेषणं 'बहुचर्मिका' इत्यादावित्त्वानापत्तेः। प्रत्ययलक्षणेनाङ्गस्य सुबन्तत्वात्। "न लुमता" (पा०सू०१।१।६३) इति तु नात्र लुमता लुप्ते प्रत्यये यदङ्गं तस्य कार्यं तन्निषेधप्रवृत्तेः। इदन्तु टाप्यङ्गमिति दिक्।

---

भविष्यतीत्यत आह *न यासयोरिति। *प्रत्ययस्थत्वांशेति*। 'एतिका' इत्यत्र लक्ष्ये केतिसङ्घातस्य प्रत्ययस्थत्वांशानुपपादनादित्यर्थः। प्र-त्ययसंज्ञासूत्रोच्चारितशब्दबोध्यस्य न तु बोधकस्येत्संज्ञोत्तरकालमेव प्रत्ययसंज्ञाप्रवृत्तेः।

वर्णग्रहणेऽपि येन नाव्यवधानन्यायेन सर्विकेत्यादावेव स्यान्नत्वेति-केत्यादाविति शंकते--*न चेति*। *अपहारेणेति*। स्थानिवद्भावप्रवृ-त्तिकाले स्थितस्यायं परनिमित्तोऽजादेश इति बुद्धिः, सा तु न सम्भवति तस्य टापा सहैकादेशेनापहारादिति भावः। *अत एव*। पूर्वोक्तरीत्या एकस्यैव स्थानिवद्भावस्य प्रवृत्तेरेव। *स्थग्रहणं तु स्पष्टार्थमिति*। "प्रत्यये कि" इत्येव सिद्धेरिति भावः। न च कान्तात्प्रत्ययादित्यर्थापत्त्या वकच्येव स्यादिति वाच्यम्। "क्षिपकादीनाञ्च" इतिनिषेधवैयर्थ्यापत्तेः। देविकाशिंशपेतिनिर्देशासंङ्गतेश्चेति। ननु तथापि कादौ प्रत्यय इत्ये-व किन्न स्यादिति वाच्यम्। "न यासयोः" इतिसूत्रवैयर्थ्यापत्तेः। *बहु-

(१) ननु उक्तज्ञापकेन तस्योच्चारणार्थत्वेऽपि सूत्रस्थोच्चारिताकारवैशिष्टमादाय इत्वप्रवृत्तिर्ज्ञाप्यता-मित्यत आह—अकच्विधायकस्थस्येति*। *गौरवमिति*। ककारमात्रस्य विवक्षितत्वकल्पनापेक्षया वैविधायकत्वकल्पने गौरवमिति भावः।

(२) ननु तवापि कशब्दस्य ककारमात्र लक्षणास्वीकारे गारवमत आह—तावतापीति*।

सर्विकेति । "अव्ययसर्वनाम्नाम्" (पा०सू०७।३।७१) इत्यकच् । कारिकेति । करोतेर्ण्वुल् । नौकेति । नौशब्दात्स्वार्थे कः । सुपः परो नेति प्रसज्यप्रतिषेधेन व्याख्याने फलमाह–बहुपरिव्राजकेति । पर्युदासे हि समुदायस्य सुब्भिन्नत्वेन सुबन्तभिन्नत्वेन च ततः परत्वादित्वं दुर्वारमिति भावः । परिपूर्वात् व्रजेर्ण्वुलि बहुव्रीहौ सुपो लुक्यपि प्रत्ययलक्षणेनापः सुबन्तात्परत्वं बोद्ध्यम् । कटुकेति । आपा सह सवर्णदीर्घात्पूर्वं वार्णादाङ्गस्य बलीयस्त्वादपत्रादत्वान्त्यककारादुत्तरस्याकारस्येत्वं स्यादिति भावः । मामकेति । कस्य प्रत्ययस्थत्वाभावादप्राप्ते वचनम् । ममेयमिति विग्रहे "युष्मदस्मदोरन्यतरस्याम्" (पा०सू०४।३।१) इत्यणि "तवकममकावेकवचने" (पा०सू०४।३।३) इति ममकादेशे आदिवृद्धिः । नरानिति । कै शब्दे इत्यस्य "आदेच उपदेशे" (पा०सू०६।१।४५) इत्यात्वे "आतोऽनुपसर्गे" (पा०सू०३।२।३) इति के "आतो लोप इटि च" (पा०सू०६।४।६८) इत्यालोपः ।

न यासयोः । (पा०सू०७।३।४५) । "प्रत्ययस्थात्" (पा०सू०७।३।४४) इति प्राप्ते निषेधोऽयम् । यकेति । "यत्तदोरकच्"

---

व्रीहिणेति* । न सुब्यस्येतिबहुव्रीहिणेत्यत्यर्थः । *प्रसज्यप्रतिषेधेनेति* । स आप् सुपः परो नेतिरीत्या । पर्युदासेन व्याख्याने सुब्भिन्नात्सुबन्तभिन्नादित्यर्थो वा स्यात्तदाह–*पर्युदासे हीति* । *उत्तरस्याकारस्येति* । पूर्वशब्दाभावे कादितिपञ्चम्युपपत्तये दिग्वाचकशब्दाध्याहारप्रसङ्गे परशब्दाध्याहारेण कटुकेत्यत्रोत्तरस्याकारस्य स्यादिति भावः।

न च सर्विका पूर्विकेत्याद्यसिद्धिरेव कुतो नोद्भावितेति वाच्यम् । तेषु कदाचित्पूर्वशब्दाध्याहारे यद्यपि सिध्यति तथापि तत्र पाक्षिको दोषः 'कटुका' इत्यत्र तु सर्वथेत्वमनिष्टमेवेति तदेव निदर्शितम । यदि च "उदीचाम्" इति सूत्रेऽनुवर्त्तमानं कादिति ककारनिष्ठपूर्वत्वनिरूपितावधित्ववाचकमन्यथा तत्रत्ययकेत्यत्र यो यकारस्तत्पूर्वस्य कात्परत्वासम्भवः स्यात् । किञ्च यः ककारस्तदुपादानं व्यर्थं स्यात् । ककारपूर्वस्य कात्परत्वानपायात् । "नित्यं क्रीडाजीविकयोः" इतिनिर्देशाच्चेति कादिति पञ्चम्यन्तन्न परत्वनिरूपितावधित्वविशिष्टवाचकमिति विभाव्यते तदा पूर्वस्येति स्पष्टार्थम् । *आदिवृद्धिरिति* । "केवलमामक" इति

त्यदाद्यत्वे टाप्। सन्निपातपरिभाषाऽस्मादेव निषेधान्निर्देशाच्चानि-त्येति तद्विरोधात्कथं टाबिति न शङ्क्यम्। त्यकनश्चेति। "मृदस्ति-कन्" इति इत्वभूतानिर्देशेन ज्ञापकेनास्येत्त्वं वारयितुं शक्यमिति भाष्यकृतः। पञ्चभिर्मृत्तिकाभिः क्रीत इत्यर्थे "पञ्चमृत्तिकः" इत्य-स्यानभिधानमिति तदाशयः। अत्र त्यिकनि कर्त्तव्ये ऽकारोच्चार-णादित्वं नेति न वक्तुं शक्यम्। 'पञ्चापत्यको ग्राम' इत्यादावका-रश्रवणानापत्तेः। टापो लुकि प्रत्ययलक्षणं स्थानिवत्त्वञ्च न, उभ-योरपि "नलुमता" (पा०सू०१।१।६३) इत्यनेन निषेधात्। अत एव 'कृति' इत्यादौ वार्त्तिकमतेऽपि न गुण इत्यन्यत्र विस्तरः।

आशिषि वु। आशिषि विहितस्य वुनोऽस्येत्वं नेत्यर्थः। जीवतादित्यर्थे "आशिषि च" (पा०सू०३।१।१५०) इति वुन्।

---

सूत्रविहितो ङीप् तु नात्र, अस्य यौगिकत्वात्। तस्य संज्ञाछन्दसोः प्रवृत्तेः।

*तद्विरोधादिति*। सन्निपातपरिभाषाविरोधात्। विभक्तिसन्निपा-तनिमित्तकस्यात्त्वस्य तादृशसन्निपातविघातकटाम्निमित्तत्वन्न स्यात्। इत्वभूतेति इत्वम्प्राप्तो यो निर्देशः इत्वघटित इति यावत्। *ज्ञापकेने-ति*। तकारादेः प्रत्ययस्यावयवो यः ककारस्तस्मात्पूर्वस्य नेति निषेधे-नेत्यर्थः। ननु यत्र टापो लुक् तत्रेत्त्वस्य श्रवणार्थमिकारनिर्देशोऽस्त्विति कथमेतन्निषेधकमित्याशङ्कानिवारणायाह-*पञ्चभिरिति*। *तदाशयः*। भाष्यकाराशयः। न च "अचः परस्मिन्" इति स्थानिवत्त्वेन 'पञ्चमृ-त्तिक' इत्यत्रेत्त्वस्य श्रवणं सुवचम्। "लुका लुप्तन्न स्थानिवत्" इति नि-षेधात्। न चान्तरङ्गे इत्वे बहिर्भूततद्धितलुङ्निमित्तत्वेन टाब्लुको बहि-रङ्गस्यासिद्धत्वेनेत्वम्भविष्यतीति वाच्यम्। अन्तरङ्गानपीतिपरिभाषाया बहिरङ्गपरिभाषापवादत्वात्। अत्र मृदस्तिकन्निति वत् "उपाधिभ्यान्त्य-कन्" इति सूत्रे त्यिकनि कर्त्तव्येऽकारोच्चारणादित्वन्न भविष्यतीति प्राचो-क्तन्दूषयति-*अत्र त्यिकनीति*। *उभयोः*। प्रत्ययलक्षणस्थानिवत्त्व-योः। अत एव प्रत्ययलोपसूत्रस्य नियमार्थत्वपरभाष्यसङ्गतिः, अन्यथैता-दृशे विषये "न लुम" इतिनिषेधात्प्रत्ययलक्षणाप्रवृत्तावपि स्थानिवत्त्व-वेन तत्प्रयोज्यकार्यं स्यादिति नियमार्थत्ववर्णनमसङ्गतं स्यात्। *अत एव*। उभयनिषेधादेव। *वार्त्तिकमतेऽपीति*। तन्मते न लुमतेति सू-त्रेण प्रत्ययलोप इतिसूत्रस्य विधायकस्य निषेधेऽपि स्थानिवत्त्वेन गुणः स्यादेवेति भावः। *न गुण इति*। एवञ्च नियामकत्वस्वीकर्तृभाष्यका-

देवदत्तशब्दादनुकम्पायां कनि 'अनजादौ च विभाषा लोपो वक्तव्यः' इति दत्तशब्दस्य लोपः । देवदत्तिकेत्युपन्यासस्तु दत्तलोपमाभिव्यक्तुम् । ध्रुवकेति । (१) ध्रु स्थैर्ये पचाद्यचि कुटादित्वात् गुणाभावे उवङ्, ततष्टाप्यज्ञाताद्यर्थे कः, 'केऽण' (पा०सू०७।४।१३) इति ह्रस्वः, पुनष्टाप् । चटेः संज्ञायां क्वुन् । वार्त्तिकोक्ता गणा आकृतिगणाः । तेन कन्यका, ध्रुवका, अलका, इष्टकादयः साधवः । उदीचान्त्विति । अत्रापि शकुनाविति सम्बद्ध्यते । तेनान्यत्र नित्यमेवेत्वम् ।

सूतका पुत्रि । पुत्रकेत्यकारसहितः पाठोऽपाठः कैयटाद्यसंमतेः । सूतशब्दात्स्वार्थे कन् । वृन्दशब्दात् "शृङ्गवृन्दाभ्यामारकन्" इति मत्वर्थीय आरकन् । वृन्दारकशब्दो मुख्यवाची त्रिलिङ्ग इति भावः । ईन इति । शार्ङ्गरवादित्वाज्जातस्येति भावः । अन्यत्र । सूतकादौ ।

उदीचाम् । (पा०सू०७।३।४६) यकपूर्वत्वश्चाव्यवहितमेव (२) ।

---

वचनप्रामाण्याल्लुमताशब्देन लोपे सति कथमपि प्राप्तन्तन्निमित्तककार्यन्न भवतीति कल्प्यत इति भावः । 'देवका' इत्यस्य साधुत्वमुपपादयति *देवदत्तशब्दादिति* । मतभेदेनेत्त्वविकल्पः शकुनावेवेत्यत आह-*अत्रापीति* । *अन्यत्र* । शकुनिभिन्ने । ननु "वृन्दारका देवतानि" इति कोशाद्वृन्दारकशब्दो नित्यपुंलिङ्ग इत्यत आह-*मुख्यवाचीति* । अत एव भाष्ये 'वृन्दारका' 'वृन्दारिका' इत्युदाहृतम् । मुख्यवाचकस्य त्रिलिङ्गत्वे तु त्रिषूत्तर इत्युपक्रम्य वृन्दारकौ रूपिमुख्यावित्यमरसिंहोक्तिः प्रमाणम् ।

*उदीचामात स्थाने* । अत्रार्थगतं स्त्रीत्वमाकारे आरोप्य यकपूर्वा·

---

(१) ननु उत्तरपदलोपेनेत्यस्य देवकेत्युदाहरणेन गतार्थत्वं, देवदत्तिकेत्युक्तिर्मूले ऽधिकेत्यत आह-*देवदत्तिकेत्युपन्यासस्तु इत्यादि* ।

मूले ध्रुवकेत्युदाहरणे गुणशङ्कावारणाय तत्साधनिकां दर्शयति-*ध्रुवस्थैर्ये इत्यादि* ।

(२) पूर्वत्वञ्चाव्यवहितमेवेति* । स्वरसतः पूर्वादिशब्दानामव्यवहितपरत्वम् । व्यवहितप्रयोगस्तु व्यवहितेऽव्यवहितत्वारोपेणेत्यर्थः ।

ननु लोके व्यवहिताव्यवहितसाधारणेनैव पूर्वादिशब्दस्य प्रयोगात् विनिगमनाविरहात् व्यवहितेऽपि स्यात् । अतएव तस्मिन्निति निर्दिष्टे पूर्वस्येति सूत्रे निर्दिष्टग्रहणं चरितार्थम् । अन्यथा तस्मिन्निति पूर्वस्येत्येव वदेत् । नच निर्दिष्टपरिभाषारूपाविनिगमकसद्भावेन प्रकृतेऽव्यवहितं परत्वं लभ्यतीति वाच्यम् । विधौ परिभाषोपतिष्ठते नानुवादे इति परिभाषया तदप्राप्तेरित्यत आह-*उदात्तस्वरितयोरित्यादाविति* ।

एवं "प्रत्ययस्थात्" (पा०सू०७।३।४४) इति सूत्रे कात्पूर्वत्वमपि। "उदात्तस्वरितयोः" (पा०सू०८।२।४) इत्यादाविवानुवादे ऽपि निर्दिष्टपरिभाषाप्रवृत्तेः तेन क्षुशराशब्दात्के ह्रस्वे इत्वविकल्पो न। (१) नेत्यनुवृत्तावपि निषेधविकल्पे विधिविकल्पस्य फलितत्वादाह– इद्वेति। आतः किमिति। 'उदीचां यकपूर्वाया' इत्येवास्तु। य-क-पूर्वस्त्रीबोधकाकारस्येत्यर्थः। सांकाश्यके च नातिप्रसङ्गः। प्रत्ययावयवत्वेनाकारस्य स्त्रीबोधकत्वाभावात् इति प्रश्नः। 'बहुल-क्ष्यसंस्कारानुरोधादवयवषष्ठ्येव स्यात्। न च प्रतिपदोक्तस्त्रीप्रत्यय-स्यैवात्र ग्रहणं विशिष्य तदनुपादानात्' इत्युत्तरम्। स्त्रीप्रत्ययस्य किमिति। यकपूर्वाया इति स्त्रीलिङ्गनिर्देशः किमर्थं इति प्रश्नः। धात्वन्तेति। धात्वन्तयकारककारपूर्वयोरकारयोरित्यर्थः। इ-त्वमिति शेषः।

---

या इति स्त्रीलिङ्गनिर्देशः। यकपूर्वेत्यस्य यकौ पूर्वौ यस्या इत्यर्थः। *वि-दिष्टपरिभाषेति*। तस्मादिति परिभाषेत्यर्थः। इयञ्चाव्यवधानांशमात्र-प्रापिका उत्तरस्येत्यंशरहितोपतिष्ठते। पञ्चमीनिर्देशश्च यकौ पूर्वौ य-स्या इति विग्रहे द्रष्टव्यः। तत्र पूर्वशब्दसत्त्वात्तेन विरोधादुत्तरांशस्य नोपस्थितिः। एतत्फलमाह *तेन क्षुशराशब्देति*। *नेत्यनुवृत्तावपीति* अनुवृत्तेः फलमित्त्वविधायकपूर्वसूत्रेण समाननिमित्तकत्वलाभ इति। अन्यथा पूर्वसूत्रस्य सम्पूर्णस्यानुवृत्तिं कृत्वा व्याख्यानस्यावश्यकतया गौर-वापत्तेः। *स्त्रीबोधकाकारस्येति*। स्त्रीबोधकश्चासावाकारश्चेत्यर्थः। *अवयवषष्ठीति*। स्त्रीबोधकस्याकारस्येत्यत्रावयवषष्ठ्येव स्यादित्यर्थः। अत्र बहुलक्ष्यसंस्कारश्च सांकाशियकेत्यस्य सिद्धिरूपः। *तदनुपादाना-दिति*। साक्षादुच्चारितत्वन्तत्तच्छब्दानुवादेन विहितत्वं वा प्रतिपदो-क्तत्वं तदुभयमप्यत्र नास्तीति भावः। ननु स्त्रीप्रत्ययशब्दस्य मूलेऽभावात् स्त्रीप्रत्ययः किमिति मूलोक्तमयुक्तमतस्तद्योजयति –*यकपूर्वेति*।

---

(१) ननु 'नयासयोः' इति सूत्रात् नेत्यनुवृत्तौ निषेधविकल्पस्यैव प्रसक्त्या मूलोक्तं 'इद्वास्यात्' इति विधिविकल्पोक्तिरयुक्तेत्यत आह—नेत्यनुवृत्तावपीति*।

उदीचामितिसूत्रे आत इत्यस्याभावे यकपूर्वाया इत्यत्र यकपूर्वकस्त्रीबोधकाकारस्य स्थाने इति स्थानषष्ठीमभ्युपेत्य प्रश्नमुपपदयति–*उदीचामित्यादि* स्त्रीबोधकावयवस्याकारस्येति स्थानषष्ठीमभ्यु-पेत्योत्तरयति--बहुलक्ष्येति*। तथाच सांकाशियकेत्यत्रातिप्रसक्तिवारणाय 'आत' इत्यस्यावश्यक-त्वमितिभावः।

भस्त्रैषा । (पा०सू०७।३।४७) अयमपि निषेधविकल्प इत्याह—अत इति । अत्रप्यातः स्थान इत्यनुवर्त्तते । तदन्तेति ।(१) "येनविधिः" (पा०सू०१।१।७२) इति सूत्रे "त्यदादिविधिर्भस्त्रादिग्रहणञ्च प्रयोजनम्" इति भाष्यात् । अपिना नञ्भिन्नपूर्वाणामपूर्वाणाञ्च सङ्ग्रहः । नञ्पूर्वाणामपीति स्पष्टार्थम् (२) । "पदाङ्गाधिकारे तस्य च" इति सिद्धेः । उपसर्जनार्थमिति । एवञ्चानुपसर्जने "आदाचार्याणाम्" इत्यात्वं भवत्येव, उपसर्जनेऽस्य चारितार्थ्येन बाधे मानाभावात् । अन्यस्य-अनुपसर्जनस्य । उत्तरसूत्रम्-'अभाषितपुंस्काच्च' (पा०सू०७।३।४८) इति ।

अन्तर्वर्त्तिनीमिति । न एतद् सु इति स्थिते अकचि कृते अकृते वा नञा तत्पुरुषे ऽन्तरङ्गानपीति न्यायेन त्यदाद्यत्वात्प्राक् सुपो लुकि ततोऽकचि वा पुनर्विशिष्टात्सुपि त्यदाद्यत्वे टापि समासात्पूर्वोत्पन्नसुपः पर एव टाबिति भावः । बहुव्रीहौ तु 'प्रियैतत्का' 'प्रियै

पूर्वोक्ताभिप्रायेणाह—*अयमपीति* । भस्त्रैषेति योग इत्यर्थः । यत्तु "नञ्पूर्वाणामपि" इति ज्ञापकादिहेत्त्वविधौ तदन्तविधि नेति तद्दूषयितुमाह—*येन विधीति* । *भस्त्रादिग्रहणमिति* । एतेन प्रकृते तदन्तविधिर्भाष्यसम्मत एवेति ध्वनितम् । *उपसर्जनेऽस्य चारितार्थ्येनेति* । निर्भस्त्रिका' इत्यादौ "गोस्त्रियोः" इति ह्रस्वत्वे पुनष्टापि कृतेऽस्यापो भाषितपुंस्काद्विधानेन "अभाषितपुम्क" इत्यस्य प्राप्तिरिति भावः ।

*अकचि कृते इति* । अवयवगतकुत्साविवक्षायामिदम् । समुदायगतकुत्साविवक्षायामाह—*अकृते वेति* । *ततोऽकचीति* । समुदायार्थगतकुत्साविवक्षायामित्यादिः । *समासादिति* । प्रत्ययलक्षणेनेत्यादिः । नञ्तत्पुरुषस्योत्तरपदार्थप्रधानतया सर्वनामत्वात्तद्विधं प्रक्रियामुक्त्वा बहुव्रीहौ विशेषं वक्तुमाह—*बहुव्रीहाविति* ।

(१) ननु तदन्तविधिनैव सिद्धे इति मूलोक्तमयुक्तम् । प्रकृतसूत्रे नञ्पूर्वाणामित्यनेनैव तदन्तविधेर्ज्ञापनादित्याशंकां येनविधिरितिसूत्रस्थभाष्यविरोधेन परिहरन् तदन्तविधौ हेतुं दर्शयति*येनविधीति* ।

(२) स्पष्टार्थमिति* । अत्र केचित् 'पदाङ्गाधिकारे' इत्यस्य क्वचिदप्रवृत्तिज्ञापनार्थं नञ्पूर्वाणामित्याहुः । तेन "इष्टकेषीकेत्यादौ नोत्तरपदेन तदन्तविधिः । किंतु पूर्वपदेनैवेति 'पक्वेष्टकचितम्' इत्यत्र । इष्टकापरमचितमित्यत्र क्वचित्पूर्वपदेनापि न तदन्तविधिः । यथा 'ओजः सहोऽम्भस्तमसस्तृतीयायाः' इत्यत्र तमः पदेन । अतएव "सततनैशतमोवृत्तमत्यते" इति भारविप्रयोगः संगच्छते इत्याहुः ।

तकत्का' वा, कबभावे 'प्रियैतकत्' इत्यत्र सर्वथा नेत्वप्राप्तिः। अनेष-केति । अज्ञाता एषा एषका, न एषकेति.विग्रहः। पूर्वं नञ् समासेऽज्ञा-ताऽनेषेति । असम्भवादिति। 'एषाद्वा' इति निर्देशात्संज्ञोपसर्जन-योरप्राप्तेरिति भावः । अकजर्हे इति । एवञ्च तदकारस्याऽऽत-स्थानिकत्वाभाव इति भावः । अर्थान्तरे त्विति । आत्मज्ञातिध-नेष्वित्यर्थः ।

स्वो ज्ञातावात्मनि स्व त्रिष्वात्मीये स्वोऽस्त्रियां धने ।

इति कोशादिति भावः । कप्रत्ययान्तत्वादिति । तत्र च नान्तर्वर्त्तिविभक्त्या सुपः परत्वं, केन व्यवधानादिति भावः । "सं-ज्ञापूरण्योश्च" (पा०सू०६।३।३८) इति निषेधेन संज्ञाया अपि भा-षितपुंस्कत्वबोधनेन संज्ञाभूते न "अभाषितपुंस्काच्च" इत्यनेन सिद्धिः (१) आत्मीयत्वपुरस्कारेणैव संज्ञाकरणादिति बोद्धव्यम् । नित्यमेवे-ति। तत्र ह्यकाचि कृते आतः स्थानिकत्वाभाव इतिभावः। (२)एवमत्य-न्तस्वार्थिककान्तेऽपि नित्यमेवेत्वम् । अकचोऽत्यन्तस्वार्थिकापवाद-त्वाभावात् । निःस्वकेति । स्वस्या निष्क्रान्तेति विग्रहः उपसर्जन-ह्रस्वः, टाप् , अज्ञातादौ कः ।

अभाषित (पा०सू०७।३।४८) । 'स्त्रीविषयाच्चे'ति नोक्तम्

---

प्रियैतत्केति । न बहुव्रीहाविति सूत्रारम्भवादिमतेन । प्रत्याख्यानरीत्याह *प्रियैतकत्का वेति* । 'द्वा एषा' इत्येतद्विषयेऽसम्भवमुपपादयति-*एष-द्वेतीति* अप्राप्तेरिति भाव इति* । एवञ्चानुपसर्जन एवानेन भवितव्ये तत्राकचि कृते आतः स्थानिकत्वासम्भव इति सूचितम् । ननु संज्ञाभूत-स्यैतत्सूत्रोदाहरणत्वकथनमयुक्तम्, उत्तरसूत्रेण तत्रेत्त्वासिद्धेरत आह-*सं-ज्ञापूरण्योरिति । पुरुषसाधारणप्रवृत्तिनिमित्तमुपपादयति-*आत्मीय-त्वपुरस्कार इति* । *कान्तेऽपीति* । तेषां प्रातिपदिकत्वमात्रापेक्षत्वे स्त्रीप्रत्ययादपि प्रागुत्पत्तेः ।

पदलाघवमूलिकामाशङ्कान्निराकरोति-*स्त्रीविषयादिति* । मूलोक्त

---

(१) संज्ञापूरण्योश्चेतिनिषेधे संज्ञाया अभाषितपुंस्कत्वे युक्तिं सूचयन् हेतुमाह—आत्मीयत्वेति*।

(२) नन्वकाचि आतःस्थानिकत्वाभावेऽपि तत्रैवाऽत्यन्तस्वार्थिककप्रत्यये आतःस्थानिकक-सत्वादित्वविकल्पः स्यादित्यत आह—एवमिति* । अत्यन्तस्वार्थिकानामन्तरङ्गत्वेन स्त्रीप्रत्ययात्प्रागे-त्पत्तेरिति भावः ।

स्त्रीनपुंसकदामशब्दाड् डापि अज्ञाता दामा 'दामिका' 'दामाका' 'दामका' इत्यसिद्ध्यापत्तेः । विहितस्येतिव्याख्याने फलमाह-बहुव्रीहेरिति । अविद्यमाना खट्वा यस्या इति विग्रहे पाक्षिके समासाभावे 'गोस्त्रियोः (पा०सू०१।२।४८) इत्युपसर्जनह्रस्वे ऽखट्वा-शब्दादापि सुप्यज्ञातादौ के सुब्लुकि 'केणः' (पा०सू०७।४।१३) इति ह्रस्वे पुनष्टाप्यभाषितपुंस्काद्विहिताकारस्थानिकाकाराभावेनैतद्विक-ल्पाप्राप्तावुत्सर्गेण नित्यमेवेत्वं, परविशेषणत्वे तु तादृशखट्व-शब्दात्परत्वेन दोषः स्यादेवेति भावः ।

शैषिके कपीति । न खट्वा सु इत्यवस्थायां कपि सुब्लुकि प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात्समाससंज्ञायां "समासान्ता" (पा०सू०५।४।६८) इति शास्त्रबलात्कबन्तस्यैव समासत्वेनोपसर्जन-स्त्रीप्रत्ययान्तान्तसमासरूपप्रातिपदिकाभावात् 'गोस्त्रियोः'(पा०सू०१।२। ४८) इति ह्रस्वाभावे 'केण' इति ह्रस्वे 'न कपि' (पा०सू०७।४।१४) इति निषिद्धे "आपोऽन्यतरस्याम्" (पा०सू०७।४।१५) इति ह्रस्वे तस्य प्राग्वर्त्तिनः खट्वशब्दात्परस्यापोऽभाषितपुंस्काद्विहितत्वेन तत्स्थानिकाकारस्यायं विकल्पः । ह्रस्वाभावे तु 'अखट्वाका' इति, इति भावः ।

अयमेवेति । (१) आचारक्विबन्तप्रकृतिककर्त्तृक्विबन्तानामन-

---

बहुव्रीहेरित्युपलक्षणं 'निस्विका' इति तत्पुरुषेऽपि नित्यमेवेत्त्वमिति बोध्यम्। यत्तु मूलोक्तमनुपसर्जनादिति सूत्रमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञाप-यतीति तदयुक्तमन्यत्रापि प्रयोजनसम्भवादिति यत्तद्दूषयितुमुपक्रमते-*आचारेति* । *कर्तृक्विबन्तानामिति* । इदमनडुच्छब्दो गौरादिषु प-ठ्यते तस्मादाचारक्विबन्तप्रकृतिककर्तृक्विबन्तेऽनुपसर्जनाधिकारचारि-तार्थ्यशङ्कायान्द्रष्टव्यम् । एतेनादन्तत्वाभावात् क्विबन्ते कथम्प्राप्तिरित्य-पास्तम् । यद्यपि "ह्रस्वनद्याप" इति सूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारे क्विन्नास्तीति आचारक्विबन्तेऽनुपसर्जनाधिकारचारितार्थ्यशङ्कैवा-नुत्थाना । तथापि हलन्तात् क्विपस्तादृशस्य सत्त्वमभ्युपेत्य समाधानमाह-

---

(१) ननु आचारक्विबन्तात्कर्तरि क्विपि तदन्तविधिमन्तरेणाऽपि उपसर्जनव्यावृत्तयेऽनुपसर्जनाधिकारस्य चारितार्थ्यात्तस्य तदन्तविधिज्ञापकत्वं न युक्तमित्यत आह—आचारेति* ।

भिधानमेव स्त्रियाम् एतद्भाष्यप्रामाण्यात् । पञ्च स्त्री गोव्यक्तयो धनं यस्य स 'पञ्चगवधन' इत्यत्रार्थतत्सूत्रोक्तार्थतत्त्वाभावाद्धनस्य प्रातिपदिकत्वाभावेन न ङीप् । आपिशलिना प्रोक्तमधीते 'आपिशला ब्राह्मणी' इत्यत्र तु न ङीप् । प्रोक्ताणः स्त्रियामवर्त्तनात् । अध्येत्रणतु लुप्तः, अणूयोकार इति व्याख्यानेन वर्णाश्रये प्रत्ययलक्षणाभावात् । अध्येत्रर्थगतस्त्रीत्वमादाय तदण्निमित्तकस्य न प्राप्तिः। स्त्रियामिस्यस्य गृह्यमाणविशेषणत्वात्तदण एतद् स्त्रीत्वे ऽवर्त्तनात् । अत एव काशकृत्स्निना प्रोक्तां मीमांसामधीते "काशकृत्स्ना ब्राह्मणी" इत्यत्रापि न ङीप् । प्रोक्तार्थगतस्त्रीत्वमादाय तु पुनर्न ङीप् लक्ष्येलक्षणस्येति न्यायात् तस्माद् 'बहुकुरुचरा' इत्येव तद्व्यावर्त्यम् । तत्र च तदन्तविधि विरहात् प्राप्तिरेव न । ज्ञापिते तु तदन्तविधौ प्राधान्यादेतदारम्भाच्च स्त्रियामिति ङीप्प्रकृतिविशेषणमेव । अत एव धीवानमतिक्रान्त 'अतिधी-

---

*एतद्भाष्येति* । उक्तार्थज्ञापकतापरेत्यर्थः । *स्त्रीगोव्यक्तय इति* । इ-मुत्तरकाले स्त्रीत्वसत्त्वात्स्त्रीप्रत्ययापादनाय । गृह्यमाणेति* । स्त्रियाम् योऽकारस्तदन्तादित्यर्थस्य सम्मतत्वेन गृह्यमाणाण् विशेषणत्वात् । अत स्त्रियामण् योऽकार इत्यनेन यदण्णन्तात् स्त्रियाम्प्रत्ययविधानं तस्याः यत् स्त्रीत्वविशिष्टे उत्पत्तिस्तदेव स्त्रीत्वम्प्रत्यासत्त्या विवक्षितम् । *अत एव* । निरुक्तस्त्रीत्वस्य विवक्षितत्वादेव । *काशकृत्स्निनेति* । अत्र काशकृत्स्निना प्रोक्तां मीमांसां इत्यर्थे काशकृत्स्निशब्दादणि कृते तदन्तात्स्त्रियां ङीपि पुनरध्येत्र्यामणि तस्याणो लिङ्गविशिष्टपरिभाषया प्रोक्तार्थप्रत्ययान्तं यन्ङीबन्तं ततः परत्वेन लुकि "लुक्तद्धित" इति ङीपो लुकि श्रूयमाणस्याण अध्येत्र्यामवर्त्तनादित्यर्थः । अण्णन्तसमुदायस्य तु गः ब्ध्यत इतिन्यायेनाध्येत्र्या वृत्तेष्टाव् भवत्येवेति भावः ।

*तद्व्यावर्त्यमिति* । अनुपसर्जनाधिकारव्यावर्त्यमित्यर्थः । प्रातिपदिकाधिकारसत्त्वेनाण्मात्रस्याप्रातिपदिकत्वादणन्तादित्यर्थसम्भवेऽपि न तिण्णन्तान्तादित्यर्थो न स्यात् । एवं सति 'बहुकुरुचर' इति समुदायस्य न टिन्तत्वमतो नास्मात् ङीपः प्राप्तिरिति भावः। ननु स्त्रियामित्यस्य गृह्यमाणविशेषणता पूर्वमुक्ता एवञ्च तदन्तविधौ ज्ञापितेऽपि कथम्बहुकुरुचरेत्यनाधिकारव्यावर्त्यते इत्यतआह—*ज्ञापिते त्विति*।प्राधान्याद् विशेष्यत्वात् एतेन "न ह्युपाधेरुपाधिर्भवति, विशेषणस्य वा विशेषणम्" इति न्यायस्सरः सूचितः । *एतदारम्भात्* । अनुपसर्जनादितिसूत्रारम्भात् । *स्त्रियाम्प्रकृतीति* । प्रातिपदिकमित्यर्थः । *अत एव* । स्त्रियामित्यस्य प्राति-

री' इति सिद्धम्। एवञ्च 'आपिशला' इत्याद्यप्यस्यैव व्यावर्त्यम्।
(१)अनुपसर्जनादिति च सामर्थ्यात् गृह्यमाणविशेषणमेवेति भावः।
तदन्तविधिमिति। अण्णन्तादेः प्रातिपदिकविशेषणत्वेना-
न्तात्त इत्येवंरूपमित्यर्थः। अन्यथा प्रत्ययविधौ प्रतिषेधात्स दु-

---

पदिकविशेषणत्वादेव। *एवञ्च*। अनुपसर्जनादितिसूत्रे कृते च। अनु-
पसर्जनादित्यस्यापि प्रातिपदिकविशेषणत्वे "भक्षितेऽपि लशुने न शान्तो
व्याधिः" इतिन्यायेनाधिकारसूत्रवैयर्थ्यमेव स्यादतस्तस्य गृह्यमाणविशे-
षणत्वमेव "गुणः कृतात्मसंस्कार" इतिन्यादिति भावः।

*प्रत्ययविधौ प्रतिषेधादिति*। ननु 'येनविधि'रिति सूत्रव्याख्यानाव-
सरे समासप्रत्ययविधाविति प्रतिषेधवाक्यमुपक्रम्य "उगिद्वर्णग्रहण" इति
निषेधवाक्यैकवाक्यतयाऽयन्निषेधः प्रत्ययांशे गृह्यमाणप्रातिपदिकविषये।
प्रत्ययविधिविषयेण गृह्यमाणप्रातिपदिकेन तदन्तविधिर्नास्तीत्यनेनैकवा-
क्यत्वलाभात्। उगिद्वर्णेति त्वेकदेशानुवादः। अत एव "वनो र च" इत्या-
दौ प्रत्ययग्रहणे तदन्तग्रहणमित्यस्य नायन्निषेध इत्युक्तन्तेनास्य ग्रन्थस्य
निषेधः। "टिड्ढ" इतिसूत्रे विशेषरूपेण प्रातिपदिकग्रहणाभावादिति चेन्न।
स्य ग्रन्थस्यानुपसर्जनादितिसूत्रस्थभाष्यीयोपक्रमानुसारित्वात्। तथा-
हि—"अनुपसर्जनादिति किमर्थम्। बहुकुरुचरा। बहवः कुरुचरा यस्या-
मिति बहुव्रीहिः। कुरुचरशब्द उपसर्जनमिति ङीब् भवति। नैतदस्ति प्र-
योजनम्। कुरुचरशब्दात्प्रत्ययो विधीयते तत्र कः प्रसङ्गो यद्बहुकुरुचरश-
ब्दात्स्यान्नैव प्राप्नोति नार्थः प्रतिषेधेन। तदन्तविधिना प्राप्नोति" इत्यन्त-
ग्रन्थेन बहुकुरुचरेत्येतदनुपसर्जनादित्यस्य प्रयोजनमुक्तम्।

अत्र टिदन्तश्चरशब्दो न तु कुरुचरशब्द इति कुरुचरशब्दादित्यनुप-
पन्नमित्याशङ्कानिवारणायाह कैयटः—'टिड्ढाणञित्यत्र टित्प्रातिपदिकङ्गृह्य-
ते। तच्च किञ्चित् साक्षाट्टिद् भवति यथा नदट् चोरडिति। किञ्चिदव-
यवटित्वद्वारेण। अवयवे हि यत्र टित्त्वमाकिञ्चित्करन्तत्र समुदायार्थन्त-
द्विज्ञायते स चावयवः क्वचिद्धातुष्टिद्भवति यथा स्तनन्धयतीति। क्व
चित् ट्युट्युलादिस्तद्धितः। क्वचित्कृत ल्युडादिः। तत्र यं समुदायं
सोऽवयवो न व्यभिचरति तदर्थमवयवस्य टित्त्वमित्यभिप्रायेणोक्तं कुरु-
चरशब्दादिति। अत्र यं समुदायमित्यनेन ठप्रत्ययस्य टित्त्वेन कुरुचर-

---

(१) ननु स्त्रियामित्यस्य ङीप्प्रकृतिविशेषणत्ववत् अनुपसर्जनादित्यस्यापि तद्विशेषणत्वेन बहुकुरु-
चरादेः तद्व्यावर्त्यम तदन्तसमुदायस्यानुपसर्जनत्वादित्यत आह—अनुपसर्जनादिति चेति*। अन्यथा
धिकारस्य पुनर्वैयर्थ्यं स्यादतो यावताविना यदनुपपन्नं तावत्सर्वं तदन्यथानुपपत्त्या कल्प्यते इति भावः।
तदन्तविधौ ज्ञापिते यथावाक्यार्थस्तथा स्फुटीकरोति—अण्णन्तादेरिति*।

शब्द इति दर्शितम्भवति। अत उत्तरम्पठति। प्रातिपदिकेन तदन्तविधि-प्रतिषेधात्। ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते। समास-प्रत्ययविधौ प्रतिषेध इत्यनेन। ग्रहणवतेत्यपि वर्णग्रहणवर्जमित्येतदन्तार्था-नुवाद एवेति भावः।

ज्ञापकन्तु पूर्वत्र तदन्ताप्रतिषेधस्य। एवमुक्त्वा ततः किमेतस्य ज्ञापकस्य प्रयोजनमिति प्रश्ने बहुधीवरी बहुपीवरी अतिधीवरी अतिपीवरीति प्र-योजनमुक्तम्। अत्र कैयटः। 'वनो र चेत्यत्र वन्नन्तस्य प्रातिपदिकस्य ग्रह-णात्तदन्तविधिर्न्न स्यात् इति भावः'। ननु प्रातिपदिकस्य विशे-षरूपेण प्रकृतसूत्रे ग्रहणाभावाद् ग्रहणवतेत्यनेन तदन्तविधिप्रतिषेधकथ-नमयुक्तमेवेति चेन्न। ग्रहणवतेत्यस्य प्रातिपादकत्वव्याप्यधर्मावशिष्टं यत्प्र-तिपादीयते तत्र तदन्तस्य ग्रहणन्नेत्यर्थस्य विवक्षितत्वात्। अस्ति च टि-त्पदम्प्रातिपदिकत्वव्याप्यधर्मविशिष्टबोधकमिति स्यादत्र निषेध इत्या-शयात्। तथाहि। टिदिति न प्रत्ययग्रहणपरिभाषया तदन्तपरम्। टित्त्व-स्य नदट् देवट् चोरडितिसमुदाये दर्शनेन तस्य प्रत्ययाप्रत्ययसाधार-णतया प्रत्ययमात्रग्रहणाभावाच्च। न च टित् योकारस्तदन्तादित्यर्थोऽस्त्वि-ति वाच्यम्। 'नदी' 'देवी' चोरी' 'स्तनन्धयी' इतिरूपाणामसिद्ध्यापत्तेः। एतेषु हि समुदायस्य टित्त्वन्न तु अकारस्येति।

न चाधिकारप्राप्तप्रातिपदिकादित्यस्य टित्पदं विशेषणमिति येन वि-धिरित्यनेन तदन्तग्रहणमस्तु 'नदी' 'देवी' इत्यादौ व्यपदेशिवद्भावेन सि-द्धम् मुख्यव्यवहारस्य 'चिरन्तनी' इत्यत्र सत्त्वादिति वाच्यम्। 'स्तन-न्धयी' इत्यस्यासिद्ध्यापत्तेः। अत्र हि धातोष्टित्त्वन्न चैतत्तदन्तमतोऽत्र ल-क्षणया टित्पदम्परिभाषिकम्, इट्कारविषयताप्रयोज्या या प्रतिपादि-त्वसमानाधिकरणटिद्व्यवहारविषयता तदाश्रयपरम्। तत्त्वञ्च प्रवृत्ति-निमित्तम्। प्रयोज्यप्रयोजकभावस्स्वरूपसम्बन्धरूपः साक्षात्परंपरासाधा-रणः साक्षादिट्कारविषयताप्रयोज्यता टिद्व्यवहारे 'नदी' इत्यादौ 'स्तनन्धयी' 'चिरन्तनी' इत्यादिसमुदाये परम्परया। तदेतद्व्युत्पादितं कैयटग्रन्थसंवादेन टिड्ढाणञित्यत्रेत्यादिना।

एवञ्चेट्कारविषयताप्रयोज्यप्रातिपदिकत्वसामानाधिकरण्यविशिष्टवि-षयताश्रयत्वं प्रातिपदिकत्वव्याप्यो धर्मस्तद्विशिष्टबोधकस्य टित्पदस्य सूत्रे उपादानाद् गृह्यमाणप्रातिपदिकविषयतासत्त्वात्तदन्तविधिनिषेधाद् बहुकुरुचरेत्यत्र न प्राप्नोतीत्यनुपसर्जनाधिकारज्ञापकता सङ्गच्छते। कु-रुचरेत्यत्र तु टित्त्वादेव ङीप्। तदुक्तम्भाष्ये। "कुरुचरशब्दात्प्रत्ययो वि-धीयते तत्र कः प्रसङ्गो यद्बहुकुरुचरशब्देति स्यात्' इति। पूर्वोक्तभा-ष्यदुक्तम् 'पूर्वत्र तदन्ताप्रतिषेधस्य' इति तदनुपसर्जनादिति तदन्तविधि-भावसिद्धार्थानुवाद इत्याशयेन।

ङीपः स्यात् । प्रत्ययग्रहणपरिभाषालभ्यस्य तु नायं निषेधः । 'प्रातिपदिकात्' इत्यनेन सहानन्वयापत्तेः । तत्फलं कौम्भकारेयसिद्धिः । अन्यथा 'कुम्भकारेय' इत्यापद्येत कुम्भेन समासे ङीपि (१)कुम्भविशिष्टस्यापत्येन योगे कार्येऽर्थे तदयोगस्य वक्तुमशक्यत्वात्कदाचितो ऽपि ढकि कुम्भशब्दोकारे वृद्ध्यभावस्याप्यापत्तेः । निष्कृष्यैकार्थीभाव एव वृत्तिनिमित्तमिति तु वक्तुमशक्यम् । "तद्धितार्थ" (पा० सू० २।१।५१) इत्युत्तरपदे समासविधानात्समुदायेनैकार्थीभावे ऽवयवेनापि तस्यैव सत्त्वात् । कृद्ग्रहणपरिभाषायाः कृन्मात्रग्रहणे प्रवृत्त्या न तया विशिष्टादेव ङीबुत्पत्तिं प्रसाशा ।

न च तदन्तग्रहणे ऽपि कारशब्दस्य व्यपदेशिवद्भावेनागन्ता-

अपरे तु गृह्यमाणप्रातिपदिकविषय इत्यस्य यदानुपूर्व्यवच्छिन्नस्य प्रातिपदिकसंज्ञा तदापूर्वीरूपेण यत्रोपादानं तत्रेत्यर्थः । एवञ्च "टिड्ढा" इति सूत्रे तादृशरूपेणोपादानाभावान्न तदन्तविधिनिषेधप्राप्तिरिति नानुपसर्जनादित्यस्य टिड्ढेति सूत्रे फलम् । किन्तु "कौरव्यमाण्डूकाभ्यां च" इत्यादिसूत्रेण विधीयमानः स्त्रीप्रत्ययः 'प्रियकौरव्या' 'प्रियमाण्डूक' इत्यादावुपसर्जने न भवतीति बोध्यम् । 'प्रियकुरुचरा' इत्यादिभाष्यं तूपलक्षणमित्याहुः । *तत्फलमिति* । तदन्तविधिफलमित्यर्थः । *अन्यथा* । तदन्तविध्यभावे । *इत्यापद्येत* । इत्यप्यापद्येत । प्रत्ययग्रहणपरिभाषया कुम्भकारशब्दस्यानणन्तत्वेनावयवात्कारशब्दात्स्त्रीप्रत्ययेऽवयवात्कारीशब्दाड्ढकि तन्निरूपिताङ्गत्वस्य विशिष्टे ऽभावेन ककारोकारस्य वृद्धिर्न स्यात् । *ङीपि* । अवयवान्ङीपि । *कुम्भविशिष्टस्य* । कुम्भकारीशब्दार्थस्य । तदेतदुपपादयति—*कदाचिदिति* । एतेन यदा समुदायादुत्पत्तिस्तदा कौम्भकारेयसिद्धिः सूचिता । *निष्कृष्य* अर्थद्वारकशब्दान्तरसम्बन्धाभावं सम्पाद्य । *एकार्थीभाव इति* । विवक्षाविषयेण सहैकार्थीभावः । ननु कृद्ग्रहणपरिभाषया 'बहुकुरुचरा' इत्यादौ समुदायात्प्राप्नोतीत्यत आह—*कृद्ग्रहणपरिभाषेति* ।

ननु कुम्भकारेयनिवृत्त्यर्थञ्चेत्तदन्तविधिः स्वीक्रियते तदा ज्ञापितेऽपि तस्य दुर्वारतया ज्ञापनमयुक्तमित्याशयेन शङ्कते—*न चेति* । *व्यपदेशिवद्भावेनेति* । लौकिकेनेत्यर्थः । लोके यथा प्रधानीभूतो राजामा-

(१) कुम्भेन समासे ङीपीति* । कारशब्दमात्रात् ङीपीत्यर्थः । सति च तदन्तविधौ कुम्भकारशब्दासमुदायात् ङीपि प्रत्ययग्रहणपरिभाषया समुदायस्यैव प्रत्ययान्तत्वात् समुदायादेव ढकि कुम्भशब्दोकारस्यैव वृद्ध्या कौम्भकारेयेत्यादिसिद्धिः ।

न्तत्वात्ततोऽपि कदाचिन्ङीपि कुम्भकारेयो दुर्वारः। किं च समुदायान्ङीष्यपि स्त्रीप्रत्यये तदादिनियमाभावेन केवलादपि कदाचिड्ढकि स दुर्वार इति वाच्यम्। एतदधिकारादेव ज्ञापकादसहाये एव व्यपदेशिवद्भावप्रवृत्तेः। अर्थवत्सूत्रोक्तार्थवत्त्वाभावेनाऽगणन्तस्याप्रातिपदिकत्वाच्च तदादिनियमाभावेनाधिकस्य कार्यं बोध्यते, न तु न्यूनस्येत्यदोषाच्च। अन्यथा तदन्तग्रहणे फलाभावेन तद्वैयर्थ्यं स्पष्टमेव। एतदेवाभिप्रेत्यात्र भाष्ये उक्तं "समासे च कृतेऽवयवादुत्पत्ताववयवस्य वृद्धिः स्यात्" इति। "येनविधिः (पा०सू०१।१।७२) इति सूत्रे च प्रत्ययग्रहणे तदादितदन्तविधेः प्रयोजनं, 'गार्ग्यायणः' 'परमगार्ग्यायणः' इति उक्तं भाष्ये। तत्रैकदेशात्प्रत्ययाभावे परमश्चासौ गा-

---

त्यो राजानं प्रति गुणीभूतोऽपि राजनि व्यपादश्यते लोकैस्तथा समुदायार्थम्प्रति गुणीभूतोऽप्युत्तरपदार्थः पूर्वपदार्थनिरूपितप्राधान्यविशिष्ट इति तदर्थप्रतिपादकस्य तदन्तत्वव्यवहारो भविष्यतीत्यभिमानः। परोक्तम्प्रथमदूषणमभ्युपेत्य समाधत्ते--*एतदधीति*। *असहाय एवेति*। लौकिकेऽपि व्यपदेशिवद्भावोऽसहाये एवेष्यते न तु ससहाये। बहुषु पुत्रेषु सत्सु नैकस्मिन्नयमेव ज्येष्ठो मध्यमः कनीयानिति व्यवहारः किन्त्वेकस्यैव सत्वे तस्मिन्नयमेव ज्येष्ठो मध्यमः कनीयानिति व्यवहारः अस्मिन्नेवार्थेऽयमधिकारोऽपि ज्ञापक इति भावः। भाष्येऽपि व्यपदेशिवदेकस्मिन् कार्यम्भवतीति वक्तव्यमित्युक्तम्।

सिद्धान्तानुसारेणाह--*अर्थवत्सूत्रेति*। इदमेतत्संज्ञाफलभूतेत्यस्य यथाश्रुतार्थानुसारेण। एतत्संज्ञाफलभूतविभक्तिभिन्नस्योपपदस्यापेक्षासत्त्वेऽपि न पूर्वोक्तारीत्यानुपपत्तिरित्यत आह--*तदादिनियमाभावेनेति*। *न तु न्यूनेति*। अयम्भावः। यथा प्रत्ययग्रहणपरिभाषयाऽधिकस्य प्रत्ययान्तत्वं व्यावर्त्यते न तु न्यूनस्य। अत एव 'इ' 'इयान्' इत्यादौ तद्धितान्तत्वनिबन्धनप्रातिपदिकत्वासिद्धिस्तथा प्रत्ययग्रहणपरिभाषापवादभूतस्त्रीप्रत्यये चानुपसर्जनेनेति परिभाषयापि प्रत्ययग्रहणपरिभाषाव्यावर्त्यस्याधिकस्य स्त्रीप्रत्ययान्तत्वम्बोध्यते न तु न्यूनस्य स्त्रीप्रत्ययान्तत्वं बोध्यत इत्यर्थः। किञ्च न तु न्यूनस्येति यदुक्तन्तत्रैतदधिकारस्यापि ज्ञापकत्वम्बोध्यम्। *अन्यथा*। उक्तप्रकारत्रयानङ्गीकारे। *अवयवस्य* कुम्भकारेत्यत्र कारेत्यस्य। यत्तु तदुक्तन्निष्कृष्यैकार्थीभाव एव वृत्तिनिमित्तमित्ययुक्तमिति तमेवार्थन्द्रढीकर्त्तुमाह—*येनविधिरितीति*। *उ

यणश्चेति तदर्थो वाच्यः। तथा सति नैव परमगार्ग्यात्प्रसक्तिरिति तत्प्रयोजनत्वोक्तिरसङ्गता स्यात्। मम तु परमगार्ग्यस्यापत्यमित्यर्थे युक्तन्यायाद् गार्ग्यशब्दादेव प्रत्ययो न तु परमगार्ग्यात्, तथा सति 'परमगार्ग्यायणः' इति स्यात् इति तत्प्रयोजनत्वोक्तिसङ्गतिः। कैयटोऽपि 'तदादिनियमावश्यकत्वप्रदर्शनाय परमगार्ग्यायणः' इत्युपन्यास इत्युक्तवान्। यत्तु सर्वादिसूत्रे भाष्ये "अनुपसर्जनादित्येष योगः प्रत्याख्यायते" इत्युक्तं, तत्त्वत्र वार्त्तिककृता तस्य प्रत्याख्यानात्तदभिप्रायकमिति भाष्यप्रदीपोद्द्योते विस्तरः।

टिड्ढा (पा०सू०४।१।१५) ठेत्येव सिद्धे ठक्ठञोरुपादानं ठन्‌निठञोर्व्यावृत्त्यर्थम्। अदन्तमिति। प्रत्यासत्त्या टिदाद्यवयवाकारान्तमित्यर्थः। तेन 'पञ्चाश्वा' इत्यादौ ठगिनिमित्तोऽपि न ङीप्। कुरुचरीति। कुरुषु चरतीत्यधिकरणे उपपदे चरेष्टः टितो ऽप्रत्य-

---

न्यायादिति* प्रत्ययग्रहणे यस्मादिति न्यायादित्यर्थः।

अत्रत्यभाष्येऽनुपसर्जनाधिकारस्य तदन्तविधिज्ञापकतोक्ता सर्वादिसूत्रभाष्ये तु प्रत्याख्यायत इत्युक्तमिति विरोधशङ्कानिवारणायाह--*यत्तु सर्वादीति*। *वार्त्तिककृतेति*। इत्थं हि वार्त्तिकग्रन्थः 'अनुपसर्जनग्रहणमनर्थकम्। प्रातिपदिकेन तदन्तविधिप्रतिषेधात्। आपिशलमधीते आपिशला ब्राह्मणीत्येतदर्थमपि न, स्त्रियां योऽण् विहित इत्येवं रीत्या गृह्यमाणविशेषणम् स्त्रीत्वम्। पूर्वत्र तदन्तस्य ग्रहणं यथा स्यादित्यर्थमपि न। अमहत्पूर्वग्रहणेन तत्र तस्य ज्ञापनात्' इति। कुम्भकारीत्यादौ तु कारशब्दादेव ङीप्। ढक्तु स्त्रीप्रत्यये तदादिनियमाभावात्समुदायादेव। नावयवादनभिधानादिति तदाशयः।

वस्तुतस्तु सर्वादिसूत्रस्था 'प्रत्याख्यायते' इत्युक्तिरत्रत्यवार्त्तिकप्रथममभिप्रेत्य अत एव भाष्यकृता अत उत्तरम्पठतीत्यनेन तस्य वार्त्तिकसिद्धान्तत्वं सूचितम्। उत्तरवाक्ये तु आचार्यदेशीयस्य पूर्वत्र तदन्ताप्रतिषेधेऽप्युत्तरत्र चारितार्थ्यानुपपादनात्। "संज्ञोपसर्जनप्रतिषेध" इत्यस्य प्रत्याख्यानाय हि तत्रेदं सूत्रमन्यथा व्याख्यातम्। संज्ञोपसर्जनव्यावृत्तिरन्यथा तत्र साधितेति तदर्थमपि नेति प्रकृतसूत्रस्थाद्यवार्त्तिकतात्पर्यम्। इदन्तर्हि प्रयोजनमित्यारभ्य सिद्धान्त्युक्तिर्वार्त्तिकप्रत्याख्यानाभिप्रायेणेति विभावनीयम्।

यथाश्रुतार्थे पञ्चाश्वेत्यस्य वारणासम्भवादाह—*प्रत्यासत्त्येति*।

यस्यापि सत्वात्प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्यात्र टिदन्तत्वं कुरर-शब्दस्येति बोध्यम्।

वक्ष्यमाणेति। वचेर्लृटः शानच्। टित्वादिति। स्थानिवत्त्वेनेत्यादिः। "नल्यपि"(पा०सू०६।४।६९) इति लिङ्गाद्धित्वादेशास्त्रीयस्याप्यतिदेशः, अनुबन्धकार्ये 'अनल्विधौ' इति निषेधप्रवृत्तिश्चेति भावः। ङित्वेनेति। लिङादेशानां स्थानिवत्त्वेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव। तद्धि अवयवेऽचरितार्थतया समुदायोपकारकम्। न चैवं ङित्त्वं 'स्तुयात्' इत्यादावनिग्लक्षणवृद्धिनिषेधार्थमिति वाच्यम्, विमिगमनाविरहात्, उत औदिति वक्तव्ये वृद्धिग्रहणेन स्थानिनिर्देशेऽपीग्परिभाषापोस्थितया तस्या अपि इग्लक्षणत्वाच्च।

(१)नन्वेवं 'ब्रूतात्' इत्यत्र 'ब्रुव ईट्' प्राप्नोति लाश्रयानुबन्धकार्यस्य तदादेशेष्वभावेऽपि तिपः पित्त्वस्य तदादेशे तातङ्यभावकल्पने मानाभावादत आह–श्न इति। क्वचिदिति। लक्ष्यानुरोधेन च व्यवस्था।

---

प्रत्ययलक्षणेन ठगन्तत्वेपि वर्णाश्रये प्रत्ययलक्षणाभावान्न तदवयवाऽदन्तत्वम्। ननु स्थानिवद्भावेन शास्त्रीयस्यैवातिदेशो भविष्यतीत्यत आह *न ल्यपीतिलिङ्गादित्यादि। ननु वैयर्थ्ये सति ज्ञापकत्वन्तदेव तु नेत्याशयेन शङ्कते--*न चेति*। *वृद्धिरिति*। उतो वृद्धिरितिसूत्रविहितेत्यर्थः। *विमिगमनाविरहादिति*। "ङिच्च" इत्यस्य चारितार्थ्यं वाच्यन्तदुक्तार्थज्ञापकतया वाऽनिग्लक्षणवृद्धिनिषेधार्थत्वेन वा सम्भवति। एकत्रैव तु साधकं नास्तीति भावः। शङ्कोक्तं "नल्यपि" इति सूत्रप्रयोजनमन्यथा सिद्धमपीत्याह–*उत औदिति वक्तव्य इति*। *नन्वेवम्* लाश्रयानुबन्धकार्यस्यैवाभावकल्पने। अव्यवस्थां वारयति–*लक्ष्यानुरोधेनेति*। "हलः श्न" इतिसूत्रभाष्ये शानजादेशस्य शकारो ङित्वार्थः। तेन 'कुषाण' 'पुषाण' इति सिद्धम्। एतच्च स्थानिवद्भावेन सिद्धमित्युक्त्वा सार्वधातुकादेशेऽनुबन्धास्यानिवत्त्वे तज्ज्ञापकमित्युक्तम्। तत्प्रयोजनं हेरपित्वन्न प्रतिषेध्यमिति। तथा तातङि ङकारो नोच्चार्य इति च। यद्येतज्ज्ञाप्यतेऽचिनवमसुनवमकरवामिन्यत्रादेशस्य स्थानिवद्भावेन

(१) ननु तदादेशेषु लाश्रयानुबन्धकार्याभावज्ञापने ब्रूतादित्यत्र तिबादेशे तातङि तिपः पित्त्वा-दाय ब्रुव ईट् इति ईट् स्यात्, तातङो लादेशत्वाभावादित्यरुच्या 'श्नः शानच' इत्यग्रिमग्रन्थमवतारयति आह–नन्वेवमित्यादि*।

परे तु यासुटो ङित्वं न ज्ञापकं 'पिदर्थं ङित्वम्' इति भाष्यात्। 'सार्वधातुकमपित्' (पा०सू०१।२।४) इति सूत्रे ऽपिदित्यावर्त्य प्रसज्यप्रतिषेधसिद्धेन "ङिच्च पिन्न, पिच्च ङिन्न" इत्यनेन "हलः श्नः" (पा०सू०३।१।८३) इति सूत्रभाष्योक्तेन पित्सु ङित्वाप्रसक्तेः। शानचः शित्वमपि तत्सूत्रे एव भाष्ये प्रत्याख्यातम्। हेरपित्वस्य तातङो ङित्वस्य वैयर्थ्यापत्तिश्च ज्ञापकत्वे दूषणमप्युक्तं भाष्ये। तस्मात् 'वक्ष्यमाणा' इत्यादौ सत्यभिधाने ऽजादिपाठाट्टाप्।

यत्तु 'क्ङिति च" (पा०सू०१।१।५) इति सूत्रभाष्ये यासुटो ङित्वस्य न ङिदादेशानां ङित्वमित्यर्थे ज्ञापकतोक्ता, तत्तु वार्त्तिकमतं, ङिच्च पिन्नेत्यादेस्तेनानुक्तेः। यदपि "गाङ् लिटि" (पा०सू०२।४।४९) इति सूत्रे गाङो ङित्त्वं सानुबन्धकादेशे 'ऽनुबन्धास्थानिवत्त्वस्य ज्ञापकत्वमुक्तं वार्त्तिककृता तदपि 'प्रयोजनाभावात्' इत्यादिना भाष्ये दूषितमित्याहुः।

---

पित्वन्न स्यात्, तथा सति ङित्त्वाद्गुणो न स्यात् इति दूषणमभिधाय 'तस्मान्नार्थोऽनेन ज्ञापकेन। यानि प्रयोजनानि क्रियते न्यास एव। एवमपि सर्वेऽपित्करणसामर्थ्यात्पित्कृतं स्यात् ङित्करणसामर्थ्यात् ङित्कृतमपि प्राप्नोति' इति शङ्कितम्। "एवमपि ब्रूतात्'इत्यत्र स्थानिवद्भावेन पित्त्वादनुदात्तत्वं 'ब्रुव ईट्' इतीडागमश्च। यत्तु खलु पिति ङित्कृतम्प्राप्नोति ङिति च पित्कृतं केन तन्न स्यात्। तस्माद्वक्तव्यम्पिन्न ङिद्भवति, ङिच्च पिन्न भवतीति। न वक्तव्यम्। एवं वक्ष्यामि सार्वधातुकं ङिद्भवति, पिन्न। एवन्तावत्पितो ङित्त्वं प्रतिषिद्धम्। ततो ङिच्च पिन्न भवतीति। एवं ङितः पित्त्वप्रतिषिद्धम्"। तेन तातङः स्थानिवद्भावप्राप्तं पित्त्वम्प्रतिषिद्धमितिरीत्यो-क्तन्तदनुसारेणाह-*परे त्विति*।

वक्ष्यमाणेत्यादौ तु गतिमाह-*तस्मादिति*। ननु यासुटो ङित्वस्य ङिदादेशानां ङित्त्वाभावे ज्ञापकतोक्ता सा न संगच्छेत तिप्सिप्मिप्सु चारितार्थ्यादत आह-*यत्त्विति*। ननु शानचः शित्वस्य प्रत्याख्यानमयुक्तम्। "गाङ् लिटि" इति सूत्रे गाङो ङित्त्वं सानुबन्धकादेशेऽनुबन्धास्थानिवत्त्वे ज्ञापकमिति "गाङ् लिटि" इति सूत्रभाष्यविरोधादत आह-*यदपीति*। ननु निरनुबन्धकस्य "शिलाया ढः" "सभाया यः" ढश्छन्दसि" इत्यस्य पुरस्फुर्त्तिकत्वात्सानुबन्धकं किमित्युदाहृतमत आह-*नि-

निरनुबन्धकस्य स्त्रियां वृत्तेरसम्भवात्सानुबन्धकस्य ढको ग्रहण-
मित्याह—सौपर्णेयीति । सुपर्णीशब्दादपत्ये "स्त्रीभ्यो ढक्" (पा०
सू०४।१।१२०) इति ढक् । स्पष्टञ्चेदं भाष्ये । ऐन्द्रीति । "सास्य
देवता' (पा०सू०४।२।२४) इत्यण् । ऊरुदघ्नीत्यादि । "प्रमाणे
द्वयसज्दघ्नञ्मात्रचः" । "संख्याया अवयवे तयप्" । मात्रजिति मात्रश-
ब्दादारभ्यायचश्चकारेण प्रत्याहार इत्युभयीति सिद्धिः । तत्र ह्ययच्
प्रत्ययान्तरम् । अत एवोभयशब्दस्य जसि सर्वनामत्वविकल्पो नेति
'नवेति' (पा०सू०१।१।४४) इत्यत्र भाष्ये स्पष्टम् । आक्षिकीति ।
"तेन दीव्यति' (पा०सू०४।४।२) इति ठक् 'तदस्य पण्यम्' (पा०सू०
४।४।५१) इत्यधिकारे लवणाट्ठञ् । यादृशीति । यादृश्यां 'त्यदादिषु
दृश' (पा०सू०३।२।६०) इति कञ् । इत्वरीति । "इण्नशजि
(पा०सू०३।२।१६३) इति क्वरप् । अनुबन्धद्वयोपादानं स्पष्टार्थम् ।
वरच् व्यावृत्तेरन्यतरेणापि सिद्धेः । चौरीति । चुरा शीलमस्या
इत्यर्थः ।

नञ्स्न । तरुणतलुनयोः 'वयस्यचरम' इति ङीपि सिद्धे ऽपि

---

रनुबन्धकस्येति* । पूर्वोक्तयोः स्वभावतो नपुंसकत्वपुंस्त्वयोः सत्त्वादिति
भावः । *स्पष्टञ्चेदमिति* । "ननु चायमस्ति । शिलाया ढ इति । नैष स्त्रियां
वर्त्तते" । अत्र कैयटः 'शिलेव शिलेयमिति नपुंसकलिङ्ग एवशिलेयशब्दः
स्वभावात्' । 'अयन्तर्हि सभाया यः ढश्छन्दसीति । एषोऽपि न स्त्रियां
वर्त्तते । कथं स्त्री नाम सभायां साध्वी स्यात् । यज्ञसभायां विदुषामेव पुरु-
षाणां साधुत्वाधिकारात्' । ननु सभायां साधुरियं ब्राह्मणपंक्तिः परिषद्वेति
सम्भवति स्त्रियाः साधुत्वम् । एतेन छन्दसि सभेयशब्दस्यैव विधानात्
स्त्रियाम्प्रयोगाभाव इति विज्ञायते । एतेन स्वभावतः पुंस्त्वन्निदर्शितम् ।

*अत एवेति* । अयचः प्रत्ययान्तरत्वादेव । *अनुबन्धद्वयोपादान-
मिति* । अस्य प्रकृतसूत्रे इति शेषः । *वरज्व्यावृत्तेरिति* । अत एव
"तमीश्वरा साधु चचार सदरा" इति सिद्धम् "स्थेशभास" इति वरच् ।
ईश्वर इति तु पुंयोगे सिद्धम् । ईशधातोर्वनिपि "वनो र च" इति वा इत्यर्थ
इति । यद्यप्यत्र "छत्रादिभ्यो ण" इति णस्तथापि ताच्छीलिके णेऽपीति
परिभाषया ङीप् ।

*वयस्यचरम इति* । प्रथमवयोवाचित्वाभावात् "वयसि प्रथमे"

गौरादिपाठात्परत्वात्प्राप्तेन ङीषा बाधाभावाय पुनरत्र ग्रहणम् तयोश्च स्वरे विशेषः । एतौ हि 'त्रोरश्चलोवा' इत्युननन्तत्वादाद्युदात्तौ । "स्त्रीपुंसाभ्यां नञ्स्नञौ" 'प्रहरणम्' इत्यधिकारे "शक्तीयष्ट्योरीकक्"। "आढ्यसुभ" (पा०सू० ३।२।५६) इति ख्युन् ।

यञश्च (पा०सू० ४।१।१६) 'प्राचां ष्फ' (पा०सू० ४।१।१७) इत्यत्र यञ एवानुवृत्तये योगविभागः ।

हलस्त । (पा०सू० ६।४।१५०) हल इति पञ्चमी यस्येति सूत्रात् 'ईति' इत्यनुवर्त्तते सूर्यतिष्येत्यतो 'य उपधायाः' इति च । यलोपे ङ्लोपस्याभीयासिद्धत्वाद्यस्येकारपरत्वाभावाद्वचनसार्थक्यायोपधाग्रहणानुवृत्तिः । अनपत्याधिकारस्थादिति । अपत्याधिकारस्थाभिन्नादित्यर्थः । (१)यञ्शब्देन व्याख्यानादपत्याधिकारस्थस्यैव ग्रहणमिति भावः

---

इति यथाश्रुतसूत्रेण तु न सिद्धिः । *पुनरत्र ग्रहणम्* वार्त्तिके ग्रहणमित्यर्थः । *तयोरिति* । ङीबन्तङीषन्तयोः । यत्तु तरुणतलुनयोर्वार्त्तिके ग्रहणं गौरादिपाठोऽप्यनयोर्मास्तु किं तु बह्वादौ पाठोऽनयोः कार्यस्तेन "बह्वादिभ्यश्च" इति पक्षे ङीष् तदभावे 'वयस्यचरम' इति ङीप्भविष्यतीति स्वरस्यापि सिद्धिरिति । तन्न नञ्स्नञीति प्रतीकमुपादाय तरुणतलुनशब्दयोरवयोऽर्थग्रहणम् , तरुणी सुरेति । प्राणिधर्मो हि वय 'इति कैयटेन समाधानस्य सूचनात् । वार्त्तिकेऽवयसि टाबन्तप्रयोगनिवृत्त्यर्थमनयोरुपादानमावश्यकम् । न चैतावताऽन्तोदात्तस्य सिद्धिस्तदर्थं गौरादिषु बह्वादिषु वा पाठ इत्यत्र फलतो न विशेषः ।

ननु यञोऽपि "टिड्ढा" इतिसूत्रे एवोपादानङ्कुतो न कृतमत आह—*प्राचां ष्फ इत्यत्रेति* । नन्वनपत्याधिकारप्रसिद्ध्याऽनपत्याधिकारस्थादित्यनुपपन्नमत आह–*अपत्याधिकारस्थभिन्नादिति* । *व्याख्यानादिति* । "आपत्यग्रहणङ्कर्त्तव्यम्" इतिवार्त्तिकमूलाद्व्याख्यानादित्यर्थः । नन्वापत्यग्रहणमितिवार्त्तिकस्यापत्ये भव इत्येवार्थः कर्त्तव्यः स चार्थो द्वैप्येऽपि सम्भवति । या द्वीपे भवा सा कस्यचिदपत्यम्भवत्येवेति चेन्न । तद्वार्त्तिकप्रत्याख्यानैकवाक्यतया प्रतिपदोक्तपरिभाषयाऽपत्यशब्दस्याधिकारपरतयाऽऽपत्यशब्दस्य तदधिकारभवपरत्वात् । यथाहि-"त

---

(१) ननु यञश्चेति सूत्रे यञ्मात्रोपादाने अपत्याधिकारस्थेत्यस्यालाभात् 'अनपत्याधिकारस्थान्' इति मूलोक्तं कथं संगच्छत इत्यत आह—*यञ्शब्देनेति* ।

प्राचां ष्फ (पा०सू०४।१।१७)। यञ इति वर्त्तते, 'अत' इति च। यञो यो ऽकार इति चार्थः। तेन 'वतण्डी' इत्यत्रोदीचां मते सावकाशं शार्ङ्गरवादिङीनं बाधित्वा 'आवट्यायनी' इत्यादाविव (१)सर्वत्र ग्रहणात्प्राचां मते प्राप्तोऽपि ष्फो न। अत्र हि 'वतण्डाच्च (पा०सू०४।१।१०८) इति यञो 'लुक्स्त्रियाम् (पा०सू०४।१।१०९)' 'इति' लुक्। वर्णाश्रयत्वाच्च न प्रत्ययलक्षणम्।

---

त्तर्हि वक्तव्यम्। न वक्तव्यम्। नैवं विज्ञायते कञ्ञकरपः यञश्चेति। कथन्तर्हि कञ्ञकरपोऽयञश्चेति। अयमयञ्प्रत्ययो गर्गादिभ्यो विधीयते तत्राकारोऽनुनासिक इत्संज्ञक इह विशेषणार्थ इति यञो ग्रहणाभावाद् ष्ये नातिप्रसङ्गः। यस्कादिभ्यो गोत्रे यञञोश्चेत्यत्राप्यकारप्रश्लेषः"। न च विच्छिद्य पाठेऽनुकरणे प्रकृतसूत्रघटकेऽकारश्रवणापत्तिरिति वाच्यम्। आर्षः संहितापाठ एव। व्याख्यातृकल्पितः पृथक् पाठः। अनुकरणादुपस्थिते त्वित्संज्ञयाऽकारनिवृत्तिः। *तेन*। यञोऽकार इति व्याख्यानेन।

*उदीचाम्मते सावकाशमिति*। एतेन शार्ङ्गरवादौ वतण्डपाठवैयर्थ्यशङ्कापरिहृता। ननु यञोयोऽकार इत्येवं व्याख्यानाभावे 'वतण्डी' इत्यत्र ष्फप्रत्ययस्य ङीना परत्वाद्बाध एव स्यात्, ङीनश्चारितार्थ्यस्याप्युक्तदर्शितत्वादत आह—*सर्वत्र ग्रहणादिति*। सर्वत्र ग्रहणापकर्षणादित्यर्थः। अत्रेदमवधेयम्। प्रकृतसूत्रे तद्धितग्रहणस्य फलन्न प्रातिपदिकसंज्ञाद्वारा ङीप्सिद्धिः षित्त्वादेव सिद्धेः। नापि यस्येति चेति लोपः। सवर्णदीर्घेण सिद्धेः। किन्त्वन्यतोऽप्ययमितिज्ञापनद्वारा "यस्येति च" इति लोपार्थं तेनासुरिशब्दादपीति। वस्तुतस्त्वेतदपि न, ष्फडितिन्यासेन सिद्धेः।

यत्तु गोकक्षशब्दाद्गर्गादित्वाद्यञि ततः क्रौड्यादित्वेन ष्यङि चापि प्रकृतसूत्रेण ष्फप्रत्यये चिकीर्षिते "भस्याढे" इति पुंवद्भावे गौकक्ष्यशब्दाद्यञन्तात्ष्फे गौकक्ष्यायणी सिध्यति। तद्धितसंज्ञाभावे तु पुंवद्भावाप्राप्त्या यञन्तत्वाभावेन ष्फो न स्यादिति। तदपि न। क्रौड्यादिषु गोकक्ष्याशब्दस्य पाठाभावेऽपि क्षत्यभावात्। चाप्तु "षाद्यञश्चाप् वक्तव्यः" इत्येव सिद्ध उदीचाम्मते। प्राचाम्मते तु चापो बाधस्यापि विषये सर्वत्र ग्रहणापकर्षात् ष्फः। तेन गौकक्ष्यायणीत्यस्य सिद्धिरिति। एतदपकर्षे

---

(१) अवट्यायनीत्यादाविवेति*। यथाऽऽवट्यायनीत्यत्र "सर्वत्र लोहितादिकतन्तेभ्यः" इत्यतः 'प्राचां ष्फस्तद्धितः' इत्यत्र सर्वग्रहणापकर्षेण तस्य बाधकाबाधकाविषये सर्वत्र प्रवृत्त्या 'आवट्याच्च' इति चापं बाधित्वा प्राचां मते बाधकविषयेऽपि ष्फ एव, तथा प्रकृतेऽपि बाधकविषये शार्ङ्गरवादिङीनं बाधित्वा प्राचां मते ष्फ एव प्राप्तः। अत इत्यनुवृत्त्या वर्णाश्रये प्रत्ययलक्षणनिषेधान्न भवतीत्यर्थः।

षः प्र (पा०सू०१।३।६) ॥ 'आदिर्ञिटुडवः' (पा०सू०१।३।५) इति सूत्रादादिरित्यनुवर्त्तते । प्रत्ययस्येति किम् ? षोडश । 'षष उत्वम्' इत्यत्र षष्शब्दस्य निपातनादुपदेशस्थोऽयं षकारः। वस्तुत 'उपदेशे' इत्यस्य स्वरितत्वमेव नेति पूर्वं निरूपितम् । आदिरिति तूत्तरत्रात्र-न्यकमुपरञ्जकतयात्रापि संबन्धितम् ।

आयने (पा०सू०७।१।२) । आयनो नस्य नेत्वं फिनो नित्क-रणात् । तत्साहचर्यादिनोऽपि नस्य नेत्वम् । आदिग्रहणं किम् ? ऊरु-दघ्नम् । प्रत्ययेति किम् ? 'फक्कति' 'खनति' । खच्घञादौ 'घि-न्मतोः' 'खित्यनव्ययस्य' इत्यादिलिङ्गादित्संज्ञैव, नादेशाः। (१)उणा-दीनां बहुलवचनान्नादेशाः। घचश्चित्त्वसामर्थ्यादेते प्रत्ययसंबन्ध्यादेशा उपदेशसन्नियोगशिष्टकार्यादपि पूर्वमेव । तेनान्तोदात्तत्वाय चित्त्वं सफ-

---

लंजन्तु तत्सूत्रव्याख्यानावसरे स्फुटीभविष्यति ।

ननूपदेशग्रहणानुवृत्त्या षोडशशब्दे नातिप्रसङ्ग इत्यत आह-*षष उत्वमित्यत्रेति* । इदं प्राचामनुरोधेन । स्वसिद्धान्तरीत्याह—*वस्तुत इति* । ननु प्रत्ययान्त्यस्य षकारस्येत्संज्ञा हलन्त्यमितिसूत्रेणेष्टैवेति कि-मत्रादिग्रहणानुवृत्त्या । न चेष्टनोऽवयवस्य मध्यस्थस्यापि स्यादिति वा-च्यम् । तस्य न स्वाभाविकत्वम् किन्तु तस्य सकारमध्यगत्वमेव कल्प्य-ते । तस्य सकारस्य "आदेशप्रत्यययोः" इति सूत्रेण षकार इति स्वीक्रियते । षत्वस्य च "षः प्रत्ययस्य" इति सूत्रदृष्ट्याऽसिद्धत्वान्नेत्त्वप्राप्तिरित्याश-ङ्कायामाह—*आदिरितीति* । *उपरञ्जकतयेति* । यद्यपि मध्यान्त्यस्थषका-रयोरुक्तरीत्या नानेन सूत्रेणेत्संज्ञेति परिशेषादादेरेव भविष्यति । त-थापि परिशेषात्तादृशार्थकल्पनापेक्षया आदिग्रहणसम्बन्धस्य स्वरूपा-नुवादकस्य स्वीकारेणैवेष्टसिद्धिरित्याशयः । 'अविषी' 'महिषी' इत्यादौ तु टित्वादेव सिद्धम् । टिषप्रत्ययस्य चित्त्वेनाविषमहिषशब्दयोरन्तो-दात्ततयोदात्तनिवृत्तिस्वरेणान्तोदात्तत्वमपि भविष्यति ।

प्रत्ययग्रहणे कृतेऽपि खजादावतिप्रसङ्गं वारयति—*खच्घञादावि-ति* *घचश्चित्त्वसामर्थ्यादिति* । "अग्राघत्" । "घच्छौ च" इतिसूत्रवि-

---

(१) नन्वेतज्ज्ञापकेन पाणिन्युच्चारितप्रत्ययानामादेशाभावेऽपि औणादिकानां तु "शमे ढः" इतिविहितानां ढादीनामादेशाः स्युरेवेत्यत आह—उणादीनामिति* ।

ननु यथा आरात्तीयेत्यादौ पदसञ्ज्ञाप्रयुक्तजश्त्वात्पूर्वमेवैतेऽन्तरङ्गत्वादादेशाः, तथा नैते उपदेशसन्नियो-गशिष्टकार्यात् प्राक् प्रवर्तेरन्, ततोऽप्युपदेशसन्नियोगशिष्टकार्यस्यान्तरङ्गत्वात् तथासति कुलात्खः इति सूत्र-विहितखप्रत्ययान्त 'कुलीन' इत्यत्रेकारस्योदात्त्वं न सिद्ध्येदित्यत आह—घच इति* ।

लम्, अन्यथाऽऽद्युदात्तत्वेनैव सिद्धौ तद्वैयर्थ्यं स्पष्टमेव। ननु स्त्रियामेव ष्फविधानादुक्तार्थानामप्रयोग इति ङीष् न स्यादत आह–षित्त्वसामर्थ्यादिति

ष्फेणोक्ते ऽपीति। द्योतिते ऽपीत्यर्थः। 'द्विर्बद्धं सुबद्धं भवती'ति न्यायेन क्वचित्समुच्चयस्य दृष्टत्वात्। षित्त्वमपि तदाश्रयणे ज्ञापकम्।

सर्वत्र (पा०सू०६।१।१२२)। सर्वेषां मते इत्यर्थस्तदाह–नित्यमिति। प्राचामित्यस्य नित्यत्वे सिद्धे ऽपि 'प्राचां ष्फ' (पा०सू० ४।१।१७) इत्यस्य सर्वत्रग्रहणापकर्षेण बाधकविषये ऽपि प्रवृत्त्यर्थं तत्। तेन 'आवट्यायनी' इत्यत्र "आवट्याच्च" (पा०सू०४।१।७५) इति चापं बाधित्वा प्राचां मते ष्फ एव। अवटो गर्गादिः। चाप्तु उदीचां मते प्राप्तङीप्बाधनेन चरितार्थः। सर्वत्रग्रहणात्तद्बाधकत्वमेव चापो न तु अनन्तरष्फबाधकत्वम्। चापि कृते तु न ष्फप्राप्तिः, अत इत्यधिकारात्। लोहितादि गर्गाद्यन्तर्गणः। यद्यपि तत्र कतशकल कण्वेति पाठात् शकलस्य लोहितादिकण्वादिबहिर्भूतत्वात् ष्फाणौ न त

---

हितो यच्। *द्योतितेऽपीत्यर्थ इति*। एतत्पक्षस्यैव सिद्धान्तित्वात्। *क्वचिदिति*। 'द्वौ ब्राह्मणौ व्यतिलुनीत' इत्यादौ। *तदाश्रयणे*। द्योतकसमुच्चयाश्रयणे।

प्रकृतसूत्रे नित्यत्वार्थकं सर्वत्रग्रहणन्न कार्यमित्याह—*प्राचामित्यस्येति। सर्वत्रग्रहणापकर्षे सति यत्फलितन्तदाह—*तद्बाधकत्वमेवेति*। ङीब्बाधकत्वमेव। इदम्परिशेषासिद्धार्थकथनम्। एतेन चाप उभयबाधकत्वं स्यात्, अनन्तरस्येतिन्यायाश्रयणे तु ष्फस्यैव बाधकन्तत् स्या दितिशङ्काया नावकाशः। ननु चापि कृतेऽप्येकादेशस्य पूर्वान्तत्वेन ष्फ प्राप्त्या सर्वत्रग्रहणं व्यर्थमेवेत्यत आह—*चापि कृते त्विति*। एत त्सूत्रे सर्वत्रशब्दोपादानन्तु वैचित्र्याय। *ष्फाणाविति*। तथा च

---

(४) ननु गर्गादौ कतकण्वशकलेति पाठात् लोहितादिकार्यासिध्द्या शाकल्यायनीति रूपासिद्धिः लोहितादिकार्याय कतशब्दात्प्राक् शकलशब्दपाठेऽपि 'शाकल्यस्याः छात्रा' 'शाकलाः' इत्यस्यासिद्धिः कण्वादिभ्यो गोत्रे इत्येनेन कण्वादिपाठाभावेन कण्वादिविहिताण्कार्याऽसंभवः। अतः कतकण्वशकलेति पाठे कण्वशद्बात्। पूर्वं शकलशब्दः पठितव्यः। तथा सत्यपि तस्य लोहितादिकण्वादिबहिर्भूतत्वेन ष्फाणोः प्रसङ्गात् 'शाकल्यायनी' 'शाकला' इत्यनयोरप्रसिद्धिप्रसङ्ग इत्याशङ्क्ते–यद्यपीति*। परिहरति–तथापि

ननु कतशब्दस्यान्तशब्देन समासे 'अकः सवर्णे' इति दीर्घापत्त्या कतान्त इति प्रयोगप्रसङ्ग इति कतन्त इति निर्देश इत्यत आह—कतन्तशब्दे शकन्ध्वादित्वादिति*।

प्राप्नुतस्तथापि 'कतन्तेभ्यः' 'कण्वादिभ्यः' इत्युभयत्रापि षष्ठीतत्पुरुषबहुव्रीह्योरेकशेषेण न दोषः । कतन्तशब्दे शकन्ध्वादित्वात्पररूपम् । तेन 'शाकल्यायनी' शाकल्यस्य छात्राः 'शाकला' इति च सिद्धम् । टाप्ङीषोरिति । कौरव्यशब्दे योपधप्रतिषेधाट्टाप् माण्डूकशब्दे जातित्वात् ङीषिति भावः । टाप्ङीपोरपवाद इति पाठस्तु प्रामादिकः ।

वयसि (पा०सू०४।१।२०) प्राणिनां कालकृतावस्थाविशेषो वयः वयसीत्यस्य वयोरूपे प्रवृत्तिनिमित्ते इत्यर्थः, तदाह–प्रथमवयोवाचिन इति । तेन 'उत्तानशया' इत्यादौ न । (१)प्रकरणादिना वयः प्रतीतावपि नायं तद्वाचकः, याऽपि व्याध्यादिवशादुत्ताना शेते तस्या अपि प्रतीतेः । "द्विवर्षा" इत्यादिरपि(२) न वयोवाची, शाखादावपि प्रयोगात् । कौमारयौवनवृद्धत्वभेदात् त्रीणि वयांसि आयुषश्चतुर्भिर्भागैश्चत्वारि वा । त्र्यनीका । समाहारे "तद्धितार्थे"

---

शाकल्यायनी शाकल्यस्य छात्राः शाकला इत्यवन्न स्यात् । *षष्ठीतत्पुरुषेति* । कतस्यान्तः कतन्तः । कण्वस्याऽऽदिः कण्वादिरिति । अन्तशब्दः परसमीपस्यादिशब्दश्च पूर्वसमीपस्य वाचकः । बहुव्रीहिश्च तद्गुणसंविज्ञानः । *एकशेषेण* । स्वरभिन्नानामितिवचनेन बहुव्रीहेः शेषेण । *जातित्वादिति* । एतेन कौरव्यसाहचर्यान्मण्डूकशब्दोऽपत्यप्रत्ययान्त एवैतत्सूत्रे गृह्यते । तेन मण्डूकस्येयम्भार्येत्यर्थे तस्येदमित्यणणन्तस्य माण्डूकशब्दस्य सत्त्वेऽपि न ग्रहणं, तेन ।

यद्यसौ कूपमाण्डूकि तवैतावतिकः स्मयः ।
इति सिद्धमिति ध्वनितम् ॥

*नायन्तद्वाचक इति* । वयोरूपप्रवृत्तिमितित्तवाचकः । तत्र हेतुमाह–*यापि व्याध्यादीति* । *त्रीणि वयांसीति* । तदुक्तमभियुक्तैः ।

पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ।
पुत्रास्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥

इति । *चत्वारि वेति* । तदप्युक्तम् ।

---

(१) *प्रकरणादिनेति* । तथा च प्रकरणादिकमनपेक्ष्य श्रवणमात्रेणैव यो वयोरूपार्थबोधकः तस्यैव वाचकत्वेन ग्रहणात्, प्रकृते च प्रकरणादिना बाल्यादिरूपवयोऽवगतावपि श्रवणमात्रेण तदवगतेरभावात् न दोष इति भावः ।

(२) ननु द्विवर्षेत्यत्र शब्दश्रवणमात्रेणैव वयोरूपार्थप्रतीत्या वयोवाचित्वात् ङीप् स्यादित्यत आह–*द्विवर्षेत्यादिरपीति* ।

(पा०सू०२।१।५१) इति द्विगुः। अकारान्तोत्तरपदत्वात् स्त्रीत्वम्।

अपरिमाण (पा०सू०४।१।२२)। अत्र परिमाणशब्देन 'परिमाणन्तु सर्वतः' इति पारिभाषिकमेव गृह्यते।

सुवर्णबिस्तौ हेम्नोऽक्षे कम्बल्यमूर्णापलशतम्।

इति कोशबलेनोन्मानभूतविस्तकम्बल्यग्रहणन्तु 'उन्मानस्य चेद् बिस्तकम्बल्ययोरेव' इति नियमार्थम्। तेन द्विनिष्की सिद्धा। द्वे वर्षे भूता द्वाभ्यां शताभ्यां क्रीतेत्यर्थे द्विवर्षा द्विशता। तिर्यङ्माने द्विहस्ता भित्तिरित्यादौ च निषेधः सिद्धः।

"काण्डान्तात्" (पा०सू०४।१।२३) इति तु क्षेत्र एवेति नियमार्थम्। तेन द्विकाण्डी रज्जुरित्यत्र न। द्वौ बिस्तौ पचतीति

---

आद्ये वयसि नाधीतन्द्वितीये नार्जितन्धनम्।
तृतीये न तपस्तप्तश्चतुर्थे किङ्करिष्यति॥

इति। उभयथापि यौवनवचनस्य वधूटचिरण्टशब्दस्य प्रथमवयोवाचित्वाभावाद्वार्त्तिकमावश्यकम्। यत्र तु युवत्यां कुमारीधर्मोपलम्भे प्रयोगस्तत्र तु कुमारीशब्दस्य लक्षणा। तत्र पुंसोऽसम्प्रयोगः प्रवृत्तिनिमित्तं न तु प्रथमं वयः। अत एव 'वृद्धकुमारी' इति "न मु ने" इतिसूत्रभाष्ये प्रयोगस्सोऽपि सिद्ध्यति।

*सर्वत इति*। आरोहतः परिणाहतश्च येन मीयते काष्ठादिनिर्मितप्रस्थादिना तदेव गृह्यते। तत्रैव शक्तिग्रहात्।

नन्वेवं विस्तकम्बल्ययोरपरिमाणत्वादेव निषेधे सिद्धे सूत्रे पृथगनयोरुपादानं व्यर्थमत आह—*सुवर्णेत्यादि*। *उन्मानस्य चेदिति* अपरिमाणपदेन ग्रहणमिति शेषः। *द्विनिष्कीति*। अस्य निष्कस्योन्मानत्वेऽपि नात्र निषेधः। तन्मानभिन्नस्य तु पारिभाषिकपरिमाणत्वात् निषेधो भवत्येवतदाह—*द्वे वर्षे भूतेत्यादि*।

नन्वेवङ्काण्डस्याप्यपरिमाणत्वादनेनैव निषेधे सिद्धे काण्डान्तादिति निषेधसूत्रमनर्थकमत आह—*काण्डान्तादिति त्विति*। अत्र भाष्ये 'द्वौ प्रतिषेधावुच्येते, तत्रैकः शक्योऽवक्तुम्। परिमाणात्तद्धितलुकि इदन्नियमार्थम्भविष्यति परिमाणान्तादेव तद्धितलुकि'। न च समाहारव्यावृत्त्यर्थम्परिमाणान्तात्तद्धितलुक्येवेति नियमः कुतो नेति वाच्यम्, लक्षणस्य लक्ष्यानुसारित्वात् तेन समाहारे द्व्याढकीति कैयटः। तद्विस्ताचितकम्बल्येभ्यो नेति। तद्धितलुकीति वर्त्तते पूर्वनियमेन

पचेर्द्रवीभावानुकूलो व्यापारोऽर्थः । अत्रोन्मानत्वाट्ठको लुक् । 'आचितः शाकटो भरः' इत्युक्तेराचितः परिमाणमित्येके । "आचितो दशभाराः स्युः" इत्युक्तेरुन्मानमेतदिति, एतदपि नियमार्थमित्यन्ये । प्रमाणे इति । षोडशहस्तप्रमाणदण्डवाचककाण्डशब्दस्याऽऽयामपरिच्छेदकत्वेन प्रमाणत्वमिति भावः ।

पुरुषात्प्रमाणे (पा०सू०४।१।२४)। पुरुषस्योर्ध्वाधरादिगवस्थितवस्तुमात्रपरिच्छेदकत्वेनोन्मानत्वादुन्मानस्य चेद् बिस्तादेरेवेति नियमान्निषेधाप्राप्त्या नित्यं ङीपि प्राप्ते विकल्पार्थमिदम् । अत्र प्रमाणशब्दः परिच्छेदकमात्रपरो न त्वायामपरिच्छेदकवाची । अत एव तस्य पुरुषविशेषणता नासङ्गता । जातिवचनस्यापि पुरुषशब्दस्य 'पञ्चारत्निः पुरुषः' इति शुल्बसूत्रादत्र प्रमाणे इति विशेषणाल्लोकव्यवहाराच्च परिच्छेदकत्वाचित्त्वमपि । द्विपुरुषीति । द्वौ पुरुषौ प्रमाणमस्या इत्यर्थे 'तदस्य परिमाणम्'(पा०सू०५।१।५७)इति प्रत्ययस्य 'अध्यर्द्ध'(पा०सू०५।१।२८) इति लुकि उदाहरणम् ।(१)तत्र हि परि-

इदमपि नियमार्थम् । उन्मानवाचकाच्चेन्न तर्ह्येतेभ्य एव' इति । एवंप्रकारेणैकस्य नञोऽनुपादानेन यद्यपि सिद्ध्यति तथापि योगविभागनियमयोर्विपरीतनियमशङ्कायाश्च वारणस्य क्लेशेन कल्पनया करणे प्रयासाधिक्यमिति मूले तथा नोक्तम् ॥

केचित्तु "अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धिते" इत्येव सूत्रमस्तु लुग्ग्रहणञ्च मास्तु । द्विगोरित्यनुवर्त्तते । तद्धितपदस्य तद्धितार्थपरतया तद्धितार्थे योऽपरिमाणान्तो द्विगुस्तस्मान्न ङीबित्यर्थोऽस्तु । तेन समाहारे पञ्चाश्वीत्यादिद्विगौ निषेधो न भविष्यतीत्याहुः । तन्न । अपरिमाणबिस्तान्ताद्द्विगोर्यस्ताद्धितस्तदन्तान्ङीप् न स्यादित्यर्थोपि सम्भाव्येत ततश्च "अध्यर्द्धकार्षापणिकी" 'अध्यर्द्धसाहस्री' वडवा इत्यत्रापि निषेधः प्रसज्येत । अत्र हि "विभाषा कार्षापणे" इतिविकल्पेन लुग्विधानम् । यत्र तु तद्धितस्य लुक् तत्रापि प्रत्ययलक्षणेन भविष्यतीति लुग्ग्रहणस्यावश्यकत्वात् । पूर्वकालस्थितरूपरसादिपरावृत्तिलक्षणस्य पाकस्य द्वौ बिस्तौ पचतीत्यत्रासम्भवः सुवर्णे तादृशपाकासम्भवादाह-*पचेर्द्रवीभावेति* । अन्यमतमाह-*आचित इति* । स्वमतमाह—*आचितो दशेति* । *अत एव*। प्रमाणशब्दस्य परिच्छेदकमात्रपरत्वादेव । *तत्र हीति*।

(१) ननु तदस्य परिमाणमिति सूत्रे परिमाणशब्दस्य "परिमाणं तु सर्वतः" इति प्रमाणपरत्वाभावाद् द्वौ पुरुषौ प्रमाणमस्या इति विग्रहे कथं तदस्यपरिमाणमित्यनेन प्रत्यय इत्यत आह-*तत्रहीति ।

माणशब्देनोत्तरसूत्रानुरोधात्परिच्छेदकमात्रस्य ग्रहणमिति सिद्धान्तः।

ऊधसो (पा०सू०५।४।१३१) (१)समासान्तोऽयम्। तत्र स्त्रियामित्युपसंख्यानादाह—स्त्रियामिति। "बहुव्रीहौ सक्थ्यक्ष्णोः" (पा०सू०५।४।११३) इत्यतो बहुव्रीहावित्यनुवर्त्तते। ङित्त्वाच्चास्यादेशत्वम्। डाप्ङीम्निषेधेष्विति। समासान्तानामलौकिके वाक्ये एव प्रवृत्त्या पूर्वमनङ्येषां प्राप्तिः। 'अन उपधालोपिनः' (पा०सू०४।१।२८) इत्यत्रास्यानुवृत्त्या ङीपोऽपि बाधः। एतेन मध्येऽपवादन्यायाड्डाम्निषेधयोरिदं बाधकमित्यपास्तमिति भावः। ङीषिति। ङीपि तु कुण्डोधन्शब्दे पूर्वपदप्रकृतिस्वरेण धकाराकारस्यानुदात्तत्वादुदात्तनिवृत्तिस्वराप्राप्त्याऽन्तोदात्तत्वान्न सिद्ध्येत्। कुण्डमिवोधो यस्या इति विग्रहः। बहुव्रीहेः किम्? ऊधः प्राप्ता प्राप्तोधाः "प्राप्तापन्ने च" (पा०सू०२।२।४।) इति समासः। अव्ययग्रहणाननुवृत्तेरिति। अस्वरितत्वादिति भावः। निषेधावपीति। अपिना 'अन उपधा' (पा०सू०४।१।२८) इति ङीप्। अन्ग्रहणेऽनर्थकस्यापि ग्रहणात्। द्विहायनी बालेति। द्विहायनी द्विवर्षा गौरिति प्रायोवा-

---

तदस्य परिमाणमिति सूत्रे हीत्यर्थः। *उत्तरसूत्रेति*। संख्यायाः संज्ञासंघेतिसूत्रेत्यर्थः। अत एव षष्टिजीवितस्प्रमाणमस्येत्यर्थे षाष्टिक इति सिद्धम्। "ऊधस" इति सूत्रस्य समासान्तप्रकरणस्थत्वेऽप्यनङो न प्रत्ययत्वम्। ङकारोच्चारणसामर्थ्यात्। किन्त्वादेशत्वम्। स्थानिद्वारेण चायं समासान्तः। अत एव कप्न।

*तत्र*। अनङ्विधौ। *स्त्रियामित्युपेति*। "ऊधसो नकारो लिङ्गाधिकार" इति हि तत्रत्यं वार्त्तिकम्।

ननु "बहुव्रीहेरूधस" इति सूत्रं मध्येऽपवादन्यायेन डाम्निषेधयोरेव बाधकं स्यान्न तु "अन उपधालोपिन" इतिसूत्रविहितस्य ङीपस्तस्य परत्वादत आह—*अन उपधेति*। *इत्यत्रेति*। वाक्यभेदेन तत्र ङीप्विधानमित्यपि ज्ञेयम्। *एतेन*। तत्रानुवर्त्तनेन। ङीष्विधानं स्वरसिद्ध्यर्थं तेनान्तोदात्तत्वं सिध्यति, तदाह—*ङीपि त्विति*। यथाश्रुतमूलानुरोधेन

---

—(१) ननु आनङादेशस्य समासान्तत्वे अत्यन्तस्वार्थिकत्वात्स्त्रीत्वाभावात् कथं मूलोक्तं स्त्रियामिति संगच्छते इत्यतस्तदवतारयति—समासान्तोऽप्ययामिति*।

ननु समासान्तत्वे कथं तस्यादेशत्वमित्यत आह—ङित्त्वाचेति*।

इत्येके । बालेत्यस्य गौरित्यर्थ इत्यन्ये ।

**नित्यं सञ्ज्ञा** (पा०सू०४।१।२९) (१)ननु सञ्ज्ञाशब्दा नियतानुपूर्वीका अनादयः, छन्दसि च दृष्टस्यैव विधानमिति ङीबभावविशिष्टस्य तत्र प्रयोगासम्भवाद् 'अन उपधा' (पा०सू०४।१।२८) इत्येव सिद्धे इदं व्यर्थमिति चेत् ? उत्तरार्थत्वात् । योगविभागस्तु व्यर्थ एव, तद्ध्वनयन् लक्षणान्तरासिद्धिमुदाहरति–वेदे पञ्चदाम्नीति । क्वचित्तु 'शतमूर्ध्नी'इति पाठः ।

**केवल मामक** (पा०सू०४।१।३०) अस्मच्छब्दादाणि "तवकममकावेकवचने (पा०सू०४।३।३) इति ममकादेशः । भागशब्दात्पुंलिङ्गात्स्वार्थे ऽभिधेये स्वार्थिकेषु लिङ्गातिवृत्तेरपि सत्वात्स्त्रीत्वम् । पापशब्दोऽर्शआद्यचा तद्वति वर्त्तमानः स्त्रियाम् । अपरः पवर्गमध्यो घृतादित्वादन्तोदात्तः । 'उतापरं यक्षिदेवान्' इत्यादौ 'उतापरीभ्यो मघवा' इत्यादौ चान्तोदात्तपाठात् । 'पूर्वमनयन्नापरम्' इत्यादौ पठ्यमानमाद्युदात्तत्वमपि वृषादित्वात् । 'अपरः पूर्वामभ्येति' इत्यादावत्र-आदिपाठादावपि । आर्येण कृतेति प्राक् सुबुत्पत्तेः समासेऽदन्तत्वम् । भेषजशब्दोऽव्युत्पन्न औषधे रूढः । भिषज इदमित्याणि भैषजशब्दोऽपि तत्र । 'सुमङ्गलीरियं वधूः' इति तु मत्वर्थीये ईप्रत्यये बोद्ध्यम् ।

---

कोशवाक्यस्यान्यथानयनमत्र नोचितमित्याशयेनाह–*बालेत्यस्येति* ।

*लक्षणान्तरसिद्धमिति । "अन उपधा" इतिलक्षणेन सिद्धमित्यर्थः ।

*सत्वात्स्त्रीत्वमिति* । "स्वार्थिकाः प्रत्ययाः क्वचित्प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते" इति न्यायात् । घृतादिपाठे साधकमाह–*उतापरमित्यादि* । *प्राक्सुबुत्पत्तेरिति* । स्त्रीप्रत्ययोत्पत्तेः प्रागित्यपि बोध्यम् । *तत्र* । औषधे । रूढ इति शेषः । ननु 'सुमङ्गलीरियम्' इत्यनुपपन्नमनेन सूत्रेण ङीपि हल्ङ्यादिलोपस्य दुर्वारत्वादत आह–*सुमङ्गलीरियमिति* । *ईप्रत्ययेति* । "छन्दसीवनिपौ च वक्तव्यौ" इतिवार्त्तिकेन विहिते ईप्रत्यये इत्यर्थः ।

नन्वप्राप्तस्य मतुपो निपातने शालायां व्याख्यायामपि तादृशप्रयोगाप-

---

(१) ननु अनउपधालोपिनोन्यतरस्यामित्यनेन विकल्पे प्राप्ते 'नित्यं संज्ञा छंदसोः' इत्यनेन संज्ञायां छंदसि च नित्यं ङीपो विधानमनुपपन्नं, संज्ञाशब्दानां नियतानुपूर्विकत्वे ङीबविशिष्टस्यैव प्रयोगात् तदभावविशिष्टस्य प्रयोगासंभवात् विकल्पानुपपत्याऽनउपधा इत्येव नित्यं ङीपो विधानादित्याशंकते–नन्विति* । परिहरति–उत्तरार्थत्वादिति* ।

प्रकृतिभागाविति । नुक्मन्नियोगेनेति भावः । मतुबिति। वत्वन्तु "मादुपधायाः" (पा०सू०८।२।९) इति सिद्धम् ।

यज्ञेन सम्बन्ध इति । स्त्रिया इत्यर्थः । संयोगपदं सम्ब-न्धोपलक्षणम् । संबन्धश्च यज्ञफलप्रतियोगिकैश्वर्यवत्वं, तदाह-तत्कर्तृकेति ।

विभाषा । (पा०सू०४।१।३४) सहशब्दो विद्यमानवाची,(१) पूर्वशब्दोऽवयववाची, व्याख्यानात् । तत्र केवलपतिशब्दस्य विद्य-मानपूर्वावयवत्वासम्भवादव्यभिचाराच्च पतिशब्देन तदन्तं गृह्यते इत्याह-पतिशब्दान्तस्येत्यादि । न पत्युरिति । सपूर्वस्येत्य-नेन पत्यन्तस्य गृह्यमाणत्वादिति भावः । बहवो वृषलपतयो यस्या

---

स्तिरत आह-*नुगिति* ।

ननु यज्ञसंयोग इत्येतावन्मात्रेण पुंसो यज्ञसंयोग इत्यपि प्रतीयेतेत्यत आह-*स्त्रिया इत्यर्थ इति* । पतिशब्दो यद्यपि पुंलिङ्गस्तथापि स्ववाच्य-कर्तृकयज्ञफलनिरूपितविलक्षणसम्बन्धः स्त्रियां यदा विवक्षितस्तदा पुंवा-चकेऽपि तकारोत्तरेकारस्थानिकनकारघटितोऽयमेव स्वपूर्वत्वसंबन्धेन ङीप्विशिष्टः स्वभावात्तत्स्त्रियाम्प्रवर्त्तत इति भावः । अत्र यज्ञसंयोग इत्यनुपपन्नम् । यज्ञस्य क्रियारूपतया तत्प्रतियोगिकसंयोगाप्रसिद्धेरत आह-*संयोगपदमिति* यज्ञेति यद्यत्कर्मणि दम्पत्योः सहाधिकारस्तस्य सर्वस्योपलक्षणम् ।

*अवयववाचीति* । न तु दिक्कालान्यतरावच्छिन्नवाची । तथात्वे स्वघटितप्रातिपदिकानवयवगतपूर्वत्वमादाय वाक्येऽतिप्रसङ्गः स्यात् । एवं सति विद्यमानः पूर्वावयवो यस्मिन्प्रातिपदिके तस्य प्रातिपदिकस्या-वयवो यः पतिशब्दस्तस्य नकारादेश इत्यर्थः । व्यपदेशिवद्भावेन सम्भ-वम्मत्वाह-*अव्यभिचारादिति* । एवञ्चाधिकारप्राप्तस्य प्रातिपदिकस्य पत्युरिति विशेषणमिति तदन्तविधिः । ननु "श्रुतानुमितयोः" इति न्यायेन तस्य पतिशब्दविशेषणत्वमेवोचितमित्यत आह-*सपूर्वस्येत्यनेनेति* । एतच्च प्राचामनुरोधेन । वस्तुत इहार्थोऽप्यनुपसर्जनाधिकारस्तदाह-*बहव इति* । ननु विभाषा सपूर्वेतिसूत्रस्यापि यज्ञसंयोग एव प्रवृत्त्या

---

(१) विभाषासपूर्वस्येत्यत्र सपूर्वग्रहणाभावे तत्र प्रातिपदिकादित्यनुवृत्त्या तस्य षष्ठ्यन्तत्वेन शरीरि-णामेँ पतिशब्दस्य तद्विशेषणत्वेन तदन्तविधौ पतिशब्दान्तस्य प्रातिपदिकस्येत्यर्थसद्भावेऽपि वृषली इत्यादौ नादेशो न स्यात् । तदभावे पतिशब्दस्यैव गृह्यमाणत्वेनानुपसर्जनादित्यस्य तद्विशेषणत्वात् दृढ-त्नीत्यादिसिद्धये सपूर्वस्येत्यस्यावश्यकत्वात्सपूर्वस्य किमिति मूलोक्तप्रश्नोऽनुपपन्न इत्यत आह-*अवयव-वाचीति*

इति कर्मधारयोत्तरपदबहुव्रीहौ वारणायेहार्थोऽप्यनुपसर्जनपदसंब- न्ध इत्यन्ये। बहुव्रीहावित्युपसर्जनोपलक्षणम्। तेन पतिमतिक्रान्ता 'अति- पत्नी' इत्यपि। व्यस्ते इति। विभाषा सपूर्वस्येत्यत्र यज्ञसंयोग इति न सम्बद्ध्यते, भाष्ये "कथं तुषजकस्य पत्नी" इति व्यस्ते एव प्रश्नात्। वृषलत्वेन यज्ञसंयोगाभावात्पूर्वेणाप्राप्तेः सपूर्वत्वाभावाच्चै- तदप्राप्तेरिति भावः। उपचारादिति। पाणिग्रहणाश्रयादिति भावः। यद्वेति। इदं प्रौढ्या, तत्सक्तातिककर्तृक्विपि दृढमानाभावात्। पूर्वसूत्रे यज्ञसंयोग इति तु "वृषलस्य पतिः स्त्री' इति प्रयोगसाधना- र्थम्। सपूर्वस्य किमिति। अवयववाची पूर्वशब्दः किमर्थ इति प्रश्नः। गवां पतिरिति। स्वामिनीत्यर्थः।

निपात्यते इति। तेन चोदात्तसादेशस्यैव प्रवृत्त्या सपत्नीश- ब्दस्याद्युदात्तत्वमपि सिद्धम्। किं च समानस्वामिकस्त्रीविशेषस्यैव रूढ्या बोधनार्थं ङीब्नकारविशिष्टोच्चारणम्। अत एव समानस्वा- मिकदासीभूम्यादौ सपतिरित्येव। समानत्वं चैकस्यैव तत्तत्पत्नीसंब-

---

वृषलपत्नीति समस्तेऽपि शङ्कासत्त्वात् व्यस्त एव किमिति शङ्केत्यत आह- *विभाषा सपूर्वस्येत्यत्रेति* ।

व्यस्ते कथमिति शङ्काया बीजमाह—*वृषलत्वेनेति*। उपचारो लक्षणा सा च स्त्रीप्रत्ययान्तस्य शक्तिसम्बन्धेन प्रवृत्तिर्ब्राह्मण्याम्। अन्यत्र लक्षणया प्रवृत्तौ न किञ्चिद्बाधकम्। लक्षणाया निमित्तमाह-*पाणिग्रह- णेति*। गृह्यते यस्मिन्तद् ग्रहणम्। पाणेर्ग्रहणम्पाणिग्रहणमिति व्युत्पत्त्या पाणिग्रहणशब्दो विवाहपरः स्वीयविवाहवाचकपदप्रतिपाद्यविवाहसम्ब- न्धित्वमत्र शक्यसम्बन्ध इत्युक्तम्। *दृढमानाभावादिति*। प्रातिपदि- कसामान्यादन्येभ्योऽपीत्यनेन धातुसामान्याच्च क्विपो विधानेऽपि भाष्ये 'कथं तुषजकस्य पत्नी' इति पूर्वपक्षङ्कृत्वा 'पत्नीव पत्नी' इतिसमाधान- स्यैवोक्तत्वादिति भावः। नन्वेवं पत्युर्न इतिसूत्रे "यज्ञसंयोग" इति व्यर्थमत आह—*पूर्वसूत्रे इति*। *वृषलस्य पतिरिति*। अत्र पतिशब्दः स्वामिनीपरः।

*तेन चेति*। निपातनेन चेत्यर्थः। *अत एव*। स्त्रीविशेषे रूढि- स्वीकारादेव। ननु समानः पतिर्यस्या इत्यर्थोऽत्रानुपपन्नः। समानत्वस्य भेदघटिततया स्वस्मिन् स्वभेदासम्भवादाह-*समानत्वञ्चैकस्यैवेति*।

न्धेन भेदमारोप्य बोद्धव्यम्। मुख्यसादृश्यवत्पतिकासु तु न तथा प्रयोग इष्यते।

त्रिसूत्रीति। व्याख्यानादिति भावः।

सन्नियोगशिष्ट इति। तेन तदभावे ङीबपि नेति भावः। नितान्तानामित्यत्राकार उच्चारणार्थः। नितन्तानामिति पाठे जश्त्वाभावः सौत्रः। त्रीण्येतानीति। अत्रैतशब्दस्योपसर्जनत्वेऽपि तदन्तमनुपसर्जनमेव अनुपसर्जनादिति चात्र तदन्तविशेषणम्। अत एव गृह्यवृत्तिकृता नारायणेनात्र बहुव्रीहिं कृत्वाऽनेन ङीबित्युक्तं, तदनुसारेण चेदम्।

परे तु 'उपमानानि' (पा०सू०२।१।५५) इति सूत्रस्थभाष्यस्वरसात् 'टिड्ढाणञ्' (पा०सू०४।१।१५) इत्यादौ गृह्यमाणविशेषणत्वस्य क्लृप्तत्वाच्चात्रापि तथैवोचितम्। तत्र हि 'शस्त्रीश्यामा' इत्यादौ श्यामाशब्दः शस्त्र्यामेव, उपमेयन्तु समासवाच्यमिति पक्षे 'शस्त्रीश्यामो देवदत्तः' इत्यत्र ह्रस्वत्वं न सिद्ध्यति। यद्युपसर्जनस्येति ह्रस्वत्वं तदा "कुम्भकपाललोहिनी' इत्यत्रानुपसर्जनलक्षण ईकारो न प्रा-

---

*भेदमारोप्येति*। पत्नीगतस्य परस्परप्रतियोगिकभेदस्य तत्तत्सम्बन्धात्तत्रारोपः। *व्याख्यानादिति*। "पूतक्रत्वादीनां पुंयोगकरणे वचनम्" इतिवार्त्तिकमूलकात्। अस्मिन्वार्त्तिके बहुवचनोपादानेन कपिञ्जलाधिकरणन्यायेन(१) त्रित्वस्य पुरस्फूर्त्तिकतया तत्रैव पर्यवसानमिति भावः। *तदभाव इति*। तयोरभाव इत्यर्थः। *सौत्र इति*। स चात्र तकारे एव न तु नकारे इति स्पष्टं प्रतीयत इति शेषः। *तदन्विति*। वृत्तिकारादिव्याख्यानानुरोधेनेत्यर्थः।

मूलादि दूषयन्स्वसिद्धान्तमाह—*परे त्विति*। *अत्रापि*। वर्णादनुदात्तादिति सूत्रेऽपि। *तथैवोचितमिति*। गृह्यमाणविशेषणत्वमेवोचितमित्यर्थः। तत्र साधकमाह—*तत्र हीति*। *इति पक्ष इति*। अस्मिन् पक्षे शस्त्रीश्यामा इवायमिति लौकिक विग्रहः। अस्मिन्पक्षे दूषणमुक्तं 'शस्त्रीश्यामो देवदत्त' इत्यत्र ह्रस्वत्वन्न सिध्यति। शस्त्रीव श्याम इति चेद्विग्रहस्तदा स्वतो ह्रस्वान्तस्यैव श्यामशब्दस्य प्रयोग इति तादृशप्रयोगनिर्वाहः, सम्प्रति तु शस्त्रीश्यामा देवदत्त इति स्यादिति भावः। *उपसर्जनस्येति ह्रस्वत्वमिति*। समासवाच्यमुपमेयम्प्रधानं श्यामाशब्दार्थस्याप्रधानत्वादुपसर्जनत्वमिति तद्भावः। *ईकारो न प्राप्नोतीति*। अत्रा-

(१) अग्रत्यं तत्त्वं पूर्वमुक्तम्।

नोति" इत्युक्तम् । 'त्र्येण्या' इत्यस्य त्रिषु स्थानेषु एन्येत्यर्थो बोध्य इत्याहुः । आर्षमत्र णत्वम् । वर्णात्किम् ? प्रकृता । "गतिरनन्तरः" (पा०सू०६।२।४९) इत्याद्युदात्तः । अन्तोदात्त इति । 'श्वेतवाजी जायते' इत्यादौ तथा पाठादिति भावः । 'छन्दसि क्नम्' इति नादेशापवादः । तेन 'उत्सर्गसमानदेशा अपवादा' इति न्यायात्तत्स्थानिकत्वे ङीप्संनियोगविशिष्टत्वञ्चास्य बोद्धव्यम् । विशुद्धवाचीति पाठे तत्प्रवृत्तिनिमित्तक इत्यर्थः ।

अन्यतो (पा०सू०४।१।४०) । सान्निधानात् व्याख्यानाच्च तोपधस्यैव प्रतियोगित्वेनान्वय, इत्याह—तोपधभिन्नादिति । वर्णात्किम् ? खट्वा । आद्युदात्तः ।

नर्त्तकीति । "शिल्पिनि ष्वुन्" (पा०सू०३।१।१४५) गौरशब्दो वर्णवाच्यप्यन्तोदात्त इतीह पाठः । अनड्वाहीति । "आमनडुहः स्त्रियां वा ( का० वा० ) इति वचनात्पक्षे आम् ।

सूर्येति । स चेध्य इति । सूर्यादीनामङ्गानामुपधाया इति व्याख्याने तु 'सौरी बलाका' इति न सिद्ध्येत् । सूर्येणैकादिगित्यणन्तान् ङीपि अण्णन्तमङ्गं न सूर्यशब्द इति तदसिद्धिः । वचनन्तु

---

पि कुम्भकपालं लोहितमिवेति विग्रहः कार्यस्तथा सत्युपसर्जनत्वात् 'वर्णादनुदात्तात्' इति ईकारो न प्राप्नोतीत्यर्थः । *त्रिषु स्थानेष्विति* । सुप् सुपेतिसमासः । *आर्षमत्र णत्वमिति* । समानपदत्वाभावादट्कुप्वाङिति संज्ञात्वाभावात्पूर्वपदादित्यस्याप्राप्तिरिति भावः । श्वेतशब्दस्य घृतादिपाठे मानमाह—*श्वेतो वाजीति* । क्नादेशस्यानेकाल्त्वात्सर्वादेशत्वशङ्कायामाह—*नादेशापवाद इति* । *ङीप्सन्नियोगेति* । ङीप्विधायकसूत्र एव भाष्ये पाठात् । *तत्प्रवृत्तिनिमित्तकः* । विशुद्धिप्रवृत्तिनिमित्तकः ।

न चैवम् "अवदातः सितो गौरः" इति कोशानुपपत्तिः । विशुद्धत्वसामर्थ्यात् तत्राप्यवदातशब्दप्रवृत्तिसम्भवात् । "वर्णादनुदात्तात्" इतिसूत्रानन्तरमन्यत इत्यस्य पाठाद्विशेष्यभूतार्थवाचकस्य वर्णादित्यस्योपस्थितत्वादन्यत्वे प्रतियोगितयाऽन्वये तित्तिरिकल्माषीति भाष्यप्रयोगानुपपत्तिरत आह—*अन्यत इति* । *व्याख्यानादिति* । उक्तप्रयोगदर्शनमूलकादित्यर्थः । *आद्युदात्त इति* । क्नप्रत्ययान्तत्वात् ।

*अन्तोदात्त इति* : प्रातिपदिकस्वरेणान्तोदात्त इत्यर्थः ।

स चेत्सूर्याद्यवयव इतिव्याख्यानफलमाह—*सूर्यादीनामिति* । *सो-

'सुरी कुन्ती' इत्यत्र चरितार्थम् । अणो लोपेऽयाभीयत्वेन सो ऽसिद्धः, अण्निमित्तकाल्लोपस्तु व्याश्रयत्वान्नासिद्ध इति यस्योपधा-त्वम् । उपधाग्रहणादेव भाधिकारमभिव्याप्याभीयासिद्धत्वमिति ध्व-नित्म् । यग्रहणं तूत्तरार्थम् । ङ्यामिति निर्देशात्सप्तम्येकवचनस्य ग्रह-णम् । नक्षत्राणीति। नक्षत्रवाचकात् योऽण् तत्रेत्यर्थः । तेन तिष्ये-ण युक्तं तैषमहः, तिष्ये भवस्तैष इत्यादि सिद्धम् । मातरि पि-चेति। पितामही सिद्ध्यर्थमिदम्। दंष्ट्रेति । दंशेः 'दाम्नीशस' (पा० सू०३।२।१८२) इति करणे ष्ट्रन् । अयमजादिषु पठ्यते । गौरादि-मातामहीशब्दपाठो ऽनार्ष इत्यन्ये ।

जानपदीति । जनपदे भवेत्यर्थः । उत्सादित्वादञ् । ङीप्य-द्युदात्तत्वे प्राप्ते ऽन्तोदात्तार्थं वचनम् । वृत्तिरनुच्छया जीविका अप्रत्यय इति । तथा च क्रियाशब्दोऽयमिति भावः । अमत्रे-मण्डलुरूपे ।

कुण्डी कमण्डलौ जारात् पतिवत्नीसुते पुमान् ।

इति मेदिनीकोशात्स तत्र नित्यस्त्रीलिङ्ग इति भावः । यदि 'पिठरे तु न ना कुण्डम्' इति त्रिश्वकोशे तस्य नपुंसकत्वमप्युक्तं पिठ-मत्रशब्दौ च पर्यायौ । "पिठरं स्थाल्युखा कुण्डम्" इत्यमरे नपुंस-कत्वमात्रोक्तिस्त्वन्ययुक्त्याऽनुवाद इत्युच्यते, तदाऽनेकविधसंस्थानेषु

---

ऽसिद्ध इति* । एवञ्च न सूर्यशब्दस्याङ्गत्वमिति भावः । *उपधाग्रह-णादेवेति* । अन्यथा सूर्यादीनां ङ्यनिरूपिताङ्गानामवयवस्य य इत्यर्थे सू-चरीत्यत्रेव 'सौरी बलाका' इत्यत्रासिद्धिःस्यादिति भावः । ननूपधायां सत्त्वे सूर्यादीनामुपधाभूतो यकार एव सम्भवतीति यग्रहणं व्यर्थमत आह *यग्रहणंतूत्तरार्थमिति* । हलस्तद्धितस्येतिसूत्रार्थमित्यर्थः । *ते-नक्षत्रवाचकादिति व्याख्यानेन । नक्षत्रशब्दोच्चारणेन विहित इत्यर्थे सन्धिवेलेत्यादिसूत्रविहितस्यैव ग्रहणं स्यात्तथा चोक्तप्रयोगानुपपत्तिरि-भावः । *इदमिति* । 'पितृव्यमातुलं' इतिसूत्रविहितं वार्त्तिकमित्यर्थः । "कुडि दाहे" इत्यस्येदित्वेन नुमि गुरुमत्त्वम् ।

*क्रियाशब्दोऽयमिति* । क्रियाप्रवृत्तिनिमित्तक इत्यर्थः । अन्तर्भावितण्यर्थात्कर्तर्येयकारप्र-त्ययः । एतेन जातिवाचकत्वाभावो ध्वनितः । कुण्डशब्दस्य रूढत्वेऽप्या- *यदि त्विति* । *अनेकविधसंस्थानेष्विति* । एवञ्चानुगतसंस्थान

षु कुण्डव्यवहारेण कुण्डत्वे जातित्वाभावादप्राप्तो ङीषिति बो-
ध्यम् । स्त्रीविषयत्वादित्युपलक्षणमिति बहवः । कमण्डलुसंस्थानस्या-
मुतत्वाद्गुपामत्रवाचिनो जातित्वमप्यस्ति । सूत्रन्तु नियमार्थमेव । अमृ-
ते जारजायां कुण्डेत्येवेत्यपरे । आवपने च नित्यस्त्रीत्वादप्राप्तस्य
ङीपो विधिः । आवपनमिति सामान्ये नपुंसकम् ।

गुणयोगादिति । गौणत्वेऽप्यपदकार्यत्वात्प्रवृत्तिरिति भावः ।
विधित्वानुरोधाद् गौण एवास्य प्रवृत्तिः । वर्णश्चेदिति । तद्विशि-
ष्टश्चेदित्यर्थः । अन्यथा 'गुणे शुक्लादयः पुंसि' इत्युक्त्या ऽसंगतं
स्यादिति बोद्धव्यम् । सूत्रे वर्णशब्दो ऽर्शआद्यजन्तः । कालाऽन्येति ।
कार्ष्ण्यगुणयुक्तेत्यर्थः ।

नील्या अनिति । वृत्त्यनुसारेणेदम् । प्रतिपदोक्तत्वादन्यकृ-
तिङीषन्तप्रविष्टनीलशब्दस्यैवात्र ग्रहणं, न त्वस्य लाक्षणिकत्वात् ।
आनाच्छादने इति नीलवर्णवती शाटीत्यर्थे नीलीति वारणाय चरि-
तार्थं । नील्या रक्ता गौरित्यर्थे नीलेत्येवोचितमिति परं । मैथुनेच्छा-
शब्दो ऽर्शआद्यजन्तस्तद्वतीत्यर्थः । अन्येति । मैथुनादन्यत् या इच्छति ।
कर्मणि 'लषपत' (पा०सू०३।२।१५४) इत्युकञ् । शोणशब्दो वर्णवाची
'वर्णानां तण' इत्याद्युदात्तः । अन्यत इति सिद्धे विकल्पार्थमिदम् ।

---

ह्यत्वाभावान्न जातित्वमित्युक्तम्भवति । मतान्तरमाह-*कमण्डलुसंस्था-
नेति* । *नियमार्थमेवेति* । कुण्डशब्दाच्चेदमत्र एवेति नियमार्थम् ।
त्रिस्त्वस्यामत्रग्रहणान्त्वित्यर्थः । *विधित्वानुरोधादिति* । न तु जा-
तिवाचकस्य नागशब्दस्यात्र सूत्रे उपादानं नियमार्थम् । "विधिनियमस-
म्भवे विधिरेव ज्यायान्" इति न्यायात् । *असङ्गतं स्यादिति* । अस्य
स्त्रीत्वमित्यादिः । *इदमिति* । प्रत्युदाहरणभूतस्य नीलेत्यस्य कथनं
नील्या रक्तेत्यर्थकथनमित्यर्थः। एवमभिधानेनोदाहरणे नीली इत्यत्रापि
क्तिकनिष्पन्नस्य प्रकृतित्वमिति प्रतीयते तन्न युक्तमित्याशयेनाह-*प्र-
तिपदोक्तत्वादिति* । *नीलवर्णवती शाटीत्यर्थ इति* । एवङ्कथनेन गुण-
गुणिनोरभेदोपचारो दर्शितः। ननु 'नीलया रक्तागौर्नीली' इति वृत्तिकारमते
जायमानस्य भवन्मतेऽसिद्धिरित्यत आह-*नील्या रक्तेति* । *मैथुनाद-
न्यदिति* । भूषणादिकमित्यर्थः ।

'वोत' इति सूत्रे गुणशब्दो न कृत्रिमाकृत्रिमन्यायेनादेङ्बोधक, उत

वोतो (पा०सू०४।१।४४)। अत्र गुणवचनशब्देन समस्त-कृद-
न्त-तद्धितान्त-सर्वनाम-जाति-संख्या सञ्ज्ञाशब्दातिरिक्तशब्दो ग्राह्यः
आकडारसूत्रभाष्यपर्यालोचनया तादृशानामेव तत्सञ्ज्ञालाभात्
तत्र हि प्रातिपदिकमात्रस्य गुणवचनसञ्ज्ञामुक्त्वाऽग्रे तद्बाधकास्ते
ताः क्रमेण पठिताः। गुणवचनेत्यन्वर्थसञ्ज्ञया गुणोपसर्जनगुणिन

इत्यस्य विशेषणस्योपादानात् नापि संसर्गिभेदकं यद्यत्सव्यापारं
यते गुणत्वम्परतन्त्रत्वात्तस्य शास्त्रे उदाहृतमिति लक्षणलक्षितगुण
ब्दबोध्यम् विशेषमात्रम्प्रथमलक्षणेन संसर्गिभेदकमित्यनेनोच्यते। सव्या-
पारमिति द्वितीयं लक्षणन्तस्येतरव्यापाराधीनव्यापारकमित्यर्थः।
खुर्द्रव्यमित्यत्राखुशब्दस्य द्रव्यात्मकसंसर्गिभेदकतयाऽतिप्रङ्गात। क्रि-
यामतिप्रसङ्गाच्च। नापि नैयायिकपरिभाषाविषयः, मृद्वी पट्वीत्या-
सिद्धापत्तेरत आह-*अत्र गुणवचनेति*। इत्थं हि तत्र भाष्यम्-'अर्थ-
वत्प्रातिपदिकम्। गुणवचनञ्च। समासकृत्ताद्धिताव्ययसर्वनामाऽसर्व-
ङ्गा जातिरिति। गुणवचनञ्चेत्यत्रार्थवदित्यनुवर्त्तते'। एवञ्च प्रतिपदि-
संज्ञागुणवचनसंज्ञयोरेकाविषयत्वात्समावेशार्थञ्चकारस्य करणाच्चो
समावेशः।

कृत्तद्धितपदञ्च तदन्तपरम्। उभयत्र प्रातिपदिकमित्यनुवर्त्तते।
वञ्च प्रतिपदिकसंज्ञापूर्विका कृदन्तसंज्ञा तद्धितान्तसंज्ञेति एता
म्प्रातिपदिकसंज्ञायाः समावेशः। प्रातिपदिकसंज्ञासामानाधिकरण्योपप
कृत्तद्धितपदन्तदन्तपरत्वेन स्वीकृतम्। गुणवचनसंज्ञा त्वेताभ्यां बाध्य
तेन कर्त्रीत्वं द्वारवतीत्वमित्यत्र "त्वतलोर्गुणवचनस्य" इति न पुंवद्भ
न च गुणिपरशुक्लादीनां गुणवचनसंज्ञा तद्धितान्तत्वान्न प्राप्नोति मतु
ऽत्र लोपादिति वाच्यम्। श्रूयमाणतद्धितान्तस्य संज्ञाविधानात्।

अथ वा गुणगुणिनोरभेदोपचारादेव गुणिनि शुक्लादिशब्दाना
त्तिसम्भवेन मतुप एवानुत्पत्तेः। रूपादिशब्दानान्तु न गुणवचनसं
जातिसंज्ञया बाधात्। तेन तेभ्यः ष्यञ्न। जातिसंज्ञा त्वसर्वलिङ्गत्या
वर्त्तते। एवमव्ययादिसंज्ञाभिरपि प्रातिपादिकग्रहणानुवृत्त्या समावेश
न च प्रातिपदिकमात्रस्य गुणवचनसंज्ञा यदि तदा "गुणवचनब्राह्मणा
भ्य" इति सूत्रे ब्राह्मणादिग्रहणं व्यर्थमिति वाच्यम्। प्राणभृज्जातिव
णाण्बाधनार्थत्वात्। जातिसंज्ञया बाधाच्च। 'ऐक्यं' 'राजपौरुष्यम्'
त्यादौ ष्यञ् तु ब्राह्मणादित्वात्। एवं संख्या-षट्-संज्ञा। एताः सं
अपि बाधिकाः। एकद्रव्योपनिवेशिनी संज्ञा।

रूपादिशब्दानाङ्गुणवचनसंज्ञां प्रकारान्तरेण वारयति-*गुणवचने

कानामेव तादृशानां सा सञ्ज्ञेति न रूपादीनां ग्रहणम्। जातिप्र-नाकृतिग्रहणद्रव्यवृत्तिजातिवाचकानामेव तत्र ग्रहणात्। कठादि-शाखातदध्येतृणाश्च तद्धितान्तत्वादेव व्यावृत्तिः। एतत्सूत्रभाष्योक्तम्।

"सत्त्वे निविशितेऽपैति पृथग्जातिषु दृश्यते।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः" ॥

इति गुणलक्षणं त्वेकदेशयुक्तिर्बहुविशेषणानां वैयर्थ्यात्। भाष्यकृ-ताऽव्याख्याच्च। तस्मादाकडारसूत्रोक्तमेव भाष्यसंमतमिति भाष्यप्रदीपो-द्योते निरूपितम्। शुचिरिति। शुचेरौणादिकः किदिन्। उत इ-त्यस्याभावेऽपि "खरुसंयोगोपधान्न" इत्येतत्सामर्थ्येनात इत्य-स्यात्रासम्बन्धः। उणादीनामव्युत्पन्नत्वान्कृदिकारादित्यस्यात्राप्रवृ-त्तिरित्यभिमानः। शुक्लेति तु प्रत्युदाहरणमुचितम्। तपरः किम्?

---

नपैति*। *बहुविशेषणानां वैयर्थ्यादिति*। सत्त्वं द्रव्यं तमाश्रये तत एव पाकादिना पूर्वगुणस्य निवृत्तिरपि भवति। विभिन्नजातीयेषु घटप-टादिषु दृश्यते। एतेन जातिनिरासः। द्रव्यत्वं विभिन्नजातीयेषु जल-पृथिव्यादिषु यद्यपि दृश्यते यथापि कदापि नापैति। असत्त्वप्रकृतिरि-ति। अद्रव्यस्वभावः। तेन भिन्नजातीयतन्त्वारब्धस्यासमवायिकारण-नाशजन्यनाशप्रतियोगिनः पटस्य निरासः। क्रियावारणायाह—*आ-धेय इति*। आधीयते उत्पाद्यते इत्यर्थः। एतेनानित्यत्वस्य लाभेऽक्रियाज इत्यनेन नित्यत्वस्य च लाभे नित्यानित्यवृत्तिजातिमानिति फलितम्। न चैवमपि तादृशसत्ताजातिमत्त्वस्य क्रियायां सत्त्वादतिव्याप्तिरेवेति वा-च्यम्। द्रव्यावृत्तित्वस्यापि जातिविशेषणत्वात्। एतेनैव सर्वगुणसङ्ग्रहे सत्त्वे निविशते इत्यादि व्यर्थमिति भावः।

*किदिनिति*। न चात्र कृदन्तसंज्ञया गुणवचनसंज्ञाया बाधादेव नातिप्रसङ्ग इति वाच्यम्। उणाद्यन्तानामव्युत्पन्नत्वस्यैव सिद्धान्तित्वात्। न च उत इत्यस्य सम्बन्धादेव शुचिरित्यत्र नातिप्रसङ्ग इति वाच्यम्। तस्यात्रासम्बन्धात्, तदाह—*खरुसंयोगोपधान्नेति*। *अभिमान इति*। स्तूणादीनां व्युपन्नत्वस्यापि तन्मते सत्त्वेन वक्ष्यमाणस्य वृत्ति-कारसम्मतस्य व्यवस्थितविभाषात्वस्य सत्त्वेन च तेनैव दोषनिरासे उत इति न कार्यमिति। *प्रत्युदाहरणमुचितमिति*। न चात्रापि संयोगोप-धत्वात् संयोगोपधान्नेतिनिषेधो भविष्यतीति कथमेतत्प्रत्युदाहरणमिति वाच्यम्। खरुशब्दसाहचर्येण संयोगोपधस्याप्युकारान्तस्यैव ग्रहणम्। अत

वधूः कासूः । "वधूः स्नुषा नवोढा स्त्री" "कासूर्विकलवाचि स्यात्" इति कोशबलेन नवोढात्वस्य विकलवाक्त्वस्य च प्रवृत्ति-निमित्तत्वेन खरुशब्दवत् गुणवचनत्वात् । पतिंवरेति । पतिं-भोत्कण्ठावतीत्यर्थः ।

बह्वादि । (पा०सू०४।१।४५) बहुशब्दस्योक्तरीत्या गुणवच-नत्वाभावेन ग्रहणम् । 'कृदि कारादिति' 'सर्वत' इति च ग-सूत्रे । अकृतोऽपीत्यर्थः । "व्यवस्थितविभाषाश्रयणात्क्वचिन्न । सु-गन्धि, प्रियकृतिर्वैश्येत्यादि" इति वृत्तिः । पुराणशब्दोऽत्र पठ्य-स (१)यद्यपि 'अय पन्था अनुवित्तः पुराणः' इत्यादावन्तोदात्तद-नेन घृतादिपाठादन्तोदात्त इत्युदात्तनिवृत्तिस्वरेण ततो ङीप्ङी-स्वरे विशेषाभावस्तथाप्यत्र पाठसामर्थ्यात्पक्षे टाबेवेति बोध्यम् । अजननिरिति । "आक्रोशे नञ्यनिः" (पा०सू०३।३।११२)

---

एव पाण्डुरित्युदाहृतमित्याशयात् । नचात इत्यस्य सम्बन्धेन खरु-गोपधान्नेति न कार्यमिति वाच्यम् । पट्वीत्यादीनामसिद्ध्यापत्तेः । *वि-कलवाचीति* । विकला वाग्यस्यास्तस्यामित्यर्थः ।

*उक्तरीत्या गुणवचनत्वाभावेनेति* । संख्यासंज्ञया गुणवचनसंज्ञा-बाधेन । सर्वत इत्यस्यार्थमाह—*अकृतोऽपि* । अपिना कृतः । "-णात्प्राचाम्" इतिसूत्रात्प्राचामित्यस्यानुवृत्त्यैव सिद्धे वेति इतिसूत्रे वा-ब्दोपादानं व्यवस्थितविभाषात्वसूचनाय तदाह—*व्यवस्थितेति* । *वृ-त्तिरिति* । 'देवत्रात' इत्यादिना तस्याः परिगणनाद्देवत्रातादिष्वस्याप्र-दिति व्यवस्थितविभाषात्वान्न युक्तमित्यरुचिः । तदुक्तप्रयोगसिद्धि-लिङ्गस्य लोकाश्रयत्वात्तत्रार्थस्य शास्त्रीयलिङ्गभावकल्पनेन । वाग्रहण-सर्वमते विकल्पार्थम् । *ङीप्ङीषोरिति* । अयं हि ट्युलन्तः पुरा-प्रोक्तेति निपातानात्तुडभावः । एवञ्च टित्वान् ङीप् प्राप्तः । *साम-र्थ्यादिति* । केवलस्य स्त्रियां वृत्त्यसम्भवात्तस्मादुपसर्जने एव प्रवृत्तिः ।

---

(१) नन्वत्रोगितत्वादेव ङीपि सिद्धे तत्पाठो व्यर्थः । नच ङीपि 'सुप्पितौ' इत्यनुदात्तत्वादन्ताद्य-ङीषितु अन्तोदात्त इति स्वरे विशेष इति वाच्यम्, वेदे तस्यान्तोदात्तत्वदर्शनेन घृतादिगणे पठन-लूप्यत्वेनान्तोदात्तत्वात् सत्यपि ङीप्युदात्तनिवृत्तिस्वरेणान्तोदात्तत्वेन स्वरे विशेषाभावादित्याशङ्क्य-यपीति । परिहरति—*तथापीति* । पक्षे टाब्विशिष्टप्रयोगाय तत्र तत्पाठः सार्थकः । अन्यथोक्ते-ङीपि स्वरेविशेषाभावेन ईकारान्तोदात्तत्वसिद्धावपि टाब्विशिष्टप्रयोगस्यासिद्ध्यापत्तेरिति भावः ।

नेरानिः । (१)अहन्शब्दो ऽत्र पठ्यते सामर्थ्यादनुपसजर्नाधिकार-
बाधः । 'दीर्घाह्नी प्रावृट्' ङिति ङीष्यन्तोदात्तम् । बह्वादिराकृतिगण
इति गणरत्नकृत् ॥

पुंयोगादा (पा०सू०४।१।४८)। हेतौ पञ्चमी । आख्याया-
मिति पञ्चम्यर्थे सप्तमी । आख्याशब्दो बोधकपरः । आख्या चा-
पस्थितत्वात्पुंस एव न स्त्रियाः । स्त्रियां वर्तमानस्य स्त्र्याख्यत्वाव्य-
भिचारादाख्यापदवैयर्थ्यापत्तेः । पुंस्येव यः प्रसिद्धः शब्द इत्यर्थः ।
पुंयोगाद्धेतोः प्रवृत्तिनिमित्तारोपेण स्त्रियां वर्त्तमानात्पुंबोधकाच्छब्दात्
ङीषित्यर्थः । योगः सम्बन्धः । पुंयोगात्किम् ? देवदत्ता । आ-
ख्यायां किम् ? प्रसूता । तदभावे हि स्त्रियां वर्त्तमानं यत्प्रातिपदिकं
पुंयोगहेतुकवृत्तिनिमित्तकमित्यर्थो ऽपि सम्भाव्येत । अस्ति हि तत्प्र-
वृत्तिनिमित्ते प्रसवे पुंयोगहेतुकत्वम् । उक्तपुमाख्या तु नैषेति भावः ।
पुंयोगोऽत्र दाम्पत्यरूप एवेति भाष्यस्वरसः । 'यथेयं भर्तृपापकृ-
तान् बन्धादीन् लभते एवं तच्छब्दमपि' इति भाष्योक्तेः । 'देवकी'

"पुंयोगात्" इति सूत्रे परपञ्चमी न सम्भवतीत्यत आह—*हेतौ
पञ्चमीति* । एवं सति कस्मादनेन प्रत्ययविधानमित्याकाङ्क्षापूरणायाह-
*आख्यायामितीति* । आख्याशब्दस्य ससम्बन्धिकत्वादाह--*उप-
स्थितत्वादिति* । एवञ्च यादृशो वाक्यार्थः सम्पन्नस्तमाह--*पुंयोगा-
द्धेतोरिति* ।

सर्वं वाक्यमसति बाधके सावधारणमिति न्यायेनैवकारलाभः । वि-
नापि प्रत्ययमितिवचनेन संशब्दलोपे सति योगशब्दस्य संयोगपरत्व-
भ्रमनिरासायाह—*योगः सम्बन्ध इति* । देवदत्तेति* । क्वचित्कौचि-
त्सिद्धनिष्पन्नोऽयं स्वभावतः स्त्रियां वर्त्तते न तु पुंयोगस्तत्र निमित्तमिति
भावः । *आख्यायां किमिति* । एतदभावेऽपि प्रातिपदिकादित्य-
धिकृतं सम्बध्यत एव । एवं सति निष्पन्नं वाक्यार्थमाह—*तदभावे ही-
ति* । प्राचाम्मतं कटाक्षयति—*पुंयोगोऽत्रेति* । एतेन जन्यजनकभा-
वनिरासः । तथा सति देवकीत्यादिप्रयोगाणां का गतिरत आह—*देवकी-
त्यादि त्विति* । आदिना 'कैकेयी शूद्री' इत्यादिप्रयोगाणां संग्रहः ।

(१) ननु अहन्शब्दस्याप्यत्र पाठः स किं केवलो ङीप्प्रयोजको वृत्तिस्थो वा । नाद्यः । केवलस्य
स्त्रीवृत्तित्वाभावात् । न द्वितीयः । वृत्तिस्थस्योपसर्जनत्वेनानुपसर्जनाधिकारात्ततो ङीप्प्राप्तेरित्यत आह-
*अहन्शब्दोऽत्रेति* ।

इत्यादि तु गौरादिषु बोद्धयमिति केचित् ।

गोपालिकेति । गाः पालयतीति गोपालः स एव गोपालक-स्तस्य स्त्रीत्यर्थः । ण्वुलन्तस्य तु कारकषष्ठ्या समासनिषेधाच्छे-षष्ठ्या समासे आपः सुपः परत्वादित्त्वं दुर्लभम् । वस्तुतः शेषष-ष्ठ्या अप्यत्र कारकत्वात्सुबुत्पत्तेः पूर्वमेव तत्रापि समासः । यथा-कथंचित्कारकग्रहणेऽपि कथञ्चित्कारकत्वमादाय 'गतिकारकोप-दानाम्' इत्यस्य प्रवृत्तेरत्रत्यभाष्यात् 'उपपदमतिङ्(पा०सू०२।२।१९)' इति सूत्रभाष्याच्च लाभात् । यद्वा तन्निषेधस्यानित्यत्वादप्रवृत्ति

'गोपालिका' इत्यत्र गवां पालिकेति न विग्रहस्तदाह-*गाः पालय-तीति* । इदम्मतमनुरुध्य वस्तुतस्तादृशविग्रहेऽपि न क्षतिरित्याह-*वस्तुत इति* । ननु "गतिकारकोपपदानाम्" इत्यत्र कारकपदोपादाने कारकसंज्ञासमानाधिकरणसंज्ञानिमित्तकविभक्त्यन्तस्य समास इत्येव ल-भ्यत इति षष्ठ्यन्तस्य समासः सुबुत्पत्तेः प्रागिति कथं लभ्यत इत्यत आ-ह-*यथाकथञ्चिदिति* । *कथंचित्कारकत्वमिति* । शेषत्वेनापि वस्तु-तः कर्मण एव ग्रहणमिति भावः । *अत्रत्यभाष्यादिति* । एवं हि भाष्ये उक्तम्—'गोपालिकादीनां प्रतिषेधः । गोपालिकादीनां प्रतिषेधो वक्तव्यः । गोपालिका । पशुपालिक' इति । अत्र गोपालिकादीनां प्रतिषेधप्रतियो-गित्वासम्भवादाह कैयटः सिद्धय इति वाक्यशेष इति । "तृजकाभ्यां कर्तरि" इत्यस्य प्रवृत्त्या कर्मषष्ठ्या समासासंभवाच्छेषषष्ठ्यैव समासो वा-च्यः । तत्र यदि गतिकारकोपपदानामिति परिभाषाप्रवृत्तिर्न स्यात्तदा आपः सुपः परत्वादित्वं दुर्लभमिति भाष्योक्तस्येत्वघटितस्य प्रयोगस्य सिद्धये शेषषष्ठीविषयेऽपि गतिकारकेतिपरिभाषाप्रवृत्तिः ।

ननु प्रकृतसूत्रस्थभाष्यस्य गोपालशब्दं साधयित्वा ततः स्वार्थे क-ऽपि सिद्धिरित्यत आह-*उपपदेति* । तत्र हि षष्ठीसमासस्य वैकल्पि-कत्वात्तदभावे चोपपदसमास इति षष्ठीसमासादुपपदसमासो विप्रतिषे-धेनेतिवार्त्तिककृतोक्तस्य विप्रतिषेधस्य खण्डनायोक्तम् । अत्र विप्रति-षेधविचारेण षष्ठीसमासस्यापि सुबुत्पत्तेः पूर्वमेवोत्पत्तिरिति लभ्यते । अन्यथोपपदसमासस्य सुबुत्पत्तेः प्राक् प्राप्तिः, षष्ठीसमासस्य तु तदनन्त-रमिति विप्रतिषेधविचारोऽसङ्गत एव स्यात् । अतः षष्ठीसमासस्यापि सुबु-त्पत्तेः प्राक् प्रवृत्त्या प्राप्तिरिति स्पष्टमेव लभ्यते । षष्ठीसमासस्य सुबुत्पत्तेः प्राक् प्रवृत्तिमनभ्युपगम्य समाधानान्तरमाह—*यद्वेति* । *तन्निषेध-स्य* । तृजकाभ्यां कर्त्तरीति निषेधस्य । *अनित्यत्वात्* ।

कारकषष्ठ्या सुबुत्पत्तेः पूर्वं समासेन तत्रापीत्वं सुलभम् । सूर्यैति । सर्तेः क्यप्प्रत्ययाद्युदात्तसूर्यशब्दाच्चाप्यन्तोदात्तमिदम् । एतेन ङीब्निषेधेन टाबेव सिद्धिरित्यपास्तम् । सूरीति । सूर्यस्य स्त्री या कुन्ती, इयं मानुषी, न देवतेत्यर्थः ।

महत्त्वे इति । तद्योगे एवैषां स्त्रीत्वमिति भावः । यवनाल्लिप्यामिति । लिप्यर्थको ऽत्र ङीष् 'तस्येदम्' (पा०सू०४।३।१२०) इत्यण्बाधक इति बहवः । लिपिः-अक्षरविन्यासः । मातुलेति । मातुलान्नित्ये प्राप्ते उपाध्यायादप्राप्ते विभाषेयम् । या तु स्वयमेवेति । "अपादाने स्त्रियां घञ उपसंख्यानं, तदन्ताच्च वा ङीष्" इति तृतीये 'इङश्च' (पा०सू०३।३।२१) इति सूत्रे वार्त्तिकादिति भावः ।

---

प्रयोजको हेतुश्च" "जनिकर्त्तुः प्रकृतिः" इतिनिर्देशेनानित्यत्वात् । *आद्युदात्तेति* । धातुस्वरेणाद्युदात्तेत्यर्थः । *एतेन* । अन्तोदात्तस्य सूर्याशब्दस्यासाधनेन । *ङीब्निषधेन* । सूर्यान्नेतिन्यासेन ।

ननु 'सूरी कुन्ती' इत्यनेनैव स्त्रीत्वाभिव्यक्तिसम्भवादियमिति व्यर्थमित्याशङ्कानिवारणायाह—*सूर्यस्येति* । ननु पुंयोगस्य दाम्पत्यभावरूपस्यैव पूर्वं व्यवस्थापितत्वात्तस्य विवाहितायामप्रसिद्धेः कथमियं सूर्यस्य स्त्री । विवाहात्प्राक्सूर्यसम्बन्धेन कर्णस्योत्पत्तिरिति प्रसिद्धमिति चेन्न । "सूर्यस्य स्त्री सूरी । देवतायां किम् ? सूर्या" । एतद्भाष्ये उक्तन्तत्प्रामाण्येन देवतावाचकस्य पुम्शब्दस्य तद्देवकर्तृकस्वीकारकर्मत्वसम्बन्धप्रयोज्या यस्याम्प्रवृत्तिः साऽपि तत्स्त्रीत्वेन गृह्यते इति स्वीकारात् । एवमेवेन्द्राणीत्यादीनामुपपत्तिः । न च जन्यजनकभावादिसाधारणः पुंयोगः कुतो न गृह्यत इति वाच्यम् । पुंयोगोपपादनावसरे "यथैव ह्यसावकुर्वती किञ्चित्पापं भर्तृकृतान्वधबन्धनक्लेशांल्लभते एवम्प्रष्ठशब्दमपि" इति भाष्यस्वारस्यात् ।

*तद्योग इति* । महत्त्वादियोग इत्यर्थः । अत एवैषामित्यस्योपपत्तिः । "हिमारण्ययोर्महत्त्वे" इत्यादीनि वार्त्तिकानि । एतेषु वार्त्तिकेषूपात्तो यो य उपाधिस्तद्योग एवैषां स्त्रियां वृत्तिः । यदा तु न तत्तदुपाधिविवक्षा तदा स्त्रीत्वमेव नेति तत्तद्योग एवैभ्यो ङीष्, अन्यत्र टाप्, इति भ्रमो न कार्यः । अत एवोक्तन्तद्योग एवैषामिति । *विभाषेयमिति* । एतेन "मातुलोपाध्याययोः" इति वचनस्य पुंयोग एव प्रवृत्तिस्तत्र ङीषः सिद्धत्वादानुगागममात्रं विकल्प्यते । ननु ब्रह्माणीतिवदिन्द्रमानयतीति व्युत्पत्त्या इन्द्राणीत्यस्यापि सिद्धिरिति "इन्द्रवरुण" इति सूत्रं व्यर्थमत आह—

उपेत्याधीयते यस्या इति विग्रहः। (१)अर्येति ह्रस्वादिस्तदाह-स्वामिनीति। अर्यः स्वामिवैश्ययोरित्युक्तेः। आर्येति पाठस्तु कैयटाद्यसंमतः। स्वार्थे इति। अत एव भाष्ये अर्याणी अर्या इत्येवोक्तम्। पुंयोग एव प्रवृत्तौ तु उपाध्यायीतिवद् अर्यीति पक्षे ङीपमेवोदाहरेत्। कर्मण्यणिति। सूत्रं तु 'इन्द्री' इत्यादिव्यावृत्त्यर्थमिति भावः।

क्रीतात्। (पा०सू०४।१।५०) (२)करणादिति वक्तव्ये पूर्वग्रहणादनुवृत्तप्रातिपदिकरूपान्यपदार्थेऽवयववाचिपूर्वशब्देन बहुव्रीहिः, तेन 'वस्त्रेण क्रीता' इति वाक्ये न। अत इति चानुवर्त्तते। करणे किम्? सुक्रीता। धनक्रीतेति। "कर्त्तृकरणे" (पा०सू०२।१।३२) इत्यत्र बहुलग्रहणेन गतिकारकोपपदानामित्यस्यानित्यत्वादत्र सुबुत्पत्त्यनन्तरमेव समास इति भावः। इदम् 'उपपदमतिङ्' (पा०सू० २।२।१९) इति सूत्रे कैयटे स्पष्टम्। (३) अयमजादिष्वित्यन्ये। एवञ्च 'गतिः' इत्यादेरनित्यत्वे न मानमिति तदाशयः। अत एवैतत्कर्तृकारे

*सूत्रन्त्विति*।

*तेन*। तादृशबहुव्रीहिसमासाश्रयणेन। *करणे किमिति* क्रीतात्सपूर्वादित्येवास्त्विति प्रश्नः। *स्वक्रीतेति*। एवं सति कर्तृपूर्वादपि स्यादिति भावः। कैयट इत्यनेन सूचितामरुचिस्प्रकटयन्स्वसिद्धान्तमाह—*अयमिति*। धनक्रीतेत्यादिशब्दः। *अत एव*। तस्याः परिभाषाया अनित्यत्वस्यानभिमतत्वादेव।

ननु तस्याः परिभाषाया अनित्यत्वाभावे गोष्ठादिष्वपि स्थाधातोः

(१) केचित्तु अर्यक्षत्रियाभ्यांवेति वार्तिके आर्येति दीर्घाकारं पठन्ति। स च पाठः कैयटादि... इत्यत आह—*अर्येति*। कैयटादिग्रन्थेऽपि ह्रस्व एव पाठ इति भावः।

ननु अर्यक्षत्रियाभ्यां वेति वार्तिके स्वार्थ इत्यनुक्ते स्वार्थ इत्यप्रामाणिकम्। वस्तुतः पुंयोगस्य ... तत्वात्पुंयोगे एवेति केचिदिच्छंति। तन्न युक्तं। तत्रत्योदाहरणपरभाष्यविरोधादिति दर्शयन् तदेव दृढ... *अतएवेति*।

(२) ननु क्रीतात्करणपूर्वादितिसूत्रे करणपूर्वादित्यत्र दिग्वाचकपूर्वपदेन बहुव्रीहौ करणपूर्वकपदयोरेतस्य साधारण्येन वस्त्रेण क्रीतेति वाक्येऽपि ङीष् स्यादित्यत आह—*करणादिति वक्तव्ये पूर्वग्रहणादिति*।

(३) *कैयटे स्पष्टमिति*। तत्रत्यभाष्यस्थगतिकारकोपपदानामिति प्रतीकमुपादाय तद्व्याख्यानावसरे कारकस्य समासोऽपि बहुलग्रहणात् क्वचित् सुबुत्पत्तेः प्राक्भवतीति 'सा हि तस्य धनक्रीता' इति प्रयोग उपपन्न इति। अत्रारुचिबीजं प्रकटयति-अयमिति*।

इति सूत्रे बहुलग्रहणफलत्वेन भाष्ये नोक्तम् । "अम्बाम्ब" (पा०सू० ८।३।९७) इति सूत्रे गवादिग्रहणन्तु नियमार्थम्, तेन 'हृदिस्थः' इत्यादौ षत्वं नेति दिक् ।

अभ्रलिप्तीति । "कृद्ग्रहणे गतिकारकपूर्वस्यापि" इति विशिष्टस्य क्तान्तत्वम् । 'अल्पाख्यायाम्' इति समुदायोपाधिः । अल्पत्वं करणगतं क्रियागतं वा । क्तान्तादिति । क्तान्तान्तादित्यर्थः । प्रत्ययग्रहणपरिभाषालब्धक्तान्तेन प्रादिपदिकस्य विशेषणात् । ऊरुभिन्नीति । "जातिकालसुखादिभ्यः परा निष्ठा' (पा०सू०८।२। १७०) इति भिन्नशब्दस्य परनिपातः । पाणिगृहीतीति । अग्निसाक्षिकतया गृहीतपाणिकेत्यर्थः । भाष्ये तु 'पाणिगृहीत्यादीनां वि-

---

क्तान्तस्य सुबुत्पत्तेः प्राक् समासे पदादित्वाभावात्सात्पदाद्योरिति निषेधाप्राप्तेरादेशप्रत्यययोरित्यनेनैव षत्वे सिद्धे "अम्बाम्ब" इतिसूत्रे गवादिसूत्रे गवादिग्रहणं व्यर्थमत आह-*अम्बाम्बेतीति* । उत्तरपदभूतस्य स्थः सकारस्य षत्वञ्चेदेभ्य एवेति । तेन 'हृदिस्था शोभते माला' इत्यत्र नेति भावः । एतेन गवादिग्रहणमेव गतीत्यादेरनित्यत्वे मानमित्यपास्तम् । नियमार्थत्वेन चारितार्थ्यात् । पदादादिरिति पक्षे तस्य तत्त्वासम्भवाच्च ।

वस्तुतस्तु "न पदान्त" सूत्रस्थपदान्तपदस्य पदेऽन्तः पदान्त इति समासप्रदर्शनेन पदे परे योऽन्तस्तस्य कार्ये कर्त्तव्य एव निषेध इति गोचेत्यादि सिद्ध्यर्थमनित्यत्वरूपपरिभाषायाः स्वीकार्यम् । अन्यथाऽच इति सूत्रनिष्पन्नलोपस्य स्थानिवद्भावादवङादेशस्याप्यापत्तिरित्याहुः । पदशब्दस्य पदत्वयोग्योपलक्षणत्वमिति त्वन्येषामाशयः । *विशिष्टस्य क्तान्तत्वमिति* । यद्यपि वक्ष्यमाणरीत्या क्तान्तान्तादित्यर्थे कृद्ग्रहणपरिभाषां विनापि निर्वाहस्तथापि तदन्तविधिद्वयाभावेऽपि निर्वाहः प्रकृतेऽस्तीति भावः ।

*समुदायोपाधिरिति* । स्त्रीप्रत्ययान्तसमुदायविशेषणमित्यर्थः । करणगतम् । अभ्रगतम् । ईषदभ्रेण लिप्तेत्यर्थः । करणस्याल्पत्वे तल्लेपनस्याल्पत्वे सुकरमेवेत्याशयेनाह-*क्रियागतमिति* । अभ्रेणषल्लिप्तेत्यर्थः प्रकृत इति भावः । स्त्रीप्रत्ययसमभिव्याहारस्तात्पर्यग्राहकः । प्रकारान्तरमाह-*क्तान्तान्तादितीति* । एवं सति प्रकृते कृद्ग्रहणपरिभाषानाश्रयणेऽपि न क्षतिः । भिन्नशब्दस्य विशेषणवाचकत्वात्पूर्वनिपातशङ्कायामाह-*जातिकालेति* । पाणिगृहीतीत्यस्य पाणिगृहीतो यस्या इत्यर्थः । प्राशस्त्यञ्च ग्रहणे विवक्षितन्तदभिप्रायेणाह-*अग्निसाक्षिकतयेति* । यद्यपि

शेष' इत्युक्तम्(१)।

अस्वाङ्गपूर्व । (पा०सू०४।१।५३) न स्वाङ्गम् अस्वाङ्गं, पूर्वञ्च तत्पदञ्च पूर्वपदं, पुनः कर्मधारयः। अस्वाङ्गभूतात्पूर्वपदात्परं यत् क्तान्तं तदन्तबहुव्रीहेरित्यर्थः। उत्तरसूत्रे भाष्ये 'कल्याणपाणिपादा' इत्यादौ तत्प्रवृत्तिवारणाय तत्रैतदनुवर्त्य कर्मधारयस्याश्रयणेनात्रापि तथैवौचित्यात्। तत्र "यदुपसर्जनं 'पाणिपाद'मिति समुदायो न स स्वाङ्गं, स्वाङ्गसमुदायश्च न स्वाङ्गशब्देन गृह्यते। यच्च स्वाङ्गं पादेति न तदस्वाङ्गरूपपूर्वपदात्पर"मित्युक्तम्। एवञ्च करमुखीत्याघसाध्वेव। जातिपूर्वादितीहापि संबद्ध्यते। अन्यथा बहुनञादीनामस्वाङ्गत्वेन विकल्पस्य तत्पूर्वके दुर्वारत्वात्, तदाह–नित्ये प्राप्ते इति। वस्त्रच्छन्नेति। बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरे शेषनिघाते चानुदात्तान्तोऽयम्। 'पुत्रादिनी' इत्यादौ सुप्यजाताविति णिनिर्देशेनाऽऽकृतिग्रहणत्वाद्यभावेन च पुत्रशब्दस्य जातिवचनत्वाभावेऽपि "पुत्रहती' इत्यादौ गौरादिङीषिति बोद्ध्यम्। अस्वाङ्गादित्येव सिद्धे पूर्वपदग्रहणं स्पष्टार्थम्। किंच, तदभावेऽस्वाङ्गादिति प्राधान्यात्

---

भाष्ये भार्यायामिति नाभिहितन्तथापि तत्र विशेष इत्यभिधानादेवं कथनमिप्रायेणाह—*भाष्ये त्विति*। न चान्य एव विशेषः कल्प्यतामिति वाच्यम्। 'पाणिगृहीती भार्या यस्या हि यथाकथञ्चित्पाणिर्गृहीतः पाणिगृहीती सा भवति' इति भाष्यात्तथोक्तमित्यभिप्रायात्।

अस्वाङ्गपूर्वपदादिप्यत्र कर्मधारयसमासाश्रयणे बीजमाह-*उत्तरसूत्र इति*। न चास्वाङ्गपूर्वपदादित्यत्र कर्मधारयाश्रयणेऽस्वाङ्गादित्येव सिद्धे पूर्वपदग्रहणन्नास्मिन् सूत्रे सफलमिति वाच्यम्। उत्तरसूत्रार्थमवश्यङ्कर्त्तव्यमित्याशयात्। *एवञ्च*। उत्तरसूत्रे तादृशार्थाश्रयणे च। *तदाह* तदाशयेनाह। जातिपूर्वादित्यस्य प्रकृतसूत्रेऽपि सम्बन्धे एव समाननिमित्तकत्वलाभेन नित्यशास्त्रबाधकत्वमिति भावः। 'पुत्रहती' इत्यादावनेन सूत्रेण ङीष् भवतीतिवादिमतं न युक्तमिति ध्वनयन्नाह-*पुत्रादिनीत्यादाविति*। *स्पष्टार्थमिति*। प्रकृतसूत्रे विवक्षितस्यार्थस्य स्पष्टं प्रत्ययार्थम्। फलान्तरमप्यस्तीत्याह-*किञ्चेति*। इदमुपलक्षणम्पूर्वोक्तमपि

---

(१) भाष्ये 'पाणिगृहीत्यादीनां विशेषः' इत्येवोक्तम्। तत्र 'अग्निसाक्षिपूर्वकं यस्याः पाणिग्रहणं कृतं साऽभिधीयते इति कैयटेन वार्तिकस्थविशेषपदार्थः प्रदर्शितः। अत्र वार्तिकस्थादिपदेन 'सुहस्तगृहीता', इत्यस्याः संग्रहः।

बहुव्रीहिविशेषणं स्यादिति ॥

स्वाङ्गाच्चो (पा०सू० ३।१।५४)। तदन्तादित्युपसर्जनग्रहणलभ्यम् बहुव्रीहेरित्यनुवर्त्तमाने उपसर्जनग्रहणफलमाह-अतिकेशी। 'एकविभक्ति' (पा०सू० १।२।४४) इति केशानामुपसर्जनत्वमप्रधानत्वञ्च । शिखेति । इदमेव प्रत्युदाहरणम् । शोभनेत्यादि सुशिखान्तं प्रक्षिप्तम् । विशिष्टे ऽदन्तत्वाभावेनाप्राप्तेः । यद्यपि भाष्ये आशिखेति प्रत्युदाहृतं तस्याप्येकदेशे एव तात्पर्यम् । नञ्पूर्वे 'सहनञ्' (पा०सू० ४।१।५७) इति निषेधेन प्राप्त्यभावात् । एतेन क्रोडादिषु शिखाशब्दपाठ इत्यपास्तम् ।

---

फलम्बोऽयम् । *बहुव्रीहिविशेषणमिति* । एवं सति 'साध्वी कल्याणपाणिपादा' इत्यादावतिप्रसङ्गः स्यादिति शेषः ।

*शिखेति* । यदि सूत्रे उपसर्जनपदन्न स्यात्तदा शिखेत्यत्र टापं बाधित्वा ङीष् स्यादिति भावः । अत्र भाष्यविरोधशङ्कां वारयति-*यद्यपीति* । *एकदेश एव* । शिखेत्यत्रैव । *एतेन* । अनेन निषेधेन तस्य सिद्धौ तत्र पाठे फलाभावेन । केचित्तु शिखेति प्रत्युदाहरणमित्यसंगतं कल्याणपाणिपादेत्यत्र दोषवारणायास्वाङ्गपूर्वपदादित्यस्यात्र सूत्रेऽनुवृत्त्याऽस्वाङ्गपूर्वपदात्परत्वस्य प्रकृतेऽभावेन ङीषोऽप्राप्तेरित्याहुः । तन्न । एतत्सूत्रव्याख्यायामुपक्रमेऽशिखेत्युक्तं न त्विदमेव प्रत्युदाहरणमित्यत्र भाष्यकृतो निर्भरः । अत्रत्यमूलग्रन्थस्यापि तदनुसारित्वात् । तथाहि-अथोपसर्जनग्रहणङ्किमर्थम् । इह माभूत् । अशिखा । उपसर्जनग्रहणमनर्थकं बहुव्रीह्यधिकारात् । उपसर्जनग्रहणमनर्थकम् । किङ्कारणम्? बहुव्रीह्यधिकारात् । बहुव्रीहेरिति वर्त्तते । बह्वजर्थन्तर्ह्युपसर्जनग्रहणङ्कर्त्तव्यम् । बह्वचो नेति प्रतिषेधं वक्ष्यति तद्बह्वज्ग्रहणमुपसर्जनविशेषणं यथा विज्ञायेत । बह्वच उपसर्जनान्नेति । अथाक्रियमाणे बह्वज्ग्रहणे कस्य बह्वज्ग्रहणं विशेषणं स्यात् बहुव्रीहेरिति वर्त्तते । बहुव्रीहिविशेषणं विज्ञायेत । अस्ति चेदानीं कश्चिदबह्वज्बहुव्रीहि र्यदर्थो विधि; स्यादस्तीत्याह । स्वडा स्वडीति । अडो वृश्चिकावयवविशेषः । बह्वजर्थमिति चेत् स्वाङ्गग्रहणात्सिद्धम् । स्वाङ्गग्रहणं क्रियते तद्बह्वज्ग्रहणेन विशेषयिष्यामः । स्वाङ्गाद्बह्वचो नेति । स्वाङ्गसमुदायप्रतिषेधार्थन्तु स्वाङ्गसमुदायप्रतिषेधार्थन्तर्ह्युपसर्जनग्रहणङ्कर्त्तव्यम् । स्वाङ्गाद्यथा स्यात् स्वाङ्गसमुदायान्माभूत् । कल्याणपाणिपादेत्याद्युक्त्वा एतदपि नास्ति प्रयोजनमस्वाङ्गपूर्वपदादिति वर्त्तते तेन स्वाङ्गं विशेषयिष्यामः । अस्वाङ्गपूर्वपदात्परं यत् स्वाङ्गमिति यच्चात्रा-

ननु स्वमङ्गं स्वाङ्गञ्चेत् 'सुमुखा शाला' इत्यत्रापि स्यात्, मुख-स्यापि शालाङ्गत्वात्। 'सुकेशी रथ्या' इत्यत्र च न स्यात्। केशानाम-दङ्गत्वाभावादत आह-अद्रवमिति । (१)स्पर्शवद्द्रव्यपरिमा-मूर्तिः। रथ्येति । (२)इदानीं प्राणिस्थत्वाभावात्पूर्वलक्षणेनासि-द्धिः। एवञ्चेदं 'पूर्वलक्षणे प्राणिस्थत्वमुपलक्षणम्' इत्यत्र तात्पर्यग्रा-कमिति भावः। (३)प्रतिमादिगतस्तनस्य प्राणिनि कदाप्यदृष्टत्वा-

स्वाङ्गपूर्वपदात्परं स्वाङ्गन्न तदन्तो बहुव्रीहिः, यदन्तश्च बहुव्रीहिर्नासौ स्वा-ङ्गपूर्वपदात्परं स्वाङ्गमिति। इदन्तर्हि प्रयोजनं बहुव्रीहेरिति। वर्त्तमाने उप-सर्जनग्रहणमुपसर्जनमात्राद्यथा स्यात् निष्केशी यूका। अतिकेशी मा-इति" इत्युक्तम्। एतेन भाष्यीयप्रघट्टकेनोपसर्जनग्रहणस्य बहुव्रीहेरित्यस्य निवृत्तिरेव मुख्यप्रयोजनन्न तु पूर्वोक्तमुपक्रमस्थमशिखेति प्रदर्शितम्भवति

सूत्रस्थस्वाङ्गशब्दस्य वार्त्तिककारीयपरिभाषाविषयत्वन्न तु केवलयौ-गिकत्वमिति प्रदर्शयितुमाशङ्कते—*नन्विति*। *स्वमङ्गमिति*। स्वी-यमङ्गमित्यर्थः। स्वशब्दस्यात्मीयपरत्वात्। *अद्रवम्*। द्रवतीति द्रवम्। न द्रवमद्रवम्। मूर्त्तिः काठिन्यम् अथ वा असर्वगतद्रव्यपरिमा-णम्। अविभु परिमाणमिति यावत्। एतेनाकाशादेर्व्यावृत्तिः। तत्फलि-तार्थमाह-*स्पर्शवदिति*। तत् यस्यास्ति तत्स्वाङ्गम्। स्वेदस्य स्वाङ्ग-त्वप्राप्तिर्द्वितीयार्थ एवेति द्वितीयार्थ एव तात्पर्यम्। ज्ञानस्याद्रवत्वाच्चा-तिव्याप्तिवारणाय-*मूर्त्तिमदिति*। 'सुमुखा शाला' इत्यत्रातिव्याप्ति-वारणाय-*प्राणिस्थमिति*। सुशोफेत्यत्रातिव्याप्तिवारणाय-*अविकार-जमिति*। विकारो वातादिवैषम्यं तस्मात् यन्न जातन्तत्। 'सुकेशी दीर्घ-केशी रथ्या' इत्यत्र स्वाङ्गत्वसिद्धये आह-*अतत्स्थन्तत्र दृष्टञ्चेति*। 'सुस्तनी सुस्तना वा प्रतिमा' इत्यस्य सिद्धये-*तेन चेत्तत्था युत-मिति*। भाष्ये तु तस्य चेत्तत्था युतमिति पाठो दृश्यते तस्याप्ययमे-वार्थः। तत्र करणस्य शेषत्वविवक्षया षष्ठी अत्रातत्स्थन्तत्र दृष्टञ्चेति लक्षणान्तरमिति प्रतीयते तन्न युक्तं प्रथमलक्षणेनैव द्वितीयलक्षणसङ्ग्र-

(१) स्पर्शवद्द्रव्येति*। स्पर्शवद्द्रव्याणि च पृथ्व्यप्तेजोवायुरूपाणि तेषां परिमाणं परिच्छि-रिमाणं सा मूर्तिरित्यभिधीयते इति तदर्थः।

(२) पूर्वोक्तलक्षणयोर्विशेषदर्शनपूर्वकमविरोधं दर्शयन्नैक्यतात्पर्यमाह-इदानीमित्यादि*। प्राणिस्थ-त्वस्य विशेषणमभ्युपेत्य 'अद्रवम्' इत्यादि लक्षणमुक्त्वा 'अतत्स्थं तत्र दृष्टञ्च' इत्याद्युत्तरलक्षणमुक्तम्। एतस्य पूर्वलक्षणस्थप्राणिस्थत्वस्योपलक्षणत्वं तात्पर्यग्राहकत्वे तु तयोरेकतात्पर्यकत्वादैक्यमिति भावः।

(३) प्रथमलक्षणेन द्वितीयस्यैक्यं प्रदर्शितम्, तथाप्यगतार्थत्वात्ततीयलक्षणमवतारयति-प्रतिमादि-गत इति*। वस्तुतः द्वितीयलक्षणस्य तात्पर्यग्राहकत्वे लक्षणद्वयमेव पर्यवसन्नमिति बोध्यम्।

दाह-तेन चेदिति । अप्राणिनो ऽपि स्वाङ्गं यदि तेन तज्जातीयेन वस्तुना प्राणी यथा संबद्धस्तथाऽप्राणी संबद्धश्चेदित्यर्थः । अत एव 'तस्य चेत्तत्तथायुत'मित्यस्य 'अप्राणिनो ऽपि स्वाङ्गम्' इति भाष्ये दर्शितः ।

पुरस्तादिति । स ह्यनन्तरस्यैव बाधकः । मध्ये इति । स हि पूर्वस्यैव बाधकः । प्रामाणिका इति । एवञ्च 'सुगात्री'इत्यादयो ऽपप्रयोगा एवेति भावः ।

उरः क्रोडेति । टाबन्तो ऽयं स्वभावतो विशेषविषयः ।

शूर्पणखेति । 'पूर्वपदात्संज्ञायाम्' (पा०सू०८।४।३) इति णत्वम् । केवलयौगिकत्वे तु शूर्पनखीत्येव ।

न ङीबिति । अस्वरितत्वादिति भावः ।

इतिशब्द इति । एवञ्च भाषायामिति व्यर्थम् । छन्दसीत्यस्य

---

चाप्यस्य सङ्ग्रहसम्भवे लक्षणान्तरस्वीकारस्य गौरवपराहतत्वादित्याशयेनाह-*एवञ्चेदमिति* । पूर्वलक्षणेनासङ्ग्रहादाह-*प्रतिमादीति* । *अत एव* । तृतीयवाक्यस्याप्राणिविषयकत्वादेव ।

*टाबन्तोऽयमिति* । क्रुड् निमज्जन इति धातोः पचाद्यजन्तादित्यादिः । *विशेषविषयः* । उरोविषयः । एवं सति तेन समासे उपसर्जनह्रस्वत्वेऽदन्तत्वात्प्राप्तिः । क्रोडाशब्दस्य टाबन्तस्य क्रोडादौ पाठाद्भुजान्तरवाची यः क्रोडशब्दः स्त्रीनपुंसकलिङ्गी 'न ना क्रोडम्भुजान्तरम्' इति कोशप्रसिद्धस्तेन समासे ङीष्विकल्पो भवत्येव । कल्याणक्रोडी । कल्याणक्रोडा मयूरीति । *केवलयौगिकत्व इति* । राक्षस्यन्तरसाधारणयोगार्थमात्रविवक्षायाम् । तेन रावणभगिन्यां तस्य योगरूढत्वेऽपि णत्वा संज्ञा विवक्षितेति तत्र णत्वस्य निषेधस्य च प्रवृत्तिरस्त्येव । नान्दीमुख्यो मातर इत्यत्र तु न "नखमुखात्" इत्यनेन निषेधः । तस्य नान्दी कर्मसमृद्धिः । सा मुखम्प्रदेयं यस्यास्ता इत्यर्थात् । कर्मसमृद्धौ मुखशब्दस्य मुखमिव मुखमिति प्रधानत्वात्प्रवृत्तिः । नखमुखात्संज्ञायामित्यत्र संज्ञापदेन पौरुषेयस्य ऐश्वरीयसंकेतातिरिक्तसंकेतस्य ग्रहणम् । नामसु च ऐश्वरसंकेत एवेति नानुपपत्तिः ।

*अस्वरितत्वादिति* । दिक्पूर्वपदादितिसूत्रघटकङीप्पदस्यास्वरितत्वादित्यर्थः । इदञ्च व्याख्यानं वृत्तिकृद्रीत्या वस्तुतस्तु "सख्यशिश्वी" इति सूत्रे भाषायामित्यस्योपादानाच्छन्दसीति स्वरितत्वात् "दिग्"इतिसूत्रे "वाह" इति सूत्रे चानुवर्त्तते एव ।

'दिक्पूर्वपदात्' (पा०सू०४।१।६०) इत्यत्रासंबन्धेनास्वरितत्वादसंबन्धसिद्धेः। परे तु 'दिग्' इति सूत्रे 'वाहः' (पा०सू०४।१।६१) इत्यत्र च 'छन्दसि' इति वर्त्तते। लोके त्वन्तोदात्तमेव। प्राकृ...खीति। एवञ्च तन्निवृत्तिबोधनाय भाषाग्रहणम्, इतिश्चार्थे, ते छन्दस्यपि। अत एव ङेरामिति सूत्रे कैयटे 'सरूपशिश्वी च भाषा'मिति पाठो दृश्यते इत्याहुः।

क्वचिदिति। (१)सर्वविधीनां छन्दसि वैकल्पिकत्वेन 'सखे सप्तपदी भव' इति सिद्धम्। न विद्यते शिशुरस्या इत्यशिश्वी। क्वचिदस्याद्युदात्तत्वन्तु छान्दसत्वात्।

(२)जातिशब्देन अर्थे कार्यासंभवात्तद्वाचकग्रहणमित्याह-जातिवाचीति। अनन्यभावे विषयशब्द इत्याह-न च स्त्रिय नियतामिति। भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तं जाति, नित्यैकमनेकानुगतं सामान्यमित्यस्य च(३)शुक्लादिगुणस्यैकत्वनित्यत्व...

---

एवञ्चाद्युदात्तरूछान्दसमेवेत्याशयेनाह-*परे त्विति*। *अन्तोदात्तमेवेति*। ङीषन्तत्वादिति शेषः। *एवञ्चेति*। तयोः सूत्रयोस्तदनुवृत्तौ च। *तन्निवृत्तिबोधनाय*। छन्दसीत्यस्य निवृत्तिबोधनाय। *अत एव* इतिशब्दस्य चार्थत्वादेव। *क्वचिदस्याद्युदात्तत्वमिति*। 'आधेनवो धुनयन्तामशिश्वीः' इत्यत्रेत्यर्थः।

*जातिशब्देनेति*। करणे तृतीया। *अर्थे*। जातिस्वरूपे। स्व रूपग्रहणन्तु न भविष्यति। स्त्रीविषयत्वात्। लोके जननेन प्राप्यते इति जातिरितिरीत्या जातिशब्दस्य शुक्लादिगुणसाधारण्येन प्रवृत्तिदर्शनात्तस्यैव विवक्षायां गुणेऽतिव्याप्तिः। यदि तन्त्रान्तरप्रसिद्धे भिन्नेष्वित्यादिनित्यमेकमित्यादिलक्षणे वा आश्रीयेते तदापि शुक्लादिगुणानामेकत्ववादिमते तेष्वतिव्याप्तिरिति भाष्यसम्मतं लक्षणमेवसिद्धान्तिसम्मतं युक्तमित्याशयेनाह-*भिन्न इत्यादि*। अभिन्नयोः समानाकारयोः अभि...

---

(१) ननु भाषाछंदसोः समानकक्षत्वेन मूले क्वचिदित्ययुक्तम् इत्यत आह- सर्वविधीनामिति*।

(२) ननु जातिशब्दस्य जातिपरत्वे तद्वाचकशब्दपरत्वं न युक्तम्। तस्य तल्लक्षणायां बीजाभावादिति जातिवाचीति मूलोक्तमयुक्तमित्यतस्तद्वारयति-*जातिशब्देनेति*। अन्यथानुपपत्तिरेवात्र लक्षणाबीजमिति भावः।

(३) शुक्लादिगुणस्येति*। तत्र पक्षे शुक्लादिगुणस्य नित्यैकत्वेन भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तत्वान्नित्यैकानुगतत्वाच्च जातित्वापत्त्योक्तद्वयलक्षणस्यातिव्याप्तिः। तथा सति शुक्लादिशाटीत्यादौ सूत्रेण ङीष् स्यादिति भावः।

त्रातिव्याप्तिः । जननेन प्राप्यते सा जातिरिति च युवत्वादावव्याप्तम-
आह-आकृतीति । ग्रहणमिति करणे ल्युट् सामान्ये नपुंसकम् ।
आकृतिः अवयवसन्निवेशः आकृतिर्ग्रहणं यस्या इति विग्रहस्तदाह-
अनुगतेति । ईदृशाकारो गौरित्याकृत्युपदेशादिव्यङ्ग्या इत्यर्थः । न
(४)च बाल्याद्यवस्थाभेदभिन्नानेकदेहवृत्तिदेवदत्तत्वादेराकृतिव्यङ्ग्यत्वेन
त्रातिव्याप्तमिदमिति वाच्यम् । समानकालिकानेकव्यक्तिवृत्त्यनुग-
तसंस्थानव्यङ्ग्येत्यर्थात्, अवस्थाभेदे ऽपि तद्भेदाप्रतीतेश्च स एवाय-
मिति प्रतीतेश्च, तज्जातीयो ऽयमित्यप्रतीतेश्च। अत एवेन्द्रत्वादिकं न
जातिः । पञ्चेन्द्रोपाख्यानादिभिरनेकेषां समकालिकत्वेऽपि सर्वेषां
संस्थानस्यैकत्वे मानाभावात् । 'दुर्गा' 'अपर्णा' इत्यादौ स्त्रीविषय-
त्वादपि न ङीष् । तटीति । अनुगतसंस्थानव्यङ्ग्यमेतत्, जलस-
मीपदेशविशेषो हि तटम् ।

नन्वेवं वृषलत्वादीनां जातित्वं न स्यात् । अवयवसंस्थानस्य
ब्राह्मणादिसाधारण्येन तस्या आकृतिग्रहणत्वाभावात्, किं तु साक्षादु

---

नप्रत्यययोर्ज्ञानव्यवहारयोर्निमित्तमित्यर्थः । अव्याप्तिमप्याह-*युवत्वा-
दाविति* । *उपदेशादिव्यङ्ग्येत्यर्थ इति* । तादृशोपदेशप्रयोज्योऽयं गौ-
रिति या प्रतीतिस्तद्विषय इत्यर्थः । यद्यपि शास्त्रे जातिरप्याकृतिपदेनो-
च्यते । तथापीहाकृतिपदमवयवसंस्थानपरत्वेन सामर्थ्याद्व्याख्यातम् ।
*अत्रातिव्याप्तमिति* । तस्य संज्ञारूपतया नेष्टापत्तिः कर्तुं शक्या ।
*अवस्थाभेदेति* । तदाश्रयदेहभेदेत्यर्थः । यत्राश्रयाणाम्भेदप्रतीतिस्तत्रैव जाति-
त्वस्वीकारात् । प्रत्युताभेदप्रत्यय एवेत्याह-*स एवेति* । *अत एव* ।
अनुगतसंस्थानव्यङ्ग्यत्वनिवेशादेव । *स्त्रीविषयत्वादपीति* । अपिना
संस्थाभेदेन दुर्गाशरीराणाम्भेदेऽपि तेषां समानकालिकत्वाभावः सूचितः ।
तत्स्वरूपजातौ लक्षणङ्ग्राहयति—*अनुगतेति* ।

नन्विदं लक्षणं वृषलत्वादिजातावव्याप्तमतो लक्षणान्तरमाह--*न-
न्वित्यादिना* । सापेक्षस्थलेऽपि वृत्तिप्रवृत्तौ गमकत्वम्प्रयोजकं तच्च प्र-

---

(४) ननु एकस्मिन्नपि देहे बाल्याद्यवस्थाभेदेन भेदमादायानेकदेहवृत्ति देवदत्तादेरपि जातित्वापत्त्योक्त-
लक्षणस्याप्यतिव्याप्तिमाशंकते-नचेति* । परिहरति-समानेति* । उक्तविधलक्षणे 'समानकालिका-
नेकव्यक्तिवृत्ति' इति विशेषणात् समानकालिकानेकव्यक्तिवृत्तित्वे सति अनुगतसंस्थानव्यङ्ग्यत्वमिति ल-
क्षणे पर्यवसन्ने नोक्त दोषः। अवस्थाभेदेन भेदमादाय देवदत्तादिव्यक्तिभेदेऽपि तासां समानकालिकत्वाभावा-
दिति भावः ।

पदेशगम्या सेत्यत आह—लिङ्गानामिति । इयमपि जातिरित्यर्थः ।
लिङ्गानामिति कर्मणि षष्ठी । सर्वाणि लिङ्गानि न भजति इति स-
शब्दस्य लिङ्गापेक्षत्वेऽपि भाष्यप्रामाण्यात् भजो ण्विः समासश्च । आ-
ख्यातम्—आख्यानम्, उपदेशः । कथनात्—उपदेशात् । एकत्र
इत्युपदिष्टे अन्यत्र तद्ग्रहे मानाभावान्नेन्द्रत्वादि तथा । ब्राह्मणत्व-
एकत्रोपदिष्टे तत्तत्पित्रादिषु सुग्रहम् । वृषलत्वं तदपत्यतत्सहोदरा-
सुग्रहम् । अत्राकृतिग्रहणेति । नित्यानित्यसाधारणमिति युवत्वा-
दिकमपि जातिरेतन्मते । अपर आहेत्यादिना यावद्द्रव्यभावित्वान्नि-
त्यानित्यव्यावृत्तं लक्षणान्तरं भाष्ये दर्शितम् । एवञ्च भिन्नरूपिकर्तृक

---

कृतेऽस्तीत्याह—*भाष्यप्रामाण्यादिति* । अत्रेदम्बोध्यम् । न केवलं
द्वितीयलक्षणमेवाऽभिप्रेतम् । किन्तु प्रथममपि । तेन तटीत्यस्य सिद्धि-
रिति । *उपदेश इति* । ब्राह्मणाद्ब्राह्मण्यामुत्पन्नोऽयमित्यादिरूप-
*तत्पित्रादिष्विति* । ब्राह्मणपित्रादिर्ब्राह्मण एव अत्र तदपत्यादिर्वि-
नोक्तम् । ब्राह्मणेन क्षत्रियादिषूत्पन्नस्यान्यजातीयत्वसम्भवात् । *तद-
स्येति* । अत्र तत्पित्रादिष्विति नोक्तम् । वृषलपितुरन्यजातीयत्वस्या-
सम्भवात् । अत्र भाष्ये 'आकृतिग्रहणा' इत्युक्त्वा 'अपर आह' इत्यादि-
लक्षणान्तरम्प्रणीतमिति तयोर्यद्वैलक्षण्यन्तदाह—*अत्राकृतीति*
*नित्यानित्येति* । नित्यं ब्राह्मणत्वादि । अनित्यं युवत्वादि । *इत्यादि-
नेति* । एवं हि तत्रोक्तम् । 'अपर आह—

प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः ।
असर्वलिङ्गाम्बह्वर्थान्ताञ्जातिं कवयो विदुः ॥

कः पुनरेतयोर्जातिलक्षणयोर्विशेषः । यथा पूर्वलक्षणन्तथा कुमारीभार्य
इति भवितव्यम् । यथोत्तरन्तथा कुमारभार्य इति भवितव्यम्' इति । अ-
कैयटः । 'द्रव्यस्य प्रादुर्भावविनाशाभ्यां या आविर्भावतिरोभावौ प्राप्नो-
ति सा जातिः । जातेर्नित्यत्वान्न साक्षात्तयोर्जातौ सम्भव इत्याशये-
द्रव्यस्य' इत्याद्युक्तम् । नन्विदं यदाश्रयस्योत्पत्तिविनाशौ सम्भवतस्त-
यद्यपि सम्भवति तथाप्यात्मत्वजातौ न सम्भवतीति चेन्न । प्रादुर्भावेत्या-
दिना यावद्द्रव्यभावित्वस्योपलक्षणात् । यावद्द्रव्यभावित्वञ्च स्वाश्रयद्रव्य-
सत्त्वप्रतीतिसमनियतप्रतीतिविषयत्वम् । समनियतत्वञ्च कालिकप्रत्या-
सत्त्या बोध्यम् । *युगपद्गुणैरिति* । गुणैः सहयुगपद्द्रव्येण सम्बध्यते
यथा निर्गुणस्य द्रव्यस्य नोपलम्भस्तथा जातिरहितस्यापीत्यर्थः । देवद-
त्तादिसंज्ञानिरासायाह—*बह्वर्थामिति* । एतन्मते युवत्वादीनां न जाति-

लक्षणद्वयप्रामाण्येन कुमारादिशब्दे जातिकार्यविकल्पः। अत एव 'युवजानिः' इत्यत्र पुंवत्त्वं, युवतितरा' इत्यत्र तदभावश्च भाष्ये उदाहृतः।

नन्वेताभ्यामप्यौपगवी कठीत्यादेरसङ्ग्रहः, अनुगतसंस्थानव्यङ्ग्यत्वाभावात्सर्वलिङ्गत्वाच्चेत्यत आह—गोत्रञ्चेति। शास्त्रीयमत्र गोत्रम्। अत एव "गोत्राद्यूनि प्रत्ययो भवति, "स्त्रियां लुक्" इति न्यासे "औपगवी माणविका" इत्यत्राण् योऽनुपसर्जनमित्यनुपसर्जनलक्षण ङीकारो न प्राप्नोति, मा भूदेवम् अणन्तादनुपसर्जनादित्येवं भविष्यति" इति प्रौढ्या पूर्वपक्षिणोक्ते तदङ्गीकृत्यैव "इह तर्ह्यौपगवीभार्यः, जातिलक्षणः पुंवत्त्वप्रतिषेधो न प्राप्नोति, मा भूदेवं वृद्धिनिमित्तस्ये-

यावद्द्रव्यभावित्वात्। *एतन्मत इति*। प्रथममते इत्यर्थः। न च वृद्धस्थविरादिशब्दात्प्रथमरीत्या जातित्वाज्जातिलक्षणो ङीष् स्यादिति वाच्यम्। अजादिगणे तेषाम्पाठेन ङीषो बाधनात्। ननु पूर्वोक्तलक्षणभेदेन कुमारत्वस्य जातित्वसन्देहात्कथं साधुत्वव्यवस्थेति चेत्, अत्र कैयटः। 'पूर्वोक्तमेव लक्षणम्भाष्यकारस्य मतम्—अपर आहेत्यभिधानादित्याहुः' इति। वस्तुतस्तु लक्षणद्वयप्रणेतृऋषिद्वयप्रामाण्याज्जातिकार्यस्य युवशब्दादौ विकल्प एव। अत एव 'युवजानिर्युवतितरा' इत्यादौ द्विविधमप्यनुष्ठानं भगवत इति।

*सर्वलिङ्गत्वादिति*। "स्त्रीपुंसयोरपत्यान्ता" इत्यमरान्नाडायनन्नपुंसकमिति दर्शनादपत्यप्रत्ययान्तस्य सर्वलिङ्गत्वन्तथा शाखाध्येतृवाचिनोऽपि सर्वलिङ्गत्वं कठः कठी कठं कुलमिति दर्शनादिति भावः। अपत्याधिकारादन्यत्र लौकिकंगोत्रं तच्चापत्यमात्रमित्यभिप्रायेण कैयटेनैतद्वार्तिकव्याख्यावसरेऽपत्यमित्येव व्याख्यातम् अवन्ती कुन्तीत्यनन्तरापत्ये उदाहरणाच्च दीक्षितैरपि तदेवानुसृतन्तन्न युक्तम्भाष्यविरोधादित्याशयेनाह-*शास्त्रीयमत्रेति*। *अत एव*। शास्त्रीयगोत्रग्रहणादेव। *न प्राप्नोतीति*। गोत्ररूपस्यार्थस्य यूनि यः प्रत्ययस्तदर्थे विशेषणत्वात्।

*प्रौढ्येति*। अनुपसर्जनादित्यस्य तदन्तविशेषणत्वेऽनुपसर्जनाधिकारस्यैव वैयर्थ्यं स्यादिति तस्य गृह्यमाणविशेषणत्वमेवेति भावः। *प्रतिषेधो न प्राप्नोतीति*। एतस्य युवप्रत्ययान्तया शास्त्रीयगोत्रे यः प्रत्ययस्तदन्तत्वाभावात्। न च यः प्रत्ययो गोत्रे उत्पन्नस्तदन्तत्वमस्त्येवेति वाच्यम्। अणन्तादनुपसर्जनादिति भाष्यस्य यः प्रत्ययो यून्युत्पन्नो लुप्तश्च तमाश्रित्यैव प्रवृत्ततया तं प्रत्ययमाश्रित्य जातित्वं वाच्यमिति

त्येवं भविष्यति । एवन्तर्हि ग्लुचुकायनीभार्ये दोषः" इति "एको गोत्रे" (पा०सू०४।१।९३) इति सूत्रस्थभाष्ये युवापत्यत्वस्य जातित्वाभावकथनं सङ्गच्छते । अन्यथा जातिलक्षणङीष एव परत्वादुक्तपुंवत्त्वं, पुंवत्त्वप्रतिषेधो न प्राप्नोतीत्यसङ्गतिश्च । ग्लुचुकायनीभार्ये दोषस्तु ङीष्पुंवत्त्वप्रतिषेधयोरसिद्धिरूपो बोध्यः । 'सर्वतोऽक्तिन्नर्थात्' (ग० वा०) इति ङीषि तु पुंवत्त्वप्रतिषेधासिद्धिरेव दोषः। अत एव "ब्राह्मोऽजातौ" (पा०सू०६।४।१७१) ति सूत्रेऽपत्ये जातौ नेत्यर्थः सङ्गच्छते । तव त्वपत्यस्य जातित्वाव्यभिचारात्तदसङ्गतिः 'ब्राह्मो नारदः' इत्यसिद्धिः । अतः सामर्थ्येनात्र शास्त्रीयगोत्रस्यैव ग्रहीतुमौचित्यम् । अनन्तरापत्यप्रत्ययान्ते 'अवन्ती' इत्यत्र जातिप्रयुक्तो ङीषिति 'अनुपसर्जनात्' (पा०सू०४।१।१४) इति सूत्रभाष्ये त्वनन्तरेऽश्वत्थाम्नि द्रोणायनिवद्गोत्रत्वारोप इत्यभिप्रायेण । यूनि तु न शास्त्रीयगोत्रत्वारोपः, तत्र युवैव न गोत्रमिति नियमेन तत्संज्ञानिषेधात्, तदाह—अपत्यप्रत्ययान्त इति । 'अपत्यं पौत्रप्रभृति' (पा०सू०४।१।१६२) इति परिभाषित इति शेषः । शाखाङ्गोत्रेति । षष्ठीतत्पुरुषः, । शाखायामस्त्रीविषयत्वाभावात् । जातिकार्य

---

भावः । *मा भूदेवम* । जातेश्चेति प्रतिषेधो मा भूदित्यर्थः । *ग्लुचुकायनीति* । प्राचामवृद्धादिति फिन्नन्तमेतत् । *अन्यथा* । अपत्यप्रत्ययमात्रग्रहणे । *असङ्गतिश्चेति* । जातित्वसद्भावाज्जातेश्चेति निषेधप्राप्तेरगरूकत्वात् ।

स्वसिद्धान्तरीत्याह-*ग्लुचुकायनीभार्यें दोषस्त्विति* । *अत एव* अपत्यविशेषस्य गोत्रशब्देन ग्रहणादेव । व्याख्यानासङ्गतिमुक्त्वा रूपासिद्धिमप्याह-*ब्राह्मो नारद इत्यसिद्धिरिति*। एतस्यानन्तरापत्यप्रत्ययान्तत्वेऽपि जातित्वसत्त्वेनाजाताविति निषेधः स्यादिति भावः । *सामर्थ्येन* । औचित्येन । अथवा अपत्यस्य जाताविति विशेषणसामर्थ्येन । अनुपसर्जनादितिसूत्रभाष्यविरोधम्परिहरति-*अनन्तरापत्येति* । नन्वेवं रीत्या "गोत्रात् युनि" इतिसूत्रस्य लुग्विधायकत्वपक्षीयम् "एको गोत्र" इति सूत्रस्थभाष्यमपि सुयोजमत आह-*यूनि त्विति* । *अस्त्रीविषयत्वाभावादिति* । एवञ्च शाखायां ङीषोऽभावे टापि 'कठा शाखा' इति कर्मधारयसमासाभावे भवति । कर्मधारयसमासस्य प्रवृत्तौ तु पुं

लभते इति । अनेनाऽस्यातिदेशत्वं बोधयति । कठेन प्रोक्तमधीते इति । वैशम्पायनान्तेवासित्वात्प्रोक्तार्थणिनेः "कठचरकात्" (पा० सू०४।३।१०७) इति लुक् । अध्येतृणः प्रोक्ताल्लुक् । बह्वयो ऋचो अध्येतव्या यस्या इति विग्रहे 'ऋक्पूः' (पा०सू०५।४।७४) इत्यप् समासान्तः । स्त्रिया अध्ययनाभावेऽपि तद्वंश्यत्वात्ताच्छब्द्यम्, यथा अनधीयाने माणवके । 'ब्राह्मणी' इत्यत्रापत्ये ऽणि 'ब्राह्मोऽजातौ' (पा०सू०६।४।१७१) इत्युक्तेष्टिलोपाभावः ।

परे तु आकृतिग्रहणेत्येव लक्षणम् आकृतिपदमुपदेशोपलक्षणम् । आकृतिद्वारा साक्षाद्वोपदेशेन ग्राह्या जातिरित्यर्थः । तत्रेदृशाकारो गौरित्याकृत्युपदेशग्राह्या गोत्वादिजातिः, 'अयं ब्राह्मणः' इति साक्षादुपदेशग्राह्या ब्राह्मणत्वादिजातिः । यद्वा आकृतिग्रहणं जातिग्राहकोपदेशस्याप्युपलक्षणम्, 'लिङ्गानाञ्च न सर्वभाक्' इति तत्स्वरूपानुवादकम्, तेन शुक्लादिगुणानामेकत्वे ऽपि जातित्वाभावो बोधितः । अत एव 'विशेषणानाञ्च' (पा०सू०१।२।५२) इति सूत्रे जातेराविष्टलिङ्गत्वं भाष्ये उक्तम् । आविष्टलिङ्गत्वं नियतलिङ्गत्वमिति कैयटः ।

---

ज्ञाचेन कठशाखेत्येव प्रयोगः । केचित्तु कठशब्दस्य प्रोक्तार्थकणिन्यन्तस्य शाखायां प्रवर्त्तमानस्य योगार्थमादाय कल्पादिसाधारणतयाऽस्त्रीविषयत्वात्कठी शाखेति समासाभावे भवतीत्याहुः । अध्येत्रर्थकाणन्तस्य स्त्रियामप्रवृत्तिमुपपादयति-*स्त्रिया इति* ।

स्वीयसिद्धान्तमाह-*परे त्विति* । *उपदेशोपलक्षणमिति* । एवञ्चोपदेशग्राह्या जातिरित्येव सिद्धम् । उपदेशग्राह्यत्वञ्च द्वाभ्यां प्रकाराभ्याम् । यद्वेति पक्षे तु उपदेशाकृत्यन्यतरग्राह्येति लक्षणम् । *लिङ्गानामिति* । शास्त्रीयं लिङ्गं जातिरूपार्थेऽपि सम्भवतीत्याशयेनेदम् । *तत्स्वरूपेति* । जातिस्वरूपेत्यर्थः । *तेन* । तादृशस्वरूपानुवादेन । न चानुवादमात्रेणातिव्याप्तिर्वारयितुं न शक्यत इति वाच्यम् । विशेषणतयैतदंशप्रवेशस्याभिप्रेतत्वात् । एवं सत्याकृतिग्रहणेत्येवेत्येवकारेण द्वितीयलक्षणकरणं व्यवच्छिद्यते । न त्वसर्वलिङ्गत्वे सतीति विशेषणमिति बोध्यम् । *अत एव* । जातावपि लिङ्गसम्बन्धसम्भवादेव ।

ननु यदा लक्षणद्वैविध्यन्तदा आद्यस्य द्वितीयलक्षणाप्राप्तप्रापणार्थं तथा तटास्त्रिषु, इतिकोशबलेन तटशब्दस्य सर्वलिङ्गत्वेऽपि जातिकार्यं सिध्यति । एकलक्षणत्वे त्वसर्वलिङ्गत्वे सतीति विशेषणदाने न प्राप्नोती-

तच्च प्रायिकमिति केचित् । भाष्यप्रामाण्याज्जातेरेकशब्दवाच्याया न त्रिलिङ्गता, 'तटं त्रिषु इत्यादिकोशकृतां प्रमाद इत्यन्ये । 'सकृदाख्यातानिर्ग्राह्या' इत्यनेनैकत्वमनेकानुगतत्वञ्च बोधितम् । सकृदेकवारं क्वचिद्व्यक्तौ साक्षादाकृतिद्वारा वोपदिष्टा व्यक्त्यन्तरे ग्रहीतुं शक्येति तदर्थः । गोत्रञ्चेत्यादि प्राग्वदेव । अत एव—

प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः ।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः' इति ॥

लक्षणान्तरं भाष्ये उक्तम् । सत्त्वस्य—द्रव्यस्य प्रादुर्भावविनाशाभ्यां या तौ प्राप्नोति सा जातिरिति लक्षणम् । यावद्द्रव्यभाविनीति तदर्थः । अनेन गोत्वब्राह्मणत्वाद्योरुभयोरपि सङ्ग्रहः । गुणैर्युगपद्द्रव्येण संबध्यते, यथा निर्गुणस्य द्रव्यस्य नोपलम्भस्तथा जातिराहितस्यापीत्यर्थ इति कैयटः । इदं स्वरूपकथनमेव । अत्र लक्षणे ऽसर्वलिङ्गामित्येतन्मदुक्तार्थकमेव, न तु लक्षणान्तरम् । अनुपयोगात् । बह्वर्थाम्—सर्वव्यक्तिव्यापिनीमित्यर्थः । एतदेकवाक्यतया पूर्वलक्षणेऽपि मदुक्तव्याख्यैवोचिता । अत एव 'कः पुनरेतयोर्जातिलक्षणयोर्विशेषः । यथा पूर्वलक्षणं तथा कुमारीभार्य इति भवितव्यं, यथोत्तरं तथा कुमारभार्यः" इति भाष्ये लक्षणमित्येकवचनमेव प्रयुक्तम् । अत

---

त्यत आह—*तच्च प्रायिकमितीति* । *केचित्* । प्राञ्चः । विशेषणस्य लिङ्गानामित्यस्याभावेऽपि क्वचिज्जातित्वमिति तेषां भावः । स्वसिद्धान्तमाह—*भाष्येति* । ननु कोशस्य का गतिरत आह—*तटमिति* । सकृदित्यंशान्तरप्रयोजनमाह—*सकृदिति* । *एकत्वमनेकानुगतत्वमिति* । एतेन जातिलक्षणयोग्यतादर्शिता स्वरूपानुवादेन । वस्तुतः पूर्वदेतदपि विशेषणं तेन देवदत्तत्वादेर्व्यावृत्तिः । समानकालिकानेकेत्यस्य निवेशोऽपि पूर्ववत् । *प्राग्वदेव* । अतिदेश एव । *अत एव* । आकृतिग्रहणेत्यादेः पूर्वोक्तार्थाङ्गीकारादेव । *अनेन* । एकलक्षणेन ।

गुणैर्युगपत्सम्बध्यत इत्युक्ते केनेत्याकाङ्क्षाशान्तये आह—*द्रव्येणेति* । गुणैरिति प्रकृत्यादित्वात्तृतीया । तेनैककाले इत्यर्थकेन युगपच्छब्देन योगेपि न क्षतिः । द्रव्येणेति तु सहार्थयोगे तृतीया । लक्षणान्तरत्वभ्रमं निराचष्टे—*अत्र लक्षण इति* । *अत एव* । पूर्वोक्तस्याप्येकलक्षणत्वादेव । एकवचनमेवेत्यनेन स्वव्याख्यादृढीकरणम् । *अत एव* । पूर्वस्मै

एवाकडारसूत्रशेषे 'आकृतिग्रहणा जातिः' इत्येवोक्तं भाष्ये इत्याहुः ।

बलाकेति । अयञ्च बिसकण्ठिकापदवाच्यजातिविशेषवाची । एष च बकत्वव्याप्योऽन्यो वेत्यन्यदेतत् । (१)अस्त्रीविषयादित्यस्य प्रवृत्तिनिमित्तैक्ये लिङ्गान्तररहिताभिन्नादित्यर्थः । एतेन बलां कायतीति यौगिकस्य सर्वलिङ्गत्वाद्

बलाका बकपङ्क्तिः स्याद् बलाका बिसकण्ठिका ।

बलाका कामुकी प्रोक्ता बलाकश्च बको मतः' ॥

इति कोशे पुँल्लिङ्गस्याऽप्यभिधानाच्च नेदं युक्तमित्यपास्तम् । अत एव "पाककर्ण" (पा० सू० ४।१।६४) इति सूत्रं चरितार्थम् । तद्धि स्त्रीविषयार्थम् । अन्यथा तेषामपि यौगिकेऽर्थे लिङ्गान्तरसंभवेन पूर्वेण सिद्धे तद्वैयर्थ्यं स्पष्टमेव ॥

पाककर्ण (पा० सू० ४।१।६४) जातिवाचिनः किम् ? बहुपुष्पा शाखा । स्त्रीविषयादपीति । अजात्यर्थन्तु न, प्राक्पुष्पादिषु जातिवचनेषु नित्यस्त्रीलिङ्गेषु 'सदच्काण्ड' इत्यादिनिषेधात् । योपधादपीति । पुनर्जातिग्रहणादिति भावः । अस्त्रीविषयादिति तु

---

कलक्षणत्वादेव । *एतेन* । अस्त्रीविषयादित्यस्य पूर्वोक्तार्थकरणेन । *अपास्तमिति* । सर्वत्र विसकण्टिकात्वजातेः प्रवृत्तिनिमित्तत्वाभावात् नानुपपत्तिरिति भावः । *अत एव* । अस्त्रीविषयादित्यस्य पूर्वोक्तार्थाश्रयणादेव ।

*बहुपुष्पेति* । यौगिकोऽयम् । न तु जातिप्रवृत्तिनिमित्तकः ननु पाककर्णेतिसूत्रस्याप्राप्तप्रापणार्थतयाऽजात्यर्थमेतत्सूत्रमित्यपि वक्तुं युक्तमत आह-*अजात्यर्थन्त्विवति* । *निषेधादिति* । तस्य ङीष्बाधनार्थमारम्भात् । एतच्चास्मिन्नेव सूत्रे वार्त्तिककृता पठितम् । तच्च भाष्यकृता "सदच्काण्डप्रान्तशतैकेभ्यः प्रतिषेधो वक्तव्यः" इति व्याख्या-

---

(१) नन्वस्त्रीविषयादित्यस्य मूलोक्तं बलाकेति प्रत्युदाहरणमयुक्तं, स्त्रीविषयस्य तस्य जातिवाचकत्वाभावादेवाऽप्राप्तेरित्यत आह *अयञ्चेति* ।

नन्वेवमपि बलां कायतीति यौगिकस्य बलाकाशब्दस्य लिङ्गान्तरेऽपि सत्वात् "बलाका कामुकी प्रोक्ता बलाकश्च बको मतः" इति कोशे पुँल्लिङ्गस्याप्यभिधानाच्चास्त्रीविषयत्वस्य सद्भावात्प्रत्युदाहरणासङ्गतिस्तदवस्थेत्यत आह—अस्त्रीविषयादित्यस्येति* । प्रवृत्तिनिमित्तभेदेन लिङ्गान्तरसद्भावेऽपि प्रवृत्तिनिमित्तैक्ये लिङ्गान्तरासद्भावान्नोक्तदोष इति भावः ।

शङ्कानिरासस्य फलं दर्शयति—एतेनेति* ।

पूर्वसूत्रेण विच्छिन्नम् । तित्तिरिरिति ।

स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगाः'

इत्यमरादयं स्त्रियामपीति भावः । इतः किम् ? दरत् । 'द्व्यञ्मगध' (पा०सू०४।१।७०) इत्यणो 'अतश्च' (पा०सू०४।१।७७) इति लुक् ॥

ऊङुतः (पा०सू०४।१।६६) । ङकारो "नोङ्धात्वोः" (पा०सू० ६।१।१७५) इति विशेषणार्थः । अन्यथा 'यवाग्वा' इत्यादावपि निषेधः स्यात् । दीर्घोच्चारणं प्रश्लेषेणोकारद्वयविधानद्वारा 'ब्रह्मबन्धूः' इत्यादिबहुव्रीहौ परकप्निवृत्त्यर्थम्, रूपाणां सवर्णदीर्घेण सिद्धेरिति भाष्ये स्पष्टम् । श्वश्रूरिति तु 'श्वशुरःश्वश्र्वा' (पा०सू०१।२।७१) इति

---

तम् । एवं व्याख्याने योपधादित्यस्य सूत्रे श्रवणेन योपधप्रतिषेधे गवय-येत्यादिना प्रतिप्रसवसूचनेन कृतम् । यदीदं सूत्रमजात्यर्थमित्येव स्यात्तदा अस्त्रीविषयादित्यस्य प्रकृतसूत्रेऽपि सम्बन्धात्पूर्वसूत्रस्यास्य चाप्राप्तेरद-न्तत्वादेव टापि सिद्धे तदारम्भो व्यर्थः स्यादिति भावः । इदमेव च वार्त्तिकमजायत इति सूत्रव्याख्यानावसरे मूले उपनिबद्धम् ।

*पूर्वसूत्रेण* । पाककर्णेत्यनेन । ननु "तित्तिरिः ककुभो लावः" इति कोशे ककुभशब्दसाहचर्यात्पुंस्त्वनिर्णयसम्भवान्नास्य स्त्रीत्वमत आह- *स्त्रीपुंसयोरिति* । इदमुपलक्षणम् । नपुंसकत्वस्यापि । 'नाडायनं नपुंसक'मितिकोशस्यौपगवकुलमिति प्रयोगस्य च दर्शनात् ।

*अन्यथा* । नोङ्धात्वोरितिसूत्रेऽपि ङकारानुच्चारणे । ननु ह्रस्वोकारादुङ्विधानमेवास्तु सवर्णदीर्घेण रूपासिद्धेरत आह-*दीर्घोच्चारणमिति* । *बहुव्रीहाविति । ब्रह्म वेदो बन्धुषु यस्या इत्यर्थः । *भाष्ये स्पष्टमिति* । तत्र हि किमर्थो ङकारः । विशेषणार्थः । नोङ्धात्वोरिति । नोधात्वोरित्युच्यमाने यवाग्वा यवाग्वै इत्यत्रापि प्रसज्येत । अथ दीर्घोच्चारणं किमर्थम् । ब्रह्मबन्धूः । वीरबन्धूः । नद्यृतश्चेति कप् प्रसज्येत । नैष दोषः । नद्यन्तानां यो बहुव्रीहिरित्यवं तत् । न चैष नद्यन्तानाम्बहुव्रीहिः । शेषलक्षणस्तर्हि कप् प्राप्नोति । तस्माद्दीर्घोच्चारणङ्कर्त्तव्यम् । अत्र कैयटः । 'उकारद्वयन्दीर्घेण निर्दिष्टम् । तत्र द्वितीय उकारः परत्वाद्बाधकस्य शेषलक्षणस्य कपो बाधनार्थमिति भावः' ।

ननु यद्येक एवोकारो विधीयते तदा श्वशुरस्योकाराकारलोपश्चेत्यत्र नोङि कृते श्वश्रूरित्यस्य सिद्धिर्न स्यादत आह-*श्वश्रूरिति त्विति* ।

निर्देशात्सिद्धम् । कुरूरिति । एकादेशस्य पूर्वान्तवत्त्वात्स्त्रादयः । अध्वर्युरिति । अध्वर्युशाखाध्यायिवंशोद्भवेत्यर्थः । रज्ज्वादीति । उत इति तु नेह सम्बध्यते । 'अलाबूः' इति भाष्योदाहरणादिति भावः । 'कृकवाकुः' इत्यत्र(१) मनुष्यजातित्वाभावात्पूर्वेणापि न ।

पङ्गोश्च (पा०सू०४।१।६८) । पङ्गुशब्दो गुणवाचीति पूर्वेणाप्राप्तिः । श्वशुरस्येति । श्वश्रूवेति निर्देशादन्त्याकारस्य लोपः । तन्निर्देशासिद्धमेवैतत् । भाष्ये त्विदं न दृश्यते 'ङ्याप्' (पा०सू०४।१।१)इति सूत्रस्थभाष्यस्वरसस्त्वयमनूङन्तोऽव्युत्पन्नं प्रातिपदिकमिति ।

ऊरूत्त (पा०सू०४।१।६९) । उपमीयते ऽनयेत्युपमा उपमानं, तद्भाव औपम्यम् उपमानत्वम् । एवं च तद्बोधकोरूत्तरपदादित्यर्थः ।

---

*सिद्धमिति* । तथा च तादृशनिर्देश एव तादृशरूपसाधको न तु तदर्थं वचनान्तरमिति भावः । ननु स्त्रिया वेदाध्ययनेऽधिकाराभावादध्वर्युरित्यसङ्गतमत आह-*अध्वर्युशाखेति* । यच्छाखाध्ययनेनाध्वर्युत्वम्भवति तच्छाखाध्यायिवंशोद्भवेत्यर्थः । उत इत्यस्य सम्बन्धेऽलाबूशब्दाद्दीर्घान्तान्न स्यादत आह-उतइतीति* । *अलाबूरितीति* । ऊङि सत्यलाब्वेत्यत्र नोङ्धात्वोरिति विभक्त्युदात्तत्वप्रतिषेधः सिद्धो भवति।

*गुणवाचीतीति* । न तु जातिवाचीति शेषः । श्वशुरशब्दावयवाकारस्यालोपाशङ्कानिवारणायाह—श्वशुरः श्वश्वेतिनिर्देशादिति* । *ङ्याप्सूत्रस्थभाष्यस्वरसस्त्विति* । तत्र हि ङ्याप्ग्रहणं किमर्थं न प्रातिपदिकादित्येव सिद्धम्' इति प्रश्नेः 'प्रत्यय इति प्रातिपदिकसंज्ञाप्रतिषेधः प्राप्नोति' इति समाधाने 'एवं सति त्यूङ्ग्रहणङ्कर्त्तव्यम्' इति पुनः प्रश्ने 'तिप्रत्ययस्य तद्धितत्वात्सिद्धम्' इति समाधाय 'ऊङन्तादपि पूर्वान्तवद्भावेन सिद्धम्' इत्युक्तम् । श्वश्रूशब्दो यद्यूङन्तः स्यात्तदा तदर्थमूङ्ग्रहणस्यावश्यकत्वेन भाष्ये तस्यानुक्तत्वेन न्यूनतापत्तिरतोऽयमव्युत्पन्न इति कल्प्यत इति ।

ऊरूत्तरपदादित्यधिकारप्राप्तप्रातिपदिकविशेषणमूरूत्तरपदादिति बहुव्रीहिः "औपम्ये" इति सप्तम्यर्थो वाचकत्वम् । पूर्वपदस्योपमानवचात्वे समुदायस्यौपम्यवाचकत्वसम्भव इत्याशयेनाह-*उपमीयत इत्या-

---

(१) ननु प्राणिजातेरित्यस्य कृकवाकुरिति मूलोक्तं प्रत्युदाहरणं न युक्तम् "ऊङुतः" इत्यनेन तत्सिद्धत्वादित्यत आह—कृकवाकुरित्यत्रेति* ।

उत्तरपदाक्षिप्तं पूर्वपदं प्रत्यासत्त्योपमानवाच्येव। अतः 'करभोपमोरूः' इत्यत्र न, तदाह-उपमानवाचीति। करभेति। मणिबन्धादाकनिष्ठं करबहिर्भागः करभस्तद्वदूरू यस्या इत्यर्थः।

उपचारादिति। शफशब्दप्रवृत्तिनिमित्तस्योरूपदार्थे आरोपादित्यर्थः। एवञ्च समासस्योपमानोपमेयभात्राबोधकत्वेन न पूर्वसूत्रप्राप्तिस्तदारोपे च स निमित्तमित्यन्यदिति भावः।

ननु सहशब्दग्रहणं व्यर्थं सर्वस्योरुमत्त्वेन सहशब्दप्रयोगस्य तत्समभिव्याहारे व्यर्थत्वेन सहोरूरिति प्रयोगस्यैवाभावादत आह-सहेते इति। रतिश्रममिति शेषः। सह विद्यमानावूरू यस्या इत्यर्थ इति कैयटः। अतिरमणीयावित्यर्थं इति तदाशयः, कमलानि कमलानीतिवत्। (१)

कद्रुरिति। नागमातुः संज्ञा। अच्छन्दोऽर्थमिति। छन्दा

---

दि*।*अतः*। उपमानवाचकस्य पूर्वपदस्य ग्रहेणन। *करभोपमोरूरित्रेति*। अत्र पूर्वपदस्योरुशब्दसामानाधिकरण्येनोपमानवाचकत्वाभावः स्पष्ट एव। यतः पूर्वपदस्योपमानवाचकस्य विवक्षाऽत एवोत्तरपदग्रहणं चरितार्थम्, अन्यथोर्वन्तादित्येव वदेत्। उपचारो लक्षणा सा च शक्यतावच्छेदकारोपात्मिका तदाह-*शफशब्देति*। *स निमित्तमिति*। स उपमानोपमेयभावः।

*सहेते इतीति*। एवञ्च सहशब्दः सौत्रः क्रियाशब्दो, न तु साहित्यवाचीत्युक्तम्भवति। मूलोक्तं यद्वेति द्वितीयार्थकल्पनमेव समूलमित्याशयेनाह-*सह विद्यमानाविति*। सर्वस्यापि विद्यमानोरुमत्त्वेन विशेषणवैयर्थ्यशङ्कानिवारणायाह-*अतिरमणीयावित्यर्थ इति*। तत्र दृष्टान्तमाह-*कमलानीति*। "तदा जायन्ते ते गुणा यदा सहृदयैर्गृह्यन्ते रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि"। अत्र च शुद्धकमलत्वमुद्देश्यतावच्छेदकम्। शोभादिगुणयुक्तकमलत्वावच्छिन्नस्य विधेयत्वमिति नोद्देश्यतावच्छेदकाविधेयतावच्छेदकयोरेकत्वाच्छाब्दबोधानुपपत्तिरिति।

---

(१) ताला जाअन्ति गुणा जाला ते सहिअए हि घेप्पन्ति।
रइ किअणाणुगाहि आइं होंति कमलाइं कमलाइं॥

—अस्य संस्कृतम् टीकास्थं बोध्यम्।

अत्र पुनरुक्तकमलशब्दः सौरभादिगुण विशिष्टेऽर्थे संक्रामितः सौरभातिशयं द्योतयति। इदं ध्वनेः स्यार्थस्योदाहरणं काव्यप्रकाशे स्पष्टम्।

"कद्रुकमण्डल्वोश्छन्दसि" (पा०सू०४।१।७१) इत्यनेनैव सिद्धि-रिति भावः।

अञो य इति। शार्ङ्गरवादीति लुप्तपञ्चम्यन्तम्, अञ इति च ञो। अनुपसर्जनादिति विभक्तिविपरिणामेनास्य विशेषणम्, एवं 'टिड्ढा' (पा०सू०४।१।१५) इत्यत्रापि सुवचम्। तद्वदत्र पञ्चम्यन्त-त्वमपि सुवचम्। अञो योऽकार इत्यपि पाठः क्वचित् शार्ङ्गरव्यां जाति लक्षणे ङीषि प्राप्ते वचनम्। अणि आदिवृद्ध्योर्गुणौ। पुत्रशब्दोऽत्र प ठ्यते तस्य पाठसामर्थ्याज्जातित्वाभावे ऽपि ङीन्।

नृनरयोरिति। यद्यपि 'नारी' इति नृशब्देन सिद्धं, 'नरी' इति तु पुंयोगे ङीषा दुर्वारं, जातिग्रहणानुवृत्त्या तत्रास्याप्रवृत्तिरिति नरग्रहणं व्यर्थं, तथा ऽपि नरत्वजातिमात्रप्रतिपिपादयिषायां नरीति व्यावृत्त्य-र्थं तद्ग्रहणम्। अत्राद्याकारस्यैव वृद्धिर्लक्ष्यानुसारिव्याख्यानात्।

---

लोके कद्रूरिति कस्य बोधकमत आह-*नागमातुरिति*। कमण्डलु-शब्दश्च चतुष्पाज्जातिवचनः। अत एव "चतुष्पाद्भ्यो ढञ्" इति सूत्रस्य कामण्डलेय इत्युदाहरणसङ्गतिः, पात्रवाचि तु न स्त्रीलिङ्गः।

अञ इत्यस्याकारविशेषणत्वं शार्ङ्गरवादेस्तु नेति द्वन्द्वानुपपत्तिरत आह *शार्ङ्गरवादीति*। *अस्य*। अञ इत्यस्य। *एवं टिड्ढेत्यत्रापीति*। तस्य षष्ठ्यन्तत्वेऽनुपसर्जनादितिविभक्तिविपरिणामेन तद्विशेषणम्। विनिगमनाविरहादाह—*तद्वदत्रेति*। अञोऽकारविशेषणत्वे फलम् शूर-सेनीति। जनपदशब्दादित्यञोऽतश्चेति लुकि जातिलक्षणो ङीष्। तेना-न्तोदात्तं पदम्। शार्ङ्गरव्याः साधुत्वमाह—*अण्यादीति* शृङ्गरुशब्दादप-त्येऽणि आदिवृद्ध्योर्गुणेऽणन्ताच्छृङ्गरुशब्दप्रकृतिकात् ङीप्युदात्तनिवृ-त्तिस्वरेणान्तोदात्तत्वम्। यदि तु गोत्रेऽण् तदा जातिलक्षणो ङीष् पर-त्वात् ङीपम्बाधित्वा स्यात्तथापि प्रत्ययस्वरेणान्तोदात्तत्वमेव स्यादतो ङीनाद्युदात्तत्वसिद्ध्यर्थं विधीयत इति। *सामर्थ्यादिति*। पुत्र-शब्दस्य पाठसामर्थ्यादित्यर्थः। "नृनरयोः" इतिगणसूत्रे नरशब्दोपादा-नस्य प्रयोजनं वक्तुं शङ्कते—*यद्यपीति*। नरीति प्रयोगनिवृत्तिरेव प्र-योजनमस्त्वित्यत आह—*नरीति त्विति*। जातिमात्रेति*। अत्र मात्रपदेन पुंयोगव्यावृत्तिः। पुंयोगे तु नरीतीष्यत एव। अत एव 'किन्नरीणां नरी-णाम्' इति प्रयोगोपपत्तिः। नरशब्दान्त्याकारस्य लोपेनापहारेऽलोन्त्य-परिभाषयाऽन्त्यस्य रेफस्य वृद्धिः स्यादत आह—*अत्राद्येति*। *व्या-ख्यानादिति*। नरः अः नरः कतन्तवत्पररूपम्। ना च नरश्चेति द्वन्द्व

वस्तुत इदं गणसूत्रमनार्षम् । 'नुर्नरस्य च धर्म्या नारी' इति 'ऋतो ऽञ्' (पा०सू०४।४।४९) इति सूत्रेण 'नरस्य चेति वक्तव्य' मिति वार्त्तिकेन चाद्युदात्तनार्याः सिद्धेः । रूढ्या योग्यतया तद्धर्म्या नरस्त्रजातिविशिष्टैव बुद्ध्यते । अत एव 'वसेस्तव्यत्कर्त्तरि णिच्च' इति वचनं वास्तुनि भवो 'वास्तव्यः' इति दिग। दित्वात्संसाध्य प्रत्याख्यातं भाष्ये । नित्यानां शब्दनां यथाकथंचिदन्वाख्यानं कार्यमिति कैयटः। रूढ्या सर्वदोषपरिहार इति तदाशयः ॥

यङश्चाप् (पा०सू०४।१।७४) पकारो 'याडापः' (पा०सू०७।३।११३) इत्यत्र सामान्यग्रहणार्थः । चकारस्य व्यनुबन्धकत्वसम्पादनद्वारा सामान्यग्रहणाविघातकत्वेन चारितार्थ्ये ऽपि 'आम्बष्ठ्या' 'आवट्या' इत्यादौ परत्वाच्चित्स्वरः पित्स्वरं बाधते इति बोद्ध्यम्।

षाद्यञ इति । एवञ्च गौकक्ष्यशब्दस्य गर्गादियञन्तस्योदीचां मतेनैव चापः सिद्धेः स क्रौड्यादिषु न पाठ्यः । संप्रसारणन्तस्य नेष्टमिति स्पष्टं भाष्ये ॥

---

इति व्याख्यानादित्यर्थः । * अनार्षमिति* । तत्रादर्शनात् । आद्युदात्तरूपस्य तर्हि कथं सिद्धिरत आह—*नुर्नरस्य चेति* । योगार्थमादायान्यत्रास्य प्रवृत्तिं वारयति—*रूढ्येति* । *अत एव* । रूढिस्वीकारे ऽर्थभेदाभावादेव ।

*उदीचाम्मत इति* । प्राचाम्मते ष्फस्य सत्त्वादाह—*उदीचाम्मत इति* । *सः* । गौकक्ष्यशब्दः । *न पाठ्य इति* । ष्यङ्प्रत्ययस्य पाठे भवति ततो यङश्चाबितिचाप् जायते स चाबधुना 'षाद्यञ' इत्यनेन सिद्ध इति भावः । ननु गौकक्षीपुत्र इत्यत्र "ष्यङः सम्प्रसारणम्" इति सम्प्रसारणन्न स्यादित्यत आह—*सम्प्रसारणन्त्विति* । *नेष्टमिति* । तदुक्तम्भाष्ये । 'षाद्यञश्चाप् वक्तव्यः । शार्कराक्ष्या । पौतिमाष्या' । गर्गादियञन्ता एते' इति कैयटः । 'तत्रायमाप्यर्थः । गोकक्ष्यशब्दः क्रौड्यादिषु पठ्यते स न पठितव्यो भवति । यदि न पठ्यते गौकक्षीपुत्र इति सम्प्रसारणञ्च प्राप्नोति । इष्टमेवैतत्सङ्गृहीतम् । गौकक्ष्यापुत्र इत्येव भवितव्यम् । एवं हि सौनागाः पठन्ति ष्यङः सम्प्रसारणे गौकक्ष्यायाः प्रतिषेध इति' । इयञ्च सौनागानामुक्तिस्तत्र गौकक्ष्यशब्दस्य पाठसत्त्वे बोध्या ।

नन्वस्य तद्धिताधिकारस्योत्तरार्थत्वे इहकरणं व्यर्थमत आह—

यूनस्तिः (पा०सू०४।१।७७)। 'ऋन्नेभ्यः' (पा०सू०४।१।५) इति ङीपोऽपवादः । उत्तरार्थ इति । इह करणं तदनित्यत्वज्ञापनार्थमिति केचित् ॥

इति स्त्रीप्रत्ययाः ।

'स्वौजसमौट्' (पा०सू०४।१।२) इति विहितस्वादीनामर्थविशेषव्यवस्थां दर्शयितुमाह–प्रातिपदिकार्थेति । इदमपि सूत्रं क्रियायोग एव प्रवर्त्तते, अन्ततोऽस्तिक्रियायाः सर्वत्र सत्त्वात् । आख्यातार्थकर्त्रादिना ऽभेदान्वयेन तद्द्वारकः क्रियायोगो बोध्यः । प्रथमार्थस्यापि क्रियाजनकत्वादस्याः कारकविभक्तित्वेन भाष्ये व्यवहारः ।

ननु कृष्णादिशब्देषु लिङ्गस्यापि प्रातिपदिकार्थत्वाल्लिङ्गग्रहण-

---

ति* । *केचिदिति* । घटघटीग्रहणेनैव तदनित्यत्वस्य सिद्धेरिदमपि प्रयोजनमन्यथा सिद्धमित्यरुचिः ॥

॥ इति स्त्रीप्रत्ययप्रकरणव्याख्यानम् ॥

ज्ञानानन्दमयन्देवं जानकीवल्लभं विभुम् ।
आधारं सर्वविद्यानां श्रीरामं समुपास्महे ॥ १ ॥

अथ स्त्रीप्रत्ययानाम्प्रातिपदिकप्रकृतिकत्वात् स्वादीना मपि तथात्वात्तेषामपि निरूपणमावश्यकमिति प्रसङ्गसङ्गत्या तदर्थान्निरूपयति–*स्वौजसमौडितीति* । प्रथमाया न कारकविभक्तित्वमिति वादिमतन्दूषयितुमुपक्रमते—*इदमपीति* । क्रियायोगश्च न साक्षात्कारकत्वे प्रयोजकः किन्तु साक्षात्परम्परासाधारणः । साक्षात् यथा कर्मादीनाम् । परम्परया यथा अधिकरणकारकस्य । एवम्प्रथमान्तस्यापि । सा च क्रिया यत्र क्रियावाचकम्पदम्प्रयुज्यते तत्र चैत्रः पचतीत्यादौ तदर्थभूतैव । यत्र तु न प्रयुज्ये घटः पट इत्यादौ तत्रापि 'अस्तिर्भवन्ती परोऽप्रयुज्यमानोऽप्यस्ति' इतिन्यायेन गम्यमानास्तिक्रियायामेवान्वयः । स च प्रत्ययार्थकर्तृकर्मादिद्वारा । अत एव "तिङ्समानाधिकरणे प्रथमा" इतिवार्त्तिकसङ्गतिः । कारकविभक्तित्वञ्च क्रियाजनकार्थकविभक्तित्वम् । इदमपीत्यस्य कारकाधिकारीयसंज्ञाप्रयोज्यसर्वविभक्तिसङ्ग्रहः । *भाष्ये* । अनभिहितपादे ।

*कृष्णादिशब्देष्विति* । वाचकतासम्बन्धेन स्थितस्येति शेषः ।

मनर्थकमत आह—नियतेति । यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स तदर्थः इत्यर्थः । (१)अन्वयानुपपत्तिपूर्विका लक्षणा पदे एव । प्रत्ययोत्पत्तिः सर्वत्र शक्य एव । शक्यतावच्छेदकारोप एव च लक्षणेति न लक्ष्यासङ्ग्रहदोषः । (२)तटादिशब्दानां तत्तत्प्रत्ययसमभिव्याहारे सकललिङ्गबोधकतया न किमपि लिङ्गं ततो नियतोपस्थितिकमिति न त

*प्रातिपदिकार्थत्वादिति* । प्रातिपदिकजन्योपस्थितिविषयत्वं हि प्रातिपदिकार्थत्वं तच्च लिङ्गस्याप्यस्तीति भावः । अत्रोपस्थितिनिष्ठकार्यतावच्छेदकः सम्बन्धोऽवच्छेदकता । प्रातिपदिकनिष्ठकारणतायास्तु विषयकज्ञानावच्छेदकत्वम् । *यस्मिन्निति* । न च सामग्र्यन्तरा प्रातिपदिकमात्रोच्चारणेन कस्याप्यर्थस्योपस्थितिर्न भवतीति प्रातिपदिकजन्यनियतोपस्थितिकत्वन्न कस्यापीति वाच्यम् । स्वस्वव्याप्य यावत्करणसत्त्व इत्यस्यापि पूरणात् । स्वम् प्रातिपदिकम् । तद्व्याप्य दीयसम्बन्धः ताभ्यामितरद्यावत्कारणमित्यर्थः । प्रातिपदिकजन्यनियतोपस्थितिकत्वञ्च प्रातिपदिकोच्चारणकालानन्तरकालत्वव्यापकोपस्थिति विषयत्वम् । कालश्च प्रातिपदिकोच्चारणानन्तरं यावत्क्षणसमूहेनर्थाभिव्यक्तिर्भवति तावान् समुदायः ।

नन्वेतादृशप्रातिपदिकार्थत्वं गौर्वाहीक इत्यादिलाक्षणिकस्थले कस्यापि वाहीकाद्यर्थस्येति तत्र प्रथमायाः साधुत्वन्न स्यादित्यत आह *अन्वयानुपपत्तीति* । *पदे एव* । सुबन्त एव । *न लक्ष्यासङ्ग्रह इति* । एवञ्च मुख्ये स्वशक्ये एव तेषां साधुत्वम्पश्चात्पदान्तरार्थसम्बन्धवेलायामन्वयतात्पर्यान्यतरानुपपत्तिप्रतिसन्धानं ततः स्वशक्यतावच्छेदकारोपात्मिकालक्षणेति भावः । लिङ्गग्रहणसार्थक्यमाह—*तटादिशब्दानामिति* ।

सूत्रे मात्रशब्दोऽवधारणे तस्य च प्रत्येकं सम्बन्ध इत्याशयेनाह

(१) नन्वेवं गौणलाक्षणिकार्थस्य नियमेनानुपस्थितेः 'सिंहो माणवकः' इत्यादौ, परमते च ... टः' इत्यादौ च प्रातिपदिकार्थत्वाभावात्तमादाय प्रथमा न स्यादित्यत आह-अन्वयानुपपत्तीति* । ... तत्र प्रथमतः शक्यार्थमादाय प्रथमायां जातायां पश्चात्पदान्तरसन्निधानेन गौणाद्यर्थोपस्थितावपि ... स्कारानिवृत्तेरभावात् प्रथमायास्तथैवावस्थितत्वात् न दोष इति भावः ।

किञ्च पूर्वोक्ताश्रयपदेनाऽऽरोपितप्रवृत्तिनिमित्तताश्रयोऽपि गृह्यते शक्यतावच्छेदकारोप एव ... ति न 'सिंहोमाणवकः' इत्यादौ दोष इत्यत आह-शक्यतावच्छेदकेति* ।

(२) ननु नियतोपस्थितिकस्यैवार्थस्यात्र प्रादिपदिकार्थपदेन ग्रहणं नेतरस्येत्यत्र विनि... इत्यतस्तत्सूत्रकृदभिप्रेतमेवेति वर्णयंस्तदाशयमाह-तटादीति* ।

बोध्यलिङ्गस्यात्र प्रातिपदिकार्थशब्देन ग्रहणमिति लिङ्गग्रहणमिति भावः ।

लिङ्गमात्रेति । लिङ्गस्यैवाऽऽधिक्ये इति क्रमेणार्थः । (१)यद्यपि विशेष्यविशेषणभावोऽप्यधिको भासते तथापि तस्य वाक्यार्थत्वेन बहिरङ्गतया न स्वार्थमात्रानिमित्तकप्रथमप्रवृत्तसंस्कारबाधकत्वमिति बोध्यम् । अभेदेन संसर्गेणेति । इतरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावसंसर्गेणेत्यर्थः । अभेदस्तु न संसर्ग इत्यन्यत्र(२)प्रपञ्चितम् ।

*लिङ्गस्यैवाधिक्य इति* । नन्वेवन्नीलो घट इत्यादावपि नियतत्वांशनिवेशे प्रथमा न स्यात् । विशेषणविशेष्यभावस्याधिकस्य भानेन मात्रपदेन व्यवच्छेदादित्याशयेन शङ्कते—*यद्यपीति* । *संस्कारेति* । प्रथमारूपः । योऽप्यभेदो भासते सोऽपि विशेष्यविशेषणभावान्नातिरिक्तः । एवं सत्ययं वाक्यार्थ एव । विशेष्यविशेषणभावः परं द्विविधः । यत्र भेदः संसर्गतया भासते तत्र तत्सम्बन्धावच्छिन्नः । समानविभक्तिकनामार्थयोर्यत्रान्वयस्तत्रेतरसम्बन्धानवच्छिन्नः । न च एवं 'घटम्पश्यति' इत्यादावपि प्रथमापत्तिः । कर्मत्वस्य क्रियासापेक्षत्वेन तस्य वाक्यार्थत्वादिति वाच्यम् । एवं सति "कर्मणि द्वितीया" इत्यादिसूत्राणां वैयर्थ्यापत्तेः । प्रातिपदिकप्रदेशस्य प्रथमयाऽवरुद्धत्वादतस्तासां स्वविषये बाधकत्वमुपेयमिति भावः । *न संसर्ग इति* । 'राहोः शिर' इत्यादावौपाधिकभेदमादाय षष्ठ्युपपादनपरभाष्यप्रामाण्येन तस्य संसर्गत्वाभावकल्पनात् । अन्यत्र मञ्जूषादौ ।

न च 'द्रोणो व्रीहिः' इत्यत्र प्रातिपदिकार्थे एव प्रथमाऽस्तु, तस्य च परिच्छेद्यपरिच्छेदकभावसम्बन्धेन व्रीहावन्वयोऽस्त्विति वाच्यम् । समानविभक्तिकनामार्थयोर्भेदसम्बन्धेनान्वयबोधस्याव्युत्पन्नत्वात् । अन्यथा

---

(१) ननु लिङ्गस्यैवाधिक्ये इत्युक्ते 'वीरः पुरुषः' इत्यादौ विशेष्यविशेषणभावस्याप्याधिकस्य भानेन प्रथमा न स्यात् । नच पूर्वापरेत्यादि सूत्रेण समासविधानसामर्थ्यादेव तदाधिक्येऽपि प्रथमोत्पत्तौ न तद्बाधकमितिवाच्यम्, 'वीरं पुरुषमानय' इत्यादौ विशेष्यविशेषणभावविशेषात् पूर्वापरेत्यादिसमासविधानस्य चरितार्थत्वादित्याशंकते–यद्यपीति* । परिहरति–*तथापीति* । स्वार्थमात्रानिमित्तकप्रथमप्रवृत्तप्रथमाविभक्तिसंबन्धरूपसंस्कारोत्तरसाकांक्षितपदान्तरसम्बन्धे भासमानविशेष्यविशेषणभावसम्बन्धस्य वाक्यार्थत्वेन बहिरङ्गतया न तदन्तरङ्गबाधकत्वमिति भावः ।

(२) अन्यत्र–कारकवादे मञ्जूषायामिति तदर्थः । तत्रहि–संबन्धस्य सम्बधिभेदनियतत्वादभेदस्य च तदभावान्न तस्य तत्सम्बन्धत्वे मानम् । अत एव 'राहोः शिरः' इत्यादौ षष्ठ्युपपादनाय व्यपदेशिवद्भावेनैतः 'आद्यन्तवत्' सूत्रे भाष्ये । अन्यथा षष्ठी शेषे इत्यनेनैव षष्ठ्यां सिद्धायां तदाश्रयणमयुक्तं स्यात् । किञ्च तस्य सम्बन्धत्वे नीलो घटः इत्यादौ षष्ठ्यापत्तिप्रसङ्गः । भेदमूलकसम्बन्ध एव षष्ठी, इत्यापि तु न कार्या, तदर्थस्य सूत्रतो वाच्यवृत्त्या दुर्घटत्वादित्यादिः ।

इहोक्तार्थत्वादिति । उक्तार्थानामप्रयोगात् प्रातिपदिकप्र-
तिपादितसंख्याविशिष्टे संख्यान्तराभावाच्च (१)तदप्राप्तिः । अन-
न्वितार्थकविभक्त्यपेक्षयाऽनुवादकविभक्तेरेव न्याय्यत्वान्न "ङ्याप्-
भ्यः" सर्वविभक्त्यापत्तिरिति भावः । लिङ्गविशिष्टपरिभाषया 'इन्द्राणी'
इत्यादौ प्रथमासिद्धिः । (२)परिमाणशब्दश्च परिच्छेदकपर इत्युन्मा-
नादिष्वपि प्रथमासिद्धिरिति बोध्यम् ।

---

'राजा पुरुष' इति वाक्याद्भेदसम्बन्धेनान्वयबोधापत्तेः । न च यदि परि-
माणमत्रे प्रथमा परिमाणस्य च प्रत्ययार्थतया परिच्छेद्यपरिच्छेदकभावस-
म्बन्धेनान्वयस्तदा 'द्रोणो व्रीहिमानय' इत्यपि प्रयोगः स्यादिति वाच्यम्
प्रातिपदिकार्थसाहचर्येण परिमाणमात्रे प्रथमाऽपि यत्र समानविभक्तिक-
मान्तरार्थेऽन्वयविवक्षा तत्रैव नान्यत्रेति कल्पनात् । अत एव "तिङ्सम-
नाधिकरणे प्रथमा" इतिवार्त्तिकविरोधो न ।

*उक्तार्थत्वादिति* । एकत्वादिष्वर्थेषु विभक्तिर्विधेया ते चार्थाः प्र-
कृत्यैव प्रतिपादिता इति तेषामभिधानाय विभक्तिर्न स्याद्यथा न हि भ-
वति घटोऽस्ति कलश इति । नन्वेकत्वविशिष्टे एकत्वान्तरान्वयायैकवच-
नमस्त्वित्यत आह—*प्रातिपदिकेति* । *संख्यान्तरेति* । प्रकृत्यर्थता-
वच्छेदकातिरिक्तसंख्यान्तरेत्यर्थः । एकादिशब्दात्तर्हि द्विवचनादिकमुत्प-
द्यतामित्यत आह—*अनन्वितार्थकेति* । *सर्वविभक्त्यापत्तिरिति*
सर्वप्रथमापत्तिरिति भावः । ननु 'हिमानी' 'इन्द्राणी' इत्यादौ कथम्प्रथ-
महत्वपुंयोगयोराधिक्यादित्यत आह-*लिङ्गविशिष्टपरिभाषयेति* । "प्रा-
तिपदिकार्थमात्र" इत्यत्र प्रातिपदिकपदम्प्रातिपदिकप्रकृतिकलिङ्गबोधक-
प्रत्ययस्यापि बोधकमिति यस्माल्लिङ्गबोधकप्रत्ययान्तात्प्रथमोत्पत्तिरिष्य-
प्रेता तज्जन्यनियतोपस्थितिकोऽर्थो विवक्षितः स च प्रकृतेऽस्तीति
भावः । *उन्मानादिष्वपीति* । पलम् सुवर्णमित्यादौ । न च प्राति-
दिकेन स्वार्थस्योक्तत्वात्तत्र कथम्प्रथमेति वाच्यम् । प्रातिपदिकार्थे प्रथ-
माविधानसामर्थ्येन तत्रोक्तार्थानामितिन्यायाप्रवृत्तेः । यथा पञ्चकम्प्राति-
पदिकार्थ इतिपक्षे कारकस्य प्रातिपदिकार्थत्वेऽपि तत्र द्वितीयादीनां वि-

---

(१) *तदप्राप्तिरिति* । विभक्तेरप्राप्तिरित्यर्थः । नच "नकेवला प्रकृतिः प्रयोक्तव्या" इति ।

(२) ननु ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः ॥ इति कोशात् परिमाण शब्देनाऽऽढककुडवादीनामेव ग्रहणात् उन्मानाद्यर्थकपलादिशब्देभ्यः प्रथमा न स्यादित्यत आह—परिमाणशब्दस्येति* । परिच्छेदकपरेत्युक्ते संख्याकालयोरपि परिच्छेदकत्वेन ग्रहणापत्त्या तद्वारणाय संख्याकालातिरिक्तेति विशेषणीयम् । तथाच संख्याकालातिरिक्तपरिच्छेदपरोऽर्थ इति बोध्यम् ।

(१)परे त्वत्र सूत्रे प्रातिपदिकार्थशब्देन प्रवृत्तिनिमित्तं तदाश्रयश्च । स च मुख्य इवाऽऽरोपिततदाश्रयोऽपि । अत एव 'गोपी' इत्यादौ स्वादिप्रकृतेर्लाक्षणिकत्वेऽपि न दोषः । अत एव लिङ्गग्रहणं सार्थकम्, अन्यथा "स्वमोर्नपुंसकात्" (पा०सू०७।१।२३) इत्यादिशास्त्रप्रामाण्येन लिङ्गस्यापि प्रातिपदिकार्थतया तद्वैयर्थ्यं स्पष्टमेव । अत एव "स्त्रियाम्" (पा०सू०४।१।३) इति सूत्रे स्त्रीत्वे द्योत्ये इत्यर्थ इति भाष्ये सिद्धान्तितम् । "तस्माच्छसः" (पा०सू०६।१।३) इत्यत्र पुंसीत्यस्य पुंशब्दस्य प्रकृतित्वे इत्येवार्थः । 'अभिहिते प्रथमा' इति वार्त्तिकस्य तत्तत्प्रातिपदिकार्थगतकारकशक्तावन्येनाभिहितायां स्वार्थे प्रातिपदिकात्प्रथमेत्यर्थ इति न तद्विरोधः । (२)एतेन तन्नये कारकस्य प्रत्ययार्थत्वं, तव तु तन्नेति विरोध इत्यपास्तम् ।

---

धानम्, अन्यथा विभक्तिरहितस्य प्रयोगः स्यात् । स च न केवलेत्यादिवचनबाधितो नापि तेभ्यः कर्मादिप्रतीतिः कस्यापि भवति तथा प्रातिपदिकेन तदर्थे प्रतिपादितेऽपि प्रथमा भवतीति प्राचीनमतनिगर्वः ।

स्वसिद्धान्तमाह—*परे त्विति* । प्रवृत्तिनिमित्तमिति यस्माच्छब्दात्प्रथमाविधानं तत्तच्छब्दप्रवृत्तिनिमित्तमित्यर्थः । *स च* । तदाश्रयश्च । *आरोपिततदाश्रयः* । प्रवृत्तिनिमित्तप्रकारकारोपविशेष्य इत्यर्थः । *अत एव* । आरोपिततदाश्रयग्रहणादेव । *लाक्षणिकत्वेऽपि* । गोपत्वप्रकारकारोपविशेष्यार्थबोधकत्वेऽपि । *अत एव* । प्रवृत्तिनिमित्ततदाश्रययोरेव प्रातिपदिकार्थपदेन ग्रहणादेव । *प्रातिपदिकार्थतया* । प्रातिपदिकपदजन्योपस्थितिविषयार्थतया । तद्वैयर्थ्यम्—लिङ्गग्रहणवैयर्थ्यम् । *अत एव* । लिङ्गस्य प्रातिपदिकार्थत्वादेव । *सिद्धान्तितमिति* । स्त्रीत्वस्य प्रातिपदिकवाच्यत्वे हि स्त्रीप्रत्ययस्य तद्द्योतकत्वे युज्यते । *पुंशब्दस्य प्रकृतित्व इति* । पुंवाचकशब्दस्य प्रकृतित्व इत्यर्थः । एतेन पुंसि विद्यमानस्य शस इति नार्थ इति, इति सूचितम् । वार्त्तिकविरोधशङ्कां वारयति-*अभिहित इति* । *एतेन* । उक्तव्याख्यानेन । *तन्नये* । वार्त्तिककारमते ।

---

(१) एतावत्पर्यन्तं यथाश्रुतं मूलं व्याख्याय इदानीं नियतोपस्थितिक इत्यत्र नियमांशपरित्यागे ग्रहणविपर्यासादिरूपं स्वाभिसन्ध्यं प्रकटयितुं स्वाभिमतं सूत्रार्थं दर्शयति—परे तु इत्यादिना—ऽन इत्यन्तेन ।

(२) इदानीं विरोधस्वरूपप्रदर्शनपूर्वकं तन्निराकरणमतिदिशति-एतेनेति* ।

तटादिशब्दानामपि लिङ्गं वाच्यमेव । द्योतकास्तु विसर्गादयः । पूर्वं तत्तल्लिङ्गं बुद्धिस्थीकृत्यैव तस्य तस्य विसर्गादेः साधुत्वान्वाख्यानम् । नियमांशनिवेशे तु न मानम्, इदमेवाभिप्रेत्य वृत्तौ "प्रातिपदिकार्थः सत्ता" इत्युक्तम् । सत्तेति प्रवृत्तिनिमित्तोपलक्षणम्, आश्रयस्तु तदाक्षिप्तत्वान्न पृथगुक्तः । एवञ्च प्रातिपदिकार्थ इत्यस्याऽलिङ्गप्रवृत्तिनिमित्तकाश्चाऽव्ययपुमादाय उदाहरणम् । लिङ्गविशिष्टपरिभाषया स्त्रीशब्दोऽप्यस्यैवोदाहरणम् । अन्ये सर्वे लिङ्गाधिक्ये इत्यस्य ।

द्रोणत्वादि(१)प्रवृत्तिनिमित्तकानां द्रोणादिशब्दानां परिमाणत्वेन परिमाणमपि लिङ्गवद्विशेष्यान्वय्यर्थः । एवञ्च तस्य लिङ्गवत्प्रातिप

---

लिङ्गग्रहणस्य सार्थक्याय भूमिकामारचयति—*तटादिशब्दानामपीति* । यदि प्रातिपदिकजन्योपस्थितिविषयस्यैव प्रातिपदिकार्थपदेन ग्रहणं स्यात्तदा लिङ्गस्यापि तटादिशब्दजन्योपस्थितिविषयतयां प्रातिपदिकार्थपदेन तेभ्यः प्रथमासिद्धौ लिङ्गग्रहणं व्यर्थं स्यादिति भावः । ननु लिङ्गन्न ततो नियतोपस्थितिकमत आह—*नियमांशनिवेशे त्विति* । अत एव अलिङ्गा लिङ्गप्रवृत्तिनिमित्तकाश्च प्रातिपदिकार्थमात्र इत्येतदुदाहरणत्वेन प्रातिपदिकार्थे किमुदाहरणमिति प्रश्ने स्त्री पुमान्नपुंसकमित्येते दर्शिताः । अन्ये लिङ्गाधिक्ये इत्यस्य । अत्रैवार्थे वृत्तिकारसम्मतिमप्याह–इदमेवेति* । प्रवृत्तिनिमित्ततदाश्रययोरेव प्रातिपदिकार्थपदेन ग्रहणस्याभिप्रेतत्वादेव । *अव्ययपुमादय इति* । अव्ययस्य प्रातिपदिकार्थ इत्येतदुदाहरणे प्रमाणन्तु प्रातिपदिकग्रहणङ्किमर्थम् । उच्चैर्नीचैरित्यत्रापि यथा स्यादिति भाष्यमेव । *अन्ये सर्वे इति* । कृष्णादयः । तत्र लिङ्गप्रतीतेराधिक्यात् । एवं खट्वादिशब्दानामपि लिङ्गप्रवृत्तिनिमित्तत्वा भावेन लिङ्गाधिक्य इत्येतदुदाहरणत्वमेव । न च 'मृडानी' 'हिमानी' इत्यादौ पुंयोगमहत्त्वादेरधिकस्य भानेन प्रथमा न स्यादिति वाच्यम्, मृडानीत्यादावारोपितमृडत्वं मृडसम्बन्धश्च प्रवृत्तिनिमित्तमस्य भानसत्त्वे यदि त्वस्य न भानन्तदा त्वारोपितमृडस्वरूपप्रवृत्तिनिमित्तमेव प्रतीयते इति न मात्र पदेन व्यावृत्तिः । एवं 'हिमानी'इत्यत्र महत्त्वविशिष्टहिमत्वं प्रवृत्तिनिमित्तमिति स्वीकारात् ।

परिमाणग्रहणचारितार्थ्यमाह—*द्रोणत्वादिप्रवृत्तीति* । *लिङ्ग

---

(१) अत्रायमभिप्रायः । परिमाणशब्दस्य लिङ्गवत्प्रातिपदिकार्थत्वेऽपि न प्रकृतसूत्रस्थप्रातिपदिकार्थग्रहणयोग्यत्वं, तस्य प्रवृत्तिनिमित्ततदाश्रयरूपत्वात् । अपि तु द्रोणत्वायेव तद्योग्यम् । एवञ्च तदर्थेऽर्थे प्रथमासद्भावेऽपि परिमाणरूपेऽर्थे प्रथमा न स्यात् । अतः परिमाणग्रहणमिति भावः ।

दिकार्थत्वाभावात्परिमाणग्रहणम् । द्रोणः परिमाणमित्येष तु "द्वौ-
ब्राह्मणौ" इतिवत्प्रयोगः, द्रोणशब्दस्यानेकार्थत्वाद्वा । मूलोक्तं तु न
युक्तम् । "द्रोणो व्रीहिमानय' इत्यस्यापत्तेः । किञ्च "तिङ्समाना-
धिकरणे प्रथमा" इति वार्त्तिकैकवाक्यतया भेदान्वये 'द्रोणो व्रीहिः'
इत्यनिष्टम् । (१)न च यदा "परिमेये द्रोणादीनां वृत्तिस्तदा तस्या-
नेकत्वेन परिमाणमात्रपरत्वे तद्बोधेन च व्यभिचारान्मेयस्य निय-
तोपस्थितिकत्वाभावेनाप्रातिपदिकार्थत्वादसिद्धौ(२) कर्मव्युत्पत्त्या

---

दिति* । यथा कृष्णादिशब्दजन्यप्रतीतिविषयस्य लिङ्गस्य विशेषणतया
भानन्तथा 'द्रोणः' 'खारी' 'आढकम्' इत्यादिशब्दे यः परिमाणाभिन्नो
द्रोण इत्याद्याकारो बोधो भवतीति द्रोणादिशब्दजन्यप्रतीतौ परिमाण-
स्याधिकस्य भानमतः परिमाणग्रहणमिति भावो द्रोणत्वादिकमखण्डोपा-
धिर्जातिविशेषो वा । तच्चेयत्तावशेषावच्छिन्नपलादिपरिच्छिन्नधान्यादिप-
रिच्छेदकत्वसमानाधिकरणम् । काकादिवाचकस्य तु लिङ्गाधिक्य इत्ये-
तदुदाहरणत्वमेव । ननु परिमाणमपि यदि द्रोणादिशब्दार्थस्तदा द्रोणः
परिमाणमिति सह प्रयोगानुपपत्तिरत आह-*द्रोणः परिमाणेति* । स-
भेदेनान्यतरवैयर्थ्यमिति न्यायात् । अभ्युपेत्य वादोयम् । वस्तुतः सन्दे-
हनिवृत्त्यर्थन्तथा प्रयोग इत्याशयेनाह-द्रोणशब्दस्येति* । मूलोक्तरीत्या
परिमाणग्रहणस्य सार्थक्यं खण्डयति--मूलोक्तमिति* । न च तिङ्समा-
नाधिकरणे प्रथमा" इतिवार्त्तिकसम्मत्या समानाधिकरणनामान्तरान्वये
एव परिमाणमात्रे प्रथमा इति प्रागुक्तत्वात्तद्रीत्या नायं दोष इति वा-
च्यम् । यत्र द्रोणादिपदार्थस्य न समाधिकरणनामान्तरार्थेऽन्वयाविवक्षा
किन्तु तदर्थस्य सत्त्वमात्रप्रतिपिपादयिषा तत्र प्रथमानापत्तेरुक्तनियमास्वी-
कारात् । यदि कल्पनाऽतिप्रसङ्गभङ्गाय तादृशी क्रियते तदाप्याह-*कि-
ञ्चेति* । तिङ्सामानाधिकरण्यं हि तिङर्थाऽभिन्नार्थाभिधायकत्वन्त-
च्च मूलोक्तरीत्या नास्तीति भावः । प्रत्युत तिङर्थेऽन्वय एव साधु-
त्वमितिवार्तिकाल्लभ्यते मूलोक्तरीत्याऽन्वये त्वसाधुत्वमस्य स्यादित्य-
पि बोध्यम् ।

कैयटोक्तपरिमाणग्रहणसार्थक्यन्दूषयति--*न चेत्यादिना* । *मे-
* । परिच्छेद्ये । *कर्मव्युत्पत्त्या* । परिमीयते यत्तत्परिमाणमितिरी-

---

(१) यदा मेये द्रोणादीनां वृत्तिस्तदा व्यभिचाराद मेयस्य नियतोपस्थितिकत्वाभावेनेत्यन्वयः, व्यभिचारे परिमाणमात्रपरत्वं तद्बोधनं चेति हेतुद्वयेनानेकत्वं बोधयति ।

(२) असिद्धाविति* । अत्र 'प्रथमायाः' इति शेषः ।

प्रमेयार्थकं परिमाणग्रहणम्" इति कैयटोक्तं युक्तमिति वाच्यम्। 'सिंहो माणवकः' इत्यस्यासिद्ध्यापत्तेः, (१)तद्वदस्यापि सिद्धेश्च। नियमांशनिवेशे मानाभावाच्च।

'एकः' "द्वौ" इत्यादिसिद्धये तु वचनग्रहणम्। (२)अन्यथैतत्सूत्रोपस्थितस्य "अनभिहिते" (पा०सू०४।३।१) इत्यस्यात्र फलाभावादेतदेकवाक्यतापन्नसंख्यावाक्यान्वयित्वेन तदप्राप्तेः। 'रामौ' इत्या-

---

त्या। *असिद्ध्यापत्तेरिति*। अत्र सिंहशब्दस्य सिंहसदृशप्रतिपादकतया कस्यापि सदृशस्य निरुक्तप्रातिपदिकार्थत्वन्नास्ति। *तद्वदिति*। पदे एव लक्षणेति प्रागुक्तरीत्या स्वार्थमात्रे सिंहे तस्य साधुत्वमिति रीत्या यदि 'सिंहो माणवक' इति वाक्यं साध्विति ब्रूषे तदा द्रोण इत्यादीनामपि साधुत्वं तथैव भविष्यतीति भावः। न च परिमाणमात्रविषयकप्रतीतिजनकात्प्रथमेत्यस्य 'द्रोणः खारी' इत्याद्युदाहरणमिति कथं लिङ्गसंख्येभ्यः प्रतीतेरिति वाच्यम्। परिमाणभिन्नत्वे सति प्रातिपदिकार्थलिङ्गान्यतरभिन्नो यस्तद्विषयकत्वस्य प्रतीतिविशेषणत्वात्।

ननु प्रातिपदिकेन प्रातिपदिकार्थस्योक्तत्वेऽपि प्रातिपदिकार्थे प्रथमेति वचनसामर्थ्यात्तदर्थगतसंङ्ख्याया अनभिहितत्वमादाय प्रथमा, एकादिशब्दस्थले तु सङ्ख्याप्यभिहितेति प्रथमा न स्यात्। यदि न केवलेतिसमयपरिपालनायाव्ययेभ्य इव प्रथमेति ब्रूषे, तदेकादिशब्देभ्यो द्विवचनबहुवचनयोरप्यापत्तिरत आह--*एको द्वावित्यादीति*। *सङ्ख्यावाक्यान्वयित्वेन*। प्रातिपदिकार्थस्यानभिहितत्व इत्यर्थस्तु पूर्वोक्तरीत्या

---

(१) तद्वदिति*। यथा सिंहो माणवक इत्यस्य सिद्धिः, तथा मेयवृत्तिद्रोणादिशब्दमादाय द्रोणो व्रीहिरित्यादेरपि सिद्धिश्चेत्यर्थः। किञ्च नियमांशनिवेशे मानाभाव इति पूर्वोक्तमपि न विस्मर्तव्यमित्याह-नियमांशेति।

(२) अन्यथेति*। मूलोक्तातिरिक्तास्मदुक्तवचनग्रहणसार्थक्यग्रहणाभावे। *एतत्सूत्रोपस्थितेति*। प्रातिपदिकार्थसूत्रे उपस्थितं यदनभिहिते इत्याकारकं तस्येत्यर्थः। *फलाभावादिति*। तस्य तदेकवाक्यतापन्नसंख्यावाक्यान्वयित्वेनेत्यत्र हेतुत्वेनान्वयः। *तदप्राप्तेरिति*। एको द्वौ इत्यादौ प्रथमा विभक्त्यप्राप्तेरित्यर्थः। एवञ्च वचनग्रहणाभावे प्रातिपदिकार्थसूत्रेऽनभिहिते इत्यस्योपस्थितौ 'अनभिहितप्रातिपदिकार्थे' इत्यन्वये प्रातिपदिकार्थस्य सर्वत्राभिहितत्वादेव व्यावर्त्याभावात् अनभिहिते इत्यस्य वैयर्थ्यापत्तेः। तथा च प्रातिपदिकार्थसूत्रेण "द्व्येकयोर्द्विवचनैकवचने" इत्याद्येकवाक्यतयाऽनभिहितेषु प्रातिपदिकार्थमात्रगतैकत्वादिषु प्रथमैकवचनादय" इत्यनेनैकत्वादिसंख्याया एकत्वादिशब्दैरभिहितत्वात्तेभ्यः प्रथमा न स्यादिति निर्गलितसमुदायार्थः।

केचित्तु यदा तिङ्समानाधिकरणे एव प्रातिपदिकार्थसूत्रं प्रवर्तते इति तदा संख्यायाः सर्वत्राभिहितत्वादनभिहितसंख्याया असंभवादिदं चिन्त्यमित्याहुः।

उच्छृंखलानुयायिनस्तु, अन्वयित्वेनेत्यस्याग्रे 'अभ्युपगमात्' इति शेषः। तेन वस्तुतः स नेत्यभिप्रायमाहुः।

द्वौ संख्याधिक्ये प्रथमा तु "द्व्येकयोः" (पा०सू०१।४।२२) इत्याद्ये-
कवाक्यतयेति बोद्धव्यम् । मात्रग्रहणाभावे तु यथा 'कर्मणि द्वितीया'
(पा०सू०२।३।२।) इति नियमेन कर्मत्वाज्ञानसमानकालिकार्थान्तरस्यैव
व्यावृत्तिः, न तु तज्ज्ञानसमानकालिकार्थान्तरस्य । अत एव 'गां दो-
ग्धि पयः' इत्यादावपादानत्वादिबोधेऽपि द्वितीया । एवञ्च 'कर्मणि
सत्येव द्वितीया, न तु तदसत्त्वे, इति नियमाकारः । तथाऽनेनापि प्रा-
तिपदिकार्थसत्त्वे एव प्रथमा, न तु तदसत्त्वे, इत्येव नियमः स्यात् ।
एवञ्चानर्थकनिपातेभ्यः प्रथमा नैव स्यात्, एवञ्च तत्समभिव्याहारे

---

वक्तुमशक्यः, किन्तु तदर्थगतसंख्यायामनभिहितायामित्येव वाच्यम् ,एवं,
सति तादृशवाक्यस्यान्यत्र चरितार्थत्वादेको 'द्वौ' 'त्रय' इत्यत्र न स्या-
दिति भावः ।

नन्वेवं रामावित्यादौ प्रथमा न स्यात्तेषु लिङ्गाधिक्येऽपि तन्मात्रा-
धिक्याभावादत आह—*रामावित्यादाविति* । *संख्याधिक्येति* । सं-
ख्याधिक्यविवक्षायामित्यर्थः । लिङ्गमात्राधिक्येऽपि प्रातिपदिकार्थगत-
त्वादौ विवक्षित इत्यर्थः । न च 'राम' इत्यत्र संख्याधिक्यसत्त्वात्प्रथमा
न स्यादित्येवैकवचनान्तस्य पुरस्फूर्तिकत्वात् कुतो न शङ्का कृतेति वा-
च्यम् । "द्व्येकयोः" इतिसूत्रस्थैकशब्दस्य प्रत्याख्यानेनादोषात् । सौत्र-
मात्रग्रहणप्रयोजनमाह—*मात्रग्रहणन्त्विवति* । मात्रग्रहणाभावे त्विति
पाठः । अस्य इति नियमः स्यादित्यनेनान्वयः । कर्मण्येव द्वितीयेत्येवंवि-
धनियमेन यत्र कर्मत्वाज्ञानन्तत्रैव द्वितीया व्यावर्त्येत इत्यभिप्रायेणाह—
*यथा कर्मणीत्यादि* । *कर्मत्वाज्ञानसमानकालिकस्य* । कर्मत्वाभा-
वसमानाधिकरणस्य । *अर्थान्तरस्य* । तृतीयादिप्रयोजककरणत्वादेः ।
*अपादानत्वादिबोधेऽपीति* । गां दोग्धि पय इत्यत्रान्तःस्थितद्रवद्र-
व्यवृत्तिविभागानुकूलव्यापारानुकूलव्यापारोऽर्थ इति स्वीकारे तद्योगेऽपा-
दानसंज्ञाकर्मसंज्ञयोः प्राप्तौ 'अपादानमुत्तराणि कारकाणि बाधन्त' इत्या-
धारेतिसूत्रस्थभाष्योक्तरीत्या स्थितकर्मत्वमादाय द्वितीया यथा भव-
तीति भावः ।

दार्ष्टान्तिके योजयति—*तथाऽनेनापीति* । प्रातिपदिकार्थ इतिसू-
त्रेणापीत्यर्थः । प्रातिपदिकार्थसत्त्व एव प्रथमा न तु तदसत्त्व इत्यस्य प्रा-
तिपदिकार्थसत्त्वाभावविशिष्टशब्दव्यावर्त्तकता स्यादिति भावः । *अन-
र्थकनिपातेभ्यः* । पादपूरणार्थेभ्यः । तेषाम्प्रवृत्तिनिमित्ततदाश्रयरूपप्राति-
पदिकार्थाभाववत्त्वात् । इष्टापत्तावाह—*एवञ्च तत्समभिव्याहार इति* ।

"सपूर्वायाः प्रथमा" (पा०सू०८।२।२६) इत्यादिशास्त्रप्रवृत्तिर्न स्यात्। तत्सत्त्वे कर्मादियोग्यार्थकप्रातिपदिकाच्चेत्तद्रहितस्वार्थे इत्यर्थान्न दोषः। इदमेव मात्रग्रहणं 'कर्मणि द्वितीया' (पा०सू०१।३।२) इत्यादेर्मदुक्ताकारनियमत्वे मानम्। मात्रग्रहणाच्च सूत्रकारस्य प्रत्ययनियमपक्ष एवाभिमत इति गम्यते। (१)तदकरणलाघवेन तु 'कर्मणि द्वितीयैव' इत्यर्थनियम उक्तो भाष्यादौ। स्पष्टश्चेदं सर्वं भाष्ये इति भाष्यप्रदीपोद्द्योते निरूपितमित्याहुः॥

---

अनर्थकनिपातसमभिव्याहार इत्यर्थः। "घटः पटो वै ममस्वं" 'घटः पटो वै मे स्वम्' इत्यादौ। *तत्सत्त्व इति* । मात्रपदसत्त्व इत्यर्थः। *कर्मत्वादियोग्यार्थकेति*। कर्मत्वाद्याधिक्ये प्रथमाव्यावृत्त्यर्थं हि मात्रग्रहणं तेन पर्युदासन्यायेनैतल्लाभः। न चानर्थकनिपातेभ्यो मात्रग्रहणाभावे पूर्वोक्तरीत्या यदि प्रथमा न भवेत्तदाऽनर्थकस्य निपातस्य प्रातिपदिकसंज्ञेति वार्त्तिकवैयर्थ्यमिति वाच्यम्। स्वरार्थन्तत्स्यात्।

न च "निपाता आद्युदात्ता" इत्यनेन स्वरो भविष्यतीति वाच्यम्। अव्ययेभ्यः सप्तानामपि विभक्तीनामेकवचनानीति पक्षे द्वितीयाद्यर्थं तदित्याशयात्। कर्मत्वयोग्यार्थकेति निवेशयित्वा यदि नियमस्तदाऽनर्थकनिपातेभ्यः प्रथमा सुतरां सिध्यतीति भावः। ननु भवदुक्तनियमे किं स्मानमत आह-*इदमेवेति* । *तदकरणलाघवेनेति* । मात्रग्रहणाकरणलाघवेनेत्यर्थः। *स्पष्टश्चेदम्भाष्य इति* । तत्र हि शङ्कासमाधानाभ्यामेवमुक्तम्। 'अथमात्रग्रहणं किमर्थम्। एतन्मात्र एव प्रथमा यथा स्यात् कर्मादिविशिष्टे मा भूदिति' अत्र कर्मादिशब्दस्तच्छक्तिपरः 'कटं करोति' नैतदस्ति प्रयोजनम्। कर्मादिषु द्वितीयादयो याः विभक्तयस्ताः कर्मादिविशिष्टे बाधिका भविष्यन्ति। अथ वाऽऽचार्यप्रवृत्तिर्ज्ञापयति न कर्मादिविशिष्टे प्रथमा भवतीति। यदयं सम्बोधने प्रथमां शास्ति' अधिकस्यार्थस्य सद्भावेऽपि प्रातिपदिकार्थसद्भावनिमित्ताश्रयेण चेत्प्रथमा तर्हि सम्बोधनाधिक्येऽप्येवमेव प्रथमा भविष्यति पुनस्तत्किमर्थमिति भावः। 'नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। किमामन्त्रितमिति वक्ष्यामीति। यत्तर्हि योगविभागं करोति। इतरथा सम्बोधने आमन्त्रितमित्येव ब्रूयात्' इति। *भाष्यप्रदीपोद्यते निरूपितमिति*। "कर्मखरोक्तरीत्यैव निरूपितम्। *द्वितीयादयो याः विभक्तय इति*।

---

(१) नन्वेवं कर्मणि द्वितीयैवेत्येवं विधार्थनियमं स्वीकुर्वता प्रकृतसूत्रस्थभाष्यकृता सह विरोध इत्यत आह-तदकरणेति*।

सम्बोधने च (पा०सू०२।३।४७)। तत्र वर्त्तमानादित्यर्थः सम्बोधनमभिमुखीकरणम्। (१)तत्फलं प्रवृत्तिनिवृत्ती। सम्बोध्यतावच्छेदक-

---

द्वितीया" इवेत्येवमर्थनियमपक्षे द्वितीयादीनां स्वस्वविषये प्रथमाबाधकयता कर्माद्याधिक्ये प्रथमाया अप्राप्त्या मात्रग्रहणन्न कार्यमिति सूचितम्। यदि मात्रग्रहन्न क्रियते तदा "सम्बोधने च" इतिसूत्रं लिङ्गादिग्रहणञ्च न कार्यमित्यपि ध्वनितम्।

सम्बोधने चेतिसूत्रं व्याचष्टे-*तत्र वर्त्तमानादिति* । प्रातिपदिकादित्यधिकारतो लब्धम् । सूत्रकारमते मात्रग्रहणम्प्रातिपदिकार्थेतिसूत्रे-प्रतीत्यस्यारम्भः । *अभिमुखीकरणमिति*। स्वोच्चारितशब्दबोध्यो योऽज्ञातार्थस्तद्बोधानुकूलव्यापारानुकूलो व्यापार इत्यर्थः। सम्बोध्यश्च स्वव्यापारप्रयोज्यो यस्तादृशार्थबोधानुकूलव्यापारस्तदाश्रय उच्यते । 'राम मास्पाहि' इत्यादौ तादृशेऽज्ञातार्थबोधे प्रकृत्यर्थस्य समवेतत्वसम्बन्धेनान्वयः । तत्रैव विषयभूतार्थेऽभेदसम्बन्धेन प्रेरणाविषयमत्कर्मकरक्षणस्यान्वयः सम्बोध्यतावच्छेदकत्वेन यो ज्ञातः स एवोच्चारयित्राऽभिमुखीक्रियते तेन रूपेण । अत एव ब्राह्मणत्वेन यो ज्ञातः । स एव हे ब्राह्मण अत्रागच्छेत्येवमभिमुखीकृत्योच्यते न तु हेक्षत्रियेति ।-एवञ्च रामसमवेतो यो मत्कर्मप्रेरणाविषयरक्षणाभिन्नार्थबोधस्तदनुकूलव्यापारानुकूलो व्यापार इत्याकारकः शाब्दबोधः ।

*तत्फलम्प्रवृत्तिनिवृत्ती इति*। 'हे देवदत्त तत्र गत्वा जलन्तत आनीयताम्' इतिवाक्यप्रयोगो यत्र कृतो मैत्रेण, तत्र देवदत्तस्य देवदत्तसमवेततद्देशाधिकरणकगमनविशिष्टजलकर्मकतद्देशापादानकप्रेरणाविषयानयनाभिन्नार्थबोधानुकूलव्यापारानुकूलो व्यापार इत्याकारकः शाब्दबोधो जायते तदनन्तरन्देवदत्तस्य प्रवृत्तिर्भवति। यत्र तु देवदत्त तत्रारण्ये व्याघ्रादिसेविते न गन्तव्यमिति यज्ञदत्तेनोक्तन्तत्र देवदत्तस्य प्रेरणाविषयतद्देशाधिकरणकगमनाभावाभिन्नार्थविषयकदेवदत्तसमवेतबोधानुकूलव्यापारानुकूलो व्यापार इत्याकारकशाब्दबोधे जाते तदनन्तरन्तद्देशाधिकरणकं गमनमनिष्टसाधनमिति मानसबोधे सति गमनान्निवृत्तिः। एवं यत्र

---

(१) अभिमुखीकरणञ्च-अभिमुखीभवनानुकूलो व्यापारः। तत्राभिमुखीभवनमात्रं सम्बोधनमित्यर्थः। च प्रकृत्यर्थे विशेषणतया अन्वेति। सम्बोधनविभक्त्यन्तः शब्दप्रयोगरूपः। तदनुकूलव्यापारश्च शब्दविषोपाधिकः। तस्य स्वरूपतः सत्त्वेऽपि न शाब्दबोधे विशेषणतया भानम्। तदुक्तञ्च हरिणा—सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः। प्राप्ताभिमुख्योत्थार्थात्मा क्रियासु विनियुज्यते। इति। अभिमुखीभावमात्रमित्यनेनाधिकस्यार्थस्य व्यवच्छेदः। क्रियासु विनियुज्यते इत्यनेन क्रियाविनियोजकाभिमुखीभावः सम्बोधनमिति सूचितम्। सिद्धस्येत्यनेन तस्यानुवाद्यत्वम्। विनियुज्यते इत्यनेन वर्तमानविषयक्रियासम्बन्धि इति बोधितम्।

रूपेण सम्बोद्धव्यस्य सिद्धिं विना तत्त्वासम्भवादनुवाद्ये एवैषा विभ-
क्तिः । अत एव विधेयभूतक्रियायामेवैतदर्थान्वय उद्देश्यतया । अत
एव 'राजा भव युद्ध्यस्व' 'राजन् युद्ध्यस्व' इत्यनयोर्व्यवस्थयैव प्रयो-
गः । 'राम मां पाहि' इत्यादौ चाभिमुखीभवद्रामाद्युद्देश्यकप्रवर्तनाविष-
यो रक्षणमिति बोधः । 'व्रजानि देवदत्त' इत्यादावपि 'जानीहि' इत्या-
दिः शेषो बोद्धव्यः । तत्र व्रजनस्य कर्मत्वाद्देवदत्तस्योद्देश्यत्वादुभयोः

---

प्रवृत्तिस्तत्र तादृशशाब्दबोधानन्तरम्प्रेरणाविषयत्वेन ज्ञातक्रियायामिष्टसा-
धनताज्ञानमनन्तरम्प्रवृत्तिरित्यूहनीयम् ।

*तत्त्वासम्भवादिति* । तेन रूपेण सम्बोध्यत्वासम्भवादित्यर्थः । एते-
न सम्बोध्यस्योद्देश्यत्वे बीजन्दर्शितम् । सिद्धं हि लोके उद्देश्यम्भवति । *अ-
त एव* । अस्यानुवाद्यविषयत्वादेव । *एतदर्थान्वयः* । उद्देश्यस्य सम्बो-
धनान्तार्थतया तस्य क्रियायां विधेयभूतायामन्वयः । सम्बोधनपदस्य का-
कवाचित्वव्यवहारोऽप्येतन्मूलक एवाभियुक्तानाम् । ननु पूर्वोक्तरीत्या बोधे
सम्बोधनान्तार्थान्वयस्वीकारे "तिङ्समानाधिकरणे प्रथमा" इति वार्तिक-
विरोध इति चेत् । एवन्तर्हि सम्बोधनान्तार्थस्य विधेयभूतक्रियायां विशे-
षणतापन्नो य आख्यातार्थस्तत्रैवान्वयः स्वीकार्यः । बोधे सम्बोध्यवृत्तित्वस्य
तु प्रत्यासत्त्या लाभः । *अत एव* । सम्बोध्यतावच्छेदकरूपेण सम्बोध्य-
स्य यत्र सिद्धत्वन्तत्रैव सम्बोधनविभक्तिस्वीकारादेव । *व्यवस्थयैव प्रयो-
ग इति* । यथा रामायणे वाल्मीकीये अयोध्याकाण्डे चित्रकूटे प्रसाद-
नार्थं रामम्प्रति समागतम्भरतं प्रति रामवाक्ये ।

त्वं राजा भव भरत स्वयन्नराणां वन्यानामहमपि राजराण्मृगाणाम् ।
गच्छत्वम्पुरवरमद्य सम्प्रहृष्टः संहृष्टस्त्वहमपि दण्डकान् प्रवेक्ष्ये ॥

इतिपद्ये त्वं राजा भवेति सम्बोधनविभक्त्यन्तभिन्नं प्रागुक्तम् । ननु
"इन्द्रशत्रो वर्द्धस्व" इति भागवते प्रयुज्यमानं सङ्गच्छते कथमिति चे-
दार्षत्वात् । एवं सति यादृशोऽर्थः फलितस्तमाह-*राममाम्पाहीत्यादा-
विति* । एवञ्च यद्रूपावच्छिन्नस्य सम्बोध्यता प्रतीयते तद्रूपावच्छिन्न
एव त्वम्पदस्य यत्र प्रयोगस्तत्र परामृश्यते । सम्बोध्यतावच्छेदकत्वोपल-
क्षितधर्मावच्छिन्नस्य युष्मदर्थत्वात् । अत एव सम्बोधनविभक्त्यन्तसमान-
वचनकं समानविभक्त्यन्तमेव त्वमित्यादि पदं साधु । यत्र तु विधेयभूत-
क्रियावाचकन्न श्रूयते तत्र वाक्यार्थपर्यवसानाय यत्किञ्चित्स्थलन्दर्शयति-
*व्रजानि देवदत्त इत्यादि* । यत्र तु 'देवदत्त त्वम्पण्डित' इत्येवोक्तं त-
त्र असीत्यस्याध्याहारः । अत एव विधेयभूतक्रियावाचकम्पदं लोडाद्यन्त-
मेव प्रयोक्तव्यमिति न नियम इति दिक् ।

समानवाक्यस्थत्वम् । एकतिङ् वाक्यम्' इत्यस्य च श्रूयमाणैकतिङित्यर्थ इति न दोषः । उद्देश्यविधेयभावो वाक्यार्थः । अभिमुखीभवनानुकूलव्यापारश्च सम्बोधनविभक्त्यन्तशब्दप्रयोगरूपः । व्रजानीति प्रश्नकाले लोट् । अत एव गच्छेत्याद्यध्याहारे 'धिक् मूर्ख' इत्यादौ प्रथमा । अनध्याहारे तु द्वितीयैवेति दिक् ।

॥ इति प्रथमा ॥



कारके (पा०सू०१।४।२३) । कारकत्वं क्रियाजनकत्वम् । (१)भाष्ये-"करोति क्रियां निर्वर्त्तयति" इति व्युत्पत्तिप्रदर्शनात् । "ब्राह्मणस्य पुत्रं पन्थानं पृच्छति" इत्यादौ ब्राह्मणस्य न कारकत्वम् ।

---

ननु 'व्रजानि' इत्यादौ 'जानीहि' 'इत्यादेरध्याहारे' 'एकतिङ्वाक्यम्' इतिलक्षणानाक्रान्तत्वात्तेषु निघातादीनाम्प्रवृत्तिः कथं स्यादत आह-*एकतिङिति* । श्रूयमाणैकतिङित्यर्थ इत्यत्र बहुव्रीहिः । इदं समाधानं प्राचीनरीत्या । यदि तु 'प्रविश पिण्डीम्' इत्यत्रैव वाक्यैकदेशन्यायेन शेषः स्वीक्रियतेऽध्याहारपदार्थोऽपि स एवाश्रीयते तदा तथाश्रुतमेव साधु । उद्देश्यविधेयभावस्य कुतो लाभ इत्यत आह-*उद्देश्यविधेयभाव इति* । अभिमुखीभवनानुकूलव्यापारमाह-*अभिमुखीति* । *अत एव* । सम्बोधनविभक्त्यन्तस्य विधेयभूतक्रियायामन्वयादेव । यदि धिक्शब्देन योगः स्यात्तदा द्वितीया स्यादिति प्रथमान्तस्याध्याहृतो योऽसीतिशब्दस्तत्प्रतिपाद्यक्रियामन्वयः । *अनध्याहारे* । असीत्यादिशब्दानध्याहारे । तदा धिक्शब्देन योगे द्वितीया भवतीति भावः ॥

इति प्रथमाविवरणम् ।

---

"कारके" इत्यधिकृतस्य उत्तरसूत्रैकवाक्यतया बोधकत्वन्तदा स्याद्यदि तदर्थपरिज्ञानं स्यादतस्तस्यार्थमाह-*कारकत्वमित्यादिना* । कारकशब्दः करोति कर्तृकर्मादिव्यपदेशानिति विवक्षया क्रियापरः जनकमित्याध्याहारः सप्तम्यर्थो निरूपितत्वं तस्य जनकशब्दार्थैकदेजशकतायामन्वयः । एतेन क्रियाजनकत्वं कारकत्वमित्यर्थादुक्तम्भवति । कारकाधिकारप्रयोजनमाह—*ब्राह्मणस्येति* । "अकथितञ्च"

---

(१) ननु कारकत्वं क्रियाजनकत्वमित्ययुक्तं "करोति कर्तृकर्मादिव्यपदेशान्' इति व्युत्पत्त्या कारके अधिकारसूत्रे कारकशब्दस्य क्रियापरत्वसिद्धान्तात् । तदुक्तं भाष्ये-"यत्तद् ब्रूयात् क्रियायामिति तावत् कारके इति" इत्यत आह-*भाष्ये करोतीति* ।

पुत्रेणाऽन्यथासिद्ध्या तत्त्वाभावात् । अत एवैषां क्रियायामेवान्वयः । क्रियाजनकमिति ज्ञाते का सा क्रियेत्याकाङ्क्षोदयेन, क्रियाया जन... काकाङ्क्षया च तत्रैवान्वयस्यौचित्यात् । सर्वेषां च कारकाणां स्वस्वावान्तरक्रियाद्वारा प्रधानक्रियानिष्पादकत्वं बोद्ध्यम् । असन्निहितसम्प्रदानस्यापि दातृबुद्धिस्थत्वावश्यकत्वेन स्वज्ञानपूर्व... कालत्वेनैव जनकत्वम् । एवं 'स्तोकं पचति' इत्यादौ फलस्या...

---

इतिसूत्रमपादानत्वादीनाम्प्रसक्तिपूर्वकाविवक्षायां सर्वथा तदविवक्षायां ... प्रवर्तते इत्यग्रे वक्ष्यते । एवञ्च ब्राह्मणस्य पुत्रमित्यत्र सर्वथा तदर्था... सत्त्वादकथितञ्चेत्यनेन कर्मसंज्ञाप्राप्तिः स्यात्कारकाधिकारे कृते सति न । ब्राह्मणस्य कारकत्वाभावात् । कारकत्वाभावमुपादयति-*पुत्रेणान्य था सिद्ध्येति* । जनकत्वस्यानन्यथासिद्धनियतपूर्ववृत्तित्वरूपतया ब्राह्म णेऽवश्यक्लृप्तनियतपूर्ववर्त्तिन एव कार्यसम्भवे तद्भिन्नमन्यथा सिद्ध मित्यन्यथासिद्धिसत्त्वेन कारकत्वाभावात् । *अत एव* । कारका... क्रियाजनकत्वादेव ।

*स्वस्वावान्तरक्रियाद्वारेति* । स्वस्वनिष्ठफलोत्पत्त्यनुकूलक्रियाद्वा रेत्यर्थः । सर्वस्मिन्नेव कारकत्वेनाभिप्रेते फलानुकूला क्रियाऽस्त्येव एतावान् परं विशेषः । यदा यन्निष्ठक्रियायाः प्राधान्येन धातुवाच्यत्ववि वक्षा तदा तस्य कर्तृत्वम् । काष्ठम्पचति । स्थाली पचतीति यथा । यदा तु न तन्निष्ठव्यापारस्य प्राधान्येन धातुवाच्यत्वविवक्षा तदा तेषान्न कर्तृ त्वम् । किन्तु करणत्वादिकम् । तदुक्तं हरिणा ।

वस्तुतस्तदनिर्देश्यन्न हि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यते इत्येषा व्यवस्था दृश्यते यतः ॥

इति । ननु यदा सन्निधाने स्थिता सम्मह्यन्द्रविणन्देहि' इति दाता याचते तदनन्तरं स ददातीति तदा सम्प्रदानव्यापारस्य दानक्रियापूर्व कालिकत्वात्सम्भवति कारकत्वम् । यदा तु सोऽसन्निहितः । अथ च

मनसा पात्रमुद्दिश्य जलमध्ये जलं क्षिपेत् ।
दाता तत्फलमाप्नोति प्रतिग्राही न दोषभाक् ॥

इत्युक्तत्वेन तादृशसम्प्रदानमुद्दिश्यन्तदा तद्व्यापारस्य कथं कारकत्वं तस्मिन् व्यापाराभावादत आह-*असन्निहितेति* । *स्वज्ञानपूर्वकाल त्वेनेति* । स्वज्ञानम्पूर्वकालं यस्याः सा स्वज्ञानपूर्वकाला तस्या भावः स्वज्ञानपूर्वकालत्वम् । यथा यागस्य साक्षात् स्वर्गाव्यवहितपूर्ववृत्तित्वा भावेऽपि परमापूर्वद्वारा स्वर्गजनकत्वन्तथा विषयविधयाऽसन्निहितसम्प्र दानजन्यं यत्तद्विषयकं ज्ञानं तज्ज्ञानक्रियाऽव्यवहितपूर्वकालवृत्तीति सम्प्र दानस्यापि क्रियाजनकत्वमस्तीति भावः । *फलस्यापीति* । स्वज्ञानव...

घटं करोति स्मरति इत्यादौ बौद्धघटादेः पूर्वकालत्वेन स्मृत्यादिनां निष्पादकत्वं बोध्यम् ।

कर्तुरीप्सित न (पा०सू०१।४।४९) ॥ ईप्सितशब्दोऽत्र क्रियापरो नाभिप्रेतपरो रूढः । स्पष्टश्चेदं 'वारणार्थानाम्' (पा०सू०१।४।२७) इत्यत्र भाष्यकैयटयोः । कर्तुरिति "क्तस्य च वर्त्तमाने" इति कर्तरि षष्ठी । आप्तेः सन्नन्तात् "मतिबुद्धि" (पा०सू०३।२।८८) इति वर्त्तमाने कर्मणि क्तः । मतिः–इच्छा इति तत्राऽऽकरः । एवञ्च कर्त्राऽऽप्तुमि-

---

व्यापारजनकत्वम् । प्रथमम्फलज्ञानन्ततः फलेच्छा ततस्तदुपायान्वेषणं ततस्तदुपाये फलसाधनताज्ञानन्तत उपायेच्छा तत उपायनिष्ठसाध्यतात्वविषयताका प्रवृत्तिरित्येवंक्रमेण फलस्य क्रियाजनकत्वमिति भावः *बौद्धघटादेरिति* । बुद्धिसत्तासमाविष्टस्य घटशब्दवाच्यत्वात् । *स्मृत्यादीनामिति* । आदिना घटङ्करोतीत्यादिसङ्ग्रहः ।

*अत्र क्रियापर इति* । इदमुपलक्षणम् । "तथायुक्तम्" । "स्पृहेरीप्सितः" । "वारणार्थानाम्" इतिसूत्रेष्वप्यारूढ एव । अयम्भावः । कर्तुरिति न शेषषष्ठी । 'पटो नीलो जायताम्' इतीच्छया नीलकरणे यत्र प्रवृत्तस्तत्र पटे नीलङ्करोतीति प्रयोगानुपपत्तेः । अधिकरणसंज्ञाम्बाधित्वा पटस्य कर्मत्वं स्यात् । किन्तु कर्तुरिति कर्तृषष्ठी । एवं सत्यस्य रूढत्वे कर्तृषष्ठ्यन्तस्यानन्वयापत्तिरतः क्रियाशब्दोऽयमिति । न चाक्षिप्तक्रियायामन्वयो भविष्यतीति वाच्यम्, श्रौतक्रियान्वयसम्भवे आक्षिप्तक्रियान्वयमादाय कारकषष्ठ्युपपादनन्नोचितमित्याशयात् । *स्पष्टश्चेदमिति* । तत्र हि 'किमुदाहरणम् । माषेभ्यो गा वारयति । भवेद्यस्य माषा न गावस्तस्य माषा ईप्सिताः स्युः यस्य तु खलु गावो न माषाः कथन्तस्य माषा ईप्सिताः स्युः' 'अभिप्रेतपर्यायमीप्सितशब्दमन्यत' इति कैयटः । 'तस्यापि माषा एवेप्सिताः । एवकारो भिन्नक्रमः' । माषा ईप्सिताः एवेत्यर्थः । 'आतश्चेप्सिताः यदेभ्यो गा वारयति' । अत्र कैयटः । 'ईप्सितशब्दः क्रियाशब्द आश्रीयते न तु रूढिशब्दः । तत्र वारणक्रियया परकीया अपि माषा वारयितुमीप्सिता भवन्ति । माऽश्नन्नेते इत्येतेभ्योऽसौ गा वारयति । इह कूपादन्धं वारयतीति कूपेऽपादानसंज्ञा न प्राप्नोति न हि तस्य कूप ईप्सितः । कर्हि ? अन्धः । ईप्सितशब्दस्य रूढत्वाभिप्रायेण प्रश्नः । तस्यापि कूप एवेप्सितः पश्यत्ययमन्धः कूपम्माप्रापत्' इति । *क्रियाशब्दत्वमेवेप्सितशब्दस्येत्यभिप्रायः' इति* ।

*मतिरिच्छेति* । पुनर्बुद्धिग्रहणात् । एवं सति यादृशो वाक्यार्थः सम्पन्नस्तमाह–*एवञ्चेति* । आप्तिशब्दस्य व्याप्तिपरत्वभ्रमनिरासायाह–

ध्यमाणं कर्मेत्यर्थः । आप्तिश्चात्र सम्बन्धः । स च कर्तृपदार्थविशेषणी-भूतव्यापारद्वारक एव । उपस्थितपरित्यागेनानुपस्थितकल्पने मानाभावात् । एवञ्च कर्त्रा स्वनिष्ठव्यापारप्रयोज्यफलेन सम्बन्धुमिष्यमाणमित्यर्थः । यथा—'तण्डुलं पचति' इत्यादौ । फलस्यापि व्यपदेशिवद्भावेन फलसम्बन्धित्वात्कर्मत्वम् । अत एव तत्समानाधिकरणे 'स्तोकम्पचति' इत्यादौ कर्मत्वासिद्धिः । क्तप्रत्ययोपात्तवर्त्तमानत्वन्तु न विवक्षितम् । तेन कटं कृतवान् करिष्यतीत्यादिसिद्धिः ।

कारकं कर्मसंज्ञं स्यादिति । 'कारके' इति प्रथमार्थे सांज्ञी सप्तमी । तेन कारकं सत्कर्मसंज्ञमित्यर्थः । संज्ञिनः क्रियाजनकत्वन्तु महासंज्ञयाऽऽक्षिप्तम् । यद्वा सप्तमी यथाश्रुतैव । कारकपदञ्च क्रियापरं,

---

*आप्तिश्चात्रेति* । कर्त्ता च केनाप्तुमिच्छतीत्याकाङ्क्षायाः शान्तये आह—*कर्तृपदार्थविशेषणीभूतेति* । प्रधानीभूतव्यापारस्यैव कर्तृपदार्थघटकतया तादृशव्यापारेण सम्बन्धस्य च तज्जन्यफलाश्रयत्वरूपस्य प्रकृते ग्रहणमिति भावः । फले व्यापारजन्यता च साक्षात्परम्परासाधारणी । तेन 'तण्डुलम्पचति' इत्यत्र साक्षात्प्रधानीभूतव्यापारजन्यविक्लित्यादिफलस्य 'चैत्रं ग्रामं गमयति विष्णुमित्रः' इत्यत्र परम्परया विष्णुमित्रनिष्ठव्यापारप्रयोज्यस्य संयोगरूपफलस्य च सङ्ग्रहः । फलस्य कर्मत्वमुपपादयति—*फलस्यापीति* । फलसम्बन्धित्वात्फलाश्रयत्वात् । *अत एव* । फलस्य कर्मत्वादेव । *कर्मत्वासिद्धिः* । कर्मसमानाधिकरणस्य कर्मत्वं न्याय्यमेवेति भावः । अत्रेदं बोध्यम् । व्यपदेशिवद्भावेन फलाश्रयत्वात्फलस्य कर्मत्वन्न सकर्मकधातुस्थल एव । किन्त्वकर्मकधातूपस्थाप्य फलाश्रयस्यापि 'आस्ते' 'शेते' इत्यादौ कर्त्तुः कर्तृसंज्ञया बाधान्न कर्मत्वम्, व्यपदेशिवद्भावेन फलाश्रयस्य तु भवत्येव । अत एव "ओजः सहोम्भसा वर्त्तते" इति सूत्राद्वर्त्तत इत्यनुवर्त्तमाने तद्वाच्यक्रियायाः समानाधिकरणकर्मवाचकम् "तत्प्रत्यनुपूर्वमीपलोमकूलम्" इति सूत्रे तदित्युपात्तम् । अत्र फलस्य कर्त्तुरितिसूत्रेण कर्मत्वसम्भवत्येव । बाधिकायाः कर्तृसंज्ञाया अप्राप्तेः फलेन कर्मणा सकर्मकत्वव्यवहारस्तु न । एतादृशकर्मणः सर्वत्रैव सम्भवेनाकर्मकत्वव्यवहारस्यैवोच्छेदापत्तेरिति ।

*महासंज्ञयाक्षिप्तमिति* । करोतीति कारकमिति । किं करोति इति प्रश्ने साध्यत्वेन योऽर्थः प्रतीयते तन्निरूपितसाधनत्वमेव गृह्यते । सा च क्रियैव न तु द्रव्यं, तत्स्वभावतः सिद्धत्वेनैव भासते । एतत्पक्षे पक्-

करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्तेः । जनकमित्यध्याहारः । विषयत्वं सप्तम्यर्थः । कारकग्रहणे च स्वरितत्वप्रतिज्ञया एतदधिकारोक्तकर्त्रादिषट्कमेव, तेन 'नटश्रवणम्' इत्यादौ न कृदुत्तरपदप्रकृतिस्वरः । 'ग्रामेवासः' इत्यादौ च तत्स्वरसिद्धिरित्यन्यत्र विस्तरः ।

कर्तुः किमिति । तदभावेऽपि केनाप्तुमित्याकाङ्क्षायां कारकाधिकाराद्व्यापारलाभ इति प्रश्नः । माषेष्विति । माषेषु प्रसक्तमश्वं

---

संज्ञाधिकारात्संज्ञाद्वयविधानेऽपि पर्यायः स्यादिति द्वयोः समावेशसिद्धये कारकं सदित्युक्तम् । 'गतिकारकोपपदा'दितिसूत्रे कारकशब्देन कारकसंज्ञकस्यैवोपस्थितिः । एवमेवैतदधिकारोक्तकर्त्रादिसंज्ञासु बोध्यम् । तेन 'ग्रामेवासः' इत्यादौ कारकत्वात्कृदुत्तरदप्रकृतिस्वरः । 'थाथघञ्'ति विहिताधिकरणत्वात्सप्तमी च सिध्यति । भाष्योक्तम्प्रथमपक्षमुक्त्वा द्वितीयपक्षमाह-*यद्वेति* । तत्र ह्येवमुक्तं 'यावद् ब्रूयात् क्रियायामिति तावत्कारके' इत्युक्तम् । एवञ्च कृत्वा निर्देश उपपन्नो भवति कारके इति । कारकशब्दस्य क्रियापरत्वे युक्तिमाह—*करोति कर्तृकर्मादिव्यपदेशानितीति* । कारके इति वैषयिकाधारे सप्तमी तदाह-*विषयत्वमिति* । स्वरितत्वमिदन्दोषविशेषरूपङ्कारकशब्दे बोध्यम् । "स्वरितेनाधिकार" इति सूत्रस्य स्वरितेनाधिकङ्कार्यमित्यर्थादेतदधिकारोक्तसंज्ञाविशिष्टस्यैव ग्रहणमित्येव कार्यम्प्रकृते गृह्यते ।

*नटश्रवणमिति* । अत्र नटस्य श्रवणक्रियाजनकत्वेऽपि तस्य नैतदधिकारोक्ताः कर्त्रादिसंज्ञाः । *कृदुत्तरपदप्रकृतिस्वरइति* । उत्तरपदे श्रवणशब्दे "लिति" इतिसूत्रेण प्रथमाकारस्योदात्ततया समुदायो मध्योदात्तः स्यात्कर्त्रादिसंज्ञाविरहात्तु न भवति । आदिना नरश्रुतिरित्यस्य सङ्ग्रहः । समावेशफलन्दर्शयति—*ग्रामेवास इति* । अत्राधिकरणसंज्ञाकारकसंज्ञयोः समावेशे सप्तमीथाथादिस्वरयोः सिद्धिः प्रथमपक्षे । द्वितीयपक्षे आह-*तत्स्वरसिद्धिरिति* । थाथादिस्वरसिद्धिरित्यर्थः । यत्तु कृदुत्तरपदप्रकृतिस्वरस्य पूर्वमुक्तत्वात्तत्पदेन तस्यैव परामर्श इति । तन्न । थाथादिस्वरस्य तदपवादत्वात् । यदपि 'स्तम्बेरम इत्यत्र सप्तमीकृदुत्तरपदप्रकृतिस्वरयोः सिद्धिः समावेशफलम्' इति कैयटः । अत्र थाथादिस्वरस्तु न । अपा साहचर्यैणैरच एव तत्र ग्रहणात् । तदपि न । तत्पदत्वेनेष्टसिद्धेः ।

*व्यापारलाभ इति* । कारकसंज्ञापक्षेऽन्वर्थसंज्ञाबलात् क्रियापरत्वे तु स्वत एवेति भावः । *माषेष्विति* । अयम्भावः । कर्तृपदाभावे ईप्सितमस्य क्रियाशब्दत्वेऽपि कारकवृत्तिव्यापारप्रयोज्यफलाश्रयस्य ग्रहणे

माषनाशो मा भूदित्यन्यत्र बध्नातीत्यर्थः। तदाह-कर्मण इति। तमब्ग्रहणं किमिति। अवयवद्वारा समुदायस्य प्रश्नः। कर्तुरु- द्देश्यं कर्मेत्येतास्त्वति भावः। पयसौदनमिति। यदा कृतभो- जनो ऽपि पयोलाभेनौदनभोजने प्रवर्तते तदेदं प्रत्युदाहरणम्। तत्क्रि- यायाः पयउद्देश्यकत्वात्। इप्सिततमशब्दस्य तु क्रियाशब्दस्तात्पय- स्तदा फलाश्रयत्वेनाविवक्षणान्न दोष इति भावः। तमस्य फलं

---

कारकवृत्तिव्यापारप्रयोज्यं यत्फलन्तत्कालिकन्माषभक्षणं तदपि प्रकृ- तधात्वर्थतावच्छेदकं यत्फलं तत्प्रयोज्यम्भवति। बन्धधात्वर्थश्च देशान्त- रसंचारविरोधिविलक्षणशङ्कुसंयोगानुकूलव्यापारानुकूलो व्यापारः। प्रकृ- धात्वर्थतावच्छेदकफलं देशान्तरसंचारविरोधिविलक्षणशङ्कुसंयोगानुकू- लव्यापाररूपं तत्प्रयोज्यता तादृशभक्षणेऽस्ति। यदा माषक्षेत्रसमीपदे- शे निहितशङ्कौ बद्धोऽप्यश्वो रज्जुर्दीर्घत्वेन माषभक्षणं कृतवान् तत्त- ज्ज्ञानानन्तरमन्यत्र बद्धस्तत्र माषाणाम्प्रसक्तिक्रियाधिकरणत्वं प्रासत्वा- धित्वा परत्वाद्बन्धधात्वर्थतावच्छेदकफलप्रयोज्यफलाश्रयत्वात्कर्मसंज्ञा स्यात्। अधिकरणसंज्ञायास्तु 'कटे आस्ते' इत्यादौ चारितार्थ्यमस्ति, कर्तृ- ग्रहणसत्त्वे तु कर्तृपदकारकपदलभ्यधात्वर्थयोः प्रत्यासत्त्यैकत्वलाभे प्रकृत- धात्वर्थप्रधानीभूतव्यापारप्रयोज्यं यत्प्रकृतधात्वर्थफलन्तस्य लाभान्नाति- प्रसङ्ग इति भावः।

*तदाह*-तदभिप्रायेणाह। कर्मण इप्सिताः कर्मवृत्तिव्यापारप्रयो- ज्यफलाश्रयाः न कर्तुः न प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यफलाश्र- यत्वेनोद्देश्याः। यतस्तादृशफलाश्रयत्वेनोद्देश्यस्य कर्मत्वमतः कर्मका- रकस्य फले एवान्वयः। पयोऽग्न्युभयव्यावर्त्तकत्वमेकस्य प्रकर्षस्य न सम्भ- वतीत्याशयेन मूलोक्तं योजयति-*अवयवद्वारेति*। कर्त्तुरिति पष्ठ्यर्थ- प्रतिसम्बन्धिनोऽभावे आकाङ्क्षाशान्तिर्न भवतीति तच्छान्त्यर्थमुद्देश्यप- दमध्याहृत्य व्याचष्टे-*कर्त्तुरुद्देश्यमिति*। पयस उद्देश्यत्वमुपपादयति- *यदा कृतभोजन इति*। *तत्क्रियायाः*। भक्षणक्रियायाः। पयोलाभे- च्छाप्रयोज्यत्वं तत्क्रियायाः, अतः पयउद्देश्यकत्वमिति भावः। विशिष्टोपा- दाने तु यथा नातिप्रसङ्गस्तथोपपादयति-*ईप्सिततमेति*। तदा पयसः संस्कारकत्वमात्रविवक्षा न तु प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यफला- श्रयत्वविवक्षेति भावः। यदा तु संस्कारकत्वेन करणत्वस्य, फलाश्रयत्वे- कर्मत्वस्य च विवक्षा तदा परत्वात्कर्मत्वमेव भवति। *तमस्येति*। तन्मात्रस्येत्यर्थः। तमग्रहणाभावे कर्तृवृत्तिव्यापारवाचकधात्वर्थफलाश्र- यत्वं यस्य यस्य तस्य सर्वस्य कर्मत्वप्राप्तौ वारणार्थानामित्यनवकाशं

अग्नेर्माणवकं वारयति' इति । तदभावे हि 'वारणार्थानाम्' (पा०-सू०१।४।२७) इति सूत्रमस्यापवादः स्यात् । एवञ्च माणवकस्य कर्मत्वं स्यात् । न चाग्नौ तच्चरितार्थम् । तस्यापि तदुपस्थाप्यसंयोगरूफलाश्रयत्वात् । वारयतेश्च संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारोऽर्थः । एष एव प्रवृत्तिविघातः । ईप्सितशब्दे उभयत्रापि क्रियाशब्द एव । न च संयोगो न तत्कर्तृव्यापारजन्य इति अत्र कर्मत्वाप्राप्तिरिति वाच्यम् । कर्तृव्यापारवाचकधातूपात्तफलाश्रयत्वमित्यर्थस्यैव तेन लाभात् । तमब्ग्रहणे त्वीप्सितमात्रे सावकाशस्य परत्वादीप्सिततमे ऽनेन बाधः । ईप्सिततमत्वञ्च—प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम् । तच्च नाग्न्यादौ । फलव्यापारयोः प्रकृतधात्वर्थत्वन्तु प्रत्यासत्तिलभ्यं, तेन यदा पुष्ट्यर्थं माषभक्षणाय माषक्षेत्रे एवाश्वबन्धनं तदा 'माषेष्वश्वं बध्नाति' इत्यादौ माषाणां न कर्मत्वम् । बन्धनप्रयोज्यभक्षणफलाश्रयत्वे ऽपि भक्षणस्य बध्नात्यर्थत्वाभावात् । प्रयोज्यत्वनिवेशात् "गां पयो दोग्धि" इत्यादौ विभागानुकूलव्यापारानुकूलव्यापारार्थकदुहियोगे पयसः कर्मत्वसिद्धिरिति स्पष्टं भाष्ये ।

कर्मेत्यनुवृत्ताविति । "अधिशीङ्स्थासां कर्म" (पा०सू०१।४।४६) इति सूत्रात् । आधारेति । कर्तृकर्मद्वारा क्रियाश्रयो हि

---

तद्वारयतियोगे कर्मसंज्ञाबोधकमेव स्यादित्यतदुपपादयति—*तदभावे हीत्यादिना* । ननु प्रवृत्तिविघातस्यैव वारयत्यर्थतया संयोगस्य कथं तदुपस्थाप्यत्वमत आह—वारयतेश्चेति* । संयोगादीत्यादिपदेन भक्षणादिसङ्ग्रहः । *उभयत्र* । सूत्रद्वये तमग्रहणे हि यथा माणवकस्य कर्मत्वम्भवति तथाह—*तमग्रहण इति* । *ईप्सितमात्रे* । प्रकृतव्यापारवाचकधातूपस्थाप्यफलाश्रये कूपाग्न्यादौ । *व्यापारप्रयोज्यप्रकृतधात्वर्थेति* । एवञ्चैतादृशप्रयोज्यत्वलाभफलकन्तमग्रहणमिति भावः । *प्रत्यासत्तीति* । कर्तृपदार्थतावच्छेदकतया प्रकृतधात्वर्थप्रधानीभूतव्यापारलाभे तत्फलस्य शीघ्रोपस्थितिकत्वात्तत्रापि प्रकृतत्वलाभः । प्रकृतधात्वर्थप्रधानीभूतव्यापारजन्येति परित्यज्य प्रयोज्येति यन्निवेशितं तत्प्रयोजनमाह—*प्रयोज्यत्वनिवेशादिति* । नन्वाधारनिवृत्त्यर्थमित्यनुपपन्नं फलाधारस्यैव कर्मसंज्ञाविधानादत आह—*कर्तृकर्मद्वारेति* । एवञ्च

सः। तदाह- गेहमित्यादि। अनुक्ते कर्मणीति। कर्मपदेनैत-च्छास्त्रबोधितकर्मसंज्ञकं कर्मत्वशक्तिमद् गृह्यते। सर्वकर्मविहितद्वितीया-दीनां कर्मत्वशक्तिमानर्थः। क्रियाकारकभावः सम्बन्धश्च तदर्थः। "राज्ञः पुरुष इत्यत्र राजपुरुषयोः सम्बन्धस्य षष्ठी वाचिका, कष्ट-श्रित इति क्रियाकारकयोः सम्बन्धस्य द्वितीया वाचिका" इति सम-र्थसूत्रस्थभाष्यात्। (१)एवञ्च 'हरिं भजति' इत्यादौ हरिकर्मकं भजन-मिति बोधः।

अभिहिते त्विति। अनभिहिताधिकारादिति भावः। (२)...

---

यस्य कर्तृकर्मद्वारा धात्वर्थाधारत्वं स एवाधार इत्युच्यते। तण्डुलम्प-चतीत्यादौ तण्डुलादिकन्तु न तादृशपरम्परया आधार इति भावः।

"कर्मणि द्वितीया" इत्यादिसूत्राणां स्वसिद्धान्तरीत्याऽर्थमाह—*क-र्मपदेनैतदिति*। *कर्मत्वशक्तिमानिति*। एवं सति शाब्दबोधोऽपि कर्मत्वशक्तिमत्त्वेन। ननु कर्मणि द्वितीयाया एव विधानं न त्वन्यविभक्ते-रिति द्वितीयादीनामित्यसङ्गतमिति चेन्न। गत्यर्थकर्मणीतिसूत्रविहितचतु-र्थ्याः "कर्तृकर्मणोः" इतिसूत्रविहितषष्ठ्याश्च सङ्ग्रहार्थन्तथाकथनात्। *क्रियाकारकभावसम्बन्धश्चेति*। क्रियाकारकयोर्भावः क्रियात्वकारकत्व-समूहः तद्रूपः सम्बन्धश्चेत्यर्थः। कर्मत्वादिशक्तिविशिष्टस्य द्वितीयादि-वाच्यत्वे कर्मणि द्वितीयेत्यादिसूत्रं साधकमिति सुप्रसिद्धमेव। सम्बन्ध-स्य वाच्यत्वे तु भाष्यं साधकमाह—*राज्ञः पुरुष इत्यत्रेति*। एतेना-श्रयत्वेनाश्रयस्य वाच्यत्ववादिप्राचीनमतान्निरस्तम्। एवं सति यादृशो बोधस्तमाह—*एवञ्चेति*।

---

(१) *एवञ्चेति*। तत्रोक्तविधहरिरूपप्रकृत्यर्थौ विशेषणद्वितीयार्थश्च स्वनिष्ठशक्तिनिरूपक-सम्बन्धेन धात्वर्थे फले विशेषणम्। फलं तु व्यापारे। तथाच-हरिरूपं यत्कर्म तन्निष्ठशक्तिनिरूपक-प्रीत्यनुकूलो व्यापारः। एवञ्चाभेदसम्बन्धावच्छिन्नहरिनिष्ठप्रकारतानिरूपित-कर्मनिष्ठविशेष्यतानि-स्वनिष्ठशक्तिनिरूपकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितप्रीतिनिष्ठविशेष्यताभिन्नजनकत्वसम्बन्धावच्छिन्न-करतानिरूपितव्यापारनिष्ठविशेष्यताक इति बोधाकारः फलितः।

(२) ननु 'उक्तार्थानामप्रयोग' इति न्यायेन 'बहुपटु' इत्यादौ बहुजादयो यथा न, तथा 'कृतः कटः' इत्यादावपि तिङादिभिः कर्माद्यर्थस्योक्तत्वात् द्वितीयादयो न भविष्यन्त्येवेति अनभिहिताधिकारो व्यर्थ इत्यतः 'पञ्चकं प्रातिपदिकार्थः' इति पक्षेऽपि कर्मणि द्वितीयेत्यादे र्द्व्येकयोरित्यादेश्च नियमे तत्तदर्थ-भेदेनानभिहिताधिकारस्य साफल्यासाफल्यं वक्तुमाह-*पञ्चकं प्रातिपदिकार्थेति*। संख्या विभक्त्यर्थ इति पक्षे तस्याप्रत्ययार्थत्वेन प्राधान्यादनभिहिताधिकारारम्भे च कर्मणि द्वितीयेत्यस्य अनभिहिते कर्मणि यदे-कत्वं तत्र द्वितीयैकवचनमिति वाक्यार्थे 'कृतः कटः' इत्यादौ क्तप्रत्ययेन कर्मण उक्तत्वान्न द्वितीयैकवच-नम्। तदनारम्भे तु कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमिति वाक्यार्थः। 'कृतः कटः' इत्यत्र कर्मण उक्त-त्वेऽपि एकत्वस्यानुक्ततया द्वितीयैकवचनं दुर्वारं स्यादिति 'अनभिहिताधिकार' आवश्यकः। कारकं वि-

ञ्चकं प्रातिपदिकार्थ इति पक्षे 'कर्मणि द्वितीया' (पा०सू०२।३।२) इत्यादेः "द्व्येकयोः" (पा०सू०१।४।२२) इत्यादेश्च नियमत्वम्। एतदभावेऽपि स्वादिसूत्रेण "अनिर्दिष्टार्थाः प्रत्यया स्वार्थे" इति कर्मादौ संख्यायाश्च स्वादीनां सिद्धेः। तत्र यदा कर्मणीत्यादे 'द्व्येकयोः' इत्यादेश्चैकवाक्यतायामेकस्मिन् कर्मणीत्यन्वयेन सूत्रजबोधे कर्माद्यर्थस्य प्राधान्यं तदा नार्थोऽनेन। सूत्रजबोधविषयप्रधानविषयेणोक्तार्थानामिति न्यायेन सिद्धेः। (१)यद्यपि "द्विर्बद्धं सुबद्धम्" इति न्यायेन "द्वौ ब्राह्मणौ व्यतिलुनीते" इत्यादौ द्योतकवाचकयोश्च समुच्चयो दृष्टस्तथापि प्रकृते लक्ष्यानुसारादुक्तार्थानामिति न्यायानुसरणस्यैव वक्तुं शक्यत्वात्। एवञ्च कर्मादीनां द्योत्यत्वमेव। यदा तु कर्मगते एकत्वे इत्यन्वयेन संख्यायास्तत्त्वं तदा सूत्रमारब्धव्यम्। भाष्ये एषु विभक्त्यर्थत्वव्यवहारो द्योत्यतयैव न त्वेतावता तच्छक्यत्वमेषां भ्रमितव्यं, नियमत्वानुपपत्तेरिति स्पष्टं 'बहुषु' (पा०सू०१।४।२१) इति सू-

---

* अनभिहित इति सूत्रं यथा प्रत्याख्यातन्तत्प्रकारमाह—*पञ्चकेत्यादि*। *एतदभावेऽपीति*। एतयोः सूत्रयोरभावेऽपीत्यर्थः। *तत्र यदेति*। कर्मणीत्यस्य नियमार्थत्वपक्षे इत्यादिः। भाष्यप्रसिद्धप्रत्याख्यानप्रकारमुक्त्वाऽनभिहितसूत्रारम्भवादिसूत्रकारमतमाह—*यदा त्विति*। *तत्त्वम्*। वाच्यत्वम्। *सूत्रम्*। अनभिहित इत्येतत्। अनयोः पक्षयोर्मध्ये द्योतकतापक्ष एव मुख्यो भाष्यसम्मतत्वात्। ननु पञ्चकश्चेत्प्रातिपदिकार्थस्तदा कर्मादिषु विभक्त्यर्थत्वव्यवहारस्य भाष्यसम्मतस्य का गतिरत आह—*भाष्य इति*। *विभक्त्यर्थत्वव्यवहार इति*। "सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्" इत्यत्र तथा व्यवहार इत्यर्थः। ननु द्योतकविषये उक्तार्थानामितिन्यायस्य व्यभिचारः

---

र्थ इति पक्षे तु अनभिहिते कर्मणि द्वितीयेति यथाश्रुतवाक्यार्थे 'कृतः कटः' इत्यत्र क्तप्रत्ययेन कर्मण नात् द्वितीयैकवचनस्याप्रवृत्तौ प्रातिपदिकार्थमात्रे प्रथमाया एव प्रवृत्त्याऽनभिहिताधिकारो नावश्यक प्रत्याख्यात आकरे। एवञ्चान्यतरपक्षाश्रयणेनानभिहिताधिकारस्याऽऽवश्यकत्वानावश्यकत्ववत् पञ्चकं दिकार्थ इति पक्षे संख्याकारकयोः प्रातिपदिकार्थत्वेऽपि तस्यावश्यकत्वानावश्यकत्वमिति भावः। कं प्रातिपदिकार्थ इति पक्षे संख्याकारकयोर्विभक्त्यर्थत्वेऽप्यन्यभेदनैव बोध इति बोध्यम्।

(१) ननूक्ताधिकाराभावे उक्तार्थानामिति न्यायेन कृतः कटः इत्यादौ न दोषवारणं द्वौ ब्राह्मणावित्यादौ द्योतकवाचकयोः व्यतिलुनीते इत्यत्र च द्योतकयोः समुच्चयस्य दृष्टत्वेन न्यायस्य व्यभिचरितत्वमित्याशंकते-यद्यपीति*।

त्रे भाष्यादिषु। द्योतकविषयेऽप्युक्तार्थानामिति न्यायो 'अधिपरी'(पा० सू० १।४।९३) इति सूत्रे भाष्ये दृश्यते । तत्र हि—अध्यागच्छतीत्यादावागच्छतीत्यतोऽनधिकार्थयोरधिपर्योः प्रयोगस्योक्तार्थानामिति न्यायेनाभावमाशङ्क्य 'अपूपौ द्वौ' इत्यादावुक्तार्थानां प्रयोगदर्शनेन समाधानं कृतम् । तत्र हि द्विशब्दापूपशब्दयोर्वाचकयोः प्रकृतिप्रत्ययोर्वाचकद्योतकयोर्द्वावित्यत्र तयोर्वाचकानुवादकयोश्च समुच्चयः। अत एव 'द्विदशा' इत्यादौ समासेन सुजर्थस्योक्तत्वान्न सुजिति भाष्ये उक्तम्। तत्र हि—समासः सुच्चेत्युभयमपि द्योतकम्। सुजर्थश्च जन्मेति तत्रैव वक्ष्यते । तथा तद्धितद्विर्वचनयोर्द्योतकयोस्तद्धितेनोक्तत्वाद्वीप्सायां न द्विर्वचनं माषश इत्यादाविति "सर्वस्य द्वे" (पा० सू० ८।१।१) इति सूत्रे भाष्ये उक्तम्। एवञ्च धातोरपि क्रियात्वक्रियाकालकारकसंख्यारूपं पञ्चकमर्थः। अत एव तद्विषयेऽपि द्व्येकयोः' इत्यादेर्भावकर्मणोः, (पा० सू० १।३।१३) इत्यादेश्च नियमत्वं भाष्यसंमतं सङ्गच्छते। अत एव 'दधि' अजर्घाः' 'अवेत्' इत्यादौ प्रातिपदिकधातुमात्रमेव सर्वबोधः। अत एव 'भावकर्मणोः' इत्यस्य तद्वृत्ताद्धातोरित्यर्थः 'स्नुक्रमोः' (पा० सू० ७।२।३६) इति सूत्रे भाष्ये दर्शितः। द्योत्यत्वादेवोभयत्रापि प्रत्ययार्थस्य विशेषणत्वमेवेत्यन्यत्र विस्तरः।

---

पूर्वत्र प्रदर्शित इति कथन्तन्न्यायमाश्रित्य प्रत्याख्यानमत आह—*द्योतकविषय इति*। *दृश्यत इति*। तत्रत्यपूर्वपक्ष इति शेषः। *तत्रेति* तत्सूत्रस्थभाष्ये। केवलद्योतकस्थलमाह—*अत एवेति*। द्योतकविषयेऽपि तन्न्यायाङ्गीकारादेव। यथा प्रातिपदिकविषये पञ्चकपक्षाङ्गीकारस्तथा धातुविषयेऽप्याह—*एवञ्चेति*। अत एव उभयत्र पञ्चकपक्षाङ्गीकारादेव। *अत एव*। तत्तत्पञ्चकस्य तत्तद्वाच्यत्वादेव। *अत एव*। उक्तपञ्चकस्य धातुवाच्यत्वादेव। *तद्वृत्तात्*। भावकर्मवाचकात्। *उभयत्र*। प्रातिपदिकस्थले धातुस्थले च। एवञ्च हरिम्भजतीत्यादितः कर्मीभूतहरिकर्मकम्भजनमितिरीत्या बोधः। अत एव "सत्त्वप्रधानानि नामानि" इतिवाक्यं स्वार्थादिनिरूपितप्राधान्यं यतो नामार्थस्यातः साधु सङ्गच्छते। पचतीत्यादौ चैककर्तृविशिष्टा वर्तमाना पाकक्रियेतिरीत्या बोधः।

ननु प्रातिपदिकार्थे प्रथमैवेत्यपि कथं? तत्राप्यनभिहिताधिकारात्

प्रथमैवेति । सा हि प्रातिपदिकार्थस्य तेनोक्तत्वे ऽपि भवत्ये-
वेति भावः(१) । अत एव 'अभिहिते प्रथमा' इति वार्त्तिकं सङ्गच्छ-
ते । 'तिङ्कृत्' इत्यादिपरिगणनादेव 'कटं भीष्मं कुरु' इत्यादौ त्रि-
क्रियादुत्पन्नद्वितीयया गतार्थत्वे ऽपि विशेषणात्सा । यदा तु प्रक्रि-
यादशायाङ्कटो ऽपि कर्म भीष्मादयो ऽपि इत्याश्रयणात् कटत्वविशि-
ष्टकर्मत्वोक्तावपि भीष्मत्वादिगुणविशिष्टनिष्ठस्य तस्य बोधार्थं त-
तोऽपि सा । बोधस्तु परस्परं तयोर्विशेष्यविशेषणभावेनैव । कारका-

---

आह—*सा हीति* । *अत एव* । कर्मादीनामभिधानस्थले प्रथमा-
याः सर्वसम्मतत्वादेव । *विशेषणात्सेति* । भीष्मपदाद्द्वितीयेत्यर्थः । प-
रिगणनप्रत्याख्यानमाह—*यदा त्विति* । एतत्पक्षस्य यदि कर्मत्वं शा-
ब्दविशेषरूपं तदोपपत्तिः सुष्ठु सम्भवति । प्राचीनमते तु फलाश्रयत्व-
मेव कर्मत्वमाश्रयता चाश्रयभेदेन भिद्यते, प्रकृते तु नाश्रयभेदो यद्यप्यस्ति
तथाप्याश्रयतावच्छेदकभेदादाश्रयताभेदमङ्गीकृत्य यथाकथञ्चित्कर्त्तव्या ।
अत्र प्राञ्चः । यथा 'अश्वेन पथा दीपिकया निशायां ग्रामं व्रजति चैत्रः' इ-
त्यादौ सर्वेषां कारकाणां धात्वर्थे स्वातन्त्र्येण विशेषणतयाऽन्वयस्तथा
'कटम्भीष्मम्' इत्यादावपि स्वातन्त्र्येणोभयोः क्रियायाम्प्रकारत्वं शाब्द-
बोधे पार्ष्ठिकन्तु परस्पराभेदावगाहि मानसमिति तन्न युक्तमित्याशयेनाह—
*बोधस्त्विति* । *तयोः* । द्वितीयान्तपदद्वयार्थयोः ।
*विशेष्यविशेषणभावेनैवेति* । इतरसम्बन्धानवच्छिन्नविशेषणवि-

---

(१) *भवत्येवेति भाव इति*। हरिः सेव्यते इत्यादावित्यर्थः। अत्र भट्टोजीदीक्षितमते देवदत्ताभिन्नक-
र्तृकत्वविशिष्ट-हर्यभिन्नकर्मकप्रीत्यनुकूलो व्यापार इत्येव बोधः । भावप्रधानमाख्यातमिति निरु-
क्तवचनस्य कर्तृकर्माख्यातसाधारणेन सर्वत्र भावनाविशेष्यकशाब्दबोधस्यैव तेन अभ्युपगमात् ।
प्रकृतग्रन्थकृतस्तु 'पक्वस्तण्डुलः' इत्यादौ कर्मकृत्तप्रत्ययसमभिव्याहारे फलव्यापारयोः फलस्य विशे-
ष्यतया बोधस्यावश्यकतया कर्माख्यातेऽपि 'देवदत्तेन हरिः सेव्यते' इत्यादौ कर्तृभिन्नदेवदत्तनिष्ठकत्वविशि-
ष्टव्यापाराभिन्नहरिनिष्ठा प्रीतिरित्यादिफलविशेष्यक एव बोधः । एवञ्च प्रत्ययार्थे साक्षात्सम्बन्धेन प्रकृत्यर्थ-
प्रकारकान्वयित्वस्योत्सर्गतः सिद्धस्य न त्यागः। अन्वयित्वञ्च विशेष्यतया विशेषणतया वा । अत एव कर्तृ-
कारके न फलविशेष्यको बोधः । अन्यथा क्लृप्तनियमभङ्गापत्तेः । अत एव "सुप आत्मनः क्यच्" इति
सूत्रे भाष्ये "अथेह क्यचा भवितव्यम् । इष्टः पुत्रः इष्यते पुत्रः । न भवितव्यम् । किं कारणम् ? समान-
वाक्ये वाक्येन भवितव्यम् प्रत्ययान्ते । न च यश्चेहार्थो वाक्येन गम्यते इष्टः पुत्रः इष्यते पुत्र इति च ।
स जातु कदाचित् प्रत्यायान्ते न गम्यते" इत्युक्तं सङ्गच्छते । अन्यथा एकाश्रयकपुत्र-
कर्मकेच्छानुकूलो व्यापार इति बोधस्योभयत्रापि तुल्यत्वेन भिन्नार्थत्वादितिभाष्यासङ्गतिः स्पष्टैव
। कर्मलकारे फलविशेष्यकबोधे तु एकाश्रयकव्यापारजन्या पुत्रकर्मकेच्छा इति बोधः । कर्तृ-
लकारे अत एव न तथेति भिन्नार्थत्वं स्पष्टमेवेत्याहुः । तस्मान्नैतत्प्रकृतग्रन्थकृदाभिमतम् ।
केचित्तु कर्तरि लकारे आख्यातार्थसंख्यायाः कर्तर्यन्वयः कर्मलकारे तु कर्मणीत्येतावतैव भिन्ना-
र्थत्वेन न प्रागुक्तभाष्यविरोध इत्याहुः ।

णां भावनान्वयव्युत्पत्तिः साक्षात्स्वाश्रयद्वारा वाऽन्वयविषयेति तद
परिगणनं भाष्ये प्रत्याख्यातम्। तिङ्कृतौ स्वप्रकृत्यर्थं प्रति यस्य यस्य
कर्मता तस्य सर्वस्यापि कर्मतामाहतुरिति। 'कृतः कटः सुन्दरः'
त्यादौ न क्वापि द्वितीयेति दिक्।

शत्य इति। (१)अत्र वदन्ति—कर्मादिपद इवात्रापि
विभक्तिवाच्यतावच्छेदकरूपेण कर्मादेर्भानम्, अत औपगवश्चित्र
रिति युक्तं प्रत्युदाहर्तुम्। तत्र च सम्बन्धस्य येन रूपेण षष्ठ्या

---

शेष्यभावेनैवेत्यर्थः। समानविभक्तिकनामार्थयोरसति बाधकेऽभेदान्व
स्यौत्सर्गिकत्वात्। कर्मभीष्माभिन्नकर्मकटकर्मकं करणमित्यादिरि
'भीष्मं कटं करोति' इत्यादिभ्यो बोधः। यदि स्वातन्त्र्येण क्रियायामे
भयपदार्थान्वयबोधस्तदाऽभेदान्वयबोधसामग्र्यभावसम्पादनाय कि
त्प्रतिबन्धकत्वं कल्पनीयमिति गौरवम्। किञ्चैतद्वाक्यजन्यशाब्दबोधानन्त
कृटो भीष्मो न वेतिसन्देहनिवृत्त्यर्थन्नियमेन तादृशमानसकल्पना का
एवं सति सा मानसव्यक्तिस्तत्प्रागभावस्तद्ध्वंसश्च कल्पनीय इत्यतिगौ
वम्। किञ्च प्राचीनमते 'कटम्भीष्मङ्कुरु' इत्याकारकवाक्यजन्यशाब्दबो
सामग्र्याः स्वातन्त्र्येण भीष्मभिन्नः कटः सुन्दर इत्याकारकविशिष्टे वै
ष्ट्यमितिरीत्या यत्प्रत्यक्षन्तत्र प्रतिबन्धकत्वङ्कल्पनीयमित्यतिगौरवम्, अ
न्मते तु शाब्दसामग्र्याः 'कटो भीष्म' इत्याकारकयोग्यताज्ञानघटितत
तादृशयोग्यताज्ञानसत्त्वे विशेष्यतावच्छेदकप्रकारकज्ञानात्मककारणा
वादेव तादृशविशिष्टे वैशिष्ट्यमितिरीत्या यत्प्रत्यक्षन्तदापत्तिवारणे श
ब्दसामग्र्याः स्वातन्त्र्येण प्रतिबन्धकत्वन्न कल्पनीयमिति लाघवमि
दिक्। ननु भीष्ममित्यस्य द्वितीयान्तार्थस्याभेदेन कटेऽन्वयस्वीकारे का
रकाणां भावनाऽन्वयव्युत्पत्तिभङ्ग इत्यत आह—*कारकाणामिति*
*अन्वयविषयेतीति*। अस्य स्वीकारेणेति शेषः। नन्वेवङ्कृतः कटः सु
न्दर इत्यत्र कटनिष्ठकर्मत्वस्याभिधानेऽपि सुन्दरपदार्थनिष्ठकर्मत्वस्यानभि
धानाद् द्वितीया स्यादत आह-*तिङ्कृताविति*। *यस्य यस्य कर्मे
ति*। साक्षात्परम्परया वेति शेषः।

मूलादिकं खण्डयति-*अत्र वदन्तीति*। *कर्मादिपदे इति*।
स्योच्चारिते सति तज्जन्योपस्थितौ यथा न विभक्तिवाच्यतावच्छेदक
रूपेण भानन्तथेति शेषः। *रूपेण*। कर्मत्वशक्तिमत्त्वेन। यथा-क
शब्दजन्यविकल्पोपस्थित्यपेक्षया विकल्पपदजन्यविकल्पोपस्थितिर्वि

---

(१) तद्धितसमासयो र्मूलोक्तप्रत्युदाहरणं विघटयितुं केषांचिमतमाह–अत्रवदन्ति. इति*।

त्, तेनैव तद्धितान्तादिभिस्समुदायशक्त्या। एतदधिकाराभावे च घ-
इत्यादौ षष्ठ्यवाच्यत्वेन दृष्टानामेव प्रातिपदिकार्थपदेन ग्रहणं स्यात्,
तद्भिन्नस्यैव च षष्ठीविधायके शेषपदेन ग्रहणं स्यादित्यत्र सम्बन्ध-
स्य षष्ठीवाच्यत्वेन दृष्टतया प्राप्तां षष्ठीं वारयितुं सः।

वस्तुतस्तु 'कटं भीष्मम्' इति परिगणनफलमुक्त्वा तत्प्रत्याख्या-
नाय "अशेषत्वान्नात्र शेषलक्षणा षष्ठी, अन्यानभिहित(१)कर्मादी-
नामभावाच्च नान्या" इत्याशङ्क्य "न केवला प्रकृतिरिति समयः
कृतः। न चान्योत्पद्यमाना एनमभिसम्बन्धमुत्सहते वक्तुमिति कृ-
ता द्वितीया" इत्युक्तं भाष्ये(२)। तेनौपगवादावपि षष्ठी वारितैवे-

---

क्षणा सत्त्वासत्त्वाभ्यान्तयोर्वैलक्षण्यस्यानुभवसिद्धत्वात्। *समुदायश-
क्त्येति*। 'औपगव' इत्यत्र तत्सम्बन्ध्यपत्यमित्यर्थे प्रत्ययविधानाच्चित्र-
गुरित्यत्र षष्ठ्यर्थे बहुव्रीहिविधानादिति भावः। *एतदधिकारेति*। अ-
नभिहिताधिकारेत्यर्थः। औपगवश्चित्रगुरित्यत्र षष्ठ्यापादनन्तदा समुदा-
यस्याद्यदा प्रातिपदिकार्थे विधीयमानया प्रथमया बाधो न स्यादित्या-
शङ्कानिवारणायाह—*घट इत्यादाविति*। *दृष्टानामेवेति*। प्रवृत्तिनि-
मित्ततदाश्रयरूपाणाम्। *तद्भिन्नस्यैवेति*। प्रवृत्तिनिमित्ततदाश्रयाभ्या-
म्भिन्नस्येत्यर्थः। *षष्ठीवाच्यत्वेन दृष्टतयेति*। अनभिहिताधिकाराभा-
वे अभिहितानभिहितसाधारणसम्बन्धमात्रस्य 'षष्ठी शेषे' इति सूत्रे शेष-
पदेन ग्रहणं स्यात्। अनभिहिताधिकारे तु कृतेऽनभिहितसम्बन्धस्यैव ष-
ष्ठीवाच्यतया औपगवश्चित्रगुरित्यत्र प्रतीयमानस्य तु प्रातिपदिकेनाभि-
हिततयाऽयं षष्ठ्यवाच्य इति प्रवृत्तिनिमित्तरूपोऽयं सम्बन्धः प्रातिपदि-
कार्थपदेन गृह्यत इति प्रथमा भवतीति भावः। अत एव प्रकृतसूत्रभाष्ये
कर्मणि द्वितीयेत्यादिविषयेऽधिकारफलमुक्त्वाऽन्ते औपगवश्चित्रगुरित्य-
धिकारफलमुक्तम्।

वस्तुत इदमपि न प्रत्युदाहरणफलमित्याशयेनाह—*वस्तुतस्त्विति*।
*नात्रेति*। भीष्मादौ। *नान्या*। द्वितीयादयः। *एनमभिसम्बन्धमि-
ति*। क्रियाकारकभावरूपम्। *तेन*। अशेषत्वादित्यनेन। अस्मिन्नेवा-

---

(१) *कर्मादीनामिति*। अतद्गुणसंविज्ञानबहुव्रीहिणा कर्मादीनामित्यर्थः। अन्यथा विशेष-
णत्वव्यवहितोत्तरद्वितीयया कर्मणो विहितत्वात्तदसङ्गतं स्यात्।

(२) *उक्तं भाष्ये इति*। परिगणनप्रत्याख्यानावसरे 'अनभिहिते' इति सूत्रे भाष्ये इत्यर्थः।
*षष्ठी वारितैवेति*। समासादिनाऽविहितस्य सम्बन्धस्य प्रातिपदिकार्थत्वेन शेषत्वाभावाभावादशेषत्वा-
न्नैव शेषलक्षणा षष्ठीति भाष्येण वारितैवेत्यर्थः।

ति तयोरप्यप्रत्युदाहरणत्वमेव । (१)तदुक्तम् "अनेकम्" (पा०सू० २।२।२४) इत्यत्र भाष्ये ऽपि "चित्रगुरित्यत्र षष्ठ्यर्थस्य नियमेन भानात् षष्ठी प्राप्नोति" इत्याशंक्य "अनाभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न इति प्रथमा" इत्युक्तम् । अनेनाशेषत्वरूपं षष्ठी प्राप्तिबीजमुक्तम् 'अन्तर्भूतः' इत्यनेन चित्रग्वादौ सम्बन्धस्यैव प्रवृत्तिनिमित्तत्वेन प्रातिपदिकार्थपदेन ग्रहणयोग्यतोक्तेति बोद्ध्यम् ।

(२)परे तु 'शत्यः' इत्यादौ कारकान्वययोग्यतावच्छेदकसाध्यत्वेन न क्रयादेर्भानम् । अत एव तत्रेतरकारकाणामन्वयः । इदम् "कर्तृकर्मणोः" (पा०सू०२।३।६५) इत्यत्र निरूपयिष्यते । एवं 'प्राप्तानन्दः' इत्यादौ यत्कर्मकप्राप्तिकर्त्ताऽऽनन्द इति विग्रहतो बोधे समासतश्चानन्दकर्तृकप्राप्तिकर्मेति बोधे विशेष्यविशेषणभावव्यत्यासे कार्यीभावः कल्प्यः स्यात् , वृत्तिविग्रहयोः समानार्थत्वभङ्गश्च ।

---

र्थे भाष्यान्तरमपि साधकमित्याह*-तदुक्तमिति ।

स्वसिद्धान्तमाह-*परे त्विति । *साध्यत्वेन न भानमिति* । यद्यपि शतेन क्रीत इत्यर्थे "शताच्च ठन्यतौ" इति सूत्रेण यति निष्पन्नस्य शत्यशब्दस्य शतकरणकक्रयणकर्मबोधकता तथापि प्रत्ययान्तसमुदायेनोपस्थिता या क्रिया तस्या न साध्यत्वेन भानम् । *अत एव* । साध्यत्वेनाभानादेव । 'मन्दुरायां शत्योऽश्व' इति वाक्यान्मन्दुराधिकरणिका शत्यकर्तृका स्थितिक्रियैवानुभवसिद्धा, नतु मन्दुराधिकरणिका शतकरणिका क्रयणक्रिया । कारकान्वययोग्या क्रिया धातूपस्थितैव न तु तद्धितशब्दोपस्थिता । अत एव 'शत्योऽश्वो देवदत्तेन' इति न प्रयोगः । एवम्प्राप्तोदको ग्राम इत्यत्र प्राचीनसम्मतबोधप्रक्रियायान्दूषणमाह-*एवम्प्राप्तेत्यादि* । आदिना प्राप्तोदकेत्यस्य सङ्ग्रहः । *कल्प्यः स्यादिति* । इदञ्च न युक्तम् । वृत्तिविग्रहयोः समानविशेषणविशेष्यभावावगाहिबोधजनकत्वस्य सिद्धान्तिसम्मतत्वात् । विशेषणविशेष्यभावव्यत्यासे दोषमप्याह-*वृत्ति*

---

(१) ननु येन रूपेण षष्ठ्याः सम्बन्धस्य भानं तेनैव रूपेण समासादेः सम्बन्धस्य भानमङ्गीकृत्य कथमुक्तस्थलीय भाष्येण षष्ठीवारितेत्यतः "अनेकमन्यपदार्थे" सूत्रस्थभाष्योक्तषष्ठीवारणप्रकारं दर्शयितुं तत्र प्रमाणमाह—*तदुक्तमिति* ।

(२) शत्येत्यादि तद्धितान्तात्, प्राप्तानंद इत्यादि समासाच्च, कारकान्वययोग्यतावच्छेदकरूपेणानभिहितक्रियायाः, क्रियाजनकत्वेन कारकस्य च भानाभावात् कारकविभक्त्यप्रसक्त्या तद्वारणाय नानभिहिताधिकारो नावश्यक इति प्रकारान्तरेण मूलोक्तप्रत्युदाहरणासङ्गतिं वक्तुमाह—*परेत्वित्यादि* ।

तथासति बहुव्रीह्युपजीव्यस्यैकधर्मिबोधकत्वरूपसामानाधिकरण्यस्य ...नि: । किंचैवं प्राप्ता भार्या यं स 'प्राप्तभार्यः' इत्यादौ पुंस्त्वानापत्तिः । पूर्वोत्तरपदयोरेकविशेष्यकप्रतीतिजनकत्वरूपवक्ष्यमाणसामानाधिकरण्याभावात् । (१)तस्मात् "कालाः परिमाणिना" (पा०सू०... २।२५) इत्यादिसूत्रभाष्योक्तस्य वृत्तिविग्रहयोः समानार्थत्वस्य निर्वाहार्थं वृत्तिविग्रहयोः प्राप्तिकर्त्रानन्दकर्मेत्येव बोधः । विशेष्ये (२)तन्निरूपकत्वबाधेन तु विशेषणभूतप्राप्तौ तत्पर्यवसानं 'स्वर्गी ध्वस्तः' इतिवत् । शाब्दबोधस्तु विशिष्टे तदारोपेणोपपाद्यः ।

एवञ्चात्र शब्दात्कर्मादेः क्रियाजनकत्वेन विभक्तिवाच्यतावच्छेदकोद्भूतशक्तिमत्त्वेन च न भानम्, अतो न विभक्तिप्रसक्तिः । अत एव "गतिकारकोपपदात्" (पा०सू०६।२।१३९) इति सूत्रे "गतिकारकोपपदादिति किमर्थं परमं कारकं परमकारकम्" इति ...मुपादाय 'यथा सम्प्रदानादयः शब्दा न कारकरूपतां प्रतिपादयन्ति तथा कारकशब्दोऽपीति । कृदन्ता हि क्रियायोग्यताविशिष्टरूपवाचिनो न तूद्भूतां कारकशक्तिं प्रतिपादयन्ति' इति कैयटेनो...

---

...ति* । प्राचीनसम्मतबोधे दोषान्तरमाह-*किञ्चेति* । तादृशबोधे ...सिद्धिमप्याह-*किञ्चेति* । ननु कर्मत्वं क्रियानिरूपितन्न तु द्रव्यानिरूपितमिति प्राप्तिकर्त्रानन्दकर्मेति कथम्बोध इत्यत आह-*विशे... इति । *आनन्दे* । *तत्पर्यवसानमिति* । कर्मतानिरूपकत्वपर्यवसा... । *विशिष्टे* । विशेषणविशिष्टे । 'सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाध" इतिन्यायात् ।

प्रकृतमाह—*एवञ्चेति* । अत एव* । उद्भूतकर्मत्वशक्तिमत्त्वेन भानाभावादेव । *कैयटेनोक्तमिति* । एवञ्च कारकशब्दजन्यप्रतीतिविशे...प्रतिपादकः परमशब्दोपि नोद्भूतकृधात्वर्थनिरूपितकारकशक्तिप्रतिपादकः । गतिकारकोपपदादित्यस्य कृत्प्रत्ययप्रकृतिधात्वर्थनिरू...

---

(१) *तस्मादिति* । पुंवद्भावायोक्तविधसामानाधिकरण्यस्यावश्यकत्वादित्यर्थः । एतस्य च हेतुत्वेन ...यादावन्वयः । फलमपीह हेतुरिति न्यायेन भाष्योक्तसमानार्थत्वनिर्वाहस्यापि तत्रैव हेत्वन्तरं ...-*कालाः परिमाणिनेति* ।

(२) *विशेष्ये इति* । सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्येबाध इति न्यायः ।

...तथाविधशाब्दबोध एव कथं स्यादित्यतस्तं दर्शयति-*शाब्दबोधस्त्विति* ।

क्तम् । अत एव (१)तस्य कर्मत्वस्य न क्रियान्वयनियमः । अन्यथा कारकशक्तेः क्रियाविशेषणत्वनियमेन कर्मादिप्राधान्यानापत्तिः । पूर्वं कर्मादिपदैरिव पक्कादिपदैरपि न विभक्तिप्रयोजकरूपेण कर्मादीनां भानम् ।

तिङ्कृत्तद्धितसमासैरभिधाने' इत्यस्यायमर्थः—यत्तैरभिधाने तत्र तच्छक्त्यावेशेन न भानमिति विभक्त्यप्रसक्तिः।अत्रैव 'अनभिहिते'(पा० सू० २।३।१)इति तात्पर्यग्राहकम् । ध्वनितश्चेदं "सुप आत्मनः"(पा०सू० ३।१।८) इति सूत्रे भाष्ये। तत्र हि इष्टःपुत्रः इष्यते पुत्र इत्यर्थे क्यच शङ्क्य (२)'स्वशब्देनोक्तत्वान्न' इति समाहितम् । इष्टशब्दसामानाधि

---

पितोद्भूतशक्तिमत्कारकात्परत्व एव प्रवृत्तिरिति भावः । एतच्च हरिणाप्युक्तम्—

स्वशब्दैरभिधाने तु स धर्मो नाभिधीयते।
विभक्त्यादिभिरेवासावुपकारः प्रतीयते ॥

इति । स धर्मः शक्तिरूपः । विभक्त्यादिभिरित्यादिना दोषादिकं दिविभक्त्यर्थशक्तिप्रधानाव्ययस्य 'दधि पश्य'इत्यादौ लुप्तविभक्तिकप्रातिपदिकस्य च सङ्ग्रहः । *उपकारः* । उपकारकः । स्वावेशेन प्रातिपदिकस्य क्रियाम्प्रति विशेषणतानियामकः । *अत एव* । उद्भूतकारकशक्तिप्रतिपादकत्वाभावादेव । *तस्य* । कारककर्मादिशब्दप्रतिपाद्यशक्तेः । *न क्रियान्वयनियम इति* । द्रव्येष्यन्वयदर्शनात् । तथात्वे बाधकमप्याह—*अन्यथेति* । *विभक्तिप्रयोजकरूपेण* । उद्भूतकर्मत्वशक्तिमत्त्वेन । एवञ्चाभिधानविषये प्रातिपदिकस्योद्भूततत्तच्छक्तिविशिष्टेऽर्थे न वृत्तिरिति न तत्र सा सा विभक्तिः । पूर्वोक्तार्थे भाष्यान्तरमपि साधकमाह—*ध्वनितश्चेदमिति* । अत्र चोऽप्यर्थः । सूत्राप्राप्तिमुपपादयति—*सुप इति* । तत्र ह्येवमुक्तम् । 'अथेह कथं भवितव्यमिष्टः पुत्रः इष्यते पुत्रः । केचित्तावदाहुः । न भवितव्यमिति । किङ्कारणं स्वशब्देनोक्तत्वात्'। *स्वशब्देनेति* । इष्टशब्दसामानाधिकरण्यात्(३) इत्यत्र इत्यर्थः

---

(१) *तस्येति* । कृदन्तादिशब्दवाच्यस्येत्यर्थः । विपक्षे बाधकमाह—*अन्यथेति* ।

(२) *स्वशब्देनोक्तत्वादिति* । कर्मवाचकशब्देन इष्ट इत्यत्र क्तप्रत्ययेन, इष्यते इत्यत्र यक् समभिव्याहृतात्मनेपदेन चोक्तत्वादिति भावः ।

भाष्यतात्पर्यमाह—*इष्टशब्देति* । नकर्मवाचीति स्वशब्देनाभिहिते कर्मणि पुत्र इति तच्छक्त्यावेशेन भानविषयत्वाभावान्नकर्मवाच्यत्वमितिभावः ।

(३) एवञ्चेष्टशब्दसामानाधिकरण्येन पुत्रशब्दार्थगतङ्कर्मत्वं विना नाभिहितमिति पुत्रशब्दस्य प्रातिपदिकार्थमात्रवृत्तित्वेन पुत्र इति

रण्यात्पुत्रार्थे कर्मत्वावगतावपि पुत्र इति सुबन्तं न कर्मवाचीति न ततः क्यजिति तद्भावः । (१)स्वं कर्मत्वं–तद्वाचकशब्देन पुत्रगतं कर्मत्वमुक्तं, न तु पुत्रशब्दस्य तत्र वृत्तिरित्यक्षरार्थः । 'सुप आत्मनः' इति सूत्रस्य कर्मत्वविशिष्टबोधकसुबन्तादित्यर्थ इति तदाशयः । (२)वस्तुतः कर्मत्वविशिष्टो योऽर्थस्तद्बोधकादित्यर्थे 'इह भवन्तः' इत्यादिना समाद्ध्यन्तरमुक्तम् । वाक्ये फलं विशेष्यं वृत्तौ व्यापार इति समानार्थत्वाभावात्तत्रार्थे वृत्तिर्नेतीत्याहुः ।

---

निर्मुक्तेऽपि कर्मसंज्ञाप्रयोजकस्य क्रियापेक्षकर्मभावस्यार्थस्य प्रतिपादनादित्यर्थः ।

अयमर्थः । 'यदा क्रियाफलस्य कर्मणः प्राधान्यम्प्रतिपिपादयिषितं तदा वाक्यमेव प्रयुज्यते । पुत्र इष्ट इत्यादि न तु क्यजन्तः । तस्यास्यकर्मकत्वात्कर्मणि प्रत्ययानुत्पादात्'इति कैयटः। अपर आहुः भवितव्यमिति । किङ्कारणम् । धात्वर्थेऽयं क्यज्विधीयते स च धात्वर्थः केनचिदेव शब्देन निर्देष्टव्य इति । *स च धात्वर्थ इति* । इच्छायाः प्रत्ययार्थत्वन्दर्शयितुं वाक्यमुपादेयम् तत्र वाक्ये कर्तृप्रत्ययः प्रयुज्यताम् । कर्मप्रत्ययोवा । प्रत्यये तूत्पन्नेऽकर्मत्वात् कर्मप्रत्ययो न भवति । 'इह भवन्तस्तावदाहुः । भवितव्यमिति । सामनार्थेन वाक्येन भवितव्यं प्रत्यान्तेन च । यश्चेच्छार्थों वाक्येन गम्यते इष्टः पुत्र इष्यते पुत्र इति नासौ जातु चित्प्रत्ययान्तेन गम्यते' *नासौ जातु चिदिति* । 'प्रत्यान्तस्याकर्मकत्वात्कर्मणि प्रत्ययानुत्पादात्' इति कैयटः ।

---

तस्य कर्मत्ववाचित्वाभावादित्यर्थः । निर्भुक्तेति । इतरसामानाधिकरण्याज्ज्ञातकर्मभावस्य न तु स्वत इत्यर्थः । अथ वा निर्मुक्तेति पाठः । तदा निर्मुक्तः स्वत्यतया परित्यक्तकर्मभावस्येत्यर्थः ।

क्यजन्तः । अकर्मकत्वात् धात्वर्थसङ्गृहीतकर्मकत्वात् ।

(१) स्वशद्बेनोक्तत्वादिति भाष्यमक्षरशो व्याचष्टे- *स्वं कर्मत्वमित्यादि* ।

(२) भाष्यान्तरोक्तसामाधानं दर्शयति-*वस्तुतस्त्विति* अत्रारुचिबीजं तु इच्छारूपधात्वर्थे प्रत्ययविधानात् इच्छायाः प्रत्ययार्थत्वप्रदर्शनाय वाक्यमुपादीयते । तत्र वाक्ये कर्तृप्रत्ययः प्रयुज्यतां कर्मप्रत्ययो वेति नास्ति कश्चिद्विशेषः। उत्पन्ने तु प्रत्यये धात्वर्थसंगृहीतकर्मत्वेनाकर्मकत्वात्कर्मप्रत्ययो न भवति । तथाच पुत्र मिच्छति पुत्र इष्यते इति कथमिति वाक्यप्रयोगः, इच्छायाः प्रत्ययार्थत्वस्य प्रदर्शिते पुत्रीयतीतिप्रयोगो भवत्येवेति ।

*इहभवन्त इत्यादीति* । तत्रेत्थं भाष्यानुपूर्वी "इह भवन्तस्तावदाहुर्भवितव्यमिति किंकारणं समानार्थेन वाक्येन भवितव्यं प्रत्ययान्तेन च यश्चेच्छार्थों वाक्येन गम्यते इष्टः पुत्रः इष्यते पुत्र इति च । नासौ जातु कदाचित् प्रत्ययान्तेन गम्यते इति" ।

प्राचीनानुसारेणोक्तस्य प्रायेणेत्यस्य फलमाह—क्वचिदिति परे त्वत्र तुमुनः साधुत्वायेष्यत इत्यध्याहार आवश्यकः। अन्यथा क्रियार्थक्रियोपपदत्वाभावाच्छकादियोगाभावाच्च स दुर्लभः स्यात्। अध्याहारे तु इच्छार्थेषु तुमुनिति सुलभः। "विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमिष्यते" इति यत्तदसांप्रतम्—अन्याय्यमित्यर्थः। एवञ्चाध्याहृततिङाभिधानान्न द्वितीया तादृशेच्छाया अन्याय्यत्वञ्च तद्विषयस्यान्याय्यत्वेन। एवम्, 'अमुं नारद इत्यबोधि स' इत्यादौ 'नारद इति' इति श्रीकृष्णीयज्ञानाकारानुकरणम्। नारद इत्येतच्छब्दाभिलप्यमानाकारो बोध इत्यर्थ इति प्रथमान्तस्याप्रातिपदिकत्वान्न द्वितीया। अत एव 'अधिहरि' इत्यादौ समासः। तद्वचनसामर्थ्यस्य परिगणनत्वकल्पनैव युक्ता। अत एव "अभ्र आँ अपः" इत्यादौ सप्तमी। किं च निपातेनाभिधानेऽपि प्रातिपदिकादुद्भूततच्छक्तिमत्त्वेनैव भानमिति तत्र विभक्तिः सुलभा, शब्दशक्तिस्वभावादर्थैर्थस्य द्योतकोऽधिर्निपातः। अत एव परिगणनप्रत्याख्याने ऽपि न दोष इत्याहुः।

तथायुक्तम् (पा०सू०१।४।५०)। तत्त्वञ्च समभिव्याहृतधात्व

---

*प्राच्यानुसारेणोक्तस्येति*। "तिङ्कृत्तद्धितसमासैः" इति न परिगणनङ्किन्तूदाहरणमात्रमिति तद्भावः। प्राचाम्मतन्दूषयन्स्वमतमाह—*परे त्विति*। इष्यते इत्यध्याहारः। इदमपि पररीत्या स्वमते तु अत्राध्याहारपदार्थ उक्तः। *अन्यथा*। तदनध्याहारे। *अन्याय्यमिति*। यद्यपि "एतर्हि सम्प्रतीदानीमधुना साम्प्रतन्तथा" इति कोशात्साम्प्रतमव्ययमिदानीमित्यर्थकमिति प्रतीयते। तथापि निपातानामनेकार्थतया एवं व्याख्यातम्। एवम् 'अमुन्नारद इत्यबोधि' इत्यत्रेतिशब्देनोक्तत्वान्न द्वितीयेति प्राचोक्तं खण्डयति—*एवमिति*। *अत एव*। तिङ्कृत्तद्धितसमासैरिति परिगणनादेव। *समास इति*। निपातेनाधिकरणे उक्ते सप्तमी भवतीति तदन्तस्य समास इत्यर्थः।

ननु निपातेनाभिहितेऽप्यधिकरणे वचनसामर्थ्यात्सप्तमीत्यन्यत्रोक्तमेवेत्यत आह—*तद्वचनेति*। *अत एव*। परिगणनादेव। *तच्छक्तिमत्त्वेन*। अधिकरणत्वादिशक्तिमत्त्वेन। अत्र साधकमाह—*शब्दशक्तीति*। *न दोषः*। न सप्तम्या अनुपपत्तिः।

*तत्त्वञ्चेति*। तथा युक्तत्वञ्चेत्यर्थः। उपक्रमस्थभाष्योक्तमुदाहरण

प्रधानव्यापारप्रयोज्यतद्धात्वर्थफलाश्रयत्वरूपम्। पराधीनतया विषं भुञ्जाने ऽपि भुजिक्रियाफलाश्रयत्वेनोद्देश्यत्वात्पूर्वसूत्रेणैव सिद्धम्। तदुक्तं भाष्ये। "आतश्च विषमीप्सितं यत्तद्भक्षयति" इति तस्मात्। 'चोरान् पश्यति' इति द्वेष्योदाहरणम्। विषयेन्द्रियसंबन्धात् दृश्यमाना अपि न दर्शनोद्देश्या; अपि तु अनिष्टदर्शना एवेति स्पष्टं भाष्यकैयटयोः। एवञ्च तत्र पूर्वेणाप्राप्तौ वचनम्। (१)अनीप्सितम् अनुद्देश्यम्। तच्च द्वेष्यमुदासीनञ्च। तृणमिति। यथा स्पृश्यमानस्य गङ्गादेः स्पर्शादिजन्यसंयोगादिफलाधारत्वं तथैव तृणादेरपीति भावः। अनीप्सितपदाभावे इप्सितस्य प्रकर्षहीनस्याप्यनेन संज्ञाप्राप्तौ 'वारणार्थानाम्' इत्यनवकाशं स्यात्। तथायुक्तमिति किम्? 'विषेणौदनं भुङ्क्ते' इत्यादौ करणत्वमात्रविवक्षायां विषस्य मा भूत्। 'प्रयागात्काशीं गच्छति' इत्यत्र प्रयागस्य च माभूत् तत्सत्त्वे तु प्रकृतधात्वर्थफलाश्रयत्वरूपतत्त्वाभावान्न दोषः।

---

तथा सिद्धं यद्यपि तथापि तत्रत्यम्मुख्यमेवोदाहरणं वक्तुमुपक्रमते-*पराधीनेति*। *न दर्शनोद्देश्या इति*। एतेन प्रकृतधात्वार्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलायश्रत्वेनोद्देश्यत्वाभावान्न पूर्वसूत्रेण कर्मत्वसिद्धिरिति बोधितम्। *तच्चेति*। द्वेधेति शेषः। *तथा तृणादेरपीति*। एतेन तादृशफलाश्रयत्वेनोद्देश्यत्वाभावः सूचितः। *तृणादेरपीतीति*। समभिव्याहृतधात्वर्थफलं संयोगस्तदाश्रयत्वन्तृणादेरस्तीति तथायुक्तत्वमस्ति। अनीप्सितपदप्रयोजनमाह-*अनीप्सितपदाभाव इति*। *वारणार्थानामित्यनवकाशं स्यादिति*। तथा च यदा यवेभ्यो गवां वारणाय दण्डोद्यमनादिकङ्कृतन्तेनैव व्यापारेण गोषु सञ्चरन्त्यो महिष्योऽपि वारिता भवन्ति तादृशस्थले यवेभ्यो महिषीर्वारयतीति प्रयोगो न स्यादनीप्सितमहिष्या अप्यपादनत्वस्य प्राप्तेरिति। *विषेणौदनमिति*। शतधा धौतस्य घृतस्य द्वेष्यत्वेपि सितया संयोगे उपकारकत्वज्ञानेन तस्य करणत्वविवक्षेति भावः *तत्सत्त्वे त्विति*। तथायुक्तमिति पदसत्त्वे त्वित्यर्थः। तादृशस्थले विषस्य स्वव्यापारजन्यत्वसम्बन्धेन प्रधानीभूतव्यापारे एवान्वयविवक्षा न तु गलाधः संयोगरूपफ-

---

(१) पराधीनतया विषंभुञ्जाने विषस्योद्देश्यत्वाभावात् तदप्राप्तेस्तत्प्रापणार्थमिदामिति केचित्। तत्सूत्रस्थाऽनीप्सितपदार्थमाह-*अ- नन्तराचिवीजं प्रकटयन्नुदाहरणान्तरं दर्शयितुमाह-*पराधीनेति*। नीप्सितमिति*।

अपादानादिविशेषैरिति। तत्तद्रूपेणाऽऽभासमानमित्यर्थः। (१)अकथितशब्दोऽत्राऽसंकीर्तितपरो नाप्रधानपर इति भावः। (२)एवञ्च पूर्वविधिविषयप्रसक्तिपूर्वकं तदविवक्षायां सर्वथा पूर्वविधेरप्रसक्तौ चैतत्प्रवृत्तिरिति बोध्यम्। अपादानत्वादिविवक्षायां पञ्चम्याद्येव। केन रूपेण विवक्षेति चेत्? कर्मत्वेनेति गृहाण। कारकत्वव्याप्यसंज्ञानां स्वबोध्यार्थे कर्मत्वादिशक्तिमत्त्वबोधकत्वात्, बोधोऽपि तथैव।

तत्तच्छास्त्राभावे सर्वत्र षष्ठीप्राप्त्या सर्वासां तदपवादत्वेन तदपवादत्वमात्रेण सम्बन्धार्थकत्वं न युक्तम्। अतः एव 'कर्मणि द्वितीया' इत्यस्य न वैरूप्यम्। अत एवैतत्सूत्रशेषे भाष्ये ऽनेनैव सिद्धे आद्यसूत्र-

---

लाश्रयत्वस्य विवक्षेति भावः। एवम् 'प्रयागात्काशीङ्गच्छति' इत्यत्र प्रयागस्य प्रकृतधात्वर्थफलं संयोगस्तदाश्रयत्वविवक्षा नेत्यपि बोध्यम्।

अपादानादीत्यत्रापादानादिशब्दो भावप्रधाननिर्देशेनापादानत्वादिपरः। एवञ्च यत्फलितन्तदाह-*तत्तद्रूपेणेति*। यथाश्रुतार्थकत्वे ऽपादानत्वादीनां यत्र प्रसक्तिपूर्विका अविवक्षा तत्रैव स्यात्सर्वथा पूर्वविधेरप्रसक्तौ न स्यादिति भावः। *पञ्चम्येवेति*। 'गोः पयो दोग्धि' इति यथा अपादानत्वाद्यविवक्षायां यद्रूपमन्वयितावच्छेदकत्वेन विवक्षितन्तत्किमित्याकाङ्क्षाशान्तये आह-*केन रूपेणेति*। *तथैवेति*। कर्मत्वादिशक्तिमत्त्वेनैव। सर्वप्राचीनोक्तं सम्बन्धित्वेन बोधं खण्डयति-*तत्तच्छास्त्रेति* *षष्ठीप्राप्त्येति*। अस्यात इति शेषः। *अत एव*। अकथितश्चेतिसूत्रविषयेऽपि कर्मत्वेशक्तिमत्त्वेन द्वितीयाया बोधकत्वादेव। *न वैरूप्यमिति* यदि पूर्वसूत्रविषये कर्मत्वेन बोधकत्वमप्रकृतसूत्रविषये तु सम्बन्धित्वेन

---

(१) अभिमताकथितशब्दार्थं वक्तुमाह—*अकथितेति*। प्रकृतसूत्रस्थभाष्योक्तप्रश्नप्रतिवचनाभ्यामितिशेषः। तत्रहि केनाकथितमितिप्रश्ने अपादानादिभिर्विशेषकथाभिरिति प्रतिवचनं स्पष्टमुक्तम्। *नाप्रधानपर इति*। अन्यथा दुह्याद्यतिरिक्तविषये सावकाशाधिकरणापादानविषये "गो दोग्धि" इत्यादौ अवधित्वाद्विवक्षायामपि परत्वादनेन कर्मत्वापत्तेरिति भावः।

(२) अकथितपदस्याकीर्तितपरत्वेचेत्यर्थः।

*पूर्वविधि विषय इति*। तदुक्तञ्च प्रकृतेसूत्रे भाष्ये किमुदाहरणमित्युक्त्वा "दुह्यच्रुधिप्रच्छि...चिञामुपयोगनिमित्तमपूर्वविधौ। ब्रूते शास्ति गुणेन च यत्सचते तदकीर्तितमाचरितं कविना" इति दुह्यादीनां... पयुज्यते इत्युपयोग पयः फलादि तस्य निमित्तं गवादि अपूर्वविधौ कर्मसंज्ञापेक्षया पूर्वसंज्ञानां विधेर्विषयाभावे ब्रुविशासि गुणेन च ब्रुविशास्यो र्गुणः साधनं कर्मादिकं प्रधानकर्म तेन च यत्सचते सम्बध्यते... कविना मेधाविना अकथितमाचरितं कथितमिति यावत्। प्रयोगनिमित्तमित्यनेन पयआदीनामुपयुज्यमानत्वेन ईप्सिततमत्वात् गवादीनां च तदर्थत्वेनानीप्सिततमत्वंदर्शितं तथा सति कर्तुरीप्सिततमं कर्मेत्यनेन कर्मत्व तथायुक्तत्वाभावाच्च। तथायुक्तं चानीप्सितमित्यनेनापि न तथा, अपूर्वविधावित्यनेन च पूर्वविधिविषये इत्याद्यर्थस्य स्पष्ट एवोक्त इति भावः।

स्यवैयर्थ्यमाशङ्क्येप्सितमात्रस्याप्यनेन संज्ञायां 'वारणार्थानाम्' इति सूत्रस्यानवकाशत्वे माणवकादपि पञ्चमी स्यादिति ईप्सिततममित्यावश्यकमित्युत्तरितम् । एतेन दुहादीनां व्यापारद्वयार्थकत्वे कर्तुरिति मत्वे तत्त्वेनाविवक्षायामप्यनेन कर्मत्वमिति परास्तम् । वदतो व्याघातात् । अत एव कर्तुरित्यनेन सिद्धिमाश्रित्यास्य वैयर्थ्यं भाष्ये नाशङ्कितम् ।

कारकमिति क्रियाजनकमित्यर्थः । नन्वेवं 'नटस्य शृणोति' इत्यादावतिप्रसङ्गः । सर्वथा तत्र तदप्राप्तेः । गीतद्वारा (१)च तस्य क्रियाजनकत्वम् । न च तस्य कर्मयुक्तत्वाभावः । तदंशस्यापि परिगणनलभ्यत्वात् । नटस्यापादनत्वाविवक्षा तु न कदापि "आख्यात" (पा० सू० १।४।२७) इति सूत्रे उपयोगग्रहणेनानुपयोगे आख्यातुरपादानत्वाविवक्षाया बोधनात् ; अतः परिगणनमाह-दुह्याजिति । कर्मयु-

---

क्तितदावैरूप्यं स्यादेवेति भावः । *अत एव* । कर्मत्वेनैव बोधादेव *आशङ्क्य इति* । इयञ्चाशङ्का यत्रानेन सूत्रेण कर्मसंज्ञा तत्रापि कर्मत्वशक्तिमत्त्वेन बोध एव सङ्गच्छत इति भावः । ईप्सितमात्रस्येत्यनेन कार्यार्थकमात्रशब्देन यत्रेप्सितपदन्तस्य सर्वस्य सङ्ग्रहः । प्राचामुक्तिं खण्डयति-*एतेनेति* । *तत्त्वेन* । कर्मत्वेन । *अनेन* । अकथितमित्यनेन । अनेन संज्ञायां सम्बन्धित्वेन रूपेण बोध इति तेषामभिमानः । एतन्मतस्यार्थमाह-*वदत इति* । *अत एव* । दुहादीनां व्यापारद्वयार्थत्वाविवक्षायाङ्गवादीनामपादानत्वादीनाञ्चाविवक्षायामस्यावश्यकत्वादेव ।

*क्रियाजनकमिति* । एतेन गवादिपदार्थानाम्पयआदिपदार्थेष्वन्वयविवक्षायान्नानेन कर्मत्वमिति भावः । *एवमिति* । पूर्वोक्तरीत्या सूत्रार्थव्यवस्थायाम् । ननु नटस्य द्वितीयरीत्या कर्मत्वप्राप्त्युट्टङ्कनवत्प्रथमरीत्याप्युचितमित्याशङ्कानिवारणायाह-*नटस्यापादानत्वेति* । *अनुपयोगे* । नियमपूर्वकविद्यास्वीकाराभावे । न च गीतिद्वारा नटस्य क्रियाजनकत्वमित्यसंगतम् । गीतेरेव क्रियाजनकत्वसम्भवे नटस्यान्यथासिद्धत्वं स्यादिति वाच्यम् । व्यापारेण व्यापारिणोऽन्यथासिद्धत्वाभावात् । अन्यथा यागस्यापि स्वर्गजनकत्वञ्च स्यात् । अपूर्वस्यैव तु तत्स्यात् । कर्मयुक्तञ्च सर्व-

---

(१) ननु कारकस्य हितेन संज्ञाविधानात् क्रिया जनकस्य च कारकत्वात् नटस्यच तत्त्वाभावान्नातिप्रसङ्ग इत्यत आह—गीतद्वाराचेति । नहि व्यापारेणेति न्यायेन न तस्यान्यथा सिद्धत्वम् ! अन्यथा छेदनक्रियां प्रति संयोगमादाय कुठारस्याप्यन्यथासिद्धत्वापत्तेरितिभावः ।

गिति। कर्मयुक्तत्वं धात्वर्थव्यापारात्प्राक् तदनन्तरं वा तत्सम्ब-
द्धत्वम्। तत्र ब्रुविशास्व्यतिरिक्तधात्वर्थव्यापारात्प्रागेव तत्संम्बद्धत्वं
बोद्धव्यम्। तद्विषये तु तदनन्तरं तत्सम्बद्धत्वं बोध्यम्। तत्र स-
संभवे प्राग् तत्संबद्धत्वमेव ग्राह्यम्। एतेन स्थाल्यादेरपि तद्व्यापा-
रादनन्तरं पयःसबन्धत्वेन कर्मत्वं तेषां दुर्वारमित्यपास्तम्।
तेन 'गां पयो दोग्धि स्थाल्याम्' इत्यादौ स्थाल्यादेरधिकरणत्वावि-
वक्षायामपि नानेन कर्मत्वम्। एवञ्चापादानादीत्यादिशब्देनापादान-
संप्रदानाधिकरणान्येव। करणन्तु न गृह्यते हस्तादेः करणस्य प-
आदिकर्मयुक्तत्वाभावात्।

(१)यद्यपि 'गां दोग्धि' इत्यादौ 'गौः पयस्त्यजति' गवा पयस्त्याज-
यति' इत्यादर्थप्रतीत्या 'कर्तुरीप्सिततमम्' इत्येव सिद्धम्। प्रधानकर्म-
त्वञ्च गवादीनामिति तत्रैव लादिसिद्धिः। (२)प्रधानकर्मत्वञ्च कर्तृप्र-
त्ययसमभिव्याहारे कर्तृनिष्ठप्रधानव्यापारविशेषणफलाश्रयत्वम्
ण्यन्तविषये ईदृशप्राधान्यस्यैव ग्रहात्। प्रकृते च पयोनिष्ठविभागानु-
कूलो यो गोनिष्ठव्यापारस्तदनुकूलव्यापारस्य शब्दतः प्राधान्यात्

त्रैकरूपमित्याह-*कर्मयुक्तमिति*। *तत्र*। उक्तप्रकारद्वयमध्ये। *प्रा-
गेवेति*। प्रागपीत्यर्थः। *तद्विषय इति। ब्रुविशासिविषये। *तत्र*। ब्रुवि-
शास्व्यतिरिक्ते। *एतेन*। सति सम्भवे प्राक्तत्सम्बद्धत्वस्यैव ग्रहणेन।
*एवञ्च*। पूर्वोक्तव्यवस्थासिद्धौ च। *अधिकरणान्येवेति*। एतेन क-
करणहेतूनान्निरासः। एतेषु निदर्शनार्थमाह-*करणन्तु नेति*।

धातोर्व्यापारद्वयार्थत्वेन कर्तुरित्येव सिद्धेऽकथितमितिसूत्रवैयर्थ्य-
त्याशयेन शङ्कते-*यद्यपीति*। *तत्रैव लादिसिद्धिरिति*।

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्॥

इत्येवं सिद्धेः। *ईदृशप्राधान्यस्य*। प्रधानीभूतधात्वर्थविशेषण-
लाश्रयस्य। नन्वेवं स्वसम्प्रदानकदानानुकूलव्यापारानुकूलव्यापार-
दण्डधात्वर्थौ भविष्यति। तथा च गर्गाणामेव प्राधन्यमिति प्रधानग-

(१) दुहेस्त्यजनानुकूल-व्यापारानुकूल-व्यापारोऽर्थः, इत्येवं रीत्या दुहादीनां व्यापारद्वयार्थकत्वे
त्यजनानुकूल-व्यापारानुकूल-व्यापारजन्यत्यजनानुकूलव्यापाराश्रयत्वेन गवादीनां गौणकर्मणां प्रधान-
कर्मणां च कर्तुरीप्सिततमेत्यनेनैव सिद्धमिति अकथितेति सूत्रवैयर्थ्यशङ्कामुद्धाटयति-यद्यपीति।

(२) नन्वेवं गवादीनां प्रधानकर्मत्वेन "गौणेकर्मणिदुह्यादेः" इति गवादिषु कर्मप्रत्ययो न स्यात्
"गां पयो दुह्यते" इत्याद्यनिष्टप्रसङ्गः, भवतितु "गौः पयो दुह्यते" इत्यादीष्टमित्यत आह-प्रधानकर्मत्वे

'गर्गाः शतं दण्ड्यन्ताम्' इत्यत्र गर्गाणामेव (१)तत्त्वम् । उद्देश्यत्वरूपार्थ प्राधान्यन्तु शतस्येत्यनुद्देश्यत्वेनाप्रधानगर्गानुरोधान्न शतावृत्तिरिति न वृद्धि सूत्रस्थभाष्यविरोधः । एवमेव 'शकारमसि चोदित' इत्याद्युपपत्तिः (२)अत एव–

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।
अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥

इति उक्त्वोत्तरार्द्धोपात्तातिरिक्ता द्विकर्मकाः के इति प्रश्ने

नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ॥

इत्युक्तम् । तत्र न्यादिग्रहणं तत्र कृषिवन्मम व्यापारद्वयार्थकधातूपलक्षणम् । एवञ्चेदं सूत्रं व्यर्थं, तथापि यदा पयोनिष्ठविभागानुकूलव्यापारादिरेव धात्वर्थस्तदाऽपादानाद्यविवक्षायामन्येनासिद्धकर्मत्वार्थमिदमावश्यकं तदा चाप्राधाने दुहादीनामित्युक्तेरप्रधाने पयआदावेव लादयः । अप्रधानकर्मत्वञ्चोक्तप्रधानकर्मभिन्नकर्मत्वम्, त्वोक्तार्थे गवादीनामस्त्येव फलानाश्रयत्वात् । गान्दोग्धीति । अन्तः-

---

नुरोधेन शतावृत्तिः स्यादिति समुदाये वाक्यसमाप्तिरित्यस्येदंस्थलन्दृष्टान्तत्वेन भाष्ये उपात्तन्तद्विरोध इत्यत आह–*गर्गाः शतमिति । *भाष्यविरोध इति* । शतस्यार्थप्रधान्यमादाय तस्य भाष्यस्योपपत्तेः। जिज्ञासाविषयार्थज्ञानानुकूलव्यापारः पृच्छिप्रपर्यायचुदेरर्थ इति प्रधानीभूतव्यापारविशेषणव्यापारस्यार्थप्राधान्यमादाय यम्प्रति पृच्छा तस्य प्रतिपादको शकारः सिध्यतीत्याशयेनाह–*एवमेवेति । *अत एव* । व्यापारद्वयार्थेन द्विकर्मकत्वादेव । एतत्पक्षे 'अप्रधाने दुहादीना'मित्यत्राप्राधान्यमनुद्देश्यत्वरूपम्बोध्यम् । *इदमावश्यकमिति*। एकव्यापारार्थकत्वे गवादीनामकथितञ्चेति सूत्रेण येषांकर्मसंज्ञा तेषामुक्तप्रधान्यविशिष्टपयआदिकर्मभिन्नतयाऽप्राधान्यादेव पूर्वोक्ता व्यवस्था साध्येति भावः । ननु गवादीनां क्रियान्वयविवक्षायामपि द्विकर्मत्वेनाविवक्षायां षष्ठी प्राप्नोतीत्यत आह–*द्विकर्मकेष्विति* । द्विकर्मकाविषयेष्वित्यर्थः। मूलकारपठितदुहादिक्रमेणार्थमा-

---

(१) तत्त्वम्—प्रधानकर्मत्वमिति यावत् ।

(२) "शकार त्वं चोदितोऽसि" इत्याद्यर्थक 'शकारमसिचोदितः' इत्याद्युपपत्तिरित्यर्थः । अन्यथा शकारस्य प्रधानकर्मत्वेन तद्रूप एव कर्मणिप्रत्ययोत्पत्त्या तदनुपपत्तेः ।

स्थितद्रवद्द्रव्यनिष्ठविभागानुकूलव्यापारो दुहेरर्थः। तत्र गोरपादान-
त्वाविवक्षायामनेन कर्मत्वम्। तद्विवक्षायां पञ्चमी। गोः पयस्यन्वये
षष्ठी। द्विकर्मकेषु गवादीनां कर्मत्वाविवक्षया क्रियान्वये षष्ठ्या
अनभिधानात्। (१)षष्ठ्यन्तस्य स्वान्वययोग्यनामसमभिव्याहारे
तत्रैवान्वयस्योत्सर्गतो व्युत्पत्तेश्च। अत एव "तण्डुलानामोदनं पचति"
इत्यत्र "द्व्यर्थश्चैव पचिर्विकारयोगे षष्ठी" इत्येव कर्तुरिति सूत्रे भाष्य
उक्तमिति दिक्।

बलिं याचत इति। (२)यदा परस्वत्वनिवृत्तिस्वस्वत्वोत्पत्त्यु-
भयानुकूलो व्यापारो याचेरर्थः। स्वत्वे बलेर्निरूपकतयाऽन्वयस्तदा...

ह-*अन्तःस्थितेत्यादिना*। अत्र निष्ठान्तं धात्वर्थतावच्छेदकविभागस्य
लक्षणं तु दुहधात्वर्थकुक्षिनिविष्टम्। तेन न धात्वर्थसंगृहीतकर्मकत्वे
कर्मकत्वापत्तिरितिबोध्यम्। *अनभिधानादिति*। अत्र मानं वक्ष्यते-*अत
एवेत्यादिना*। सर्वत्र षष्ठ्यन्तार्थस्य क्रियान्वयविवक्षायां षष्ठ्यभावः
तु न नियमः किन्तु क्वचिदेवेत्याशयेनाह-*स्वान्वययोग्येति*। तेन मातुः
स्मरति। 'भजे शम्भोश्चरणयोः' इत्यत्र षष्ठीदर्शनेऽपि न क्षतिः। तत्रैव
तन्नामार्थ एव। तदेव मानमाह-*अत एवेति* तत्र तदभावादेव।

*कर्त्तुरिति सूत्रभाष्य इति*। 'इह हि तण्डुलानोदनम्पचतीति द्व्य-
र्थः पचिः। तण्डुलान्पचन्नोदनन्निर्वर्त्तयतीति। इहेदानीन्तण्डुलानामोदन-
म्पचतीति द्व्यर्थश्चैव पचिर्विकारयोगे षष्ठी तण्डुलविकारमोदनन्निर्वर्त्तय-
ति' इत्येवन्तत्रोक्तम्, द्व्यर्थः पचिरिति। विक्लेदनोपसर्जने निर्वर्त्तने
पचिर्वर्त्तते। तण्डुलान्विक्लेदयन्नोदनन्निर्वर्त्तयतीत्यर्थः। तत्रोपसर्ज-
नविक्लेदनाक्रियापेक्षन्तण्डुलानाङ्कर्मत्वम्। प्रधानभूतक्रियापेक्षन्तु ओ-
दनस्य। *द्व्यर्थश्चैवेति*। 'तण्डुलानां सम्बन्धिनं विकारविशेषमोदनं वि-
क्लित्त्यानिर्वर्त्तयतीत्यर्थः। सा च विक्लित्तिः सामर्थ्यात्तण्डुलानामेव विज्ञा-
यते' इति कैयटः।

*उभयानुकूलो व्यापारः*। दिदापयिषाव्यञ्जको दीयतामित्याकारक...

(१) नञर्थे हेतुमाह—अनभिधानादिति*। अनभिधानस्य लक्षणैकचक्षुष्कैरनादरणीयत्वा-
दृढतरप्रमाणाभावाच्चारुचे र्हेत्वंतरमाह-षष्ट्यन्तस्येति*। *उत्सर्गत इति*। अनेन क्वचित् नटस्य ...
शृणोति इत्यादावकथितञ्चेति कर्मत्वात् प्रसङ्गपरिहाररूपं फलं परिणामस्योक्तं पुरस्तात्सङ्गच्छते। अन्यथा
तत्र क्रियान्वयाभावेन कारकत्वाभावात् कारकाधिकारीयप्रकृतसूत्रेणातिप्रसङ्गानापत्त्या तदयुक्तं स्यादिति
बोध्यम्।

(२) बलि मित्यादिमूलोक्तोदाहरणं यदायाचेर्व्यापारद्वयार्थकत्वाभावः,- तदा तत्र सर्वथा पूर्वविधेः ...
यत्वाभावः इत्यत आह -*यदेति*।

(१)कर्मत्वम् । (२)पूर्वविषयस्य कस्याप्यभावात् । (३)न चात्रापादानत्वप्रसक्तिः विभागस्य धात्वर्थत्वाभावात् । "न हि याचनादेवापायो भवति, याचितो यदि ददाति तदाऽपायेन युज्यते" इति भाष्योक्तेः । "असंकीर्तितपर्यायाकथितग्रहणे 'गान्दोग्धि' गौर्दोग्धि' इति च, याचिपृच्छिभिक्षयोगे कर्मसञ्ज्ञैवेत्येषा व्यवस्था" इति च सिद्धान्ते कैयटोक्तेश्च । व्यापारद्वयार्थत्वे तु कर्तुरिति कर्मत्वं बोद्ध्यम् । वसुधायाः स्वामित्वसंबन्धात् कर्मयुक्तत्वम् ।

आविनीतमिति । याचेः स्वीकारानुकूलव्यापारो ऽर्थः । स्वीकारश्च 'इदमश्यं करिष्यामि' इति शब्दप्रयोगजनको ज्ञानविशेषः । विनयेन च तद्विषयज्ञानवत्त्वं सबन्धः । तण्डुलानिति । तण्डुलान्विक्लेदयन्नोदनं निर्वर्त्तयतीत्यर्थस्य कर्त्तुरिति सूत्रस्थभाष्यकैयटसंमतत्वेन कर्तुरित्येव कर्मत्वसिद्धेरस्यैतदुदाहरणत्वं चिन्त्यम् । एवं स्वसंप्रदानकदानानुकूलव्यापारानुकूल शासनरूपव्यापारोर्थः । दण्ड्यादियोगे ऽपि तेनैव सिद्धम् । एवं व्यापारद्वयार्थत्वेन सति प्रयोगे

शब्दोच्चारणरूपः । *कर्मसंज्ञैवेत्येषेति* । एतेन याचिपृच्छिभिक्षियोगे पूर्वविधेः सर्वथाऽप्राप्तिः सूचिता । *स्वामित्वसम्बन्धादिति* । वसुधानिष्ठस्वत्वनिरूपितस्वामित्वात्मकसम्बन्धादित्यर्थः ।

*याचेरिति* । अस्य अत्रेत्यर्थः । *तेनैवेति* । कर्त्तुरित्यनेनैवेत्यर्थः । *एवमिति* । पूर्ववत् ।

(१) *अनेनेति* । अकथितञ्चेत्यनेनेत्यर्थः ।

(२) *पूर्वविषयस्येति* । पूर्वशास्त्रस्यापादानत्वाद्यन्यतरस्य विषयस्येत्यर्थः ।

(३) नन्वत्रयाचने विभागस्य सद्भावादपादानत्वप्रसक्त्या कथं तदन्यतरस्याभाव इत्याशङ्क्ते-नचेति । परिहरति-विभागस्याभावादिति* ।

ननु 'ग्रामादायाति' इत्यादौ विभागाय धात्वर्थत्वाभावेऽपि वस्तुतः तद्धात्वर्थ व्यापारजन्यत्वाद्विभागस्य सद्भावादपादानत्वप्रसक्तिरस्त्येवेत्यरुचेराह-*न हि याचनादेवेति* । अकथितशब्दस्यासङ्कीर्तितपरत्वेन सर्वथा तदविवक्षया पूर्वविधिविषयत्वाभावपरत्वमिति सिद्धान्तः । सर्वथा पूर्वविधिविषयस्याभावपरत्वं तस्येत्यभिप्रेत्य "पौरवं गांश्चते पृच्छति" "माणवकं पंथानं पृच्छति" "पौरवं गाभिक्षते" इति त्रीण्येवा दाहणानि, तानि न तु गांपयो दोग्धि, अन्वरुणाद्धि गां व्रजं, वृक्षमवचिनोति फलानि, पुत्रं ब्रूते, पुत्रं धर्ममनुशास्ति" प्रत्युदाहरणानि इति वादिनं पूर्वपक्षिणं प्रत्याख्यातुं भाष्ये उक्तम् "अथ ये धातूनां द्विकर्मकास्तेषां कथिते कर्मसंज्ञा भवन्ति आहोस्वित् अकथित" इत्यादि सर्वोदाहरणवादि सिद्धान्तभाष्यं प्रवृत्तम् । तत्र अथेति प्रतीकमादाय तद्व्याख्यानावसर "इहासङ्कीर्तितपर्यायस्याकथितशब्दस्य ग्रहणे विवक्षाभेदात् 'गां दोग्धिपयः' इत्यापि भवति 'गो दोग्धिपयः' इत्यादि कैयटेनोक्तम् तदाह-असङ्कीर्तितपर्यायेत्यादि* ।

बहूनां धातूनां द्विकर्मकत्वं बोद्ध्यम्।

व्रजमिति। निर्गमप्रतिबन्धपूर्वकयत्किञ्चिदधिकरणकचिरस्थि-त्यनुकूलव्यापारो रुधेरर्थः। व्रजे गौस्तिष्ठति, तत्र तां निर्गमप्रतिब-न्धकपूर्वकं चिरं स्थापयतीति संप्रत्ययात्। अधिकरणत्वाविवक्षाया-मनेन कर्मत्वम्। व्यापारद्वयार्थत्वे कर्तुरिति कर्मत्वम्।

पन्थानमिति। जिज्ञासाविषयार्थज्ञानानुकूलः 'केन पथा गन्तव्यम्' इत्यभिलाषादिरूपो व्यापारः पृच्छेरर्थः। ज्ञानविषय-त्वेन पथा कर्मत्वम्। माणवकेन च तज्ज्ञानाश्रयत्वं सबन्धः। अपादा-नत्वं तु नात्र। "न प्रश्नादेवापायो भवति, पृष्टाऽसौ यदाचष्टे तदाऽपा-येन युज्यते" इति भाष्योक्तेः। संप्रदानत्वमपि न। कर्मसंबन्धत्वेनेच्छाविषयत्वाभावात्। व्यापारद्वयार्थत्वे तु कर्तुरिति कर्मत्वम्।

वृक्षमिति। विभागपूर्वकादाने चिञ्। वृक्षात्फलान्यादत्ते इत्यर्थात्। अपादानत्वाविवक्षायामनेन कर्मत्वम्।

धर्मं ब्रूते इत्यादि। (१)ज्ञानानुकूलः शब्दप्रयोगरूपो व्या-पारो ब्रूञर्थः। प्रवृत्तिपर्यवसायी स शास्तेः। स च 'धर्मं कुरु' इत्यादिविधिघटितोपदेशरूपः विषयता च फलतावच्छेदकः सम्बन्धः। वचनादिकर्मणा धर्मेण माणवकस्याभिप्रेयमाणत्वात्तस्य संप्रदान-त्वम्। तदविवक्षायाश्चानेन कर्मत्वम्। अत्र कर्तृव्यापारानन्तरं तद्-ज्ञानाश्रयत्वरूपो माणवकस्य धर्मेण सम्बन्धः। नयतेः संयोगानु-कूलव्यापारोऽर्थः। स एव स्कन्धग्रहणादिपूर्वो वहेरर्थः। गत्यनु-कूलव्यापारविशेषः कृषेः। बलाद्ग्रहणपूर्वकं देशान्तरप्रापणं हरतेः। एषु "कर्तुः" (पा० सू० १।४।४९) इति कर्मत्वं बोद्ध्यम्। एवञ्च(२) भाष्यानुक्तानामत्र ग्रहणं प्राचामनुरोधेनेति तत्त्वम्। भाष्योक्ता हि

---

*न प्रश्नादेवापाय इति*। अत्रापायो बौद्धः।

*विभागपूर्वकादान इति*। विभागजन्यपात्रस्थापनानुकूलव्यापार इ-त्यर्थः। *भाष्योक्ता हीति*। तदुक्तम्भाष्ये। 'किमुदाहरणम्'। "दुहियाच्

---

[१] ब्रुञ्धातोरर्थमाह–ज्ञानेति*। माणवक सम्बंधिधर्मविषयकज्ञानानुकूलो व्यापार इतिवाक्यार्थ

[२] भाष्यानुक्तानामिति*। पाचिदण्डिजिमथिमुषामित्यर्थः।

"दुहियाचिरुधिप्रच्छिभिक्षिचिञ्ब्रुविशासयः" ।

अर्थनिबन्धनेयमिति । इदमपि कैयटानुरोधेन । वस्तुतस्तु [नी]णामेतदर्थानां द्विकर्मकत्वमिष्टं तेषां व्यापारद्वयार्थत्वेन कर्तुरित्येव [सि]द्धम् । अन्यथा 'आख्यातोपयोगे' इति सूत्रभाष्योक्तपरिगणन-भङ्गापत्तिः । किं च भाष्ये भिक्षिग्रहणवैयर्थ्यापत्तिः । उभयार्थकया-चिग्रहणेनैव सिद्धेरित्यन्ये ।

अकर्मकधातुभिरिति । तेषां स्वकरणकव्यापने वृत्त्या व्या-प्तिरूपफलाश्रयत्वेन कर्तुरिति कर्मत्वम् । 'मासमास्ते' इत्यादेर्मासमा-सनेन व्याप्नोतीत्यादिक्रमेणार्थ इति भावः । (१)यत्त्विदमेव कर्मसं-ज्ञाविधायकमिति चेन्न । भाष्ये तादृशवचनानुपलम्भात् । "अक-थितञ्च" (पा०सू०१।४।५१) इति सूत्रे अकर्मकप्रकृतिकण्यन्तानां कथं द्विकर्मकत्वमिति शङ्कायां 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यक-र्मणां, देशश्च' इति भाष्ये उक्तम् । तच्च न विधायकं हिशब्दघटि-तत्वात् । किं च 'कालाध्वनोः' (पा०सू०२।३।५) इति सूत्रे "का-

[रु]धिप्रच्छिभिचिञामुपयोगनिमित्तमपूर्वविधौ । ब्रुविशासिगुणेन च [य]त्सचते तदकीर्त्तितमाचरितङ्कविना" इति । *उपयोगनिमित्तमिति* । उ-[प]युज्यत इत्युपयोगः । पयः फलादि तस्य निमित्तम् गवादि । *अपूर्व-[वि]धाविति* । अत्र पूर्वग्रहणमन्यापेलक्षणम् । विध्यन्तरविषयत्वाविव-[क्ष]यायाम् । ब्रुविशास्योर्गुणः प्रधानं कर्म । तेन सचते सम्बध्यत इत्यर्थः । [म]तान्य इति* । भाष्यतत्त्वविदः ।

*तेषाम् । अकर्मकधातूनाम् । *स्वम्* । अकर्मकधात्वर्थत्वेन प्रसि-द्धोऽर्थः । स्वकरणकसव्यापनेत्यस्य स्वकरणकव्याप्त्यनुकूलव्यापार इत्य-र्थः । मूलकाराभिप्रेतमस्य कर्मसंज्ञाविधायकत्वभ्रमं खण्डयितुमाह-*य-त्त्विति* । *तादृशवचनेति* । कर्मसंज्ञाविधायकवचनेत्यर्थः । ननु 'काल-भावाध्वगन्तव्या' इति वचनमेव तादृशमस्तीत्यत आह-*अकथितमि-ति* । *हिशब्दघटितत्वादिति* । हिशब्दस्य प्रसिद्धार्थकत्वं स्वभाव-सिद्धम् । हिशब्दघटितेन वाक्येन भूतानुवाद एव क्रियत इति भावः । [न]नु हिशब्दो वाक्यालङ्कारे इदञ्च वार्त्तिकं विधायकमेवेत्यत आह-*कि-

(१) इदानीं कर्मसंज्ञाविधायकमिदमिति मूलकारस्य मतं खण्डयितुमनुवदति-यत्तु इत्यादिना* । [सं]गच्छते—तस्मादिति* ।

लाध्वानौ कर्मवदिति वक्तव्यम्" इति वार्त्तिकप्रत्याख्याने "प्राकृतमेवैतत्कर्म यथा कटं करोति" इत्युक्तम्। अस्य वचनत्वे 'उक्तं वा, प्राकृतं वा, इति वदेत्। तस्मादुक्तरीत्या कालादीनां तद्योगे कर्मत्वाद् द्विकर्मकत्वमित्येव तत्तात्पर्यम्। अत एव "समां समां विजायते" (पा० सू० ५।२। १२) इति सूत्रे "समायां समायां विजायते" इति विग्रहकथनपरं भाष्यं सङ्गच्छते। (१) अन्यथा अनेन द्वितीयाया एव तत्र साधुत्वेन तदसङ्गतिः स्पष्टैव। अत एवोक्तभाष्यार्थानुवादिका हरेः कारिका-

'कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः।
सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते' ॥

इति। सकर्मकविषयेऽप्यनेन प्रकारेण कालादिकर्मणा सकर्मकत्वं, तुल्यन्यायात्। तेन 'मासमोदनं पचति' इति भवति। तत्र कालादिकर्म अप्रधानं, द्रव्यकर्म तु प्रधानं कालस्याधारत्वेन द्रव्यद्वारा क्रियासम्बन्धात्। किं च कठिनपाक्यस्य महापरिमाणस्य बहुसंख्यस्य च चिरेण पाको ऽन्यस्याचिरेणेति द्रव्यधर्मं पर्यालोच्य क्रियासु कालयोग इति स च बहिरङ्गः। अपि च साधनसम्बन्धे जाते क्रियायाः परिच्छेदकबाह्यकालाकाङ्क्षेति स बहिरङ्गः। अकर्मकव्यवहारस्तु धा

---

श्चेति*। प्राकृतमेवैतदिति*। अत्र प्रशब्द आदित्वबोधकः। तेन प्रकृतशब्द आदिकृतत्वबोधकस्तस्मादुत्सर्गसूत्रलाभः। प्रकृतशब्दाच्च तस्येदमित्यण्। उत्सर्गसूत्रबोधितामित्यर्थः। *अत एव*। अस्यापूर्ववचनत्वाभावादेव। *अत एव*। उक्तभाष्यस्य स्वोक्तार्थकत्वादेव। अकर्मकधातूनामिव सकर्मकाणामपि कालादिकर्मकत्वमाह-*सकर्मकविषय इति*। एतद्व्याख्यानेनापि पूर्वोक्तवचनस्यापूर्वविधायकत्वाभावो ध्वनितः। तस्यापूर्वत्वे तस्य सकर्मकेष्वप्रवृत्त्या सकर्मकाणान्द्विकर्मकत्वन्न स्यादिति भावः। ननु सकर्मकधातूनाङ्कालादिकर्मणां द्विकर्मकत्वे तयोः कर्मणोर्गुणप्रधानभावः कथमत आह-*तत्रेति*। तत्र तयोर्मध्ये। *पर्यालोच्येति*। अस्य क्रियमाणास्विति शेषः। अस्य क्रियास्वित्यत्र सम्बन्धः। तेन कालयोगस्य उपपत्तिः। प्रकारान्तरेणापि कालस्य बहिरङ्गत्वमित्याह-*अपि चेति*। ननु नन्वकर्मकत्वव्यवहारो धातूनाङ्कथमुपपद्यतामत आह-*अकर्मकव्यव*

---

(१) विपक्षे बाधकमाह-अन्यथेति*। अस्य विधायकत्वे इत्यर्थः। अधिकरणत्वविवक्षायां चरितार्थेनानेन तद्विवक्षायामपि परत्वात्प्राप्तेनानेन परत्वाद्बाधः स्यादिति भावः।

तूनां द्रव्यकर्माभावनिमित्त एवात्र बीजं वक्ष्यते । तदुक्तम् ।

'अतस्तैः कर्मभिर्युक्तो धातुर्द्रव्यैरकर्मकः ।

लस्य कर्मणि भावे च निमित्तत्वाय कल्पते' ॥ इति ।

गतिबुद्धिप्र (पा०सू०१।४।५२)। शब्दः कर्मकारकं येषामित्यर्थो व्याख्यानात् । तेन ह्वाययतिक्रन्दयत्योर्न । अणाविति । णिच्यनुत्पन्ने इत्यर्थः । अत्र णिज् हेतुमण्णिजत्र स णावित्यत्रापि स एव व्याख्यानात् । अत एव भक्षेर्निषेधश्चरितार्थः । स हि न नित्यण्यन्तश्चुरादिरिति बोध्य-म् । अन्यानधीनत्वलक्षणार्थप्राधान्यशब्दप्राधान्ययोः प्रयोजकव्यापारे सत्त्वेन तदनुरोधिकर्मत्वस्यान्तरङ्गादपि कर्तृत्वाद् बलवत्त्वेन कर्तुरित्येव सिद्धे णिजर्थेनाप्यमानस्य चेद्गत्यर्थादीनामेवेति नियमार्थमिदम् । तेन पाचयत्यादियोगे नेति 'हेतुमति च' (पा०सू०३।१।२६) इति सूत्रे भाष्यकृतः । "प्रधानकार्यं सर्वतो बलवत्" इति आकडारसूत्रे कैयटे

---

हार इति* । *तदुक्तमिति* । हरिणेति शेषः । *तैः कर्मभिः* । काला-दिकर्मभिः । *द्रव्यैः* । द्रव्यकर्मभिः । अयुक्त इति शेषः । धातुरित्य-न्वयः । अकर्मकपदार्थघटकङ्कर्म द्रव्यात्मकमेव विवक्षितमिति व्यवहारव्य-पयोगात्सकर्मकत्वप्रयुक्तकर्मणि यो लकारो भावे वा तन्निमित्तत्वाय कल्पते । 'आस्यते मासः' । 'मासमास्यते देवदत्तेन' इति यथा । अत्र द्र-व्यपदङ्कालादिभिन्नद्रव्यसामान्यपरम् । तेन कालादेरपि लिङ्गसंख्यान्वयि-त्वरूपद्रव्यत्वसत्त्वेऽपि न क्षतिः ।

गतिबुद्धीतिसूत्रे यच्छब्दकर्मकपदन्तद्व्याचष्टे—*शब्दः कर्मकारक-मिति* । *व्याख्यानादिति* । कृत्रिमाकृत्रिमन्यायेन कर्मशब्दस्य कर्म-संज्ञकपरत्वस्यौचित्यमूलकादित्यर्थः । यद्वा प्रकृतसूत्रे कर्मग्रहणोपपाद-नमूलकादित्यप्यर्थः । अन्यथाऽर्थशब्दस्योत्तरत्रसम्बन्धेन । गतिबुद्धिप्र-त्यवसानशब्दार्थाकर्मकाणामित्येव ब्रूयात् । *तेन* तादृशव्याख्यानेन । *ह्वाययतीति* । अनयोः शब्दार्थकत्वेऽपि शब्दः कर्मकारकं येषान्तादृशा-र्थकत्वन्नास्तीत्यर्थः । एतत्सूत्रघटकं णिच्पदं हेतुमणिच एव बोधकम्, अत्र मानं व्याख्यानमुपवर्णितन्तदेव प्रकटयति—*अत एवेति* । हेतुमणिच्-परत्वादेव । *इति बोध्यमिति* । णिच्सामान्यपरत्वेऽण्यन्तावस्था तत्र न सम्भवतीति भावः । गतिबुद्धीतिसूत्रस्य नियमार्थत्ववादिमतमुपपा-दयति-*अन्यानधीनत्वेत्यादिना* । अन्तरङ्गादपीत्यपिना परत्वोपजी-व्यत्वयोः समुच्चयः । *भाष्यकृत इति* । तत्र हि "कथमिदं विज्ञायते

स्पष्टम् । तेन गत्यादियोग प्रयोज्यस्य कर्मत्वशक्तिमत्त्वं पाचयत्या-
दियोगे कर्तृत्वशक्तिमत्त्वमेवेति बोद्धव्यम् । गमयति देवदत्तेनेति ।
यज्ञदत्तकर्मकगमनानुकूलदेवदत्तकर्तृकव्यापारानुकूलो विष्णुमित्रकर्तृ-
को व्यापार इति बोधः । अत्र देवदत्तस्य न कर्मत्वम् ।

---

हेतुमत्यभिधेये णिज् भवतीति आहोस्विद्धेतुमति यो धातुर्वर्त्तते" इति
रीत्या विचारे 'अस्तु प्रकृत्यर्थविशेषणम्' इत्युक्तम् । अत्र कैयटः । 'वि-
नापि णिचा पञ्चभिर्हलैः कर्षतीति प्रयोजकव्यापारावगमात्प्रकृत्यर्थस्य
हेतुमत उपपद्यते' इति । 'को दोषः । इह हि उक्तः करोति । प्रेषित
करोतीति णिच् प्राप्नोति' । प्रकृति विशेषणत्वपक्षे यथा प्रकृत्यभिहि
प्रयोजकव्यापारे णिज्भवति । एवमुक्तप्रेषितादिशब्दाभिहितेऽपि प्राप्नो-
ति । हेतुमद्विषयत्वता करोत्यर्थस्य । प्रत्ययार्थविशेषणत्वे तु उक्तार्थत्वा
णिजभावः । 'इह तर्हि पाचयत्योदनन्देवदत्तो यज्ञदत्तेनेति उभयोः कर्तृ-
लैनाभिधानम्प्राप्नोति । प्रत्ययार्थविशेषणत्वेन दोषः । प्रधानकर्त्तरि
लादयो भवन्ति । प्रधानकर्त्ता लेनाभिधीयते । यश्चात्राप्रधानं सिद्धा तत्र
तृतीया कर्त्तरीत्येव' इत्युक्तम् ।

अत्र प्रधानकर्त्ता लेनाभिधीयत इत्युक्त्या प्रधानाप्रधानसन्निधौ प्रधा-
नकार्यस्य बलवत्त्वं सूचितम् । ततोऽग्रे प्रत्ययार्थविशेषणपक्ष एव पाचय-
त्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्ये कर्त्तरि कर्मसंज्ञाप्राप्नोतीति शङ्काया-
मेवं समाहितम् । 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्मकाणामणीत्येतन्नि-
मार्थम्भविष्यति । एतेषामेवाण्यन्तानां यः कर्त्ता स णौ कर्मसंज्ञो भवति
नान्येषामिति' एवमुक्तम्भाष्ये । अत्र कैयटः । 'ण्यर्थस्य प्राधान्यात्तेनेप्सि-
तस्य प्रयोज्यस्य सिद्धा कर्मसंज्ञा । न च स्वव्यापारापेक्षया स्वातन्त्र्या-
त्परत्वात्कर्तृसंज्ञा प्राप्नोतीति युक्तं वक्तुम् । प्रयोज्यव्यापारस्याप्र-
धान्यात्प्रधानाप्रधानव्यापारसन्निधौ च प्रधाननिमित्तस्य कार्यस्य गुण-
त्वान्नियमेन तु प्रधानकार्यव्यावृत्तौ गुणनिमित्तकार्यसद्भावात्कर्तृत्वमभव-
त्येव' । तदुक्तं हरिणा ।

गुणक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मताङ्गतः ।
नियमात्कर्मसंज्ञायाः स्वधर्मेणाभिधीयते ॥

इति । *कैयटे स्पष्टमिति* । तत्र ह्येवमुक्तम् । 'गुणप्रधानसन्निधौ
प्रधानस्य प्रयोजकत्वे सम्भवति सति पृथग्गुणास्तद्विरुद्धं स्वकार्यम्
प्रयुञ्जते । ततश्च सिद्धायास्प्रयोज्यस्य कर्मसंज्ञायां गत्यर्थादीनामेवाण्यन्ता-
नाङ्कर्त्ता कर्मसंज्ञो भवति नान्येषामिति नियमः क्रियते । तेन पाचयत्यो-
दनन्देवदत्तो यज्ञदत्तेनेत्यत्र कर्मसंज्ञा न भवति' इति ।

नियन्त्रीति । नियन्तृकर्तृकण्यन्तप्रकृतिभूतस्येत्यर्थः । प्रापणार्थवहेर्गत्यर्थत्वाभावे ऽपि 'ग्रामं प्राप्त' इत्यादौ तत्प्राप्तेर्गतिं विनाऽसम्भवात्क्षिप्तगत्यापि गत्यर्थत्वमित्यभिमानेन वार्तिकारम्भः । सुखं प्राप्तः' इत्यादौ न तदाक्षेपः, तत्र कर्तरि क्त आदिकर्मणि बोद्ध्यः । अत एव ग्रामं प्रापयति देवदत्तेनेत्येवेति ध्वानितम्, 'न गति' (पा०सू० १।३।१५) इति 'न वा' (पा०सू०१।१।४४) इति सूत्रे भाष्ये । नयतेस्तु 'या प्रापणे' इत्यादेरिव गत्युपसर्जनं प्रापणं वाच्यमिति तस्य गत्यर्थत्वमेवेति बोद्ध्यम् ।

आदिखाद्योरिति । प्रत्यवसानार्थत्वात्प्राप्तिः। प्रत्यवसानं भक्षणम् । भक्षयति बलीवर्दानिति । हिंसाङ्गे भक्षणे भक्षेर्वृत्तिः । परकीयसस्यभक्षणे परो हिंसितो भवतीति । तत्स्वामिनोऽत्र हिंसा द्रष्टव्या । जल्पयतीति । 'पुत्रो धर्मं जल्पति' तद्बोधकवाक्यानि कथयति । देवदत्तो जल्पयति धर्मं पुत्रमित्यर्थः ।

शब्दाययतीति । (१)शब्दं करोतीत्यर्थे 'शब्दवैर' (पा०सू०

---

*नियन्तृकर्त्तृकेति* । अत्र नियन्ता पशुप्रेरकमात्रम् । *गत्यर्थत्वाभावेपीति* । प्रापणं हि प्राप्त्यानुकूलव्यापारानुकूलव्यापारः । प्राप्तिश्च सम्बन्धमात्रन्न तु संयोग एव। 'सुखम्प्राप्तो''विद्याम्प्राप्त' इत्यादौ संयोगाभावेऽपि प्राप्तिव्यवहारादिति भावः । *अत एव* । प्राप्त्यर्थकस्य गत्यर्थकत्वाभावादेव। *इत्येवेति* । अत्र गत्यर्थत्वाभावेन नियमेन कर्मत्वाप्राप्तेः । *ध्वनितन्न गतीतिसूत्र इति* । तत्र ह्युक्तम् 'न वहिर्गत्यर्थ' इति । *नवेति सूत्रे चेति* । तत्र ह्युभयत्रविभाषागणनावसरे हृक्रोरित्युभयत्र विभाषेत्युक्त्वा प्राप्तेऽभ्यवहरतिमुदाहृत्याप्राप्ते 'हरति भारन्देवदत्तो हारयति भारन्देवदत्तम्' इत्युक्तम् । अत्राप्राप्त इत्यनेन प्राप्त्यर्थस्य गत्यर्थत्वाभावः सूचित एव । नन्वेवन्नीवह्योर्नेत्यनेन नयतेरण्यन्तावस्थायां यः कर्त्ता तस्य ण्यन्तावस्थायाङ्कर्मसंज्ञाप्राप्तिरेव नेति नीग्रहणं व्यर्थमत आह-*नयतेस्त्विति* । अत्र नयतेस्त्विति तुना तस्यापि न गत्यर्थत्वमिति नीग्रहणमुक्तनियमलब्धाप्राप्त्यनुवाद इति ध्वनितम् । *हिंसाङ्ग इति* । बहुव्री-

---

(१) शब्दायते नेति प्रतिषेधस्योदाहरणं क्यङन्ताण्णिच्प्रत्ययो बोध्य इत्याह-शब्दंकरोतीति* । शब्दकर्मनिर्देशे शब्दक्रियाणामिति चेत् ह्वयत्यादीनां प्रतिषेधः" इति वार्त्तिकोदाहरणव्याख्यानावसरे शब्दलक्षणस्य कर्मणोऽत्रान्तर्भावात् कर्मान्तरायोगाच्चाकर्मकादपि कर्मसंज्ञा प्रसङ्ग इति कैयटः । अत्रापि शब्दः वार्त्तिकोक्तशब्दक्रियात्वरूपहेत्वन्तरसमुच्चायकः । तथाच गतिबुद्धीति सूत्रे शब्दकर्मेत्यत्र

३।१।१७) इत्यादिक्यङन्ताणिच् । परे तु शब्दक्रियाणामित्यर्थे ह्वाययतिशब्दाययतिक्रन्दयतीनां प्रतिषेध उक्तो भाष्ये, न तु शब्दकर्मकाणामिति पक्षे । एवञ्च तत्र पक्षे भाष्ये शब्दाययतौ प्रतिषेधानुक्त्याऽकर्मकशब्दायतिसत्त्वे न मानम् । शब्दस्य धात्वर्थसंगृहीतत्वे बहिर्भूतपुत्रादिकर्मणो ऽभावे मानाभावात् ह्वयतावित्येति चिन्त्योऽयं निषेध इत्याहुः ।

येषामिति । (१)अयं भावः । "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ" (पा०सू०१।४।५२) इति सूत्रे नियमस्य सजातीयापेक्षत्वात् सकर्मकाणाञ्चेदेषामेवेति नियमपरम् एवं सिद्धे ऽकर्मकग्रहणं सामर्थ्याद्देशकालादिभिन्नकर्माभाववतोऽकर्मकग्रहणेन ग्रहणार्थम् ,(२)तच्च सामान्यापेक्षं ज्ञापकम् । शास्त्रे ऽकर्मकपदेनेदृशानामेव ग्रहणमिति तेन 'मासमास्यते' इत्यादौ भावे लो भवन्ति न त्विति । तदविवक्षा हि द्वेधा—तदन्वययोग्यधात्वर्थत्यागात्,

हिः । हिंसा दुःखोत्पत्त्यनुकूलो व्यापारः साऽङ्गं फलं यस्येत्यर्थः ।

मूलकारोक्तं खण्डयति । *परे त्विति* । *तत्र पक्ष इति* । *मानाभावादिति* । एवञ्च पुत्रादिकर्मणाऽस्य धातोः सकर्मकत्वान्न गतिबुद्धीतिसूत्रप्राप्तिरिति भावः । येषामित्यादिना यदुक्तन्तल्लाभप्रकारमाह *अयम्भाव इति* । *इतिसूत्रमिति* । कर्त्तव्यमिति शेषः । *देशकालादिभिन्नेति* । तेषां सर्वत्रैव सम्भवेन तैर्नाकर्मकत्वव्यवहारक्षतिरिति कर्मणोऽविवक्षाप्रभेदं दर्शयति—*तदविवक्षा द्वेधेति* । *तदन्वययोग्ये

कर्मशब्दस्य क्रियापरत्वपक्षे शब्दक्रियात्वात् यो प्राप्तः कर्मसंज्ञाप्रसङ्गः तस्य कर्मणोऽत्रान्तर्भावात् कर्तरायोगाच्चाकर्मकादपि च यो प्राप्तः तस्य निषेध इति तदर्थः । एतन्मूलकश्चायं निषेधः ।

( १ ) ननु 'यषां देशकालादिभिन्नं कर्म न संभवति तेऽत्राकर्मकाः' इति मूलमयुक्तम् । देशकालादिकर्मसद्भावेऽपि देशकालादिभिन्न कर्माभावेन येऽत्राकर्मकास्तेऽत्र ग्राह्या इत्यत्र विनिगमनाविरहादित्यतस्तद्विनिगमकमुद्घाटयंस्तदाशयमाह–अयंभाव इत्यादि* ।

( २ ) ननु मूलेऽत्रेत्युक्त्वा "लः कर्मणि च भावे चाकर्मकेभ्यः" इत्यादावकर्मकपदेन तथाविधग्रहणाभावात् समासस्येत्यादौ भावे लादयो न स्युः इत्यत आह-तच्चेति* । नचोक्तविधज्ञापकस्य भाष्यानारूढत्वामिति वाच्यम्, 'गतिबुद्धि' इति सूत्रेऽकर्मकग्रहणेन 'कालकर्मणामुपसंख्यान' मिति वचनमापाद्य "सिद्धंतु कालकर्मणामकर्मकवचनात्" इत्युक्तेः। "तर्त्तार्हि वक्तव्यं न वक्तव्यमकर्मणामित्युच्यते केनचिद् कर्मणाभावाद्भिरकर्मकास्तें एव विज्ञास्यामः क्वचिद्येऽकर्मकाः" इति तथाचोक्तविधज्ञापकस्यैतद्भाष्यारूढत्वेन नारूढत्वाभावादवतारितं, चैवमेवैतद्भाष्यविवरणे स्पष्टम् ।

सत्येव च तस्मिन्नर्थे तत्र सम्बन्धित्वेनान्वयाविवक्षणाद्वेति भावः । इदं कैयटानुरोधेन(१) ।

परे त्वविवक्षितकर्मणामप्यकर्मपदेन ग्रहणम् । क्तादीनामविवक्षि-तकर्मकेभ्यः 'कृतपूर्वी कटम्' इत्यादौ भाष्यकृता कैयटेन चाङ्गीका-रात् । लुनातेर्निवृत्तप्रेषणाण्णिचि 'लावयति केदारं देवदत्तः' इत्या-दौ केदारस्य कर्मद्वितीयान्तस्य 'णेरणौ'(पा०सू०१।३।६१) इत्यत्र कै-यटेन प्रयोगाच्च । न चात्रार्थान्तरे वृत्त्याऽकर्मकत्वं, न त्वविवक्षयेति वाच्यम् । तत्त्वप्रत्यभिज्ञयाऽर्थान्तरत्वाभावात् । तदुदाहरणं तु स्य-न्दते इत्याद्यर्थकं 'नदी वहति' इत्याद्याकरे स्पष्टम् । (२)'अधीगर्थ' (पा०सू०२।३।५२) इति सूत्रे कर्मणः शेषत्वविवक्षया ऽकर्मकत्वे 'मा-तुः स्मर्यते' इत्यत्र भावे लस्य भाष्ये उदाहृतत्वाच्च ।

---

ति* । कर्मान्वयोग्येत्यर्थः । स च व्यापारव्यधिकरणफलरूपः । *सत्ये-वेति* । तादृशफलस्य धात्वर्थत्वेऽपि तादृशफलाश्रयत्वन्न विवक्षितं किन्तु तद्धात्वर्थे कर्मत्वाभिप्रेतस्य सम्बन्धित्वेनान्वयित्वमात्रम् ।

कैयटमतन्दूषयन्स्वमतमाह—*परे त्विति* । *लुनातेरिति* । द्वि-धाभवनानुकूलव्यापारार्थको हि लुनातिः । तत्र व्यापारत्यागे 'लूयते केदारः स्वयमेव' । पुनस्तस्यैव केदारस्य प्रयोज्यत्वविवक्षया हेतुमण्णिचि केदारस्यानेन सूत्रेण कर्मसंज्ञायां 'लावयति केदारन्देवदत्त' इति भवति । अविवक्षितकर्मकस्याग्रहणे तु एतादृशप्रयोगानुपपत्तिः स्फुटैव । तत्त्वप्रत्य-भिज्ञया फले पूर्वकालज्ञातफलाभेदस्य तदेवेदमितिप्रत्यभिज्ञया । *तदुदा-हरणन्तु* । अर्थान्तरे वृत्तेरित्यस्योदाहरणन्त्वित्यर्थः । *नदी वहतीति* । तत्र स्कन्धग्रहणादिपूर्वकदेशान्तरप्रापणार्थकत्वस्याप्रतीतेः । *भाष्ये उ-दाहृतत्वाच्चेति* । एवञ्चैतादृशभाष्यप्रयोगोऽपि शास्त्रेऽकर्मकपदेनाविव-क्षितकर्मकाणां ग्रहणे मानम् ।

---

(१) *कैयटानुरोधेनेति* । सिद्धंतु कालकर्मणामिति वार्तिकव्याख्यानावसरेऽन्त्यन्ताविद्यमानकर्माणो ये अकर्मकग्रहणेन गृह्यन्ते नत्वविवाक्षितकर्माणः । अन्यथा पचादीनामपि कर्माविवक्षायामकर्मकत्व-प्रयुक्तानि कार्याणि भवेयुरित्याकारस्य कैयटस्यानुरोधेनेत्यर्थः ।

उच्छृंखलानुयायिनस्तु 'क्वचित् येऽकर्मकाः' इति पूर्वोक्तभाष्यस्यायमर्थः । क्वचित्कालादिव्यतिरिक्तद्र-व्यकर्मविशेषप्रतियोगिनो योऽकर्मका इत्यर्थः । कालादिव्यातिरिक्तद्रव्यरूपकर्मप्रतियोगिकाभाववन्त एव । तादृशाश्च सर्वथा द्रव्यकर्माभाववन्त अविवाक्षितकर्माणश्चेत्युभयेऽपि ग्राह्या इत्याहुः ।

(२) ननु कैयटोक्तिखण्डने कैयटप्रयोगस्य प्रमाणीकरणमनुपपन्नमित्यस्वरसात् अधिगर्थेति सू-त्रस्थप्रयोगस्य प्रामाण्यं वदन् हेत्वंतरं दर्शयति–अधिगर्थेति* ।

यत्तु प्रकृतसूत्रे भाष्ये "कालकर्मणामुपसंख्यानं कर्त्तव्यम्। न कर्त्तव्यम्। न च केचित्कालभावाध्वभिरकर्मकाः, ते एवं विज्ञास्यामः क्वचिद्येऽकर्मका इति" इत्युक्तम्। क्वचिदित्यस्य कालादेः कर्मसंज्ञाप्रयोजकव्याप्त्यादिरहिते ऽर्थे इत्यर्थः। तस्यायं भावः—उक्तरीत्याऽकर्मकपदसामर्थ्याद्वा शास्त्रे ऽकर्मकपदस्यावस्थान्तरे कर्मरहिता इत्यर्थ इति। तादृशस्थलेञ्च सर्वथा द्रव्यकर्माभावात्तदविवक्षणाद्वेत्युभयविधमपि कृतपूर्वीत्यादिभाष्याद्ग्राह्यं, विनिगमनाविरहाच्च। अत एवाकर्मकाधिकारे 'शुदृशादिभ्य' आत्मनेपदविधानं सङ्गच्छते। अकर्मकशब्दे च धातुरेवान्यपदार्थः। अर्थभेदेन च शब्दभेदः। कर्मत्वेन कालाद्यतिरिक्तकर्मानन्वयार्थकत्वञ्च तत्त्वमिति बोध्यम्। (१)'न च केचित्' इति भाष्ये धातुमात्रस्य कालकर्मकार्थवृत्तित्वमिति दर्शितम्। यद्वा "यत्कर्म भवति न च भवति तेनाकर्मकाणां, न चैतत्कर्म क्वचिदपि न भवति" इति भाष्योक्तपक्षान्तरेण तत्सामर्थ्याद् व्यभिचारिद्रव्यकर्मरहितस्य

भाष्यान्तरविरोधशङ्कां वारयति—*यत्त्विति*। अस्मिन्भाष्यीयव्याख्याने न च केचिदितिकथनेन कालादिसम्बन्धसत्त्वासत्त्वाभ्यां सकर्मकत्वमकर्मकत्वमिति न युक्तमित्यर्थः प्रतीयते स च न युज्यते यथा 'कृतपूर्वी कटम्' 'भुक्तपूर्वी ओदनम्' इत्यत्र पूर्वङ्कर्मान्वयाविवक्षयाऽकर्मकत्वन्तथा कालाद्यन्वयाविवक्षया कालादिभ्योऽप्यकर्मकत्वसम्भवादिति विरोधो नास्माकम्मते इत्याशयेनाह—*क्वचिदित्यस्येति*। हेत्वन्तरमाह—*विनिगमनाविरहादिति*। उक्तार्थे प्रमाणमाह—*अत एवेति*। उक्तविधाकर्मकग्रहणादेव। मूलोक्तरीत्यनुसारेण तु शुदृश्यादीनान्देशकालादिभिन्नकर्मसम्बन्धवत्त्वेनाकर्मकत्वाभावादेषामकर्मकाधिकारे पाठो व्यर्थः स्यादिति भावः। नन्वकर्मकपदान्न विद्यते कर्म यस्येति व्युत्पत्त्या धातोः क्रियाबोधादकर्मकाद्धातोरित्यनुपपन्नमत आह—*अकर्मकशब्दे चेति*। ननु तथापि कथमविवक्षितकर्मणोऽकर्मकपदेन ग्रहणं यावता तस्यैव कर्मणोऽन्वयविवक्षा तदा कर्मणोऽविद्यमानत्वेनाकर्मकपदवाच्यार्थविरोधादत आह—*अर्थभेदेनेति*। ननु कालाद्यन्वयित्वेन धातोरपि तत्त्वबाधितमेवेत्यत आह—*कर्मत्वेनेत्यादि*। अत्र कर्मत्वेनेत्यस्य निवेश

(१) ननु कालादिकर्मणां धातुमात्रस्य सकर्मकत्वमप्रामाणिकमत आह—*न केचिदिति भाष्येण* उक्तविधभाष्यस्य व्यभिचारिद्रव्यकर्मरहितस्यैवाकर्मकत्वमित्यर्थो भाष्योक्तपक्षान्तरेणाव्याख्याने आह—यद्वेति*।

षितः । एवञ्च मासादिप्रयोगे ऽपि तदवस्थायामेवाकर्मत्वं बोद्ध्य-। एतेनात्र सूत्रे 'न च केचि'दिति प्रतीकमुपादाय "कालादेरविवक्षया कर्मकत्वसंभवोऽस्त्येव" इत्याशङ्क्य "अत्यन्ताविद्यमानकर्मकाणामेवात्र त्रे ऽकर्मकपदेन ग्रहणम् , अन्यथा पचादीनामविवक्षितकर्मत्वे ला-दयः स्युः" इति कैयटेनोक्तं, तत्परास्तम् । अतिप्रसङ्गस्त्वनभिधानाद्वा-रणीय इति वदन्ति ॥

हृक्रोरन्य (पा०सू०१।४।५३) । तत्राभ्यवपूर्वस्य हरतेर्भक्षणा-र्थत्वाद्विकारार्थकरोतेश्चाकर्मकत्वात्प्राप्ते, अर्थान्तरे चाप्राप्ते उभयत्र वि-भाषेयम् । अभिवादि (वा)। हेतुमण्ण्यन्तस्याभिवादे दृशिप्रकृतिकण्यन्त-स्य चेत्यर्थः ॥

अधिशीङ् (पा०सू०१।४।४६)॥ आधार इत्यनुवर्त्तते। (१)त-स्यैव कर्मत्वशक्तिमत्तानेन बोद्ध्यते ।

अभिनिविशश्च (पा०सू०१।४।४७)। व्याख्यानाद् 'अभिनि' इतिद्वन्द्वे पूर्वौ विशिति समासः । अभिनिवेश आग्रहः, सन्मार्गविषयकाग्र-हेणेत्यर्थः । व्यवस्थितेति । "परिक्रयणे" (पा०सू०१।४।४४) इत्यतोऽन्यतरस्यां ग्रहणानुवृत्तेरस्य वैकल्पिकत्वम् । अतिप्रसङ्गस्त्व-

---

तुः स्मर्यते इत्यादिसङ्ग्रहः-*व्यभिचारिद्रव्येति*। कटादिः । *एतेन* कभाष्यविरोधेन । *अतिप्रसङ्ग इति* । कैयटोक्तातिप्रसङ्ग इत्यर्थः ।

ननु हृक्रोः सकर्मकत्वाद् हृक्रोरितिसूत्रस्योभयत्रविभाषार्थत्वव्यवहा-नुपपत्तिरत आह-*तत्राभ्यवेति* । 'अभ्यवहारयति सैन्धवान्' इत्यादौ करोतेश्चाकर्मकत्वादिति* । 'विकारयति सैन्धवान्' इत्यादौ । *अर्था-न्तरे* । हरणार्थकहरतेरुत्पत्त्यनुकूलव्यापारार्थककरोतेश्च प्रयोगे । यत्तु अभिवादिदृशोः इत्यस्य व्याख्यानावसरे 'वद सन्देशवचने' इतिधातोरा-त्मनेपदीयस्यायन्निर्देश इत्याह तन्नेति सूचयन्नाह-*हेतुमण्ण्यन्तस्येति* । 'अभिवदति गुरुन्देवदत्तः । अभिवादयति गुरुन्देवदत्तम्' इति भाष्य-प्रयोगस्योपपत्तिः ।

*तस्यैव* । आधारस्यैव ।

*व्याख्यानादिति*। नेः 'अल्पाच्तरम्' इति सूत्रबलेन पूर्वनिपाते कर्त-व्ये ऽभेः पूर्वनिपातकरणमूलकादित्यादिः । *अस्य*। अभिनिविशश्चेति सू-

---

(१) अधिशीङिति सूत्रेण कर्मत्वं द्वितीयमात्रोपयोगि बोध्यते । शाब्दबोधस्वारस्येनेति केचित् मते सूचयितुमाह-*तस्यैवेति* । एवञ्च कर्मत्वेनैवशाब्दबोध इति भावः ।

नभिधानाद्वारणीयः। (१)एतच्च 'एष्वर्थेष्वभिनिविष्टानाम्' इति प्रवर्तितसमर्थसूत्रे कैयटे। परे त्वेतद्भाष्यप्रयोगाद् 'अभिनिविश्' इत्यानुपूर्व्या अविकृताया यत्र श्रवणं तत्रैवैतत्सूत्रप्रवृत्तिरन्यतरस्यांग्रहणानुवृत्तौ व्यवस्थितविभाषाश्रयणे च न मानमित्याहुः।

उपान्वध्याङ्वसः (पा०सू०१।४।४८)॥ अलुग्विकरणत्वाद् भ्वादेरेव ग्रहणमित्याह—वसतेरिति। भाष्ये 'अश्यर्थस्य न' इत्युक्तम्। 'मशकार्थो धूमः' इतिवदशेर्निवृत्त्यर्थस्येति तदर्थः। तत्फलितमाह—अभुक्त्यर्थस्य नेति। 'उपोष्य रजनीमेकाम्'इत्यादौ 'कालाध्वनोः' (पा०सू०२।३।५) इति द्वितीया। 'ग्रामे उपवसति' इत्यत्र ग्रामे वसन् त्रिरात्रमुपवसतीत्यर्थ इतीदं न कार्यमिति भाष्ये स्पष्टम्।

उपपदविभक्तिमाह—उभेति। उपपदविभक्तीनां संबन्धांशे विशिष्यानुक्तेः षष्ठ्यपवादत्वाच्च। उभसर्वयोस्तसाविति विग्रहः। उभांशे उभयशब्दनिष्ठं प्रकृतित्वमुभशब्दे आरोप्य तत्प्रकृतिकत्वं षष्ठ्यर्थः। उभयशब्दसर्वशब्दप्रकृतिकतसन्तयोगे इत्यर्थः। आम्रे

त्रस्य। *अतिप्रसङ्ग इति*। पापेऽभिनिवेश इत्यत्रातिप्रसङ्ग इत्यर्थः। कैयटोक्तन्दूषयति—परे त्विति*। *एतत्प्रवृत्तिरिति*। 'पापेऽभिनिवेशः' इत्यत्र तु गुणदर्शनेन नास्य प्रवृत्तिरिति भावः। *न मानमित्याहुरिति*। अत एव 'देवत्रात' इत्यादिपरिगणनविरोधो नेति भावः।

*भ्वादेरिति*। निवासार्थस्येति शेषः। तेनाच्छादनार्थस्य न ग्रहणमिति फलितम्। *रजनीमेकामित्यादाविति*। आदिना 'हरिदिनमुपोषित' इत्यस्य सङ्ग्रहः। "अश्यर्थस्य न" इतिवचनस्य प्रत्याख्यानप्रकारमाह—*ग्रामे उपवसतीत्यत्रेति*।

*उपपदविभक्तिमिति*। उपपदस्य विभक्तिमित्यर्थः। षष्ठ्यर्थसम्बन्धश्च स्वयोगनिमित्तकत्वम्। *षष्ठ्यपवादत्वाच्चेति*। अत्र चकारो वार्थेऽनास्थायाम्। षष्ठ्यपवादत्वस्यैव सम्बन्धार्थकत्वसाधकत्वन्तु युक्तम्। सर्वासां विभक्तीनां यदि "कर्मणि द्वितीया" इत्यादिसूत्रम्न स्यात्तर्हि तत्र षष्ठी स्यात्तेषामारम्भे तु द्वितीयेति रीत्या कर्माद्यर्थकत्वमितिकल्पनया सम्बन्धार्थकत्वापातात्। *उभसर्वयोरिति*। प्रकृतिद्वित्वादत्र द्विवचननिर्देशः। ननु नित्यमिति सूत्रेण वृत्तिविषये पूर्वमेवायज्विधानादुभशब्दस्य न तसिप्रत्ययप्रकृतित्वमत आह—*उभांश इति*। आम्रेडित

(१) अन्यतरस्यामिति पदस्य मण्डूकप्लुत्यानुवृत्तौ भाष्यानुरोधं दर्शयितुं कैयटमत माह-एतच्चेति

डितान्तेष्विति । कृतद्विर्वचनेष्वित्यर्थः । धिक् कृष्णेति । धि-
र्गो निन्दा । कृष्णाभक्तसंबन्धिनिन्देत्यर्थः । उपर्यादीनां समीपो-
र्ध्वदेशादिवृत्तित्वमर्थः (१) । 'अभितः परितः' इत्यत्र 'पर्यभिभ्यां
च (पा०सू०५।३।९) इति तसिल् । तत्राद्यस्योभयत इत्यर्थोऽन्त्यस्य
सर्वत इत्यर्थ इति 'पर्यभिभ्यां च(पा०सू०५।३।९)इत्यत्र भाष्ये ॥

अन्तराऽन्तरेण (पा०सू०२।३।४) ॥ अन्तरेणेत्यटाबन्तसाहच-
र्यादन्तरेत्यटाबन्तम् , अन्तरेत्यतृतीयान्तसाहचर्यादन्तरेणेत्यतृतीया-
न्तम् । साहचर्यं सादृश्यम् । "तद्यथाऽस्य गोर्द्वितीयेनार्थ इति गौरेवानी-
यते नाश्वो न गर्दभः" इति दृष्टान्तपरभाष्येण सदृशानामेव प्रयोगे
सहायतेत्यर्थस्य प्रतिपादनात् । तेन "किमनयोरन्तरेण ज्ञातेन"
इतिप्रसिद्धम् । अन्तरेण–विशेषणेत्यर्थः । एवञ्चैतयोरव्यययोरेव
ग्रहणम् । यद्वा, अन्तराशब्दस्य प्रथमैकवचनान्तस्यानभिधानात् 'अ-
न्तरा' इत्यानुपूर्वीकमव्ययमेव प्रयोगेषु दृश्यते इति तत्साहचर्यादन्त-

---

ष्वित्यनुपपन्नमाम्रेडितसंज्ञां विनाऽपि प्रकृते द्विर्वचनमात्रेणेष्टानिर्वाह
इत्याशयेनाह-*कृतद्विर्वचनेष्वित्यर्थ इति* । 'उभयतः कृष्णम्' इत्यादेः
कृष्णसम्बन्धि पार्श्वद्वयाभ्यामागता इत्यर्थः । *कृष्णाभक्तसम्बन्धिनि-
न्देति* । एतेन यदर्थस्य सम्बन्धी धिक्शब्दार्थो प्रतीयते तद्वाचकाद्विती-
येति ध्वनितम् । 'धिङ्मूर्ख' इत्यादौ तु न सम्बोधनविभक्त्यन्तार्थस्य बो-
धनीयार्थान्वयित्वेन धिगर्थान्वयाभावात् । *पर्यभिभ्याञ्चेति तसिलिति* ।
न चाभिमुख्यार्थस्याखण्डस्याभित इत्यस्यैव प्रतिपदोक्तत्वाद् ग्रहणं युक्त-
मिति वाच्यम्, परितः शब्दसाहचर्येण तसिलन्तस्यापि ग्रहणात् ।

'रामलक्ष्मणौ' इत्यादिवन्मिथः साहचर्यस्यापि नियामकत्वमित्याश-
येनाह-*अन्तरेणेत्यटाबन्तेत्यादि* । ननु रामलक्ष्मणाविितिवन्न सहच-
रत्वप्रकृते प्रसिद्धमत आह-*साहचर्यं सादृश्यमिति* । सहचरितासह-
चरितयोरितिपरिभाषायामेतादृशस्यैव साहचर्यस्य विवक्षितत्वादिति
भावः । *तेन* । सदृशस्यैव ग्रहणेन । भाष्यानुरोधेनाह-*यद्वेति* ।
*अनभिधानादिति* । अत्र मानम् 'अन्तराशब्दोऽयमदृष्टापचार' इति

---

(१) *सपीपोर्ध्वदेशादिति* । अत्रादिशब्दार्थः अधस्तनदेशः । तथाच-समीपोर्ध्वभाग-समीपाधस्त-
नसमीपदेशवृत्तित्वानि क्रमेणार्थः । सामीप्यरूपसम्बन्धोऽत्रद्वितीयार्थः । न च 'सामीप्यं न षष्ठ्यर्थः,
इति प्रवादः कथमिति वाच्यम्, अन्वयिपदाथाच्यं सामीप्यं न षष्ठ्यर्थ इत्येतंपरत्वेन प्रवादस्य सङ्गतेः ।
समीपोर्ध्वभागवृत्तिरित्यादि क्रमेण शाब्दबोधो बोध्यः ।

रेणेत्यप्यव्ययमेव । तदुक्तं भाष्ये "अन्तराशब्दो ऽयमदृष्टापचारो
निपात एवेति" इति बोद्धव्यम् । अवधित्वरूपः संबन्धो मध्यस्वा-
न्वयी मध्यार्थान्तराशब्दयोगे द्वितीयार्थः । तस्यैव संबन्धत्वेन बोधे
षष्ठी । हर्यादिपदात्तु न द्वितीया, 'उपपदविभक्तेः" इति न्यायेन तत्र
प्रथमाया एव प्राप्तेः(१) । युक्तग्रहणन्तु स्पष्टार्थम् ।

अधिकृत्येति । 'विभाषा कृञि' (पा०सू०१।४।९८) इत्यन्तमिति
बोद्धव्यम् । महासंज्ञाकरणं त्वन्वर्थत्वाय । कर्म—क्रियां प्रोक्तवन्तः क-
र्मप्रवचनीयाः । बहुलकात् (२)कर्तरि भूते अनीयः । तेन सम्प्रति
क्रियां न द्योतयन्ति, किन्तु क्रियानिरूपितं सम्बन्धविशेषं द्योतय-
न्ति । क्वचित्सम्बन्धविशेषाद्योतकेऽपि वचनसामर्थ्यात्संज्ञा, यथा
'अधिपरी अनर्थकौ,' 'सुः पूजायाम्' इति च । निपातसञ्ज्ञासमा-
वेशस्त्वस्या अप्युक्तः(३) ।

---

भाष्यमेव । 'अन्तरा त्वां माम्' इत्यत्र द्वितीया 'किमनयोरन्तरा' इत्यादौ
षष्ठीत्यत्र किन्नियामकमत आह—*अवधित्वरूप इति* । *मध्यार्थान्तरे-
ति* । एवञ्च मध्यत्वस्य नित्यसाकाङ्क्षत्वात्तादृशैकदेशे त्वाम्मामिति द्वि-
तीयान्तार्थान्वयः । अवधित्वरूपसम्बन्धस्यावधित्वत्वेन रूपेण विषयता-
विवक्षायान्द्वितीया । *तस्यैव सम्बन्धत्वेन बोध इति* । अत एव "हलो
ऽनन्तरा" इतिसूत्रभाष्ये 'अविद्यमाना अन्तरा येषाम्' इति प्रयोगः स-
ङ्गच्छते । नन्वन्तराशब्दार्थानुयोगित्वेन हरिशब्दार्थस्यापि भानाद्धरिशब्दा-
दपि द्वितीया स्यादत आह—*हर्यादिपदादिति* । *न्यायेनेति* । प्रकृते
च हरिरस्तीत्यादिरीत्या हरिशब्दार्थस्य कर्तृत्वात्प्रथमेति भावः ।

*क्रियाञ्चेति* । क्रियागतविशेषञ्चेत्यर्थः ।

*अस्या* । कर्मप्रवचनीयसंज्ञायाः ॥

---

(१) *प्रथमाया एव प्राप्तेरिति* । आख्यातार्थकारकसमानाधिकरणार्थकत्वात् प्रथमाया अति-
रक्तविभक्तित्वादिति भावः ।

(२) कर्मेत्यस्य व्याख्यानं क्रियामिति, प्रवचनीया इत्यस्य व्याख्यानं प्रोक्तवन्त इति । ननु प्रोक्तव-
न्त इति प्रवचनीया इत्यस्य व्याख्यानमयुक्तं तयोरेवकृत्यक्तखलर्थाः इत्यनेन कर्मणि, भावे, एवानीयरो वि-
धानादित्यत आह—*बाहुलकादिति* ।

(३) *अस्य अप्युक्त इति* । निपातसंज्ञया सह समावेश इति शेषः । 'प्रादयः' 'उपसर्गाः' क्रिया-
योगे' इति सूत्रभाष्ये उक्त इति तदर्थः । तथाहि—"प्रादय इति योग विभागः कर्तव्यः एक योगे हि प्रादी-
निपातसंज्ञाया अभावः स्यात् यस्मिन्नेव विशेषगत्युपसर्गकर्मप्रवचनीयसंज्ञा तस्मिन्नेव विशेषे निपातसं-
ज्ञा स्या" दि-युक्तम् । तदुक्त्या कर्मप्रवचनीयसंज्ञाया निपातसंज्ञया समावेशः स्पष्ट एवोक्तः । भाष्ये यस्मि-
न्नेव विशेषे इत्यस्य क्रियायोगरूपे इत्यर्थो बोध्यः । अक्रियायोगे निपातसंज्ञा न स्यादिति तदाशयः ।

लक्षणे इति । तत्सम्बन्धे लक्ष्यलक्षणभावरूपेऽनुना द्योत्ये ऽर्थः । अपवाद इति । तद्द्योत्यसम्बन्धस्य क्रियान्वयात्तयोः प्राप्तिस्तेन प्रकृते "गतिर्गतौ" (पा०सू०८।१।७०) इति निघातो न । तृतीयार्थो लक्ष्यलक्षणभावः सम्बन्धः, हेतुश्चेत्यनुना द्योत्यते। लक्षणत्व-म्-ज्ञानजनकज्ञानविषयत्वम्। जपज्ञानेन हि कालविशेषाविशिष्टा वृष्टि-र्ज्ञाप्यते। जपाभिन्नहेतुज्ञानजन्यज्ञानविषयो वर्षणमिति बोध इत्याह—हेतुभूतेति । पराऽपीति । कर्मप्रवचनीयसंज्ञावकाशो हेतुत्वावि-वक्षायां, हेतुतृतीयावकाशो 'धनेन कुलम्' इति, प्रकृते च हेतुत्वविव-क्षायां परत्वात्तृतीयाप्राप्तिरिति भावः । पुनः संज्ञेति । 'लक्षण-त्थंभूत' (पा०सू०१।४।९०) इत्येव सिद्धे पुनः संज्ञाकरणबोधितपुन-र्द्वितीयाविधानसामर्थ्यादित्यर्थः । (१)एतेन संज्ञया विजातीयत्वा-द्विभक्तिबाधः कर्तुमशक्य इति परास्तम् । स्पष्टश्चेदं भाष्ये ॥

तृतीयार्थे (पा०सू०१।४।८५) । तृतीयाशब्देन तन्निमित्तशब्दः "(२)सहयुक्ते" (पा०सू०२।३।१९), इत्यत्रोपात्तोऽनन्तरत्वात्सह-शब्दो लक्ष्यते तदर्थे साहित्ये द्योत्ये इत्यर्थः । साहित्यरूपः स-म्बन्धोऽनुद्योत्यो द्वितीयार्थस्तदाह—नद्येति । क्त इति । कर्तरी-ति भावः ॥

---

*तयोः* । गत्युपसर्गसंज्ञयोरित्यर्थः । *तेन* । अनोर्गतित्वाभावेन । लक्ष्यलक्षणभावात्मको यः संबन्धस्तद्घटकलक्षणत्वे जपस्यान्वये लक्षण-त्वान्वितलक्ष्यत्वस्य वर्षणक्रियायां सम्बन्धे सति तादृशसम्बन्धस्य लक्ष्य-त्वघटिततया क्रियानिरूप्यत्वं स्पष्टमित्यनोः कर्मप्रवचनीयत्वम् । एवमेवा-न्यत्र कर्मप्रवचनीयसम्बन्धाविषये ज्ञेयम् । तदेतदुपपादयति-*लक्षण-त्वञ्चेत्यादिना* । ज्ञानजनकेत्यत्र ज्ञानं लक्ष्यस्याविशेष्यस्यैतादृशः ल-क्षणत्वेनाभिप्रेतस्य ज्ञानजन्यज्ञानविषयत्वं सम्बन्धः । 'कदा वृष्ट' इत्येवङ्क-स्य चित्प्रश्ने इदमुत्तरम् । मूलोक्तं संज्ञायाः फलबाधकत्वमुपपादयति—*कर्मप्रवचनीयसंज्ञावकाश इत्यादिना* । *स्पष्टमिति* ।

---

(१) *एतेनेति* । द्वितीयाविधानसामर्थ्यादिति मूलस्यैवंविधव्याख्यानेनेत्यर्थः । यथाश्रुते तु ...देव दोष इति भावः ।

(२) *तन्निमित्तशब्द इति* । तृतीयानिमिभूतः शब्द इत्यर्थः । स च क इत्यत आह—सह युक्ते इत्य-त्रेति* । *तदर्थे इति* । तृतीया लक्ष्यार्थे इत्यर्थः । अनुद्योत्यः साहित्यरूपः सम्बन्धः कस्य शक्यार्थ इत्यत आह-साहित्येति* ।

उपोऽधिके च (पा०सू०१।४।८७)। चाद्धीने। सप्तमीति। 'यस्मादधिकम्' (पा०सू०२।३।९) इत्यनेनेति भावः। उपखार्यां द्रोण इति यथा। खार्यपेक्षयाऽधिकत्ववान् द्रोण इत्यर्थः। तेनोभयम-स्तीति फलति। इत्थंभूतः कश्चित्प्रकारं प्राप्तः, स आख्यायतेऽने-

---

न च "लक्षणेत्थम्" इतिसूत्रसिद्धसंज्ञायाः 'जपमनु सिञ्चति' इति इत्यत्र षत्वाभावसाधकतया चारितार्थ्येन द्वितीयाविधायकत्वे मानाभावेन द्वितीयासाधकत्वेनेदमावश्यकमिति पुनः संज्ञाकरणेत्यनुपपन्नमेवेति वाच्यम्। तत्सूत्रविहितसंज्ञाया उपसर्गसंज्ञाबाधकतया चारितार्थ्येपि कर्मप्रवचनेति सूत्रेऽपि तस्योपस्थितिः स्यादेवेति द्वितीयाया प्राप्तेः। 'न-दीमन्वसिता' इत्यत्र तृतीयार्थः साहित्यमनुद्योत्यम्। साहित्यञ्च प्रकृतेऽनुयोगित्वलक्षणमेव। एवञ्च नद्यनुयोगिकसम्बन्धप्रतियोगित्ववती नेति बोधः। नद्या यद्यपि तादृशसम्बन्धानुयोगित्वन्तथापि कर्मप्रवचनीयानुद्योत्यानुयोगित्वे स्वनिष्ठाधारतानिरूपिताधेयतासम्बन्धेन नद्या अन्यात्कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वमक्षतमेव "हीने" "उपोऽधिके च" इतिसूत्रयोर्हीनाधिकशब्दौ भावप्रधाननिर्देशेन हीनत्वाधिकत्वपरौ। तादृशम्बन्धप्रतियोगित्वम्पूर्ववत्। 'अनुहरिम्' इत्यत्रानुद्योत्ये हीनत्वे निरूपितत्वसम्बन्धेन हरेरन्वयः।

न्यूनतापरिहाराय मूलानुक्तम् "उपोऽधिके च" इतिसूत्रोदाहरणमाह-*उपखार्यान्द्रोण इति यथेति*। अत्राधिकत्वमुपद्योत्यन्तत्र खार्या निरूपितत्वसम्बन्धेनान्वयः। अधिकत्वञ्च अधिकरणाधिकरणकस्थितिकर्तृत्वरूपम्पारिभाषिकम् तदेकदेशाधिकरणत्वे तेन सम्बन्धेनान्वयः। न तु स्वनिष्ठपरिमाणाधिकपरिमाणवत्त्वम्। द्रोणपरिमाणस्य खारीनिष्ठपरिमाणतो न्यूनत्वात्। तथाहि—

पलम्प्रकुञ्चकम्मुष्टिः कुडवस्तच्चतुष्टयम्।
चत्वारः कुडवाः प्रस्थश्चतुः प्रस्थमथाढकम्॥
अष्टाढको भवेद्द्रोणो द्विद्रोणः शूप उच्यते।
सार्द्धः शूर्पो भवेत्खारी द्विशूर्पा गोण्युदाहृता॥
तामेव भारञ्जानीयाद्द्वहो भारचतुष्टयम्।
शुष्कमेयेष्विदम्मानं द्विगुणन्तद्द्रवेषु तु॥

इति। तदाह-*तेनोभयमिति*। उभयम् खारी द्रोणश्च। स्वनिष्ठपरिमाणाधिकपरिमाणाख्यायान्तु उपद्रोणे खारीत्युदाहरणम्बोध्यम्। *आख्यायते*। निरूप्यते। 'भक्तो विष्णुं प्रति परि अनु' इत्यत्र भक्तिप्राप्तः आख्यायते। भक्तिश्चाराध्यत्वप्रकारकं ज्ञानम्। द्वितीयार्थश्च विषयित्वं

नेति इत्थंभूताख्यानं—प्रकारविशेषनिरूपकम् । भागशब्देनांशआद्यज-त्वेन तत्स्वामी उच्यते । वीप्सायां द्विर्वचनविशिष्टवृक्षशब्दबोध्यत्वा-द्याह-विषयभूतेष्वित्ति । वृक्षं प्रतीति । वृक्षप्रकाशेन विद्युद्दि-द्योतदेशज्ञानाद् वृक्षो लक्षणम् । वृक्षं वृक्षमिति । वृक्षस्य व्याप-कतासंबन्धेनान्वयो यद्यपि द्विर्वचनबलादेव, तथापि प्रत्यादिसत्त्वे सो-ऽपि तन्निर्णायक इति (१)संबन्धपरिच्छेदकत्वं बोध्यम् । वृक्षादीनां सेचने कर्मत्वेऽपि तत्त्वेनाविवक्षायामनेन द्वितीया । किं च यद्यत्र कर्मणि द्वितीया स्यात्तदा प्रतिना सामर्थ्याभावात्प्रतिवृक्षमितिसमा-सानापत्तिः । (२)किं च प्रत्यादेः क्रियाविशेषकत्वे ऽन्वर्थतया कर्म-प्रवचनीयसंज्ञाया एवानापत्तिः । अत एव भाष्ये "किमर्थं पुनरिद-मुच्यते न चोपसर्गसंज्ञाबाधनार्थं, क्रियायोगाभावात्" इत्युक्त्वा 'द्विती-यार्थम्'इति सिद्धान्तितम् । अत एव 'प्रत्यर्थं शब्दानिवेशः' इत्यादावर्थ

---

प्रत्यादिद्योत्यन्तस्य भक्तपदार्थैकदेशभक्तावन्वयः । भागः स्वत्ववान् प-दार्थः । तद्वाचकादर्शआद्यचि तादृशपदार्थस्वामिलाभः । एवञ्च स्वामिनि विषयभूत इति लब्धम् । 'लक्ष्मी हरिम्प्रति' इत्यत्र स्वामित्वनिरूपितस्व-त्वम्द्वितीयार्थः। तस्य लक्ष्मीपदार्थेऽन्वयः । सूत्रे वीप्सापदं व्याप्यत्वपरम् । तदेवं 'वृक्षंवृक्षम्प्रति' इत्यत्र द्विर्वचनविशिष्टवृक्षशब्दाद्द्योत्यम् । तस्मिन् व्याप्यत्वे आधेयतासम्बन्धेन प्रकृत्यर्थस्यान्वयः । व्याप्यत्वञ्च स्वनिरूपि-तव्यापकसम्बन्धेन सेचनेऽन्वेतीत्येषां कर्मप्रवचनीयत्वम् ।

*द्विर्वचनबलादेवेति* । एवञ्च सम्बन्धपरिच्छेदकत्वाभावात्कथङ्कर्म-प्रवचनीयत्वमिति भावः । *सोऽपीति* 'व्यतिलुनीते' इतिवत्प्रत्यादिर-पीत्यर्थः । *तत्त्वेन* कर्मत्वशक्तिमत्त्वेन । उक्तार्थे भाष्यसम्मतिमाह—*अत एवेति* । प्रत्यादीनां क्रियाविशेषकत्वाभावादेव । *अत एव* । कर्म-

---

(१) *सम्बन्धपरिच्छेदकत्वमिति* । वृक्षस्य सेचने यः प्रातिक्रियाजनितो यो व्यापकतासम्बन्धः तत्परि-च्छेदकत्वमित्यर्थः ।

ननु वृक्षं वृक्षं प्रति सिंचतीत्यत्र सेचननिरूपितकर्मत्वादेव द्वितीयासिद्धेस्तद्विधानार्थं कर्मप्रवचनीयसंज्ञा विधानं न युक्तमित्याशंक्याह—वृक्षादीनामिति* ।

प्रकृते कर्मणिद्वितीया बाधिका भविष्यति इत्यरुचेराह—*किञ्चेति* ।

(२) सत्यामपि कर्मणिद्वितीयायां तदर्थं तद्विधानाभावेऽपि गत्युपसर्गसंज्ञाबाधनार्थं तु तद्विधानं न युक्तमेवेत्यत आह—*किञ्चेति* । प्रत्याद्युपसर्गाणां क्रियाविशेषद्योतनमन्तरेण क्रियायोगाभावाद्गत्युपसर्ग संज्ञयोरप्राप्त्या क्रियाविशेषद्योतने च सांप्रतिकक्रियावक्तृत्वेनान्वर्थतया कर्मप्रवचनीयत्वानुपपत्त्या च तदर्थमपि तद्विधानं न युक्तमिति भावः ।

स्य निवेशनक्रियानिरूपिताधिकरणत्वेऽपि 'अर्थमर्थं प्रति' इति विग्रहो भाष्ये दर्शितः, वृत्तिविषये प्रतिरेव वीप्साया अपि द्योतक इत्यन्य-दित्यास्ताम् । फलान्तरमप्याह—अत्रेति ।

यदत्रेति । यद्वस्तु मम भागः स्यादित्यर्थः ।

कुतोऽधीति । कुत इत्यपादाने पञ्चमी । द्वितीया तु न । कर्मप्र-वचनीयद्योत्यसंबन्धप्रतियोगित्वरूपस्य कर्मप्रवचनीययुक्तत्वस्याभावा-त् । गतिसंज्ञाबाधादिति । धात्वर्थमात्रद्योतकत्वेन क्रियायोगाद् प्र-तित्वं प्राप्तं, (१)विशेषद्योतकत्वाभावाच्चानर्थकत्वव्यवहारोऽपीति भावः ।

सुसिक्तमिति । सेकगतपूज्यत्वद्योतकः सुः । क्रियापूज्यत्व-

---

प्रवचनीयसंज्ञाया द्वितीयार्थत्वादेव । *फलान्तरम्* । कर्मप्रवचनीयसं-ज्ञाया फलान्तरम् ।

*यद्वस्त्वति* । यच्छब्दस्य बुद्धिस्थपरामर्शकतया प्रकृते बुद्धिस्थो भागः परामृश्यते । एवञ्च मत्सम्बन्धियद्भागकर्तृका एतद्देशाधिकरणिका सम्भाव्यमाना सत्ता तत्कर्मकप्रेरणाविषयो दानमिति बोधः । अत्र कर्म-प्रवचनीयसंज्ञाया अभावे उपसर्गसंज्ञासत्त्वादुपसर्गप्रादुर्भ्यामिति षत्वम् ।

ननु कुत इत्यत्राधिशब्दस्य क्रियायोगाभावाद्गतित्वस्य प्राप्त्यभावेन गतिसंज्ञाबाधादित्ययुक्तमत आह—*धात्वर्थमात्रेति* । "उपसर्गाः क्रिया-योगे" इति सूत्रे क्रियायोगपदं धातुना क्रियानिष्ठा या स्वशक्यतावच्छेदका-वच्छिन्ना विषयता तच्छाल्युपस्थितिजनने सहकारित्वं तच्च प्रकृतेऽप्यस्ति किन्तु क्रियात्वक्रियातिरिक्ततद्गतविशेषविषयकबोधजनने सहकारित्वं नास्तीति तदभावादेवानर्थकत्वव्यवहार इति भावः ।

सुः क्रियापूज्यत्व एव कर्मप्रवचनीय इत्याह—*क्रियापूज्यत्वेति* ।

---

(१) *विशेषेति* । अत्र नियामिकं च प्रकृतसूत्रस्थ भाष्यमेव । तत्रहि—"नेमावनर्थकौ । किं तर्ह्यन-र्थकावित्युच्यते । अनर्थान्तरवाचिनामनर्थकौ धातुनोक्तां क्रियामाहतुः । तद्विशिष्टं भवति यथा शंखे पयः" इत्युक्तम् । प्रकृतधात्वर्थातिरिक्तविशेषार्थद्योतकौ न भवत इति कृत्वाऽनर्थकौ प्रकरणादिसाम-र्थ्यावगतविशेषां धातुनोक्तां क्रियामाहतुः द्योतयतः इति कृत्वा सार्थकौ इति आहतुरित्यन्तभाष्यार्थः । यद्व तद्विशिष्टमित्यादेरयमर्थः—तत्क्रियालक्षणं वस्त्वविशिष्टमाधिपरिसान्निधानेऽपि अनाहितं विशेषम् । यथा शंखे न्यस्तं क्षीरं शौक्ल्यनाभिन्नं शंख इति ।

उच्छृंखलानुयायिनस्तु अधिपर्योरनर्थकयोः कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात् अनर्थकयोरप्यर्थकृतं फलं भवति, तथासत्यनर्थकयोरपि तयो र्गतित्वप्राप्त्या तद्बाधनार्थं कर्मप्रवचनीयसंज्ञाविधानं चरितार्थम् । पञ्चमीं चानर्थकस्यापि निपातस्य प्रातिपदिकसंज्ञासिद्धेति तन्नापूर्वं वक्तव्यं भवति । नच पञ्चम्यपाङिति पञ्चमी-विधानार्थं तच्चरितार्थमिति वाच्यम्, अपादाने पञ्चम्यैव 'कुतः पर्यागम्यते' इत्यादिसिद्धेस्तदर्थं तद्वि-धानास्यावश्यकत्वादित्याहुः ।

कृते तत्तत्क्रियाकर्तुः पूज्यत्वे गम्ये एवैषा संज्ञा । (१)अत एव 'सुषिक्तं किं तव' इत्यत्र न ।

अतिक्रमणम्—उचितादाधिकानुष्ठानम् । चात् पूजायामित्यनुकृष्यते । अतिदेवानिति । देवभ्योऽधिको देवपूज्य इति वार्थः । (२)द्वितीये 'कुगति' (पा०सू०२।२।१८) इति समासस्याभावस्तु अनभिधानात् । आद्ये तु प्राप्तिरेव न, 'स्वती पूजायामेव' इत्युक्तेः ।

अपिः पदार्थ (पा०सू०१।४।९६) पदस्य—अप्रयुज्यमानपदान्तरस्यार्थः पदार्थः । सर्पिषोऽपीति । अत्र बिन्दुरित्यादेः पदस्यार्थो ऽपिद्योत्यः । तदुक्तं वृत्तिकृता—"मात्राबिन्दुस्तोकमित्यस्यार्थे ऽपिर्वर्तते" इति । संभावनायां लिङिति । 'उपसंवादाशङ्कयोश्च" (पा०सू०३।४।८) इति सूत्रभाष्ये पठितेन "उपसंवादाशङ्कयोर्लिङ्" इत्यनेन । तच्च लोकसाधारणमित्यपि तत्रैव भाष्ये स्पष्टम् । तत्राशङ्कापेक्षा । (३)संभावनात्युत्कटकोटिका शङ्कैवेति भावः । कर्मप्रवचनीयत्वात्तद्द्योत्यसंबन्धमाह—तस्या एवेति । संभावनाया एवे-

---

सर्वेषामेव पदार्थत्वात्पदार्थ इत्यव्यावर्त्तकमत आह—पदस्येत्यादि* । एतेन यस्याप्रयुज्यमानपदस्यार्थोऽपिना द्योत्यते तस्य पदस्याध्याहारोऽपिशब्दबलादिति कथ्यते ।

ननु "सम्भावनायां लिङ्" इत्यसङ्गतं तादृशसूत्राभावादत आह—*उपसंवादेति* । अत्र 'यत्कर्मप्रवचनीययुक्तन्नादःप्रयुज्यते' इतिभाष्यादप्रयुज्यमानस्येति लब्धम् । दौर्लभ्यप्रयुक्तदौर्लभ्यश्च सम्बन्धः सोऽपिद्योत्य

---

(१) *अत एवेति* । क्रियापूज्यत्वकृत तत्क्रियाकर्तुः पूज्यत्वे गम्ये एव कर्मप्रवचनीयसंज्ञेत्यभ्युपगमादेवेत्यर्थः । अन्यथा तत्र सेकक्रियागतपूज्यत्वस्य सत्त्वात्कर्मवचनीयसंज्ञासत्वेनोपसर्गसंज्ञायाभावात् षत्वं न स्यादिति भावः ।

(२) ननु द्वितीये पूज्यारूपेऽर्थे कर्मप्रवचनीयसंज्ञाबाधेऽपि 'कुगति प्रादय' इति सूत्रे प्रादिग्रहणस्यागत्यर्थत्वात्तेन नित्यसमासः स्यादित्यत आह—*द्वितीये इति* । अनाभिधाने प्रमाणं च ग्रहणलभ्य पूजायां कर्मप्रवचनीयसंज्ञा विधानमेव । कर्मप्रवचनीयानां प्रतिषेधः इति तु गत्यादिविषय एवेति न तेन समासप्रतिषेध प्रसक्तिः । स्पष्टं चेदं कुगति प्रादय इति सूत्रे कैयटे ।

आद्ये अधिकरूपेऽर्थेऽनाभिधानकल्पनं तु न युक्तमित्याह—आद्ये इति* ।

(३) *उत्कटकोटिकेति*। अहं कुर्यान्नवेत्यादि समानोभयकोटिकं ज्ञानम्—आशंका । सैव एकोत्कोटिका-संभावना, इति संभावनाऽऽशंकयो विशेषः। तस्मात्संभावनाया आशंकान्तर्गतत्वात् आशकायां तद्विधाने संभावनायां तद्विधानं सिद्धमेवेति न दोष इति भावः ।

त्यर्थः । कर्तृदौर्लभ्यमिति षष्ठीतत्पुरुषः । कर्तृपदं प्रकृताभिप्रायम् । सर्पिषोऽपि पिबेदित्यादौ कर्मदौर्लभ्येत्यादि बोद्धव्यम् । (१)तत्र बिन्दोस्तद्दौर्लभ्यप्रयुक्तदौर्लभ्यसंबन्धस्य द्योतकोऽपिः । संबध्यत इति । स्यात्पदवाच्यक्रियायामपिद्योत्यबिन्दोः कर्तृतया द्योत्योक्तसंबन्धेन चान्वयादिति भावः । तदाह–अपिशब्दबलेनेत्यादि । एवञ्च सर्पिरवयवबिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यवती तत्कर्तृका संभावनाविषया सत्तेति बोधः । विशिष्टसत्तायाः संभावनाविषयत्वबोधे दौर्लभ्यस्यापि संभावनाविषयत्वमनुभवसिद्धम् ।

नन्वेवं (२)कर्मप्रवचनीयद्योत्येऽर्थे सर्पिषोऽन्वयेन तस्य कर्मप्रवचनीययुक्तत्वात् वा द्वितीया स्यादत आह–द्वितीया त्विति । न त्वपिनेति । बिन्दुना योगेऽप्यपिद्योत्यसम्बन्धेनानन्वय इत्यर्थः । कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वमेव तद्युक्तत्वम् । प्रकृते चापिद्योत्यस्योक्तसम्बन्धस्य बिन्दुः प्रतियोगी, न सर्पिरिति भावः । (३)यदा स्पष्टप्रतिपत्तयेऽपिद्योत्यस्यापि बिन्दोः प्रयोगस्तदापि द्वितीयां बाधित्वोपपदविभक्तेरिति प्रथमैव । तत्र कारकविभक्तित्वं क्रि-

---

एव । तदेतदुक्तम्–*कर्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यन्द्योतयन्निति* । *प्रकृताभिप्रायमिति* । एवञ्च कर्तृपदं कारकपरम् 'सर्पिषः' इत्यत्र धातोरकर्मकत्वात्कर्मणोऽसम्भवात्कर्तृपदमेवोपात्तम् ।

---

(१) *तत्रेति* । प्रकृतप्रयोगे इत्यर्थः । *बिंदोरिति* । बिंदुपदार्थस्य तद्दौर्लभ्यसम्बन्धस्य च द्योतको अपिशब्द इति तदर्थः । *तत्कर्तृकेति* । बिंदुकर्तृकेत्यर्थः ।

(२) नन्वपिद्योत्यसम्बन्धेनान्वयेऽपि कर्मप्रवचनीयापि शब्दयुक्तत्वात् सर्पिषः कर्मप्रवचनीययुक्तत्वमस्त्येवेत्यतः कर्मप्रवचनीययुक्तत्वपदार्थमाह–कर्मप्रवचनीयेति* । तद्योत्यसम्बन्धप्रतियोगित्वं बिन्दोरेव न सर्पिष इति भावः । तदेव स्पष्टयति–प्रकृते चेति* ।

(३) ननु स्पष्टप्रतिपत्तये यदा बिन्दुशब्दस्य प्रयोगस्तदा तस्योक्तविधकर्मप्रवचनीयत्वात्ततो द्वितीया स्यादेवेति इत्यत आह–*यदा स्पष्टेति* । तदुक्तं प्रकृतसूत्रे भाष्ये तत्रहि–"बिन्दोस्तर्हि कस्मान्न भवति" इत्याशंक्य "उपपदविभक्तेः कारकविभक्तिर्बलीयसीति प्रथमा भविष्यति" इति । नन्विदमयुक्तं विकल्पासहत्वात् । तथाहि–किमिदं बिन्दुशब्दप्रयोगाभावे, तत्प्रयोगे वा । नाद्यः' व्याघातम् । न द्वितीयः । तत्प्रयोगे तेनैव तदर्थप्रकाशनात् । अपिशब्दस्य पदार्थद्योतकत्वाभावेन कर्मप्रवचनीयत्वस्यैवानुपपत्तेः द्वितीयापादानासंभवादितिचेन्न, एतद्भाष्यप्रामाण्यादेव बिन्दुप्रयोगाभावदशायां यद्विद्यमानपदार्थद्योतकत्वं तन्मात्रमिहोपयोगित्या तत्प्रयोगदशायामपि स्वीकृत्य कर्मप्रवचनीयत्वाङ्गीकार इत्याशयात् । अत एव पदार्थग्रहणमिहोपलक्षणार्थमिति वदता कैयटेनापि पदार्थद्योतकत्वमुपलक्षण न तु विशेषणमिति स्पष्टमेवोक्तम् ।

[सम्भावनाजनक]जनकत्वार्थकविभक्तित्वमिति दिक्।

संज्ञाफलमाह—अनुपसर्गत्वादिति। अपि स्तुयादिति। [सम्भावनेऽलमिति] पूर्ववल्लिङ्। क्रियाविषयं शक्यत्वादिना सम्भावनमपिद्योत्यम्। प्रकृते [अ]वाङ्मनसगोचरं विष्णुमपि स्तुयादिति शक्त्युत्कर्षाविष्करणम्। [अ]त्युक्तिरसम्भाव्यार्थसम्भावनम्। सम्भावनपदस्येदृशार्थकत्वे व्याख्यानमेव शरणम्। विष्णुविषयायाः शक्यत्वसम्भावना सा चा[न्य]विषयानिश्चयेन शक्याकर्तुमिति फलति। शक्त्युत्कर्षमित्यौचित्यो[त्क]र्षादेरप्युपलक्षणम्। 'अपि वेदान्तपारगं हन्यात्' इत्यदौ हननक्रि[य]ायां सम्भावनाविषयौचित्योत्कर्षद्योतनात् सम्भावितौचित्यस्य चानु[ष्ठा]नप्रयुक्तमिति अस्य स्वार्थे तात्पर्याभावो धर्मशास्त्रोक्तः सङ्गच्छते। [का]मचारः—इच्छया प्रवृत्तिः। स्तुहि मा वा यथेष्टं कुर्विति यावत्। "[प्रै]षातिसर्ग" (पा०सू०३।३।१६३) इति लिङ्। अपि स्तुयाद् वृ[ष]लमिति। "उपसंवाद" (पा०सू०३।४।८) इति सूत्रपठितवार्तिकेन [सू]त्रेणान्तरङ्गेण च "गर्हायां लडपि" (पा०सू०३।३।१४२) इति बाधित्वा [स]म्भावने लिङ्, क्रियागतं गर्ह्यत्वमपि द्योत्यं वृषलपदसमभिव्याहारात्

---

*क्रियाविषयमिति*। स्तुतिक्रियाविषयमित्यर्थः। अपि स्तुयादिति[श]ब्दाद्विष्णुकर्मिका एतत्कर्तृका शक्यत्वेन सम्भाव्यमाना स्तुतिरि[ति] शाब्दबोधः।

*शक्त्युत्कर्षाविष्करणम्*। शक्त्युत्कर्षस्य व्यञ्जनया बोधनम्। 'अ[पि वे]दान्तपारगम्' इत्यादिशब्दाद्वेदान्तपारगकर्मकमेककर्तृकमुचितं हननं [स]म्भावनाविषय इति बोधे सम्भावनाविषयक्रियायामौचित्योत्कर्षबोधे [औ]चित्ये सम्भावितत्वं व्यञ्जनया प्रतीयते। यत् क्रियायामौचि[त्यं नि]श्चितन्तस्या अनुष्ठानमेव। यत्र तु वाक्येऽपि पदन्न श्रूयते [त]त्र च तत्क्रियाया अनुष्ठानमेव तात्पर्यविषयस्तत्रापि शब्दाध्याहा[रः]। तद्यथा—

विष्णोर्नाम न गृह्णीयान्न स्पृशेत्तुलसीदलम्।
परनिन्दा न कर्त्तव्या परचिन्ता कदा च न॥

इति। ननु "गर्हायां लडपि" इतिसूत्रस्य सर्वबाधकतया 'अपि स्तु[याद् वृ]षलम्' इत्यत्र कथं लिङित्यत आह—*उपसंवादेतीति*। *वा[र्ति]केन*। 'उपसम्वादाशङ्कयोर्लिङ्' इत्यनेन। *तत्कर्त्तुरिति*। वृषल-

स्तुतेर्गर्ह्यत्वे फलति । तदेव धिगित्यादिनाऽनूद्यते । अपि सिञ्चे-
त्यादि । अपिद्वयेन मिलितेन समुच्चयद्योतनात्प्रत्येकं सञ्ज्ञायामुभय-
त्रापि षत्वाभावः ॥

कालाध्वनोः (पा०सू०२।३।५) । अत्यन्तसंयोगो निरन्तर-
सम्बन्धः । स च गुणक्रियाद्रव्यैरभावेन च तेन मासं भोजनाभाव
इत्यादेः सङ्ग्रहः । गुणादिभिः कालाध्वनोरत्यन्तसंयोगे प्रत्यासत्त्या
कालाध्ववृत्तिभ्याम् द्वितीयेत्यर्थः । मासमधीत इति । बुद्धिस्थ-
यावदवयवसम्बन्धरूपा व्याप्तिर्द्वितीयार्थः । "एकादश्यां रात्रौ जागृ-

---

स्तुतिकर्त्तुरित्यर्थः । ननु धिक्शब्दस्य निन्दाप्रतीत्यर्थम्प्रयोगः सा चे-
द्वृषलपदसमभिव्याहारादेव प्रतीयेत तदा धिक्शब्दप्रयोगो व्यर्थोऽत
आह—*तदेवेति* ।

*निरन्तरसम्बन्धः* । व्याप्तिरूपः । स च किन्निष्ठ इत्याकाङ्क्षायामा-
ह—*स चेति* । नन्वेवङ्गुणादिभिरत्यन्तसंयोगे द्वितीयेति समुदाया-
न्यतमे कालाध्वनिष्ठव्याप्यतानिरूपितव्यापकतायां विवक्षितायान्द्विती-
यस्य लाभेऽपि द्वितीयाप्रकृत्यलाभ इत्यत आह—*प्रत्यासत्येति* । ननु
यत्रैकमासव्यापकं गणेशस्तोत्राध्ययनं तत्र मासमधीते गणेशस्तोत्रमिति
न स्यान्मासान्तरे तत्स्तोत्राध्ययनस्य कालिकसम्बन्धावच्छिन्नप्रतियो-
गिव्यधिकरणाभावस्य सत्त्वादत आह—*बुद्धिस्थयावदवयवेति* । अ-
वयवः । दिनादिरूपः । एवञ्च 'मासमधीते' इत्यत्र मासपदम्बुद्धिस्थ-
तन्मासपरन्तदवयवयावद्दिननिष्ठव्याप्यतानिरूपितव्यापकता यत्र तत्रैव
तादृशः प्रयोगः । मासपदञ्च त्रिंशद्दिनसमुदायपरम् । दिनपदञ्चैकसूर्यो-
दयावधिकापरसूर्योदयपर्यन्तस्थिताखण्डजन्यद्रव्यपरम् । न तु षष्टि-
घटीसमुदायो दिनपदार्थः । यत्र प्रत्यहमेकघट्यङ्गणेशस्तोत्राध्ययनन्तत्रापि
घट्यन्तरेऽध्ययनस्याभावसत्त्वेन 'मासमधीते' इतिप्रयोगानुपपत्तेः । मास-
निष्ठा व्याप्यता च तादात्म्यसम्बन्धावच्छिन्ना । व्यापकता तु कालिक-
सम्बन्धावच्छिन्ना । व्यापकताघटकाभावश्च प्रतियोगिव्यधिकरणो विव-
क्षितः । अत एव तन्मासावयवदिनेऽपि यद्घट्यवच्छेदेन नाध्ययनन्तद्घट्यव-
च्छेदेन कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाध्ययनाभावस्य सत्त्वेऽपि
न मासमधीत इति प्रयोगानुपपत्तिः ।

'एकादश्यां रात्रौ जागृयात्' इत्यत्र द्वितीयातिप्रसङ्गन्निराचष्टे—*ए-
कादश्यामिति* । न चैवमपि 'एकादश्यान्नान्नम्भुञ्जीत' इति यत्रोच्यते त-
त्रैकादशीव्यापकस्य भोजनाभावस्य तात्पर्यविषयत्वाद्द्वितीयापत्तिरिति

...वत्" इत्यादावधिकरणत्वविवक्षणान्न द्वितीया ।

इति द्वितीया ॥



स्वतन्त्रः कर्ता (पा०सू०१।४।५४)। कारकाधिकारात् क्रियाजनने स्वतन्त्र इत्यर्थः, तदाह—क्रियायामिति । स्वातन्त्र्यञ्च कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वम् । पक्वस्तण्डुलो देवदत्तेनेत्यत्र फलस्य प्राधान्येऽपि देवदत्तस्य कर्तृत्वसिद्धये कर्तृप्रत्ययसमभिव्याहारे इति । णिचस्तु वाचकत्वमेव । अतस्तत्र ण्यन्त-

...वाच्यम्। तादृशतात्पर्ये त्वेकादशीन्न भुञ्जीतेत्येव प्रयोगात् । प्रकृते त्वे...दशीरूपस्य कालस्य भोजनाभावाधिकरणत्वविवक्षैव। स चाभावः प्रति...योगिव्यधिकरण एव विवक्षितोऽतो नानुपपत्तिः। न च 'मासमधीते' ...त्र धातोरध्ययनपूर्वकव्यापने वृत्तिकल्पनया कर्तुरित्येव कर्मत्वं सि...द्धमिति "कालाध्वनोः" इतिसूत्रवैयर्थ्यमिति वाच्यम् । 'मासन्देवद...त्तस्य' 'कौटिल्यम्भोजनाभावश्च' इति यत्र प्रयोगस्तदर्थमस्यावश्यकत्वात् ...'मासस्य द्विरधीते' इति यत्र प्रयोगस्तत्र मासव्यापकत्वनिवृत्तावेव तात्प...र्यं तु मासाधिकरणकत्वनिवृत्ताविति "कृत्वोऽर्थप्रयोगे" इति सूत्रेण ष...ष्ठ्येव न त्वनेन द्वितीयेति बोध्यम् ॥

इति द्वितीयाविवरणम् ।



*स्वतन्त्रः कर्ता* । अत्र स्वतन्त्रपदमन्यानधीनव्यापाराश्रयपरम् । ...न च व्यापारो न शब्दवाच्यः, किन्तु कारकाधिकारादुपस्थितक्रियारूप... त्याह—*कारकाधिकारादिति* । इदं ण्यन्तेऽप्यस्तीत्याह—*क्रियाज...नन इति* । तत्र प्रयोज्यनिष्ठव्यापारात्मकक्रियाजनने प्रयोजकः स्वतन्त्र ...। किन्तत्स्वातन्त्र्यमत आह—*स्वातन्त्र्यञ्चेति* । *प्रधानीभूतेति* । ...प्राधान्यञ्च तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयधात्वर्थ...त्वम्। एतादृशस्य स्वातन्त्र्यस्य विवक्षितत्वात्काष्ठम्पचतीत्यत्र काष्ठस्य ...कर्तृत्वोपपत्तिः । धात्वर्थाश्रयत्वञ्च व्यापारतावच्छेदकसम्बन्धेन । तेन कालिकसम्बन्धमादायातिप्रसङ्गः । *कर्तृप्रत्ययसमभिव्याहार इती...*। अस्य च कर्तृप्रत्ययसमभिव्याहारे यः प्राधान्येन दृष्ट इत्यर्थोऽभि...। एतेन कर्तृप्रत्ययसमभिव्याहारे प्राधान्यं यद्यपि कर्तृव्यापारस्य त...थापि कर्मप्रत्ययसमभिव्याहारे फलस्यैव प्राधान्यात्तत्र 'देवदत्तेन पच्यते तण्डुलः' इत्यादौ देवदत्तादेः कर्तृत्वन्न स्यादितिशङ्काया नावकाशः । यद्य-

धातुतत्प्रकृतिधातु-एतदुभयवाच्यव्यापारयोः सस्वार्थं प्रति प्राधान्यात् 'देवदत्तेन यज्ञदत्तः पाचयति' इत्यादौ प्रयोज्यव्यापाराश्रयस्यापि कर्तृत्वसिद्धिः। द्योतकत्वे तु नैतत् सिध्येत्। "कारके" (पा०सू०१।४।२३) इति सूत्रभाष्यात्स्वक्रियाकारकप्रवर्तकत्वं स्वातन्त्र्यमिति लभ्यते प्रकृतसूत्रभाष्याच्चेति मञ्जूषायां निरूपितम्।

प्रकृष्टेति। यद्व्यापाराव्यवधानेन क्रियानिष्पत्तिस्तत्प्रकृष्टम्। तमब्ग्रहणं किमिति। कारकाधिकारात्करणल्युडन्तकरणेति महासञ्ज्ञया च साधकत्वे लब्धे साधकग्रहणमेव साधकतमार्थं भविष्य-

---

पि धातोः फलावच्छिन्नव्यापारे व्यापारावच्छिन्नफले वा शक्तिस्तथा-तत्तत्प्रत्ययसमभिव्याहाररूपतात्पर्यग्राहकवशाद्यत्र कर्मणि विहितप्रत्ययसमभिव्याहारस्तत्र व्यापारावच्छिन्नफलस्यैव धातुनोपस्थितिः। णिजन्ते प्रयोज्यस्य कर्तृत्वोपपत्तये आह—*णिचस्त्विति*। *वाचकत्वेति। न तु द्योतकत्वमिति शेषः। तथात्वे द्योत्यार्थस्य विशेषणत्वात्प्रयोज्यव्यापारस्य प्राधान्यापत्तौ 'गुरुः शिष्येण पाचयति' इति यत्र प्रयोग इष्यते तत्र शिष्यो गुरूणा पाचयतीत्यादिप्रयोगापत्तेः। 'पच्यते तण्डुलः स्वयमेव' इति यत्र प्रयोगस्तत्र यद्यपि फलमेव धात्वर्थस्तथापि तत्र व्यापारत्वारोपः। अन्तर्भावितण्यर्थतायाम्प्रयोज्यस्य कर्मत्वमकथितश्चेति सूत्रव्याख्यानावसरे उपपादितमेव।

*कारक इति सूत्रभाष्यादिति*। तत्र ह्येवमुक्तम् 'प्रधानसमवाये स्थाली परतन्त्राव्यवाये स्वतन्त्रा। किम्पुनः प्रधानम्। कर्त्ता। कथं ज्ञायते कर्त्ता प्रधानमिति। यत्सर्वेषु कारकेषु सन्निहितेषु कर्त्ता प्रवर्त्तयिता भवति' इति। ततः 'प्रयोज्यस्यास्वतन्त्रत्वात्कर्तृसंज्ञा न प्राप्नोति' इति पूर्वपक्षे तस्यापि स्वेच्छाधीनप्रवृत्तिकत्वात्स्वातन्त्र्यं साधितम्। प्रकृतसूत्रेऽपि 'तन्त्रशब्दस्य प्रधानवाचकत्वमस्ति प्राधान्ये वर्त्तते तद्यथा स्वतन्त्रोऽसौ ब्राह्मण इत्युच्यते स्वप्रधान इति गम्यते तद्यः प्राधान्ये वर्त्तते तन्त्रशब्दस्तस्येदङ्ग्रहणम्' इत्युक्तम्। स्वशब्द आत्मवाची। स्व आत्मा तन्त्रम्प्रधानं यस्य स स्वतन्त्रः।

"साधकतमम्" इतिसूत्रस्थतमपा प्रकर्षः सूचितः स च कारकान्तरापेक्षया। कारकपर्यायसाधकशब्दादुत्पन्नेन तमपा प्रकृत्यर्थापेक्षस्यैव प्रकर्षस्य लाभात्। तत्र करणात्करणान्तरे प्रकर्षस्याभावेन कारकान्तरापेक्षयैव प्रकर्षो वाच्यः, स च यादृशस्तमाह-*यद्व्यापाराव्यवधानेनेति*। करणान्तरात् प्रकर्षश्चेद्विज्ञायते तदाऽश्वेन दीपिकया पथा व्रजतीत्य-

इति प्रश्नः । गङ्गायामिति । अधिकरणमित्यधिकरणल्युडन्तम- संज्ञयैव सिद्धे आधारग्रहणसामर्थ्यात्सर्वावयवव्याप्त्या य आधारः सोऽधिकरणमित्यर्थः स्याद् । एवञ्चेदं सूत्रं 'तिलेषु तैलम्' इत्या- द्यत्र प्रवर्तेत । न हि गङ्गा तीरं वा सर्वावयवव्याप्ते । तीरधर्मस्य घोषा- धारत्वस्यात्यन्तसामीप्यात्प्रवाहे आरोपोऽत्र बोद्ध्यः । यदा तु व्यव- हितो गङ्गातो घोषः, तदा गङ्गाशब्दस्य तत्तीरे लक्षणा । तमप्ग्रहणेन शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयते' इति ज्ञाप्यत इति गौणा- धारस्याप्यधिकरणसञ्ज्ञा सिद्ध्यति । एवञ्च 'गङ्गायां गावः' इत्यु- दाहरणम् । सर्वावयवव्याप्त्यभावेन मुख्याधारत्वाभावात् । गौण- मुख्याधारत्वादि सप्तम्यादिशक्यमेवेति बोद्ध्यम् । इदं प्रकृतसूत्रे भा- ष्ये स्पष्टम् ।

---

सर्वेषां न स्यात् । अधिकशब्दोपादाननिमित्तम्प्रकर्षन्दूषयति—*अधिक- मिति* । *तिलेषु तैलमित्यादावेवेति* । आदिना 'दध्नि सर्पिः' इत्यस्य सङ्ग्रहः । न च आध्रियन्तेऽस्मिन्निति व्युत्पत्त्या कर्तृकर्मणोर्धारणक्रिया- श्रयत्वं य आधारस्सोऽधिकरणसंज्ञ इत्यर्थो भविष्यतीति वाच्यम् । एवमपि यो मुख्यस्तद्वाराऽऽधारस्तस्यैव स्यान्न 'गङ्गायाङ्घोष' इत्यादौ । गङ्गाशब्द- वाच्यो न मुख्याधार इत्यभिप्रायेण 'भूतले घटः' 'स्थाल्याम्पचति' इति परित्यज्य 'गङ्गायां घोष' इत्युपात्तं तस्य मुख्याधारपरमेवाधारपदं भवि- ष्यतीति कल्पनेन सामञ्जस्यमित्याशयात् । यथा च प्रकृते गौणत्वन्तदु- पपादयति—*तीरधर्मस्येति* । *प्रवाहे आरोप इति* । एवञ्च गौणत्वं स्पष्टमेव । *तीरे लक्षणेति* । गङ्गापदशक्यतावच्छेदकस्य गङ्गात्वस्य तीरे आरोपः । शक्यतावच्छेदकारोप एव लक्षणा तदा गङ्गापदबोध्य- स्य गौणत्वं स्पष्टमेव । *प्रकर्षो नाश्रीयत इति* । एवञ्च यथाकथ- ञ्चिद्य आधारस्सोऽधिकरणसंज्ञः । एवञ्च मुख्याधारत्वाभावेऽपि यथा- कथञ्चिद्यस्मिन्नाधारत्वं तन्मुख्यङ्गौणं वा सर्वमप्यधिकरणसंज्ञम् । गौणा- धारस्याप्यधिकरणसंज्ञायाम्भाष्यमपि साधकमित्याशयेनाह—*एवं ग- ङ्गायां गाव इति* । इदं तत्रत्य 'कूपे गर्गकुलम्' इत्यस्याप्युपलक्षणम् । *प्रकृतसूत्रभाष्ये इति* । तत्र हि 'तमग्रहणङ्किमर्थम् । सर्वेषां कार- काणां करणसंज्ञा प्रसज्येत' इतिविचारे 'पूर्वसंज्ञानामपवादत्वात्परसंज्ञा- स्तु तथैव बाधकत्वम्भविष्यति' इत्यभिधाय 'धनुषा विध्यतीत्यत्राप्यु- पादानादपादानसंज्ञासाधकत्वाच्च करणसंज्ञा प्राप्नोति । एवन्तर्हि लोके- ऽभिरूपाय कन्या देयेति । न चानभिरूपे प्रवृत्तिरस्ति तत्राभिरूपतमायेति

यदि तु महासंज्ञया तदाक्षेपकरणासमर्थं प्रति आधारादिपदं चरि-
तार्थम्, साधकशब्दस्य यद्व्यापारानन्तरमव्यवधानेन फलोत्पादस्तत्र श-
क्तिः,आधारशब्दस्य चाध्रियते यस्मिन्निति व्युत्पत्त्या कर्तृकर्मणो र्धा-
णक्रियां प्रति सर्वावयवव्याप्त्या य आधारस्तत्र शक्तिरित्युच्यते
तदोक्तप्रयोगादिसाधनाय कारकप्रकरणे उद्देश्यवाचके पदे स्वरितत्व-
प्रतिज्ञया गौणाधारादेर्ग्रहणं वाच्यम् । स्वरितेनाधिकं कार्यमित्यर्थात् ।
तमपा तु प्रकृते तदभावो बोद्ध्यते । एवञ्च व्यवधानेन फलोत्पादके
करणकत्वोपचारेण तृतीयान्तप्रयोगस्यासाधुत्वबोधनं तमप्फलम्, एत-
त्समब्वशादेवान्यत्र स्वरितत्वमिति ज्ञायते इति दिक् ॥ स्पष्टं चे-
"स्वरितेन" (पा०सू०१।३।११) इति सूत्रे भाष्ये ।

---

गम्यते । एवमिहापि साधकं करणमित्युच्यते सर्वाणि च कारकाणि सा-
धकानि न चासाधके प्रवृत्तिरिति साधकतममिति विज्ञास्यते । एवन्त-
सिद्धे सति यत्तमग्रहणङ्करोति तज्ज्ञापयत्याचार्यः कारकसंज्ञायां तर-
मयोगो न भवतीति । आधारमाचार्यः किन्यायम्मन्यते यत्र कृत्स्न आ-
धारात्मा व्याप्नोति तेनेहैव स्यात्तिलेषु तैलन्दध्नि सर्पिः । गङ्गायाङ्गावः कूपे
गर्गकुलमित्यत्र न स्यात् । कारकसंज्ञायान्तरतमयोगो न भवतीत्यत्र
सिद्धम्भवति इति ।

पक्षान्तरमाह-*यदि त्विति* । *चरितार्थमिति* । अन्यथा सं
लाभो न स्यात् । युक्त्यन्तरमाह-*साधकशब्दस्येति* । संसिद्ध्यर्थक
तुनिष्पन्नत्वात् । *उक्तप्रयोगादीति* । गङ्गायाङ्गावः कूपे गर्गकुलमिति
यागसाधनायेत्यर्थः । *प्रकृते* । उद्देश्यवाचके साधकपदे । *तदभाव
स्वरितत्वाभावः । तमपा तु प्रकर्षो बोध्यत इत्यव्यवधानलाभः । *एव-
ञ्च* । उक्तव्यवस्थासिद्धौ । ननु व्यवधानेन फलोत्पादकेऽपि करण
दृश्यते । यथा 'राजा चतुर्भिरुपायैः शत्रून्वशीकरोति' । अत्रामात्यप्र
दिद्वारैव वशीकरणन्न साक्षात् । न चाव्यवधानाविवक्षया तथा प्रयो
इति वाच्यम् । तथा सति व्यवधानेन यत्र फलोत्पादस्तत्र संज्ञान्तर
प्राप्त्या तृतीयाया अप्राप्त्या तादृशोक्त्यसङ्गतेरिति चेन्न । 'नटस्य शृणो-
ति' इत्यत्र नटे गीतद्वारा क्रियाजनकत्वेन कारकत्वस्वीकारात्करण
प्राप्त्या तद्व्यावृत्त्यर्थं तमग्रहणमित्याशयात् । करणत्वोपचारेणेत्यस्य
रणत्वप्राप्तेत्यर्थः । तत्र नटस्य कारकत्वं "आख्यातोपयोगे" इतिसूत्रस्थ
म् 'उपयोगग्रहणङ्किमर्थम् नटस्य शृणोति' इतिभाष्यमेव, साधकग्रहणा
मिति दिक् । *दिगिति* । दिगर्थस्तु पूर्वोक्तगौणाधारस्याधिकरण

रामेणेति । कर्तृतृतीयायाः कर्तृत्वादिशक्तिमान्कर्तृक्रियाभाव-
स्वन्यश्चार्थः । करणतृतीयायाः करणशक्तिमान् क्रियाकरणभावः
सम्बन्धश्चार्थः । तच्छक्तिमत्वञ्च व्यापारवत्त्वेव रामकर्तृकबाणकरणक-
प्राणवियोगाश्रयो वालीति बोधः । प्रकृत्यादिभ्य इति । इदं यथा-
योगं सर्वविभक्त्यपवादः ॥

दिवः कर्म च (पा०सू०१।४।४३) । (१)चेन संज्ञयोः समा-
वेशः । तेन दिवः साधकतमस्य शक्तिद्वययोगो बोध्यते । तेन 'अक्षै-

---

वा अप्राप्त्युपपादनाय यद्गौणमुख्यन्यायोपन्यसनम्प्राचान्तदसङ्गतमेवे ।
तस्य न्यायस्य पदकार्यविषयत्वाद्विशिष्टरूपोपादानविषयत्वाच्चेति ।

*तच्छक्तिमत्त्वम्* । करणत्वशक्तिमत्त्वम् । *व्यापारवत्त्येवेति* ।
अत एव करणत्वं व्यापारानियतमिति वक्ष्यमाणं सङ्गच्छते । "प्रकृत्या-
दिभ्य" इत्यत्रादिशब्दः प्रकारे । समुदायघटकेभ्यस्तृतीयेत्यर्थः । 'नाम्ना
सुतीक्ष्णश्चरितेन दान्तः" अत्र नामपदार्थस्याभेदः सुतीक्ष्णशब्दे भासते ।
चरितेन दान्त इत्यत्र चरितशब्दार्थस्य प्रकृतिस्वरूपस्य दान्तत्वेऽन्वयः ।
'घटत्वेनाभावः' अत्र तृतीयार्थोऽवच्छिन्नप्रतियोगिताकत्वम् । पट इति
ज्ञाने पटत्वेन पटस्य विषयत्वन्न तु द्रव्यत्वेनेत्यत्रावच्छिन्नत्वन्तृतीयार्थो
बोध्यः । 'प्रकृत्या चारुः' प्रकृतिः स्वभावः । प्रकृतिसम्बन्धिचारुत्ववान् ।
न च कृत इत्यध्याहारेण करण एव तृतीयाऽस्तु । घटत्वेनेत्यादिष्वपि
घटत्वादिपदानां घटत्वावच्छिन्नप्रतियोगिताकत्वलाक्षणिकतया ज्ञात
इत्यस्याध्याहारेण करणतृतीयया सिद्धिरिति वाच्यम् । यदा न तस्या-
ध्याहारस्तदा शेषलक्षणा षष्ठी प्राप्नोति तद्बाधनार्थमस्यावश्यकत्वात् ।

'प्रायेण याज्ञिकः' प्रायः पदमाचारातिशयपरम् । ज्ञात इत्यस्य चा-
ध्याहारः । 'आचारातिशयेन याज्ञिक' इत्यर्थो विवक्षितः । 'गोत्रेण गार्ग्यः'
गोत्रसम्बन्धिगार्ग्यत्ववान् । सामान्यविशेषभावेनान्वयः । 'समेन, विष-
मेणेति' इत्यादौ द्वितीयार्थे तृतीया । 'द्विद्रोणेन धान्यं क्रीणाति' । पात्रा-
त्वात् क्रीतत्वाभावः । परिच्छेद्यत्वन्तृतीयार्थः । तस्य धान्येऽन्वयः ।
'सुखेन दुःखेन याति' इत्यत्र सुखदुःखपदन्तत्साधनपरम्, तच्च याधात्व-
र्थफलेऽभेदेनान्वेतीति द्वितीयायाम्प्राप्तायामनेन तृतीया ।

*शक्तिद्वययोग इति* । करणत्वकर्मत्वात्मकशक्तिद्वययोग इत्यर्थः ।

---

(१) नन्वेकसंज्ञाधिकारात्कर्मसंज्ञया करणसंज्ञाया बाधाभावाय दिवः कर्मचेति सूत्रे चग्रहणमिति
कथं तन्नयुक्तं करणशब्दानुवृत्त्या 'परिक्रयणे सम्प्रदानम्' इत्युत्तरसूत्रस्थान्यतरस्यां ग्रहणापकर्षणेन
संज्ञयोः पर्यायस्य सिद्धत्वादित्यत आह-*चेनेति* । तत्फलं दर्शयति-*तेनेति* ।

दैवयते' इत्यत्र (१)तृतीया परत्वात्, कर्मत्वाच्च कर्मकर्तृत्वप्रयुक्तपरस्मै-
पदाभावः । अत्र विप्रतिषेधशास्त्रबलात्तृतीयैव शक्तिद्वयबोधिका
यदाऽक्षाणां फलाश्रयत्वसमानाधिकरणकर्मत्वविवक्षा (२)तदा 'अ-
क्षान्दीव्यति' इत्यादि साधु । 'अक्षाणां देविता' इत्यादौ तृतीयातः प-
रत्वात्कृद्योगलक्षणा षष्ठी । 'मनसा देव' इत्यादौ हेतुतृतीयान्तेन
पचाद्यजन्तदेवशब्दस्य समासः। न च शक्तिद्वयस्वीकारेऽत्र कर्मणि ल-
कारे करणत्वशक्तेरनुक्तत्वेन तृतीयापत्तिरिति वाच्यम् । 'अपादान-
मुत्तराणि' इत्यस्योदाहरणं 'गां दोग्धि' इत्यादि तत्र कर्मणि लकारे
पञ्चम्यापत्तिवारणायैकद्रव्यगतानेकशक्तिमध्ये एकस्या अभिहितत्वे

---

*तेन*। संज्ञाद्वयसमावेशेन। *परस्मैपदाभाव इति*। अणावकर्मकादिति
सूत्रेण प्राप्त इत्यादिः। ननु करणरूपेऽर्थे तृतीयाया विधानेन कथं तृतीयया
कर्मत्वबोधनमत आह—*अत्रेति*। अत्र कार्यकालपक्षे कर्मत्वसामानाधि-
करण्यविशिष्टमपि करणत्वं प्रकृतसूत्रप्रदेशोपस्थितकर्तृकरणयोरिति
घटककरणपदेन गृह्यत इति तृतीयैवोभयबोधिकेति भावः। ननु तर्हि
'अक्षान्दीव्यति' इति नैव स्यादत आह—*यदाक्षाणामिति*। अत्रेष्टपरि-
वर्त्तनाद्यनुकूलव्यापारो दीव्यतेरर्थः। फलञ्चेष्टपरिवर्त्तनन्तदाश्रयत्वस-
मानाधिकरणकर्मत्वस्य कर्तुरितिसूत्रबोधितस्य विवक्षेत्यर्थः। यदोभय-
क्तिमत्त्वन्तदैवोक्तः प्रकार इति भावः। ननु पूर्ववत्षष्ठीप्राप्त्या कथमन-
सादेव इति हरदत्तोक्तः प्रयोग इत्यत आह—*मनसादेव इत्यादाविति*।
अस्य संज्ञात्वे मनसः संज्ञायामित्यलुक्। असंज्ञात्वे तु "तत्पुरुषे कृति"
इति घटकबहुलग्रहणेना लुक्। ननु मनसो दिवधात्वर्थसाधक-
मत्वसमानाधिकरणकर्मत्वशक्तिमत्त्वात्कथन्तृतीयेत्यत आह—*हेतुतृती-
यान्तेनेति*। *अत्र कर्मणि*। "दिवः कर्म च" इतिसूत्रबोधितकर्म-
त्वशक्तिमति।

*तृतीयापत्तिरिति*। 'दीव्यन्तेऽक्षा' इत्यादावित्यादिः। इदमुपलक्ष-
णम्। 'देवना अक्षा' इत्यत्र ल्युटा करणत्वस्याभिधानेऽपि कर्मत्वस्या-

---

(१) तृतीया परत्वादिति*। करणसंज्ञायाः "देवना अक्षा" इत्यत्र करणेल्युटः संपादनेनावकाशः।
कर्मसंज्ञायास्तु दीव्यन्तेअक्षाइत्यत्र कर्मणिलटः संपादनेनावकाशः। अत्र च संज्ञाद्वयप्रयुक्त कार्यद्वय...
विप्रतिषेधे परं कार्यमिति परत्वातृतीयेति भावः।

(२) *कर्मत्वविवक्षेति*। अत्र न करणत्वविवक्षेति शेषः। उभयाविवक्षायां हि उभयप्रसङ्गे प-
त्वातृतीया। अन्यतरविवक्षायां तु पर्यायेण द्वितीया तृतीया सत्वात् 'अक्षान् दीव्यते' 'अक्षै दीव्यते'
इति साध्वेव।

स्यापि तद्वद् प्रकाशेनाक्षतेः । एकैव शक्तिः संज्ञाद्वयोपयोगिनीति चिन्त्यम् । कर्मादिपदानां कर्मत्वादितत्तच्छक्तिरूपेण बोधकतया तद्भेदस्यैवौचित्यादिति मञ्जूषायां विस्तरः ।

फलप्राप्तिरिति । (१)तस्याञ्च सत्यां प्रयोजनाभावादेव न क्रियाप्रवृत्तिरिति फलप्राप्तिशब्देन तत्पूर्वकस्त्याग उच्यते । त्यागस्य च (२)फलप्राप्तिर्व्यङ्ग्येत्यन्यत्र(३)विस्तरः । नायात इति । अनेन फलप्राप्तिरेव स्फुटमुच्यते ॥

सहयुक्ते (पा०सू०२।३।१९) । "पृथग्विनानानाभिः" (पा० सू०२।३।३२) इतिवत्सहेनेत्येव सिद्धे युक्तग्रहणं शब्दविशेषानादरेणार्थयोगे भवत्वित्यर्थमित्याह—सहार्थेनेति । (४)अत एव क्वचित् शब्दयोगं विनापि भवति तदाह—विनापीति । (५)न्यायसिद्धे

विहितत्वात्षष्ठ्यापत्तिरिति । *तद्वत्प्रकाशेन* । अभिहितशक्तिवत्प्रकाशेनास्मिन्नर्थे 'अपादानमुत्तराणि कारकाणि बाधन्ते' इति भाष्यमेव मानम् तथाहि—संज्ञयोः स्वतो न विरोधः । कृत्कृत्यसंज्ञयोरिव समावेशसम्भवात् । किन्तु फलद्वारक एव वाच्यः सोपि चेन्नाश्रीयते यदा परत्वादिप्रसङ्गतमेव स्यादिति तया कल्पनमावश्यकमिति । प्राचामुक्तिङ्खण्डयति—*एकैव शक्तिरिति* । *तत्पूर्वकस्त्यागः* । फलप्राप्तिपूर्वकत्यागः । तच्च 'अह्ना क्रोशेन वा अनुवाकोऽधीत' इत्यत्र त्यागस्तृतीयार्थः । अह—व्यापकत्यागप्रतियोग्यतीताध्ययनकर्मानुवाक इति शाब्दबोधः । न चात्र "भूते" विहितनिष्ठया त्यागस्य लाभे तृतीयायास्तत्र शक्तिकल्पनं व्यर्थमिति वाच्यम् । तयाऽतीतत्वलाभेऽपि निवृत्तिरूपस्य त्यागस्याप्रतीतेः । अतीतत्वंहि वर्तमानध्वंसप्रतियोगिसमयकत्वम् । निवृत्तिश्च पुनरनुत्पादनमिति भावः ।

(१) मूलेऽपवर्गः फलप्राप्तिरिति अपवर्गशब्देन फलप्राप्तिरुक्ता, फलप्राप्तिशब्दश्च फलप्राप्तिपूर्वकत्यागे इत्यत आह—*तस्यांचेति* ।

(२) ननु फलप्राप्तिपूर्वकक्रियात्यागेऽपि फलप्राप्तिरेव समायातीत्यत आह-त्यागस्यचेति* ।

(३) *अन्यत्रेति* । मञ्जूषायामित्यर्थः । तत्रहि–'अह्ना क्रोशेन वा अनुवाकोऽधीतः' इत्यत्र ...र्थः सम्बन्धः' इत्यादिना ।

*अनेन* । अत्र क्रियात्यागेऽपि फलाप्राप्त्या फलप्राप्तिपूर्वकविशिष्टक्रियात्यागाभावः प्रत्युदाहरणेन ...ति स्फुटमिति भावः ।

(४) अत एवेति* । युक्तग्रहणमहिम्ना सहशब्दस्य सहार्थपरत्वादेवेत्यर्थः ।

(५) ननून्यायेनैव सिद्धे तत्र सिद्धोपादानं मूलकृतामयुक्तं स्यादित्यत आह-न्यायसिद्धे इति* ।

ऽर्थे लिङ्गमप्याह–वृद्ध इति । सहार्थः साहित्यम्, तच्च (१)स्वसमभि-व्याहृतक्रियादिसमानकालिकतत्क्रियादिमत्त्वम्। क्वचित्समानदेशक्रियावत्त्वम्। अत एव माषवापोत्तरं तत्रैव क्षेत्रे तिलवापे 'तिलैः सह माषान्वपति' इति भवति । (२)यद्यपि 'पुत्रेण सह आगतः' इत्यादौ आगमन-क्रियाकर्तृत्वादेव पुत्रात्तृतीया सिद्धा तथापि 'पुत्रेण सह स्थूलः' इत्यादि अस्य मुख्यमुदाहरणमिति भाष्ये स्पष्टम् ।

---

*क्रियादिसमानकालेति* । अत्रादिना गुणद्रव्याभावसङ्ग्रहः । यदा गुणप्रधानभावेनैतेषु द्वयोः सम्बन्धस्तदा साहित्यवाचिसहशब्दस्य प्रयोगो भवति । यथा 'पुत्रेण सहागतः' । 'पुत्रेण सह स्थूलः' । 'देवदत्तेन सह चैत्रस्य धनम्' । 'देवदत्तेन सह चैत्रस्य नाशः' । यदि च नाशोपि क्रियैव तदा चैत्रेण सह मैत्रस्याभाव इत्युदाहरणम् । अभावपदे नञो विरोध्यर्थकत्वाद्भावविरोधो पदार्थविशेष एवाभावः । स्पष्टञ्चेदम्मञ्जूषायाम्। *समानदेशक्रियावत्त्वम्* । समानो देशोऽधिकरणरूपो यस्यास्तादृशी या क्रिया तद्वत्त्वमित्यर्थः । *अत एव* । द्वितीयस्य प्रकारस्याश्रयणादेव। एतत्सूत्रोदाहरणविषयेऽप्राधान्यञ्च शाब्दगुणाद्यन्वयित्वाभावरूपम् । यद्यपि 'पुत्रेण सहागतः पिता' इत्यादौ पुत्रशब्दार्थस्य निरुक्तसाहित्येऽन्वयेऽर्थात्तदन्वयित्वन्तथापि न शाब्दबोधविषयभूततदन्वयित्वम्पुत्रसाहि

---

( १ ) स्वसमभिव्याहृतेति* । अत्र स्वशब्दः सहशब्दपरः । आदिशब्दग्राह्योदाहरणानि टीकास्थं तत्र क्रियोदाहरणं 'पुत्रेण सहागतः पिता इति । तत्र शाब्दबोधश्चेत्थम्–पुत्रकर्तृकागमन समानकालिक मनत्वरूपं साहित्यं पुत्रप्रतियोगिकं पितरि प्रतीयते । तथाच–पुत्रकर्तृकागमनसमानकालिकागमन पिता इति वाक्यार्थः । द्रव्योदाहरणं 'पुत्रेण सह पितुर्गौः' इति । तत्र पुत्रस्वामिकत्वसमानकालिक स्वामिकत्ववत्त्वरूपं साहित्यं गवि प्रतीयते । तथाच–पुत्रस्वामिकत्वसमानकालिकापितृस्वामिकत्व गौरिति वाक्यार्थः । गुणोदाहरणं पुत्रेण सहस्थूल इत्यादि पुत्रवृत्ति स्थौल्यसमानकालिकस्थौल्यवत्त्वं साहित्यञ्चात्र पितरि प्रतीयते । तथाच पुत्रवृत्तिस्थौल्यसमानकालिकस्थौल्यवान् पितेति बोधः । एवं वान्योदाहरणान्तरेषूहनीयः ।

( २ ) ननु "तिलैः सह माषं वपति"इत्यत्र तिलवृत्ति वापसमानदेशवापवत्त्वरूपं साहित्यं माषेषु प्रतीयते तथाच–तिलवृत्तिवापसमानदेशमाषनिष्ठवापानुकूलो व्यापार इति बोधः । पुत्रेण सहागतः पितेत्यादि क्रियोदाहरणे पुत्रादेः सहार्थबलात् प्रतीयमान क्रियाकर्तृत्वेन कर्तृकरणयोस्तृतीयेति तृतीयायाः सिद्धत्वा दिदमयुक्तम् । न च क्तप्रत्ययेन कर्तुर्विधानात्तस्यानभिहितत्वाभावेन तृतीया न स्यादिति वाच्यम् । इत रासमभिव्याहारे प्रतीयमान स्वप्रकृत्यर्थक्रियायाः कर्तुरेव तेन विधानं नतु इतरसमभिव्याहारे सति प्रतीयमानेतरस्य स्वप्रकृत्यर्थक्रियाकर्तुरपि । अत एव पुत्रेणसहागमनं देवदत्तस्येत्यादावितरसमभिव्याहारं विना प्रतीयमानकृत्प्रकृत्यर्थान्वयिनो कर्तृकर्मणोरेव षष्ठी, नतु तत्समभिव्याहारे प्रतीयमानं तदन्वयिनो रिति तृतीयाया दुर्वारत्वादित्याशंकते–*यद्यपीति* । अत्र स्वान्वयिगुणद्वारा पितुः पुत्रयोः सहयोग स्याविशेषेऽपि अप्रधानग्रहणादेव न पितुस्तृतीया । प्रत्याख्याने तु अप्रधानग्रहणस्योपपदविभक्तिरिति यात्र सेति बोध्यम् ।

अङ्गेन—अवयवेन। इदं—सन्निधानलब्धम्। अङ्गिनः—अवयवि-नः। सूत्रे अङ्गशब्दो ऽर्शआद्यजन्तो व्याख्यानादिति भावः। अ-क्ष्णा काण इति। यद्यप्यक्ष्येव काणं तथाप्यवयवधर्मस्य समुदाये आरोपाच्छरीरे तदवच्छिन्ने च व्यवहारो निरूढ इति ध्येयम्। यद्यपि काणशब्दो ऽक्षिगतविकारवाचक एव, तथापि 'द्वौ विप्रौ' इतिवदक्ष्णे-ति प्रयोगस्य साधुत्वम्। ईदृशरीत्येदृशानां साधुत्वे चेदमेव मानम्। षष्ठ्यपवादो ऽयमित्याह—अक्षिसम्बधीति। अङ्गविकारः कि-मिति। अङ्गग्रहणप्रयोजनप्रश्नः। अक्षिकाणमिति। प्रथमा बा-धित्वात्रैव स्यात्। लेशतो ऽपि दर्शनसामर्थ्यहीनत्वं काणत्वम्।

---

त्ववान् पिता आगमनकर्त्ता इत्येव हि बोध इष्यतेऽतः शाब्दत्वरूपविशे-षणाभावकृतो विशेषणाभावस्तत्रास्ति।

एकेनैव सुपुत्रेण सिंही स्वपिति निर्भया।
सहैव दशभिः पुत्रैर्भारं वहति गर्दभी॥

इत्यादौ विद्यमानतावाचिसहशब्दयोगेऽप्यनेन तृतीया। पुत्रशब्दार्थे कथान्वयित्वमेव नेति विशेष्याभावाद्विशिष्टाभावोऽस्त्येव। न च विद्य-मानताविशिष्ट एव सहशब्दार्थोऽस्तु। पुत्रशब्दोत्तरतृतीयाया उपपदवि-भक्तित्वेन षष्ठ्यपवादतया सहशब्दार्थेऽनन्वयापत्तेः। यदि विद्यमानैः पुत्रैर्युक्ता गर्दभीत्यर्थस्तत्राश्रीयते तदा कर्तृकरणयोरित्येव तृतीया भाव-ष्यति। "सह युक्ते" इति सूत्रे द्विविधोपि सहार्थो गृह्यत इति दिक्।

*सन्निधानलब्धमिति*। अङ्गशब्दस्याङ्गिपरतया तत्सन्निधानेन य-च्छब्दोऽङ्गपर इति भावः। *व्याख्यानादिति*। 'अङ्गशब्दोऽयं समुदायः शब्द' इति भाष्यमूलकादित्यर्थः। *अक्ष्येव काणमिति*। अस्याक्षि काणमिति व्यवहारस्य सुप्रसिद्धत्वात्। तथा च पुरुषे काणत्वरूपधर्माभा-वेनाक्ष्णा काण इति व्यवहारो नोपपद्यत इति भावः। *अवयवधर्मस्य*। काणत्वस्य। *समुदाये*। काणावयवघटितसमुदायसमवेतेऽवयविनि। तदवच्छिन्नताद्दशावयवव्यवच्छेद्ये चैत्रादौ अक्षिगतविकारवाचक एवेति। तथा च काणोऽयमित्येतावता सर्वसामञ्जस्येऽक्ष्णेति प्रयोगो न प्राप्नोतीति भावः। *द्वौ विप्रावितिवदिति*। एवञ्च सम्भेदेनान्यतरवैयर्थ्यमिति न्यायेन तादृशोऽत्र प्रयोगः। यद्यपि 'चक्षुर्नाशवान्' 'सचक्षुष्कः' काणप-दार्थत्वेन लोके प्रसिद्धः। तथापि 'कण निमीलने' इत्यभियुक्तवचनस्वर-सादातिशायनिकप्रकरणस्थभाष्यस्वरसाच्चाह-*लेशतोपीति*।

इत्थंशब्दः प्रकारमात्रपरः। प्राप्त्यर्थाद् भुवः कर्तरि क्तः। कर्म-विभक्त्यन्तेनेत्थंशब्दस्य भूतशब्दस्य समासः। लक्षणशब्दः करणसाधनः। तस्य कर्मषष्ठ्यन्तेनेत्थम्भूतशब्देन समासः, इत्याह-काश्चिदि-त्यादि। जटाभिरिति। यद्यपि ताभिस्तपसो ज्ञात इत्यर्थे ज्ञान-क्रियायां करणत्वादिदं सिद्धं, तथापि करणत्वाविवक्षायां लक्ष्यल-क्षणभावमात्रविवक्षायां तृतीयार्थमिदम्। इत्थम्भूतस्य यत्र लक्षणवा-चकात्पृथगुपस्थितिरेव तत्रैवानेन तृतीया। तेन कमण्डलुपाणिं छात्र-मद्राक्षीत्' इत्यादौ कमण्डलुपदान्न तृतीया (१)न चोत्पन्नायास्तृतीया-याः "सुपो धातु' (पा०सू०२।४।७१) इति लुगिति वाच्यम्। कृते समासे तस्या उत्पत्त्या समासरूपप्रातिपदिकानवयवत्वादिति कैयटे स्पष्टम्। कमण्डलुः पाणौ तस्येति बहुव्रीहिः।

परे तु कमण्डलुपाणिशब्दादत्र तृतीयापत्तिः। कमण्डलुयुक्तपा-णिरूपस्य कमण्डलुपाणित्वस्य लक्षणत्वेन तस्यैव तद्वाचकत्वात्। त-

---

*प्रकारमात्रपर इति*। "इदमस्थमुः" इतिथमुप्रत्ययान्तो यद्यप्यय-मिदंशब्दार्थसन्निकृष्टाभिन्नप्रकारप्रतिपादक इति प्राप्तम्, एवञ्च प्रकारसामा-न्यस्य लाभो न स्यात्तथापि प्रत्ययार्थमात्रेऽस्य लक्षणेति भावः। एवञ्च कश्चिद्धर्मप्राप्तिर्येन लक्ष्यते तद्वाचकप्रातिपदिकात् तृतीयेति सूत्रार्थः। सूत्रवैयर्थ्यमाशङ्कते—*यद्यपीति* प्रकृतसूत्रविषये प्राचीनोक्तविशेषमा-ह—इत्थम्भूतस्येत्यादिना*। लक्षणवाचकात् पृथगुपस्थितिः। शक्त्या ल-क्षणवाचकशब्दजन्योपस्थित्यविषयत्वम्। किन्त्वन्यशब्दजन्योपस्थिति-विषयत्वमेव। *न तृतीयेति*। अस्य लक्षणवाचको यः कमण्डलुपा-णिशब्दस्तज्जन्योपस्थितिविषयत्वादिति भावः। *अनवयवत्वादिति*। प्रातिपदिकसंज्ञाप्रवृत्तिकाले संज्ञित्वेनाभिप्रेतसमुदायघटकत्वं यस्य तस्य तदवयवत्वमिति भावः। अत्र प्रमाणन्तु प्रकृतसूत्रस्थभाष्यमेव। तथा हि "इत्थम्भूतस्य लक्षणे तत्स्थे प्रतिषेधः' इति वार्त्तिकम्। 'तत्स्थे'। ल-क्ष्यवाचिशब्दस्थे। अपि भवान् कमण्डलुपाणिञ्छात्रमाद्राक्षीदिति। अ-त्रेत्थम्भूतस्य लक्षणेनापृथग्भावात्। यत्रेत्थम्भूतस्य पृथग्भूतं लक्षणं तत्र भवितव्यम्' इतियुक्तम्।

कैयट इत्यनेन सूचितामरुचिम्प्रकटयति—*परे त्वित्यादिना*।

---

(१) नन्वेदमपि तृतीयायाः प्रातिपदिकावयवत्वात्सुपोधात्विति लुक्स्यादित्याशंकते-नचेति*।

द्युक्तम् 'अनुर्लक्षणे' (पा०सू०१।४।८४) इति सूत्रे भाष्ये, "सकृदसौ कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव लक्षणं भवतीति। तदेवेत्यस्य कमण्डलुपाणित्वमेवेत्यर्थः । कमण्डलोर्लक्षणत्वे हि स एवेति वदेत् । किं तन्मध्यपातितन्यायेन तद्विशिष्टस्य प्रातिपदिकत्वेन तस्य तदनवयवत्वोक्तेरनौचित्येन लुको दुर्वारत्वम् । अत एव 'नरंमन्य' इत्यादौ सुबन्तस्योत्तरपदपरत्वाय पूर्वं सुपो लुकि उत्पन्नस्यामः 'सुपोधातु' (पा०सू०२।४।७१) इति लुक् अम्विधिसामर्थ्येन वारितः, "इच एकाचोऽम्" (पा०सू०६।३।६८) इति सूत्रे भाष्ये इत्याहुः ।(१)

संज्ञोऽन्यतरस्याम् (पा०सू० २।३।२२)। दैवादिकस्य जनेर्न ग्रहणं तस्याकर्मकत्वात्तदाह-जानातेरिति । कर्मत्वशक्तिरेवात्र तृतीयार्थः ।

हेतौ (पा०सू०२।३।२३)। हेतुरिह कारणम् । न शास्त्रीयः तस्य कर्तृसंज्ञाया अपि सत्त्वेन कर्तृतृतीययैव सिद्धेः । ननु लौकिकहेतुरपि करणमित्यत आह-द्रव्यादीति । आदिना गुणक्रिये । साधारणमिति । तज्जनकेऽपि वर्तत इत्यर्थः । करणं तु क्रियाजनकमेवेति(२)भावः । वैषम्यान्तरमाह-निर्व्यापारेति । करणन्तु

---

*अनुर्लक्षण इति सूत्रभाष्य इति* । तत्र हि 'न ह्यवश्यन्तदेव लक्षणं भवति येन पुनः पुनर्लक्ष्यते । किन्तर्हि यत्सकृदपि निमित्तत्वाय कल्पते तदपि लक्षणम्भवति' इत्युपक्रम्योक्तम् । कैयटोक्तमभ्युपेत्यापि दूषणमाह—*किञ्चेति* । *अत एव* । पश्चादुत्पन्नस्यापि तन्मध्यपतितन्यायेन तदवयवत्वादेव ।

तदुक्तज्ञानातेरिति तन्निमित्तमाह—*जनेर्नेति* । *लौकिकहेतुरपि करणमिति* । व्यापारवदसाधारणं कारणं करणमिति लोकप्रसिद्धेः ।

*करणन्त्विवति* । "कर्तृकरणयोः" इतिसूत्रघटककरणशब्दार्थस्त्वर्थः । "साधकतमम्" इतिसूत्रेण क्रियाजनकस्यैव करणसंज्ञाविधानात् *वैषम्यान्तरेति* । लौकिककरणत्वस्य हेतुत्वापेक्षयेत्यादिः । *भि-

---

(१) परेतु इत्यादिनोक्तविधसिद्धान्ते प्रमाणं च प्रकृतसूत्रस्थं भाष्यमेव । तत्रहि-इत्थंभूतलक्षणे सर्वे प्रतिषेधो वक्तव्यः इत्युक्त्वा नवा वक्तव्यः किं कारणम् इत्थंभूतस्य लक्षणेनापृथग्भावादित्युक्तम् । तत्रायमाशयः। एकार्थीभावे कमण्डलोरितरविशेषणत्वेनैवोपस्थित्या तस्य लक्षणत्वेन छात्रेऽन्वयासम्भवः ।

(२) *क्रिया जनकमेवेति* । अत्रत्यैवकारेण द्रव्यगुणजनकत्वव्यावृत्तिः । तदुक्तं हरिणा—

"अनाश्रिते तु व्यापारे करणं हेतुरिष्यते । इति ।

द्रव्यादि विषयो हेतुः करणं नियतक्रियम्" । इति च ।

व्यापारवदेवेति भावः। एवञ्च करणत्वशक्तेर्भिन्नैव हेतुत्वशक्तिरत्र तृतीयार्थ इति तात्पर्यम्। स्फुटप्रतिपत्तये करणे वैलक्षण्यमाह-करणत्वन्विति। हेतुहेतुमद्भाव एव तृतीयार्थः। दण्डे व्यापारसत्त्वेऽपि क्रियाजनकत्वाभावान्न करणत्वम्। पुण्ये क्रियाजनकत्वेऽपि निर्व्यापारत्वान्न तत्त्वम्। फलमपीहेति। इह एतत्सूत्रोदाहरणे। इह एतत्सूत्रोदाहणे। क्वचित्फलमपि हेतुत्वेन विवक्ष्यत इत्यर्थः। तस्यापि स्वज्ञानद्वारा जनकत्वात्। एतच्च 'प्रत्ययः' (पा०सू०३।१।१) इत्यादि सूत्रेषु कैयटे स्पष्टम्।

ननु 'अलं श्रमेण' इत्यदौ क्रियावाचकपदाभावात्क्रियाया अप्रतीत्या कथं करणत्वमत आह-गम्यमानापीति। श्रमेणेत्यादिपदजबोधविषयापीत्यर्थः न तूच्चार्यमाणतद्वाचकपदजबोधविषयैवेति भावः। अलंशब्दो निषेधार्थस्तदाह--साध्यं नास्तीति। ननु साध्यमित्यर्थज्ञानेऽपि तस्य श्रमेणेति नामार्थत्वेन न क्रियात्वमत आह-इहेति। स्ववाच्याक्रियां प्रति स्वस्य करणत्वमित्यर्थः।

---

*नैवेति*। हेतुत्वशक्तिः। हेतुत्वरूपो धर्मः। स चाखण्डोपाधिर्हेतुर्हेतुरिति पुण्यादिसदृशे व्यापाररहितेऽपि व्यवहारादिति भावः। तथा च नेदं सूत्रङ्कर्तृकरणयोरितिसूत्रेण गतार्थम्। एवं व्याख्यानेन हेतुत्वकरणत्वयोर्भेदो ज्ञात एवेति करणन्त्वित्यग्रिमोपपादनवैयर्थ्यमत आह-*स्फुटप्रतिपत्तय इति*। फलस्य हेतुत्वविवक्षायां बीजमाह—*तस्यापीति*। *जनकत्वात्*। क्रियासाध्यकप्रवृत्तिजनकत्वात्। इत्थं हि लौकिकक्रमः। फलज्ञानम्। ततः फलेच्छा ततः उपायज्ञानम्। अथोपायधर्मिकफलसाधनताज्ञानम्। ततः उपायेच्छा ततः क्रियां साधयितुम्प्रवृत्तिरिति। गम्यमनापीत्यस्यानुसन्धीयमानाऽध्याहृतेत्येवं व्यवह्रियमाणेतिनार्थः क्रियारूपार्थस्याध्याहारे तादृशानुसन्धानस्य पदाजन्यतया शाब्दबोधनियामकत्वासम्भवेन तस्यार्थस्य शाब्दबोधविषयत्वासम्भवात्। नापि शब्दानुसन्धानम्। उच्चारितस्यैव शब्दस्य 'उच्चारितः शब्दः प्रत्यायको नानुच्चारित' इतिभाष्योक्तेरनुसन्धीयमानस्य शाब्दबोधजनकत्वासम्भवात्पिण्डीमित्येतन्मात्रात्पिण्डीम्भक्षयेतिशाब्दबोधानुपपत्तेः। किन्तु पिण्डीम्भक्षयेतिवाक्यस्यार्थे पिण्डीकर्मकभक्षणे पिण्डीमित्यस्यैकदेशस्य शक्तिरेव कल्प्यतेऽतस्तावन्मात्रादर्थबोधस्तथा प्रकृतेऽपीत्याशयेनाह-*श्रमेणेत्यादिपदजेत्यादिना*।

*नामार्थत्वेन*। सुबन्तार्थत्वेन। *स्ववाच्येति*। स्ववाच्यावि

(१)स्पष्टं चेदम् "इग्यणः" (पा०सू०१।१।४५) इति सूत्रे 'प्रविश पिण्डीम्' इति वाक्यार्थे वाक्यैकदेशप्रयोग इत्यादिना भाष्ये । इति मञ्जूषायां विस्तरः ।

अशिष्टेति । अशिष्टानां सङ्कीर्णाचाराणां यो व्यवहारः क्रिया तद्बोधकपदप्रयोगे प्रत्यासत्त्या यत्सम्बन्धेन व्यवहारस्य सङ्कीर्णाचारत्वं तद्वाचकाच्चतुर्थ्यर्थे तृतीयेत्यर्थः । दास्येति । दासीसम्प्रदानकरतिफलकं दानमिति बोधः ।

दानस्येति । दाधात्वर्थस्येत्यर्थः । इदमुपलक्षणं क्रियामात्र-

---

था वाक्यैकदेशसाध्यमित्यर्थसाधनक्रिया ताम्प्रति स्वस्य श्रमेणेत्येकदेशार्थस्य करणत्वङ्करणत्वव्यवहार इत्यर्थः । वस्तुतस्तु श्रमेणालमिति वाक्यैकदेशस्य श्रमकरणकसाधनकर्मकर्तृकसत्ताऽभावरूपेऽर्थे शक्तिरेव । एवमेव 'प्रविश पिण्डीम्' इत्यादिवाक्यैकदेशप्रयोगस्थले ज्ञातव्यम् ।

अशिष्टव्यवहारेत्यत्र कर्मधारयभ्रमनिवारणायाह—*अशिष्टानामिति* । अशिष्टपदमत्र न शिष्टभिन्नपरम् । श्रुतिस्मृत्यादिप्रामाण्याभ्युपगन्तॄणामपि रागौत्कट्यात्तादृशव्यवहारस्थले दास्या संयच्छत इतिप्रयोगदर्शनादत आह—*सङ्कीर्णाचाराणामिति* । कालभेदेन धर्माधर्मफलकाचारकर्तॄणामित्यर्थः । प्रकृते च दासीशब्दार्थस्य रतिफलके दाने सम्प्रदानत्वेनान्वयात्तादृशव्यवहारस्य सङ्कीर्णाचारकर्तृकर्तृकत्वमिति भावः । दास्या संयच्छत इत्यत्र "दाणश्च सा चेच्चतुर्थ्यर्थे" इतिसूत्रेणात्मनेपदम् । या तु भार्या शास्त्रोक्तरीत्या विवाहिता तस्यै दानानन्तरं तत्र तत्प्रत्यनन्तरन्तस्या उपभोगस्तत्र न चतुर्थ्यर्थे तृतीया, अशिष्टव्यवहाराभावादिति न तत्रात्मनेपदमित्याशयेनाह-*मूले धर्मे त्विति* ॥

इति तृतीयाविवरणम् ।

---

दानस्य कर्मणेति वाक्यघटकदानेतिप्रातिपदिकार्थस्य न क्रियात्वमिति दानस्य कर्मणेत्यनुपपन्नमत आह—*दाधात्वर्थस्येति* । *इदमिति* । दाधात्वार्थस्येत्येतत् । अत एव भाष्ये 'क्रियाग्रहणङ्कर्त्तव्यम् । कर्मणोऽपि यथा स्यात् । श्राद्धाय निगर्हते । युद्धाय सन्नह्यते । पत्ये शेते इ-

---

(१) ननु श्रमेणेत्यस्य तथाविधार्थे लौकिकप्रयोगाभावादिदमयुक्तमित्यत आह-*स्पष्टं चेदमिति* । एवं चेदृशस्थले नाध्याहारेण क्रियामादाय श्रमादीनां कारणत्वं संपादनीयम् । अपि तु वाक्यार्थे वाक्यैकदेशप्रयोगेण गम्यमानक्रियामादायैव । अत एव मूलोक्तगम्यमानपदस्यापि स्वारस्यं सङ्गच्छते । गम्यमानत्वञ्च लक्षणादिना वाक्यार्थे वाक्यैकदेशप्रयोगेण वा प्रतीयमानत्वं नत्वन्यथेति सिद्धम् ।

स्य(१)। कर्मणेति। सम्बन्धुमिति शेषः। अभिप्रैति-इच्छति(२) कर्मणा सम्बन्धश्च स्वत्वादिरूपः (३)सम्प्रदानत्वशक्तिमान् सम्प्रदानचतुर्थ्यर्थः। स एवोद्देश्य इत्युच्यते क्रियाकारकभावः सम्बन्धश्च तदर्थः। विप्रसम्प्रदानकं दानमिति बोधः। कर्मणेति किम्? तदभावे हि कर्मणोऽप्युद्देश्यतयाऽन्तरङ्गत्वात्तस्यैव संज्ञा स्यात्। कर्मसंज्ञया तु पर्यायो भविष्यति। यं सग्रहणं किम्। तदभावे क्रियाकर्मणा

ति। तत्तर्हि वक्तव्यं न वक्तव्यम्। कथम्। क्रियां हि नाम लोके कर्मत्युपचरन्ति। कां क्रियाङ्करिष्यसि। किङ्कर्मकरिष्यसि' इति भाष्ये उक्तम्। *श्राद्धायेति*। *श्राद्धन्निन्दति*। नास्तिकत्वात्। *युद्धायेति*। युद्धविषयकं सन्नहनपूर्वकन्निश्चयङ्करोतीत्यर्थः। *पत्ये शेत इति*। पतिमुपसृत्य शेत इत्यर्थः। कर्मणेत्यत्र कर्मपदन्न यत्किञ्चित्क्रियाकर्मपरम्। किन्तूच्चारितवाक्यघटकधात्वार्थक्रियाकर्मपरम्। एवञ्च कर्मसम्बन्धवत्त्वेनेच्छाविषयो यस्स सम्प्रदानम स्यादिति सिद्धम्। अत 'एव अजाङ्ग्रामन्नयति'इत्यत्र न ग्रामस्य सम्प्रदानत्वन्तत्र ह्यजाग्रामसम्बन्धो जायतामित्येवेच्छा न तु ग्रामोऽजासम्बद्धो जायतामित्याकारेच्छा। यत्र तु संयोगानुकूलव्यापारमात्रन्धात्वर्थः ग्रामसंस्कारार्थञ्चाजानयनन्तत्र 'ग्रामायाजान्नयति' इति भवत्येव।

कर्मणेतितृतीयोपपत्तये आह-*सम्बन्धुमिति शेष इति*। *स्वत्वादिति*। आदिना स्वामित्वपरिग्रहः। *स एव*। सम्प्रदानत्वशक्तिमानेव। ननु कर्मणेति न कर्तव्यम्। यमभिप्रैतीत्युक्त्यापि उद्देश्यस्य लाभात्। क्रियाग्रहणञ्च न कार्यमित्यपरमनुकूलम्भाविष्यतीत्याशयेनाह-*कर्मणेति किमिति*। उद्देश्यतया धात्वर्थफलाश्रयत्वेनेच्छाविषयत्वादस्योद्देश्यत्वम्। अत एवान्तरङ्गत्वम्प्रथमतोऽस्य धात्वर्थफलाश्रयत्वप्रका-

(१) *क्रियामात्रस्येति*। तेन "विघ्नविघाताय कृतं मंगलं शिष्यशिक्षायै निबध्नाति" इत्यत्र सम्प्रदानत्वं सिद्धम्।

(२) गवादिरूपेण कर्मणा विप्रादिरूपस्य सम्प्रदानस्येच्छाविषयीभूतः सम्बन्धः क इत्याकाङ्क्षायामाह-इच्छतीति*।

(३) विप्रेभ्यो गा ददाति इत्यादा संप्रदानचतुर्थ्यर्थमाह-संप्रदानत्वेति*। सा च शक्तिः 'कर्मणा यमभिप्रैति' इति सूत्र महिम्ना तत्तद्धात्वर्थकर्मनिष्ठफलनिरूपकत्वेनेच्छाविषयो योऽर्थस्तन्निष्ठा। अनेन कर्मणश्चतुर्थी निमित्तत्वप्रदर्शनात् कर्मश्रुत्यपेक्षया चतुर्थीश्रुते र्बलवत्त्वं बोधितामिति बोध्यम्। अत एव "क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति" इत्यादौ द्वितीया श्रुत्या दण्डदानं न प्रतिपत्तिकर्म, तदपेक्षया बलीयस्या चतुर्थीश्रुत्या मैत्रावरुणसंस्कारकं तदिति मीमांसकसिद्धान्तः सङ्गच्छते। तस्या एवार्थमाह-*क्रियाकारकेति*। बोधाकारं दर्शयति-*विप्रेति*। एवञ्च विप्राभिन्नसंप्रदाननिष्ठोद्देश्यतानिरूपकं दानमिति फलितोऽर्थः।

योऽभिप्रैति ब्राह्मणादिस्तस्यैव स्यात्। कर्तृसंज्ञा त्वकर्मकविषये सावकाशा। न च कर्तुः कर्तृत्वाभावे कथं गोः कर्मत्वम्। कर्मसंज्ञायां कर्तृग्रहणस्य स्वतन्त्रोपलक्षणत्वात्। अत एव 'सार्थाद्धीयते' इत्यत्र कर्तुरपादानत्वे ऽपि कर्मणि लकारः सिद्धः। ननु कर्मणेत्युक्तावकर्मकक्रियोद्देश्यस्य सम्प्रदानत्वं न स्यादत आह-क्रिययेति। कर्मरहितक्रियया इत्यर्थः। सकर्मकेषु। कर्मसंज्ञा अस्या बाधिकेत्याशयेनाह-पत्ये शेते इति। न च दानादीना तदर्थत्वात्तादर्थ्यचतुर्थ्यैव सिद्धे किमनया संज्ञयेति वाच्यम्, 'दाशगोघ्नौ सम्प्रदाने' (पा०सू०३।४।७३) इत्यर्थत्वात्, तत्सम्प्रदा-

---

केच्छा ततो विप्रादेस्तत्सम्बन्धित्वप्रकारकेच्छेति। *कर्मणा योऽभिप्रैतीति*। कर्मणाऽभिप्रैतीत्युक्ते आख्यातार्थकर्तुरुपस्थितत्वाद्योऽभिप्रैतीतिस्य लाभो भविष्यतीत्यभिप्रायः। न च यं स इत्यस्याध्याहारो भविष्यतीति वाच्यम्। श्रुतपदार्थसम्बन्धेनैवाकाङ्क्षाशान्तेरध्याहारे मानाभावात्।

ननु कर्तुरीप्सितं हि कर्म भवति। न हि तदा कर्त्तास्तीति कथं कर्मत्वेत्याह—*न च कर्तुरिति*। *स्वतन्त्रोपलक्षणत्वादिति*। स्वातन्त्र्यञ्च धात्वर्थप्रधानीभूतव्यापाराश्रयत्वन्तच्च प्रकृते कर्तृसंज्ञाभावेऽप्यक्षतमेवेति भावः। कर्तुः सम्प्रदानत्वे इष्टापत्तिरिति तु न भ्रमितव्यम्। उपाध्यायशिष्येण गौर्दीयत इति प्रयोगो यत्र तत्र शिष्यायोपाध्यायस्य गौर्दीयत इति प्रयोगापत्तेः। *अत एव*। कर्तृग्रहणस्य स्वतन्त्रोपलक्षणत्वादेव। *कर्तुरपादानत्वेपीति*। 'सार्थ एनन्त्यजति, अयञ्च सार्थाद्धीयते' इति ह्यत्र सम्प्रत्ययः। सार्थश्च मनुष्यसमुदायः, समुदायश्च समुदाय्यवयवाभिन्नोऽयमपि तत्समुदायावयव इति सार्थस्यापादानत्वेऽपि निरुक्तस्वातन्त्र्यन्तस्यास्तीति भावः।

अकर्मकक्रियोद्देश्यस्य पत्ये शेत इत्यादौ पत्यादेः। नन्वकर्मकक्रियास्थलेऽतिप्रसङ्गनिवारणाय कृतस्य "क्रियया यमभिप्रैति" इतिवचनस्य कर्मण्यतिप्रसङ्ग इत्यत आह—*कर्मरहितेति*। इदञ्च व्याख्यानन्नापूर्वमित्याशयेनाह-*सकर्मकेष्विति*। *तदर्थत्वात्*। सम्प्रदानत्वेनाभिप्रेतो यो विप्रादिस्तत्पुण्यादिप्रयोजकतया विप्रार्थत्वात्। *दाशगोघ्नावित्येतदर्थमिति*। सम्प्रदाने कारकेऽनेन सूत्रेण दाशगोघ्नशब्दयोर्निपातनात्। अत एव मूले 'दाशन्ति तस्मै दाशः। गां हन्ति तस्मै गोघ्नोऽतिथिः। इति तयोरर्थं वक्ष्यति। ननु सम्प्रदानशब्दस्य सम्प्रदीयते यस्मै यत्पुण्यादिकामनया इत्यर्थः कल्प्यतेऽतो न तत्सूत्रानुपपत्तिरत आह—*तत्सम्प्रदानकमिति*।

नकं दानमिति बोधार्थं तदावश्यकत्वाच्च । अत एव तादर्थ्यचतुर्थ्या दानकर्मणो गवादेः सम्प्रदानार्थत्वे ऽपि दानक्रियायास्तदर्थत्वाभावेन चतुर्थ्यन्तार्थस्य दानक्रियान्वयानापत्तिरिति हेलाराजः । तादर्थ्यचतुर्थ्यैव सिद्धे 'चतुर्थी सम्प्रदाने' इति सूत्रं रुच्यर्थानामित्यादिविषये चतुर्थ्यर्थमिति भाष्ये स्पष्टम् । पशुनेति । कर्म तृतीयाऽर्थः सम्प्रदानं द्वितीयाऽर्थः । एतच्च दानार्थकयजधातुविषयम् । पूजार्थत्वे तु पशोः करणत्वं न्यायसिद्धम् । इदं छान्दसमिति कैटयः ।

अन्यकर्तृक इति । अभिलष्यतिकर्त्रपेक्षयाऽन्यदभिलष्यतिकर्म तत्कर्तृक इत्यर्थः । यत्किञ्चिद्विषयकप्रीत्यनुकूलव्यापाराश्रयो ऽभिलष्यतिकर्ता हरिर्भक्तिमभिलष्यतीति प्रत्ययात् । यत्किञ्चिद्विष्टप्रीत्यनुकूलः, प्रतिव्यधिकरणो यो व्यापारस्तदाश्रयो रोचतेः कर्त्तेति अभिलषते रुच्यर्थत्वाभावान्न तद्योगे सम्प्रदानत्वमिति भावः ।

---

सम्प्रदानसंज्ञायास्सत्त्वे 'विप्राय गान्ददाति' 'दानीयो विप्र' इतिवाक्याद्विप्रसम्प्रदानकं दानमिति, दानसम्प्रदानाभिन्नो विप्र, इत्यादिरीत्या बोधो भवति । तादर्थ्ये एव चेच्चतुर्थीविधानन्तदा 'यूपाय दारु' इतिशब्दाद्यथा यूपार्थन्दार्विति बोधो भवति तथा 'विप्राय गांद दाति' इत्यादि शब्दाद्विप्रार्थङ्गोकर्मकन्दानमित्याद्येव बोधः स्यादिति भावः । किं च सम्प्रदानत्वेन तेभ्यः शब्देभ्यो बोधश्चेत्स्वीक्रियते तदा "कर्मणा यम्" इतिसूत्रस्य "क्रियार्थोपपदस्य च" इतिसूत्रेण गतार्थता न भवति, अन्यथा 'विप्रस्पोषयितुम्' इत्याद्यर्थकल्पनयाऽस्य सूत्रस्य तेन सूत्रेण गतार्थता स्यात् । *अत एव* । सम्प्रदानसंज्ञासत्त्वादेव ।

यत्तु चतुर्थीसमासे करकपूर्वपदकत्वाद्गतिकारकोपपदादिति सूत्रं तद्विषये प्रवर्त्तते इति । तन्न । तादर्थ्यचतुर्थ्यैव सिद्धे चतुर्थी सम्प्रदाने इति सूत्रं 'रुच्यर्थाना'मित्यादिविषये चतुर्थ्यर्थमिति भाष्यात्तद्विषये कारकपूर्वपदकस्वराभावस्यापि कल्पनसम्भवात् । ( किञ्च चतुर्थी तदर्थेति सूत्रेण प्रकृतिविकृतिभाव एव समास इति वक्ष्यते । यदि तादर्थ्य एव सर्वत्र चतुर्थी तदा प्रकृतिविकृतिभावस्य सर्वत्रैव सत्त्वेन वक्ष्यमाणव्यवस्थाप्यनुपपन्ना स्यादिति ) । *पूजार्थत्वेत्वि ति* । एतेन शाब्दबोधेऽपि वैलक्षण्यं सूचितम् ।

'हरिर्भक्तिमभिलष्यति' इत्यत्र "रुच्यर्थानाम्" इतिसूत्रेण चतुर्थ्यप्राप्त्यर्थमर्थभेदन्दर्शयति-*अभिलष्यतीत्यादिना* । *प्रतिव्यधिकरणेति*

ग्राह-हरिनिष्ठेति । षष्ठीति । न च प्रीयमाणपदाभावे सूत्रस्य क्रियाजनकत्वमात्रविवक्षायां संज्ञान्तराप्राप्तिविषये चारितार्थ्येन परत्वादधिकरणसंज्ञया बाधसिद्धे कथमेतदिति वाच्यम्, 'देवदत्तं रोचते' इत्यस्याप्यापत्तेरित्याशयात् । तत्सत्वे त्वस्य कर्मसंज्ञापवादत्वान्न दोषः ।

गोपी स्मरादिति । श्लाघादेः स्तुत्यादिना बोधनमर्थः । स्मरादिति हेतौ पञ्चमी । स्तुत्याऽऽत्मानुरागं कृष्णं बोधयतीत्यर्थः । स्तुतिश्च कृष्णस्यैव । एवं ह्नुत्या स्वानुरागं कृष्णं बोधयतीत्यर्थः । ह्नुतिः सपत्न्यादिभ्यः कृष्णस्यैव । एवं स्थित्या शपथेन च कृष्णं स्वानुरागं बोधयतीत्यर्थः । यद्वा, स्तुत्या ह्नुत्या च कृष्णं स्वसखीजनं बोधयति, स्थित्या शपथेन च कृष्णं तं बोधयतीत्यर्थः । ज्ञीप्स्यमानपदे ण्यर्थकर्मणः प्रकृत्यर्थकर्मणश्च ग्रहणादित्यन्यत्र विस्तरः । श्लाघादेमात्रार्थत्वे कृष्णं श्लाघते कृष्णं ह्नुते इत्येव । ज्ञीप्स्यमान इति ज्ञापनवचनाज्ज्ञपेः सन्नन्तात्कर्मणि शानच् ॥

---

*। एतेन कर्मसंज्ञापवादभूतेयं सम्प्रदानसंज्ञा । न च प्रीधातोरप्येवं सति सम्प्रदानसंज्ञाप्रयोजकत्वं स्यादिति 'हरिं प्रीणयति' इत्यनुपपन्नमिति वाच्यम् । "प्रीयमाण" इतिनिर्देशेन प्रीधातुयोगे सम्प्रदानत्वाभावस्य कल्पनात् । कारकाधिकारादाह-*क्रियाजनकत्वमात्रेति* । षष्ठीविषये । *इत्यस्याप्यापत्तेरिति* । अत्र कर्मसंज्ञाऽधिकरणसंज्ञावद्बाधिका स्यादिति भावः ।

"ज्ञीप्समान" इत्यस्य ज्ञाधात्वर्थकर्मणि चेत्प्रत्ययस्तदा ज्ञानविषयत्वेनेन सम्प्रदानसंज्ञा णिजन्तार्थकर्मणि चेत् क्रियते तदा ज्ञानाश्रयस्य ग्रहणम् इति व्याख्याभेदेनार्थभेदं दर्शयति-*श्लाघादेरिति* । *आत्मानुरागमिति* । ण्यर्थकर्मणि प्रत्ययपक्षे इदम् । ज्ञानाधात्वर्थकर्मणि प्रत्ययपक्षे आह-*यद्वेति* सन्नन्तार्थकर्मत्वमुभयोरपि सम्भाव्यत इति विनिगमनाविरहादन्यतरत्रैवेति न नियम इति भावः । उभयथापि कर्मसंज्ञापवादं इयम् । ज्ञाप्यमान इत्येव नोक्तं किन्तु ज्ञीप्स्यमान इत्यतो ऽर्थभेद इति तत्त्वम् । एतेन ज्ञाधातोः प्रथमोपस्थितत्वमेव विनिगमकमित्यपास्तम् । ण्यन्तार्थकर्मण्येव प्राधान्यादत्र प्रत्यये इति । तन्न । अनुपादानस्याविरोधात् ।

"धारेः" इतिसूत्रे धृञो णिजन्तस्य ग्रहणमितिभ्रमवारणायाह-*धृङ-

धारेरु (पा०सू०१।४।३५)। 'धृङ् अवस्थाने' इति ण्यन्तस्य ग्रहणं व्याख्यानात्। भक्तायेति। ध्रियमाणं स्वरूपेणावतिष्ठमानं मोक्षं हरिः प्रयुङ्क्ते इत्यर्थः। प्रेरणाया भक्तासत्त्वेऽभावात्तस्यापि प्रेरणाजनकत्वेन कारकत्वं बोद्ध्यम्। अवश्यदेयत्वेन मोक्षेऽपि ऋणत्वं बोद्ध्यम्।

प्रकर्षविवक्षायान्त्विति। फलाश्रयत्वेन विवक्षायामित्यर्थः। परत्वादिति। इदं सूत्रं विषयतया क्रियाजनकत्वमात्रविवक्षायां चरितार्थमिति भावः। पुष्पसम्प्रदानकेच्छेति चतुर्थी समभिव्याहारे बोधः।

कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च।

---

-वस्थान इतीति*। *व्याख्यानदिति*। यदि धृञो हेतुमण्यन्तस्यायमुद्देश इत्युच्यते तदा मोक्षस्य धृञ्धात्वर्थकर्तृकत्वासम्भवः। किञ्च धृञः सकर्मकतया मोक्षस्य कर्मत्वन्न स्यात्। धृङस्त्वकर्मतयाऽण्यन्ततायाङ्कर्तृत्वं मोक्षस्यास्तीति हेतुमति ततो णिचि मोक्षस्य "गतिबुद्धि" इतिसूत्रेण कर्मत्वं सम्भवतीति 'भक्ताय धारयति मोक्षं हरिः' इति प्रयोग उपपद्यते इत्येतद्दर्शनमूलकादित्यर्थः। भक्तस्य कारकत्वमुपपादयति-*प्रेरणायो इति*। नन्वत्र मोक्षस्य ऋणत्वञ्चेत्तदा भक्तस्य उत्तमर्णत्वन्तत्स्वामित्वादुपपत्स्यते तदेव न। ऋणं हि नाम यत्र सजातीयदानमङ्गीकृत्य परतद्रव्यादानन्तदुत्तरकालिकगृहीतद्रव्यसजातीयद्रव्यदाननाश्योऽदृष्टविशेषः। प्रकृते मोक्षस्यैवंविधऋणत्वाभावेनैतत्स्वामिनो भक्तस्य उत्तमर्णत्वासम्भवादत आह-*अवश्यदेयत्वेनेति*॥

"स्पृहेरीप्सितः" इति सूत्रे यदीप्सितपदन्तदिच्छाविषयपरम्। 'पुष्पेभ्यः स्पृहयति' इत्युदाहरणे स्पृहिरिच्छामात्रवाची। पुष्पपदार्थस्य च विषयितायां चतुर्थ्यर्थेऽन्वयः। क्रियाजनकत्वञ्च विषयत्वेनैवेति। यदा तु प्रकर्षस्य प्रकृतधातूपात्तव्यापारजन्यफलश्रयत्वस्य विवक्षा तदा कर्मसंज्ञेति मूलग्रन्थात्प्रतीयते। अत एव 'स्पृहणीयगुणैः' 'स्पृहणीया शोभा' इत्यत्र कर्मण्यनीयर्।

कुमार्य इव कान्तस्य त्रस्यन्तिस्पृहयन्ति च।

इत्यत्र तु इच्छासम्बन्धित्वमात्रस्य विवक्षा न तु क्रियाजनकत्वरूपकारकत्वस्यापीत्यतः षष्ठीत्याशयेनाह-*फलाश्रयत्वेनेति*। प्रकृतसूत्रचरितार्थ्यमाह-*इदं सूत्रमिति*। क्रियाजनकत्वमात्रेत्यत्रत्यमात्रपदेन तादृशफलाश्रयत्वव्यवच्छेदः। स्वीयसिद्धान्तरीत्या शाब्दबोधमाह-*पुष्पसम्प्रेति*। यत्र तु षष्ठी तत्र विशेषमाह-*कुमार्य इवेति*। क्रियास-

इत्यत्र क्रियासम्बन्धित्वमात्राविवक्षया षष्ठी। अन्ये तु 'भोगा-
' इत्यध्याहृत्य कान्तयेति विभक्तिविपरिणामेन व्याख्येयमित्या-
हुः। स्पृहधातुरिच्छामात्रवाची फलावच्छिन्नेच्छावाची च। आद्ये
सम्प्रदानत्वम्, अन्त्ये कर्मत्वम्। ईप्सितत्वं धात्वर्थजन्यफलाश्रय-
त्वम्, न तु फलस्य धात्वर्थत्वपर्यन्तमाग्रहः। कर्मसंज्ञायान्तु यथा
लाभस्तथोक्तम्।

भार्यामीर्ष्यतीति। नात्र भार्यां प्रति कोपः, किं तु परै
रुपभुज्यमानां तां न महते इत्येव। एवञ्चात्र न कोपजन्येर्ष्या, किन्त्व-

---

न्धित्वमात्रेति*। मात्रपदेन क्रियाजनकत्वव्यवच्छेदः। ये तु प्रकृतसूत्रेण स-
म्प्रदानसंज्ञा क्रियासम्बन्धित्वविवक्षायामेव, अत एव षष्ठ्यपवादत्वमस्या
इति व्यवहारः। एवं सति 'कुमार्य इव' इत्यत्र कथं षष्ठीत्याकाङ्क्षायाम-
ध्याह्रियमाणपदार्थान्वयविवक्षयेत्याहुस्तन्मतमाह-*अन्ये त्विति*।
*भोगायेत्यध्याहृत्येति*। अत्र शब्दाध्याहारः। यदि तु स्पृहयतियोग-
विवक्षैव तदाप्याह-*कान्तायेति*। आहुरित्यस्वरसबीजन्तु अस्य सूत्र-
स्य कारकाधिकारीयत्वात् क्रियासम्बन्धित्वमात्राविवक्षायामित्यसङ्गतम्।
इतो व्याघातात्। किञ्च कुमार्य इवेत्यत्र शब्दाध्याहारे विभक्तिविपरि-
णामे वा गौरवम् सूत्रस्यैतस्य कर्त्तुरीप्सिततममित्यस्य च विषयविभा-
गश्चोक्त एव।

स्पष्टप्रतिपत्तये अत्र सिद्धान्तमाह-*स्पृहधातुरिति*। *फलाव-
च्छिन्न इति*। फलमिच्छाया एव। तच्चान्ततो विलक्षणविषयतारूपमे-
वेष्यते अत एवोक्तम्-*प्रकर्षविवक्षायामिति*। एवञ्च कर्मसंज्ञायाः शे-
षत्वाच्चापवाद इयमित्युक्तिः प्रत्युक्ता। त्रयाणां सूत्राणाम्परस्परपरिहा-
रेणैव प्रवृत्तेः॥

*क्रुधद्रुह*। एषामर्थ इवार्थौ येषामित्यर्थः। क्रोधश्चामर्षरूपो मनसो
वृत्तिविशेषः। उत्कर्षविरोधिधर्मारोपानुकूलव्यापारात्मकः। द्रोहश्चाप
कारकरूपः। स च तदीयगुणे दोषत्वारोपानुकूलव्यापाररूप इति तयोर्भेदः।
ईर्ष्या चाक्षमा सा परकीयपाण्डित्यादिगुणानामसहनन्तच्च गुणादिज्ञा-
नजन्यद्वेषात्मकम्। असूया च गुणेषु दोषतादात्म्यारोप इति द्रोहादस्य
भेदः। द्रोहविषये नैते देवदत्तस्य गुणाः, किन्तुदोषा एव इति ज्ञानम्।
असूयाविषये तु 'देवदत्तो दुष्ट' इत्याकारकं ज्ञानम्। कोपश्च देवदत्तीय-
विपरीताचरणज्ञानजन्यो वृत्तिविशेष इत्येतेषाङ्कोपप्रभवत्वोपपत्तिः।

वस्तुतस्तु वाक्चक्षुरादिविकारानुमेयः प्ररूढकोप एव क्रोधः। द्रोह-
श्चापचिकीर्षारूपः। मूलोक्तमपकारपदमप्यपचिकीर्षापरम्। *तांश्च क्षमत

न्यपुरुषदर्शनजन्येति भावः। हरेः क्रोधद्रोहाभ्यामिच्छाविषयत्वाभावात् 'क्रियया यम्' इत्यनेन न सिद्धिः 'न ह्यकुपितः क्रुध्यति' इति भाष्येण प्ररूढकोप एव क्रोध इति कुपेस्तदर्थत्वाभावेन न तद्योगे इदम्। 'कुप्यति कस्मै चित्, इत्याद्यसाध्वेव।

उपसृष्टयोरित्यस्यार्थमाह—सोपसर्गयोरिति। वैयाकरणनिकाये एष एतदर्थकत्वेन प्रसिद्धः। पूर्वसूत्रापवादोऽयम्।

यदीय इति। यदीयशुभाशुभसम्बन्धीत्यर्थः। राधीक्ष्योः प्रश्नविषयार्थपर्यालोचनमर्थः। कर्मणः प्रश्नविषयस्य धात्वर्थेनोपसङ्ग्रहादकर्मकावेतौ। अत एव श्यन्। (१)'राधोऽकर्मकादेव' इत्युक्तेः।

---

इति*। अत्र क्षमा च परपुरुषदर्शनप्रयोजकदेशविशेषस्थितिरूपफलानुकूलव्यापारानुकूलव्यापार एव। अत एव तामिति कर्मत्वम्। ईर्ष्या च तदभावः। ननु क्रियायामित्यनेनैव सिद्धेऽस्यसूत्रस्य वैयर्थ्यमत आह-*हरेरिति*। कुपधातुयोगे कर्मसंज्ञां वारयति-*न ह्यकुपित इति*। क्रोध इतीति बोधनेनेति शेषः। *तदर्थत्वाभावेन*। क्रोधार्थत्वाभावेन। न तद्योग इदम्। कुपधातुयोगे सम्प्रदानत्वन्न, किन्तु तद्योगे कर्मसंज्ञेति शेषः। अत एव भाष्यकैयटोक्तं व्याकुप्येतेतिकर्मप्रयोगो मनोरमोक्त उपपन्नो भवति। यदि च—

> शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम्।
> यस्मै प्रसीदसि पुनः सभात्युदारोऽनुदारश्च॥

इति काव्यप्रकाशस्थप्रयोगानुपपत्तिरिति विभाव्यते तदा महाकविप्रयोगदर्शनेन प्ररूढकोपार्थकत्वङ्कुपधातोरपि कल्पनीयम्। कोपसामान्यार्थककुप्धातुयोगे तु नेति समर्थनीयम्। न च "चित्तदोषार्थानाम्" इत्येव सूत्रमस्त्विति वाच्यम्। द्विषधातुयोगेऽतिप्रसङ्गात्। अत एव 'औषधन्द्वेष्टि' इतिप्रयोग उपपन्नो भवति। क्रोधादयश्चेतनविषया एव। द्वेषस्तु चेतनाचेतनविषय इति

ननूपसृष्टपदस्य सोपसर्गयोरिति व्याख्यानं कथमत आह-*वैयाकरणेति*। *निकाये* गृहे शास्त्ररूपे।

*अत एव*। पूर्वोक्तरीत्या राधधातोरकर्मकत्वस्वीकारादेव धात्वर्थैकदेशे कृष्णपदार्थान्वयः। प्रश्नविषयशुभाशुभाश्रयत्वेन कर्मत्वङ्कृष्णस्या

---

(१) ननु राधे दैवादिकत्वेन श्यनः सिद्धत्वादतएवत्युक्तमतत्त्वेहेतुमाह-राधोऽकर्मकादेवेत्युक्तेरिति*। तदीयवाक्यार्थमाह-कृष्णेति*। अत्र कृष्णसम्बन्धिप्रश्नविषयशुभाशुभपर्यालोचनमिति र्थाल्लभ्यते।

ऋणसम्प्रदानकं शुभाशुभपर्यालोचनमर्थः ॥

प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता। (पा०सू०१।४।४०) व्याख्यानात्प्रत्येकंनिमि-त्तत्वमित्याशयेनोदाहरति–गां प्रतिशृणोतीति। अनयोः प्रव-र्त्तनापूर्वकाभ्युपगमोऽर्थः। तत्र विप्रस्य कर्तृप्रयोजकत्वेन हेतुत्वे प्राप्ते वचनम्(१)।

अनुप्रति (पा०सू०१।४।४१)। अनुप्रतीतिभिन्नं पदं लुप्तपञ्चम्य-न्तम्। 'गृण' इति श्नान्तानुकरणात् षष्ठी। शंसितुः शंसनविषयहर्षा-नुकूलव्यापारलक्षणं प्रोत्साहनमनयोरर्थः(२)। पूर्वव्यापारस्येति। शंसनस्येत्यर्थः। प्रोत्साहयतीति। ओथामेत्यादिशब्दैरिति शेषः। होत्रे शंसितायेति। करणस्यैव सम्प्रदानत्वेन भानमत्र। शंसितृव्यापारश्च शंसनरूपः एवेति बोद्धव्यम्।

तादर्थ्ये। तादर्थ्यमुपकार्योपकारकभावरूपः सम्बन्धः। यदा तादर्थ्यस्य सम्बन्धत्वेन भानं तदा षष्ठी–'गुरोरिदं गुर्वर्थम्' इत्यत्र

---

अकर्मकोऽयन्धातुरिति तु न शङ्क्यम्। तस्य फलस्य प्रकृतधात्वर्थप्रधा-नीभूतव्यापारजन्यत्वाभावात्।

*व्याख्यानादिति*। द्विवचननिर्देशादर्शनमूलकव्याख्यानादित्यर्थः। *अनयोः*। तत्तदुपसर्गपूर्वकयोः। अत्र विप्रपदाच्चतुर्थ्या आश्रयत्वम-र्थः। तस्य प्रवर्त्तनायामन्वयः। वस्तुतस्तु सम्प्रदानत्वशक्तिमत्त्वेनैवान्वय इति। "अनुप्रति" इतिसूत्रेऽनुप्रतिभ्यामिति समासः। यद्वा प्रकृतिवदित्य-तिदेशेन लुक्, तदाह–*लुप्तपञ्चम्यन्तामिति*। प्रत्येकमिति शेषः। अत एव प्रत्येकन्निमित्तत्वम्। तस्मादाह–*अनयोरिति*।

*शंसनस्येत्यर्थ इति*। उपस्थितत्वात्। करणत्वस्य व्यापारानियत-त्वसंरक्षणायाह–*व्यापारश्चेति*।

*तादर्थ्ये*। तस्मै इदन्तदर्थम्। तस्य भावस्तादर्थ्यम्। अस्याश्चतु-र्थ्या उपपदविभक्तित्वेनयं विशेषणादेव। उपकारकत्वमत्र न साक्षादेव। किन्तु परम्परयापि। एवं मुक्तये 'हरिम्भजति' इत्यत्रेव, 'ब्राह्म-णाय पायसम्' इतिवद्धीत्यत्रापि चतुर्थी सिध्यति। 'ब्राह्मणाय वेद' इत्यत्रापि तादर्थ्य एव। क्लृपीत्यत्र इका निर्देश इति भ्रमवारणायाह–

---

(१) हेतुत्वे प्राप्ते वचनमिति*। हेतुतृतीयाबाधनार्थ मिदमिति भावः।

(२) *अनयोरर्थ इति*। अनुपूर्वकप्रतिपूर्वकगृणात्योरर्थ इत्यर्थः। अत्र धातोरेकत्वेऽपि विशेषणी-भूतोपसर्गभेदप्रयुक्तविशिष्टभेदमादाय द्विवचनं बोध्यम्।

भाष्ये(१) स्पष्टम् । क्लृपीति सप्तमी । अर्थग्रहणञ्चात्र । सम्प-त्तिः उत्पत्तिः । क्लृप्त्यर्थकधातुयोगे उत्पद्यमानेऽर्थे वर्तमानाच्चतु-र्थीत्यर्थः । हितयोगे । चात्सुखयोगे ऽपि ।

क्रियार्थोप (पा०सू०२।३।१४।) । क्रिया अर्थः फलं यस्य तत् क्रियार्थम् । तेन स्ववाचकं लक्ष्यते क्रियाफलकार्थवाचकमुपपदं यस्ये-त्यर्थः । सोऽर्थश्च प्रत्यासत्त्या क्रियारूप एव । स्थानिशब्दश्च प्रयुज्य-मानवाची वैयाकरणानां निकाये प्रसिद्धः । क्रियार्थक्रियोपपदत्वञ्च तुमुनादेरेवेत्याह–क्रियार्था क्रियेति । 'फलेभ्यो याति' इत्यादौ फलकर्मकाऽऽहरणफलकं यानमिति बोधः । यथा वाक्यार्थे वाक्यै-कदेशप्रयोगस्थले 'प्रविश पिण्डीम्' इत्यादौ तस्यैव पदस्य सम्पूर्ण-वाक्यार्थशक्तता तथाऽस्य समुदायस्याहरणघटितोक्ताऽर्थे शक्तिरे-च्छास्त्रबलात् । स्थानिन इत्युक्तेस्तत्प्रयोगे नेति बोद्ध्यम् । अयमे-वार्थाध्याहारः ।

---

*सप्तमीति* । *अर्थग्रहणमिति* । 'जायते' इत्यादियोगे चतुर्थीदर्शन-मूलकाद्याख्यानात् । न्यूनतां वारयति–*सुखयोगेपीति* । यथा "तस्मै हितम्" इतिनिर्देशाद्धितशब्दयोगे चतुर्थी तथा "चतुर्थी तदर्थार्थब" इति सूत्रेण चतुर्थ्यन्तस्य सुखशब्देन सह समासविधानाज्ज्ञापकात्सुखयो-गेऽपि भवतीति भावः ।

*क्रियार्थमिति* । नपुंसकत्वमत्रोपपदापेक्षया । अत एव लक्ष्य-तथा च यत्सिद्धन्तदाह–*क्रियाफलकार्थेति* । फलेभ्यो यातीत्यादे फलान्याहर्तुमित्याद्याकारकबोधश्च 'उच्चारितः शब्दः' इति नियमात्स-म्भवतीति शङ्कानिवारणायाह–*यथा वाक्यार्थ इति* । यत्तु प्रकृतसूत्र-बलादेतत्सूत्रोदाहरणघटितवाक्यात्पदानुपस्थितस्याप्याहरणस्य शाब्द-बोधविषयत्वं कल्प्यते । पदजन्यपदार्थोपस्थितिरेवशाब्दबोधहेतुरित्यस्यौ-त्सर्गिकत्वादत्र त्याग एवेति । तन्न । उक्तरीत्या भाष्याविरोधेन सत्या-

---

(१) नन्वत्र विनिगमनाविरहात् षष्ठ्यपवादत्वमेव कुतो नेत्यत आह–*अत्र भाष्ये इति* । चतुर्थी संप्रदाने इति सूत्रे चतुर्थीविधाने "तादर्थ्ये उपसंख्यानम्" इति वार्तिकव्याख्यानावसरे भाष्ये इत्थं तत्र हि–किमिदं तादर्थ्यं तदर्थस्य भावस्तादर्थ्यम् । तदर्थं पुनः किम् ? सर्वनाम्नोऽयं चतुर्थ्यन्तस्यार्थश-ब्देन समासः । कथं चात्र चतुर्थी ? अनेनैव" । यद्येवमितरेतराशयमित्युक्त्वा "आचार्यप्रवृत्तिर्ज्ञापयति भवति त्वर्थशब्देन प्रयोगे चतुर्थीति । यदयं चतुर्थी तदर्थेति चतुर्थ्यन्तस्यार्थशब्देन समासं शास्ति नखल्वप्यवश्यं चतुर्थ्यन्तस्यैवार्थशब्देन सह सामसो भवति । किं तर्हि षष्ठ्यन्तस्यापि भवति तद-गुरोरिदं गुर्वर्थमिति" इत्युक्तम् ।

'नमस्कुर्मो नृसिंहाय' इति। 'नमः स्वस्ति (पा०सू०२।३।१६) इत्यनेन तु न सिद्धिः,(१) 'उपपदविभक्तेः' इति न्यायेन द्वितीया-प्रसक्तेः। पिण्डीमित्यादावप्रयुज्यमानभक्षणक्रियाकर्मणि चतुर्थीवारणाय क्रियार्थोपपदस्येति॥

तुमर्थात् (पा०सू०२।३।१५)। 'तुम्' शब्देन तदर्थो लक्ष्यते, सोऽर्थो यस्येत्यर्थः। इति सूत्रेणेति। भावे ये प्रत्यया वक्ष्यन्ते ते क्रियार्थक्रियायामुपपदे भविष्यति स्युरिति तदर्थः। यागायेति। यागफलकं यानमित्यर्थः।

उपपदविभक्तेरिति। वाचनिकमेवेदं भाष्ये पठितमिति केचित्, क्रियाकारकयोः सम्बन्धोऽन्तरङ्गः, उपपदार्थेन तु यत्कि-

---

ञ्चिदामेवङ्कथनस्यानुपयोगात्। 'नमस्कुर्मः' इत्यत्र नमःशब्दद्योत्यार्थे नृसिंहशब्दार्थान्वये "नमःस्वस्ति" इतिसूत्रेणैव चतुर्थीसिद्धावस्य सूत्रस्यप्रवृत्तिवैयर्थ्यमत आह-*नमःस्वस्तीत्यनेनेति*। "कर्मणि स्थानिन" इत्येतावन्मात्रस्यैवोपादानमस्त्विवत आह-*पिण्डीमित्यादाविति*।

तुमशब्दस्तु तुमुन्प्रत्यय परस्स च न कस्यापि भाववचनस्यार्थ इत्यत आह-*तुम् शब्देनेति*। भाववचनग्रहणसामर्थ्यात्सूत्रविशेषस्य लाभे सिद्धे स्पष्टप्रतिपत्तये तस्य सूत्रस्यार्थमाह-*भाव य इति*। 'यागाय याति' इत्यादौ फलप्रयोजकत्वरूपसम्बन्धो विभक्त्यर्थः। तादर्थ्ये चतुर्थीत्यनेन तु नैतत्सूत्रोदाहरणविषये चतुर्थीसिद्धिः। घञादिना तादर्थ्यस्योक्तत्वेनोक्तार्थानामप्रयोग इतिन्यायेन चतुर्थ्या अप्राप्तेः। एवञ्च प्रातिपदिकार्थेतिसूत्रप्राप्तप्रथमाबाधनार्थमिदं सूत्रम्। 'द्विषां विघाताय विधातुमिच्छत' इत्यादिस्थले तु तादर्थ्य एव चतुर्थी। अन्यथा तुमुनन्तस्य प्रयोगात्स्थानिन इत्युक्तत्वाच्च चतुर्थी न स्यात्। न च "उक्तार्थानाम्" इति न्यायात्तादर्थ्यचतुर्थ्यपि कथमिति शङ्क्यम्। विधानक्रियातादर्थ्यस्ये स्थानिष्ठस्योक्तत्वेऽपि विधानक्रियानिष्ठं यद्विधानतादर्थ्यन्तस्यानुक्तत्वात्।

*वाचनिकमेवेदमिति*। अत एव "तत्र च दीयते" इत्यत्र "यस्य च भावेन" इतिसूत्रविहितसप्तम्यपेक्षयाऽधिकरणसप्तम्या बलवत्त्वङ्कैयटोक्तं सङ्गच्छते। *के चित्*। भाष्यतत्त्वविदः। "अन्तरान्तरेण" इति सूत्रस्थकैयटोक्तन्दूषयितुन्तन्मतमाह-*क्रियाकारकयोरिति*। *अन्तरङ्ग इति*। तयोः परस्पराकाङ्क्षाया उत्थितत्वात्। यथा प्रकृते कृधात्वर्थः

---

(१) न सिद्धिरित्यत्र हेतुमाह-उपपदेति*। द्वितीयापत्त्या तदसिध्या तद्बाधनाय प्रकृतसूत्रोदाहरणमावश्यकमिति भावः।

चित् क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्ता विभक्तिर्ब-हिरङ्गेति "अन्तराऽन्तरेण" (पा०सू०२।३।४) इति सूत्रे कैयटः। अत्राहुः। एवं सति 'नमस्यति देवान्' इत्यादौ नमःपदार्थे क्रिया-कारकभावेनैवान्वये परत्वाच्चतुर्थीमाशङ्क्यानेन वारणस्य भाष्योक्त-स्यासङ्गतिः। एतेन प्रधानत्वात् क्रियायास्तत्सम्बन्धनिमित्तकत्वेन बलवत्त्वमित्यपि परास्तम्।

कारकविभक्तित्वं च क्रियाजनकत्वसमाधिकरणकर्त्रादिषट्का-न्यतमार्थत्वम्। अन्याभिहितानुद्भूतकर्त्राद्यन्यतमार्थत्वं प्रथमाया अपि। 'अभिहिते प्रथमा' इति वार्तिकस्वारस्यात्। अतः प्रथमापि

---

स्वनिष्ठापकृष्टत्वबोधानुकूलो व्यापारस्तस्यैव नमःशब्दो द्योतकतयोप-कारकः। तद्धटकबोधश्च किन्निष्ठ इत्याकाङ्क्षा। देवाश्च किम्फलाश्रया इत्याकाङ्क्षात्र द्रष्टव्या। यदि च प्रकृते नमःशब्दो वाचकः स्यात्तदा नमः-शब्दार्थोऽत्र तादृशबोधमात्रम्। व्यापारश्च कृधात्वर्थस्तयोः शीघ्रं पर-स्पराकाङ्क्षयाऽन्वयोत्तरन्देवानामप्रधानीभूतव्यापारप्रयोज्यकृधात्वर्थफ-लाश्रयत्वविरहात्कर्मत्वन्न स्यात्। नमःपदस्य द्योतकत्वे तु धात्वर्थव्या-पारप्रयोज्यफलाश्रयत्वात्तन्निर्वाहः। एवञ्च क्रियाकारकयोः साक्षात्सम्ब-न्धो जन्यजनकभावरूपो नियताकाङ्क्षाप्रयोजकः। नमःपदेन सम्बन्धश्च स्वद्योत्यव्यापारप्रयोज्यबोधाश्रयत्वरूप इति बहिरङ्ग इत्येवङ्कल्पनीयम्। जन्यस्य जनकाकाङ्क्षाया उत्थितत्वादन्तरङ्गः। एवमेव सर्वत्रोपपदार्थे सहान्वयस्य बहिरङ्गत्वमुपपादनीयमिति तेषामाशयः। तदेतद्दूषयति-*अत्राहुरित्यादिना*।

*क्रियाकारकभावेनैवेति*। 'नमस्यति' इत्यत्र करणरूपेऽर्थे "नमोव-रिवश्चित्रङः क्यच्" इतिसूत्रेण क्यचो विधानात्तत्र क्यजन्तार्थान्वयेनैव नमःशब्दार्थान्वयो वाच्यः। एवं सत्युभयविभक्त्योः समत्वादन्तरङ्गन्याय-स्येह सम्भवाभावः। *एतेन*। प्रकृते उभयोरपि समत्वेन।

"सहयुक्तेऽप्रधाने" इतिसूत्रे 'अप्रधानग्रहणं शक्यमकर्तुम्। न च पुत्रेण सहागतः पितेत्यत्र पितृशब्दादपि तृतीयापत्तिः। उपपदविभक्तेरि-तिन्यायेन प्रथमा भविष्यति' इत्युक्तन्तत्र प्रथमाया येनाभिप्रायेण कारक-विभक्तित्वमुक्तन्तदाविष्कर्त्तुमाह-*कारकविभक्तित्वमिति*। कर्त्रादिष-ट्कान्यतमेत्यत्र कर्त्रादिपदं कर्तृत्वादिशक्तिपरम्। अतस्तत्सामानाधिक-रण्योपपत्तिः अभिहितकर्त्तृत्वादौ प्रथमास्वीकारेऽपि कर्तृत्वादेर्वारक्ष

कारकविभक्तिरिति बोद्धव्यम् । द्वावित्यादौ द्वित्वादेरिव 'देवदत्तः पचति' इत्यादौ उभाभ्यामेकस्यैव कर्तृत्वस्य बोध इति न तद्बोधावृत्तिः।

नमस्करोति देवानिति । उत्कृष्टनिष्ठो यः स्वनिष्ठापकृष्टत्वबोधः तदनुकूलव्यापाररूपनमस्कारफलस्य तादृशबोधस्याश्रयतया देवानां कर्मत्वम् । स्वशब्देन प्रयोक्ता। नमःशब्दस्य 'साक्षात्प्रभृतिषु' 'ऊर्यादिषु' वा पाठेन गतित्वात्सत्त्वम् । एकस्या एवोपपदविभक्तित्वे कारकविभक्तित्वे चायं न्याय इति तु न युक्तम् । नमस्यति देवानित्यत्रैतत्परिभाषोपन्यासपरभाष्यविरोधात् । 'सहयुक्ते' (पा० सू०२।३।१९) इत्यादिसूत्रस्थभाष्यविरोधाच्च ।

अलमितीति । अलमित्यनेन पर्याप्त्यर्थानां ग्रहणं व्याख्याना-

---

शाब्दबोधे भानापत्तिं वारयति-*द्वावित्यादाविति* ।

न च स्वनिष्ठापकृष्टत्वबोधानुकूलव्यापारस्य नमःशब्दार्थत्वे देवोद्देशेन यत्र नमस्कारः कृतस्तत्र तादृशफलबोधस्य शूद्रादावपि सत्त्वाच्छूद्रं नमस्करोतीत्यपि प्रयोगः स्यादिति वाच्यम् । फलतावच्छेदकसम्बन्धेन फलाश्रयत्वस्यैव द्वितीयाप्रयोजकत्वात् । प्रकृते च स्वाविषयापकर्षावधित्वसामानाधिकरण्यविशिष्टसमवायस्य फलतावच्छेदकसम्बन्धत्वमनेन सम्बन्धेन फलाश्रयत्वमुद्देश्यातिरिक्त इति । अयमर्थो 'नमस्करोति इत्यत्र धातोरेव । नमःशब्दस्तु द्योतकस्तदभिप्रायेणोक्तम्-*नमस्कारफलस्येति* । 'विष्णवे नमः' इत्यादौ तु नमःशब्दो निपातः । स चोक्तार्थे निरुक्तसमवायविशिष्टतादृशबोधानुकूलव्यापारे शक्त इत्यतस्तत्रापि न 'शूद्राय नमः' इत्याकारको द्विजस्य कर्तृत्वे प्रयोगः । 'नमस्करोति' इत्यत्र गतित्वं साक्षात्प्रभृतिषु पाठेनेति न युक्तम् । "साक्षात्प्रभृतिषु च्व्यर्थवचनङ्कर्त्तव्यम्" इति वार्त्तिकविरोधादत आह-*ऊर्यादिषु वेति* । प्राचीनोक्तङ्खण्डयति-*एकस्या एवेति* । यथा "मासे दीयते" इत्यत्राधिकरणसप्तमी "यस्य च भावेन" इतिसप्तम्यपेक्षया बलवत्त्वात्प्रवर्त्तते इति कैयटेनोक्तम् ।

*पर्याप्त्यर्थानामिति* । अत्र पर्याप्तिः सामर्थ्यम् । तदभिप्रायेण मूले 'दैत्येभ्यो हरिरलम्प्रभुः समर्थ' इत्युक्तम् । *व्याख्यानादिति* । भूषणवारणार्थकालंशब्दस्य 'कन्यामलङ्करोति' 'हरिदिने भोजनमलङ्करोति' इत्यादौ क्रियावाचकधातुसमभिव्याहारे प्रयोगात्तत्रोपपदविभक्तेरिति न्यायेन द्वितीयैवेति प्राचीनकृतव्याख्यानादित्यर्थः । अत्र "तस्मै प्रभवति सन्तापादिभ्यः" इतिनिर्देशादर्थविवक्षा अलंशब्दविषयेऽवश्यङ्कार्यैव

दित्यर्थः । तत्र ज्ञापकमप्याह—तस्मैप्रेति । षष्ठ्या अपि साधुत्वे बी-जं—स एषामिति ।

आशीर्विवक्षायामिति । आशीर्विषयत्वविवक्षायामित्यर्थः । स्वस्त्यर्थः कुशलं मङ्गलं वा । स्वस्तियोगे चतुर्थ्या अवकाशः—स्वस्ति जाल्मायास्तीति तत्त्वकथनम् । कुशलार्थैराशिषीत्यस्यावकाशः स्वस्तिभिन्नाः कुशलार्थाः स्वस्तिशब्दो ऽनव्ययमपि ।

'प्रतिगृह्णामि ते धेनुं कुटुम्बार्थे विशेषतः ।
स्वस्तिर्भवतु मे नित्यं सुखश्चानुत्तमं तथा'

इति भविष्योत्तरे प्रयोगात् ॥

मन्यकर्मणि (पा० सू०२।३।१७) तिरस्कार इति । अनादरो नाऽऽदराभावमात्रम् , अपि तु नञो ऽधर्मादाविव प्रतिपक्षवाचित्वात्तिरस्कार इति भावः । तत्रानादर इति मन्यकर्मविशेषणं तद्युक्तं यत्कर्मेत्यर्थः । तेन युष्मच्छब्दाच्चतुर्थी न । तिरस्कारश्च व्याख्यानादपकृष्टनिरूपितोपमेयत्वस्याऽभावरूप उपमेयेऽत्र गृह्यते न

---

सोऽर्थो भूषणाद्यर्थकालंशब्दप्रयोगे न प्रतीयत इति न तत्र चतुर्थी किन्तु तद्भिन्नेतिव्याख्यानात् कल्प्यते । "अलमितिपर्याप्त्यर्थग्रहणङ्कर्त्तव्यम्' 'इहापि यथा स्यात् अलम्मल्लो मल्लाय । प्रभुर्मल्लो मल्लाय" इतिभाष्यमप्यत्र मानम् । अत एवालं श्रमेणेत्यत्र न भवति । यथा पर्याप्त्यर्थकशब्दयोगे "तस्मै प्रभवति" इतिनिर्देशाच्चतुर्थी तथा तादृशे विषये स एषाम्" इतिनिर्देशात् षष्ठ्यपि भवतीति मूले उक्तम् ।

*आशीर्विषयत्वेति* । स्वस्त्यर्थस्याशीर्विषयत्वविवक्षायामित्यर्थः । यदुक्तम्मूले परामपीति तच्च परस्परविषयपरिहारेण सम्भवतीत्याशयेन तथा दर्शयति—*स्वस्तियोग इत्यादिना* । स्वस्तिशब्दार्थश्च मङ्गलम् । यथा 'स्वस्ति गोभ्यो भूयात्' इत्यादौ । स्वस्त्यर्थस्याशीर्विषयत्वमेवेति तु न नियमः । अत एव 'स्वस्ति वृषलाय' इत्यत्र तत्त्वकथनेऽपि चतुर्थी भवति । सूत्रे पूर्वोत्तरसाहचर्यात्स्वस्तिशब्दोऽव्ययसंज्ञक एव गृह्यते तदेतदाह—*स्वस्तिशब्द इति* ।

"मन्यकर्मणि" इतिसूत्रव्याख्यानवेलायां यदुक्तम्मूले तिरस्कार इति तल्लाभोपायमाह—*अनादर इति* । *व्याख्यानादिति* । "तिरस्कारग्रहणङ्कर्त्तव्यम्" इतिवार्त्तिकमूलकात् । तिरस्कारश्चापकृष्टनिरूपितोपमेयत्वाभावो यत्र प्रतिपाद्यते तत्र स्पष्टम्प्रतीयते । अपकृष्टलाऽऽद्यप्रति

ल्पकृष्टसादृश्यरूपः । तत्प्रतीतिश्च नञ्समभिव्याहारे एव । तृणतु-ल्यमपि न मन्ये इत्यर्थः । 'तृणाय मत्वा रघुनन्दनोऽपि' इत्यादौ न-ञ्व्याहारः तदाह—न त्वां तृणमिति । कर्मात्र चतुर्थ्यर्थः । ध्यनेति । न तु यक्ता, व्याख्यानादिति भावः । श्यंस्तूपलक्षणम् । तेन लिडादावपि भवति । तत् ध्वनयन्नाह—तानादिकयोगे नेति । नौकाकेति । भाष्ये "येषु प्राणिषु नेष्यते ते नावादयो भविष्य-न्ति' इति । येष्विति बहुवचनेन वृत्त्युदाहरणबलेन चैष्वेवानिष्टनि-र्णय इति भावः ॥

गत्यर्थकर्म (पा०सू०२।३।१२) । कर्मात्रापि चतुर्थ्यर्थः । गत्य-र्थेति किम् ? ओदनं पचति । कर्मणीति किम् ? अश्वेन गच्छति । चेष्टायां किमिति । धात्वर्थस्य क्रियारूपत्वात् प्रश्नः । शरीरक्रि-

---

ल्पदने यत्र तात्पर्यन्तत्र न्यूनगुणेषु सादृश्यप्रतिपादनस्य लोकप्रसिद्ध-त्वाद्यद्यपि तिरस्कारस्तथापि सूत्रे कुत्सित इत्येव वक्तव्येऽनादरे इत्युपा-दानादतिशयविशिष्टानादरस्य यत्र प्रतीतिस्तत्रैव सूत्रप्रवृत्तिरित्यभिप्रायः। दृशानादरप्रतीतिश्च न त्वान्तृणमित्यादौ स्फुटैव । 'न त्वान्तृणम्मन्ये तृणाय वा' इत्यत्रोभयोरपि विभक्त्योः कर्मत्वशक्तिविशिष्ट एव शक्तिः । *न तु यका व्याख्यानादितीति* । अनभिहिताधिकारस्वारस्यमूलका-व्याख्यानादित्यर्थः । मूलकारस्य न्यूनताम्परिहरति—*श्यन्तूपलक्षणमि-ति* । दैवादिकस्य धातोर्ग्रहणमित्यर्थोपलक्षणमित्यर्थः । *लिडादाव-पीति* । यथा कामाधिक्यादशक्तम्प्रति 'न त्वां तृणाय मने इत्यादौ' इति स्त्रीणां वाक्ये तासाङ्कामाधिक्यञ्च ।

अहारो द्विगुणः स्त्रीणाम्बुद्धिस्तासाञ्चतुर्गुणा ।
षड्गुणो व्यवहारश्च कामश्चाष्टगुणः स्मृतः ॥

इत्यत्र प्रसिद्धम् । नौकाकान्नशुकशृगालवर्जेष्विति मूलकारोक्त्या परिगणनमिदमिति प्रतीयते । तच्च न युक्तम् । भाष्येऽनावादिष्विति वक्ष्यामि । 'न त्वान्नावंमन्ये' । 'न त्वामन्नम्मन्ये' इत्युक्त्वा येषु प्राणिषु नेष्यते ते नावादयो भविष्यन्ति' इतिकथनात् । यदि भाष्यीयमुदाहरण-मत्र मूलं तदा शृगालशब्दोपादानमधिकमिति तु न शङ्क्यम् । भाष्योदाहर-णेषु शृगालशब्दानुपादानेऽपि तत्रत्यबहुवचनात् वृत्त्यादिप्रामाण्याच्चैव-मुपादानात् । तदेतदाह—*नौकाकेति ।

गतेरिति न वाच्यम् गतेः कारकस्येत्येव सिद्धमित्याशयेनाह—*कर्मणीति किमितीति* । *शारीरेति* । परिस्पन्दादिधात्वर्थभूता

याया एव ग्रहणमित्युत्तरम् । पन्थानामिति । अध्वशब्दो ऽर्थपरो व्याख्यानादिति भावः । अधिष्ठित इति । शब्दप्रयोगसमकालिकगन्तृव्यापारजन्यफलाश्रय इत्यर्थः । अध्वपदेन गन्तृव्याप्तो ऽध्व उच्यते, तेन गन्तृयुक्तस्त्रियां 'स्त्रियं गच्छति' इत्यादौ न । स्पष्टञ्चेदं भाष्ये । उत्पथादिति । उत्पथं सन्त्यज्येत्यर्थः । इष्यत इति । न त्वाक्रान्त इत्यर्थः । उत्पथेनेति । गन्तुमशक्त इति शेषः ।

इति चतुर्थी ॥

---

इत्यर्थः । *अर्थपर इति* । "कर्मणि" इत्यनेन सामानाधिकरण्यात् कर्मसंज्ञा हि शास्त्रेणार्थस्यैव विधीयते । *व्याख्यानादिति* । "अध्वन्यर्थग्रहणम्" इतिवार्त्तिकमूलकात् । *समकालिकेति* । एतच्च फलेऽन्वेति । "आस्थितप्रतिषेधो वक्तव्य" इतिवार्त्तिकसत्त्वमस्मिन्व्याख्याने मूलम् । ननु जनै र्यदा यत्र गम्यते स एवाध्वा लोकप्रसिद्ध इति स्त्रियङ्गच्छतीत्यत्रानध्वनीति प्रतिषेधो न प्राप्नोतीत्यत आह-*अध्वपदेनेति* *स्पष्टञ्चेति* । आस्थितप्रतिषेध इत्यादिनेत्यादिः । उत्पथादिति ल्यब्लोपे पञ्चमीत्याशयेनाह—*उत्पथं सन्त्यज्य इति* । इष्यत इत्येतद्मूले कथितं तल्लब्धमर्थं स्पष्टप्रतिपत्तये आह-*न त्वेति* । उत्पथेनेति करणे तृतीया गच्छतीत्येतन्निरूपिता चेत्कर्मकरणयोरैक्ये पथः कर्मत्वानुपपत्तिः । यदि पथः शब्दार्थ उत्पथातिरिक्तस्तदोत्पथस्य करणत्वानुपपत्तिरित्येतच्छङ्कानुत्थानायाह-*गन्तुमशक्त इति शेष इति ।

अत्रेदमवधेयम् । गत्यर्थकर्मणि चतुर्थी वेतिमन्यकर्मण्यनादर इत्यस्यानन्तरङ्गत्यर्थानाञ्चेष्टायामनध्वनीति वा कुतो न कृतमिति । यत्तु द्वितीयाग्रहणङ्कर्मणि प्राप्ता या षष्ठी ग्रामङ्गन्तेत्यत्र तद्बाधनार्थमिति । तन्न । सन्दर्शनादिक्रियया गत्यर्थक्रियायाः कृत्रिमकर्मत्वात्कर्मणा यमभिप्रैतीति ग्रामस्य सम्प्रदानत्वेन चतुर्थ्या गत्यर्थकर्मत्वेन द्वितीयायाश्च सिद्धिमाश्रित्यैतस्य प्रत्याख्यानपरभाष्यप्रामाण्येन भाष्यमते षष्ठीस्वीकारवत्सूत्रकारमतेऽपि कृदन्तेन योगे षष्ठ्युत्पत्ताविष्टापत्तेः स्वीकारात् । न च सूत्रारम्भे उभाभ्यामपि विभक्तिभ्याङ्कर्मत्वशक्तिमत्त्वेनैवार्थस्य शाब्दबोधे भानं प्रत्याख्यानपक्षे तु कर्मत्वसम्प्रदानत्वाभ्यान्तत्तच्छाब्दबोधे भानं स्वीकार्यमिति वाच्यार्थभेदात्कथमेतत्प्रत्याख्यानमिति वाच्यम् । अर्थभेदेऽपीष्टापत्तिमाश्रित्यैव भगवता प्रत्याख्यानात् यथोत्तरम्मुनीनाम्प्रामाण्यात् ।

- न च 'ग्रामाय गच्छति' इत्यत्र गम्धातोरुत्तरदेशसंयोगानुकूलव्यापारमात्रमर्थश्चेन्न तादृशक्रियायाः कर्मत्वमिति तादृशव्यापारविषयकस-

ध्रुवमपायेपा (पा०सू०१।४।२४)। ध्रुवं स्थिरम्। अपायो विभागजनको व्यापारः, तदनाश्रयमिति यावत्। विभागश्च न वास्तवसम्बन्धपूर्वको वास्तव एव, किं तु बुद्धिपरिकल्पितसम्बन्धपूर्वो बुद्धिकाल्पितोऽपि। 'माथुराः पाटलिपुत्रकेभ्य आढ्यतराः' इत्यादौ बुद्धिकल्पितापायाश्रयेणैव भाष्ये पञ्चमीसाधनात्। कर्तृवारणाय ध्रुवमिति। अन्यथा कर्तृसंज्ञायाऽयमपवादः स्यात्। अपायविषये यत्कारकं तद्रूपक्रियाजनकं तदपादानमित्यर्थसम्भवात्। कर्तृसंज्ञा तु स्वत्यादियोगे चरितार्था। हरिरप्याह—

अपाये यदुदासीनश्चलं वा यदि वाऽचलम्।
ध्रुवमेव तदावेशात्तदपादानमुच्यते॥ इति॥

---

दर्शने गम्धातोर्धातोरनेकार्थत्वाद्वृत्तिः स्वीकार्या। एवञ्चोत्तरदेशसंयोगरूफलस्य प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यत्वाभावेन कथङ्ग्रामस्य कर्मत्व प्राप्तिरिति वाच्यम्। अर्थभेदेऽपि प्रत्याख्याने इष्टापत्तिवदेकस्मिन्नेव धातोर्यदा वृत्तिस्तदा ग्रामं ग्रामाय वा गच्छतीत्यस्यानभिधान एवेष्टापत्तेः स्वीकारात्। न चैवमर्थभेदेऽपि चेदत्र द्वितीयाचतुर्थ्योः स्वीकारस्तदा 'घटङ्करोति' इत्यत्र कृधातोरप्यर्थभेदमाश्रित्य घटङ्घटाय वा करोतीतिप्रयोगापात्तिरिति वाच्यम्। लक्ष्यानुरोधेनैतादृशे विषये तादृशार्थभेदेन विवक्षाया अस्वीकार इति स्वीकारात्। तदुक्तं हरिणा—

भेदाभेदविवक्षा च स्वभावेन व्यवस्थिता इति॥

इति चतुर्थीविवरणम्।

---

*ध्रुवमपाये*। ध्रुधातोः स्थैर्यार्थकात्कुटादेः पचाद्यचि निष्पन्नो ध्रुवशब्दः स्थैर्यार्थक इत्यभिप्रायेणाह—*ध्रुवं स्थिरमिति*। *अपायो विभाग इत्यादि*। न च नाशस्यापायपदार्थत्वं लोके प्रसिद्धमिति कथमेतद्व्याख्यानमिति वाच्यम्। विभागजनकव्यापारस्य स्वजनकविभागजनकत्वसम्बन्धेनोत्तरदेशसंयोगनाशसम्बन्धितयाऽपायपदस्य तस्मिन्व्यापारे लक्षणास्वीकारात्। पतनमात्रन्तु नापायः। वृक्षमजहत्यपि भूमिं स्पृशति पर्णे, भूमिस्पततीति प्रयोगात्। तत्र विशेषमाह—*विभागेति*।

स्पष्टञ्चेदं कैयटादौ । भाष्यानुसारिणस्तु एवं हि 'त्रस्तादश्वात्पतित' 'धावतः पतति' इत्यादौ ध्रुवत्वाभावादपादानत्वं न स्यादित्याशङ्क्य "अध्रौव्यस्याविवक्षितत्वमत्र, यतः सतोऽप्यविवक्षा भवति" इति समाहितं भाष्ये तदसङ्गतं स्यात् । त्वदुक्ताध्रुवत्वस्य पतधात्वर्थव्यापाराश्रयत्वस्यात्रासत्त्वेन सतोऽध्रौव्यस्याविवक्षेत्यस्यासङ्गतेः । सिद्धान्ते ऽपि त्वदुक्तध्रुवपदार्थकथनमेवोचितमिति तदसङ्गतिश्च, लोकसिद्धातिरिक्तार्थे ध्रुवपदस्य शक्तिकल्पने गौरवञ्च । अतदावेशादि-

---

स्वसिद्धान्तमाह-*भाष्यानुसारिणस्त्विति* । *त्वदुक्ताध्रुवत्वस्य* तद्धात्वर्थव्यापारानाश्रयत्वस्वरूपस्य । एवं हि तत्र भाष्ये उक्तम् । 'गतियुक्तेष्वपादानसंज्ञा नोपपद्यतेऽध्रुवत्वात् रथात्प्रवीतात्पतितः । अश्वात्त्रस्तात्पतितः । सार्थाद्गच्छतो हीन' इति । अत्र त्रासो मनसो धर्मः । न हि तेनाश्वस्य ध्रुवत्वहानिरितिशङ्कामपनेतुमाह कैयटः । 'त्रासपूर्वके परिस्पन्देऽनेकार्थत्वाद्धातूनान्त्रासो वर्त्तते त्रस्तश्चाश्वः पातस्य निमित्तमिति पूर्वमश्वस्य त्रस्तत्वेन सम्बन्धः । पश्चात्पतित इत्यनेन' इति ध्रुवत्वमश्वस्य नास्ति । तत्समाधानम्भाष्ये न वाऽध्रौव्यस्याविवक्षितत्वात् । न वा एष दोषः । किङ्कारणमध्रौव्यस्याविवक्षितत्वात् । नात्राध्रौव्यं विवक्षितम् । किन्तर्हि ध्रौव्यम्' । अत्र कैयटः । ध्रुवमेकरूपम् । तच्च ध्रौव्यमपायविषयमाश्रीयते न त्वनवच्छिन्नम् ।

*अपाय इति* । प्रत्यासत्त्येति भावः । *अपायेति* । विभागसंयोगानुकूलो गतिविशेषो ह्यपायः । स च प्रधान एव गृह्यते स चात्र एतत्युपात्तः । न च तदाश्रयोऽश्वस्तथात्वे कर्तृत्वापत्तेः । *न त्वनवच्छिन्नमिति* । अनिरूपितमित्यर्थः । ततो भाष्ये शङ्का 'कथं सा नामाविवक्षा स्यात् । सतोऽप्यविवक्षा भवति । तद्यथा । अलोमिका एडका । अनुदरा कन्यकेति । असतश्च विवक्षा भवति । समुद्रः कुण्डिका, विन्ध्यो वर्द्धितकम्' इति एतद्भाष्ये असतश्च विवक्षेतिनिदर्शनार्थमुपात्तम् । यथाऽसतो विवक्षा भवति । एवं सतोऽप्यविवक्षा भवतीति । यदि प्रकृतभाष्यङ्कैयटरीत्या व्याख्यायते तदा सिद्धान्तभाष्याक्षराणामक्षरस्वारस्यन्नोपपद्यते । प्रधानव्यापाराश्रयत्वरूपस्य त्वदभिमतस्याध्रौव्यस्यात्र कदाप्यसत्त्वात् । तस्मान्मूलोक्तरीत्या व्याख्यानमेवोचितम् ।

*लोकसिद्धातिरिक्तेति* । लोकसिद्धः लोकप्रसिद्धो यो ध्रुवपदार्थो निश्चलत्वरूपस्तदतिरिक्त इत्यर्थः । *शक्तिरिति* । न चोक्तरीत्या लक्षणैव

तस्य हरिकारिकायां तदावेशाविवक्षणादित्यर्थः । तस्मादपायं गति-
विशेषे सति यद्ध्रुवमवधिभावोपगमाश्रयत्वे सति तदतिरिक्तस्याव-
धित्वोपयोगिव्यापारस्यानाश्रयं तदपादानमिति सूत्रार्थः । त्रासादे-
रवधित्वोपयोगित्वाश्रयणेन शङ्का, 'वृक्षात्पर्णम्' इत्यादौ तस्यासत्त्वान्न
तदुपयोगित्वं तस्य, प्रकृते विद्यमानस्यापि तस्याविवक्षितत्वान्न तदुप-
योगित्वं तस्य' इत्युत्तरम् । ध्रुवमपाये इति तु 'वृक्षस्य पर्णं पत-
ति' इत्यादौ । वस्तुतस्तस्य पर्णद्वारा पातजनकत्वात्प्राप्तापादानत्व-
वारणाय । एवञ्चापाये इति कारके इत्यस्य क्रियाजनकत्वेन विवक्षि-
ते इत्यर्थे तात्पर्यग्राहकं बोद्धव्यम् । ध्रुवग्रहणन्तु कारकान्तराणामिवा-
पादानस्यावधिभावोपगमातिरिक्तव्यापाराभावबोधनायेत्याहुः ।

---

लक्ष्यत इति वाच्यम् । प्रसिद्धशक्यार्थमादाय शाब्दबोधसम्भवे लक्षणा-
या अनुचितत्वात् सूत्रार्थमाह-*तस्मादित्यादि* । स्वरीत्या शङ्का-
समाधानभाष्यं योजयति-*त्रासादेरिति* । आदिना धावनपरिग्रहः। ननु
यदि कैयटोक्तरीत्या "ध्रुवमपाय" इत्यस्याऽर्थो वर्ण्यते तदा कर्तृवारणाय
"ध्रुवमपाय" इति चरितार्थम् । तन्मतेऽपाये गतिविशेषे यद्ध्रुवं तदना-
श्रय इत्यर्थाद् ध्रुवग्रहणाभावेऽपायात्मकक्रियाजनकमित्यर्थे कर्त्तरि सूत्र-
प्राप्तेरेव वाच्यतया कर्तृसंज्ञाया इयमपवादः स्यात् । परंत्वेवं ध्रुवग्रहणा-
भावे सूत्रार्थो वक्तुमशक्यः । ध्रुवग्रहणङ्किमर्थम् । ग्रामादागच्छति श-
कटेनेतिकरणेऽतिप्रसङ्गापादनपरभाष्यविरोधात् । न हि करणं विभाग-
जन्यसंयोगजनकक्रियात्मकापायजनकम् । किन्तु तादृशापायघटकविभा-
गजनकत्वेन करणस्य कारकत्वादपादानसंज्ञायाः प्राप्तिरिति भाष्यस्या-
भिप्रायो वर्णनीयः । एवञ्चोत्तरभाष्येण करणसंज्ञात्र बाधिका भविष्यती-
त्यनेन यथा परत्वात्करणसंज्ञाया बाध्यत्वन्दर्शितन्तथा 'ग्रामादायाति इत्य-
त्र ग्रामे चरितार्थम् 'अपादानसंज्ञां कर्तृसंज्ञा बाधिका भविष्यति' इति
च कर्तृवारणं ध्रुवग्रहणप्रयोजनमित्याशयेनाह-*ध्रुवमपाय इति त्विति* ।
इदं च प्रयोजनमपायपदस्य । एतदभावे ध्रुवङ्कारकमित्येवोक्तौ वृक्षस्य
पर्णम्पततीत्यत्र वृक्षस्य यथाऽपादानत्वप्राप्तिस्तथाह-*वस्तुत इत्यादि* ।
तेन वृक्षस्य क्रियायामेवान्वयो न तु पर्णे । तथा सति तस्य करकत्वाभाव-
प्रसम्भवः स्यात् । ध्रुवग्रहणप्रयोजनमाह-*ध्रुवग्रहणन्त्विति* । तथा च त-
दभावे पूर्वोक्तस्थले करणेऽतिप्रसङ्ग इति भावः । *अतिरिक्तव्यापाराभावे-
ति* । स च वृक्षस्य पर्णमित्यत्र वृक्षेऽपि नास्तीति भावः ।

अपादानत्वशक्तिश्च प्रकृतधात्वर्थविभागाश्रयत्वसमानाधिकरणेति अपादानसमभिव्याहारे विभागोऽपि धात्वर्थ इति बोध्यम्। एवञ्च 'वृक्षात्पतति' इत्यादौ तदपादानकविभागपूर्वकः संयोगः पर्णवृत्तिरिति बोधः। 'वृक्षाद् भूमिं पतति' इत्यादौ वृक्षापादानकविभागपूर्वकः संयोगानुकूलो व्यापार इति बोधः। 'परस्परस्मान्मेषावपसरतः' इत्यादौ मेषपदोपात्तयोरेव क्रियाश्रयत्वात्कर्तृत्वं परस्परपदोपात्तयोरेव विभागाश्रयत्वादपादानत्वम्। मेषपदोपात्ते तदविवक्षणात्, प्रयोगानुसारित्वाद्विवक्षायाः। विभागपूर्वकं पृष्ठतो गमनमपसरणम्। 'आत्मानमात्मना' इत्यादाविवान्तःकरणाद्युपाधिकृतभेदवत् शब्दरूपोपाधिकृतभेदाग्रहणे मानाभावात्। शब्दालिङ्गितार्थभानस्यैव सत्त्वाचेत्यन्यत्र विस्तरः।

यत्त्वपसरत इति सृधातुना गतिद्वयस्याप्युपादानादेकनिष्ठाङ्गतिं प्रति इतरस्यापादानत्वमविरुद्धमिति, तन्न। वस्तुतस्तन्निष्ठव्यापारयोर्भेदे ऽपि सृधातुना निवृत्तभेदस्यैवापायस्योपादानादुभयोरपि तत्क्रियाश्रयत्वेन परत्वात्कर्तृत्वापत्तेः। अत एवैकशेषसूत्रे भाष्ये उक्तं "न वै तिङन्तान्येकशेषारम्भं प्रयोजयन्ति क्रियाया एकत्वात्" इति। 'धनुषा विद्धति' इत्यत्र निःसरच्छरजन्यवधार्थत्वात् व्यधेरपादानत्वकरणत्वोभयप्राप्तौ परत्वात् करणत्वं बोध्यम्।

---

*वृक्षात्पततीत्यादाविति*। अत्र विभागजन्यः संयोगोऽर्थः पतेः। *वृक्षाद् भूमिम्पततीत्यादाविति*। अत्र विभागजन्यसंयोगानुकूलव्यापारः पतधात्वर्थः। ननु 'परस्परस्मान्मेषावपसरतः' इत्यत्र मेषपदोपात्तयोरेव परस्परशब्दार्थतया तयोरवधिभावोपगमातिरिक्तव्यापारानाश्रयत्वाभावेन कथमपादानत्वमत आह-*परस्परेति*। वाचकशब्दरूपोपाधिगतभेदस्य वाच्यार्थे आरोपेण तयोरप्यर्थयोर्भेदात्कर्तृत्वापादानत्वयोरुपपत्तिरिति भावः। *अन्यत्र*। उद्योते।

कैयटादिमतन्दूषयति-*यत्त्विति*। *अत एव*। निवृत्तभेदस्यैवोपादानादेव। ननु व्यधधात्वर्थेऽपि विभागस्य प्रवेशात्तद्योगे 'धनुषा विध्यति' इत्यत्राप्यपादानसंज्ञा प्राप्नोतीत्यत आह-*धनुषेति*। ननु त्यजधातोर्विभागानुकूलव्यापारार्थकत्वात्तद्योगेऽप्यपादानत्वं स्यादत आ

ग्रामादायातीति। आयाते र्विभागपूर्वकोत्तरदेशसंयोगानुकूलो व्यापारोऽर्थः। 'वृक्षंत्यजति' इत्यादौ व्यापारव्यधिकरणविभागस्यैव धात्वर्थत्वेन कर्मसंज्ञयाऽपादानत्वस्य बाधः। स्पन्देस्तु न विभागोऽर्थ इति वृक्षे स्पन्दत इत्येव। चलतेस्तु 'आसनाच्चालितः' इति प्रयोगाद्‌ उभयेव विभागार्थत्वम्। 'सार्थाद्धीयते' इत्यत्र सार्थस्य धात्वर्थप्रधानव्यापाराश्रयत्वेऽपि "अपादाने चाहीयरुहोः" (पा०सू०५।४।४५) इति ज्ञापकात्कर्मप्रत्ययान्तहीधातुप्रयोगे ऽपादानत्वम्। कर्मसंज्ञायाश्च कर्तृपदं स्वतन्त्रोपलक्षणमिति कर्माणि लकारः। सार्थेन त्यज्यते देवदत्त इत्यर्थः।

धावत इति। क्रियाविशिष्टस्याप्यश्वस्य प्रकृतधातूपात्तगत्यनावेशात्, धावनस्याविवक्षणाद्वा ध्रुवत्वं बोद्धव्यम्। जुगुप्सेत्यादि। जुगुप्सादीनां यद्विषयकत्वेन विवक्षा तदपादानम्। तस्यैव विषयस्य क्रियाजनकत्वरूपकारकत्वेनाविवक्षायां सम्बन्धित्वेन च विवक्षाय 'पापस्य जुगुप्सते' इति षष्ठी भवत्येव सत्यभिधाने। एवमुत्तरसूत्रेऽपि बोद्धव्यम्। एषां धातूनां स्वार्थपूर्वकबौद्धविश्लेषजनकनिवृत्तिलक्षणया सूत्रेणैव सिद्धेदं वार्त्तिकमुत्तरसूत्राणि च प्रत्याख्येयानीति स्पष्टं भाष्ये।

भयं भीस्त्राणन्त्रास्तदाह–भयार्थानामिति। हेतुतृतीयापवादोऽयम्। अरण्ये इति। भयाद्यर्थानां योगे कारकमपादानमित्यर्थेऽविशेषात्सर्वसंज्ञापवादः स्यादिति भावः।

पराजे (पा०सू०१।४।२६)। असोढो ग्लानिविषयः। एवञ्च

---

*वृक्षमिति*। स्पन्देर्विभागानुकूलव्यापारार्थत्वे तद्योगे प्राप्तामपादानसंज्ञां वारयति–*स्पन्देस्त्विति*। *कर्मप्रत्ययान्तेति*। अत एव देवदत्तः सार्थञ्जहातीत्यत्र नापादानम्। सार्थस्य ज्ञापकेनापादानत्वेपि कर्मत्वमुपपादयति—*कर्मसंज्ञायामिति*। धावत इत्यत्रोभयमतेऽप्यपादानत्वमुपपादयति—*क्रियाविष्टस्येति*।

भीत्रार्थेति सूत्रे भयहेतुरित्यस्योपादानादाह—*हेतुतृतीयेति*।

*असोढो ग्लानिविषय इति*। अत्रासोढपदार्थविशेषणभूता ग्ला-

पराजेरकर्मकत्वे उदाहरणत्वं तदाह–ग्लायतीत्यर्थ इति। अभिभवतीति। तिरस्कारानुकूलो व्यापारो धात्वर्थ इति भावः।

प्रवृत्तिविघात इति। भक्षणसंयोगादिजनकव्यापाराभावानुकूलो व्यापार इत्यर्थः। ईप्सित इति। वारणार्थधात्वर्थफलाश्रय इत्यर्थः। उदाहरणे च तद्धात्वर्थव्यापारजन्यसंयोगादिरूपफलाश्रयत्वात् यवानामपादानत्वम्। ईप्सित इत्यनेन प्रधानाप्रधानान्यतरव्यापाराश्रयमात्रस्याक्षेपः, कर्मलक्षणे तु तमब्ग्रहणात् प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयस्य ग्रहणमिति भावः।

अन्तर्धौ (पा०सू० १।४।२८)। अन्तर्द्धिरन्यकर्तृकस्वकर्मकदर्शनाभावानुकूलो व्यवहितदेशस्थितिरूपः, तद्घटकं यत्कर्तृकदर्शनाभावमिच्छति तदपादानमित्यर्थस्तत्फलितमाह–व्यवधाने सतीति। येनेत्यत्र "कर्तृकर्मणोः" (पा०सू० २।३।६५) इति षष्ठी न सौत्रत्वात्। 'आत्मनः' इति प्रत्यासत्तिलब्धम्। 'मातुर्निलीयते' इत्यादा-

---

निरसहनम्। किञ्चिद्विषयकदुरुद्धरत्वज्ञानमिति यावत्। असोढ इत्यत्र कर्मणि क्तः। कर्म चात्र ग्लानिविषय एव स चाध्ययनादिः। परापूर्वको जीधातुश्च कचिदभिभवे वर्त्तते। यथा 'शत्रून्पराजयते' इति। इह त्वसोढग्रहणान्न्यूनीभावार्थकः। न्यूनीभावश्च शक्तिवैकल्यादिरूपः। अध्ययनाच्च षष्ठ्याम्प्राप्तायामिदं वचनम्। ग्लायतीत्यस्य शक्तिविकलो भवतीत्यर्थः। धातोरकर्मकत्वे एवैतत्सूत्रोदाहरणम्। यदा त्वयं सकर्मकस्तदा प्रत्युदारहणम्। उदाहरणे पराजयत इत्यत्र कालो न विवक्षितः। तेनाध्ययनात्पराजेष्यते इत्यपि सिद्धम्।

'यवेभ्यो गां वारयति' कूपादन्धं वारयति' दुराचारादनुकम्पां वारयति' इत्यादिसकलसाधारण्येन वारयतेरर्थमाह—*भक्षणेत्यादिना*। आदिनाऽनुष्ठानानुकूलव्यापाराभावानुकूलव्यापारसङ्ग्रहः। *धात्वर्थफलाश्रय इति*। प्रधानीभूतव्यापारप्रयोज्याभावप्रतियोगिव्यापारजन्यभक्षणसंयोगाद्याश्रय इत्यर्थः। *अप्रधानेति*। अभावप्रतियोगिभूतः। एवञ्च तद्व्यापारजन्यफलाश्रयत्वादीप्सितपदाभिधेयत्वं यवादेः। ईप्सित इत्यत्र कर्मणि क्तः। *आश्रयमात्रस्य*। कर्त्तुः। ननु कर्मसंज्ञापत्तिरत आह– *कर्मलक्षण इति*। "कर्त्तुरीप्सितम्" इत्यत्रेत्यर्थः॥

*तद्घटकमिति*। प्रत्यासत्याऽयमेव येनेत्यत्र यच्छब्दार्थः। ४

क्षेपलभ्येच्छा बोद्ध्या। चोरानिति। चोरकर्मकदर्शनेच्छाभाव इति शाब्दोऽर्थः। स च चोरकर्तृकस्वदर्शनाभावायेति प्राप्तिः। इच्छामात्रस्याक्षेपलभ्यत्वे इव विशिष्टस्याक्षेपलभ्यत्वे ऽपि स्यादिति भावः कृते नान्तर्द्धिरिति दोषः। येनेत्यस्याभावे हि स्वकर्मकदर्शनाभावं य इच्छति इत्यर्थे कर्तुरेव स्यादतस्तत्। इच्छातिग्रहणं किमिति। अन्तर्धौ सति यत्कर्तृकदर्शनस्याभावस्तदपादानमित्यर्थोऽस्त्विति भावः। सत्यपीति। अदर्शनेच्छया तदनुकूलव्यापारकरणे दैववशाद्दर्शने सत्यपीत्यर्थः। अन्यथा यत्र दर्शनाभाव एव तत्रैव स्यादिति भावः।

नियमेति। उपयोगशब्दस्य तत्रैव रूढेर्नियमो ब्रह्मचर्यादिः। नटस्येति। नटजन्यं श्रवणमिति बोधात् कारकत्वम्। नियमपूर्वकविद्यावक्तृत्वाभावान्नेत्युत्तरम्।

जनिक (पा०सू० १।४।३०)। प्रकृतिरुपादानकरणं ब्रह्म च मायाशबलञ्जगदुपादानकारणम्। वृत्तौ हेतुपदमप्युपादानकारणपमेवेति बोद्ध्यम्। विभाषेत्येव सिद्धे इदमपादानत्वेन बोधनार्थम्।

---

चान्तर्द्धिर्यद्यपि इच्छतिशब्दघटकाख्यातार्थकर्त्तुनिष्ठा तथापि वृक्षे शाखेतिवदन्तर्द्धाविति सप्तमी उपपदविभक्तेरिति न्यायात् न तु सति सप्तमी। ननु मातुर्निलीयते इत्याद्युदाहरणे व्यवहितदेशस्थितेर्धातुना प्रतिपादनेऽपि इच्छायाः कथं लाभ इत्यत आह-*आक्षेपलभ्येति*। इच्छायाः प्रयत्नप्रयोजकत्वादाक्षेपः। ननु 'दिदृक्षत' इत्यत्र सन्नन्ताद्दर्शनेच्छालाभेऽपि येनादर्शनमित्यर्थालाभात्कथमपादानत्वप्राप्तिरत आह—*इच्छामात्रस्येति*। *विशिष्टस्येति*। चोरकर्तृकस्वकर्मकदर्शनाभावरूपविशिष्टस्येत्यर्थः। *य इच्छतीत्यर्थ इति*। इच्छतिशब्देन कर्त्तुरुपस्थितत्वात्कर्तृलाभ इति भावः।

उपयोगशब्दस्य प्रयोजनादिपरत्वभ्रमनिरासायाह-*उपयोगशब्दस्येति*। *नटजन्यमिति। क चित्तु गाथामिति पाठः स चायुक्तः। षष्ठ्यर्थस्य स्वान्वययोग्यनामसमभिव्याहारे तत्रैवान्वयस्य क्लृप्ततया कारकत्वानुपपादनात्।

*प्रकृतिरुपादानकारणमिति*। अस्मिन्नेवार्थे प्रकृतिशब्दस्य लोकप्रसिद्धेः। मूलासङ्गतिपरिहारायाह--*वृत्ताविति* । *मेवेति*।

तत्र हि 'गुणे ऽस्त्रियाम्' इति प्रायिकं' बाहुलकं प्रकृतेस्तनुदृष्टेरिति वार्त्तिकप्रयोगात् ।

भुवः (पा०सू० १।४।३१) । प्रभवनं प्रथमप्रकाशः प्रग्रहणात् तदधिकरणमपादानमित्यर्थः ।

"प्रभवो जलमूले स्यात् जन्महेतौ पराक्रमे।
ज्ञानस्य चादिमस्थाने"

इति विश्वः । प्रकाशत इत्यस्य योगे तु न, प्रथमप्रकाशार्थत्वाभावात्तदाह-तत्र प्रकाशतइत्यर्थ इति । ल्यब्लोपइति । ल्यबन्तशब्दाज्ञाने इत्यर्थः । कर्मणीति । प्रत्यासत्त्या ल्यबन्तधात्वर्थस्येति भावः । प्रासादादिति । फलेभ्यो यातीत्यत्रेव बोधप्रक्रिया। 'आजघ्ने विषमविलोचनस्य वक्षः' इत्यत्र कर्मणः शेषत्वविवक्षया षष्ठी, 'वक्षः' इत्यस्य प्राप्येति शेषः । गम्यमानापीति । विशिष्यतद्वाचकपदानुपात्तापीत्यर्थः । 'कस्मात् त्वम्'इत्यादौ 'फलेभ्यो याती'त्यत्रव बोधप्रक्रिया ।

अन्येत्यर्थेति । तदर्थश्च भेदवान् । अत एव 'घटात् भिन्नः'

---

वेदान्तसिद्धान्तात् । ननु ब्रह्मशब्दार्थस्य गुणत्वाभावात्कथं विभाषेत्यस्य प्राप्तिरत आह-*तत्र हीति ।

भुवः प्रभव" इति सूत्रघटकप्रभवशब्देऽधिकरणेऽबित्याशयेनाह-*तदधिकरणमिति* । *जन्महेतौ* । जन्मभूमौ । अतिप्रसङ्गं वारयति-*प्रकाशत इति* । सूत्रे प्रशब्दोपादानात्प्रथमप्रकाशार्थकधातुयोग एवेदमिति भावः । ननु ल्यब्लोपविधायकशास्त्रस्यानुपलम्भात् 'ल्यब्लोपे' इत्यनुपपन्नमत आह-*ल्यबन्तशब्दाज्ञानइति* । *बोधप्रक्रियेति* । वाक्यैकदेशन्यायेनेत्यर्थः । नन्वाजघ्ने इत्यत्र यथाश्रुतान्वयेऽकर्मकत्वस्वाङ्गकर्मकत्वयोरभावेन कथमात्मनेपदमतआह-*आजघ्न इति* । कर्मणः । विषमविलोचनशब्दार्थस्य । वक्ष इत्यस्यानन्वितत्वं वारयति-*प्राप्येति शेष इति* । एवञ्चात्रप्राप्येतिशब्दाध्याहारेण ल्यबन्तशब्दज्ञानसत्त्वान्न ल्यब्लोप इति पञ्चम्यापत्तिरितिभावः । *इत्यत्रेवेति* । वाक्यैकदेशन्यायेनेत्यादिः ।

*अत एव* । अन्यशब्दस्य भेदविशिष्टार्थकत्वादेव । मूलोक्तरीत्या

...त्यादिसिद्धिः ।

परे तु ध्रुवमिति सूत्रे अपायशब्देन भेदस्यापि ग्रहणम्। 'पञ्चमी विभक्ते (पा०सू० २।३।४२) इत्यत्र विभागार्थकविभक्तपदेन भेदस्य व्याख्यानात् । 'भिदिर्विदारण' इत्यत्र भेदज्ञानविषयत्वमपि विदारणम् । एकत्वेन गृहीतस्य तथा बोधे बुद्धिविदारणस्य तत्रापि सत्वात् । अत एव 'घटाद्भेदः' इति सिद्धम् । तद्योगेऽप्यपादानत्वात् । तस्यैव सम्बन्धत्वेन विवक्षायां घटीयो भेद इत्यपि । अन्यशब्दार्थस्याक्रियात्वात्तद्योगे एतद्विधानम् । अत एव 'घटः पटो न' इत्यादौ न पञ्चमी । नञो भेदवदर्थकत्वे ऽपि अक्रियात्वात् । घटादेक इत्यादावसाध्वेव । अत एवेतरग्रहणश्चरितार्थम् । अत एव भाष्ये ऽर्थग्रहणं नोक्तमित्याहुः ।

"आराद्दूरसमीपयोः" एतद्योगे 'दूरान्तिकार्थैः' (पा०सू०२।३।३४) इति प्राप्तम् । नन्वयं देशवाची न दिक्शब्दः, अत आह—दिशि दृष्ट इति । शब्दग्रहणादिति भावः । ते च रूढ्या दिग्विशेषवाचकाः पूर्वादय एव गृह्यन्ते नैन्द्रीककुबादयो व्याख्यानात् । अवयववाचीति । तद्वाचिपूर्वादियोगे ऽवयविवाचकान्नेत्यर्थः । ज्ञापकस्य सजातीयापेक्षत्वात् । अत एवास्मादयं पूर्वो भागः काय-

---

...न्यशब्दस्यार्थपरत्वेन व्याख्यानस्य प्रयोजनमुक्त्वा स्वमतमाह—*परे त्विति*। *भेदस्यापीति* । अपिना पूर्वोक्तार्थसङ्ग्रहः । ननु तस्य न धात्वर्थत्वमत आह—*भिदिरिति* । *अत एव* । तस्यापि तस्मिन् सूत्रे अपायशब्देन ग्रहणादेव । *तस्य* । नञर्थभेदवतः । ननु मूलोक्तरीत्या घटादेक इति भवति अन्यशब्दस्यार्थपरत्वाभावे तन्न सिध्येदत आह—*घटादेकेति* । *अत एव* । अर्थपरत्वाभावादेव । *अत एव* । घटादेक इत्यादौ "ध्रुवमपाय" इति सूत्रेणैव पञ्चम्युपपत्तेरेव । ननु 'चैत्रात्पूर्वे' इत्यत्र पूर्वशब्दः कालवाचको न दिक्शब्द इति कथम्पञ्चमीत्याशङ्कामवतारयति—*नन्वयमिति* । नन्वेवमैन्द्र्यादिशब्दयोगेऽपि प्राप्नोतीत्यत आह—*ते चेति* । *व्याख्यानादिति* । तेषां यत्र योगस्तत्र पञ्चम्यदर्शनमूलकाद् व्याख्यानादित्यर्थः । *तद्वाचीति* । अवयववाचीत्यर्थः । *अत एव* । अवयविवाचकादेव ज्ञापकेन पञ्चम्यभावस्वीकारादेव । *अस्मादिति* । भागविशेषावित्यर्थः । अत्र पूर्वशब्दः पूर्वकालावच्छि-

स्येति सिद्धम्। अवयवे पूर्वत्वम् अवयवान्तरापेक्षया प्रथमकालोत्पत्तिकत्वेन बोद्धव्यम्। अञ्चूत्तरपदस्येति। दिक्शब्दसाहचर्येण तस्य दिग्वाचकस्यैव ग्रहणं तेन 'सध्र्यङ्' इत्याद्यर्थं तन्नेति भावः। बाधितुमिति। परत्वात्प्राप्तमित्यादिः। यदि तु षष्ठ्यतसर्थ' (पा० सू०।२।३।३०) इत्यत्र प्रत्ययग्रहणात्तस्य श्रूयमाणप्रत्यये एव प्रवृत्तिस्तदेदं मास्त्वित्विति तत्त्वमिति भाष्ये स्पष्टम्। दक्षिणा ग्रामादिति। दक्षिणस्यां दिशीत्यर्थे 'दक्षिणादाच्' (पा०सू०५।३।३६) इति 'आहि च दूरे' (पा०सू०५।३।३७) इत्याजाही षष्ठ्यतसर्थेत्यस्यापवादः। प्रभृतियोग इति। प्रभृत्यर्थयोग इत्यर्थः। 'अपादाने पञ्चमी' (पा०सू०२।३।२८) इति सूत्रे "यतश्चाध्वकालनिर्माणं ततः पञ्चमी कार्तिक्याः आग्रहायणी मासे" इति वार्त्तिकप्रत्याख्यानाय इदमत्र मयोक्तव्यं सन्न प्रयुज्यते कार्तिक्याः प्रभृत्याग्रहायणी मासे" इति भाष्येण प्रभृतिशब्दाभावे ऽपि तदर्थसत्तामात्रेण पञ्चमीत्यर्थकेन 'प्रभृत्यर्थयोगे पञ्चमी'इति वचनसत्त्वस्य भगवता बोधितत्वाद्। अन्यथा प्रभृतिपदाभावे पञ्चम्यर्थं वचनस्यावश्यकत्वेन तत्प्रत्याख्यानासङ्गतिरिति भावः। एवञ्च तदर्थकारभ्यशब्दयोगे ऽपि पञ्चमी यथा 'आवीचिमारभ्य मेरुपृष्ठपर्यन्तं भूलोको, मेरुपृष्ठादारभ्य ध्रुवपर्यन्तङ्ग्रहनक्षत्रतारागणचित्रितोन्तरिक्षलोक' इति पातञ्जलभाष्यप्रयोगे प्रभृतीत्यस्य चावधिमादायेत्यर्थः। आरभ्येत्यस्यैतदर्थकृतापि

---

अपरः। *तस्य*। अञ्चूत्तरपदस्य। *प्रत्ययग्रहणादिति*। प्रत्ययशब्दस्य प्रत्यायकपरतया श्रूयमाणत्वलाभः। श्रूयमाण एव हि प्रत्यायको भवति। *भाष्ये स्पष्टमिति*। तत्र ह्येवमुक्तम्। 'अथ प्रत्ययग्रहणं किमर्थम्। इह मा भूत्। प्राग् ग्रामात्'। प्रत्यग्ग्रामात् अञ्चूत्तरपदस्याप्येतत्प्रयोजनमुक्तम् तत्रान्यतरच्छक्यमवक्तुमिति।

कार्तिक्याः प्रभृति' इति भाष्यप्रयोगात्प्रभृतिशब्दयोगे पञ्चमीति भ्रमनिवारणायाह—*प्रभृत्यर्थेति*। *अन्यथा*। प्रभृतिशब्दयोगे एव पञ्चम्यङ्गीकारे। एवं सति यत्फलितन्तदाह—*एवञ्चेति*। प्रभृत्यर्थयोगे पञ्चमीत्यर्थस्वीकारे च॥ नन्वेवमावीचीमारभ्येत्यत्रापि पञ्चमी कुतो नेत्यत आह—*आवीचीमारभ्येति*। प्रभृतीत्यारभ्येत्यर्थकमव्ययम्। *एतदर्थ

ऽवधौ पञ्चम्यन्तार्थस्याभेदेनान्वयः । तद्विशेषणत्वे ऽपि न द्वितीया भृत्यर्थयोगे पञ्चमीति भाष्यकृद्बोधितवचनात् आरभ्येत्यस्य गृहीत्वेत्यर्थेनावीचिमारभ्येत्यादौ द्वितीया ।

वस्तुतो ऽवधित्वन्तस्य समभिव्याहृतपदार्थनिरूपितं, गम्यमानक्रियापेक्षमित्यपादानत्वादेवात्र पञ्चमी सिद्धा । कार्तिकीतो विभक्ते । अत एव कार्तिक्यवधिके आग्रहायणीघटिते मासे कार्तिकीमादाय आग्रहायणीति बोधः । 'भवात्प्रभृति आरभ्य वा' इत्यत्र भवकालावधिके । अत एव भवावधिके मरणान्ते काले भवकालमादाय हरिः सेव्य इति बोधः । एवमन्यत्राप्यूह्यमित्यलं विस्तरेण ।

ज्ञापकादिति । पञ्चम्यन्तेन समासविधानाज्ज्ञापकादित्यर्थः । अयं भावः । परस्परसाहचर्यात्तत्रापपरी वर्जनार्थौ कर्मप्रवचनीयावेव । तद्योगे "पञ्चम्यपाङ्परिभिः" (पा०सू०२।३।१०) इति वचनात् । लक्षणप्रतिपदोक्तपरिभाषया ऽपपरिनिमित्तकसुबन्तस्यैव ग्रहणात् पञ्चम्यैव सिद्धः समासः, तत्साहचर्यादुक्तपरिभाषया चाञ्चूत्तरपदेनापि तन्निमित्तपञ्चम्यैव सिद्धः समासः इति व्यर्थं तत् बहिः शब्देन पञ्चम्यन्तेन समासविधानद्वारा तद्योगे पञ्चम्या अपि ज्ञाप-

---

*तापि* । अवधिमादायेत्यर्थकतापि । अपिना गृहीत्वेत्यर्थकतायाः सङ्ग्रहः । मेरुपृष्ठादारभ्येतिवाक्यस्योपपत्तिमाह । नन्ववीचिमारभ्येत्यस्य कथमुपपत्तिरित्यत आह—*आरभ्येत्यस्येति* । अवीचिर्नरकविशेषः । *त्यादाविति* । अत्रादिना प्रातःकालमारभ्य पठतीत्यदिसङ्ग्रहः । ज्ञापकं विनापि कार्त्तिक्याः प्रभृतीतिप्रयोगोपपत्तिमाह—*वस्तुत इति* । समभिव्याहृतपदार्थो मासादिः । *गम्यमानक्रियापेक्षमिति* । गम्यमाना क्रिया गमनादिरूपा तदपेक्षमित्यर्थः । तदेवोपपादयति—*कार्त्तिकीत इति* । ननु "अपपरिबहिरञ्चव" इतिसूत्रस्थपञ्चम्या पञ्चम्यापादियोगे चारितार्थ्यात्पञ्चम्यन्तेन समासविधानाज्ज्ञापकादित्यनुपपत्तिरत आह—*अयम्भाव इति* । *सिद्धः समास इति* । पञ्चम्या इत्यस्याभावेऽपि तृतीयान्तस्य सुपेत्यस्यानुवृत्त्यैवेष्टसिद्धिरित्यर्थः । अञ्चूत्तरपदस्य पञ्चम्यन्तेन समासार्थमपि न पञ्चम्या इती आह—*तत्साहचर्यादिति* । *पञ्चम्या अपि ज्ञापनार्थमिति* । एतेन

नार्थमिति । इदमपपरिबहिरिति सूत्रे भाष्ये स्पष्टम् । पञ्चमीति । सापीत्यर्थः । तेन 'करस्य करभो बहिः' इति सिद्धम् ॥

प्रतिनिधि (पा०सू०१।४।९२) यस्मादिति पञ्चम्यर्थः सम्बन्धः । अस्मादेव निपातनात् षष्ठ्यर्थे पञ्चमी । प्रतिनिधिप्रतिदानशब्दौ कर्मकिभावल्युडन्तौ । प्रतिनिधिप्रतिदाने यत्सम्बन्धिनी ततः कर्मप्रवचनीययुक्तात्पञ्चमीत्यर्थः । प्रतिनिधिः सदृशः, प्रतिदानम् दत्ततुल्यमूल्यस्य वस्तुनः प्रत्यर्पणम् । कर्तृवर्जितमिति । कर्तृसंज्ञारहितमित्यर्थः । ऋणत्वं वस्तुसन्निमित्तं न तु तृतीयावाच्यकोटिप्रविष्टम् । हेतुभूतमिति । तेन कारणत्वविवक्षायां तृतीयैवेति भावः ।

विभाषा गुणे (पा०सू०२।३।२५) । योगविभागादिति । 'बाहुलकं प्रकृतेस्तनुदृष्टेः' इत्युक्तवार्तिकप्रयोगाद् गुणे ऽस्त्रियामिति

---

पञ्चम्येत्यस्यापादियोगे चारितार्थ्यात्सामर्थ्येनासुबन्तेन षष्ठ्यन्ते न समासोऽस्त्विति परास्तम् । ननु ज्ञापकेन बहिः शब्देन योगे पञ्चमी चेत्स्वीक्रियते तदा पञ्चमीप्रकरणे "अन्याराादितरर्त्ते" इतिसूत्रे एव बहिःशब्दपाठः कर्त्तुमुचित इत्यत आह—*सापीति* । अपिना षष्ठीसमुच्चयः ।

*सम्बन्धः* । प्रतियोगित्वादिरूपः ।

*अस्मादेवेति* । यस्मादितिनिपातनादित्यर्थः । मूले एतत्सूत्रवृत्तौ बहुवचनम्प्रयोगभेदात् । *दत्ततुल्येति* । दत्तस्यैव प्रत्यर्पणं सर्वत्र न सम्भवतीत्येवमुक्तिः । कर्तृवर्जितमित्यस्य कर्तृत्वावच्छिन्नप्रतियोगिताकभेदवदित्यर्थः प्रतीयते स चासङ्गतः ।

शतपदार्थस्यापि स्वस्वरूपधारणात्मकव्यापाराश्रयत्वेन कर्तृत्वादत आह—*कर्तृसंज्ञेति* । एवञ्च कर्तृसंज्ञायाः क्रियायोग एव प्रवृत्त्या शताद्बद्ध इत्यत्र या बन्धनक्रिया तद्योगनिमित्तककर्तृसंज्ञाभावस्य तत्र सत्त्वाददोषः । हेतुतृतीयापवादभूतेयम्पञ्चमी । न तु तृतीयावाच्यकोटिनिविष्टमिति । अत एव ऋणत्वेन शाब्दबोधविषयत्वन्न । प्रकृतसूत्रोदाहरणे 'शताद्बद्ध' इत्यत्र शतस्य हेतुत्वविवक्षैव न तु कर्तृसंज्ञा । प्रत्युदाहरणे 'शतेन बन्धित' इत्यत्र "तत्प्रयोजको हेतुश्च" इतिसूत्रेण शतस्य हेतुसंज्ञा कर्तृसंज्ञा च ।

"विभाषा गुणेऽस्त्रियाम्" इतिसूत्रे योगविभागस्य पदमञ्जर्युक्तस्यापि भाष्येऽदर्शनादाह—*बाहुलकमिति* । *इत्युक्तेति* । अस्य उणादय

ष्यिकमित्यन्ये । धूमादिति । धूमपदं स्वज्ञाने ऽग्निमत्पदं स्वज्ञा-
नविषये लाक्षणिकं बोद्धव्यम् । समुच्चयार्थमिति । स्पष्टश्चेदं भा-
ष्ये । एतेनान्यतरस्य आमङ्गीकार इत्यर्थकं पदद्वयमेतदित्यपास्तम् ।
विकल्पविषयेऽप्यर्थासङ्गतेश्च ।

परे तु द्वितीयासमुच्चयो न फलम् । विना वातं विना वर्षमित्यादौ
पृथक्शब्दयोग इव 'ततो ऽन्यत्रापि दृश्यत' इत्यनेन द्वितीयासिद्धेः । अत

---

इति सूत्रभाष्य इत्यादिः । प्रकृतसूत्रोदाहरणे जाड्यादित्यत्र जाड्यस्यान्तः-
करणविशेषावच्छिन्नशरीरनिष्ठधर्मस्य बन्धनक्रियाकारणत्वं सम्भवति ।
गुणत्वञ्च तस्य संज्ञाक्रियाजातिभिन्नत्वात् सम्भवति । 'धूमादग्निमान्'
इत्यत्र धूमपदस्य जात्याश्रयवाचकतया कथं गुणत्वम् । कथञ्चाग्निमन्निरू-
पितं हेतुत्वं धूमपदार्थस्य तत्कारणत्वाभावादत आह—*धूमपदं स्वज्ञान
इति* । एवञ्च धूमज्ञानजन्याग्निज्ञानेऽनुमितिरूपे कारणतायाः प्रसिद्धत्वान्न
तत्रोदाहरणत्वानुपपत्तिरिति भावः ।

*स्पष्टश्चेदमिति । "न चान्यतरस्याङ्ग्रहणस्य विकल्पार्थत्वेऽपि तृतीया-
या अभावे प्रकृतसूत्रे पञ्चमीद्वितीयाया अनुवर्त्तनादेव तयोः पर्यायेण प्र-
वृत्तिर्भविष्यतीति किं समुच्चयार्थत्ववर्णनेनेति वाच्यम् । पृथगादिषु
पञ्चमीविधानम् । पृथगादिषु पञ्चमीविधेया । पृथग्देवदत्तात् । किङ्कार-
णम् । न प्रकृतम्पञ्चमीग्रहणमनुवर्त्तते, क प्रकृतम् । अपादाने पञ्चमीति ।
अनधिकारात् । अनधिकारः सः । अधिकारे हि द्वितीयाषष्ठीविषये प्र-
तिषेधो वक्तव्यः । दक्षिणेन ग्रामन्दक्षिणतो ग्रामस्य । एवन्तर्हि अन्यतर-
स्याङ्ग्रहणसामर्थ्यात्पञ्चमी भविष्यति" इति भाष्यदर्शनेन समुच्चयार्थ-
त्ववर्णनात् । निपातानामनेकार्थत्वात्समुच्चयार्थत्वञ्च नानुपपन्नम् । न
चैवम्पञ्चमीद्वितीये अनुवर्त्तेते इति मूले यदभिहितन्तदसङ्गतिरिति वाच्य-
म् । अनुवृत्त्यभिधानस्य तद्भाष्योत्तरभाष्यग्रन्थे नानुवृत्तिरप्यभिहिते-
त्यभिप्रायादिति न सन्दर्भविरोधः । *एतेन* । उक्तभाष्यविरोधेन ।
अन्यतरस्यामित्यस्य शब्दस्यैतदर्थकत्वे "हक्रोरन्यतरस्याम्" इत्यत्राप्य-
यमेवार्थो वाच्यः स चासङ्गतः । अभावस्य विधेयप्रतियोगिकस्य तत्रानु-
पस्थितत्वेन तत्रान्यतरशब्देन भावस्याभावस्य च ग्रहणासम्भवात्तन्मते
भाष्यान्तरविरोधोपीत्याह—*विकल्पविषय इति* ।

प्राचीनमतन्दूषयन्स्वसिद्धान्तमाह—*परे त्विति* । *विना वर्ष

एव भाष्ये द्वितीयसमुच्चयो नोक्तः। "पञ्चम्या अधिकारे द्वितीया-षष्ठीविषये प्रतिषेधो वक्तव्यः, दक्षिणेन ग्रामं दक्षिणेतो ग्रामस्य" इति प्रकृतसूत्रस्थभाष्येण 'एनपा द्वितीया' (पा०सू०२।३।३१) इति सूत्रं 'षष्ठ्यतसर्थ' (पा०सू०२।३।३०) इत्यतः प्रागिति च सूचितम्। अन्यथा सौत्रक्रमत्यागे न्यायविपरीतपूर्वनिपातकरणे च बीजानापत्तिः। अत एव 'करणे च' (पा०सू०२।३।३३) इति सूत्रे द्वितीयासमुच्चयो नेत्याहुः।

करणे च (पा०सू०२।३।३३)। करणे तृतीयायाः सिद्धत्वेन पक्षे पञ्चम्यर्थं वचनमिदम्। चकारः 'तृतीयान्यतरस्याम्' (पा०सू०२।३।३२) इत्यनुकर्षणार्थः। षष्ठी 'गापोष्टक्' (पा०सू०३।२।८) इतिवत्। अद्रव्येति। द्रव्यभिन्नवचनेभ्य इत्यर्थः। द्रव्यपदेनात्र सर्वनामपरामर्शयोग्यं, लिङ्गनिरूपितविशेष्यं वा। स्तोकशब्दो यद्धर्मावेशाद् द्रव्ये स्तोकव्यवहारस्तद्धर्मपरः, स च धर्मोऽल्पादिशब्दप्रवृत्तिनिमित्तमेव। शुक्लादिवच्चैते धर्मवचना अपि। करणत्वञ्च परम्प-

---

मिति*। 'केनेमौ पातितौ द्रुमौ' इति शेषः। *द्वितीयासमुच्चयो नोक्त इति*। अन्यतरस्याङ्ग्रहणसामर्थ्यात्पञ्चमी भविष्यतीत्येवं हि भाष्ये उक्तम्। अनेन द्वितीयायाः समुच्चयकथनन्दूषयित्वाऽनुवृत्तिकथनमप्यसङ्गतमित्याह—*पञ्चम्या अधिकार इति*। *प्रागिति चेति*। एवञ्च "षष्ठ्यतसर्थ" इतिसूत्रे द्वितीयाया असम्बन्धवत्प्रवृत्तसूत्रेऽपि सम्बन्धो न भविष्यतीति ध्वनितम्। *अत एव*। प्रकृतसूत्रे तदसम्बन्धादेव। यद्यत्र द्वितीयासमुच्चयः स्यात्तदा करणे चेतिसूत्रेऽपि पञ्चमीसमुच्चयार्थम्प्रकृतान्यतरस्याङ्ग्रहणस्य सम्बन्धावश्यकत्वेन तत्रापि द्वितीयासमुच्चयः स्यादिति भावः।

"करणे च स्तोक" इतिसूत्रे कतिपयस्येति षष्ठ्यनुपपत्तिः। प्रत्ययविधौ पञ्चम्या युक्तत्वादत आह—*षष्ठी गापोष्टगितिवदिति*। अद्रव्यवचनेभ्य इत्यस्य द्रव्यवचनभिन्नेभ्य इति नार्थः, स्तोकादिशब्दानां शुक्लादिशब्दवद् गुणे गुणिनि शक्ततया द्रव्यवचनभिन्नत्वाभावादत आह—*द्रव्यभिन्नवचनेभ्य इति*। एवञ्च यदा धर्ममात्रपराणां स्तोकादिशब्दानां प्रयोगस्तदोदाहरणम्। धर्मिपरत्वे प्रत्युदाहरणम्। ननु धर्मवचनत्वे करणत्वमनुपपन्नमत आह—*करणत्वञ्चेति*। ननु 'स्तोकम्पचति' इत्यत्र

था । ईदृशार्थ एव च साधुत्वं सूत्रबलादिति स्पष्टम् "अलुगुत्तरपदे" (पा०सू०६।३।१) इत्यत्र कैयटे । करणे किम् ? स्तोकम्पचति । अ-सत्वभूतफलसमानाधिकरणविशेषणत्वादत्र स्तोकशब्दस्यासत्ववचन-त्वमिति दिक् ॥

दूरान्तिका । अत्र "दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्" (पा०-सू०२।३।३४) इत्यतः समुच्चयार्थकान्यतरस्यांग्रहणानुवृत्त्यैवार्थाधि-कारात्पञ्चम्याः सिद्धौ चकारो व्यवहिततृतीयासमुच्चयार्थो व्या-ख्यानादित्याह—चादित्यादि । प्रातिपदिकार्थमात्रे इति । व्याख्यानादिति भावः ॥

इति पञ्चमी ॥



षष्ठी शेषे । शेष उक्तादन्यः । स च तत्तद्रूपेण स्वत्वादिः ।

धर्मिपरत्वात्कथमद्रव्यवचनत्वमत आह—*असत्वभूतेति* । ननु प-चात्वर्थफलं विक्लृतिस्सा सा विक्लृत्तिरित्येवं रीत्या सर्वनाम्ना परामृ-श्यत एवेति कथमसत्वमिति चेन्न । विक्लित्तिशब्देन यदा सोऽर्थ उच्यते तदा तस्य सर्वनाम्ना परामर्शेऽपि धातुप्रतिपाद्यत्वावस्थायान्तस्य सर्वना-म्ना परामर्शाभावात् । विकल्पशब्दार्थविकल्पस्य वाशब्देन प्रतिपाद्यत्वा-वस्थायामसत्ववत् । ननु व्यवहितसमुच्चयः प्रागेव निरस्त इति कथमत्र तृतीयार्थत्वकथनमत आह—*व्याख्यानादिति* । व्यवहितसमुच्चाया-र्थकचकारोपादानमूलकव्याख्यानादित्यर्थः ।

ननु दूरान्तिकार्थेभ्यो विहितानां द्वितीयातृतीयापञ्चमीनाम्प्रातिपदि-कार्थमात्रे प्रवृत्तौ किम्मानमत आह—*व्याख्यानादिति* । "दूरान्ति-कार्थैः षष्ठ्यन्यतरस्याम्" इतिसूत्रानन्तरन्तेभ्यो द्वितीया चेत्येव सिद्धे दूरान्तिकार्थेभ्य इत्युपादानन्तत्सूत्रविहितविभक्तीनां पूर्वविहिताभ्यो वैल-क्षण्यसूचनाय । एवञ्च विशिष्यार्थानुक्तेरनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भव-न्तीत्यनेन न्यायेन ताः प्रातिपदिकार्थमात्रे भवन्तीति लभ्यते इति व्या-ख्यानादित्यर्थः ॥

इति पञ्चमीविवरणम् ।



'षष्ठी शेषे' इति सूत्रे यच्छेषपदन्तत्र शेष इत्युच्यते कः शेषः कर्मा-दिभ्यो येऽन्येऽर्थाः स शेष इति भाष्ये उक्तन्तन्मूलकव्याख्यानादाह—*उ-

संबन्धत्वेन रूपेण च । कारकविभक्तीनां क्रियाजनकत्वसमानाधिकरणकर्तृत्वादिशक्तिरूपेण बोधकत्वम् । तत्रापि तन्मूलके संबन्धे विवक्षिते षष्ठी । तदाह–कारकेति । स्वस्वामिभावादिरिति । स्वत्वस्वामित्वसमूहः संबन्ध इत्यन्यत्र विस्तरः । एवं सर्वत्र बोद्ध्यम् । षष्ठ्यर्थस्य संसर्गविधयैव भानं कारकविभक्तिभ्यो ऽपि क्रियाकारकभावस्य संसर्गविधया भानमित्युक्तम् । संबन्धमात्रविवक्षायामिति । संबन्धत्वेन भाने इत्यर्थः । यद्वा क्रियाकारकभावमूलकसंब-

---

-कादन्य इति* । तत्तद्रूपेण स्वत्वत्वादिरूपेण । *सम्बन्धत्वेन रूपेण चेति* । वाच्य इति शेषः । राज्ञः पुरुषोऽस्तीतिवाक्यजन्यशाब्दबोधानन्तरम्पुरुषो राजस्वत्ववान्न वेति सन्देहो न भवतीति यथा विशेषरूपेण वाच्यता कल्प्यते । तथा राजसम्बन्धी न वेति च सन्देहानुत्पत्तेः सामान्येन सम्बत्वेन रूपेण च वाच्यता कल्प्यते । *तन्मूलक इति* । कर्तृत्वनिरूपकक्रियात्वमथवा क्रियानिरूपितकर्तृत्वन्मूलं यस्य तस्मिन्विवक्षितेत्यर्थः । स्वस्वामिभावादिरित्यस्य स्वस्वामिनोर्भावः स्वत्वं स्वामित्वं वा सम्बन्धः षष्ठ्यर्थ इति प्रतीयते, परन्तु तस्य तत्तद्रूपेण षष्ठीवाच्यता न युक्ता । राज्ञः पुरुष इत्यत्र षष्ठ्यर्थः स्वामित्वञ्चेत्तस्याधेयतासम्बन्धेन राजसम्बन्धित्वेऽपि पुरुषावृत्तित्वात् । स्वनिरूपितस्वत्वाश्रयत्वसम्बन्धेन स्वामित्वं पुरुषेऽप्यस्तीति तु न तस्य वृत्त्यनियामकतया पुरुषे वृत्तितानियामकत्वस्य वक्तुमशक्यत्वात् । यदि तु स्वत्वं सम्बन्धस्तदा तस्य राजवृत्तित्वाभावेन सम्बन्धत्वं वक्तुमशक्यम् ।

स्वनिरूपितस्वस्वामित्वसम्बन्धेन राजवृत्तित्वन्तु वक्तुमशक्यम् तस्य वृत्त्यनियामकत्वादत आह–*स्वत्वस्वामित्वसमूह इति* । *अन्यत्र* । मञ्जूषादौ । तत्र सम्बन्धो हि सम्बन्धिभ्याम्भिन्न उभयसम्बन्धीत्युक्तम् । *एवं सर्वत्र* । अवयवावयविभावजन्यजनकभावादौ । *संसर्गविधयैवेति* । अत्रैवकारेण षष्ठ्यार्थस्य प्रकारत्वं व्यवच्छिद्यते । अत एव प्रकृतसूत्रभाष्ये राज्ञः पुरुष इत्यत्र राजा विशेषणम्पुरुषो विशेष्य इत्युक्तम्, अन्यथा सम्बन्धं विशेष्यतया विशेषणतया वा ब्रूयात् । एतदेकवाक्यतया क्रियाकारकभावसम्बन्धस्य वाचिका द्वितीयेति भाष्याच्चाह–*कारकविभक्तिभ्य इति* । प्राचीनमतेनाह—*सम्बन्धत्वेन भान इति* । सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः । श्रुतायामश्रुतायां वा क्रियायामभिधीयते इति हर्युक्तेराह—*यद्वेति* । कारिकायां कारकपदं कर्मत्वादिश-

...विपरम् । तन्मूलकसम्बन्धश्च विशेषणविशेष्यभाव एव । इयञ्च षष्ठी विशेषणत्वेन विवक्षितादेव।

न च सम्बन्धे षष्ठी सम्बन्धश्च द्विष्ठ इति सा विशेषणत्वेन विवक्षितादेव भवति न विशेष्यत्वेन विवक्षितादित्यत्र किं विनिगमकमिति वाच्यम्, विशेषणवाचकस्य राज्ञ इत्यादेः पदस्य केवलस्य प्रयोगेऽपि विशेषणत्वं स्वसामान्यनिरूपितं प्रतीयेत, तच्च विशेषणत्वं सम्बन्धसाकाङ्क्षमिति विशेषणादेव सा। तदुक्तम्भाष्ये। "षष्ठी शेषे इति चेद्विशेष्यस्य प्रतिषेधः। षष्ठी शेषे इति चेद्विशेष्यस्य प्रतिषेधो वक्तव्य इति। तत्र प्रथमाविधिः षष्ठीम्प्रतिषिध्य प्रथमा विधेया। राज्ञः पुरुष इति। उक्तम्पूर्वेण। किमुक्तम् वा वाक्यार्थत्वादिति। यदत्राधिक्यं वाक्यार्थः स"। अत्र कैयटः। राज्ञ इत्येतत्पदसन्निधाने पुरुषस्य सम्बन्धित्वम्प्रतीयते नान्यथा। पुरुषेतिप्रातिपदिकन्तु स्वार्थमात्रे वर्त्तत इति प्रथमा सिद्ध्यतीत्यर्थः'। ततोऽत्र भाष्ये शङ्कितम्। 'कुतो नु खल्वेतत्पुरुषे यदाधिक्यं वाक्यार्थ इति न पुना राजनि यदाधिक्यं स वाक्यार्थः स्यात् । पुरुषपदसन्निधाने एव राज्ञः सम्बन्धित्वावगमो नान्यथेति ततोऽपि प्रथमाप्रसङ्गः' । वाक्यार्थत्वञ्च पदान्तरसन्निधाने प्रतीयमानत्वं तच्चोभयत्राविशिष्टमिति पुरुषनिष्ठविशेष्यत्ववद्राजनिष्ठविशेषणत्वमपि वाक्यार्थ एव भविष्यतीति पुरुषपदादिव राजन्शब्दादपि प्रथमाप्रसङ्ग इति भावः। ततः समाधानम्भाष्ये 'अन्तरेणापि पुरुषशब्दस्य प्रयोगं राजनि सोऽर्थो गम्यते' । *अन्तरेणेति। राज्ञ इति केवलेऽपि पदे उच्चार्यमाणे सम्बन्धित्वमनियतप्रतियोगि गम्यते तस्माद्राजा परोपकारित्वेन विवक्षितो न स्वनिष्ठत्वेन।

अत्र सम्बन्धित्वं विशेषणत्वरूपम् । अनियतप्रतियोगीत्यस्यानियतविशेष्यनिरूपितमित्यर्थः। अत एवोक्तं राजा परोपकारित्वेन विवक्षित इति। न स्वनिष्ठत्वेन । न स्वार्थनिरूपितविशेष्यतया इति । हरिणाप्युक्तम्।

द्विष्ठोऽप्यसौ परार्थत्वाद्गुणेषु व्यतिरिच्यते ।
तत्राभिधीयमानश्च प्राधान्येऽप्युपयुज्यते ॥

इति। *असौ* । सम्बन्धः। *परार्थत्वात्* । परं विशेषणत्वमर्थः प्रयोजनं यस्य तत्त्वाद्विशेषणतानियामकत्वादित्यर्थः । भेदे सति विशेषणत्वासम्भवेन तदाकाङ्क्षितत्वात्तत्र सम्बन्धो व्यतिरिच्यते उद्भूततया प्रतीयते इति तत्रैव षष्ठीत्यर्थः । विशेष्यस्य स्वनिष्ठत्वादेव न विशेष्यतानियामकसम्बन्धाकाङ्क्षेति भावः। प्रधानेऽप्युपयुज्यते । तस्य ...त्वस्वभावत्वाद्राजादिनिरूपितविशेष्यताया राजादिपदसन्निधाने प्र-

न्धस्यैव विवक्षायां न तु तद्विवक्षायामित्यर्थः । कर्तुरपि तथा विवक्षा 'क्तस्य च वर्त्तमाने' (पा० सू० २।३।६७) इति सूत्रे 'छात्रस्य हसितम्' इत्यादौ भाष्ये स्पष्टा । संयोगसंबन्धावच्छिन्नाधारस्य न तथा विवक्षा । अत एव 'घटवद् भूतलम्' इति प्रयोगसाधकं मतुप्सूत्रेऽस्मिन्निति चरितार्थमिति तत्रैव भाष्ये स्पष्टम् । 'लोहितोष्णीषाः' इत्यादावपि सप्तम्यर्थे बहुव्रीहिर्बोध्यः ।

एधोदकस्येति । एधः कतृ कर्ता वा । दकस्योदकस्येत्यर्थः । एधःशब्दोऽदन्तः पुँल्लिङ्गः 'कारके' (पा० सू० १।४।२३) इति सूत्रे भाष्ये प्रयुक्तः । 'एधाः पक्ष्यन्ते' इति । सान्तः क्लीबोऽपि ।

हेतौ द्योत्ये इति । हेताविति वर्तते । हेतुहेतुमद्भावेनेतरान्वये इत्यर्थः । तेन 'अन्नं हेतुं पश्य' इत्यादौ न । षष्ठीति । हेतुवाचकादित्यर्थः । निमित्तेत्यादि । निमित्तादिप्रयोगे तेभ्यस्तत्स-

---

तीयमानाया उपकारको भवतीत्यर्थः । ननु कर्मादीनामपीतिग्रन्थेन यथा तेषां सम्बन्धत्वेन विवक्षा प्रतिपादिता तथा कर्त्तुर्न प्रदर्शितेति कर्त्तुस्तथा विवक्षा न भवतीति कश्चिद् भ्राम्येदतः कर्त्तुरपि तथा विवक्षामाह-*कर्त्तुरपीति* । कर्मादीनामित्यनेन संयोगसम्बन्धावच्छिन्नाधारस्यापि तथा विवक्षेति भ्रमनिवारणायाह-*संयोगसम्बन्धेति* । तेन भूतलस्य घट इति नप्रयोगः । तत्र भाष्यमपि साधकमाह-*अत एवेति* ननु "तर्हि लोहितोणीषा" इत्यादौ षष्ठ्यर्थे बहुव्रीहिर्न स्यादत आह *लोहित इति* ।

यदुक्तमेधः कर्तृ कर्त्ता वा तदुपपत्तये आह-*एधः शब्द इति* *उदकस्येत्यर्थ इति* । भुवनममृतञ्जीवनीयन्दकञ्च इतिहलायुधकोशोऽत्र मानम् ।

यदुक्तन्मूले हेतौ द्योत्य इति तत्फलमाह-*हेतुहेतुमद्भावेनेति* हेतुपदार्थस्य स्वनिष्ठहेतुत्वनिरूपितहेतुमत्त्वसम्बन्धेनेतरान्वय इत्यर्थः । *हेतुवाचकादिति* । हेतुवाचकत्वञ्च विशेषणविशेष्ययोरुभयोरपि वाचकयोरिति हेतुशब्दादन्नशब्दाच्च षष्ठीत्यर्थः । षष्ठी हेतोरिति वक्तव्ये प्रयोगग्रहणाद्यत्र हेतुबोधनाय हेतुशब्दस्य प्रयोगस्तत्र हेतुवाचकसामान्यात्तस्मिन्वाक्ये षष्ठी यथा स्यादिति । अत एवान्नस्य शोभनस्य हेतोर्वसतीति भवतीति दिक् । *सर्वनाम्नस्तृतीया च* । अत्र सर्वनाम्न

मानाधिकरणशब्देभ्यश्चेत्यर्थः । किन्निमित्तमिति । प्रथमान्तं द्वितीयान्तञ्च । प्राग्ग्रहणादिति । एवञ्च 'षष्ठी हेतुप्रयोगे' (पा० सू०२।३।२६) 'सर्वनाम्नस्तृतीया च' (पा०सू०२।३।२७) इति सूत्रं व्यर्थे इति बोध्यम् ।

षष्ठ्यतस (पा०सू०२।३।३०) । दिक्शब्दात्पञ्चम्यां प्राप्तायामिदम् । "ततः पश्चात्" इत्यत्र तु सार्वविभक्तिकः षष्ठ्यन्तात्तसिः । षष्ठ्यपीति । स्पष्टश्चेदं वृत्तौ । भाष्ये तु न दृश्यते । विपरीतं 'षष्ठ्यतसर्थ' इति सूत्रात्पूर्वम् "एनपा" (पा०सू०२।३।३१) इत्यस्य पाठ इति लभ्यते इति "पृथग्विनानाना" इति सूत्रे उक्तम् ।

दूरान्तिकार्थैः (पा०सू०२।३।३४) यदपेक्षं दूरत्वादिकं ततः षष्ठीत्यर्थः । पञ्चमी चेति । तस्या एव समुच्चयो, न द्वितीयातृतीययोरपीति भावः ।

ज्ञो ऽविदर्थ (पा०सू०८।३।५१) ॥ अत्र सूत्रे ऽविदर्थस्येति छेदो व्याख्यानात् । सर्पिषो ज्ञानमिति । जानातेः प्रवृत्तिरर्थः सर्पिःसम्बन्धिनी प्रवृत्तिरित्यर्थः ।

अधीग (पा०सू०२।३।२२) । अधीगर्थः स्मृतिः । कर्मणि किम्? मातुर्गुणस्मरणम् । करणे शेषत्वेन षष्ठ्यभावे समासो भवत्येव ।

---

इति प्रयोगापेक्षया षष्ठी । पञ्चम्यान्तु हेतुशब्दात्पञ्चमीतृतीये न स्याताम् । *निमित्तादिप्रयोगे तेभ्य इति* । अत्राप्यर्थे प्रयोगशब्दोपादानमेव मानम् । *सूत्रे व्यर्थ इति* । अनेनैव सूत्रद्वयसाध्यप्रयोगस्य सिद्धेः ।

मूलादिदूषणायाह—*भाष्ये इति* । नन्वप्रतिषिद्धमनुमतम्भवतीति न्यायेनोक्तम्भाष्यकारसम्मतमेवेत्यत आह—*विपरीतमिति* । स्त्र्यविकारात्परेणेत्यादौ यथायथं शास्त्रेणेत्यादिविशेष्यानुरोधात् तृतीया । प्रत्यासत्तिन्यायेनाह—*यदपेक्षमिति* । *तस्या एवेति* । पञ्चम्या एवेत्यर्थः । शिष्टकृतं व्याख्यानमत्र शरणम् ।

*व्याख्यानादिति* । जानातेर्विदर्थकत्वस्य नियततया विशेषणस्यैव वैयर्थ्यापत्तिरतो विशेषणसामर्थ्यमूलकाद्व्याख्यानादित्यर्थः । जानातेरविदर्थत्वं स्पष्टयति—*जानातेरिति* ।

*मातुर्गुणस्मरणमिति* । गुणेन स्मरणमित्यर्थः । इह गुणरूपस्य

अत एवात्र सूत्रे भाष्ये शेष इति वर्तत इत्युक्तम्। "प्रतिपदविधाना षष्ठी न समस्यत" इत्येतैः षष्ठीसमासनिषेधात्। एधो दकस्येति। 'एधः' इति पृथक्पदं दकशब्द उदकवाची ॥

रुजार्थानाम (पा०सू०२।३।५४) ॥ रोगार्थानां धातूनामित्यर्थो व्याख्यानात्। धातोर्भाववचनत्वाव्यभिचारेण सामर्थ्याद्वचन इति कर्तरि ल्युट्, भावशब्देन सिद्धरूपोऽर्थ उच्यते, ल्युट्प्रकृत्यर्थोऽविवक्षितस्तदाह—भावकर्तृकाणामिति। रोगकर्तृकाणामिति च। रोगोऽत्र क्षयादिः। भावकर्तृकाणां किम्? श्लेष्मणश्चौररुजा। श्लेष्मात्र न भावः। सर्पिषो नाथनमिति। सर्पिर्मे भूयादित्याशासनमित्यर्थः ॥

जासिनि (पा०सू०२।३।५६) ॥ 'जसु मोक्षणे' इति दैवादिकस्य न ग्रहणम्। जासीति निर्देशात् हिंसायामित्युक्तेश्च निप्रपूर्वो हनो निप्रहणः। शब्दपरत्वेऽपि सौत्रत्वात् "हन्तेः" (पा०सू०८।४।

---

करणस्य शेषत्वविवक्षायामपि अनेन सूत्रेण षष्ठ्यभावे षष्ठी शेष इति सूत्रेण षष्ठ्यां समासो भवत्येव। एतत्सूत्रविषयेऽपि तेन सूत्रेण षष्ठ्यां सिद्धायामेतत्सूत्रं नियमार्थमिति हि प्रसिद्धो मार्गः। *अत एव*। नियमार्थत्वस्येष्टत्वादेव। एतेषान्नियमार्थत्वे वार्तिकमपि साधकमित्याशयेनाह—*प्रतिपदविधानेति*। तद्वार्त्तिकमपि नापूर्वङ्किन्तु नियमसिद्धमेवेति भावः।

"रुजार्थानाम्" इति सूत्रे उपात्तन्तत्र रुजाशब्दो यद्यपि व्याधौ रूढः तथापि प्रकृते रोगमात्रं विवक्षितमित्याशयेनाह—*रोगार्थानान्धातूनामिति*। अत्र रोगशब्दे प्रकृत्यर्थमात्रं विवक्षितम्। *व्याख्यानादिति*। भावकर्तृकाणामित्यस्य 'नदी कूलानि रुजति' इति प्रत्युदाहरणम्भाष्ये उक्तं तन्मूलकादित्यर्थः। ल्युट्प्रकृत्यर्थोऽविवक्षित इति*। भावकर्तृकादिति भाष्यीयव्याख्यानात्। भाष्ये भावकर्तृकादिति ल्यब्लोपे पञ्चमी। भावकर्तृकमाश्रित्येत्यर्थः।

*न ग्रहणमिति*। किन्तु 'जसु हिंसायाम्' इति चौरादिकस्येति शेषः। ननु हेतुमण्णिचा जासीतिनिर्देशोपपत्तिर्भविष्यतीत्यत आह—*हिंसायामित्युक्तेरिति*। अनुकरणत्वाण्णत्वाप्राप्तेराह—*सौत्रत्वादि

१२) इति णत्वम् । चुरादिरिति । घटादेस्तु न ग्रहणं, दीर्घनिर्देशात्। क्राथनमिति–घटादेः क्रथेः । 'क्राथेति सूत्रे निपातनाद् वृद्धि- रिति वृत्तिः । परे तु एतत्सूत्रप्रामाण्याद्घटसाहचर्याच्चायमपि चुरा- दिर्बोध्यस्तस्याकृतिगणत्वात् । निपातनस्य शेषषष्ठीसन्नियोगशिष्टत्वे कर्मत्वेन विवक्षायां चोरस्य क्राथनमित्यस्यानापत्तिः । सामान्येन निपातने चिण्णमुल्विषये क्रथमित्यादेः क्रथयतीत्यादेश्चानापत्तिरित्याहुः।

समर्थयोरिति । समपर्यायसंशब्देन समासः, शकन्ध्वादि- त्वात् पररूपं वा । ब्राह्मणपणनमिति । आयप्रत्ययो वैकल्पिक- त्वान्न कृतः । उदाहरणे स्तुतावेवेति नियमादपि न ॥

दिवस्त (पा०सू०२।३।५८) ॥ कर्मणि षष्ठी स्यादिति । शेष इति त्वत्र न सम्बन्ध्यते, व्याख्यानात् । अत एव 'द्वितीया ब्रा-

---

ति॰।मूलादिकन्दूषयति–*परे त्विति* । *अयम्* । क्राथधातुः । नन्वयं चु- रादौ न दृश्यत इत्यत आह—*तस्येति* । *निपातनस्येति* । अ- नापत्त्यर्थेत्यादिः । *सामान्येन* । शेषषष्ठीसन्नियोगशिष्टत्वानङ्गीकारेण ।

प्रकारान्तरमप्याह—*उदाहरण इति* ।

*व्याख्यानादिति* । उत्तरसूत्रद्वयस्य पाणिनिपठितानुपूर्वीकस्योपा- दानसामर्थ्यमूलकव्याख्यानादित्यर्थः । अयम्भावः–यद्यत्र शेष इत्यस्य सम्ब- न्धः तदा "विभाषोपसर्गे" इत्यत्र शेषपदसम्बन्धोऽस्ति न वा । आद्ये "दिव" इति सूत्रेण समासाभावस्य सिद्धौ विभाषोपसर्ग इतिसूत्रवैयर्थ्यम् । न च यदा नानेन षष्ठी तदा षष्ठी शेष इतिसूत्रेण षष्ठी तदा समासप्रवृत्तिरेव फलमस्त्विति वाच्यम् । "नोपसर्ग" इति न्यासेन दिवसूत्रस्य निषेधे शे- षषष्ठ्यां समासविकल्पेन रूपद्वयसिद्धौ विभाषाग्रहणस्य तथापि वैयर्थ्या- नुद्धारात् । द्वितीये विभाषेतिसूत्रेस्य कर्मण्येव विकल्पेन षष्ठीविधायकत- या छन्दस्यापाद्यमानरूपाभावाद्ब्राह्मणे विभाषेतिसूत्रविहितषष्ठ्यभावे कर्मणि द्वितीयेति सूत्रेण द्वितीयायाः सिद्धौ "द्वितीया ब्राह्मणे" इति सूत्र- वैयर्थ्यन्दुर्वारमेव । न च तन्निरुपसर्ग द्वितीयार्थमस्त्विति वाच्यम् । कर्म- त्वविवक्षायान्दिवसूत्रस्याप्राप्तेस्तत्र "कर्मणि द्वितीया" इति सूत्रेण द्विती- यायाः सिद्धौ तस्य सूत्रस्य वैयर्थ्यानुद्धारात् । "द्वितीया ब्राह्मणे" इति सूत्रे शेषपदसम्बन्धेन शेषत्वविवक्षायां द्वितीयार्थन्तदिति तु वक्तुमशक्यम् । "विभाषोपसर्गे" इति सूत्रेण विच्छिन्नस्य शेषपदस्य पुनस्तत्र सम्बन्धा-

क्षणे' (पा०सू०२।३।६०) इति सूत्रं 'गामस्य तदहः सभायां दीव्येयुः' इत्यत्र नित्यं षष्ठीप्राप्तौ द्वितीयार्थमिति भाष्ये उक्तम् तत्, ध्वनयन् तिङन्तमुदाहरति–शतस्य दीव्यतीति। यद्यपि पूर्वसूत्रे दिवं पठित्वे तदर्थस्येति त्यक्तुं शक्यते, तथापि योगविभाग उत्तरार्थः, शेषइत्यस्यासम्बन्धार्थश्च ॥

विभाषोप (पा०सू०२।३।५९)। अत्रापि शेष इति न सम्बध्यते, तदर्थस्येति च वर्तते तदाह–पूर्वयोगेति। अत एवेयं प्राप्तविभाषेति 'न वा' (पा०सू०१।१।४४) इति सूत्रे भाष्ये स्पष्टम् ॥

कृत्वोऽर्थप्रयो (पा०सू०२।३।६४)। शेषे किमिति। "दिवस्तदर्थस्य' (पा०सू०२।३।५८) इत्यादिना विच्छेदादधिकरणकारकेऽत्र षष्ठीविधानं युक्तमिति प्रश्नः। द्विरहनीति। वृत्त्यादिप्रामाण्यान्मण्डूकानुवृत्तिः स्वीकार्येत्युत्तरम्। "अधीगर्थ" (पा०सू०२।३।५२) इति सूत्रे "कर्मादीनामविवक्षा शेष" इति भाष्यं बहुवचनेनात्रापि शेषपदसम्बन्धबोधनाच्च। वस्तुतस्तु "कर्माश्रयषष्ठीविषये सूत्रोपा-

---

सम्भवात्।

न च कृदन्तेन योगे "द्वितीया ब्राह्मण" इति सूत्रे विभाषापदसम्बन्धेन पक्षे दिव इति सूत्रसिद्धषष्ठ्याः पुनर्विधानेन समासाभावार्थन्तदस्त्विति वाच्यम्। "द्वितीया ब्राह्मण" इतिसूत्रभाष्ये 'किमुदाहरणम्प्रतिदीव्यन्ति। पूर्वेणाप्येतत्सिद्धम्। इदन्तर्हि "गामस्य तदहः सभायान्दीव्येयुः' इत्युदाहरणेन कृदन्तेन योगे तस्य प्रवृत्त्यस्वीकारादिति। *अत एव*। दिवस्तदर्थस्येति सूत्रे शेषपदासम्बन्धादेव। *नित्यषष्ठीप्राप्ताविति*। दिवस्तदर्थस्येत्यनेन नित्यषष्ठीप्राप्तावित्यर्थः। *तिङन्तमिति*। यदि शेषपदसम्बन्धेनेदं सूत्रमपि समासनिवृत्तिफलकम्भवेत्तदा यत्र समासस्य प्राप्तिसम्भावना तादृशकृदन्तमेवोदाहृतं स्यादिति भावः। पूर्वोक्तमेवार्थं शङ्कासमाधानाभ्यां द्रढयति—*यद्यपीत्यादिना*। *अत एव*। अत्रापि शेषपदासम्बन्धादेव।

कृत्वोऽर्थेति सूत्रे शेष इति मण्डूकानुवृत्त्या सम्बन्ध्यत इत्यत्र बीजन्दर्शयति—*अधीगर्थेति सूत्र इति*। *बहुवचनेति*। अधिकरणस्य सङ्ग्रहे हि बहुवचनं युक्तम्भवतीति भावः। स्वसिद्धान्तमाह—वस्तुतस्त्विति। सूत्रोपात्तेति। यद्यप्येवमानुपूर्वी भाष्ये वार्त्तिकस्य नास्ति।

सकर्मकाणाकर्मवद्वचनम्" इति वार्तिकप्रत्याख्यानाय शेष इति
तेत इतिभाष्यकृतोक्ते, परेण "शेषश्च कः" इति पृष्टे "शेषे षष्ठी"
(पा०सू० २।३।५०) इति सूत्रोक्तं "कर्मादीनामविवक्षा शेष" इति
सिद्धान्तिना स्मारितं नैतावता "कृत्वोऽर्थ" (पा०सू० २।३।६४) इत्यत्र

---

तथापि कैयटीयव्याख्यानवशात्फलतीति प्रकृते एवमुक्तम् । तथाहि ।
अधीगर्थेति सूत्रे 'कर्मादिष्वकर्मकवद्वचनम् । कर्मादिष्वकर्मकवद्भावो व-
क्तव्यः । किम्प्रयोजनम् । अकर्मकाणाम्भावे लो भवतीति भावे लो यथा
स्यात् । मातुः स्मर्यते । पितुः स्मर्यते' । एतद्वार्त्तिके कर्मादिष्वित्यत्रादि-
शब्दः कर्मव्यतिरिक्तस्याभावादनुपपन्न इत्याशङ्कानिवारणायाह कैयटः
आदिशब्दोऽत्राश्रयवाचीति । यथा—

विष्णुरादिः पृथासूनोर्भीष्मादिश्च सुयोधनः ।
ते जयन्ति रणे शत्रून्येषां विष्णुः समाश्रयः ॥

इति । तेन कर्माश्रयाः द्वितीयाविधिनिमित्तभावेनोपात्ताः सकर्मका
अधीगर्थादयः प्रेष्यब्रूपर्यन्ताः कर्मादिशब्देनोच्यन्ते । *द्वितीयाविधिनिमि-
त्तभावेनेति* । अत्र द्वितीयाशब्दो लक्षणया द्वितीयापवादषष्ठीपरः । तेन
षष्ठीनिमित्तभावेनेति फलितम् दिवुधातुविषये विभाषोपसर्गे "द्वितीया
ब्राह्मणे" इतिसूत्रद्वयारम्भाच्छेषपदासम्बन्ध इत्यतो वार्त्तिकारम्भः । 'त-
र्हि वक्तव्यन्न वक्तव्यम् । अविवक्षिते कर्मणि षष्ठी भवतीति । किं वक्त-
व्यमेतत् । न हि । कथमनुच्यमानं गंस्यते । शेष इति वर्त्तते । शेषश्च कः ।
कर्मादीनामविवक्षा शेषः । यदा च कर्म विवक्षितम्भवति तदा षष्ठी न
भवति । स्मराम्यहम्मातरम् । स्मराम्यहम्पितरम्' इति भाष्ये उक्तम् ।
अत्राविवक्षिते कर्मणीत्यनेनाकर्मकत्वाद्भावे लादयः सिद्धा भवन्तीति द-
र्शितम् । ततोऽविवक्षितकर्मकत्वेनाकर्मकत्वप्रदर्शनाय शेषपदानुवृत्तिः
प्रदर्शिता । *शेष इति वर्त्तते इति* । नन्वेवं षष्ठी शेष इति सूत्रेणैव
षष्ठ्यां सिद्धायामेतत्प्रकरणं व्यर्थमत आह कैयटः 'प्रकरणञ्चेदं समास-
प्रतिषेधार्थम्' इति । अत्र प्रकरणपदोपादानेन मण्डूकानुवृत्तेरयुक्तत्वा-
त्सर्वत्र शेषपदसम्बन्ध इति दर्शितम् । *स्मारितम्* । यथा षष्ठी शेष
इति सूत्रे कर्मादीनां क्रियाकारकभावेन सम्बन्धमविवक्षितं कृत्वा सम्ब
न्धित्वमात्रविवक्षया षष्ठी भवतीत्युक्तन्तथेहापि कर्मादीनामविवक्षया
भावे लादयो भविष्यन्तीति दर्शितमित्यर्थः । कर्माश्रयषष्ठीविषय इत्यने-
नाधीगर्थेत्यादिदिवस्तदर्थस्येतिसूत्रसमुदायो गृह्यते । *नैतावतेति* ।
षष्ठी शेष इतिसूत्रवदत्रापि सूत्रे आदिशब्द उपात्त इति भावः ।

तत्संबन्धो लभ्यते । किं चैतद्भाष्यबलात् "दिव" (पा०सू०२।३।५८) इति सूत्रे ऽपि शेषपदसम्बन्ध आवश्यकः। अन्यथा वार्तिकरीत्या 'शतस्य दीव्यते' इति भावे इष्टस्य प्रयोगस्यासिद्धिः । अत एव वार्तिकव्याख्यायाम् "अधीगर्थादयः प्रेष्यब्रूपर्यन्ताः कर्माश्रयपदेनोच्यन्ते" इति कैयटः । एवञ्च शेषइत्यनुवृत्त्या वार्तिकप्रत्याख्यानवदेतत् सूत्रद्वयप्रत्याख्याने एव भाष्यतात्पर्यम् । "द्वितीयाब्राह्मणे" इति सूत्रस्थभाष्यमपि वार्तिकरीत्येत्याहुः ।

किञ्च "यदा कर्म विवक्षितं भवति तदा षष्ठी न भवति "स्मराम्यहं मातरम्" इति भाष्ये उक्तम् । त्वद्रीत्या तु यदा कर्मापि विवक्षितं भवतीति वदेत् । एवञ्च "ज्ञो ऽविदर्थस्य" (पा०सू०२।३।५१) इत्यत्रापि तदसम्बन्ध एव । एवञ्च तद्योगे न कदापि तृतीया 'श

---

प्राचीनव्याख्यायान्दोषमप्याह—*किञ्चेति* । *एतद्भाष्यबलादिति* । अव्यवहितोक्तभाष्यबलादित्यर्थः । *अन्यथेति* । दिव इति सूत्रे शेषपदासम्बन्ध इत्यर्थः । *वार्त्तिकरीत्येति* । तत्र हि यतः कर्मादिवत्कर्मकवद्वचनम् इत्युपात्तम् । अत्र कैयटेन प्रेष्यब्रूपर्यन्ता इत्येवोक्तम् कृत्वोऽर्थप्रयोग इत्येतत्पर्यन्तामिति तेन कृत्वोर्थ इतिसूत्रे शेषपदासम्बन्धो लभ्यते । दिव इति सूत्र शेष इत्यस्य सम्बन्धे इदमेव भाष्यं मानम् । दिव इति सूत्रस्यापि तन्मध्यपाठात् । अत्र प्रेष्यब्रूपर्यन्त इत्युपादानेन कटिर्यन्त वास इत्यत्रेवाग्रे शेषपदासम्बन्ध इति स्पष्टमेव लभ्यते । *एतत्सूत्रद्वयेति* । 'विभाषोपसर्गे" । "द्वितीया ब्राह्मणे" इतिसूत्रद्वयेत्यर्थः । नन्वेवं "द्वितीया ब्राह्मणे" इति सूत्रभाष्ये 'गामस्य तदहः सभायान्दीव्येयुः' इत्यत्र शेषपदासम्बन्धेन दिव इति सूत्रेण प्राप्तषष्ठीबाधनार्थमेतत्सूत्रमित्युक्तन्तस्य का गतिरित्यत आह—*द्वितीयाब्राह्मण इतीति* ।

*वार्त्तिकरीत्येति* । वार्त्तिककारेण हि शेषपदानुवृत्तिर्नोक्ता किन्त्वकर्मकवद्भाव एवोक्त इति भावः । सिंहावलोकनन्यायेनाह—*किञ्चेति* । *एवञ्च* । पूर्वोक्तव्यवस्थासिद्धौ च । *तदसम्बन्धः* । "ज्ञोऽविदर्थस्य" इति सूत्रे शेषपदासम्बन्धः । तथा सति यत्फलितन्तदाह—*एवञ्चेति* । *तद्योगे* । अज्ञानार्थकजानातियोगे । *शतन्दीव्यतीत्यादि चेति* । "दिवस्तदर्थे" इति सूत्रे पूर्वोक्तरीत्या शेषपदसम्बन्धे सिद्धे यदा सम्बन्धित्वेन विवक्षा तदा षष्ठी, यदातु कर्मत्वशक्तिमत्त्वेन विवक्षा

दीव्यति' इत्यादि च सिद्ध्यति, 'अधीगर्थ' इत्यादौ च मण्डूकानुवृत्ति-
रिति सुधियो विभावयन्तु ॥

कर्तृकर्मणोः (पा०सू०२।३।६५) । अत्र शेष इति न संबद्ध्यते
सूत्रवैयर्थ्यापत्तेः । 'कृद्योगा षष्ठी समस्यते' इति वार्तिकेन तत्र स-
मासस्येष्टत्वात् । कृतिरिति । भावे क्तिन् । कृष्णः कर्ता । जगत
इति । कर्मेदम् । कर्तृसाहचर्यात् कर्मापि धात्वर्थे भेदेनान्वययेव
गृह्यते । तेन 'स्तोकं पाकः' इत्यादौ न क्रियाविशेषणात् षष्ठी । किंच
क्रियाविशेषणेन 'स्तोकम्पाचकः' इत्यादौ न समानाधिकरणसमासो
नापि सुप्सुपेत्यादिः । सुबन्तार्थविशेष्येणान्वयेनासामर्थ्यात् । "द्विती-

---

यया द्वितीयेति रूपद्वयसिद्धिरिति भावः । ननु ज्ञोविदर्थेति सूत्रे शेषपदा-
सम्बन्धेऽधीगर्थेति सूत्रे कथं शेषपदसम्बन्धो भाष्य उक्त इत्यत आह—
*अधीगर्थेत्यादाविति* ।

"कर्तृकर्मणोः कृति" अत्र सूत्रे शेषपदासम्बन्धे साधकमाह—*सूत्रवै-
यर्थ्यापत्तेरिति* । "षष्ठी शेषे" इति सूत्रेणैव तस्याः सिद्धेः । नन्विदं सूत्र-
मपि ज्ञोऽविदर्थस्येति सूत्रवत्समासनिवृत्तिफलकम्भविष्यतीत्यत आह—
*कृद्योगा षष्ठीति* । *कर्तृसाहचर्यादिति* । कर्तृपदार्थो यथा नाभेदेन
क्रियान्वयी तथा भेदेनतरसम्बन्धावच्छिन्नविशेषणविशेष्यभावेन क्रिया-
न्वयि यत्कर्म तद्बोधकमेव कर्मपदमिति भावः । *स्तोकम्पाक इति* ।
फलस्य व्यपदेशिवद्भावेन फलाश्रयतया कर्मत्वेन तत्राभेदेनान्वितो यः
स्तोकपदार्थः सोऽपि कर्मैवेति भावः । अत्र विशेषमाह—*किञ्चेति* ।
*असामर्थ्यादिति* । सुबन्तार्थविशेषान्वये समाससंज्ञाविधायकतया
तयोश्चारितार्थ्यादिति भावः ।

ननु 'स्तोकम्पाक' इत्यत्रैव समासाभावे प्रदर्शनीये 'स्तोकम्पाचक'
इति प्रयोगान्तराभिधानं किमर्थमिति चेन्न । 'ओदनस्य पाचक' इत्यत्र
"तृजकाभ्याम्" इतिसूत्रोदाहरणविषये यथा षष्ठी क्रियाविशेषणवाचका-
द्भवति तथा 'स्तोकम्पाचक' इत्यत्रापि स्यादिति शङ्कावारणाय प्रयोग-
न्तराभिधानस्य कृतत्वात् । षष्ठी तु 'स्तोकम्पाक' इत्यत्रेव 'स्तोकम्पाच
क' इत्यत्रापि धात्वर्थेऽभेदेनान्वयान्न भवतीति पूर्ववत् यद्यपि सम्भवति
तथापि वार्त्तिकविरोधादपि न भवति । अत एव वक्ष्यति—*एतदेव भा-
ष्यमित्यादि* । ननु कष्टं श्रितः 'कष्टश्रित' इत्यत्रापि सुबन्तार्थविशेष्येण
श्रयणकर्त्रा कष्टमित्यस्यानन्वयात्कथं समास इत्याशङ्कायामाह—*द्विती-

।७श्रित" (पा०सू०२।१।२४) इत्यादेस्तु सामर्थ्यादवयवद्वारके सामर्थ्ये प्रवृत्तिः। द्वितीयाप्रकरणोक्तपरेतुमतरीत्या वा सामर्थ्यम्। अत एव "पूजनात्पूजितम्" (पा०सू०८।१।६७) इति सूत्रे दारुणं यथा भवति तथाऽध्यापक इत्यर्थकस्य 'दारुणाध्यापकः' इत्यस्य सिद्ध्यर्थं मलोपवचनमारब्धं भाष्ये। अन्यथा समासेन सिद्धे तद्व्यर्थं स्यात्। एतदेव भाष्यं ततः षष्ठ्यभावेऽपि मानम्। अन्यथा षष्ठीसमासस्य "तृजकाभ्यां कर्तरि" (पा०सू०२।२।१५) इत्यादिनिषेधेऽत्रोक्तसामर्थ्येऽपि प्रवृत्त्या तत्समासेनैव सिद्धौ मलोपवचनं व्यर्थमेव स्यादिति बोद्ध्यम्। न च भिन्नपदत्वेऽपि तथा प्रयोगसाधुत्वार्थं मलोपवचनमिति वाच्यम्। तथा सति वाक्ये मलोपश्च वक्तव्य इति वदेत्। अत एव कैयटेन 'क्रियाविशेषणं दारुणादयस्तत्र वैयधिक-

या श्रितेत्यादेस्त्विति*। सामर्थ्यात्-सूत्रारम्भसामर्थ्यात्। *उक्तरीत्या*। यथा प्राप्तोदकेत्यत्र वृत्तिविग्रहवाक्ययोः समानार्थत्वोपपत्तये प्राप्तिकर्तृककर्मेति बोधः स्वीक्रियते तथा श्रयणकर्त्तरि कष्टेतिकर्मणो द्वितीयान्तार्थस्यान्वयेन कष्टकर्मकाभिन्नश्रयणकर्त्ता इत्यर्थकल्पनं सुबन्तार्थविशेषणाप्यन्वयो वक्तुं शक्य इति भावः।

उक्तेऽर्थे भाष्यसम्मतिमप्याह-*अत एवेति*। तेनान्वयाभावेन समासाभावादेव। *भाष्य इति*। "पूजनात्पूजितम्" इत्येतावदेव सूत्रमित्याशयेन वार्त्तिककारेणोक्तम् "पुजितस्यानुदात्तत्वे काष्ठादिग्रहणम्" पूजितस्यानुदात्तत्वे काष्ठादिग्रहणङ्कर्त्तव्यम्। काष्ठादिभ्यः पूजनादिति वक्तव्यम्। इह मा भूत्। शोभनोऽध्यापकः। मलोपवचनञ्च। दारुणाध्यापकः। दारुणाभिरूपकः'। तत्र कैयटः। 'क्रियाविशेषणं दारुणशब्दो द्वितीयान्तो यथा ग्रामं गत इत्यादौ गुणभूताया अपि क्रियायाः साधनेन योगस्तथा विशेषणेनापि तत्र वैयधिकरण्यात्समासाभावान्मलोपो विधीयते। दारुणाभिरूपक इति। आभिरूप्यं दारुणशब्देन विशेष्यत इति दारुणशब्दस्य नपुंसकत्वस्पूर्ववत्समासाभाव' इति। *अन्यथा*। एतादृशविशेषणवाचकादपि षष्ठीस्वीकारे। *उक्तसामर्थ्येपि*। अवयवद्वारकसामर्थ्येऽपि। षष्ठीसमासस्य वैकल्पिकत्वात्तदभावे दारुणाध्यापक इत्यस्य सिद्ध्यर्थम्मलोपवचनमस्त्विति शङ्कते—*न चेति*। स्पष्टप्रतिपत्त्यर्थं वाक्यग्रहणे कर्त्तव्ये तदकरणात्समासार्थमेतत्स्यात् तथा च वचनं व्यर्थमेव स्यादित्याशयेन समासप्राप्तिविषयकमेव तद्वचनमित्याशयेन समाधानमाह-*तथा सतीति*। *अत एव*। वैयधिकरण्येन समासप्राप्ति-

स्याद् समासाभावात् मलोपो विधीयते' इत्युक्तम् । सुप्सुपेत्यादिस-
मासो न सार्वत्रिक इति तदाशय इत्यलम् ।

कृति किमिति । कर्तृकर्मभ्यां क्रिया सन्निधाप्यते तद्वाची तु
धातुरेव । कारकान्वययोग्यतावच्छेदकरूपेण साध्यत्वेन धातुभिरेव तदु-
पस्थितेः । 'शत्योऽश्वः, आभ्रिक' इत्यादौ तद्धितान्न तेन रूपेणो-
पस्थितिरिति, न तत्र कारकाणामन्वयः । एतत् भाष्यप्रामाण्यात् ।
अत एव हिरुगादियोगे न कर्मादिसंज्ञा । एतेन 'देवदत्तेन शत्योऽ-
श्वः' इत्यादौ षष्ठीनिवृत्त्यर्थं कृद्ग्रहणमित्यपास्तम् । 'अधिका खारी
द्रोणेन' इत्यत्र हेतौ तृतीया । क्रियायोगाभावात् कर्तुः कर्तृत्वाभावे
जनकत्वरूपहेतुत्वसत्त्वात् । धातोश्च द्वये प्रत्ययास्तिङः कृतश्च । तत्र

---

त्मकत्वादेव । ननु वैयधिकरण्येऽप्यवयवद्वारकसम्बन्धमादाय सुप्सुपेति
मयूरव्यंसकेति वा समासोऽस्त्वित्यत आह—*सुप्सुपेत्यादीति* ।
*तदाशय:* । तद्भाष्याशयः ।

परमतखण्डनपूर्वकम्प्रश्नबीजन्दर्शयति—*कर्तृकर्मभ्यामिति । *धातु-
रेवेति* । अत्रैवकारेण प्रातिपदिकव्यवच्छेदः । ननु 'शत्य आभ्रिक' इत्या-
दिशब्दानां क्रयणखननादिरूपक्रियोपस्थापकत्वमस्त्येवेत्यत आह—*श-
त्योऽश्व* इति । *तेन रूपेण* । साध्यत्वेन । अत एव देवदत्तेन शत्यो-
ऽश्वः चैत्रो भूमिमाभ्रिक इति न प्रयोगः । *एतद्भाष्येति । कृतपूर्वी कटम्
भुक्तपूर्वी ओदनमिति विलक्षणस्थल एव कृतीत्यस्य प्रयोजनप्रदर्शन-
परभाष्यप्रामाण्यादित्यर्थः । *अत एव* । धातुन एव कारकान्वयितावच्छे-
दकसाध्यत्वेनोपस्थितिसत्त्वादेव । *एतेन* । उक्तप्रकारेण ।

नन्वध्यारूढमित्यर्थेऽधिकमिति सूत्रेणाधिकशब्दस्य व्युत्पादनादस्म-
न्मते 'अधिका खारी द्रोणेन' इति प्रयोगोपपत्तिर्भवति । यदि धातुत एव
तेन रूपेणोपस्थितिरिति नियमो भवन्मते तदा कथन्तादृशप्रयोग इत्यत
आह—*अधिकेति* । ननु कृतो ये कर्तृकर्मणी तत्र षष्ठीत्येवं व्यवस्थार्थं
कृद्ग्रहणमस्त्वित्यत आह—*धातोश्च द्वय इति* । तदुक्तम्भाष्ये 'तस्य
तर्ह्यर्थन्तर्हि कृद्ग्रहणङ्कर्त्तव्यम् । कृतो ये कर्तृकर्मणी तत्र यथा स्यात् ।
तद्धितस्य ये कर्तृकर्मणी तत्र मा भूत् । नैतदस्ति प्रयोजनम् । धातोर्हि द्वये
प्रत्यया विधीयन्ते तिङः कृतश्च तत्र कृत्प्रयोग इष्यते तिङ्प्रयोगे प्रति-
षिध्यते' इति । अत्र द्वये प्रत्यया इति भाष्यप्रयोगादेव द्वय इत्यस्य साधु-
त्वम् । ननु कृतीत्येतदुत्तरसूत्रेऽनुवर्त्य कृति अव्ययेनेतिवचनव्यक्त्याऽकृ-

तिङ्योगे "नलोक" (पा०सू०२।३।६९) इति निषेधात् कृद्योगे एव भविष्यतीति किं तेन। 'नलोक' सूत्रे कृदव्ययस्यैव ग्रहणं तु 'अव्ययार्थस्य ये कर्तृकर्मणी' इति व्याख्यानेन सिद्धम्। 'उभयप्राप्तौ' (पा०सू०२।३।६६)इत्यत्र बहुव्रीहिस्तु "एकाचो द्वे" (पा०सू०६।१।१) इत्यादाविवान्यपदार्थस्याशाब्दत्वे ऽपि व्याख्यानाद्भविष्यति। न च 'भेदिका देवदत्तस्य काष्ठानाम्' इत्यादौ गुणभूते णिच्प्रकृत्यर्थकर्तरि षष्ठ्यर्थं करोतीति कृदिति कर्तृपरं तादिति वाच्यम्। तृतीयावत्तत्र षष्ठ्या अपि विनैव यत्नसिद्धेरिति प्रश्नः।

तद्धिते इति। तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषय-

---

दव्ययनिरासार्थन्तदास्त्वित आह—*न लोकेतीति*। ननु "उभयप्राप्तौ" इति सूत्रे ऽन्यपदार्थलाभार्थं कृतीत्यस्त्वित्यत आह-*उभयेति*। *व्याख्यानादिति*। 'ओदनस्य पाको ब्राह्मणानाम्प्रादुर्भाव' इत्यादौ भिन्नक्रियाकर्तृकर्मवाचकशब्दप्रयोगे उभयत्र षष्ठीदर्शनमूलकव्याख्यानादित्यर्थः। अयञ्च प्रयोगोऽत्रैव भाष्ये दृश्यते।

भाष्ये एकदेशिनोक्तं कृतीत्यस्य प्रयोजनं खण्डयितुमाह—*न च भेदिकेत्यादि*। भेदिकेत्यत्र भिदेर्ण्यन्तात्पर्यादिषु ण्वुच्। अत्र णिजर्थव्यापारस्य प्राधान्यात्प्रयोजककर्त्ता प्रधानम्। प्रकृत्यर्थस्य त्वप्राधान्यात् प्रयोज्यकर्ताऽप्रधानमिति प्रधानाप्रधानसन्निधौ प्रधाने एव कार्यमिति न्यायेनाप्रधानान्न स्यादित्याशयः। *कर्तृपरमिति*। एवञ्च वाक्यभेदेन कृति कर्त्तरि यत्तस्मादित्यर्थो भविष्यतीति भावः। अत्राप्रधानस्य "गतिबुद्धि" इति सूत्रस्य नियमार्थत्वान्न कर्मत्वम्। *तृतीयावदिति*। यथा देवदत्तेन यज्ञदत्तेन पाच्यते तण्डुल इत्यत्रानुक्तयोर्भिन्नपदवाच्ययोः कर्त्रोः तृतीया विरोधाभावाद्भवति तथा प्रकृतेऽपि भविष्यतीति भावः।

कृतीत्यस्य प्रयोजनमाह—*तद्धित इतीत्यादिना*। तद्धिते मा भूदित्यस्य कृदन्तात्तद्धिते सति मा भूदित्यर्थः प्रतीयते, स त्वयुक्तस्तण्डुलानाम्पाचकतर इत्यत्र षष्ठीदर्शनादत आह-*तद्धितान्तशक्तिग्रहमात्रेति*। कृदन्तशक्तिग्रहत्वावच्छिन्नकारणतानिरूपितो योपस्थितिवृत्तिकार्यता तदवच्छेदिका या विषयता तद्वत्क्रियाकर्तृकर्मणोः षष्ठीति पर्यवसितोऽर्थः। तादृशी च विषयता प्रत्ययार्थनिष्ठविशेष्यतानिरूपितप्रकारतारूपा बोध्या। एतच्च "कृतो ये कर्तृकर्मणी तत्र यथा स्यात्तद्धितस्य ये कर्तृकर्मणी तत्र मा भूदिति कृतपूर्वी कटम, भुक्तपूर्वी ओदनमिति" इति भाष्याल्लभ्यते। कृतपूर्वीत्यत्र यथा तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थिति

क्रियायाः कर्त्तरि कर्मणि च मा भूदित्यर्थः । उदाहरणे सकर्मकप्रकृतिकभावक्तान्तस्येदृशवृत्तिमात्रविषयताया भाष्यसंमतत्वेन तस्य केवलस्य क्वाऽप्यप्रयोगेण तद्धितान्तसमुदायशक्यैव क्रियोपस्थापकत्वात् । कृद्ग्रहणात्कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियाकर्तृकर्मणोर्ग्रहणम् , न चात्र तथा । 'तण्डुलानां पाचकतरः' इत्यादौ च पाचकादेः पृथक्प्रयोगेण तच्छक्तिग्रहस्यापि सत्त्वेन कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयत्वं क्रियाया अस्त्येवेति भवत्येव षष्ठी । अत एव तद्धिते मा भूदित्येवोक्तम्, न तु तद्धिताधिक्येऽपीति । भाष्येऽपि तद्धितस्य ये कर्तृकर्मणि तत्र मा भूत्कृतो कर्तृकर्मणी तत्रैव यथा स्यादित्येवोक्तम् ।

कृतपूर्वीति । अत्र कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाविवक्षयाऽकर्मकत्वाद्भावे क्ते "पूर्वादिनिः" (पा०सू०५।२।८६) इति तद्धितः तदनन्तरं तु विशेषरूपेण कर्मयोगो भवत्येव तत्रोक्तरीत्या षष्ठ्यभावे ऽनभिहितत्वाद् द्वितीया एवं रीत्या साधुत्वे ऽत्रत्यभाष्यमेव मानम् । वृत्तेः पूर्वं कर्मान्वयाभावाच्च सापेक्षत्वाद् वृत्तिर्न स्यादिति न

---

विषयक्रियानिरूपितङ्कर्मत्वन्तदुपपादयति—*उदाहरण इति* । अत्र सकर्मकेत्यभिधानेन प्रसिद्धरीत्या भावे क्तप्रत्ययस्य भवने भाष्यीयप्रयोगातिरिक्तत्वभावः सूचितः । *तस्य* । भावक्तान्तस्य । *क्वाप्यप्रयोगेण* । अस्योपदर्शितवृत्त्यतिरिक्तवाक्य इत्यादिः । *कृदन्तशक्तिग्रहप्रयोज्येति* । कृदन्तशक्तिग्रहमात्रप्रयोज्येत्यर्थः । *न चात्र तथा* । न चात्र कृदन्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियानिरूपितङ्कर्मत्वम् । यथा 'तण्डुलानाम्पाचक' इति वाक्यघटकस्य पाचक इत्यस्य वृत्त्यघटकस्य पाककर्त्तरि शक्तिग्रहे सति तद्ग्रहशक्तिग्रहप्रयोज्या या पाककर्त्तुरुपस्थितिस्तस्याम्प्रकारतया भासमाना या पचिक्रिया तन्निरूपितकर्मत्वस्य तण्डुलपदार्थे सत्त्वाद्भवति तत्र षष्ठी । *अत एव* । यथाश्रुतात्तद्धित इति वाक्यात्प्रतीयमानस्यार्थस्याऽनभिप्रेतत्वादेव ।

नन्वस्य केवलस्य कृदन्तस्य कथन्न प्रयोग इत्यत्राह—*अत्र कर्मविशेषस्येति* । *भावे क्त इति* । अविवक्षितकर्मणोऽप्यकर्मकपदेन ग्रहणेष्टत्वाद्भावे क्त इत्यर्थः । ननु प्रागन्वयाविवक्षायामपि कृतेत्यस्य कर्माकाङ्क्षायाः सत्त्वेन सापेक्षत्वेनासामर्थ्यात्कथं वृत्तिरित्यत आह—*वृत्तेः

शक्यम् । एवम् 'अधीती व्याकरणे' इत्यादावपि बोध्यम् । तदुक्तं भाष्ये—"यदा वाक्यं न तदा प्रत्ययः यदा प्रत्ययः सामान्येन तदा वृत्तिरिति । न तदा प्रत्ययः—न तदा भावे प्रत्ययः । धातोः सकर्मकत्वात् । यदा प्रत्ययः भावे इति शेषः । तदा वृत्तिरेव । सा च वृत्तिर्न कदापि कर्मक्तान्तेनेत्याह—सामान्येनेति । कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाविवक्षाविशिष्टो योऽर्थः तदर्थकधातुप्रकृतिकक्तान्तेनेत्यर्थः । इयमेव कर्मणोऽविवक्षा नाम । अनेन तादृशक्तान्तस्य वाक्ये न प्रयोग इति स्पष्टमेवोक्तम् । प्रयोगानुरोधिनी हि विवक्षेति तद्भावः । न चाविवक्षितकर्मतया भावे क्तसाधनयत्नो व्यर्थः, 'नपुंसके भावे' (पा०सू०३।३।११४) इत्यनेन सकर्मकेभ्योऽपि सिद्धेरिति वाच्यम् । तस्याऽप्यकर्मकेभ्य एवेष्टत्वात् । अत्र चेदमेव भाष्यं मानम् ।

ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम् ।

लिम्पैरिव तनोर्वातैश्चेतयन् स्याज्ज्वलो न कः' इति ।

भट्टिपद्यं मादृग्भ्यो दुःखं ददद्भिरुत्तममामोदं पुष्पादीनां गृहीत्वा मादृशां दत्तस्य दुःखस्य पोषकैर्मादृशां शरीरं लिम्पद्भिरिव वातैः को मादृक् विरहाग्निव्याप्तश्चेतयन् ज्वलः ज्वलन्निव न स्या-

---

पूर्वमिति* । *इत्यादावपीति* । अन्यथा तत्रापि कर्मण्येव क्त प्रत्ययः स्यात्तथा च कर्मणोऽनभिहितत्वाभावेन क्तस्येन्विषयस्येति सप्तमी न स्यादिति भावः । *योऽर्थ इति* । करणादिरूप इत्यर्थः । *स्पष्टमेवोक्तम्* । भाष्यकृतेति शेषः । *तद्भाव इति* । भाष्यकृद्भाव इत्यर्थः । न चात्र निष्ठान्तार्थभूता या क्रिया तन्निरूपितकर्मत्वसत्त्वान्न लोकेति निषेधस्य प्राप्तिरिति कथं षष्ठ्यापादनमिति वाच्यम् । तस्यापि पूर्वोत्तरसाहचर्येण प्रत्यासत्त्या च निष्ठान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्मत्वविशिष्टे षष्ठी नेत्यर्थकल्पनात् । अत्रापि निष्ठान्तशक्तिग्रहजन्यतावच्छेदकतादृशप्रकारतामादाय परिष्करणीयम् । तेन दैत्यान् हतवत्तरामितिविशिष्टजन्योपस्थितिमादाय नाव्याप्तिः ।*तस्याप्यकर्मकेभ्य इति* । "नपुंसके भावे क्त" इतिसूत्रविहितक्तस्येत्यर्थः । *अत्र* । एतादृशेष्टौ । *इदमेव भाष्यम्* । यदा वाक्यमित्यादि भाष्यम् । भट्टिपद्ये 'ददैर्दुःखस्य' इत्यत्रानेन सूत्रेण चेद्दुःखपदादनभिहितकर्मवाचकत्वेन षष्ठी तदा 'धायैरामोदम्' इत्यत्रापि कुतो नेतिशङ्कानुत्थाना-

इति तदर्थः । दाधातोः पोषणार्थात् धाञश्च "ददातिदधात्योः" (पा० सू०३।२।१३९) इति शणौ, लिम्पेः शः' 'ज्वलेर्णः' इति । जयगङ्गा श्लोकव्याख्याऽप्येतज्जातीयैव तत्रेति दिक् । तत्र 'धायैरामोदमुत्तमम्' इत्यत्र गृहीत्वेत्यध्याहृत्य तद्योगे द्वितीया बोद्ध्या ।

उभयोः प्राप्तिर्यस्मिन्निति । तेनैकनिमित्तत्वलाभात् 'ओदनस्य पाको' 'ब्राह्मणानाञ्च प्रादुर्भाव' इत्यादौ विभिन्नक्रियाकर्तृकर्मणोः षष्ठीप्राप्तौ नायं नियम इति भावः । प्राप्तिपदेन चोभयोः प्रयोग एवायं निषेध इति ध्वनितम् । स्त्रीप्रत्यययोरिति । "स्त्रियां क्तिन्" (पा०सू०३।३।९४) इत्यधिकारविहितयोरित्यर्थः । नायं नियम इति । तेनोभयत्रापि षष्ठी भवत्येवेति भावः । भेदिकेति । धात्वर्थनिर्देशे ण्वुल्, सन्नन्ताद्भिदेः "अप्रत्ययात्" (पा०सू०३।३।१०२) इत्यकारप्रत्ययः । शेष इति । नियमस्यायं विकल्पः । 'इत्येके' इत्येतल्लब्धमर्थं स्पष्टप्रतिपत्तये आह—केचिदिति । अकारभिन्ने कृन्मात्रे इत्यर्थः । अनुशासनमिति । अनुशिष्यन्ते ऽसाधुभ्यो विविच्य बोद्ध्यन्ते येनेति करणे ल्युट् ।

---

ह—*ददेर्दुःखस्येति* । *गृहीत्वेति* । एवञ्चामोदमिति न धायैरित्यस्य कर्मेति न षष्ठीप्राप्तिरिति भावः । एवञ्च दुःखस्येत्यस्य देहलीदीपकन्याये नोभाभ्यामन्वयान्नोभयत्र कर्माकाङ्क्षेति भावः ।

*ज्वलेर्णः* । कर्त्तरीति शेषः । अत एव क इत्यत्र प्रथमा । अत्र ज्वलेर्ण इत्याभिधानञ्च ज्वल इतिणप्रत्ययेन साधनीयमित्यभिप्रायेण । किन्त्वस्य वैकल्पिकतया एतदभावे पचाद्यजित्यभिप्रायेण । एतदभिधानन्तु तस्यानेन स्मरणार्थमेव । अत्र "नपुंसके भावे क्त" इति सूत्रविहितस्य क्तस्याप्यकर्मकेभ्य एव प्रवृत्तिरितीष्टिबलादेवेति न भ्रमितव्यम् । किन्तु "तयोरेव" इति सूत्रे 'भावे चाकर्मकेभ्य" इत्यनुवर्त्तते । तच्च वाक्यभेदेन सम्बध्यते । चशब्दस्त्वर्थे । एवञ्च कृत्यादयस्तयोरेव । भावे तु अकर्मकेभ्य एवेति द्रष्टव्यम् ।

*तेन* । उभयोः प्राप्तिर्यस्मिन्नितिबहुव्रीहिसमासाश्रयणेन । *प्रादुर्भाव इति* । अस्याश्चर्यमेतदिति शेषः । *प्रयोग एवेति* । प्रयुज्यमानादेव प्राप्तिर्भवतीति भावः । स्पष्टप्रतिपत्तये आह—*स्त्रियामिति* । भ्रमनिवारणायाह—*नियमस्येति* । *केचिदितीति* । तथा च "शेषे विभाषा" इत्यस्यायमेव मुख्योऽर्थ इति ध्वनितम् । *करणे ल्युडिति* ।

मत इत्यादौ "मतिबुद्धि" (पा०सू०३।२।१८८) इति वर्तमाने क्तः।

इदमेषामिति। कर्तरि षष्ठी। सकर्मकेभ्यस्त्वधिकरणे क्ते कर्तृकर्मणोर्द्वयोरपि षष्ठी, इदमेषां भुक्तमोदनस्य। "उभयप्राप्तौ" (पा०सू०२।३।६६) इति तु मध्येऽपवादन्यायेन "कर्तृकर्मणोः" (पा०सू०२।३।६५) इत्यस्यैव नियम इति सिद्धम्॥

न लोका (पा०सू०२।३।६९)॥ लादेशा इति। लकारसंबन्धिन इत्यर्थः, तेन 'दादिर्गाः' इति सिद्धम्। केवललस्य क्वापि प्रयोगाभावादेवं व्याख्यातम्। कुर्वन्निति। तृन् प्रत्याहारघटकस्तु नायम्। तृशब्दस्य तद्घटकत्वेऽपि शतुस्तद्घटकत्वाभावात्। लिडादेशकस्वादियोगे लिट्सदृशकिकिनोर्योगे च निषेधार्थं तस्यावश्यकत्वाच्च। उ इति। उकारेण व्याख्यानात्तदन्तविधिर्व्यपदेशिवद्भावेनोकारस्यापि। "सनाशंसेति" (पा०सू०३।२।१६८) 'अलङ्कृञ्

---

तेनाचार्यपदार्थस्यानुक्तत्वमस्तीतिशेषः।

ननूभयप्राप्ताविति नियमात्कथमोदनपदादत्र षष्ठीत्यत आह—*उभयेति*।

लादेश इत्यस्य लस्यादेश इति भ्रमनिवारणायाह—*लकारसम्बन्धिन इति*। एवाञ्चादेशशब्दस्य सम्बन्धिनि लक्षणेति भावः। *दादिर्गा इतीति*। अत्र "आदृगम" इतिसूत्रेण किकिनौ प्रत्ययौ। तयोश्च लिड्वद्भावविधानेव लिट्प्रयोज्यद्वित्वप्रयोजकत्वरूपसम्बन्धवत्तयाऽस्ति लकारसम्बन्धित्वमिति भावः। न च लान्तस्यैत्येवास्तु लस्य स्थाने आदेशे कृतेऽपि स्थानिवद्भावेन लत्वव्यवहारादिति वाच्यम्। अल्विधित्वेन तदसम्भवात्। नन्वादेशपदम्मूलेऽधिकमत आह—*केवलस्येति*। सुप्ति कुर्वन्कुर्वाणेत्यत्र तृन्ग्रहणेन निषेधसिद्धेरेतस्य लादेशोदाहरणत्वकथनमधिकमत आह—*तृन्प्रत्याहारेति*।

*तस्य*—लग्रहणस्य। अस्मिन् सूत्रे उकारोऽप्यत्र निर्दिश्यतइति भाष्यादुकशब्दात्पूर्वमुकारो बोध्यः। स च प्रत्ययसाहचर्यात्प्रत्ययरूपस्य शब्दस्वरूपस्य विशेषणम्। उकारोऽप्यत्र निर्दिश्यत इत्यत्र कारप्रत्ययस्य प्रयोगेण तस्य वर्णरूपत्वबोधनात्। वर्णग्रहणे च सर्वत्रेति तदन्तविधिः। तथा चोकारान्तो यः प्रत्ययस्तदन्तस्य योगे षष्ठी नेति फलितम्। तेन 'कन्यामलङ्करिष्णुः' इत्यादावपि निषेधसिद्धिः। उश्च उकश्च ऊकौ, लश्च ऊकौ चेत्यादिविग्रहः। *व्याख्यानादिति*। कन्यामलङ्करिष्णुरित्यादिप्रयोगद

(पा०सू०३।२।१३६) इति च उइष्णुचौ । घातुक इति । 'लषपत-पद' (पा०सू०३।२।१५४) इत्युकञ् वृद्धिस्तत्त्वम् । कर्मेरिति । उक्रान्तस्येति शेषः । इदञ्च भाषायामेव । भाषायामिति भाष्योक्तेः । निष्ठेति । एतदपवादतया भाष्ये वार्तिकं पठ्यते । "नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यानं छात्रस्य हसितम्" इति । इदञ्च प्रतिपदोक्तत्वात् 'नपुंसके भावे क्त' इति सूत्रविहितक्तान्तयोग एव । अत एव 'भ्रान्तं देशम्' इत्यादौ "गत्यर्थाकर्मक" (पा०सू०२।३।११२) इत्यनेन क्ते नानेन षष्ठी नपुसंके भावे क्तस्तु नात्र तस्याप्यकर्मकेभ्य एवेष्टेः । अविवक्षितकर्मतया ऽकर्मकत्वेन क्तस्तु 'कृतपूर्वी' इत्यादिवृत्तिविषय एवेत्युक्तम् । एवञ्चेह 'अहेःसृप्तम्' इत्यादौ परत्वेन "क्तोऽधिकरणे च" (पा०सू०३।४।७२) इत्यनेन भावे क्ते शेषत्वविवक्षयैव षष्ठीसाधनस्यावश्यकत्वेनेदं शेषत्वविवक्षया भाष्ये प्रत्या-

---

ख्यानमूलकाद्याख्यानादित्यर्थः । *उक्रान्तस्येतीति* । "उकप्रतिषेधे कमेर्भाषायामप्रतिषेध" इतिवार्त्तिकस्वारस्यात् । तेन लक्ष्मीङ्कामयमान इत्यत्र प्रतिषेधो भवत्येव । *एतदपवादतया* । निष्ठेत्यतदपवादतया । *अत एव* । तत्सूत्रविहितक्तान्तस्य ग्रहणादेव । *नात्र* । भ्रान्तन्देशमित्यादौ । *एवेष्टेरिति* । तद्बीजन्तूक्तम् । भ्रमधातुश्च सकर्मकस्तस्मान्नपुंसके भाव इत्यनेन क्तस्यासम्भवाद्गत्यर्थेत्यनेन भावे क्तप्रत्ययो यदा क्रियते तदा भ्रमणक्रियाकर्त्तृवाचकात्कर्त्तृकर्मणोरिति प्राप्तषष्ठ्या निष्ठेति निषेधो भवत्येवेति तृतीयैव भवतीति भावः ।

*एवञ्च* । पूर्वोक्तव्यवस्थासिद्धौ च । अकर्मकधातुविषये विशेषमाह—*अहेः सृप्तमिति* । अत्र सृप्धातोश्चलनमात्रमर्थः । *परत्वेन* । वार्त्तिकापरत्वेन । *शेषत्वविवक्षयैव* । कर्त्तुः शेषत्वविवक्षयैव । कर्तृकर्मणोरिति तु निष्ठेति प्रतिषिद्धम् । *भाष्ये प्रत्याख्यातमिति* । तत्र हि "क्तस्य च वर्त्तमाने नपुंसके भाव उपसंख्यानम् । क्तस्य च वर्त्तमाने नपुंसके भाव उपसङ्ख्यानङ्कर्त्तव्यम् । नटस्यभुक्तम् । छात्रस्य हसितम् । मयूरस्य नृत्तम् । कोकिलस्य व्याहृतम् " इति । अत्र क्तस्य च वर्त्तमान इत्यस्योपादानमस्मिन्वार्त्तिके क्तस्येत्यस्यानुवृत्तिसूचनाय । "नपुंसके भावे" इति विहितः क्तस्तु कालोदासीन एव एवञ्च कालोदासीनभावविहितक्तान्तेन योग एव निष्ठेतिनिषेधम्बाधित्वा नपुंसके भाव इति षष्ठी । यद्यप्यत्र कर्त्तुः शेषत्वविवक्षया सिध्यति । तथापि कर्त्तृत्वप्रकारकबोधे षष्ठ्यर्थमिदमि-

ख्यातम्। वार्तिकेन चानेन कारकषष्ठीनिषेधविषये शेषत्वविवक्षा नेति ज्ञाप्यते। शेषत्वविवक्षया भाष्योक्तैतत्प्रत्याख्याने तु अनभिधानात् क्तातिरिक्तविषये न सा। "पूरणगुण" (पा०सू०२।२।११) इति सूत्रे भाष्ये ध्वनितमिदम्। तत्र हि "सति किमुदाहरणं ब्राह्मणस्य कुर्वन् नैतदस्ति कारकषष्ठीनिषेधात्, शेषषष्ठ्या तु ब्राह्मणस्य कटमित्यर्थेनासामर्थ्यात्" इत्याद्यर्थकमुक्तमिति परे।

अधीयन्निति। "इङ्धार्योः शत्रकृच्छ्रिणि" (पा०सू०३।२।१३०) इति शता। द्विषन्निति। "द्विषोऽमित्रे" (पा०सू०३.२।१३१) इति शता। शेषषष्ठी त्विति। इदञ्चिन्त्यमित्युक्तं परैः॥

---

ति वार्त्तिककाराशयः। ततो भाष्ये पूर्ववार्त्तिकम्प्रत्याख्यातम्। 'शेषविज्ञानात्सिद्धम्। शेषलक्षणात्र षष्ठी भवति। शेष इत्युच्यते। शेषश्च कः। कर्मादीनामविवक्षा शेषः। सा चाविवक्षा सतोऽप्यविवक्षा भवति' इत्यनेन अकारेणोपपादिता।

*इदम्*। नपुंसके भावे इत्येतत्। विशेष वक्तुम्पुनराह—*वार्त्तिके नेति*। *एतदिति*। वार्त्तिकमित्यर्थः। *क्तातिरिक्तेति*। एतेन पदसंस्कारपक्षे 'भ्रान्तं देशम्' इत्यादौ चाविवक्षितकर्मकत्वेनाकर्मत्वाद्भावे भूते क्ते निष्ठान्तेन योगे षष्ठी नेति निषेधान्न षष्ठी किन्तु पुनः कर्मयोगेऽपि द्वितीयैवेति परास्तम्। एवंरीत्यास्य साधने पदसंस्कारपक्षमादाय कटङ्कृतमिति प्रयोगस्यापत्तेः। ननु वार्त्तिकारम्भप्रत्याख्यानयोः फलभेदाभिप्रायेण पुनर्भाष्ये शङ्कितम् 'यद्येवमुत्तरत्र चातुः शब्द्यम्प्राप्नोति। इदमहेः सुप्तम्। अत्राधिकरणे क्तः षष्ठी कर्त्तरि। इहाहिना सुप्तम्' अत्र भावे क्तः। इहाहिः सुप्तः अत्र कर्त्तरि। अहेः सुप्तमिति। अत्र भावे अत्र शेषे षष्ठ्यपि प्राप्नोति। वार्त्तिकारम्भे तु कोऽधिकरणे चेतिक्तविषये नपुंसके भावे क्त इत्यस्याप्रवृत्त्या वार्त्तिकेन कर्त्तरि षष्ठी न शेषत्वविवक्षायाश्च तन्मतेऽभाव एवेति त्रैशब्द्यमिति चेन्न। इहाहेः सुप्तङ्ग्रामस्य पार्श्वे ग्रामस्य मध्य इति इष्यत एव चतुः शब्द्यमिति अत्र 'ग्रामस्य पार्श्वे' इति सप्तम्युल्लेखेनाधिकरणस्यानभिहितत्वोपपत्त्यर्थम्भाव एव प्रत्ययो विधेयस्तदा वार्त्तिकेन कर्त्तरि षष्ठी स्यादेव, इहेत्यस्य विवरणं ग्रामस्य पार्श्वे इतीति फलभेदाभावात्। क्तातिरिक्त विषय इत्यनेनान्यत्र लादेशादिनिषेधविषये शेषत्वविवक्षाभावो बोधितः। तत्र साधकमाह-*पूरणेति*। *असामर्थ्यात्*। ब्राह्मणस्येत्यस्य स्वान्वययोग्यनामार्थेऽन्वयेनासामर्थ्यात्।

अकेनो (पा०सू०२।३।७०) ॥ अत्र यथासंख्यं नेष्यते। अकस्याऽऽधमर्ण्ये ऽसंभवादाह–भविष्यत्यकस्येति। वर्षशतस्य पूरक इत्यादौ 'एतत्कर्मकयाजनकर्तारः' इत्यर्थके "अङ्ग यजतां लप्स्यन्ते ऽस्य याजकाः" इत्यादौ च षष्ठी भवत्येव। कर्तृमात्रार्थके "ण्वुलतृचौ" (पा०सू०३।१।१३३) इति ण्वुलि पदान्तरसम्बन्धेन भविष्यत्प्रतीतावप्यकस्य तत्राप्रवृत्तेः "तुमुन्ण्वुलौ" (पा०सू०३।३।१०) इति ण्वुल् तु भविष्यतीत्यधिकृत्य विधानाद्भविष्यदर्थक एवेति भावः व्रजङ्गमीति। "गमेरिनिः" (उ०सू०) इत्यौणादिक इनिः। स च भविष्यति, "भविष्यति गम्यादय" (पा०सू०३।३।३) इत्युक्तेः। गामीति पाठे बाहुलकाद् वृद्धिः।

शतन्दायीति। "अवश्यकाधमर्ण्ययोः" (पा०सू०३।३।१७०) इति णिनिः, आवश्यके णिनावप्यये निषेधः। सूत्रे आधमर्ण्यपदेन तत्सूत्रोक्तार्थोपलक्षणात्। अत एव "अंशं हारी" (पा०सू०५।२।६९) इति निर्देशः सङ्गच्छते। तत्र आवश्यके णिनिः। न च तत्र भविष्यदर्थकत्वेन सिद्धिः भूतवर्त्तमानयोरावश्यकत्वबोधनस्य वैफल्येन भविष्यत एव ततो बोधादिति वाच्यम्। वस्तुतो भविष्यतो बोधे ऽपि तत्वेनाबोधात् णिनेस्तदर्थकत्वाभावाच्च। अत एव "आवश्यं कारी

---

*इदश्चिन्त्यमिति*। यदि ब्राह्मणस्येत्यस्य क्रियायामन्वयः स्याच्चेदं सूत्रोदाहरणं युक्तं नामार्थान्वये तु क्रियायामनन्वयेन शेषे षष्ठीति वक्तुमशक्यमिति भावः।

*नेष्यत इति*। 'अकस्य भविष्यतीति वक्तव्यम्। यवान् लावको व्रजति। ओदनम्भोजको व्रजति। सक्तून्पायको व्रजतीति। इन आधमर्ण्ये चेति वक्तव्यम्। शतन्दायी सहस्रन्दायी। ग्रामङ्गमि' इति। अत्रैतादृशयोगविभागेन व्याख्यानान्नेष्यत इति सिद्धम्। नन्वेवमुभयोरुभयत्र सम्भवोऽस्त्वित्यत आह–*अकस्येत्यादि*। *कर्तृमात्रार्थक इति*। अत्र मात्रपदेन भविष्यत्त्वव्यवच्छेदः। *सूत्रे इति*। अकेनोरितिसूत्र इत्यर्थः। *तत्सूत्र इति*। आवश्यकाधमर्ण्ययोरिति सूत्रेत्यर्थः। *अत एव*। उपलक्षणादेव। *भूतवर्त्तमानयोरिति*। भूतस्य जातत्वेन तत्र तथा कथनं व्यर्थमेव। वर्त्तमाने च प्रमाणान्तरेणैव तथा निश्चयसम्भवादेतत्कथनानुपयोग इति भावः। *तत्वेन*। भविष्यत्त्वेन। *अत एव*। णिनेर्भ-

कटस्य" इति वृत्त्युदाहृतं सङ्गच्छते। तत्र हि नानेन णिनिः, अव्ययपदोपादानात्, किंतु "सुप्यजातौ" (पा०सू०३।२।७८) इत्यनेनेति नव्याः॥

कृत्यानाम्। (पा०सू०२।३।७१)। "कर्तृकर्मणोः" (पा०सू०२।३।६५) इति नित्ये प्राप्ते विभाषा। कर्मनिवृत्त्यर्थं कर्तृग्रहणम्। अनुवर्तत इति। निषेधोऽयं कर्त्तरि कर्मणि च। "कर्तरि वा" इति त्वनुभयप्राप्तिविषयमिति वृत्तिकैयटादयः। व्रजमित्यत्र "गुणकर्मणि वेष्यते" इति विकल्पस्तु न, कृत्यातिरिक्ते चरितार्थस्य तस्य 'दोग्धव्या गावः पयः कृष्णेन' इत्यादौ गुणकर्मण उक्तत्वात् प्रधाने चरितार्थेनानेन परत्वाद् बाधात्।

तुल्यार्थैर्योग इति। तुल्यत्वार्थैरित्यर्थः। अत एव 'अतुलोपमाभ्याम्' इति चरितार्थम्। अत एव पर्युदासादनव्यययोग एवेदं, तेनेवशब्दयोगे न॥

---

विष्यदर्थकत्वाभावादेव।

*नव्या इति*। अनेन "सुप्यजातौ" इतिसूत्रेण णिनिप्रत्ययेऽप्युक्तरीत्या भविष्यत्त्वप्रतीतावपि न दोष इति सूचितम्।

*निषेधोऽयमिति*। कृत्यानामिति निषेध इत्यर्थः। *कर्त्तरि कर्मणि चेति*। विशिष्यानुपादानादुभयत्र निषेधोऽयमिति भावः। प्राचीनोक्तङ् खण्डयति–*व्रजमिति*। न चानभिहिताधिकारात्तैर्यथ्योपपादनावसरे 'कर्त्तव्यः कट' इत्यत्र परत्वात्कृद्योगलक्षणषष्ठीप्रसङ्गादितिमनोरमायामभिहितम्, तस्य कथमुपपत्तिरिति वाच्यम्। यत्रोभयोः प्रयोगस्तत्रैवोभयोः प्राप्तिरिति कर्त्तव्यः कट इत्यत्र नास्य निषेधस्य व्यापार इत्याशयात्। न चोभयप्रयोग एव चेत् 'आक्रष्टव्या ग्रामं शाखा' इति कृत्यानामिति विभक्तसूत्रोदाहरणम्भाष्ये उक्तम्, तस्य का गतिरिति वाच्यम्। कर्तृपदाश्रयपदाध्याहारेण तस्य भाष्यस्योपपत्तेः।

यथा श्रुते तुल्यशब्दस्य धर्मिवचनतया 'साम्यं कृष्णस्य कृष्णेन वा प्रद्युम्न' इत्यादौ प्राप्तासङ्गतेः परिहारायाह—*तुल्यत्वार्थैरिति*। *अत एव*। भावप्रधाननिर्देशादेव। अन्यथा तुलोपमाशब्दयोस्तुल्यार्थकत्वासम्भवेन तयोरुपादानं व्यर्थमेव स्यादिति भावः। *अत एव*। अस्मादेव।

चतुर्थीसम्प्रदान इतिवच्चतुर्थी चाशिषीत्युक्तत्वेनाशीश्चतुर्थ्यर्थ

चतुर्थी चाशिषि (पा०सू०२।३।७३) ॥ आशीर्विषयक्रिया-
वद्यर्थकात् प्रातिपदिकात्तद्द्वारके आयुष्यादियोगे चतुर्थीषष्ठ्या-
वित्यर्थः । अत एवैतदर्थकचतुर्थ्याद्यन्तेन सुखहितादिभिर्न समासः ।
उभयोरपि क्रियान्वयेन परस्परमसामर्थ्यात् । अत एव हि तेन च-
तुर्थीसमासविधानं तद्योगे चतुर्थीज्ञापकमित्याकरोक्तं संगच्छते ।
यत्तु वृत्तावुद्देश्यविधेयभावेनानन्वयादाशीर्विषये च तथाऽन्वयान्न
समास इति । तन्न । वृत्तावपि प्राप्तत्वादिपर्यालोचनेन 'लोहितो-
ष्णीषा' इत्यादौ तथान्वयदर्शनात् । भाष्ये तथान्वये वृत्तेरसाधुतया-
ऽनुक्तेश्चेति समासवादे मञ्जूषायां विस्तरः । व्याख्यानादिति ।
सूत्रेऽर्थशब्दः पृथङ्निमित्तमिति भावः । भाष्ये तु नैतद् दृश्यते ।

इति षष्ठी

---

विभ्रमवारणायाह—*आशीर्विषयेति* । *तद्द्वारकेति* । क्रियाद्वारके-
त्यर्थः । *अत एव* । क्रियाद्वारकसम्बन्धस्वीकारादेव । *उभयोरपी-
ति* । 'देवदत्ताय सुखम्भूयात्' इत्यादौ देवदत्तायेत्यस्य सुखमित्यादे-
श्च । *क्रियान्वयेन* । सुखमित्यस्य कर्तृतया देवदत्तायेत्यस्य सम्बन्धि-
त्वेन भूयादित्येतच्छब्दबोध्यक्रियायामन्वयेन । *अत एव* । एतद्विहि-
तचतुर्थ्यन्तस्य तेन समासाभावादेव । अनेन सूत्रेण यत्र चतुर्थी तत्र च-
तुर्थ्यन्तार्थस्योद्देश्यत्वमाशीर्विषयक्रियान्वयिनश्च विधेयत्वमिति वाक्य-
स्योद्देश्यविधेयभावावगाहिबोधजनकत्वं वृत्तौ च न तथेति वृत्तिविग्रहयोः
समानार्थत्वाभावान्नैतद्विहितचतुर्थ्यन्तेन समास इति प्राचोक्तङ् खण्ड-
यति-*यत्त्विति* । *तथान्वयात्* । उद्देश्यविधेयभावेनान्वयात् । *न स-
मासः* । उद्देश्यविधेयभावेनान्वयबोधे पृथगुपस्थितेस्तन्त्रत्वादिति भावः ।
वृत्तावपि प्राप्ताप्राप्तविवेकेन यत्प्राप्तन्तदुद्देश्यं यच्चाप्राप्तन्तद्विधेयमि-
ति कल्पनयोद्देश्यविधेयभावेनान्वयेन वृत्तौ सर्वत्र तथाऽनन्वय इति नियमे
प्रमाणाभाव इत्यभिप्रायेण दूषयति—*तन्नेति* । *लोहितोष्णीषा* ।
*इत्यादाविति* । "सोष्णीषा ऋत्विजः प्रचरन्ति" इतिवाक्येनोष्णीषस्य
प्राप्तत्वात्तदनुवादेन लौहित्यमात्रस्य विधानादिति भावः । वृत्तेस्तथा
स्वभावे प्रमाणाभावमाह—*भाष्य इति* । मूले *व्याख्यानादिति*
प्राचां व्याख्यानादित्यर्थः । ननु सुखशब्दान्तद्वन्द्वं कृत्वाऽर्थशब्देन बहुव्री
हिसमासे कृते द्वन्द्वान्त इतिन्यायेनैवार्थलाभे व्याख्यानादित्ययुक्तमत
आह-*सूत्रेऽर्थशब्द इति* । तथा चार्थशब्दान्तो द्वन्द्व एवायं न त्वर्थ-
शब्देन बहुव्रीहिरिति भावः । प्राचोक्तन्दूषयति—भाष्ये त्विति* ॥

इति षष्ठीविवरणम् ।

आधारो (पा०सू० १।४।४५) ।। 'कारके' (पा०सू० १।४।२३) इत्यधिकारात्क्रियाजनके एतत्प्रवृत्त्योपस्थितत्वादाधारः क्रियाया एव । तत्रेप्सिततमस्वतन्त्रपदाभ्यां साक्षात्क्रियाधारयोः कर्मकर्तृसंज्ञाभ्यां बाधात्परम्परया तदाश्रयस्य ग्रहणम् । परम्परा च कर्तृकर्मद्वारिकैव व्याख्यानादित्याह—कर्तृकर्मद्वारेति । यद्यपि कालस्य साक्षात्क्रियापरिच्छेदकत्वं तथापि तदधिकरणं कर्तृकर्मद्वारैव। तथैवानुभवात् । साक्षात्तदाधारत्वेऽपि आधारपदे स्वरितत्वप्रतिज्ञानात्परम्पराधारस्य ग्रहणम् । किंच साक्षात्तदाधारत्वे कर्तृत्वमेव तस्य स्यात्। कालः पचति भूतानीतिवत् । एवञ्च क्रियान्वयोऽप्यस्य कर्त्राद्यन्वयद्वारेव । यस्य यद्द्वारा कारकत्वं तस्य तद्द्वारैव क्रियान्वय इति व्युत्पत्तेः। अत एव 'अक्षशौण्ड' इत्यादौ समासः । अत्र आसत्त्यादिक्रियान्तर्भावेण बोधानुभवात्क्रियाद्वारा सामर्थ्यमिति कैयटाद्युक्तं न युक्तम् । 'मूले वृक्षः कपिसंयोगी' इत्यादावस्तिक्रिया-

---

*तदाश्रयस्य* । क्रियाश्रयस्य । व्याख्यानादिति* ।

कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् ।
उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ।

इतिहर्युक्तिमूलकव्याख्यानादित्यर्थः । हरिकारिकायां यदुक्तमसाक्षाद्धारयत्क्रियामिति तद्व्यभिचारोऽपि क्वचिदस्तीत्याह—*यद्यपीति*। ननु सम्भवति साक्षात्तदाधारत्वे कथम्परम्परया तदाधारस्य ग्रहणमत आह—*आधारपद इति*। साक्षात्तदाधारस्य तु चैत्रादितुल्यत्वमेवेत्याशयेनाह—किञ्चेति* । तत्र दृष्टान्तमाह—*काल इति* । *एवञ्च*। परम्परयाऽऽधारस्य ग्रहणसिद्धौ च। *अस्य*। आधारस्य। *अत एव*। पूर्वोक्तनियमस्वीकारादेव । कारकाणां क्रियान्वयित्वमिति नियमोऽप्यधिकरणविषये परम्परयैव । *अक्षशौण्ड इत्यादाविति* । यथा 'कटे शेते चैत्र' इतिवाक्यात्कटाधिकरणकचैत्रकर्तृकं शयनमितिबोधस्तथा 'अक्षेषु शौण्डः' इति वाक्यादपि अक्षाधिकरणिकाशौण्डकर्तृका भवनक्रियेत्येवंरीत्या बोधात्साक्षादेव सप्तम्यन्तस्य शौण्डादिभिः सामर्थ्यमिति समाससंज्ञासिद्धिः ।

*अत्र* । अक्षशौण्ड इत्यादौ । *न युक्तमिति* । भाष्यकृता तस्यार्थस्यानुक्तेरिति शेषः । यत्र तु क्रियावाचकम्पदन्न श्रूयते तत्रापि तदन्वययोग्येक्रियावाचकम्पदमध्याहृत्य क्रियाधारत्वमुपपादनीयम् । तदाह

व्याहृत्य तस्याः स्वकर्तृकपिसंयोगिवृक्षद्वारा मूलवृत्तित्वादाधा-
रत्वम् । विशिष्टवृक्षस्य मूलवृत्तित्वबोधेऽन्यत्रावयवे तद्विशिष्टवृक्षा-
भावप्रतीतेः । कपिसंयोगे तदवच्छेद्यत्वं फलतीति दिक् ।

चकारादिति । प्रातिपदिकार्थे इति शेषः । त्रिधेति । तत्र
सकलावयवव्याप्तौ व्यापकाधारत्वम् । यथा तिलेषु तैलम् । इदमेव
मुख्यमधिकरणमिति "स्वरितेन" (पा०सू०१।३।११) इत्यत्र "सा-
धकतमम्" (पा०सू०१।४।४२) इत्यत्र च भाष्ये स्पष्टम् । उप स-
मीपे श्लेषः सम्बन्धस्तत्कृतमौपश्लेषिकम्, अत एव "इको यणचि"
(पा०सू०६।१।७७) इत्यत्रादावौपश्लेषिके आधारे सप्तम्युक्ता "सं-

---

*मूले वृक्ष इति* । *फलतीति* । एवमभिधानेन कपिसंयोगादौ मूला-
वच्छेद्यत्वावगाहिनी मानसी प्रतीतिरित्युक्तम् । तत्र 'कटे शेते' 'स्था-
ल्यां पचति' इत्यादावाधारत्वेनाभिप्रेते कर्तृकर्मणोः संयोगोऽस्तीति
तद्द्वाराऽऽधारत्वम् । क्वचिदवच्छेदकतासम्बन्धेन । 'शिरसि वेदना' 'पा-
दे मे सुखम्' इत्यादौ यथा । क्वचित्तु प्रतियोगितानिरूपितानुयोगितया ।
यथा 'अभावे प्रतियोगितया घटः प्रकारोऽस्ति' इत्यादौ । एवमन्यत्राप्यू-
ह्यम् । चकारेण विहिता या सप्तमी सा स्वार्थे न तु तस्मिन्वाक्येऽधिकर-
ण इत्यस्य सम्बन्धः ।

वाक्यभेदसामर्थ्यात्तदभिप्रायेणाह--*प्रातिपदिकार्थे इति* । *त-
त्र* । तेषु मध्ये । *सकलेति* । सकलावयवावच्छेदेन व्याप्तिरित्यर्थः ।
*व्याप्ताविति* । अत्र व्यापनं व्याप्तिपदार्थः स च व्यापकत्वाभिन्न इत्य-
भिप्रायेणाह-*व्यापकाधारत्वमिति* । व्यापकत्वञ्च व्याप्यतानिरूपितम् ।
व्याप्यता च किन्निष्ठेत्याकाङ्क्षायामन्यस्यानुपस्थितत्वात्प्रकृत्यर्थनिष्ठैव
ग्राह्या । प्रकृत्यर्थस्य व्याप्यता च समवायसम्बन्धेन । व्यापकत्वन्तु संयोग-
सम्बन्धावच्छिन्नमाधेयनिष्ठं विवक्षितमिति संयोगसम्बन्धावच्छिन्नाधेय-
निष्ठव्यापकतानिरूपिता या समवायसम्बन्धावच्छिन्ना व्याप्यता तद्वि-
शिष्टाधारोऽभिन्नव्यापकाधारः । 'तिलेषु तैलम्' इत्यत्र स्वावयवेषु समवा-
येन तिलस्य सत्त्वात्तेषु सर्वत्र तैलस्य संयोगेन सत्त्वादुक्तव्याप्यव्यापक-
भावो द्रष्टव्यः । एवमेव 'दध्नि सर्पिः' इत्यादावपि ज्ञेयम् । *मुख्यमिति* ।
आधारमाचार्यः किन्न्याय्यममन्यते यत्र कृत्स्न आधारात्मा व्याप्तो भवति
तेनैव स्यात्तिलेषु तैलन्दध्नि सर्पिः' इति हि "साधकतमम्" इतिसू-
त्रभाष्येऽभिहितम् ।

*अत एव* । औपश्लेषिकपदस्योक्तार्थस्वीकारादेव । एवञ्च 'इको य-

हितायाम्" (पा०सू०६।१।७२) इति सूत्रे भाष्ये । तत्राजादिसामी-प्यमेवेगादीनाम् । "यन्मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषि-कमधिकरणम्" इत्युक्तं "तत्र च दीयते" (पा०सू०५।१।९६) इति सूत्रे च भाष्ये । "तदस्मिन्नधिकम्" (पा०सू०४।१।६७) इति सूत्रे च भाष्ये स्पष्टमिदम् । 'कटे आस्ते' इति तु नौपश्लेषिकोदाहरणं युक्तम्। उक्तभाष्यविरोधात् ।

यद्वा, एकदेशावच्छेदेन श्लेषेऽपि श्लेषस्य समीपमुपश्लेषं त-त्कृतमिति व्युत्पत्त्यौपश्लेषिकत्वमित्यभिप्रायेण तदुदाहरणम् । त-देतत् सर्वं गौणमाधिकरणम्, 'गङ्गायाङ्गाव' इत्यादिकश्चेति 'स्त्री-तेन' इत्यादौ भाष्ये स्पष्टम् । गौणोऽप्याधारादिः सप्तम्यादिशक्य एवेति बोद्धव्यम् । एतदतिरिक्तं सर्वं वैषयिकम् । अधिकरणत्वशक्ति-

---

णाचि'इत्यादौ निमित्तत्वेनाभिप्रेतेऽच्पदार्थे इक्पदार्थसामीप्यादेवेगाधार-त्वव्यवहारः । एतादृशाधारस्य गौणत्वव्यवहारः । अत एव "साधकत-मम्" इतिसूत्रभाष्ये 'गङ्गायाङ्गावः । कूपे गर्गकुलमित्यत्र न स्यात् । कार-कसंज्ञायान्तरतमयोगो न भवतीत्यत्रापि सिद्धम्भवति' इत्युक्तम् । औप-श्लेषिकाधारस्याप्यधिकरणसंज्ञेत्यत्र भाष्यान्तरमपि साधकमाह--*य-न्मास इति* । अत्र दानक्रियाया उपश्लेषः सम्बन्धः स च स्वाधिकरण-कालपूर्वत्वरूपः । औपश्लेषिकमप्याधिकरणं सप्तमीशक्यमित्यत्र मानान्तर-माह--*तदस्मिन्निति* । तत्र हि 'एकादशाधिका अस्मिन् शते' इत्यत्र शतस्याधिकरणत्वाभावात्कथं सप्तमीत्याशङ्क्यौपश्लेषिकमिदमधिकरण-मित्युक्तम् । शतसमीपे हि ते भवन्ति न तु तदन्तर्भूता इति । *नौपश्लेषि-कमिति* । औपश्लेषिकपदस्यावयवमर्यादया योऽर्थः प्रतीयते सोऽत्र नास्तीति भावः । तदेतदाह--*उक्तभाष्येति:* । सूत्रत्रयस्थभाष्येत्यर्थः । नन्वेवम् 'कटेआस्ते' 'स्थण्डिले शेते इत्यौपश्लेषिकाधारे सप्तमीति ग्रन्था-नाङ्का गतिरिति चेत्तेषामपि यथाकथञ्चित्तत्तदभिप्रायेणाह--*यद्वेति* । *एतत्सर्वमिति* । औपश्लेषिकं सर्वाधिकरणमित्यर्थः । *गङ्गायाङ्गाव इत्यादिकश्चेति* । आदिना 'कूपे गर्गकुलम्' इत्यस्य सङ्ग्रहः । अत्र यद्यपि गङ्गापदस्य सामीप्यात्तीरे गङ्गात्वारोपात्प्रवृत्तिस्तथापि न सर्वावयवाव-च्छेदेन गोसम्बन्ध इति भावः । *शक्य एवेति* । "आधारोऽधिकरणम्" इतिसूत्रस्थाधारपदे स्वरितत्वप्रतिज्ञानात् । अधिकःकारोऽधिकार इत्य-र्थाश्रयणात् । *एतदतिरिक्तमिति* । उभाभ्याम्भिन्नमित्यर्थः । यथा 'मोक्षे इच्छास्ति' । 'खे शकुनय' इत्यादौ । उक्तद्वयातिरिक्तत्वेन सर्वसङ्ग्रहो न तु

र्थश्चाधिकरणविभक्त्यर्थः।

इन्विषयस्येति। इनो विषयस्येन्प्रकृतेः क्तान्तस्य कर्मणी-त्यर्थः। तेन 'कृतपूर्वी कटम्' इत्यत्र न। उदाहरणे न कर्मणि क्तः। अभिहितत्वेन सप्तम्यनापत्तेः। किन्तु भावे। इष्टादिभ्यश्चेति। तत्र हि श्राद्धमनेनेत्यतोऽनेनेति वर्त्तते। अत्र कर्मशब्देन कालादि-व्यतिरिक्तमेव गृह्यते व्याख्यानात्, तेन 'मासमधीती व्याकरणे' इत्यत्र नेति कैयटः।

साध्वसाधु (वा)। शेषषष्ठ्यपवादोऽयम्। "साधुनिपुणा-भ्याम्" (पा०सू०२।३।४२) इत्येव सिद्धे अनर्चार्थमत्र साधुग्रहणम्। तेन तत्त्वकथनेऽपि भवति। सूत्रेऽर्चाग्रहणन्तु निपुणार्थम्।

---

विषयतासम्बन्धावच्छिन्नाधिकरणमेवेत्याग्रहः। एवञ्च वैषयिकपदमुभया-तिरिक्ते रूढमिति भावः। शक्तिमांश्चेति चकारेण क्रियाधिकरणभावसम्ब-न्धपरिग्रहः।

*तेन*। इन्विषयस्येत्यस्योक्तार्थकरणेन। *इत्यत्र नेति*। यदि तस्ये-न्तघटकधात्वर्थस्येत्यर्थः स्यात्तदा 'कृतपूर्वी कटम्' इत्यादावपि स्यादिति भावः। *अभिहितत्वेनेति*। "सप्तम्यधिकरणे च' इतिसूत्रेऽस्य वार्त्तिकस्य पाठादनभिहित इत्यस्य सम्बन्धः। यन्मूले कर्त्तरीत्युपात्तन्तल्लाभोपाय-माह-*तत्र हीति*। ननु प्राकृतमेवेदङ्कर्मेति रीत्या कालस्यापि कर्मत्वा-त्तस्मिन्नपि सप्तमी स्यादिति 'मासमधीती व्याकरणे' इत्यत्र मासपदा-दपि सप्तमी स्यादत आह-*अत्र कर्मशब्देनेति*। *व्याख्यानादिति*। अधीत इत्येतावन्मात्रोपादाने वेदादिरूपपदसन्दर्भाकाङ्क्षानियमोऽस्तीत्ये-तादृशकर्मान्तरङ्गमित्येतन्मूलकव्याख्यानादित्यर्थः। *कैयट इति*। अ-रुचिबीजन्तु कालादिकर्मणां सकर्मकाकर्मकसाधारण्येन धातुसामा-न्यकर्मतया तत्त्यागे मानाभावः। पदसन्दर्भस्यापि शब्दत्वात्मकसामा-न्यरूपेण प्रकृतधात्वर्थकर्मतया कस्मिंश्चिदितिविशेषाकाङ्क्षापि सामान्यज्ञान-पूर्विका भवतीति तस्यापि ग्रहणमिति।

एतद्वार्त्तिकव्याख्यानोत्तरम्मूले "निमित्तात्कर्मयोगे" इति "यस्य च" इति च सूत्रे व्याख्याय "साध्वसाधुप्रयोगे" इति वार्त्तिकं व्याख्यातम् तन्न युक्तम्। भाष्ये क्तस्येन्विषयस्येत्येतद्व्याख्यानानन्तरं साध्वसाधुप्रयोगे इत्यस्य व्याख्यानादिति तेनैव क्रमेण व्याचष्टे-*साध्वसाध्विति*। त-त्त्वकथनेऽपीति*। अर्चा हि यत्राविद्यमानस्यापि धर्मस्य पूजनीयत्वद्यो-तनाय बोधनन्तत्र भवतीति भावः। *निपुणार्थमिति*। अत एव मूले

निमित्तादिति। निमित्तवाचकात् सप्तमी भवति तस्य निमित्तस्य प्रत्यासत्त्या स्वान्वयिक्रियाकर्मणा योग इत्यर्थः। निमित्तञ्चात्र क्रियाफलम्, एवञ्च फलं सप्तम्यर्थः। चर्मणीति। चर्मणः फलत्वञ्च हननस्य तल्लाभेच्छाधीनत्वात्। कर्मसम्बन्धश्च स्वरूपसन्नेव निमित्तम्। द्वीपिचर्मणोरण्डकोशमृगयोश्च समवायः, इतरयोः संयोगः। "मुक्ताफलाय करिणं रघुवीर" इत्यादौ "क्रियार्थोपपदस्य" (पा०सू० २।३।१४) इति चतुर्थी। घ्नन्तीति शेषः। मुक्ताफलान्याहर्तुमित्यर्थः।

यस्य च भा (पा०सू०२।३।३७)। भावः-क्रिया। ततः-ज्ञापकक्रियाश्रयवाचकात्, तेन गोपदुह्यमानपदयोरुभयोरपि सप्तमी सिद्धा। क्रियाश्रयः कर्त्ता कर्म च। तत्र 'ब्राह्मणेष्वधीयानेषु गतः' इति

---

अचार्याङ्क्षिम् ? निपुणो राज्ञो भृत्यः' इत्येवोपात्तम्। इतोऽग्रे अर्हाणामित्येतद्व्याख्यानानन्तरम्भाष्यीयक्रमानुरोधेन व्याख्यानमुचितम्।

मूलकारानुरोधेन तु व्याचष्टे *निमित्तादितीति*। *फलं सप्तम्यर्थ इति*। अनिर्दिष्टार्थ इतिन्यायादिति भावः *तल्लाभेच्छाधीनत्वादिति*। एवञ्च फलेच्छया उपायेच्छाप्रयोजकत्वस्य प्रसिद्धत्वाद्धननरूपोपायेच्छाप्रयोजकेच्छाविषयचर्मलाभस्यैव मुख्यफलत्वम्। चर्मणस्तु लाभकर्मत्वात्फलत्वमुपचरितम्बोध्यम्। 'चर्मणि द्वीपिनं हन्ति' इत्यादि भाष्योदाहरणादिति भावः। *स्वरूपसन्नेव निमित्तमिति*। न तु तस्य शाब्दबोधविषयत्वपर्यन्तमाग्रह इति शेषः। कर्मयोग इत्यत्र योगपदं सम्बन्धवाचि स च सम्बन्धः संयोगसमवायान्यतरात्मकस्तदाभिप्रायेणाह-*द्वीपिचर्मणोरित्यादि*। *अण्डकोशमृगयोरिति*। यद्यपि मृगशब्दस्याल्पाच्तरत्वन्तथापि 'सीम्नि पुष्कलको हत' इति भाष्ये येन क्रमेणोपादानङ्कृतन्तेनैव क्रमेण व्याख्यानमुचितमित्यभिप्रायेण पूर्वनिपातप्रकरणं "समुद्राभ्राद्ध" इति सौत्रनिर्देशेनानित्यमतो वैपरीत्येन व्याख्यातम्। मुक्ताफलायेत्यत्र चतुर्थ्या असाधुत्वभ्रमनिवारणाय-*मुक्ताफलायेति*।

"यस्य च भावेन" इत्यत्र भावपदार्थविशेषणतया यस्येत्यस्योपादानाल्लक्षकक्रियासम्बन्धिवाचकगवादिशब्दादेव सप्तमी प्रकृतसूत्रेण विधीयत इतिभ्रमनिरासायाह-*ज्ञापकक्रियाश्रयवाचकादिति*। क्रियापदस्य धात्वर्थप्रतिपादकतां फलव्यापारयोश्च धात्वर्थत्वादाह-*कर्त्ता कर्म चेति*। अत्र कर्म कर्त्ता चेतिवक्तव्ये कर्तृशब्दस्य प्रथममुपादानं कर्मसं

कर्त्र्युदाहरणम् । कर्मण्याह—गोष्विति । तत्र काचित् क्रिया स्वाधारकालेनान्यां क्रियां परिच्छिनत्ति यथा प्रकृते, काचित्तु स्वाधारकालाव्यवाहितपूर्वकालेन यथा गोषु धोक्ष्यमाणास्वित्यादौ, काचित्स्वाधारकालानन्तरकालेन यथा गोषु दुग्धास्वित्यादौ । ज्ञापकत्वं सप्तम्यर्थस्तस्य च भावलक्षणमित्युक्तेः क्रियायामेवान्वयः । लक्ष्यलक्षणभावः शब्दबोध्य एवैतच्छास्त्रप्रवृत्तौ निमित्तं न तु तस्य भूयो

---

ज्ञाविधायकसूत्रे कर्तृशब्दस्य प्रथमोपादानाभिप्रायेण । क्रियायाः परस्परं ज्ञाप्यज्ञापकभावः प्रकृतसूत्रस्य प्रवृत्तौ नियामकः । तत्र निर्ज्ञातकाला क्रियाऽनिर्ज्ञातकालक्रियाया ज्ञापिका अत्र कालो न वर्त्तमान एव विवक्षितः, किन्तु भूतभविष्यतोरपि सम्भवति घटकत्वमित्याशयेन तत्तत्कालस्थले सूत्रप्रवृत्तिन्दर्शयति—*तत्र काचित्क्रियेति* । तत्र ज्ञापकक्रियासु । *ज्ञापकत्वमिति* । न च सप्तम्यर्थज्ञापकत्वे कृदन्तार्थविशेषणतापन्नक्रियाया एकविशेषणत्वेनोपस्थितस्यान्यत्र विशेषणतयाऽन्वयायोग इतिव्युत्पत्तिविरोधाद्विशेषणतयाऽन्वयो न सम्भवतीति वाच्यम् । प्रकृत्यर्थस्य क्रियाविशिष्टकृदन्तार्थस्याधेयतयाऽन्वयस्वीकारात् । विशेष्ये ज्ञापकावबोधेऽपि विशेषणे पर्यवसानम् । 'स्वर्गी ध्वस्त' इति यथा तस्य च ज्ञापकत्वस्य स्वनिरूपितज्ञाप्यत्वसम्बन्धेन गतशब्दार्थघटकगमनक्रियायामन्वयः ।

वस्तुतस्तु क्रिययोर्ज्ञाप्यज्ञापकभावः सूत्रप्रवृत्त्या पदस्य साधुतायामुपयुज्यते । सप्तम्यास्तु ज्ञापकत्वेनाभिप्रेता क्रियैवार्थः । तस्याश्च समानकालिकत्वं ज्ञाप्यक्रियायां सम्बन्धो "गोषु दुह्यमानासु गत' इत्यादौ वर्तमानार्थककृत्समभिव्याहारे । एवञ्च दुह्यमानगोवृत्तिदोहनसमानकालिकगमनकर्त्तेति शाब्दबोधः । यत्र भविष्यदर्थककृत्समभिव्याहारस्तत्र 'गोषु धोक्ष्यमाणासु' इत्यादौ सप्तम्यर्थदोहनक्रियायाः प्राक्कालिकत्वसम्बन्धेन ज्ञाप्यगमनक्रियायामन्वयः । यत्र तु भूतार्थकः कृत्तत्र 'गोषु दुग्धासु, इत्यादौ सप्तम्यर्थदोहनक्रियाया उत्तरकालिकत्वसम्बन्धेन गमनक्रियायामन्वय इत्यूह्यम् । अस्मिन् पक्षे च ज्ञाप्यज्ञापकभावस्य शाब्दबोधाविषयत्वे लक्ष्यलक्षणभावः शब्दबोध्य एवैतच्छास्त्रप्रवृत्तौ निमित्तमित्युत्तरग्रन्थासङ्गतिरिति तु न वाच्यम् । तस्य पूर्वोक्तपक्षाभिप्रायकत्वात् । द्वितीयपक्षे तु वस्तुतः क्रियाद्वयनिष्ठ इत्यर्थः कार्यः ।

ननु लक्ष्यलक्षणभावो यत्र भूयःसहचारदर्शनन्तत्र युक्तः । यथा वह्निधूमयोः । प्रकृते तु गमनक्रिया सकृदेव जातेति कथङ्कालिकसम्बन्धघटितो ज्ञाप्यज्ञापकभाव इत्यत आह—*लक्ष्यलक्षणभाव इति* ।

दर्शनादिरूपमानान्तरेण ग्रहणापेक्षेति बोद्धयम् । अन्यथा "उदिते आदित्ये तमो नष्टम्" इत्यादावेव स्यान्न तु प्रकृते, कदाचिद्धि गोषु दुह्यमानास्वसौ गतः ।

इदञ्च यत्र मानान्तरेण ज्ञातस्वरूपस्यार्थस्य कालविशेषादिज्ञापनार्थं शब्दप्रयोगस्तत्रैव प्रवर्तते भाष्यस्वरसात् । "राहूपरागे स्नायात्" इत्यत्र राहूपरागपदेन तदाश्रयकाल उच्यते इति अधिकरणसप्तम्यैव । विवाहे नान्दीमुखङ्कुर्यादित्यत्र विवाहपदेन तत्प्राक्काल उच्यते । 'गवान्दोहे आगतः' इत्यत्राप्यधिकरणसप्तम्यैवेत्यन्यत्र

---

*मानान्तरम्* । ज्ञानान्तरम् । *अन्यथा* । भूयः सहचारदर्शनसहकारेण यत्र ज्ञाप्यज्ञापकभावप्रतीतिस्तत्रैवैतत्सूत्रप्रवृत्तिस्वीकारे । *मानान्तरेण* । प्रमाणान्तरेण । *ज्ञातस्वरूपस्यार्थस्य* । ज्ञातं स्वरूपं यस्य तादृस्यार्थस्य क्रियाद्वयस्य । यथा गोदोहनम्मनोजन्यस्मृतिविषयः । पुरुषविशेषे गमनन्तु तद्देशाधिकरणस्थितिकर्तृत्वाभावेनानुमितम् । *भाष्यस्वरसादिति* । 'नावश्यं तदेव लक्षणम्भवति येन पुनःपुनर्लक्ष्यते । सकृदपि यन्निमित्तत्वाय कल्पते, तदपि लक्षणम्भवति' इतिभाष्यस्वरसादित्यर्थः । *निमित्तत्वाय* । परिच्छेद्यपरिच्छेदकभावनिमित्तत्वायेत्यर्थः । स च परिच्छेद्यपरिच्छेदकभावः क्रियाद्वारा कालयोः फलति । क्वचित्तु निर्ज्ञातदेशक्रिया अनिर्ज्ञातदेशविशेषक्रियाया लक्षणम्भवति । यथा 'द्रव्यं गुणकर्मान्यत्वे सति सत्त्वात्' इत्यादौ ।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

इत्यादौ च । अत्र सतीत्यस्याध्याहारः । सत्त्वादित्यत्र तु सतीत्यनन्तरं सत इत्यस्याध्याहारो विवक्षितः । नन्वेवं 'राहूपरागे स्नायात्' इत्यत्र ज्ञापकक्रियावाचकपदाभावात्कथमेतत्सूत्रप्रवृत्तिरत आह—*राहूपरागे इत्यादि* । *अधिकरणसप्तम्यैवेति* । यद्यत्र राहूपरागे सति स्नायादित्येवं क्रियावाचकपदाध्याहारेण "यस्य च भावेन" इतिसप्तमी इत्युच्यते । तदा राहूपरागसत्त्वस्नानयोर्लक्ष्यलक्षणभावस्य समानकालिकत्वस्य वा लाभेऽपि राहूपरागसत्त्वस्य स्नाननिमित्तत्वालाभः । इष्टापत्तिस्तु न । स्नाननिमित्तत्वाभावे सति आलस्यादिना शक्तेन स्नानाद्यकरणे प्रायश्चित्तविधेरनुपपत्तेः । अधिकरणसप्तम्यान्तु राहूपरागकालत्वावच्छेदेन स्नानस्य विधानेन राहूपरागस्य निमित्तत्वम्फलति । यणादेशोऽवइवेति भावः । तथैवाह—*विवाह* इति । लक्षणाया उदाहरणान्तरमप्याह—*गवामिति* । मानान्तरसिद्धस्य कालदेशविशेषज्ञापनाय यत्र प्रयोग

विस्तरः ।

अर्हाणाम् । कर्त्तृत्वार्हाणाम् । तद्वैपरीत्ये—अर्हाणामकर्त्तृत्वम्, अनर्हाणाञ्च कर्त्तृत्वे इत्यर्थः । वाक्यचतुष्टयमेतत्, कर्त्तृसमर्पकादकर्तृसमर्पकाच्च सप्तमीत्यर्थः । सप्तम्यां तदन्वयिक्रियावाचकाद्धातोरप्रथमासामानाधिकरण्याच्छतृशानचावेव । लक्ष्यलक्षणभावाविवक्षार्थमिदम् ।

सत्स्विति । सन्तो हि तरणक्रियाकर्त्तृत्वार्हाः । तरणक्रियाकर्तृसत्सम्बन्धि असत्कर्तृकमासनमिति बोधः । स्वक्रियाधिकरणकालवृत्तित्वं सम्बन्धः । असत्स्विति । तरणक्रियाकर्तृत्वानर्हाणां तदकर्त्तृत्वमत्र । यद्यपि स्थितिक्रिया कर्तृत्वार्हत्वेनेदं सिद्धं तथाप्यसतां तरणक्रियानर्हत्वादिकमपि बोधविषय इति भावः । सत्स्विति । तरणक्रियाकर्तृत्वार्हाणां तदकर्तृत्वमत्र । असत्स्विति । तरणकर्त्तृत्वानर्हाणां तत्कर्तृत्वमत्र ॥

षष्ठी चा (पा०सू०२।३।३८) । 'अनादरे इति विषयसप्तमी, 'यस्य च भावेन' इत्याद्यनुवर्तते । अनादरे गम्यमाने सति यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी षष्ठी चेत्यर्थः । फलितमाह—अनादराधिक्ये इति । लक्ष्यलक्षणभावः षष्ठ्यर्थः ।

---

तत्रैव "यस्य च" इतिसप्तमीस्वीकारेणैतेषु स्नानादीनामेतैरेव विधानेन तत्सूत्राप्राप्तेः । राहूपरागादीनान्निर्ज्ञातदेशकालत्वाभावाच्चेति तदाह—*अन्यत्र विस्तर* इति ।

*अर्हाणाम्* । भाष्ये 'यद्यप्यत्र कारकार्हाणाञ्च कारकत्वम् । अकारकार्हाणाञ्च कारकत्वे सप्तमी वक्तव्या । अकारकार्हाणाञ्चाकारके सप्तमीवक्तव्या । ऋद्धेषु भुञ्जानेषु दरिद्रा आसते । ब्राह्मणेषु तरत्सु वृषला आसते इति । तद्विपर्यासे च सप्तमी वक्तव्या । ऋद्धेषु आसीनेषु मूर्खा भुञ्जते । ब्राह्मणेष्वासीनेषु वृषलास्तरन्ति' इत्युक्तम् । कारकशब्दोऽत्र भावप्रधानः । कारकत्वमर्हन्ति ते कारकार्हा इत्यर्थः । तथापि प्रत्यासत्त्या अर्हता कारकत्वस्यैव लभ्यत इत्याशयेन कारकशब्दः परित्यक्तः । अत्रार्हत्वमनर्हत्वं च न भिन्नक्रियामादाय किन्त्वेकक्रियामादायैव । अन्यथा सर्वेषामेव यत्किञ्चित्क्रियाकर्त्तृत्वार्हतयाऽनर्हाणामप्रसिद्धिः स्यात् । अर्हाणामिति वचनस्य फलान्तरमप्याह—*यद्यपीत्यादि* ।

"षष्ठी चानादर" इति सूत्रे यस्य च भावेनेत्याद्यनुवृत्तौ यादृशो वा-

अनादरविशिष्टं प्रव्रजनं धात्वर्थः । तत्र षष्ठी तात्पर्यग्राहिका, अनादरश्च प्रत्यासत्त्या पुत्रादिविषयक एवेति भावः ॥

स्वामीश्वरा (पा०सू०२।३।३९) ॥ शब्दपरत्वात् "विरूपाणामपि" इति नैकशेषः । पर्यायान्तरसङ्ग्रहापत्त्या स्वाम्यर्थ इति नोक्तम् । दीयते इति व्युत्पत्त्या दीयमानांशरूपं दायमादत्ते इति सोपसर्गाद्ध्यादन्तादत एव निपातनात्कः । गवादिकं च दीयमाने अन्वेति नित्यसाकाङ्क्षत्वाद् वृत्तिः । दायादशब्दः स्वामिपर्यायः इत्यन्ये । षष्ठ्यावेवेति । शेषषष्ठीत्यनेनेति भावः ॥

तात्पर्ये इति । आसेवापदस्य तत्र रूढेरिति भावः । तात्पर्यञ्च तदेकव्यापारता । आयुक्तयोगेऽधिकरणत्वविवक्षया सप्तमीप्राप्तौ सम्बन्धविवक्षायामत्र कुशलयोगे च षष्ठीप्राप्तौ वचनम् ॥

यतश्च (पा०सू०२।३।४१) जातिगुणक्रियासंज्ञाभिरिति । विशिष्टस्येत्यध्याहारः । तद्विशिष्टस्य एकदेशस्य यतः स्वघटितसमुदा-

---

क्यार्थस्तमाह-*अनादरे गम्यमाने* इति । *षष्ठी तात्पर्येति* । इदमुपलक्षणम् । सप्तम्यपि तत्त्वे तात्पर्यग्राहिका । वैशिष्ट्यञ्च समानकर्तृकत्वस्वोत्तरकालिकत्वोभयसम्बन्धेन ।

*पर्यायान्तरेति* । प्रभ्वादेरित्यर्थः । समुदायविशेषणत्वेऽर्थासङ्गतिपरिहारायाह-*गवादिकञ्चेति* । 'गवां गोषु वा दायाद' इत्यत्रेत्यादिः । *स्वामिपर्याय इति* । अस्यात्रेत्यादिः । एतेन 'पृथिव्या दायादो राजा' इति प्रयोगापत्तिनिरासः ।

नन्वासेवापदादक्षरमर्यादया तात्पर्यस्य न लाभ इत्यत आह-*आसेवापदस्येति* । *तदेकपरता* । तन्मात्रसाध्यकप्रवृत्तिमत्त्वम् । *अधिकरणत्वविवक्षयेति* । वैषयिकाधारत्वविवक्षयेत्यर्थः । *अत्र* । आयुक्तशब्दयोगे । *वचनमिति* । षष्ठ्यर्थे सप्तम्यर्थश्च वचनमित्यर्थः ।

"यतश्च निर्द्धारणम्" इतिसूत्राद्यथाश्रुताद्यस्मात्समुदायान्निर्द्धारणं पृथक्करणन्तादृशसमुदायघटकावृत्तिधर्मवत्त्वबोधनं यत्र तत्र तादृशसमुदायवाचकप्रातिपदिकात् षष्ठीसप्तम्यावित्यर्थः प्रतीयते परन्त्वयन्न युक्तः । 'नराणां क्षत्रियः शूर' इत्यत्र नृशब्दस्य समुदायवाचकत्वाभावादनुपपत्तिरतः सूत्रार्थ उक्तो मूले *जातिगुणक्रियासंज्ञादिभिरिति* । एवमपि जात्यादिभिरेव पृथक्करणमिति भ्रान्तिर्भवतीत्यत आह—*विशिष्टस्येत्यध्याहार इति* । एवमपि जात्यादिविशिष्टस्य यतो निर्द्धारणमिति भ्रमः स्यादतः पूरणेन व्याचष्टे-*एकदेशस्येति* । एतेन तादृशसमुदायवृत्ति-

(स्वे)तरसमुदायघटकव्यावृत्तधर्मकरणकं पृथक्करणं तद्वाचकात् षष्ठी-
(सप्तम्य)र्थः । यत इति किम् ? यस्य जात्यादिविशिष्टस्य स्वेतरव्यावृत्तधर्म-
(व)त्त्वबोधनं तत एव मा भूत् । षष्ठ्यपवादत्ववत् प्रथमापवादत्वस्या-
(पि) सम्भवात् । स्वघटितसमुदायावधिक-स्वेतरसमुदायघटकव्यावृत्त-
(ध)र्मकरणकपृथक्करणरूपनिर्धारणविषयत्वरूपो ऽवयवावयविभावरू-
(प)श्च सम्बन्धो विभक्त्यर्थः । नृसमुदायावधिक-द्विजेतरनरव्यावृत्त-
(ध)र्मकरणकपृथक्करणरूपनिर्धारणविषयो नृसमुदायावयवो द्विजः
श्रेष्ठ इति बोधः । संसर्गघटककरणं च श्रेष्ठत्वादिरूपमेव प्रत्यासत्तेः ।
अत एव 'न निर्धारणे' (पा० सू० २।२।१०) इति सूत्रबोधितं निर्धार-

---

(णध)र्माश्रयस्य लाभः । यथा 'नराणां क्षत्रियः शूर' इत्यत्र नृसमुदायवृत्तिनर-
(त्व)ाश्रयस्य क्षत्रियस्य जातिविशिष्टस्य लाभः । समुदायवृत्तित्वञ्च समु-
(दा)यत्वाश्रयवृत्तित्वमेव न तु समुदायत्वपर्याप्त्यधिकरणपर्याप्तत्वम्, क्ष-
त्रियत्वस्य तथात्वासम्भवात् । न हि नृत्वं समुदायत्वपर्याप्त्यधिकरणे
समुदाये पर्याप्तम् । तस्य प्रत्येकपर्याप्तत्वात् । एवञ्च प्रकृते नृशब्दो नृस-
(मु)दायबोधकतया तादृशसमुदाये वर्तमानं यत्समुदायत्वं स्वरूपसम्बन्धेन
तादृशसमुदायत्वाश्रयक्षत्रियस्य तादृशसमुदायत्वाश्रयवृत्तिनृत्वावच्छि-
(न्न)स्य लाभः । क्षत्रियपदार्थश्चात्रैकदेशः । *स्वघटितसमुदायात्* । नृस-
(मु)दायात् । *स्वेतरसमुदायघटकेति । स च ब्राह्मणादिः । स्वमेकदेशो
(जा)त्यादिविशिष्टः । स्वेतरेत्यस्य समुदायघटकेऽन्वयः । तस्य च व्यावृत्तौ
तादृशसमुदायघटकावृत्तिर्धर्मः शूरत्वन्तत्करणकपृथक्करणञ्च क्षत्रियस्य
शूरत्वाश्रयत्वबोधनमेवेति नृशब्दादत्र षष्ठ्युपपत्तिः ।

यद्यपि तद्धर्माश्रयत्वबोधनस्य तद्धर्मप्रकारकबोधानुकूलव्यापाररूप-
(त)या तस्य धर्मस्य कर्मत्वं सम्भवति । तथापि तद्धर्मवत्त्वबोधने तस्य
(ध)र्मस्य कारणत्वविवक्षयैवं लेखः । एवञ्च जात्यादिविशिष्टस्य यद्धर्मा-
(व)च्छिन्नस्य तादृशजात्यादिशून्यतद्धर्मावच्छिन्नावृत्तिविधेयवत्त्वबोधनं यत्र
(तत्र) तद्धर्मावच्छिन्नवाचकप्रातिपदिकात् षष्ठीसप्तम्यौ भवत इति सूत्रार्थः
(स)र्वसन्नः । यथा क्षत्रियत्वविशिष्टस्य नरत्वावच्छिन्नस्य क्षत्रियत्वशून्य-
(न)रत्वावच्छिन्नब्राह्मणावृत्तिशूरत्ववत्त्वबोधनम् 'नराणां क्षत्रियः शूर' इत्य-
(त्रा)स्तीति, भवति नृशब्दाद्विभक्तिः । यत इत्यस्याभावे यस्य जातिविशि-
(ष्ट)स्येत्यस्य लाभः स्यात्तदा क्षत्रियपदादेव षष्ठी स्यादित्याशयेनाह-*यतः
(कि)मित्यादि* । ननु क्षत्रियपदात्प्रथमापरत्वात्स्यादत आह-*षष्ठ्यपवा-
(द)त्ववदिति* । *अत एव* । निरुक्तस्य विभक्त्यर्थत्वादेव ।

णस्य विभक्त्यर्थत्वे सङ्गच्छते । उद्भूतावयवभेदविवक्षया नृणामिति बहुवचनम् । तिरोहितावयवभेदविवक्षया निर्धारणविषये एकवचनं त्वसाध्विति 'कारके' (पा०सू०१।४।२३) इति सूत्रे भाष्ये स्पष्टम् । तत्र हि "निर्धारणे कारकेषु इति ब्रूयात्" इत्युक्तम् । "भिदचोऽन्त्यात्" (पा०सू०१।४।४७) इत्यादौ तु सौत्रो निर्देश इति तदाशयः । 'द्वन्द्वः सामासिकस्य च' इत्यत्र समाससमूहमद्ध्ये इत्यर्थः । समूहेऽर्थे "अचित्त" (पा०सू०४।२।४७) इति ठक् ॥

पञ्चमी वि (पा०सू०२।३।४२) ॥ 'यतश्च निर्धारणम्' (पा०सू०२।३।४१) इत्यनुवर्तते विभागोऽत्र भेदः । तत्र निर्धारणे सर्वत्र यथाकथंचिद्भेदस्य सत्त्वेन विभक्तिग्रहणसामर्थ्यात् यत्र भेद एव न तु केनाप्युपात्तरूपेणाभेदस्तत्रैव प्रवृत्तिरित्याह,–भेद एवेति । अत्र पञ्चम्यर्थो निर्धारणविषयत्वरूप एव । पाटलिपुत्रकावधिकनिर्धार-

---

नाराणामिति बहुवचनोपपत्तये आह–*उद्भूतावयवेति* । यद्धर्मावच्छिन्नस्येत्युपादानात् 'नराणां व्याघ्रः शूर' इति न, किन्तु 'नरेभ्यो व्याघ्रः शूर' इत्येव । तादृशजात्यादिशून्येत्युपादानाद्विधेयतया विवक्षितस्य शूरत्वस्य नरत्वावच्छिन्नावृत्तित्वबाधेऽपि न क्षतिः । तद्धर्मावच्छिन्नावृत्तित्वं परित्यज्य तादृशजात्यादिशून्ययत्किञ्चिदवृत्तित्वनिवेशे 'नराणां क्षत्रियो गौर' इत्यपि स्यात् । गौरत्वस्य क्षत्रियत्वशून्यशूद्रावृत्तित्वात् । तादृशजात्यादिशून्यसामान्यावृत्तित्वनिवेशेऽस्य प्रयोगस्यापत्तिनिरासेऽपि 'नराणां क्षत्रियः शूर' इत्यत्रैवानुपपत्तिः । शूरत्वस्य विधेयस्य क्षत्रियत्वशून्यसामान्यान्तर्गतराक्षसादिवृत्तित्वेन क्षत्रियत्वशून्यसामान्यावृत्तित्वबाधादतस्तद्धर्मावच्छिन्नावृत्तिनिवेशः ।

ननु निर्द्धारणस्थले यदि नैकवचनन्तदा गीतावाक्यस्य का गतिरत आह–*द्वन्द्व इत्यादि* ।

*पञ्चमी वि* । अस्मिन्सूत्रे अनुवर्त्तमानन्निर्द्धारणपदमवृत्तिधर्मप्रकारकज्ञानविषयत्वपरमेव । एतद्घटकाभावप्रतियोगिवृत्तित्वे प्रकृत्यर्थतावच्छेदकावच्छिन्नस्य निरूपितत्वसम्बन्धेनान्वयो निर्द्धारणस्य च स्वरूपसम्बन्धेन भेदाश्रये विशेषणत्वम् । भेदश्च प्रकृत्यर्थतावच्छेदकानाश्रयत्वमेवात्र पारिभाषिको, विभक्तग्रहणसामर्थ्यान्न त्वन्योन्याभावः । एवञ्च यत्सिद्धन्तदाह–*तत्र निर्धारण इति* । *पाटलिपुत्रकावधिकेति* । अवधित्वमत्र निरूपकत्वमेव संसर्गघटकतया भासते । एवं सति यावद्

विषया माथुरा आढ्यतरा इति बोधः । एवञ्च त्रितयोपादान एव निर्धारणप्रतीतिरिति 'पुरुषोत्तमः' इत्यादौ सम्बन्धसामान्ये षष्ठी उत्तमनिरूपितेति समाससिद्धिरिति तरप्सूत्रे कैयटः ॥

साधुनि (पा०सू०२।३।४३) ॥ निपूर्वात् 'पुण कर्मणि शुभे' इत्यत इगुपलक्षणः कः । अर्चतेश्च भौवादिकाद् "गुरोश्च हलः" (पा०सू०३।३।१०३) इत्यप्रत्ययः । अर्चा । चौरादिकात्तु "ण्यास-श्रन्थ" (पा०सू०३।३।१०७) इति युच् स्यात् । षष्ठ्यपवादोऽयम् । प्रत्यादिभिरिति । "लक्षणेत्थम्" (पा०सू०१।४।९०) इति सूत्रोपात्ताः प्रत्ययादयः ॥

नक्षत्रे च (पा०सू०२।३।४५) लुप्शब्देन लुप्सञ्ज्ञया लुप्तप-

---

वाक्यार्थबोधस्तमाह—*पाटलिपुत्रकावधिकेति* । *त्रितयोपादान इति* । निरुक्तनिर्द्धारणनिरूपकवाचकस्य तदाश्रयवाचकस्य निरुक्तनिर्द्धारणप्रयोजकधर्मवाचकस्य च यत्रोपादानं शब्देनोच्चारितेन प्रतीतिस्तत्रैतत्सूत्रनिष्पन्नपञ्चम्यन्तस्य साधुत्वमिति फलितम् ।

यत्र तु 'सांकाश्यकानाम्पाटलिपुत्रकाणाञ्च पाटलिपुत्रका अभिरूपतमा' इति प्रयुज्यते तत्र निर्द्धार्यमाणेषु पाटलिपुत्रकेषु न भेदः, एवं च शब्दार्थैकबुद्धिविषयत्वरूपसाहित्याश्रयत्वेनाभेदस्यापि सत्वात् सा बुद्धिश्च पूर्वकालिकी सांकाश्यकाश्च पाटलिपुत्रकाश्चाभिरूपा इत्याकारा ग्राह्येति न तत्र पञ्चमी । ननु 'पुरुषोत्तम' इत्यत्र पुरुषाणामुत्तम इत्यर्थः प्रतीयते, एवञ्चात्र पूर्वसूत्रेण षष्ठी वाच्या, तथा च "न निर्द्धारण इति सूत्रेण समासनिषेधापत्तिरत आह—*सम्बन्धसामान्य इति* । तथा च "न निर्द्धारण" इति सूत्राप्राप्तिरिति भावः । *कैयट इति* । अत्रारुचिबीजन्तु पुरुषोत्तम इत्यत्र षष्ठीसमाससत्त्वे हि तदुक्तरीत्या पुरुषोत्तमपदस्य साधुत्वं कल्पनीयम् । स एव तु न ।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।

इति वाक्यात्कर्मधारयस्यैव प्रतीतेः । न चोत्तमपदस्य पूर्वनिपातापत्तिः । राजदन्तादित्वात्पूर्वनिपातप्रकरणस्यानित्यत्वाद्वा ।

*अर्चतेश्चेति* । अर्चतेस्त्वित्यर्थः । गणपाठे प्रत्यादिगणपाठाभावादाह—*लक्षण इति* । न च साधुशब्दोपादानमत्र विफलम्, साध्वसाधुप्रयोगे चेत्येव सिद्धत्वादिति वाच्यम् । अर्चायाम्प्रत्यादियोगे निषेधार्थमस्योपादानात् ।

*प्रसितोत्सुकाभ्याम्* । प्रसितशब्दोऽत्रासक्तपरो न तु प्रकर्षेण सि-

यार्थो लक्ष्यते इति बोध्यम्। अधिकरणे किम्? अद्य पुष्यः। असत्यान्तदनुवृत्तावन्तरङ्गत्वात्प्रातिपदिकार्थ एव स्यात्। मूलेनेति। 'नक्षत्रेण युक्तः कालः' (पा०सू०४।२।३) इत्यणो "लुबविशेषे" (पा०सू०४।२।४) इति लुप्। नक्षत्रे किम्। पञ्चालेषु तिष्ठन्ति। "जनपदे लुप्" (पा०सू०४।२।८१) इति लुप् ॥

सप्तमीपञ्चम्यौ (पा०सू०२।३।७) ॥ "कालाध्वनोः" (पा०सू०२।३।५) इत्यतस्तदनुवर्त्तते तच्च पञ्चम्या विपरिणम्यते मध्यस्यावधिद्वयसापेक्षतया द्विवचनान्तेन समासः। बोधस्तु शक्तित्वेन शक्तिद्वयस्य, न तु द्वित्वेनेति बोद्धव्यम्। ननु कर्त्तृरूपस्य कारकस्यैकत्वाद्भेदनिबन्धनमध्यव्यपदेशासम्भवोऽत आह-शक्तिद्वयमध्ये याविति। कर्त्तृत्वादिशक्तिरेव कारकम्। सा च क्रियाभेदेन भिन्नेति भावः। यद्यप्यवध्यवधिमतोस्साजात्यनियमान्न कालाध्वानौ कारकमध्ये सम्भवतस्तथापि शक्तिशब्देन तदाधारकालादिग्रहणान्न दोषः। षष्ठ्यपवादोऽयम्। स्वानन्तरकालवृत्तित्वादिकं विभक्त्यर्थः। शक्तिद्वयमध्यवर्त्तित्वन्तु वस्तुसन्निमित्तम्।

अधिकशब्देनेति। कर्त्तरि क्तप्रत्ययान्ताध्यारूढशब्दार्थका-

---

त इत्यर्थकः। "तत्परे प्रसितासक्त" इतिकोशात्।

लुप्शब्दस्याभावबोधकतया नक्षत्रवाचकस्य तस्मिन्नर्थे न वृत्तिरत आह-*लुप्शब्देनेति*। *अधिकरण इति किमिति*। मण्डूकप्लुत्याऽधिकरणशब्दानुवृत्तिः किमर्थेत्यर्थः। अनुवृत्त्यभावे सर्वविभक्त्यपवादत्वमस्य स्यात्। अनिर्द्दिष्टा इतिन्यायात्। *अन्तरङ्गत्वात्*। इतरानपेक्षत्वेनान्तरङ्गत्वादित्यर्थः।

*द्विवचनान्तेन समासइति*। अन्यथा सूत्रस्यैवैतस्यानुपपत्तिः स्यादिति भावः। अभेदैकत्वसङ्ख्याया वृत्तौ भानानुरोधेनाह-*बोधस्त्विति*। कर्त्तृकारकस्य द्रव्यरूपतया तन्मध्यत्वमनुपपन्नमित्यभिप्रायेणाह-*ननु कर्त्तृरूपस्येति*। *शक्तिरेव कारकमिति*। अत्र कारकपदेन विवक्षितेत्यर्थः धर्मधर्मिणोरभेदादिति भावः। *क्रियाभेदेन*। भिन्नभिन्नकालोत्पन्नक्रियाभेदेन। *तदाधारकालग्रहणादिति*। लक्षणया शक्त्याधारकालग्रहणादित्यर्थः। अत्र कालाध्वनोर्विभक्त्योश्च न यथासङ्ख्यमस्वरितत्वात्। *कर्त्तरि क्तप्रत्ययान्तेति*। अधिकमिति सूत्रेण कर्त्तरि क्तप्रत्यये कनि उ

धिकशब्दयोगे लोकशब्दात् षष्ठ्याम्प्राप्तायाञ्ज्ञापकादिमे इष्येते इत्यर्थः। "तदस्मिन्नधिकम्" (पा०सू०४।२।६७) इति सूत्रे भाष्ये तु उपश्लिष्टपदाध्याहारेणौपश्लेषिके ऽधिकरणे सप्तमीत्युक्तम्। कर्मणि-क्तप्रत्ययान्ताध्यारूढशब्दार्थकाधिकयोगे तु अधिको लोको हरिणेति प्रथमैव।

उपपरार्द्धे इति। "उपाधिके च" (पा०सू०१।४।८७) इति कर्मप्रवचनीयत्वम्। ननु 'मामुद्दिश्यविनियोक्ष्यत' इत्यर्थादत्र कर्मणि द्वितीयैवेति किङ्कर्मप्रवचनीयत्वेनेत्यत आह–अगतित्वादिति।

---

त्तरपदलोपे च सिद्धो यस्तेन योग इत्यर्थः। *षष्ठ्यामिति*। निरूपित-त्वार्थकषष्ठ्यामित्यर्थः। *ज्ञापकादिति*। उक्तसूत्रद्वयनिर्देशरूपज्ञापका-दित्यर्थः। ननु "सप्तम्यधिकरणे च" इति सूत्रेण सप्तमी क्रियायोगाभा-वादिति भावः। इदमनध्याहारपक्षेऽध्याहारे त्वधिकरणसप्तम्येव तदाह– *तदस्मिन्नेति*। यश्च कर्मार्थकाध्यारूढशब्दात्कनि कृते उत्तरपदलोपे च सिद्धोऽधिकशब्दस्तद्योगे त्वाह—*कर्मणीति*। अधिकमितिसूत्रेण तन्त्रे-णोभयोरप्यधिकशब्दयोर्निपातनादिति भावः। अधिकमितिसूत्रे भाष्ये स्पष्टमेतत्।

उपशब्दस्य कर्मप्रवचनीयत्वमुपपादयति–*उपोऽधिकइति*। परार्द्धा-दधिकेत्यत्र पूर्वोक्तज्ञापकादेव पञ्चमी। मूले *पर्यायेणेति*। यदि यस्य चे-श्वरवचनम्" इत्यत्र यच्छब्दः स्ववाचीश्वरशब्दस्तु धर्मिपर एव तदा यस्य स्वस्येश्वर उच्यते तद्वाचकात्सप्तमीत्यर्थो यदा तु यच्छब्दः स्वामिपर ई-श्वरशब्दश्च भावप्रधानत्वेनेश्वरत्वपरस्तदा यस्य स्वामिन ईश्वरत्वमुच्यते तद्वाचकात्सप्तमीत्यर्थे स्वामिवाचकात्सप्तमीत्यर्थः। उभयत्रापि "अधिरी-श्वर" इति कर्मप्रवचनीयसंज्ञा। इयञ्च सप्तमी विशेषणवाचकादेव। ष-ष्ठ्यपवादत्वात्। विशेष्यवाचकात्तु प्रातिपदिकार्थे प्रथमैव। 'अधिभुवि' इत्यस्माद् भूमिं निरूपितस्वामित्ववानिति बोधः। 'अधिराम' इत्येतस्मात्तु रामनिरूपितस्वत्ववती भूरितिबोध इति भावः।

अधिकशब्दस्य शौण्डादिगणे पाठफलमाह–*सप्तमी शौण्डैरिती-ति*। यदा तु विभक्त्यर्थेऽव्ययीभावस्तदा तु 'अधिरामम्भूः, इति प्रयोगः। *ईश्वरेऽर्थ इति*। गम्यमाने इत्यर्थः। तदुपपादयति—*विनियोक्तु-रिति*। ननु मामित्यत्र "कर्मणि द्वितीया' इति सूत्रेणैव द्वितीया भवि-ष्यति किङ्कर्मप्रवचनीयसंज्ञयेत्याशयेन शङ्कते—नन्विति*। *अत्रेति*।

तिङ्चेति । उदात्तवति तिङन्ते गतिर्निहन्यत इत्यर्थः । अत्र "तिङ्ङतिङः" (पा०सू०८।१।२८) इति निघातस्य "निपातैर्यद्यदि" (पा० सू०८।१।३०) इत्यादिना निषेधात् करिष्यतीति तिङन्तस्योदात्तवत्त्वमिति सर्वेष्टसिद्धिः ॥

इति विभक्त्यर्थाः ॥

---

यदत्र मामधिकरिष्यतीत्यत्रेऽर्थः ! *उदात्तवत्त्वमिति* । विकरणेभ्यो नियमस्य बलत्त्वेन करिष्यतीत्यत्र तिङि कृते विकरणे च कृते उदात्तवत्त्वमिति ।

*सर्वेष्टसिद्धिरिति* । सर्वेषामिष्टानान्निघातवारणकर्मप्रवचनीयसंज्ञाफलयोदात्तश्रवणरूपाणामित्यर्थः । 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि' इति भाष्यकारोक्तेर्मङ्गलस्यावश्यकत्वाभिप्रायेणात्र सिद्धिशब्दोपादानम् । मूलेऽपि अधिरीश्वरे" इतिसूत्रात् "ईश्वर" इति "विभाषा कृञि" इति सूत्रेऽनुवर्त्ततेऽतस्तज्ज्ञानेनेश्वरस्मरणरूपमङ्गलं सर्वेषाम्भवत्वित्यभिप्रायेण प्रकरणान्तेऽस्य सूत्रस्योपन्यास इति शिवम्॥

॥ इति सप्तमीविवरणम् ॥

---

इति श्रीमदनन्तकल्याणसद्गुणनिधानाखिलपण्डितसार्वभौमभूमण्डलप्रसारिविमलतरानवद्यसद्यशः पार्वणपीयूषभान्वगस्त्यकुलवंशावतंसश्रीभवदेवमिश्रात्मज"भैरकमिश्र" कल्पितायाश्चन्द्रकलायाङ्कारकान्तशब्देन्दुशेखरव्याख्यनं समाप्तम् ॥

अङ्कर्षिसिद्धीन्दु १८७७ मिते वत्सरे विजयाह्वये ।
माघे मास्यसिते पक्षे नवम्याम्भानुवासरे ॥
शब्देन्दुशेखरस्येयङ्कारकान्तस्य या कृता ।
सार्पिता तु शिवे तेन सर्वज्ञः सर्वदाऽवतु ॥
॥ श्रीमत्सीतारामचन्द्राभ्यान्नमः ॥
॥ शुभमस्तु ॥



श्रीगणेशाय नमः ॥

# अथाव्ययीभावः ।

**समर्थः पद (पा०सू०२।१।१) ॥ विधिशब्दः कर्मसाधनः, शेषषष्ठ्या समासस्तदाह–पदसम्बन्धीति । पदविधिसहचरितो-**

---

* श्रीगणेशाय नमः *

श्रीमत्सीतारामचन्द्राभ्यान्नमः ।

सीताया सहितं रामं वन्देऽहं रघुनन्दनम् ॥
महर्षिभिर्वसिष्ठाद्यैर्वीरैर्हनुमदादिभिः ॥ १ ॥
युतं सिंहासने रत्नमये संस्थितमव्ययम् ॥
यद्ध्यानादखिलां सिद्धिं लभन्ते परमाम्भुवि ॥ २ ॥
प्रणम्य पितरं मिश्रं भवदेवाभिधं गुरुम् ॥
सीताञ्च जननीं कुर्वे समासादौ यथामति ॥ ३ ॥
व्याख्यां शिशुहितामेतां पश्यन्तु कवयो मयि ॥
कृपया परया तेषु विहितोऽयं मयाञ्जलिः ॥ ४ ॥
आसीदृषिवरः श्रीमानगस्त्यः कुम्भसम्भवः ॥
येनैकचुलुकेनैव पीतो जलनिधिर्महान् ॥ ५ ॥
अशरण्या दुराधर्षा आताप्यादिभिरन्विता ॥
दक्षिणा दिक् कृता येन शरण्या पुण्यकर्मणा ॥ ६ ॥
स्फीते तस्य कुले जातो जगदीशस्तदात्मजः ॥
वन्दिमिश्र इतिख्यातो यस्येयं कुलसन्ततिः ॥ ७ ॥
श्रीभवानीवरेणास्मिंल्लोके विख्यातिमागता ॥
तदात्मजो लक्ष्मणोऽभूदद्वितीयस्तदात्मजः ॥ ८ ॥
भवदेवाभिधः श्रीमान् विद्वद्वर उदारधीः ॥
यत्कीर्त्तिचन्द्रज्योत्स्नाभिर्व्याप्तम्भूमण्डलम्महत् ॥ ९ ॥
तत्सूनुर्भैरवः काश्यां जातो मिश्रोपनामकः ॥
नत्वा सरस्वतीन्देवीं क्रियते तेन सङ्ग्रहः ॥ १० ॥

निरूप्य कारकान्तेन सुप्संज्ञोद्देश्यसम्बन्धिनीं संज्ञां तत्प्रयुक्तकार्यञ्च तत्प्रसङ्गात्समासनिरूपणमारभते-*समर्थः पद इति* । *कर्मसाधन इति* । भावसाधनत्वे पदानामिति कर्मषष्ठ्यन्तेन वक्ष्यमाणविधानस्य पदकर्मकत्वाभावेन समासानुपपत्तिः । समर्थपदसामानाधिकरण्यञ्च नोपपद्यत इति भावः । *शेषषष्ठ्यासमास इति* । योग्यत्वात् । कर्मणि षष्ठी तु न विधीयमानस्य वक्ष्यमाणस्य पदकर्मकत्वविरहात् । ननु पदोद्दे-

ऽपि पदविधिशब्देन गृह्यते । अत एव सन्नन्तादेकार्थीभावः । पद-श्यकत्वं पदसंज्ञायोग्यसमुदायस्य तादृशसमुदायाद्वा यत्क्रियते तस्य सम्भवति, न तु सन्नन्तविषय इत्यत आह-*पदविधिसहचरित इति* । *अत एव* । पदविधिसहचरितस्य पदविधिशब्देन ग्रहणादेव । *सन्नन्तादावेकेति* । एतस्य पदविधिसहचरितत्वन्तु पदोद्देशेन विधीयमानक्यच्प्रत्ययविधायकशास्त्रे सन्विधायकसूत्रस्थस्येच्छायामित्यस्यानुवृत्त्या पदोद्देश्यकविधिविधायकशास्त्रसम्पाद्यशाब्दबोधप्रयोजकपदघटितवाक्यविधेयत्वेन बोध्यम् । ननु सन्नन्तादावेकार्थीभावे किं मानमिति चेत् ! सन्सूत्रस्थभाष्यस्यैव मानत्वात् । तथाहि-"धातोरिति किमर्थम् । प्राकर्त्तुमैच्छत् । प्राचिकीर्षत् । सोपसर्गान्मा भूत् । सङ्घातेन विशिष्टा क्रिया प्रतिपाद्यते" इति । ततः "सन् प्राप्नोति" ततश्च सङ्घातादेर्द्विवचनादिप्रसङ्गः । यद्यपि लडन्तेऽपि दोषस्तथाप्युपसर्गात्पूर्वमडागमप्राप्तिं प्रदर्शयितुमत्र लङन्तप्रयोगः ।

ततो वार्त्तिककार आह-"कर्मग्रहणात्सन्विधौ धातुग्रहणानर्थक्यम् । कर्मणः समानकर्तृकादिच्छायां वा सन्भवतीत्येव धातोरुत्पत्तिर्भविष्यति" अत्रोपसर्गसमभिव्याहाराद्विशिष्टा क्रिया प्रतीयते कर्मत्वन्तु विशेष्यमात्रस्येति भावः । ततो भाष्यकार आह-"सोपसर्गं वै कर्म तत उत्पत्तिः प्राप्नोतिः । सोपसर्गं कर्मेति चेत् ? कर्मविशेषकत्वादुपसर्गस्यानुपसर्गकर्मेति । सोपसर्गस्य कर्मत्वे धात्वधिकारेऽपि सनो विधानमकर्मत्वात् । यदि सङ्घातस्य कर्मत्वमर्थद्वारा स्वीक्रियते तदावयवस्याऽकर्मत्वात्तद्वाचकात्सन्प्रत्ययो न स्यात् । अतः केवलधात्वर्थस्य कर्मत्वं वाच्यमिति नेदं धातुग्रहणस्य प्रयोजनम् । इदन्तर्हि प्रयोजनम् । सुबन्तादुत्पत्तिर्मा भूत् । अत्र कैयटः-'विकल्पितत्वात्सनः पक्षे सावकाशाः क्यजादयः' इति भावः ।

ततो भाष्यकार आह-सुबन्ताच्चाप्रसङ्गः क्यजादीनामपवादत्वात् । सुबन्ताच्च सनोऽप्रसङ्गः, किङ्कारणम् ? कयजादीनामपवादत्वात् । सुबन्तात् कयजादयो विधीयन्ते तेऽपवादत्वाद्बाधका भविष्यन्ति" । ततोऽग्रे धातुग्रहणस्य प्रयोजनमुक्तम् । अङ्गपरिमाणार्थन्धातुग्रहणङ्कर्त्तव्यम् । अन्यथा सोपसर्गात्स्यात् । अपि च धातोर्विहितः प्रत्ययः शेष आर्द्धधातुकसंज्ञो भवतीति सन आर्द्धधातुकसंज्ञापि सिद्धा भवति । यच्चोक्तं सोपसर्गस्य कर्मत्वे धात्वधिकारेऽपि सनो विधानमकर्मत्वादिति । "नैष दोषः, कर्मण इति । नैषा धातुसमानाधिकरणा पञ्चमी किन्तर्हि अवयवयोगे एषा षष्ठी कर्मणो यो धातुरवयव" इति । ततः केवलादुत्पत्तिश्चिकीर्षतीत्यत्र न प्राप्नोतीत्याशङ्क्य व्यपदेशिवद्भावेन साधयित्वा "कामन्तर्ह्यनेनैव हेतुना

विधिश्च समास संज्ञादिः। तस्य च न सामर्थ्यं साक्षात् विशेषणमसम्भवादत आह—समर्थाश्रित इति। सामर्थ्यं चात्र न व्यपेक्षा, व्याख्यानात्, समासादिवृत्तिषु तस्या असंभवाच्च। किन्त्वेकार्थीभावः

---

ऽजपि कर्त्तव्यः। महान्तं पुत्रमिच्छतीति कर्मणो यत्सुबन्तमवयव इति। न कर्त्तव्य असामर्थ्यान्न भविष्यति। कथमसामर्थ्यम्। सापेक्षमसमर्थं भवति" इति।

अत्र कैयटः सुबन्तात्क्यज्विधानात्पदविधित्वात्समर्थपरिभाषोपस्थानादिति भावः। अत्रैव यद्यप्येतद्भाष्यव्याख्यानावसरे कैयटेनोक्तम्। सन्विधौ तु तदनुपस्थानात्सापेक्षादपि सन उत्पत्तिरिति। तथापि वावचनानर्थक्यञ्चेत्युत्तरभाष्यपर्यालोचनया सन्विधावपि समर्थपरिभाषोपस्थितिरित्यभिप्रायेण स एवाह—"अथ वा धातुरेव विशिष्टां क्रियामाह, उपसर्गस्तु द्योतक, इति सापेक्षत्वाभाव" इति। तथाहि। वावचनानर्थक्यं तत्र नित्यत्वात्सनः वा वचनानर्थकम्। किङ्कारणम्। तत्र नित्यत्वात्सनः। इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च। स्वभावतश्चैतद्भवति वाक्यञ्च प्रत्ययश्च। तत्र स्वाभाविके वृत्तिविषये नित्ये प्रत्यये प्राप्ते वावचनेन किमन्यच्छक्यमभिसम्बन्धुम् अन्यदतः संज्ञायाः। न च संज्ञाया भावाभावाविष्येते तस्मान्नार्थो वावचनेनेति। अत्र कैयटः—'वृत्तेरेकार्थीभावविषयत्वाद्व्यपेक्षाविषयत्वाच्च वाक्यस्य भिन्नार्थत्वाद्बाधकभावाप्रसङ्गात्' इति भावः। न च संज्ञाया इति। अनर्थः प्रत्युत वाग्रहणाद्भवति। प्रत्ययसंज्ञाया विकल्पे सति तन्निबन्धनकार्यविकल्पप्रसङ्गादिति। अत्र यद्यपि सनः पदविधित्वाभावात्समर्थपरिभाषानुपस्थितौ कथमस्यैकार्थीभावविषयत्वमिति शङ्का भवति। तथापि एतद्भाष्यप्रामाण्यादस्याप्येकार्थीभावविषयत्वम्। अधिकमन्यत्र स्पष्टम्।

ननु विधीयमानसमाससंज्ञाया न समर्थत्वमत आह—*पदविधिश्चेत्यादि*। सूत्रे समर्थशब्दो लाक्षणिक इति भावः। *व्याख्यानादिति*। अत्रैव सूत्रे भाष्ये उक्तमेकार्थीभावः सामर्थ्यम्परिभाषा चेति तन्मूलकादित्यर्थः। *तस्याः*—व्यपेक्षायाः। *असम्भवादिति*। अस्याः स्वीकारे तु विशेषणान्वयादिदोषः स्यादिति भावः। अत्रेदम्बोध्यम्। सनाद्यन्ते यद्यप्येकार्थीभावाद्विशेषणसापेक्षत्वे सनादयो न भवन्ति। अत एव 'महान्तम्पुत्रमिच्छति' इत्यत्र क्यचमाशङ्क्य 'सापेक्षमसमर्थम्भवति' इति तत्सूत्रे उक्तम्। तत्तुल्यन्यायेन समानाधिकरणविशेषणसापेक्षत्वे 'स्तोकम्पक्तुमिच्छति' इत्यत्र वाक्यमेव न तु सन्। यत्र तु व्यधिकरणं विशेषणं तत्र भवत्येव, ओदनम्पक्तुमिच्छति, ओदनम्पिपक्षति। गमकत्वस्य सापेक्षस्थले

स च विशेष्यविशेषणभावात्रगाह्युपस्थितिजनकत्वम्। "संसृष्टार्थं सामर्थ्यम्" इति भाष्योक्तेः। अत एव राजपुरुषैकदेशे राज्ञि ऋद्धस्येत्यादिविशेषणान्वयो न। 'देवदत्तस्य गुरुकुलम्' इत्यादौ तु गमकत्वाद्भवत्येव वृत्तिः। एवं 'राजपुरुषः' इत्यादौ विशेषणपदे संख्याऽनवगमोऽप्येकार्थीभावकृतः। संख्याविशेषप्रकारेण तत्तदर्थभाने पृथगुपस्थितेस्तन्त्रत्वात्। यथा 'घटाः' इत्यादितो बहुत्वेनैव त्रिचतुरादिव्यक्तीनां भानं, न तु त्रित्वचतुष्ट्वादिना तथा वृत्तौ राजत्वादिनैकानेकव्यक्तिभानं तात्पर्यवशान्न त्वेकत्वद्वित्वादिना। एवं 'तावकीनो' 'यौष्माकीणः' इत्यादौ संबोध्यत्वेनैवैकानेकव्यक्तिभानं न त्वेकत्वबहुत्वादिना। विग्रहवाक्यीयैकवचनत्वारोपेण शास्त्रप्रवृत्तिमात्रं न तु तद्बोधः, वृत्तिस्वभावविरोधादिति मञ्जूषायां विस्तरः।

गमकत्वादेव 'शिवस्य भगवतो भक्तः इत्यर्थे 'शिवभागवतः' इति "अयः शूल"(पा०सू०५।२।७६) इति सूत्रे भाष्ये प्रयोगः।

---

वृत्तिप्रयोजकतया तस्यात्रापि सत्त्वात्। अत एव "ललितान्निर्गते तीरे सेतुमेषा चिकीर्षति" इति प्रयोगो दृश्यते। प्रधानस्य सापेक्षत्वे तु सामानाधिकरण्येऽपि वृत्तिर्भवत्येव। उपमितम्' इतिसूत्रे सामान्याप्रयोगग्रहणात्। गमकत्वस्य तत्र सत्वाच्चेति । तत्रैकार्थीभावपदार्थन्निर्वक्ति—*स च विशेष्येति*। यद्यपि वाक्यस्याप्यर्थोविशेष्यविशेषणभावोऽस्ति। अत एव 'कृत्तद्धित' इतिसूत्रे समासग्रहणस्य वाक्यस्यार्थवतः प्रातिपदिकसंज्ञावारकनियमपरतया वर्णनं सङ्गच्छते। तथाहि तत्र वाक्यार्थानाम् पृथग्भूतत्वम्। वृत्तौ त्वपृथग्भूतत्वमिति विशेषः। एवञ्च विशेष्येत्यस्यापृग्भूतानामर्थानामित्यादिर्बोध्यः। यथा पङ्के पांसूदकयोः सद्भावेऽपि तयोरन्यतरविषयकप्रतीतेर्नान्यतराविषयकत्वं तथेहापि पांसूदकमेलने पिण्डाख्यमतिरिक्तं वस्तु प्रतीयते तथेहापि संसृष्टमेव प्रतीयते। न चैवं वृत्तिविग्रहयोः समानार्थकत्वव्यवहारस्य कथमुपपत्तिरिति वाच्यम्, रेखागवयन्यायमाश्रित्य शास्त्रनिष्पन्नेन वाक्येन यथा तस्मिन्मृत्पिण्डे पांसूदक इति व्यवहारस्तद्वदत्रापि पूर्वपदार्थत्वोत्तरपदार्थत्वव्यवहारेण समानार्थकत्वव्यवहारस्योपपत्तेः। *अत एव*। एकार्थीभावस्वीकारादेव। एकार्थीभावस्वीकारस्य प्रयोजनान्तरमाह-*एवमिति*। विशेषणपद इति तदर्थत्वेन कल्पितेऽर्थे इत्यर्थः। *पृथगुपस्थितेः। गमकत्वस्यैव वृत्तिप्रयोजकत्वे साधकान्तरमाह-*गमकत्वादेवेति*। गमकत्वञ्च वाक्यजन्यशाब्द

तं तु तत्र वृत्तिरेव न तु शिवस्य भागवतः इति वाक्यं साधु। त्र भगवच्छब्दादण्, शिवपदेन भगवच्छब्दस्य समासश्च युगपदेति बोध्यम्। तथोपस्थितिश्च समुदायशक्तिसाध्या। एवञ्च क्लृप्तशक्तित्यागे मानाभावात् प्रत्येकशक्तिसहकृतया समुदायशक्त्या तदुपस्थितिः। अयमेव चैकार्थीभावः। जहत्स्वार्था वृत्तिः पदानामानर्थक्यमिति तु न युक्तम्। 'महाबाहुः' 'सुपन्थाः' इत्यादावात्वाद्यनापत्तेः। 'अर्थवत्त्वे' भूतपूर्वगत्याश्रयणन्तु सत्यां गतावयुक्तम्। तदुक्तं वृद्धैः—

"जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी" इति।

अवयवार्थविरुद्धो यत्र समुदायार्थस्तत्रैव सेति तदर्थः। यथा गौरखर–कृष्णसर्पादौ।

---

बोधीयपरस्परनिरूप्यनिरूपकभावापन्नविषयताविलक्षणविषयताकशाब्दबुद्धित्वावच्छिन्नाजनकत्वे सति तावदर्थविषयकशाब्दबोधजनकत्वम्।

*तत्र वृत्तिरेवेति*। तादृशसमुदायस्य तत्सूत्रभाष्ये पाठात्। *तदुपस्थितिरिति*। विशिष्टार्थोपस्थितिरित्यर्थः। *समुदायेति*। वृत्त्यात्मकसमुदायेत्यर्थः। समुदायशक्तिग्रहश्च राजपुरुषादिपदं राजसम्बन्धविशिष्टपुरुषादौ शक्तमित्यादिरीत्या भवति सा यदा प्रत्येकपदशक्तिग्रहस्तदैव नान्यथेत्याशयेनाह—*एवञ्चेति*।। प्राचांमतं खण्डयति—*जहदिति*। *महाबाहुरिति*। "आन्महत" इत्यात्वस्यार्थवन्महच्छब्दसम्बन्धितया जहत्स्वार्थत्वेऽन्वयानुपपत्तेः। ननु समानाधिकरणे उत्तरपदे परे तस्यात्त्वविधायकत्वात्स्वार्थस्य त्यागे पूर्वस्य पदस्य सर्वत्रैवानर्थकतया सूत्रमेव व्यर्थमिति तत्सामर्थ्यादनर्थकत्वेऽपि भविष्यतीत्यत आह—*सुपन्था इति*। "पथिमथ्यृभु" इत्यस्य केवले चरितार्थत्वादिति भावः। ननु भूतपूर्वगत्योक्तसूत्रद्वयस्यापि निर्वाह इत्यत आह—*भूतेति*। तत्रैव रथन्तरशालिपर्णीगौरस्वरेन्द्रयवेन्द्रगोपादौ। एतेषु रूढेः प्रतिबन्धकत्वाज्जहत्वाजहत्स्वार्थतैव। रूढेः प्रतिबन्धकत्वञ्च समुदायशक्तिज्ञानेन विलक्षणार्थविषयकशाब्दबोधे जननीयेऽवयवशक्तिज्ञानस्य सहकारिताकल्पनमेव। ननु मणिन्त्रादिन्यायेन प्रतिबन्धकत्वं गौरवात्। एतेषु समुदायावयवेषु आरोपितार्थवत्त्वमादाय साधुत्वम्। राजपुरुषाद्यवयवेषु त्वारोपो वक्तुमशक्यः। प्रसिद्धार्थबाधाभावात्। किञ्च जहत्स्वार्थत्वादिव्यवहारः पूर्वपदमादायैव। नचैकार्थीभावोपपत्तये शास्त्रकृत्कल्पितमेव। अत एव "यदि जहत्स्वार्था पुरुषमात्रस्यानयनम्प्राप्नोति" इति भाष्ये-

परिभाषेयम् । सा च पदविधिरिति सूत्रस्वरसात् । "समासेऽङ्गुलेः सङ्गः" (पा०सू०८।३।८०) इत्यादौ समासग्रहणाच्च । "गतिर्गतौ (पा०सू०८।१।७०) इति सूत्रे 'पदस्येत्यधिकारात् समर्थपरिभाषोपस्थितिः' इति कैयटस्वरसाच्च पदत्वेन सुबन्तत्वेन वा यत्र साक्षादुद्देश्यता तत्रैव प्रवर्त्तते । तेन "अन्यारादितर" (पा०सू०२।३।२९) इत्यादौ नास्याः प्रवृत्तिः ।

एकार्थीभावश्चालौकिकविग्रहवाक्य एव कल्प्यते । यथा शत्रादौ द्वितीयासामानाधिकरण्यं दृष्ट्वा लकारेऽपि तत्कल्पना, तथा 'अन्यपदार्थे' 'समर्थः' 'चार्थे' इत्यनुवादबलादस्य तत्र कल्पनेति । तथा च शतृविधायके भाष्यम्—"लस्याप्रथमासमानाधिकरणेनार्थेनायोगादादेशानुपपत्तिस्तस्य क्वापि प्रयोगाभावात्" इत्याशङ्क्य 'आदेशसामानाधिकरण्यं दृष्ट्वाऽनुमानाद् गन्तव्यं प्रकृतेरपि तद् भवति" इति । तत्र कैयटः 'सिद्धानां शब्दानामन्वाख्यानात् 'पचन्तं देवदत्तं पश्य' इत्यादि प्रयोगदर्शनात् स्थानिनोऽपि लटः प्रक्रियार्थं विहितस्याप्रथमासामानाधिकरण्यमनुमीयते' इति । अत्रानुमाने सौत्रानुवाद एवाकूलस्तर्कः । अत्र प्राक्रियार्थं विहितस्येत्यनेनान्यस्यापि प्रक्रियार्थं कल्पितस्य लोके ऽबोधकत्वं सूचितमित्यन्यत्र विस्तरः । समर्थः किम्? पश्य कृष्णं, श्रितो रामं मित्रः । अतः कृष्णश्रितयोः परस्परसं-

---

ऽभिहितम् ।

*परिभाषेयमिति* । लाघवात् । न त्वधिकारः । प्रतियोगमुपस्थितिकल्पने गौरवात्, पदविधिशब्दोपादानस्य व्यर्थत्वापत्तेश्च । परिभाषात्वस्वीकारे तु 'पदविधिरितिलिङ्गमिति यस्तत्रोपतिष्ठते' इत्यस्याध्याहारेण यः पदविधिस्तत्र समर्थ इत्युपतिष्ठते इत्यर्थकल्पनसम्भवादिति भावः । तत्र विशेषमाह—*सा चेति* ।

एकार्थीभावविषये विशेषमाह—*एकार्थीभावश्चेति* । कल्प्यत इति* । अत एव "द्वितीया श्रित"इत्यादौ समर्थप्रकृतिकेन सुबन्तेनेत्यर्थकल्पना भवति । *तत्र* । अलौकिके कल्पिते विग्रहवाक्ये । *अत्र* । लटोऽप्रथमासामानाधिकरण्यानुमानस्थले । *तर्क इति* । व्यभिचारादिशङ्कानिवर्त्तकस्तर्क इत्यर्थः । लट्* । अप्रथमासमानाधिकरणः । अप्रथमासमानाधिकरणादेशोद्देश्यत्वात् । यद्ययं प्रथमासमानाधिकरणो न स्यात्तदा तादृशा-

त्वाभावेनैकोपस्थित्यजनकत्वेनासामर्थ्यम् ॥

सह सुपा (पा०सू०२।१।४)। "सुबामन्त्रिते" (पा०सू०२।१।२) इत्यतः सुबिति वर्त्तते। सुबन्तसहितं सुबन्तं समाससञ्ज्ञकमित्यर्थः। समस्यते इत्युक्तिस्त्वबुधानां भिन्नयोः शब्दयोरनेन संश्लेषः क्रियत इति प्रतिपत्तेस्तदनुसारेण। संपूर्वकास्यतेश्च संश्लेषार्थः। "प्राक्कडारात्" (पा०सू०२।१।३) इत्यत्र प्राग्ग्रहणमावर्त्तते। तेन प्राक्समाससञ्ज्ञका भवन्ति, तत्सञ्ज्ञकाः सन्तोऽव्ययीभावादिसञ्ज्ञका इत्यर्थात्तयोः समावेश इति भाष्ये स्पष्टम्। अन्यथा आकडारत्वात्पर्यायः स्यात् इति दिक्।

अत्र सुबित्येकत्वं विवक्ष्यते। तेन माहिष्या अजायाश्च क्षीरमित्यत्र सुबन्तसमुदायस्य न क्षीरशब्देन समास इति कैयटादयः।

परे तु अनुवाद्यत्वादेकत्वाविवक्षैव। किं च तद्विवक्षायामेके-

---

नुवादविषयो न स्यादिति। *असामर्थ्यमिति*। यदर्थबोधकविग्रहवाक्यजन्यशाब्दबोधे परस्परमर्थानां सम्बन्धो भासते तत्र कल्पितेऽलौकिकविग्रहवाक्ये एकार्थीभावस्य कल्पनेति भावः। क्वचित्तु सामर्थ्याभावेऽपि समासो भवति 'असूर्यंपश्यानि मुखानि,' 'किमोदनः शालीनाम्' 'सक्त्वाढकमापणीयाना' मित्यादौ शिष्टप्रयोगात्।

*समाससंज्ञकमिति*। प्राक् समाससंज्ञकमित्यर्थः। "प्राक्कडारात्" इत्यत्र प्राग्ग्रहणात्प्राक्समास इत्यधिकारस्तेन वक्ष्यमाणसंज्ञाभिः समावेशः। समासशब्दस्य संज्ञात्वन्तु आकडार सूत्रे समाससंज्ञेति भाष्यकारीयव्यवहारात्कल्प्यते। समास इत्यत्र कर्मणि घञ्। सम्पूर्वकास्यतेः संश्लेषोऽर्थ इत्यन्वर्थेयं संज्ञा। ननु प्राग्ग्रहणस्यावधिनिर्देशार्थत्वात्समावेशो वक्ष्यमाणसंज्ञाभिर्न भविष्यति किन्तु पर्याय इत्यत आह—*प्राक्कडारादित्यत्रेति*।

*अत्र*। विभक्तस्य सुपा इत्येतत्पदस्याऽनुवर्त्तमानसुप्पदार्थे च। तत्फलमाह—*तेन महिष्या इत्यादि। न चायं 'षष्ठी' इत्यस्य सूत्रस्य विषय इति षष्ठीत्येकत्वविवक्षायाः फलमिति वक्तव्यमतोऽत्रास्योपादानमलमिति वाच्यम्। अस्योपलक्षणत्वात्। अत एव वार्त्तिककृता गतिमता तिङा गतेः समास उक्तो न तु गतिसमुदायस्य तिङेति।

कैयटादय इत्यनेन सूचितामरुचिम्प्रकाशयति—*परे त्विति*। *अनुवाद्यत्वादिति*। अनेनाविवक्षाया हेतुरुक्तः। 'ग्रहं सम्मार्ष्टि' इत्यत्रैव।

नैव केनचित्सुबन्तेन किञ्चिदेकं सुबन्तं समस्येत, न त्वन्यैरन्यानि। तस्मात्सुबित्यादौ जातिविवक्षा। एवञ्च यथा स्वाङ्गग्रहणेन स्वाङ्गसमुदायस्य न ग्रहणं स्वाङ्गत्वस्य प्रत्येकं समाप्तत्वात्। एवं सुबन्तत्वादेरपि प्रत्येकं समाप्तत्वेन सुबन्तादिग्रहणेन न सुबन्तादिसमुदायस्य ग्रहणमिति नोक्तदोषः। स्पष्टञ्चेदं मतुप्सूत्रसमर्थसूत्रयोर्भाष्ये। तत्रत्यकैयटादीनान्तु प्रमादः। अत एव "विभक्तिश्च" (पा०सू०१।४।१०४) इति सूत्रे प्रतिप्रत्ययं विभक्तिसञ्ज्ञेति पक्षे प्रथमयोरित्यादौ विभक्तिसमुदायस्य विभक्तिग्रहणेनाग्रहणात् प्रथमयोः प्रत्यययोरेव ग्रहणं प्राप्नोतीत्युक्तं कैयटेनेत्यन्यत्र विस्तर इत्याहुः।

अनुव्यचलादिति। अनोर्व्यचलादित्यनेन वेश्च अचलादित्य-

---

*एवञ्च*। जातिविवक्षायाञ्च। *प्रत्येकसमाप्तत्वेनेति*। अत एव मतुप्सूत्रभाष्ये "आकृतौ शास्त्राणि प्रवर्त्तन्ते, आकृतिश्च प्रत्येकम्परिसमाप्यते। यावति चैतत्परिसमाप्यते प्रातिपदिकादिति 'सुप्सुपा' इति च तावत् उपपत्त्या भवितव्यं द्वयोश्चैतत्समाप्यते न बहुषु" इत्युक्तं सङ्गच्छते। सुबन्तत्वस्य जातित्वेऽपीदमेव भाष्यम्मानम्। सुबन्तादीत्यादिना प्रातिपदिकत्वपरिग्रहः। तेन मतुप्सूत्रस्थभाष्यस्य सङ्गतिः। तत्र हि "अथेह कस्मान्न भवति चित्रा गावो यस्य सन्तीति। कुतः कस्मान्न भवति। किमवयवादाहोस्वित्समुदायात्। अवयवात्कस्मान्न भवति। असामर्थ्यात् कथमसामर्थ्यम्। सापेक्षमसमर्थं भवति। समुदायात्तर्हि कस्मान्न भवति। अप्रातिपदिकत्वात्। ननु च भोः आकृतौ शास्त्राणि प्रवर्त्तन्ते। तद्यथा 'सुप्सुपा' इति वर्त्तमानेऽन्यस्यान्यस्य च समासो भवति। सत्यमेतत्। आकृतिस्तु प्रत्येकम्परिसमाप्यते प्रातिपदिकादिति तावत उपपत्त्या भवितव्यम्। अवयवे चैतत्परिसमाप्यते"। *न समुदाये इति*। अस्मिन्मतुप्सूत्रस्थभाष्ये प्रातिपदिकशब्दस्य जातिशब्दत्वमित्यभिप्रायेणाऽऽकृतिस्तु प्रत्येकम्परिसमाप्यत इत्युक्तं तेन त्रयी शब्दानाम्प्रवृत्तिरिति पक्ष एव स्वीकृतः। *अत एव*। आकृतेः प्रत्येकं परिसमाप्तत्वादेव। विभक्तित्वमपि प्रत्येकसमाप्तमेव भविष्यतीति भावः। यद्यपि वैयाकरणसिद्धान्तेऽनुवाद्यविशेषणन्न सर्वत्राविवक्षितम्। "आर्द्धधातुकस्येड्" इतिसूत्रे वलादित्वरूपस्यानुवाद्यविशेषणस्य विवक्षितत्वात्। तथापि भाष्योक्तरीत्या दोषपरिहारे सिद्धे भाष्यानुक्तसङ्ख्याविवक्षया दोषपरिहारस्यायुक्तत्वमित्यभिप्रायः।

तेन युगपत्समासः । अनु इति सुबन्तेन व्यचलदिति समुदायस्य समर्थत्वात् ।

सुपेति । इदं लक्षणमधिकारश्च । अन्त्ये फलन्तु 'देवः करोति' 'मातुः स्मरति' इत्यादौ विशेषणसमास-षष्ठीसमासयोरभावः ॥

सुपो धा (पा०सू०२।४।७१) ॥ अङ्गनिमित्तस्य सुप इत्यर्थभ्र-

---

*युगपत्समास इति* । न तु क्रमेणेति शेषः । साधकाभावात् । क्रमस्वीकारेऽपि व्यचलदित्यनेनानोः समाससंज्ञास्वीकारात् "उदात्तवता" इतिवार्त्तिकस्योपपत्तिरिति भावः । *इदमिति* "सुप् सुपा" इति सूत्रमित्यर्थः । *अन्त्ये* । अधिकारत्वे । *देवकरोतीति* । अत्र प्रथमान्तार्थस्याख्यातार्थम्प्रति विशेषणत्वादस्ति विशेषणसमासप्राप्तिः ।

*अङ्गनिमित्तस्येति* । धातुप्रातिपदिकयोर्भेदेनोपादानं कृत्वाऽङ्गस्य सुप इत्येव सूत्रमस्त्विति भावः । अङ्गनिमित्तस्येत्यस्याङ्गसंज्ञानिमित्तस्येत्यर्थः कार्यः । यत्रानेन लुगिष्यते तत्र प्रथमं सुपोऽनेन सूत्रेण लुकि प्रत्ययलक्षणेन सुबन्तत्वप्रयुक्तं कार्यमिति भावः । परन्त्विदं व्याख्यानमसङ्गतम् । राजानमित्यादौ सुपो लुकि प्रत्ययलक्षणेन पदत्वान्न लोपादीनामापत्तेः । किञ्च "अमि पूर्वः" "टाङसि" इत्याद्यनेकसूत्रविषयेऽनुपपत्तिः । अत एवोक्तं भ्रमवारणायेति । न चाङ्गस्येति षष्ठी न निमित्तनिमित्तिभावात्मकसम्बन्धे किन्तु अवयवावयविभावात्मकसम्बन्धे । एवञ्चाङ्गावयवस्य सुप इत्यर्थो भविष्यतीति वाच्यम् । परमदक्षस्यापत्यं पारमदाक्षिरितीष्यते तस्यासिद्ध्यापत्तेः । तथाहि-परम सु दक्ष सु इति स्थिते परिनिष्ठितविभक्त्या समासपक्षे परम ङस् दक्ष ङस् इति वा स्थिते समुदायस्य समाससंज्ञायामपि सुपो लुगर्थं समुदायाद्विभक्त्युत्पत्तौ ततः समुदायस्याङ्गसंज्ञायां सुपो लुक्यपि श्रूयमाणषष्ठ्या अकारान्तप्रकृतिसुब्विरहेणेञ्प्रत्ययो नोपपद्यत इति । किञ्च बहुपटव इत्यत्र "विभाषासुपः" इति बहुचि जसोऽङ्गावयवत्वाभावेन जसो लुगभावापत्तौ 'चितः' इत्यन्तोदात्तत्वं जस एव स्यात् । ननु प्रत्ययग्रहणपरिभाषया बहुपटु जसित्यस्य प्रत्ययान्तत्वाभावेन तस्य प्रातिपदिकसंज्ञयां समुदायाज्जसि तस्मिन्पूर्वस्याङ्गत्वे तदवयवस्य पूर्वजसो लुकि पटुशब्दोकारस्योदात्तत्वम्भविष्यतीति चेत् । तथापि 'सुगोः' इत्यत्र पूर्ववत् सु सु गो सु इति समुदायात्सौ पूर्वकालस्थितयोः सुशब्दयोर्लुकि श्रूयमाणसोर्गोशब्दाद्विहितत्वाभावेन णिद्वद्भावानापत्तेः । विहितविशेषणाश्रयणन्तु 'हे भानवः' इत्यत्र णिद्वद्भाववारणायावश्यकम् । तस्मिन्सूत्रे गकारस्याविवक्षितत्वात् ।

न च 'हे भानवः' इत्यत्र पञ्चमीसमासेन "अचः परस्मिन्" इतिसूत्रेण

प्रवारणायाङ्गस्य सुप इति नोक्तम्। पूर्वनिपात इति। भूतशब्द-

स्थानिवद्भावोऽभावातिदेशस्यापि सत्त्वाद्भविष्यतीति ओकारात्पर इत्यर्थेऽपि न दोष इति वाच्यम्। एवं सति 'हे भानो' इत्यादावपि पञ्चमीसमासेन स्थानिवद्भावे सति सम्बुद्धिलोपानापत्तेः। न च तत्र भावातिदेशस्यापि सत्वेन ह्रस्वान्तात्परत्वात्सम्बुद्धिलोप इति वाच्यम्। तथा सति 'हे हरे' इत्यादौ ह्रस्वान्तात्परत्वादेव लोपे सिद्धे एङ्ग्रहणवैयर्थ्यमिति भावातिदेशस्य तत्राप्रवृत्तिस्वीकारात्। यदि त्वेषु सम्बुद्धिलोपार्थं 'पूर्वस्मादव्यवहितात्परस्य' इत्यर्थ आश्रीयते तदा 'भानवः' इत्यत्र णिद्धद्भावोऽपि वारयितुमशक्य एवेति प्राचीनमते 'सुगौः' इत्यत्र णिद्धद्भावस्याभावापत्तिः 'सुपोऽङ्गस्य' इति न्यासे दुर्वारैव। परे त्वित्यादिना प्रागुक्ते लक्षणप्रतिपदोक्तपरिभाषया हे भानव इत्यत्र णिद्धद्भावस्य वारणे यद्यपि विहितविशेषणानाश्रयणात् 'सुगौः' इत्यत्र दोषस्तथापि परमसर्वस्मै इत्यत्र दोष एव। पूर्ववद्भिभक्तेः सर्वनाम्नो विधानाभावेन "सर्वनाम्नः स्मै" इति शास्त्राप्राप्तेः।

न च सुपोऽङ्गस्येति न्यासे 'वर्णाश्रमेतराणाम्' इत्यादौ सर्वनाम्न आमो विधानाभावेन सुडप्राप्ते 'द्वन्द्वे च' इतिसूत्रवैयर्थ्यमिति वाच्यम्। समुदायगतकुत्साविवक्षायामकज्व्यावृत्त्यर्थन्तस्यावश्यकत्वात्। न च सुड्विधौ विहितविशेषणाश्रयणवैयर्थ्यमिति शङ्क्यम्। द्वन्द्वे इति सप्तम्याः प्रथमार्थत्वसिद्धान्तात्समुदायस्य वर्णाश्रमेतराणामित्यत्र सर्वनामत्वनिषेधेऽप्यवयवस्य सर्वनामत्वात्सुडापत्तेः। न चेतरेतरयोगद्वन्द्वेऽप्युद्भूतावयवभेदस्य समूहस्य प्राधान्यमिति सिद्धान्ताद् द्वन्द्वावयवस्य वर्णाश्रमेतराणामित्यत्रेतरशब्दस्योपसर्जनत्वान्न सुट्प्राप्तिरिति विहितविशेषणवैयर्थ्यमिति वाच्यम्। 'मासपूर्वाणां' 'वर्षपराणाम्' इत्यत्र समुदायस्य "तृतीयासमासे" इति प्रतिषेधेऽप्यवयवस्य सर्वनामत्वात्सुडापत्तेर्दुर्वारत्वात्। यदि त्वङ्गस्येत्यनेनैकवाक्यतया 'अवर्णान्तसर्वनामसंज्ञकाङ्गात्परस्यामः' इत्यर्थेन प्रत्यासत्त्या आम्निरूपिताङ्गस्याश्रयणान्मासपूर्वाणामित्यादौ न दोष इति विभाव्यते तदा सुड्विधायकसूत्रे विहितविशेषणाभावेन 'परमसर्वेषाम्' इत्यादौ 'सुपोऽङ्गस्य' इतिन्यासे दोषाभावेऽपि 'सुकुल'मित्यादौ दोषः स्यादेव। अत्र हि सु सु कुल सु इति स्थिते प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात्सुपोऽङ्गस्येतिसूत्रम्बाधित्वा पूर्वं स्वमोर्नपुंसकादिति द्वितीयस्य सोर्लुकि प्रत्ययलक्षणेनाङ्गत्वाद्विशिष्टावयवयोर्द्वयोरपि सुपोरनेन लुकि स्थानिनोऽभावेन "अतोऽम्" इत्यस्याप्रवृत्तौ रूपासिद्धिः स्फुटैव॥

र्थ्यैवेत्यर्थः । अन्यथा विनिगमनाविरहेण प्रथमानिर्दिष्टत्वाविशेषाद-नियमः स्यादिति भावः । अत एव निर्देशादीदृशे विषयेऽवयवद्वार-कसामर्थ्येऽप्यस्य प्रवृत्तिः । 'विस्पष्टपटुः' इत्यादावपि विस्पष्टादीनि गुणवचनेष्विति गमकं बोध्यम् । तत्र हि विस्पष्टमित्यादि पटुत्वादि-विशेषणमिति कैयटे स्पष्टम् । इवेनेति ।

---

ननु "समर्थस्य सुपः" इति न्यासोऽस्तु सामर्थ्यञ्चैकार्थीभाव एवा-श्रीयते । तादृशसामर्थ्यं विशिष्टावयवस्य सुप इत्यर्थो भविष्यतीति सु-कुलमित्यत्रापि विभक्त्युत्पत्तेः प्राक् सुपो लुकि ततः सुकुलशब्दात्सौ "अतोऽम्" इत्यमादेशो रूपसिद्धिर्भविष्यतीति चेन्न । त्वयकेत्याद्यवयव-स्य लुगापत्तेः । 'कुत्सिते' इतिसूत्रभाष्योक्तरीत्या कुत्सादिभिः सुबन्त-स्यैवैकार्थीभावात् । 'किमोदनः शालीनाम्' 'असूर्यम्पश्यानि मुखानि'इ-त्यादावसमर्थसमासे लुगनापत्तेश्च । न चासूर्यम्पश्यानीत्यत्रालुगेवास्त्वि-तिवाच्यम् । उत्तरपदे खिति मुम्विधानस्य 'परन्तपः' इत्यादौ चारिता-र्थ्येऽपि "किमोदनः शालीनाम्" । "सक्त्वाढकमापणीयानाम्" 'अश्रा-द्धभोजी ब्राह्मणः' इत्याद्यसिद्ध्यापत्तेः । एतेन 'सुपो वृत्ते'रित्येव न्या-सोऽस्त्विति परास्तम् । त्वयकेत्यादे'र्मूलकेनोपदंश'मित्यादेश्चासिद्ध्यापत्ते-रिति दिक् ।

*अन्यथेति* । भूतपूर्व इतिनिर्देशस्याश्रयणाभाव इत्यर्थः । *अनि-यमः स्यादिति* । न चोभयोः प्रथमानिर्दिष्टत्वाविशेषेऽपि पूर्वशब्दस्य पूर्वकालावच्छिन्नपरतया तस्य भवनकर्तृविशेषणत्वेनोपसर्जनसंज्ञाया अ-न्वर्थतया पूर्वशब्दस्यैव नियमेन पूर्वनिपातः स्यादिति कथमनियमवर्णन-मिति वाच्यम्, उपसर्जनसंज्ञाया अन्वर्थत्वेऽपि वक्ष्यमाणरीत्या पूर्वका-लादिसिद्धये समासशास्त्रस्य प्रथमानिर्दिष्टशब्दगतस्याप्राधान्यस्यैवाश्रय-णमावश्यकमिति तादृशाप्राधान्यस्य प्रकृते न सम्भव इत्यभिप्रायेणानि-यमकथनात् । न च तथापि पर्यायेणोभयोः पूर्वनिपातेऽपि "भूतपूर्वे च-रट्" इति निर्देशोपपत्तेः कथं तेन निर्देशेन नियमासिद्धिरिति वाच्यम् । "उपसर्जनम्पूर्वम्" इतिसूत्रस्य प्रतिलक्ष्यम्भेदेन प्रकृतोदाहरणविषयेऽपि तस्य पृथग्भूतस्य कल्पनया तस्मिन् वाक्ये यदुपसर्जनपदं तस्य लौकि-कोपसर्जनत्ववद् बोधकता भविष्यति तथा च पूर्वशब्दस्यैव पूर्वनिपातः स्यात्, अतस्तस्य निर्देशस्य नियामकत्वमावश्यकमित्यभिप्रायात् । ननु पूर्वशब्दस्य भूतशब्दार्थैकदेशभवनक्रियाविशेषणतया सुबन्तार्थविशेष्या-न्वयित्वेन कथमत्र समासप्राप्तिरत आह—*अत एवेति* । अस्मादेवे-त्यर्थः । एवमेवान्यत्राप्याह—*विस्पष्टेति* ।

हरीतकीं भुङ्क्ष्व राजन्मातेव हितकारिणीम् ।

इत्यसाध्वेव । 'तिङ्समानाधिकरणे प्रथमा' 'अभिहिते प्रथमा' इतिवार्त्तिकस्वारस्येन, प्रथमायास्तत्र तत्र कारकविभक्तित्वोक्तिपरभाष्येण च क्रियायोगे एव प्रथमायाः प्रवृत्त्या मातेति प्रथमाया मातृसदृशीमित्यर्थेऽसाधुत्वादित्यन्यत्र विस्तरः । एतद्योगविभागसिद्धसमासस्य विशेषसञ्ज्ञा न सन्त्येव । तत्तदधिकारेष्वपाठात् । जीमूतस्येवेति । अत्र यथार्थत्वादिप्रयुक्तोऽव्ययीभावस्तु न । 'तत्र तस्येव' (पा०सू०५।१।११६) इति निर्देशात् ॥

अव्ययी (पा०सू०२।४।१८) ॥ अनव्ययमव्ययं भवतीति "भवतेर्णस्य उपसंख्यानम्" इति कर्त्तरि णः । महासञ्ज्ञाकरणं प्राचामनुरोधात् ।

योगो विभज्यते इति । भाष्ये त्विदं न दृश्यते । 'अपदिशम्' इत्यादिमान्तानां स्वरादिपाठादव्ययत्वम् । अपदिशेनेत्यादि तु चिन्त्यमेवेत्यन्ये ।

---

इवेनेतिवचनेन मातेवेत्यस्य साधुत्वमिति कस्य चिदुक्तिङ् खण्डयति- *हरितकीमित्यादिना* । न चैवं "चैत्र इव मैत्रो गच्छति" इत्यादावपि चैत्र इत्यादेरिवार्थेऽन्वयात्प्रथमा न स्यादिति वाच्यम् । एतादृशे स्थले चैत्रादेर्मैत्रादावभेदान्वय एव । इवशब्दस्तात्पर्यग्राहक इति स्वीकारात् । हरीतकीमित्यत्र त्वेवं वक्तुमशक्यम्, मातृपदाद्द्वितीयापत्तेरिति दिक् । इदञ्च वार्त्तिकं नाप्राप्तसमाससंज्ञाविधायकं किन्तु 'सुपा' इतियोगविभागसिद्धसमासानुवादेन विभक्त्यलोपविधायकम् । 'सहे'तिसूत्रभाष्ये एव "इवेन समासो विभक्त्यलोपः, पूर्वपदप्रकृतिस्वरत्वञ्च" इत्यस्य पाठात् । अत एवाह कैयटः 'सुपा' इत्यस्य लक्षणत्वात्समासे सिद्धे कार्यान्तरविधानार्थं वचनमिति । 'वाससी इव' 'कन्ये इव' इत्युदाहरणम् । वासःशब्दो वस्तेर्णिदित्यसुन्प्रत्ययान्तत्वादाद्युदात्तः । समासादुत्पन्नस्य सुपः "अव्ययात्" इति लुक् । कन्याशब्दस्तु "कन्याराजन्यमनुष्याणामन्तः" इतिफिट्सूत्रेणान्तस्वरितः । एतेन वार्त्तिकेन समासविधानं नापूर्वमिति ध्वनयति । *एतद्योगेति* । नन्वत्र "सुपा" इतिसूत्रसिद्धसमासस्य वैकल्पिकतया एतदभावे यथार्थत्वप्रयुक्तसमासो दुर्वार इतीवशब्दस्य पूर्वनिपातोऽपि स्यादत आह—*अत्र यथार्थत्वादीति* । ननु तत्र तस्येवेतिनिर्देशेनेवशब्देन यथार्थत्वप्रयुक्तस्य समासस्या-

ननु समासगते ऽन्तवर्तिविभक्त्याश्रये प्रथमान्तत्वे आश्रीयमाणे कष्टश्रितादौ श्रितस्य पूर्वनिपातापत्तिः, निर्दिष्टपदञ्च व्यर्थमत आह—समासशास्त्रे इति। समाससञ्ज्ञाविधायके शास्त्रे इत्यर्थः। न च राज्ञः कुमारीं श्रितो राजकुमारीश्रित इत्यत्र द्वितीयायाः 'द्वितीया-श्रित' (पा०सू०२।१।२४) इति सूत्रे प्रथमानिर्दिष्टत्वेन कुमारीशब्द-स्य पूर्वनिपातापत्तिरिति वाच्यम्। 'अप्रधानमुपसर्जनम्' इति शा-स्त्रान्तरोक्तमहासञ्ज्ञाकरणेनास्य तदर्थकतया "समासशास्त्रे प्रथमा-निर्दिष्टमप्रधानत्वसमानाधिकरणोपसर्जनपदवत्" इति वाच्यार्थे नि-ष्पन्ने ऽप्रधानत्वस्य ससंबन्धिकत्वात् यं प्रति यदप्रधानं तं प्रति तदु-पसर्जनसञ्ज्ञमित्यवगतेरदोषादिति भाष्येणैव समाधानात्। प्रकृते च न राजनिरूपितमप्राधान्यं कुमार्या इति न तदपेक्षो ऽस्य पू-र्वनिपातः।

न चैवं पूर्वकायाद्यसिद्धिः कायनिरूपिताप्राधान्यस्य पूर्वपदार्थे ऽभावादिति वाच्यम्। समासशास्त्रस्थप्रथमानिर्दिष्टशब्दगताप्राधान्य-

---

भावकल्पने ऽपि 'मणिवोष्ट्रस्य लम्बेत' इत्यस्य भारतप्रयोगस्य कथमुपप-त्तिः। वशब्दस्यापीवार्थकत्वादिष्टापत्तिस्तु कर्त्तुमशक्या। वशब्दस्य पू-र्वनिपातप्रसङ्गादिति चेन्न। तेन निर्देशेन यथार्थत्वप्रयुक्तसमासस्य का-चित्कत्वस्वीकारात्। साक्षाच्छास्त्रबाधकल्पनापेक्षया काचित्कत्वरूपधर्म-कल्पनाया अगुरुत्वात्। अत्र 'विभक्त्यलोपश्च' इत्यनेन यद्विभक्त्यन्तस्य त्वेन समासः प्रत्यासत्त्या तस्या एवालुग्विधानमिति बोध्यम्।

*निर्दिष्टपदञ्च व्यर्थमिति*। समासे प्रथमेत्येव वाच्यम्। प्रथमाप-दस्य प्रथमान्तपरतया समासघटकस्योपसर्जनसंज्ञा भविष्यतीति भावः। समासपदस्य समासत्वावच्छिन्नयावत्समासबोधकत्वाभिप्रायेण शङ्कते-*न चेति*। *तदर्थकतया*। अप्रधानार्थकया। अप्रधानत्वसामाना-धिकरण्यं वाच्यतासम्बन्धेन। *यत्प्रति*। यदर्थम्प्रति। *यदप्रधानम्*। यदप्रधानीभूतार्थस्य प्रतिपादकम्। *तं प्रति*। तं शब्दम्प्रति। *तदु-पसर्जनम्*। तच्छब्दस्वरूपमुपसर्जनसंज्ञम्। एवञ्च "उपसर्जनं पूर्वम्" इत्यस्य यदर्थोपसर्जनीभूतार्थप्रतिपादकं यत्तत्तदपेक्षया पूर्वम्प्रयोज्यमि-त्यर्थेन न कुमारीशब्दस्य पूर्वनिपात इति भावः।

*एवम्*। अर्थगताप्राधान्यघटितार्थकरणे। समाधत्ते-*समासे-त्यादि*। यत्प्रतीत्यस्य यं शब्दम्प्रतीत्येवार्थो न तु यदर्थम्प्रतीत्यर्थः

स्याश्रयणेनादोषात् । समासशास्त्रे यं प्रति यदप्रधानं तं प्रति तदुपसर्जनमित्यर्थात् । अत्रापि च श्रितादीन्प्रति द्वितीयान्तं तथा । सहयुक्ततृतीयान्तार्थस्य शब्दगुणान्वयित्वाभावरूपाप्राधान्येऽपि तत्समभिव्याहृतप्रथमाद्यन्तार्थे तदधीनत्वरूपाप्राधान्यप्रतीतेः । अत एव समकक्षयोरप्येकस्य 'परेण सहागन्तव्यम्' इत्युक्ते दुःखं दृश्यते । प्रकृतेऽपि द्वितीयान्तं श्रिताद्यधीनम् । तं विना समासाघटकत्वात् । श्रितादिकन्तु तं विनापि समासान्तरे घटकमिति द्वितीयान्तस्य श्रिताद्यधीनता । एवमन्यत्राप्यूह्यम् । "यस्य शब्दस्य समासविधौ यत्प्रथमानिर्दिष्टं तं प्रति तदुपसर्जनमिति वक्तव्यम्" इति वार्त्तिकप्रत्याख्यानाय तद्भाष्यप्रवृत्तेः, भाष्ये ऽपि "यं शब्दं प्रति यत्प्रथमानिर्दिष्टमप्रधानं तं शब्दं प्रति तत्प्रथमानिर्दिष्टवाच्यं पदम् उपसर्जनम्" इत्यर्थस्यैवौचित्यात् । अत एव यं यदिति भिन्नलिङ्गनिर्देशः । बहुव्रीहौ त्वेकविभक्तीत्येवोपसर्जनत्वमिति अनुपदमेव स्फुटीभविष्यति । अन्वर्थत्वविरोधान्नानेनेति भाष्यसिद्धान्त इति बोध्यम् ।

यत्त्वर्थगताप्राधान्येनान्वर्थत्वेऽपि पूर्वकायादौ न दोषो, अन्वर्थसञ्ज्ञा हि यत्र सोऽर्थः सम्भवति तत्र प्रवृत्तिनिमित्तापेक्षा प्रवर्त्तते, अन्यत्र तु विधानसामर्थ्यात्तन्निरपेक्षा । यथा स्वादीनां कर्मप्रवचनीयत्वमिति प्रथमानिर्देशसामर्थ्यात्पूर्वादीनां प्रवर्त्तत इति । तन्न । निर्विभक्तिकस्योच्चारणासम्भवेन तत्सामर्थ्यायोगात् । प्राथम्याद-

---

कार्यः । इदं शब्दगतमप्राधान्यमपि लौकिकमव तदुपपादयति—*भवतीत्यादिना* । *एवमन्यत्र* । "पूर्वापराधरोत्तरम्" इतिसूत्रे । न चैवं 'भूतपूर्वे चरट्' इतिनिर्देशादितिपूर्वग्रन्थासङ्गतिरेवेति वाच्यम्, तत्र लक्ष्यानुरोधेन लौकिकस्य द्विविधस्याप्राधान्यस्याश्रयणात् । *अत एव* । शब्दगतस्यैतादृशप्राधान्यस्याभिप्रेतत्वादेव । ननु बहुव्रीहिसंज्ञाविधायकशास्त्रे तृतीयान्तपदोपादानाभावान्निरुक्तमप्राधान्यं तत्र नोपपद्यत इत्यत आह—*बहुव्रीहौ त्वेकेति* ।

अर्थगतलौकिकाप्राधान्याभिप्रायेण व्यवस्थामुपपादयतां मतमाह—*यत्तु अर्थगताप्राधान्य इति* । *तत्सामर्थ्येति* । प्रथमानिर्देशसामर्थ्येनेत्यर्थः । नन्वन्यविभक्त्युच्चारणमेव तर्ह्यस्त्वित्यत आह—*प्राथम्यादिति* । किञ्च पूर्वोक्तरीत्या सकलव्यवस्थासिद्धौ सामर्थ्यपर्यन्तानुस-

न्वितार्थकत्वाल्लघुत्वाच्च प्रथमैवोच्चारितेत्यस्य वक्तुं शक्यत्वादित्यलम्।

उपसर्जनं पूर्वम् (पा०सू०२।२।३०)॥ समास इत्यधिकृतं योग्यताबलेन सप्तम्या विपरिणम्यते तदाह–समासे इति। न च राज्ञः कुमार्या इति परिनिष्ठितविभक्त्या समासे कुमार्या अपि पूर्वनिपातापत्तिरिति वाच्यम्। "षष्ठ्यन्तयोः समासे ऽर्थाभेदात् प्रधानस्यापूर्वनिपातः" इति भाष्येण समाधानात्। अर्थाभेदात्–अर्थस्य प्रधानस्याभेदात्समस्यमानराजपदार्थनिरूपितसम्बन्धाभावात्। अस्य षष्ठ्यन्तस्य प्रथमानिर्दिष्टत्वाभावान्न पूर्वनिपात इति तदर्थः।

अयं भावः। 'षष्ठी' (पा०सू०२।२।८) इत्यादिसूत्रे येन सुबन्तेन समासस्तदर्थनिरूपितसंबन्धाद्यर्थकमेव षष्ठ्याद्यन्तं गृह्यते। तदेव च तत्र प्रथमानिर्दिष्टमिति। तदुक्तं कैयटेन 'राज्ञः पुरुषस्येत्यत्र राजापेक्षया पुरुषः प्रधानमेवेति नासौ भिद्यते राजापेक्षया न व्यति-

---

रणक्लेशो वृथा तदाह—*अलमिति।

*सप्तम्या विपरिणम्यत इति*। वृक्षे शाखेतिवदत्र सप्तमी। एवञ्च सप्तम्यर्थोऽत्र घटकत्वम्। प्रथमानिर्दिष्टपदबोध्यत्वेऽपि प्रत्यासत्त्यैवैतादृशदोषोऽपि वारयितुं शक्य इत्याशयेनाह—*षष्ठ्यन्तयोरिति*। *अर्थस्य प्रधानस्य। षष्ठ्या निष्ठत्वमर्थः। सम्बन्धाभावे चास्यान्वयः। सम्बन्धाभावश्च प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। एवञ्च येन सुबन्तेन षष्ठ्यन्तं संश्लिष्टम्भवति तत्सुबन्तार्थानुयोगिकसम्बन्धप्रतियोगिवाचकमेव षष्ठ्यन्तं गृह्यत इतीह कुमार्या इति षष्ठ्यन्तं कुमार्याः इत्यनेन सुबन्तेन समासविधौ षष्ठीपदेन न गृह्यते किन्तु राज्ञ इत्येवेति तस्यैव पूर्वनिपात इति भावः। *सम्बन्धाद्यर्थकम्*। तदर्थनिरूपितसम्बन्धप्रवृत्तिनिमित्तकम्।

*न भिद्यते*। अप्रधानत्वरूपभेदवन्न भवति। एतदेव स्पष्टप्रतीत्यर्थं विवृणोति–*राजापेक्षया न व्यतिरिच्यत इति*। व्यतिरेकोऽत्र भेदमूलकसम्बन्धः। एवञ्च पुरुषः प्रधानभूतो राजपदार्थनिरूपितभेदनिबन्धनसम्बन्धवान्न भवति। विशेष्यवाचकपदाप्रयोगेऽपि राज्ञ इत्युक्ते राज्ञि विशेषणत्वावगतौ विशेषणतानियामकसम्बन्धाकाङ्क्षा भवति। पुरुष इत्युक्ते पुरुषे स्वार्थनिरूपितप्राधान्यस्य भानेऽपि न सम्बन्धाकाङ्क्षेति विशेषणनिष्ठ एव विशेषणताया एव सम्बन्धावच्छिन्नत्वनियम इति

रिच्यते इत्यप्रधानस्यैव पूर्वनिपातः' इति । उक्तरीत्या ऽप्रधानषष्ठ्यन्तमेव तत्र प्रथमानिर्दिष्टं न तु प्रधानमिति तद्भावः । यत्तूपसर्जनसञ्ज्ञाऽन्वर्थत्वादप्रधानस्यैवेति "उपसर्जनं पूर्वम्" (पा०सू०२।२।३०) इत्यत्र कैयटस्तन्नेत्युक्तमेवेत्यलम् ।

"प्रथमानिर्दिष्टम्" (पा०सू०१।२।४३) इत्यतो ऽनुवृत्तं 'समासे' इति तदर्थविग्रहपरमित्याह—विग्रह इति नियतेति । एकग्रहणा-

---

सम्बन्धः । सम्बन्धस्य विशेषणनिष्ठत्वञ्च प्रतियोगितासम्बन्धेन । पुरुषे तदभावश्च प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः । *इत्युक्तमेवेति* । अर्थगतस्याप्रधानत्वरूपोपसर्जनत्वाश्रयणे पूर्वकायाद्यसिद्धिरित्यनेनोक्तमित्यर्थः ।

यत्तु "प्रथमानिर्दिष्टं समास उपसर्जनम्" इति संज्ञासूत्रन्न कार्यम् । किन्तु 'प्रथमानिर्दिष्टं समासे पूर्व' मिति पूर्वनिपातप्रकरणे पठनीयम् । न चोपसर्जनसंज्ञासूत्राभावे "गोस्त्रियोः" इत्यस्य ह्रस्वविधायकसूत्रस्य कथमुपपत्तिरिति वाच्यम् । लौकिकस्याप्रधानार्थकत्वस्य तत्र ग्रहणात् । न चैवं कुमारीमिच्छन्, कुमारीवाचरन् ब्राह्मणः 'कुमारि' इत्यत्र ह्रस्वापत्तिरिति वाच्यम् । ह्रस्वविधायकसूत्रे समासस्येत्यस्यापि पाठात् । तेन समास एव ह्रस्वो भविष्यतीति । तन्न । 'राज्ञः कुमार्याः' इत्यत्र परिनिष्ठितविभक्त्या समासपक्षे षष्ठीतिपदेन कुमार्या इत्यस्यापि ग्रहणसम्भवेन तस्य पूर्वनिपातापत्तेः । उपसर्जनसंज्ञासूत्रसत्त्वे तूक्तरीत्या प्रत्यासत्तिलाभेन दोषस्य परिहारः सम्भवति ।

किञ्च ह्रस्वविधायकसूत्रे लौकिकोपसर्जनत्वस्याश्रयणे ब्राह्मणी चासौ धूर्ता च 'ब्राह्मणधूर्त्ता' । गर्गी चासौ वृन्दारिका चेत्यर्थे "गार्ग्यवृन्दारिका" इतीष्यते तत्रोत्तरपदस्य ह्रस्वत्वापत्तिः । समासस्य लौकिकोपसर्जनान्तत्वात् । शास्त्रीयस्य तस्य भवन्मतेऽभाव एव । न चास्तु परपदस्यापि ह्रस्वस्तथापि समुदायाट्टापि कृते रूपसिद्धिर्भविष्यतीति वाच्यम् । "गोबष्कयणी" । 'कठप्रवक्त्री' इत्यादावुत्तरपदे ह्रस्वत्वापत्तेर्दुर्वारत्वात् । उपसर्जनसंज्ञासूत्रसत्त्वे तु प्रकृते तादृशोपसर्जनत्वाभावेन दोषः । एतेन 'प्रथमानिर्दिष्टं समासे पूर्वम्' इतिन्यासेऽपि येन सुबन्तेन समासविधौ यत्प्रथमानिर्दिष्टं तत्तत्समासे पूर्वं प्रयोक्तव्यमित्यर्थेन 'षष्ठी' इति समासविधौ षष्ठ्यन्तस्य येन सुबन्तेन समासस्तदर्थानुयोगिकसम्बन्धप्रतियोगिवाचकमेव षष्ठीति पदेन गृह्यते तथा च 'राज्ञः कुमार्याः' इत्यर्थकसमासे न कुमारीशब्दस्य पूर्वनिपात इत्यपास्तम् ॥

*एकग्रहणादिति* । अवधारणगर्भसमासानाश्रयेण एकैव विभ-

वधारणगर्भसमासलाभ इति भावः । 'निष्कौशाम्बिः' इत्युदाहरणम् । परिनिष्ठितविभक्त्यापि समासे 'निष्क्रान्ते' 'निष्क्रान्तेन' इत्यादिक्रमेण तस्यानियतविभक्तिकतया कौशाम्बीपदस्य तदपेक्षया नियतविभक्तिकत्वादनेनोपसर्जनत्वेन ह्रस्वत्वम् । परिनिष्ठितविभक्त्या समासे चेदमेव ज्ञापकम् । अयं पक्षः "तत्पुरुषे तुल्यार्थे" (पा०सू० ६।२।२) इति सूत्रे भाष्ये प्रथमान्तेन समास इति पक्षोऽपि 'अनेकम्' (पा०सू०२।२।२४) इति सूत्रे भाष्ये इति केचित् ।

परे तु 'अनेकम्' इति सूत्रे भाष्ये समासार्थविग्रहे प्रत्यासत्त्या समासापेक्षया नियतविभक्तिकस्यानेनोपसर्जनत्वमुक्तम्, 'राज्ञः कुमारी' 'राजकुमारी' इत्यत्र परिनिष्ठितविभक्त्यापि समासस्य सत्त्वान्न तदपेक्षया कुमार्या नियतविभक्तिकत्वमिति न तस्या उपसर्जनत्वमित्युक्तम् । चित्रगुरित्यत्र च गोपदस्यानेनोपसर्जनत्वमङ्गीकृत्यानेकग्रहणं प्रत्याख्यातम् । बहूनां समासस्तु "तद्धितार्थ" (पा०सू०२।१।५१) इत्यनेनोत्तरपदे द्विगुविधानात् ज्ञापकात्सिद्ध इति चोक्तम् । एवञ्च 'उत्तरपदेन परिमाणिना' इत्यपि प्रत्याख्यातम् । अतिप्रसङ्गस्त्वनभि-

---

किरेकस्मात्प्रातिपदिकादित्येकशब्दोपादानं व्यर्थमेव स्यादिति भावः । एकपदञ्चैकजातीयपरम् तेनैकवचनद्विवचनादिभेदेन नानाविभक्तिसम्भवेऽपि न क्षतिः । *इदमेव* । एकविभक्तीतिसूत्रमेव । *तुल्यार्थेतिसूत्रे भाष्ये इति* । तत्रेति 'परमेण कारकेण' इत्यर्थे परमकारकेणेतिसमासे पूर्वपदप्रकृतिस्वरप्राप्तिमाशङ्क्य लक्षणप्रतिपदोक्तपरिभाषया वारणं कृतम् । *अनेकमितिसूत्रभाष्य इति* । तत्र हि-शेषपदसम्बन्धेन प्रथमान्तानामेव समास उक्तः ।

अत्र विग्रहे यन्नियतविभक्तिकमित्युक्त्या विग्रहघटकपदान्तरापेक्षया नियतविभक्तिकमित्यर्थो लभ्यते स न युक्त इत्यभिप्रायेण सिद्धान्तार्थमाह-*परे त्विति* । *प्रत्यासत्त्येति* । विग्रहे नियतविभक्तिकमित्युक्तौ समासस्य नियमेनोपस्थितेः । *अनेन* । एकविभक्तीत्यनेन । नन्वनेकग्रहणाभावे कथम्बहूनाम्बहुव्रीहिसमास इत्यत आह-*बहूनामिति* । ननूत्तरपदनिमित्तकद्विगुविधानमुत्तरपदेन परिमाणिनेतिवचनविषये चरितार्थमत आह-*एवञ्चेति* । ननु ज्ञापकेन बहूनां समासश्चेद्राज्ञः कुमार्याश्च धनमित्यर्थे राजकुमारीधनमितिप्रयोगापत्तिरत आह-*अति-

धानान्न । तदुक्तम्—अनेकवचनमुपसर्जनार्थं, न वैकविभक्तित्वादिति । वार्त्तिककृताऽन्वर्थत्वानुक्तेस्तद्रीत्या प्रयोजनवार्त्तिकं न वेति तु तत्खण्डनम्, भाष्यरीत्या त्वेतदप्राप्तिरेवात्रेति बोद्ध्यम् । अन्यथा 'चित्रगुः' इत्यस्य विग्रहे द्वयोरपि नियतविभक्तिकतया किमपेक्षं गोशब्दस्य नियतविभक्तिकत्वं स्यात् । एकस्यानियतविभक्तिकत्वे हि तदपेक्षमन्यस्य तत्त्वं वाच्यम् । समासापेक्षं नियतविभक्तित्वमेव युक्तमाश्रयितुम् । अन्यथा 'सभार्यः' इत्यत्रोपसर्जनह्रस्वानापत्तिः । सहशब्दस्याव्ययतया विभक्तिमात्राभावेन, लुकाऽनुत्पत्तेरेवान्वाख्यानेन वा नियतविभक्तित्वाभावात्तदपेक्षनियतविभक्तित्वस्य भार्ययेत्यत्राभावेनोपसर्जनत्वानापत्तिः । मम तु समासस्यानियतविभक्तित्वात्तदपेक्षं तत्त्वमस्त्येवेति न दोष इत्याहुः ।

गोस्त्रियोः (पा०सू०१।२।४८) । अत्र स्त्रीशब्दः स्वर्यते । तेन स्त्र्यधिकारोक्तचातुर्थिकप्रत्ययलाभः । उपसर्जनस्येति गोस्त्रियोर्विशे-

---

प्रसङ्ग इति* । *उपसर्जनार्थमिति* । प्रथमानिर्दिष्टमित्युपसर्जनसंज्ञासिद्ध्यर्थमित्यर्थः । *न वेति* । इदं खण्डनमपि वार्तिककारकृतम् । भाष्यकारस्तु तर्हि वक्तव्यं न वक्तव्यमितिशब्देन प्रत्याचष्टे । *एकविभक्तित्वादिति* । चित्रा यस्य गावः सन्ति स चित्रगुः, स तिष्ठति तम्पृच्छ, तेन कृतम्, इतिरीत्या प्रथमान्तेन विग्रहम्प्रदर्श्य एकविभक्तीतिसूत्रेणोपसर्जनसंज्ञा भविष्यतीति प्रथमसूत्रेण संज्ञासिद्ध्यर्थमनेकग्रहणं न कार्यमित्यर्थः । *अन्वर्थत्वानुक्तेरिति* । यं शब्दम्प्रतीत्यादिरीत्योक्तान्वर्थत्वानुक्तेरित्यर्थः । *तत्खण्डनम्*—प्रथमवार्तिकखण्डनम् । *भाष्यरीत्येति* । कुतश्चिदेव किञ्चित्पदमध्याहृत्य समासस्यानेकविभक्तिकत्वेऽपि प्रथमान्तेन विग्रहे राज्ञः कुमारी राजकुमारीत्यादावपि तथात्वापत्तिरितिसमासापेक्षया नियतविभक्तिकत्वमिति सिद्धान्तितन्तद्रीत्येत्यर्थः । *एतदिति* । एकविभक्तीतिसूत्रस्य । *अत्र* । बहुव्रीहिसंज्ञाविषये । *अन्यथा* । समासापेक्षया नियतविभक्तिकत्वानाश्रयणे । *तत्त्वम्* । नियतविभक्तिकत्वम् । *अनुत्पत्तेरिति* । न तु जातस्य निवृत्तिः । शब्दानित्यत्वप्रसङ्गात् ॥

*स्वर्यत इति* । अत एव "गोटांग्रहणम्" इति वार्त्तिकम्प्रत्याख्यातम् । अत एव स्त्रीशब्दस्य चातुर्थिकप्रत्ययमात्रपरत्वं न तु स्त्रीशब्दपरत्वं न वा स्त्रियां विहितेकारप्रत्ययपरत्वम्, तदाह—*तेनेति* । ते-

णम्। प्रत्ययग्रहणपरिभाषया च स्त्रीशब्देन तदन्तग्रहणम्। ताभ्या- म्प्रातिपदिकाविशेषणात्तदन्तविधिरित्याह—उपसर्जनं य इत्यादि। 'गोकुलं, 'राजकुमारीपुत्रः' इत्यादौ तु न दोषः। महासञ्ज्ञाकरणेन येन शब्देन समासविधौ यत्प्रथमानिर्दिष्टं तस्य तं प्रत्येवोकरीत्याऽप्रधानत्वेनोपसर्जनत्वात्। प्रत्यासत्त्या तदन्ततत्समासप्रातिपदिकान्त्यस्यैव ह्रस्व इत्यदोष इति भाष्ये स्पष्टम्। तत्र हीदं भाष्यम्—"अप्रधानमुपसर्जनमिति सम्बन्धिशब्दावेतौ तत्र सम्बन्धादेतद्गन्तव्यं यं प्रति यदप्रधानं तस्य चेत्सोऽन्तो भवति" इति। यत्प्रथमानिर्दिष्टं तस्य तद्घटितसमाससमुदायस्य सोऽप्रधानशब्दोऽन्तो भवतीति तदर्थः। यद्यपि 'कुक्कुटमयूर्यौ" इति द्वन्द्वे बहुव्रीहाविव एकविभक्तीत्युपसर्जनत्वम्। द्वन्द्वः प्रथमान्तानामेवेति "चार्थे द्वन्द्वः" (पा०सू०२।२।२९) इत्यत्र वक्ष्यते। "एकविभक्ति" (पा०सू० १।२।४४) इत्युपसर्जनसञ्ज्ञा ऽप्रधानार्थकस्यैवेति मतेऽपि उद्भूतावयवभेदसाहित्यं प्रति मयूरीपदार्थस्य तत्त्वमस्ति। सर्वत्र द्व-

---

न 'अतिलक्ष्मीः' इत्यादौ न ह्रस्वः। स्त्रीशब्दस्य तादृशप्रत्ययमात्रपरत्वादेवाह—*प्रत्ययग्रहणेति*। *ताभ्याम्*। गोशब्दप्रत्ययान्तपरस्त्रीशब्दाभ्याम्। अन्यथोपसर्जनस्त्रीप्रत्यये तदादिनियमसत्त्वेनातिखट्वा इत्यादौ समुदायस्य स्त्रीप्रत्ययान्तत्वविरहेऽपि स्त्रीप्रत्ययान्तान्तत्वाद्ध्रस्वत्वासिद्धिः। व्यपदेशिवद्भावेन 'गोकुलं' 'राजकुमारीपुत्र' इत्यत्रातिप्रसङ्गशङ्कायामाह—*गोकुलमित्यादि*। उक्तमेव दार्ढ्याय पुनः स्मारयति—*महासंज्ञाकरणेनेति*। ससम्बन्धिकत्वाच्चेति शेषः। *तदन्तेत्यादि*। तदन्तश्च तत्तत्समासरूपप्रातिपदिकञ्च, तस्य योन्त्यस्तस्येत्यर्थः। तदन्तेत्यत्र तत्पदङ्गोस्त्रीप्रत्ययान्तपरम्। एवञ्च यत्समासशास्त्रे गोस्त्रीप्रत्ययान्तयोः प्रथमानिर्दिष्टत्वं यत्समासापेक्षया एकविभक्तित्वं वा प्रत्यासत्त्या गोन्तादेस्तस्यैव समासस्य ह्रस्वत्वमित्यर्थसिद्ध्या गोकुलमित्यादौ न दोषस्तदाह—*भाष्ये स्पष्टमिति*। पूर्वोक्तार्थे समासापेक्षयेति यदुपात्तं तत एव शङ्कते—*यद्यपीति*। *चार्थसूत्रे भाष्य इति*। तत्र ह्येवमुक्तम् "इतरेतरयोगे, प्लक्षश्च न्यग्रोधश्चेत्युक्ते गम्यत एतत् प्लक्षोऽपि न्यग्रोधसहायो न्यग्रोधोऽपि प्लक्षसहाय इति। समाहारेऽपि क्रियते प्लक्षन्यग्रोधम्" इति। तत्रायमप्यर्थः, द्वन्द्वैकवद्भावो न

न्द्वे साहित्यमेव विशेष्यमिति चार्थसूत्रे भाष्ये स्पष्टम्। तथापि भाष्ये "द्वन्द्वे न" इति वचनारम्भान्न दोषः। अत एव कुमारीमिच्छन् ब्राह्मणः कुमारीत्यत्र ह्रस्वो न। 'प्रथमानिर्दिष्ट'मित्यादेः शास्त्रीयस्यैवात्रोपसर्जनस्य ग्रहणात्। अत एव 'गोवष्क्रयणी' इत्यादौ वष्क्रयणीशब्दस्य गुणशब्दत्वादप्रधानत्वे ऽपि तदन्तस्य ह्रस्वो न। एतच्च "इद्गोण्याः" (पा०सू० १।२।५०) इति सूत्रे भाष्ये स्पष्टम्।

अतिराजकुमारिरित्यादौ स्त्रीप्रत्यये तदादिनियमनिषेधात् राजकुमारीत्यस्य स्त्रीप्रत्ययान्तत्वम्। न च तस्यात्यर्थं प्रत्युपसर्जनत्वेन कथं स्त्रीप्रत्ययान्तत्वमुपसर्जनस्त्रीप्रत्यये तदादिनियमादिति वाच्यम्। यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेयं तदर्थं प्रति स्त्रीप्रत्ययस्यानुपसर्जनत्वमेवेत्यदोषात्। प्रत्यासत्त्या तादृशानुपसर्जनत्वस्यैव निषेधनिमित्तत्वात्। अस्य चातिक्रान्तार्थं प्रत्युपसर्जनत्वे ऽपि राजकुमारीत्येतदर्थं प्रत्यनुपसर्जनत्वमेवेति दिक्।

नाव्ययीभावा (पा०सू०२।४।८३)। अपञ्चम्या इत्यम एव विशेषणम्। न लुगभावस्य, तुना व्यवच्छेदात्। अपदिशमिति। यद्यपि नपुंसकह्रस्वेनापीदं सिध्यति तथापि चित्रगुरित्याद्यर्थमाव-

---

पठितव्यो भवति समाहारैकत्वादेव सिद्धमिति। अत्र भाष्यकारेण सहायस्योभयत्राभिधानप्रदर्शनात्सहायस्य विशेष्यता दर्शिता समाहारेऽपि क्रियते प्लक्षन्यग्रोधमितीत्यनेन च द्वन्द्वैकवद्भावस्यापठितव्यत्वाभिधानेन तिरोहितावयवभेदता च प्रदर्शिता। *अत एव*। शास्त्रीयस्य निरुक्तोभयरूपस्योपसर्जनत्वस्य प्रकृतसूत्रार्थपरकत्वादेव। *अत एव*। शास्त्रीयस्यैव ग्रहणादेव। *"इद्गोण्या" इति सूत्रे भाष्य इति*। तत्र हि-"द्विर्वचनस्य गोणीमात्रमिदं गोणीरित्यत्र प्रयोजनमुक्तम्" अत्र प्रमाणे अर्थे मात्रचो लुकि गोणीशब्दस्य गोणीपरिच्छेद्य वृत्तावपि न शास्त्रीयन्निरुक्तमुपसर्जनत्वमिति भावः।

*अतिराजकुमारिरित्यादाविति*। अत्र हि निरुक्तं शास्त्रीयमुपसर्जनत्वं राजकुमारीशब्दस्य तस्य कथं स्त्रीप्रत्ययान्तत्वमितिशङ्कानिवारणायेदमभिहितम्। यथाकथञ्चिदुपसर्जनत्वे सति परिभाषाघटकानुपसर्जने नेति निषेधस्य विषये इत्यभिमानेन शङ्कते-*न चेति*। प्रत्यासत्तिमाश्रित्य समाधत्ते-*यस्येति*।

*तुना व्यवच्छेदादिति*। वाक्यभेदस्य सूचनादित्यर्थः। *इदम्*।

श्यकेन "गोस्त्रियोः" (पा०सू० १।२। ४८) इत्यनेनापीदं सिद्ध्यतीति तदुपन्यासः। दिश्शब्दस्य शरदादिषु पाठे ऽपि लिङ्गविशिष्टपरिभाषयात्र न टच्। समासान्तप्रकरणे लिङ्गविशिष्टपरिभाषाऽभावस्य ह्यच्प्सूत्रे भाष्ये उक्तत्वात्। टाबन्तदिशाशब्दो ऽकारान्तप्रकृतिक एवेति मते टचः प्राप्तेरेवाभावः। अमरस्वारस्यात् दिश्शब्देन विग्रहे तु न ह्रस्वप्रयोजनम्। इत्यादाविति 'आदिनैकविंशतिभारद्वाजं', 'सप्तगङ्ग'मित्यादिसङ्ग्रहः।

विभक्तीत्यादेरिति। विभक्तिशब्देन तदर्थो लक्ष्यते वचनशब्दः कर्मसाधनः प्रत्येकं सम्बध्यते। विभक्त्यादयश्च श्रुतत्वादव्ययस्यैव विशेषणानि तदाह—विभक्त्यर्थादिष्वनि। अत्र सुबन्तेनेत्यस्य समर्थेनेति विशेषणम्। अत एव तदुत्तरविभक्त्यर्थान्तर्भावेणैकार्थीभावः। 'द्वितीया श्रित' इत्यादौ समर्थेन सुबन्तेनेत्यस्य समर्थप्रकृतिकसुबन्तेनेत्यर्थः। अत एव कष्टं श्रितस्येति परिनिष्ठितवि-

---

'अपदिश'मितिशब्दस्वरूपम्। *तदुपन्यास इति*। तस्य गोस्त्रियोरितिसूत्रस्योपन्यास इत्यर्थः। *न टजिति*। एतेन टचि कृते "यस्येति च" इतिसूत्रेणाकारस्य लोपे ह्रस्वत्वस्य प्रकृते विषय एव नास्तीति "गोस्त्रियोः" इत्यस्य प्रकृते उपन्यासश्चिन्त्य इत्यपास्तम्। *अभाव इति*। हलन्तदिश्शब्दस्य शरदादौ पाठात्। इदं व्याख्यानम्मूलोक्तं 'दिशयोर्मध्यम' इतिविग्रहाभिप्रायेणेति सूचयन्नाह—*अमरेति*। "क्लीबाव्ययन्त्वपदिशन्दिशोर्मध्यं विदिक् स्त्रियाम्" इत्यमरः। *इत्यादिसङ्ग्रह इति*। अस्याङ्कल्पनायाम्प्रमाणन्तु "नाव्ययीभावात्" इतिसूत्रस्थं "सप्तम्या ऋद्धिनदीसमाससङ्ख्यावयवेभ्यो नित्य"मिति वार्त्तिकमेव। अत्र ऋद्धिरितिपदं लुप्तसप्तम्यन्तम्। ऋद्धिरूपाऽर्थे योऽव्ययीभावस्तस्मात् नद्यवयवः समासो नदीसमासस्तस्मात् सङ्ख्याया अवयवाः सङ्ख्यावयवाः सङ्ख्याविशेषास्तेभ्यः परं यदुत्तरपदं तदन्तादव्ययीभावात्सप्तम्या नित्यमम्भाव इत्यर्थः।

*विभक्तीत्येननेति*। विभक्तिसंज्ञा यस्य प्रत्ययस्य तस्याव्ययार्थत्वं नास्तीत्यर्थासङ्गतिपरिहाराय विभक्तिशब्दोऽत्र लाक्षणिक इति भावः। *अत्र सुबन्तेनेत्यस्येति*। एवञ्च 'अधिहरि भक्तिः' इतिशब्दाद्धर्यधिकरणिका भक्तिरिति बोधो भवति। अत्राधिहरिशब्दात्पुनर्न सप्तमी किन्तु प्रथमेति स्वीकारेऽपि तादृशः शाब्दबोधो भवति सप्तम्यर्थस्यान्तर्भावात्। *तदुत्तरेति*। हर्यादिशब्दोत्तरेत्यर्थः। *अत एव*। 'समर्थप्रकृतिका'

भक्त्या समासेऽप्युत्तरपदीयविभक्त्यर्थान्तर्भावेण न सः। अत एव कृष्णश्रितस्य धनमित्यादौ षष्ठी द्वितीयान्तं समर्थमित्यर्थात् तदर्थान्तर्भावेणैकार्थीभावादुक्तार्थत्वान्न द्वितीयेत्याहुः।

हरि ङीति। फलाविशेषेऽप्यन्तरङ्गानपीति न्यायमप्रवृत्तिप्रभुपेत्येदम्। ङ्यध्योः समानार्थत्वध्वननाय च ङ्युत्तरमेवात्राधिशब्दप्रयोगः। वचनेति। प्रत्यासत्त्या यद्विभक्त्यर्थवाचकाव्ययेन सुबन्तस्य समासस्तद्विभक्त्यैव यत्सुबन्तं तस्य ग्रहणादिति भावः। "तिङ्क्तद्धितसमासै" इति भाष्यसम्मतपरिगणनाच्च। तेनाभिहिते सप्तम्यपि बोध्यम्। अत एव गृहस्योपरि इत्यादौ न समासः। उपरीत्यस्याधिकरणशक्तिप्रधानत्वे ऽपि येन सुबन्तेन समासस्तद्घटकविभक्त्यर्थावाचकत्वात्। अधिहरि भक्तिरित्यत्र हर्यधिकरणिका भक्तिरिति बोधः। न च "प्रतेरुरसः सप्तमीस्थात्" (पा०सू०५।४।८२) इति सूत्रसम्मतसप्तम्यर्थमात्रवृत्तिप्रातिरूपाव्यये चरितार्थस्याधेः शौण्डादिपठितत्वेन परत्वात् "सप्तमीशौण्डैः" (पा०सू०२।१।४०) इत्यनेन बाधः स्यादिति वाच्यम्। आधेयप्रधानस्यैवाऽधेस्तत्र पाठात्। विधान-

---

इतिव्याख्यानादेव। *अत एव*। विभक्त्यर्थानन्तर्भावादेव। द्वितीयार्थस्य त्वन्तर्भावो भवत्येवेत्याह-*द्वितीयान्तमिति*।

ननु समाससंज्ञोत्तरप्राप्तिकलुगपेक्षयाऽन्तरङ्गत्वादित्संज्ञायाः पूर्वम्प्राप्त्या हरि ङि अधीत्यलौकिकविग्रहप्रदर्शनमनुचितमत आह-*फलाविशेष इति*। केचित्तु समासेऽधिशब्दस्य पूर्वन्निपातदर्शनेन तदर्थप्रदर्शकविग्रहेऽप्यधिशब्दस्य पूर्वम्प्रयोग एवोचित इत्यधिहरिङीतिप्रदर्शनमुचितमित्याहुस्तन्न युक्तमिति ध्वननायाह-*ङ्यध्योरिति*। वचनसामर्थ्यमुपपादयति-*प्रत्यासत्त्येति*। तद्विभक्त्यैव सुबन्तस्य ग्रहणे यदि प्रकृतेऽधिशब्दाभिहितत्वात्सप्तमी न स्यात्तदा समासविधानमेवानुपपन्नमिति भावः। इदं सामर्थ्याभिधानं प्रायेणेति प्रागुक्तरीत्या वस्तुतस्तथा नास्तीत्याह-*तिङ्क्तद्धितेति*। *अत एव*। प्रागुक्तप्रत्यासत्त्यङ्गीकारादेव। *अधिकरणशक्तिप्रधानत्वेऽपीति*। अनेन विभक्त्यर्थवृत्तित्वमुपरीत्यस्याव्ययस्यास्तीति सूचितम्। गृहस्योपरीत्यत्र तु षष्ठ्यन्तेन समासप्रसङ्गस्तद्विभक्त्यर्थवृत्तित्वमुपरीत्यस्य नास्तीति भावः। अधिहरीत्यत्र तत्पुरुषसंज्ञयाऽव्ययीभावसंज्ञाया बाधमाशङ्कते-*न चेति*। *अस्य*। अन्य-

सामर्थ्यादिति । एतच्च रक्षितानुसारेण । वस्तुतो मध्यार्थकसमया-
शब्दयोगे द्वितीयाविधानस्य दूरार्थकाऽऽराच्छब्दयोगे पञ्चमीविधान-
स्य च चारितार्थ्यादिदमयुक्तम् । समयानिकषाऽऽराच्छब्दा अधि
करणशक्तिप्रधाना इति समीपमात्रवाचित्वाभावान्नैतैः समासः । समी-
पे इति हि तेषामर्थः । अब्भक्षन्यायेन विभक्त्यर्थसमीपादिमात्रवृत्त्य-
व्ययस्यैव तेन समासात् । उपशब्दस्तु तन्मात्रवाची बोधादिति कृ-
ष्णसामीप्यवन्त इति बोधादिति बोध्यम् ।

सुमद्रमिति । वचनग्रहणात्समृद्ध्यादिवाचकत्वे ऽव्ययीभा-
वः । 'सुमद्राः' इत्यादौ तु सुशब्दो द्योतक, समृद्धा मद्रा इति बोधा-
दिति नायमव्ययीभावः । निपातानां वाचकत्वं द्योतकत्वञ्चेत्यत्रैव
भाष्ये स्पष्टम् । उपदशादावुपस्य समीपवर्त्तिपदार्थबोधकत्वेन समी-
पमात्रबोधकत्वाभावान्नाव्ययीभावः । विगतेति । ऋद्धेरभाव इति-
यावत् । अर्थाभावशब्देन समस्यमानपदार्थाभावस्यैव ग्रहणादत्र तेन

---

यीभावस्य । *आधेयप्रधानस्येति* । एवञ्च सप्तम्यर्थवृत्त्यधिशब्दयोगे
स्य प्राप्तिरेवेति भावः । *एतच्चेति* । विधानसामार्थ्योपपादनञ्च । यद्य-
त्राव्ययीभावः स्यात्तदा समयानिकषाशब्दयोगे द्वितीयायाः, आराच्छब्द-
योगे पञ्चम्याः, विधानाभावेऽपि तत्तद्योगे षष्ठीङ्कृत्वाऽव्ययीभावसंज्ञा
कार्या तावतापि रूपसिद्धिर्भविष्यतीति भावः । मध्यार्थकसमयाशब्दयोगे
सामीप्यन्न प्रतीयत इति तत्र द्वितीयाविधानञ्चरितार्थमित्यन्वयः । यदि
द्वितीयापञ्चमीविधानञ्चरितार्थन्तदा 'समया ग्रामम्' इत्यादौ कुतो नाव्य-
यीभाव इत्याशङ्क्यामाह—*समयेत्यादि* । अधिकरणशक्तिप्रधाना इती-
ति* । समया ग्राममित्यादेर्ग्रामस्य समीपे इत्यादिरीत्या बोधः । 'उपकृ-
ष्णम्' इतिशब्दात्तु कृष्णसामीप्यवानित्याकारक एव बोधः । *अब्भक्षेति*
एवम्प्रयोगो योऽप एव भक्षयति तस्मिन्नेन जायते इति तत्र यथाऽवधार-
णगर्भः समासो भवति तथाऽत्रापि विभक्त्यर्थादिमात्रवृत्त्यव्ययस्यैवानेन
सूत्रेणाव्ययीभावस्य विधानमिति भावः । अत्र विभक्त्यर्थमात्रेत्युपादानाद्
गृहस्योच्चैरित्यत्र नाव्ययीभावः ।

*समृद्ध्यादिवाचकत्व इति* अत एव सुमद्रमित्यस्य मद्राणां समृ-
द्धिरित्येवं विवरणङ्कृतमव्ययार्थस्य प्राधान्यप्रदर्शनार्थम् ।

*द्योतक इति* । द्योत्यार्थस्य विशेषणत्वम्प्रसिद्धमत एवाह—
*समृद्धा मद्रा इतीति* । समस्यमानपदार्थाभावस्य । समस्यमानोत्तर-
पदार्थप्रतियोगिताकस्य । तदेव दर्शयति—*अर्थाभावेति* । एवञ्च 'दु-

न सिद्धिः, तत् ध्वनयन्नाह । मक्षिकाणामभाव इत्यादिना । अर्थाभावशब्देन उत्तरपदार्थाभावस्यैव ग्रहणं व्याख्यानात् । नञा तु नायं समासः, अर्थाभावशब्दे नञ उपादानेन सूत्रेगृहीताव्ययेनैतत्समासाप्राप्तेः । तच्च नञ्सूत्रे उपपादयिष्यते । न चाभावेत्येव सिद्धे ऽर्थग्रहणं व्यर्थम् । प्रतियोगिभूतबहिर्विद्यमानाधिकरणाभाववाचकेनैव समासो यथा स्यादित्येतदर्थं तत्सत्त्वात् । तेनाभावार्थनिराशशशृङ्गादिशब्दानामयं न । प्रागभावार्थेन च तेन स न । अत एवाव्ययग्रहण-

---

र्यवन' मित्यादौ यवनपदार्थाभावो व प्रतीयते' किन्तु तदीयऋद्ध्यभाव इति नात्रार्थाभावग्रहणात्समाससिद्धिरतो व्यृद्धिग्रहणमावश्यकम् । अत एवार्थाभाव इत्यस्योदाहरणं 'मक्षिकाणा'मित्यादि नोपात्तम् । *व्याख्यानात्* । व्यृद्धिशब्दोपादानमूलकव्याख्यानादित्यर्थः । ननु 'घटो न पटः' इत्यत्र नञा पटपदस्य समासापत्तिः पटप्रतियोगिताकाभावस्यैव प्रतीतेरत आह—*नञा त्विति* । *नायम्* । अव्ययीभावः । *सूत्रगृहीतेति* । अस्य तत्तदर्थबोधकपदघटकतयेत्यादिः । सूत्रगृहीतेत्यस्य सूत्रोपात्तेत्यर्थः । अभावस्य सप्रतियोगिकत्वनियमाभिप्रायेण शङ्कते—*न चेति* । *प्रतियोगिभूतेति* । प्रतियोगि भूतो यो बहिर्विद्यमानोऽर्थस्तत्समानाधिकरणो योऽभावस्तद्वाचकेनेत्यर्थः । प्रतियोगिसामानाधिकरण्यञ्च प्रतियोगितावच्छेदकसम्बन्धेन यः प्रतियोगिसम्बन्धी तन्निरूपिताभावीयविशेषणतासम्बन्धावच्छिन्नवृत्तित्वरूपम् । एवञ्च पटभेदस्य प्रतियोगितावच्छेदकसम्बन्धस्तादात्म्यन्तेन सम्बन्धेन प्रतियोगिसम्बन्धिनि पटे न पटभेदस्तेन सम्बन्धेन वर्त्तत इति न निष्पट इत्यत्र समासः । मक्षिकाणामभाव इत्यत्र तु संयोगसम्बन्धावच्छिन्नाभावः प्रतीयते स चाव्याप्यवृत्तिरतस्तस्य तादृशप्रतियोगिसामानाधिकरण्यमस्त्येव । *तेन* । प्रतियोगिनि बहिर्विद्यमानत्वनिवेशेन । *अयम्* । अव्ययीभावः । एवञ्च 'निर्घटो 'निष्पट' इत्यादौ घटादेरत्यन्ताभावस्य तात्पर्यविषयत्वे भवत्येव । भेदस्य तथात्वे तु न भवतीति सिद्धम् । शशशृङ्गशब्दार्थस्तु न बहिर्विद्यमानः । प्रागभावार्थेन तेन । निरा । न च पटप्रागभावस्य प्रतियोगी पटस्तदधिकरणेषु तन्तुषु पटप्रागभावो वर्त्तत एव, पटोत्पत्तिप्राक्क्षणावच्छेदेनेति समासापत्तिर्दुर्वारैवेति वाच्यम् । एकक्षणावच्छेद्यैकाधिकरणवृत्तित्वस्यैवात्र सामानाधिकरण्यपदार्थत्वात् । *अत एव* । ध्वंसस्यापि तादृशप्रतियोगिसमानाधिकरणत्वविरहादेव ॥ मूलोक्तमत्य-

चरितार्थम् तदुदाहरणं 'निर्हिमं' 'निःशीत'मिति वृत्त्युक्तमेव युक्तम् । अतेस्तदर्थत्वाभावात् । 'अतिहिम'मित्युक्ते तदतिशयस्यैव प्रतीतेः । अत्ययशब्दे ऽतेः सूत्रगृहीताव्ययत्वाच्चेति दिक् ।

सम्प्रति न युज्यत इति । वृत्तौ युजिक्रियान्तर्भावेणैकार्थीभावः 'अतिनिद्रमासीत्' इत्यादौ तथा व्यवहारविषये ऽतिनिद्रशब्दस्य लक्षणेति बोध्यम् । शब्दप्रादुर्भावेत्यस्य शब्दविषयप्रकाशार्थेनाव्ययेन समास इत्यर्थः ।

भाष्यप्रयोगेति । "अचः परस्मिन्" (पा०सू०१।१।५७) इति सूत्रेऽयं प्रयोगः । एतद्भाष्यप्रयोगादेतत्सूत्रे तत्तदर्थबोधकपदघ-

---

योदाहरणन्दूषयति—*तदुदाहरणमिति । *तदतिशयस्य* । हिमाधिक्यस्य । युक्त्यन्तरमप्याह—*अत्ययशब्देऽतेरिति* ।

"अतिनिद्रम्" इत्यत्र तु नास्य निषेधस्य विषयता । युजिक्रियान्तर्भावेण समासाभ्युपगमेन निद्राया अत्ययो ध्वंसो न प्रतीयते किन्तु युजिक्रियायामप्राशस्त्यम् । एवं सति 'अतिनिद्रम्' इतिशब्दान्निद्राकर्तृकवर्त्तमानकालिकयुजिक्रियाऽप्रशस्तेति बोधः । वर्त्तमानकालिकत्वस्याप्राशस्त्येऽन्वयः । नन्वेवं वर्त्तमानत्वभूतत्वयोर्विरोधात् 'अति निद्रमासीत्' इत्यत्राव्ययीभावसमासानुपपत्तिरत आह—*अतिनिद्रमित्यादाविति* । *लक्षणेतीति* । एवञ्चतादृशव्यवहारविषयकर्तृकसत्त्वक्रियायां भूतत्वं प्रतीयते तस्य च तादृशाभावानिष्ठवर्त्तमानत्वेन न विरोध इति भावः । सूत्रघटकशब्दप्रादुर्भावशब्दार्थमाह—*शब्दप्रादुर्भाव इति* । इतिहरीत्युदारणे हरिशब्दः स्वस्वरूपपरस्तेन षष्ठ्यन्तेन शब्दप्रकाशार्थकेतिशब्दस्य समासः ।

भाष्यप्रयोगादिति यन्मूले उपात्तन्तस्याप्रसिद्धत्वशङ्कां वारयति—*अचः परस्मिन्नितीति* । इदमुपलक्षणम् । "अनेकमन्यपदार्थे" इतिसूत्रभाष्ये "सर्वपश्चात्" इतिप्रयोगाच्चेत्यपि बोध्यम् । सति च समासे पश्चाच्छब्दस्य पूर्वनिपातः स्यात् । *तत्तदर्थबोधकेति* । यस्मिन्यस्मिन्नर्थे विद्यमानस्याव्ययस्य समास इष्यते तत्तदर्थबोधाभिप्रायेण सूत्रे उपात्तो यः शब्दस्तद्घटकतया गृहीतेन तत्तदर्थकेनाव्ययेन नायं समासः । अत्र तत्तदर्थकेनेत्युपादानात्सम्प्रत्यर्थबोधाभिप्रायेण कृतस्य वृत्तिकाराद्यभिप्रेतस्य 'अतिहिमम्' इत्यादिप्रयोगस्योपपत्तिः । एवमत्ययरूप एवार्थे 'वैशाखे विहिम'मित्यस्याप्युपपत्तिः । तत्तदर्थबोधकपदघटकत्वञ्च स्वाविषयकप्रतीत्यविषयतत्तदर्थबोधकपदकत्वम् । इदञ्च यथार्थाभाव-

टकतया गृहीतान्वयेन तत्तदर्थकेन नायं समासः। अत एव "पदार्थाऽसादृश्ये" (पा० सू० २।१।७) इति सूत्रे "सादृश्यसम्पत्तीति प्राप्नोति" इति भाष्ये उक्तम्। यथाशब्देन तु भवत्येव, उत्तरसूत्रारम्भादिति भावः।

ननु नित्यसमासत्वाद्वाक्यं दुर्लभमत आह–प्रतिशब्दस्येति। इदं प्राचामनुरोधेन। वस्तुतः 'प्रतिस्थानम्' इत्यादौ षत्वाभावसम्पादनेन सा चरितार्थम्। तस्मादर्थमर्थं प्रति "प्रत्यर्थम्" इति सरूपसूत्रादिस्थभाष्यप्रयोगात् यदा द्विर्वचनं तदा प्रतिशब्दस्य वीप्सावृत्तित्वाभावात्समासाप्राप्त्या वाक्यं साध्विति तत्त्वम्। 'वृत्तौ द्विर्वचनन्तु न, समासेन वीप्साया द्योतितत्वात्, इति हयवरट्सूत्रे कैयटः। प्रतिना तस्या उक्तत्वादिति तत्त्वम्।

शक्तिमनतिक्रम्येति। "परावरयोगे च" (पा० सू० ३।४।२०) इति क्त्वा। परावरत्वञ्च बोद्धम्। हरेः सादृश्यमिति। हरि टा सह इत्यलौकिकम्। वक्ष्यमाणेनेति। अत्र सूत्रालेखो वैचित्र्यार्थः। यथा सूत्रेषूत्तरत्र कृतस्य पूर्वत्रापकर्षणं वैचित्र्याय तद्वत्।

"अनुज्येष्ठं कार्यं कृतम्, अनुज्येष्ठं प्रणमति' इत्यादौ करणत्वेनान्वयात्परिनिष्ठितविभक्त्या समासमभिप्रेत्याह–ज्येष्ठस्यानुपू

---

पदघटके नाञि वर्त्तते तथा स्वस्मिन्नपीति पश्चाच्छब्दस्य पश्चादर्थघटकत्वम्। *अत एव*। तत्तदर्थबोधकपदघटकतया गृहीतेनेत्यादिकल्पनादेव। भाष्यप्रयोगादेव पश्चाच्छब्दस्य न समास इति तु न युक्तम्। उक्तसूत्रद्वयभाष्यप्रयोगस्थले तदभावकल्पना "यथासादृश्य" इतिसूत्रव्याख्यानस्थले त्वशोकवनिकान्यायेन 'यथार्थः' इत्यनुक्त्वा 'सादृश्यसम्पत्ति' इत्युक्तमित्यस्य च कल्पनापेक्षया एककल्पनायामेव लाघवमिति भावः। यथाशब्दस्य तु समासस्योपपत्तिमाह—*यथाशब्देन त्विति*। *इदम्*। कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यकथनम। *तस्याः*। वीप्सायाः। एवञ्च न वीप्साद्योतनाय द्विर्वचनम्। *बोद्धम्*। यथाऽतिक्रम्य पर्वतन्नदीत्यत्र पर्वतनद्या योगो गम्यते तथा 'यथाशक्त्युत्तरत्र गच्छति' इत्यत्र शक्तिसद्भावकालोत्तरदेशगमनकालयोरपि योगोबुद्धिकृतो द्रष्टव्यः। *वैचित्र्यार्थ इति*। तदाह—*यथासूत्रेष्विति*। *करणत्वेनान्वयात्*। क्रमस्य करणत्वेनान्वयात्। *युगपच्छब्देनेति*। अत

र्व्यैणेति। आनुपूर्व्यं क्रमः पूर्वं क्रमेणेत्यनुपूर्वमिति सूत्रगृहीता-
व्ययेनाप्यनुना समासः, एतस्मात्सूत्रप्रयोगात्। युगपच्छब्देन तु न
समासः, सूत्रगृहीतत्वात्। उभयत्रापि स्वार्थे ष्यञ्। तत् ध्वनय-
न्नाह—चक्रेण युगपदिति।

गुणभूते इति। व्याख्यानात्सादृश्येति स्वार्थे ष्यञिति भावः।

संपत्तिसमृद्ध्योः पर्यायत्वमाशङ्क्याह-ऋद्धेरिति धनधान्यादे-
रित्यर्थः। अनुरूपो योग्य आत्मनः समस्यमानोत्तरपदस्य भावः
प्रवृत्तिनिमित्तं क्षत्रत्वादिः संपत्तिरित्यर्थः। सक्षत्रमित्यस्य क्षत्रि-
याणां योग्यं क्षात्रमित्यर्थः।

तृणमपि इति। साकल्यबोधकाव्ययेन समासः। समासस्य
नित्यत्वादस्वपदविग्रहो दर्शितः। तृण टा सहेत्यलौकिकम्।
अपरित्यज्येति। 'परावरयोगे च" (पा०सू०३।४।२०) इति
क्त्वा। तद्योगश्च बौद्धः। न त्वत्रेति। 'तृणेन सह भुङ्क्ते' इति
बोधोत्तरं यस्तृणानि भक्षयेत्स कथमन्यत्परित्यजेदिति प्रतीतेः सकलं
भोज्यमत्तीत्यत्रैव तात्पर्यादिति भावः।

अग्निग्रन्थपर्यन्तमिति। बहुव्रीहौ द्वितीयान्तं, ग्रन्थोऽन्य-
पदार्थः। अधीतइत्यस्य तु न समासेऽन्तर्भावो मानाभावात्।
अन्तत्वं साहित्यञ्च सहार्थः। अन्त्याग्निग्रन्थसहितमिति बोधः।

---

एव तत्र 'सचक्र' मित्युक्तम्। एतेन 'युगपच्चारु' इत्यत्राव्ययीभाव इति
कस्य चिदुक्तिः प्रत्युक्ता।

*व्याख्यानात् *। सादृश्यशब्दोपादानमूलकात्। गुणभूते साद-
श्य इत्यस्य सादृश्य इत्यनेन कथं लाभ इत्यत आह—*स्वार्थ इति*।
अन्यथा पूर्वपदार्थप्रधानाऽव्ययीभाव इति भाष्यादत्र सादृश्यस्य गुण-
त्वान्न स्यात्। *क्षात्रम् *। युद्धद्यूतकर्तृत्वम्। *तद्योगश्चेति*। अद-
नक्रियाया अपरित्यागेन सहयोग इत्यर्थः। पर्यन्तशब्दोऽन्त्यार्थः। अग्नि-
ग्रन्थः पर्यन्तो यस्येत्यर्थस्तदाह—*बहुव्रीहाविति*। तस्मिन् कालेऽध्ये-
यत्वेन परिगृहीतो यावान् ग्रन्थस्तस्याग्निग्रन्थोऽन्त्यः। ननु ततः परेणा-
ध्ययनन्नास्तीति। अत एव सादृश्यात्पृथगुक्तिः। विग्रहसमयेऽधीत इत्य-
स्य कथनादध्ययनक्रियायाः समासार्थेऽन्तर्भावात्साग्न्यधीत इति वाक्या-
नुपपत्तिरिति शङ्कावारणायाह—*अधीत इत्यस्येति*। नन्वध्ययनक्रि-

अग्नि टा सहेत्यलौकिकम् । न च 'तदधाते' (पा०सू०४।२।२९) इत्यण्प्रसङ्गो वैकल्पिकत्वात् ॥

यथा ऽसा (पा०सू०२।१।७) ॥ असादृश्ये इति छेदः, तत्रैव वर्त्तमान इत्यर्थः । तथा हर इति । तथाशब्दस्य सादृश्यार्थकत्वेऽपि न समासः । सदृश इत्युक्तेर्नियमेन प्रतियोग्याकाङ्क्षादर्शनात्सादृश्यप्रतियोगिवाचकेनैव तद्बोधकाव्ययस्य समासात् । द्योतयतीति । सामान्यस्य भेदको यो विशेषस्तद्रूपे प्रकारे थालिति येद्विशेषवान् हरिस्तद्विशेषवदाभिन्नो हर इति बोधे यत्तच्छब्दाभ्यां तयोरेकत्वावगमे ऽर्थादुपमानत्वप्रतीतेरिति भावः । सूत्रे ऽपि सादृश्यशब्देनोपमानत्वमेव । थाल्सूत्रे सादृश्यस्य प्रकारशब्देन ग्रहणे यत्सादृश्यवान्हरिस्तत्सादृश्यवान्हर इत्येव बोधः स्यान्न तु हरिसदृशो हर इति ।

---

याया अनन्तर्भावे तदधीत इत्यण्प्रसङ्ग इत्यभिप्रायेण शङ्कते—*न चेति* ।

तथाशब्दस्यापि सादृश्ये वृत्त्या तेन सह समासापत्तिं वारयति—*तथाशब्दस्येति* । *प्रतियोगिवाचकेनेति* । प्रतियोगितासम्बन्धेन सादृश्यान्वयिवाचकेनेत्यर्थः । तथाशब्दार्थसादृश्यस्य तु तथा हर इत्यत्रानुयोगितासम्बन्धेन हरेऽन्वयः । एतादृशकल्पनायां हेतुमाह—*सादृश्य इत्युक्त इति* । मूले द्योततयतीत्युपात्तन्न तु शक्त्या प्रतिपादयतीत्युक्तं तद्बीजमाह—*सामान्यस्येति* । यद्यपि भाष्ये यथाशब्दः सादृश्ये वर्त्तत इत्युक्तन्तथापि तत्र 'द्योतनाय' इति शेषो बोध्यः । सामान्यस्येत्यस्यैकबुद्धिविषयत्वेन गृहीतस्येत्यर्थः । *भेदकः* । सादृश्यस्य प्रायेण भेदनियतत्वाद्भेदबुद्धिसम्पादक इत्यर्थः । *तदभिन्न इति* । उपमानोपमेययोरभेदान्वयबोधो व्युत्पत्तिसिद्ध एव । अत एव 'मृगचपला' इत्यत्र पुंवद्भावसिद्धिः । ननूभयत्रैकस्य विशेषधर्मस्याधिकरणत्वप्रतीतावपि नोपमानोपमेयभावप्रतीतिरत आह—*यत्तच्छब्दाभ्यामिति* । ननु 'असादृश्ये' इति पदस्य सादृश्येनेत्यर्थः कृतः । एवञ्च यथा हरिस्तथा हर इत्यत्र हरेः सादृश्यन्द्योतयतीति वाच्ये उपयानत्वन्द्योतयतीत्यनुपपन्नमत आह—*सूत्रेऽपीति* । थाल्सूत्रे सामान्यस्य भेदको यो धर्मस्तद्रूप इत्युक्तन्न तु थालर्थः सादृश्यं प्रकृतबोधे प्रकार इत्युक्तमत्र किम्बीजमित्यत्र नियामकमाह—*थाल्सूत्र इत्यादि* ।

भाष्यानुसारिणस्तु 'यथाऽसादृश्ये' इत्यस्य यथाशब्दः सुबन्तेन समस्यते, सादृश्ये द्योत्ये नेत्यर्थः । यथाशक्ति, यथाबल,मित्या-द्युदाहरणम् । अत एव भाष्ये "असादृश्ये इति किमर्थं यथा देवदत्त-स्तथा यज्ञदत्तः" इत्युक्तं, न तु सूत्रमेव किमर्थमित्युक्तम् । यथार्थत्वेन तु न सिद्धिः । सूत्रगृहीताव्ययेन तेनासमासात् । अत्र चेदमपि ज्ञाप-कम् । न च प्रकारवचने थाला निष्पन्नस्य यथाशब्दस्य सर्वथा सादृश्यद्योतकत्वेन सूत्रोदाहरणासम्भव इति सूत्रं व्यर्थमिति वा-च्यम् । अत्र सूत्रे अव्युत्पन्नस्य वीप्सायोग्यतापदार्थानतिवृत्तिबो-धकस्यैव ग्रहणेनादोषात् । 'यथाशक्ति' इत्युदाहरणे एतदर्थक एव सः ।

यद्यपि "यथाशब्द उपमानत्वं द्योतयति" इति सकलाभियु-क्तोक्तेर्यद्विशेषवानित्यादिप्रागुक्तबोधोत्तरमुपमानदेवदत्ताभिन्न उप-मेयो यज्ञदत्त इति बोधः । गृहीतविशेषधर्म एव च साधारणधर्मः । लक्षणामूलकव्यञ्जनाजन्यबोधस्थले इवोभयोः शाब्दत्वं सुवचम् ।

---

सिद्धान्तमाह—*भाष्यानुसारिणस्त्विति* । 'यथाशक्ति यथाबल' मि-त्यस्य शक्तिमनतिक्रम्य इत्याद्यर्थः । *अत एव* । उक्तार्थस्याभिप्रेतत्वा-देव । पदार्थानतिवृत्तौ समासार्थं यथांशस्यावश्यकत्वेन सम्पूर्णसूत्रस्य कैमर्थ्यशङ्का न भवतीत्यभिप्रायः । ननु पूर्वसूत्रेणैव समासे सिद्धेऽस्य सू-त्रस्य वैयर्थ्यमत आह—*यथार्थत्वेनेति* । *सूत्रगृहीतत्वात्* । यथार्थ-शब्दघटकत्वात् । *इदमपि* । एतत्सूत्रकरणमपि । उक्तार्थानभिज्ञः शङ्क-ते-*न चेति* । उक्ताशयम्प्रकटयति-*अत्र सूत्र इत्यादि* । *तदर्थक एव स इति* । पदार्थानतिवृत्तिबोधको यथाशब्दः परिशेषादित्यर्थः । अ-सादृश्यग्रहणस्य वैयर्थ्यशङ्कापरिहारायाह-*यद्यपीत्यादि* । द्योतयती-त्यस्य द्योतनया प्रतिपादयतीत्यर्थः । द्योतना च व्यञ्जनैव तयोपस्थापिता-र्थस्य शाब्दबोधविषयत्वं भवत्येव तदाह-*उपमानदेवदत्ताभिन्न इति* । *लक्षणामूलव्यञ्जनास्थल इवेति* । यथा—

साधयन्ती सखि सुभगं क्षणे क्षणे दूनासि मम कृते ।
सद्भावस्नेहकरणीयसदृशन्तावद्विरचितन्त्वया ॥

अत्रोपनायकसमीपे प्रेषिता या दूती सा तन्नायकमुपभोगेन निवृत्तेच्छङ्कृत्वा पुनर्नायिकाया निकटे समागत्य स नायातीत्युक्त्वा विरता तत उपभोगचिन्हेन तं वृत्तान्तं ज्ञात्वा तां दूतीम्प्रति नायिकाया उक्तिरि-

अत एवोपमानोपमेययोः समानविभक्तिकत्वासिद्धिः । एवञ्च पूर्वपदार्थप्राधान्याभावेन नात्राव्ययीभावप्रसक्तिः, तथापि प्रसिद्धत्वात्प्रकारकवचनस्यैवात्र ग्रहणे तत्सामर्थ्याद् 'द्विमुनि' इत्यादाविव तदभावेऽपि समासः स्यात्, अतोऽसादृश्य इति सूत्रे कृतम्। तत्र कृते तु तद्भिन्नस्याव्युत्पन्नस्यैवात्र सूत्रे ग्रहणम् । न च यथाबलमित्याद्युदाहरणे प्रकारवाचिथालन्तस्यैव ग्रहणमस्तु, सादृश्यसम्पत्तीत्यनेन च समासोऽस्तु, इदं सूत्रञ्च मास्तु, पूर्वसूत्रे यथाग्रहणञ्च मास्त्विति वाच्यम् । एतत्सूत्रारम्भसामर्थ्येन तत्र तदप्रयोगात्। तत्रार्थे साधोरन्यत्रार्थेऽसाधुत्वापत्तेश्च ।

इदमेव सूत्रमव्युत्पन्नस्यातदर्थकस्य यथाशब्दस्य सत्त्वे मानम्। तथा च भाष्ये "असादृश्ये इत्युच्यते, तत्रेदं न सिद्ध्यति—यथाशक्ति, यथाबलं, प्रकारे यस्थाल् तदन्तस्य सादृश्य एव वृत्तेः" इत्याशङ्क्य वीप्सादिवाचिनोऽत्र सूत्रे, यथाबलमित्युदाहरणे च ग्रहणमित्यर्थकोक्त्यनन्तरम् "अथ यः प्रकारवचने थाल् तदन्तस्य ग्रहणं कस्मान्न भवति, पूर्वेण प्राप्नोति सादृश्यसम्पत्तीति" इति । पूर्वपक्षिणोक्ते

---

यम् । मम प्रियं रमयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यते । तेन कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम् । उभयोः शक्यार्थव्यङ्ग्यार्थयोः तत्र यथा व्यञ्जना न लक्षणया गतार्था तथात्रापि व्यञ्जना न गतार्थेत्याशयः ।

*अत एव* । उपमानोपमेययोरभेदान्वयादेव । *पूर्वपदार्थप्राधान्याभावः* । पूर्वपदार्थत्वेनाभिप्रेतो यो यथाशब्दार्थस्तत्प्राधान्याभाव इत्यर्थः। *प्रसिद्धत्वात्* । सादृश्ये प्रसिद्धत्वात् । तत्सामर्थ्यात्* । समासविधानसामर्थ्यात् । *तदभावेऽपि* । पूर्वपदार्थप्राधान्याभावेऽपि । अत्र प्रकारवचने थालन्तस्य साधुत्वान्वाख्यानेऽपि कुशलशब्दस्य प्रवीण इव पदार्थानतिवृत्त्यादिष्वपि प्रयोगो भविष्यतीत्यभिप्रायेणाशङ्कते—*न चेति*। *सादृश्यसम्पत्तीत्यनेन चेति* । तस्य सादृश्येऽपि वृत्तेर्दर्शनादिति भावः । *तत्र* । सादृश्ये । *तदप्रयोगात्* । पदार्थानतिवृत्तिबोधकस्याप्रयोगात् । *तत्रार्थे* । प्रकाररूपेऽर्थे । साधोः । यथाशब्दस्य । एवञ्चाव्युत्पन्नयथाशब्दस्यैव समासबोधकमिदं सूत्रमिति भावः ।

अत्र मानमाह—*इदमेवेति* । *अतदर्थकस्य* । असादृश्यार्थकस्य। *इत्यर्थकोक्त्येति* । एवं हि तत्र भाष्यम् "असादृश्य इति किमर्थम् यथा-

"प्रतिषेधवचनसामर्थ्यान्न भविष्यति" इति उत्तरितम् । नानेन भाष्येण प्रकृतसूत्रे प्रकारवचनथालन्तस्य ग्रहणं शङ्क्यते इति वक्तुं युक्तम् । असादृश्ये इत्यस्य सूत्रे श्रवणात् । यद्यपि तद्विस्मरणेनायं पूर्वपक्ष इत्यपि वक्तुं शक्यम् । तथापि पूर्वेण प्राप्नोतीत्यादेरसङ्गतिः । तस्मादुदाहरणे थालन्तस्य ग्रहणं तत्र सादृश्यार्थकेन समासं कृत्वा ऽन्यत्रार्थे प्रयोगे बाधकाभाव इत्यभिमानेनार्थघटितं साधुत्वमित्यजानतो ऽव्युत्पन्नसत्त्वे मानञ्चापश्यतः शङ्केयमिति युक्तम् । प्रतिषेधवचनेत्यस्य प्रतिषेधयुक्तैतद्वचनसामर्थ्यादित्यर्थः । एवञ्च व्युत्पन्नतत्सत्त्वे ऽर्थघटितं साधुत्वमित्यत्र चैतदेव मानमिति भावः ।

यत्तु प्रतिषेधेति प्रतीकमुपादाय "यथाऽर्थे यदव्ययमिति पूर्वेणैव सिद्धे समासे सादृश्यप्रतिषेधार्थत्वादस्यारम्भस्य" इति कैयटः, तन्न, सूत्रगृहीताव्ययेन तेन सूत्रेणासमासात् । नियमत्वापेक्षयैतदर्थज्ञापकत्वस्यैवोचितत्वात् । तत्र सूत्रे यथार्थशब्देन सादृश्याग्रहणाच्च । अत एव तत्र सूत्रे सादृश्यग्रहणं चरितार्थम् । अत एव भगवता "सादृश्यसम्पत्तीति प्राप्नोति" इत्युक्तम् । न च सादृश्य-

देवदत्तस्तथा यज्ञदत्तः । असादृश्य इत्युच्यते, तत्रेदं न सिद्ध्यति । यथाशक्ति यथाबलमिति । किङ्कारणम् । यथेत्ययम्प्रकारवचने थाल् स च सादृश्ये वर्त्तते । नैष दोषः । अयं यथाशब्दोऽस्त्येवाव्युत्पन्नं प्रातिपदिकं वीप्सावाचि अस्ति प्रकारवचने थाल्" । 'तत्र यदव्युत्पन्नं वीप्सावाचि तस्येदं ग्रहणम् । अत्र वीप्साग्रहणमुपलक्षणम् । तेन योग्यतापदार्थानतिवृत्ती अपि यथार्थौ' इति कैयटः । अथ यः प्रकारवचने थाल् तस्य ग्रहणं कस्मान्न भवति पूर्वेण प्राप्नोति प्रतिषेधवचनसामर्थ्यान्न भविष्यति" इति । एतद्भाष्येऽसादृश्ये वर्त्तत इत्यस्योपमानोपमेयत्वद्योतक इत्यर्थः । इदं ग्रहणमित्यस्यैतत्सूत्रीयमित्यर्थः । *तद्विस्मरणेन* । असादृश्य इत्यस्य विस्मरणेन । *असङ्गतिरिति* । तद्विस्मरणे पूर्वेण प्राप्तिशङ्काया एवाभावः स्यादिति भावः । तद्भाष्ययोजनायाह-*तस्मादिति* । *कैयट इति* । सूत्रगृहीतेत्यादेस्तेनानङ्गीकारात् । परन्तु पूर्वोक्तरीत्या तथा कल्पनमवश्यकमित्याशयेनाह-*सूत्रगृहीतेति* । अन्यकृतं व्याख्यानं यथाकथञ्चित्सम्भवदुक्तिकमत्यसङ्गतमित्याशयेनाह-*नियमत्वापेक्षयेति* । विधिनियमसम्भवे विधिरेव ज्यायान् । विशेषमाह-*तत्र सूत्र इति* । *अत एव* । सादृश्याग्रहणादेव *अत एव* । पूर्वोक्तोऽर्थः । इत्युक्तमिति* । न तु यथा-

ग्रहणं गुणभूतसादृश्यग्रहणार्थम् । लक्ष्यानुरोधेन प्रधानन्यायाप्रवृत्त्योभयत्रापि तेन सिद्धेः । यथा योग्यताया यथार्थत्वेऽपि रूपस्य योग्यमनुरूपमित्यादौ तद्वदर्थकेनापि समासस्तद्वत् । पूर्वसूत्रे यथार्थग्रहणं तदर्थकान्याव्ययग्रहणार्थम् । एवञ्च यथाशक्तीति तदुदाहरणमेवेति भाष्ये स्पष्टम् । वीप्सादावपि यथाशब्देन समासो भवत्येव । "यदव्युत्पन्नं वीप्सावाचि तस्येदं ग्रहणम्" इति भाष्यात् । एवञ्च स्पष्टमेवोपक्रमोपसंहाराभ्यामस्य सूत्रस्य विधित्वं भाष्याल्लभ्यते । अत्र सूत्रे यथाशब्देन यथार्थस्य न ग्रहणं मानाभावात् । पूर्वसूत्रे तु वचनग्रहणात्तथा विभक्तिशब्देनेत्याहुः ।

यावदव (पा०सू०२।१।८) ॥ संख्यादिनेयत्तापरिच्छेदोऽवधारणम् । तद्बोधकं यावदित्यव्ययं समस्यते इत्यर्थः । अवधारणे किम् यावद्दत्तं तावत् भुक्तम् । कियद्भुक्तमिति नावधारयामीत्यर्थः ॥

सुप्प्रतिना (पा०सू०२।१।९) । मात्राशब्दोऽल्पपर्यायः । पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थम् । अन्यथा 'दोषामन्यमहः' इत्यादौ दोषादीनां वृत्तिविषये सत्त्वप्रधानतादर्शनात्तादृशाव्ययेनैव समासः स्यात् । वृक्षं प्रति इति । लक्षणे प्रतिः । कर्मप्रवचनीय-

---

र्थमिति शेषः । मूलोक्तमनूद्य दूषयति *न चेति* । *अन्याव्ययग्रहणार्थमिति* । तेन रूपस्य योग्यम् 'अनुरूपम्' इत्यस्य सिद्धिः ।*वीप्सादावपीति*। अत्रादिना योग्यतापरिग्रहः । वीप्सायामुदाहरणं यथास्वमिति प्रसिद्धमेव। योग्यतायामुदाहरणन्तु यथास्वरूपन्दक्षिणादानम्' इत्यत्र ज्ञेयम् । नन्वस्मिन्नपि सूत्रे यथार्थे विद्यमानं यदव्ययमितिव्याख्यानं कुतो नेत्याशङ्क्याह—*अत्र सूत्र इति* ।

*अव्ययमिति* । अनव्यययावच्छब्दव्यावृत्तये अव्ययग्रहणानुवृत्तेः अव्ययस्य समासः । 'यावन्तः श्लोकाः' इति वतुबन्तेनानव्ययेनास्वपदविग्रहः । अन्यत्राप्ययमव्ययसंज्ञको दृष्टः । 'यावदमत्रं ब्राह्मणानामन्त्रयस्व' इत्यत्र यथा । *अव्ययनिवृत्त्यर्थमिति* । पूर्वसूत्रे तु तदनुवृत्तिरस्त्येव । *तादृशाव्ययेनेति* । तद्गताल्पत्वतात्पर्येण यत्र प्रयोगस्तत्रेति शेषः ।

ननु वृक्षं प्रतीत्यत्र समासे कर्मप्रवचनीयसंज्ञाविधानं व्यर्थमत आह-*कर्मप्रेति* ।

त्वन्तु प्रतेः "गतिर्गतौ" (पा०सू०८।१।७०) इति निघाताभा-
वायेत्याहुः ॥

अक्षशलाका (पा०सू०२।१।१०)। समस्यन्त इति शेषः। प-
राजय एवेति। पञ्चिकानाम द्युतं पञ्चभिः कपर्दैर्भवति तत्र यदि
सर्वे उत्ताना अवाञ्चो वा पतन्ति, तदा पातयिता जयति, अन्यथा
जीयते। विपरीवर्त्तने कर्तृत्वेनाक्षादेस्तृतीया। वृत्तौ परेस्तदर्थः।
अक्ष ङस् परि' इत्यलौकिकम्।. नित्यसमासत्वादस्वपदविग्रहः।
वैपरीत्यञ्च जयापेक्षेति भावः। अक्षेणेति। अक्षाभ्यां विपरीतं
वृत्तमित्याद्यर्थे न समासोऽनभिधानात्। अक्षत्वेनैकाक्षबोधे एवास्य
साधुत्वम्, न तु तेन रूपेणानेकाक्षबोधः। एकत्वादिना बोधस्तु
वृत्तौ नास्त्येवेति भाष्ये स्पष्टम् ॥

विभाषा (पा०सू०२।१।११)। यद्यपि एकार्थीभावे समासस्य
व्यपेक्षायां वाक्यस्य च सिद्धेरिदं व्यर्थम्। एकार्थीभावे एव समा-
ससञ्ज्ञादिविकल्पस्तु नेष्यते। एवं समासनिषेधसूत्राणि "नित्यं
क्रीडा" (पा०सू०२।२ १७) इत्यत्र नित्यग्रहणञ्च व्यर्थम्। निषेध-
विषये एकार्थीभावाभावेन समासाप्राप्तेः। नित्याधिकारविषयेऽस्या-
भावेन वाक्याप्राप्तेश्च। तथापि लक्षणैकचक्षुष्कान्मन्दान् प्रति क्वैकार्थी-
भावो नित्यः, क्व पाक्षिकः, क्व नास्त्येवेत्यर्थबोधनार्थं सर्वमावश्य-

---

*तदर्थ इति*। विपरीवर्त्तनमर्थः। मूलोक्तोदाहरण इति शेषः। लौ-
किकविग्रहे वृत्तमितिक्रियावाचकशब्दसत्त्वात्तृतीयान्तमुक्तम्। समासे
तदभावादाह—*अक्ष ङसिति*। *एवास्य साधुत्वमिति*। 'अक्षाद्य·
स्तृतीयान्ताः पूर्वोक्तस्य यथा न तत्। कितवव्यवहारे च एकत्वे अक्ष·
शलाकयोः' इतिवार्त्तिकसंवादात्। पूर्वोक्तस्य-पूर्ववृत्तस्य। धातूनामने·
कार्थत्वाद्वाचिरिह वर्त्तने। यथा न तत्। तद्वर्त्तनं यथा पूर्वं वृत्तं न तथा
चेदित्यर्थः। स्पष्टप्रतिपत्त्यर्थमेतस्यैव विवरणम्भाष्ये कृतम्। 'अयथाद्यो·
तन इति। अयथाशब्दो वैपरीत्ये विपरीतत्वद्योतने। पराजयद्योतन इति
यावत्। *वृत्तौ नास्त्येवेति*। अस्य द्योतकाभाव इति शेषः। तेन 'कु·
मार्यगारम्'। 'वध्वगारम्' 'यौष्माकीणः' 'तावकीन' इत्यादौ संख्यावगम·
सत्त्वेऽपि न क्षतिः।

*नेष्यत इति*। "न च संज्ञाया भावाभावाविष्येते" इतिभाष्यवि·

कम् । ध्वनितं चेदं "समर्थानाम्" (पा०सू०४।१।८२) इति सूत्रे भाष्ये । लक्ष्यैकचक्षुष्कं प्रति "समर्थः"(पा०सू०२।१।१) इति सूत्रे भाष्ये तत्प्रत्याख्यानम् । एवञ्च विशेषणीभूतैकार्थीभावस्य विकल्पादिबोधकानीमानि । अत एव "पारेमध्ये" (पा०सू०२।१।१८) इति सूत्रे भाष्ये "एकया वृत्तिर्विभाषा, परया वृत्तिविषये ऽनित्यो पत्रादः" इत्युक्तम् । तत्र वृत्तिरेकार्थीभावः ।

एतत्सामर्थ्यादिति । अत्रैतत्करणात्प्राक् तदसंबन्धेन तद्विषये एकार्थीभावस्य नित्यत्वमिति भावः । नन्वेवं "सुप्सुपा" इत्यस्यापि नित्यतापत्तिः । एवञ्च भाष्ये सुप्सुपेत्युदाहरणभूते 'विस्पष्टपटुः' इत्यत्र विस्पटं पटुरिति विग्रहप्रदर्शनासङ्गतिरत आह-सुप्सुपेति त्विति । एतत्समासानुवादेनैवाव्ययीभावादिसञ्ज्ञाविधानेन सिद्धे पुनस्तैः समाससञ्ज्ञाविधानं तदनित्यत्वज्ञापकम् । "उपपदमतिङ्" (पा०सू०२।१।१९) "कर्तृकरणे कृता" (पा०सू०२।१।३) "आख्यातमाख्यातेन" इत्यादावुद्देश्यप्रसिद्ध्या "अनेकमन्यपदार्थे" (पा०सू०२।२।४।) इत्यादौ त्र्यादिपदघटितसमासरूपोद्देश्यप्रसिद्ध्या तेषु समाससञ्ज्ञाविधानस्यावश्यकत्वेनार्थाधिकारानुरोधात्सर्वत्र तस्य विधेयसमर्पकत्वम् । "प्रथमानिर्दिष्टम्" (पा०सू०१।१।४३) इति सूत्रे 'समासे' इत्यस्य समासत्वव्याप्यसञ्ज्ञाविधा-

---

रोधात् । न ह्येकार्थीभावे संज्ञाया अभाव इत्यर्थः । *ध्वनितश्चेदमिति* । "इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च । तत्र स्वभावतश्चैतद्भवति वाक्यञ्च वृत्तिश्च" इत्यनेनोक्तसूत्रस्थभाष्येण ध्वनितामित्यर्थः । *तत्प्रत्याख्यानम्* । विभाषाऽधिकारस्य प्रत्याख्यानम् । *अत एव* । एकार्थीभावविकल्पबोधकत्वादेव ।

*एतत्करणात्* । विभाषेतिसूत्रकरणात् । 'सुप्सुपा' इत्यस्य नित्यत्वाङ्गीकारे दोषमाह-*एवञ्चेति* । तस्य नित्यताङ्गीकारे चेत्यर्थः । ननु अव्ययमित्यादिसूत्रैः समाससंज्ञाविधानं नैवास्तीत्यत आह-*उपपदेति* । *उद्देश्याप्रसिद्ध्येति* । क्वचित्सुबुत्पत्तेः प्राक् समासस्येष्टत्वात् क्वचित्सुबन्तत्वासम्भवादिति भावः । बहुव्रीहिसंज्ञाविषयेऽपि क्वचिदप्रसिद्धिमाह-*अनेकेति* । ननु 'अव्ययम्' इत्यादिसूत्रैः समाससंज्ञाविधानाभावे कथमुपसर्जनसंज्ञेत्यत आह-*प्रथमानिर्दिष्टमितीति* ।

यके लक्षणयाऽव्ययादीनामुपसर्जनत्वं साधयितुं शक्यमिति न तदर्थं समाससञ्ज्ञाविधानं चरितार्थमिति भावः। विग्रहप्रदर्शनपरोक्तभाष्यादपि तस्यानित्यत्वं बोध्यम्॥

लक्षणेनाभिप्रती (पा०सू०२।१।१४)। अभिप्रती आभिमुख्यस्याग्नेर्ज्ञापकत्वसंबन्धेनान्वयस्य च द्योतकौ। अग्निज्ञाप्यं शलभकर्तृकं पतनमिति बोध उदाहरणे। तथाबोधे चाग्न्यभिमुखत्वं शलभपतनस्य लोकप्रसिद्ध्या मनसा गृह्यते इत्याभिमुख्यद्योतकताऽभिशब्दस्य।

अग्निज्ञाप्यं शलभकर्तृकं प्रत्यसत्त्याऽग्न्यभि मुखं पतनमिति बोध इत्यन्ये।

कर्मप्रवचनीयद्योत्यसंबन्धेनान्वयाद्वाक्ये द्वितीया तदाह—अग्निमभीति। लक्षणेनेति किम्? स्रुघ्नं प्रतिगतः। स्रुघ्नादागतस्तमेव प्रतिनिवृत्त इत्यर्थः। आभिमुख्ये किम्? 'वृक्षं प्रति विद्योतते' इत्यादावाभिमुख्यद्योतनाभावे समासो मा भूदिति। अस्य समासस्य वैकल्पिकत्वेन पक्षे कर्मप्रवचनीयत्वं चरितार्थम्। अभिप्रती इति किम्? अग्नेः संमुखं शलभाः पतन्तीत्यर्थे सांमुख्याऽर्थकसंशब्देन लक्षणत्वसम्बन्धेनान्वये समासो मा भूदिति।

अनुर्यत् (पा०सू०२।१।१५)। लक्षणेनेति वर्त्तते समयेत्याधिककरणशक्तिप्रधानम्। यदिति सामन्ये नपुंसकं द्वितीयान्तम्। यं पदार्थं समयेत्यर्थद्योतकोऽनुः तेन लक्षणभूतेन तद्वाचकेन समस्यते इत्यर्थस्तदाह—वनमिति। वनादेर्लक्षणत्वं समीपद्वारा। स्वसामी-

---

उक्तभाष्यादपीति*। 'विस्पष्टं पटुः' इतिभाष्यादपीत्यर्थः। मानसबोधविषयस्य न शाब्दबोधविषयत्वमित्वाभिप्रायेण—*अग्निज्ञाप्यमित्यादि*। द्योत्यस्याप्यर्थस्य शाब्दबोधविषयत्वं बहुषु दृष्टमिति तद्वदत्राप्युचितमित्याशयेनाह—*अग्निज्ञाप्यमिति*। *कर्मप्रवचनीयद्योत्यसम्बन्धेन*। लक्ष्यलक्षणभावेन। *द्योतनाभाव इति*। लक्ष्यलक्षणभावस्तु तत्रापीष्यत एव। नन्वेवं कर्मप्रवचनीयसंज्ञाविधानवैयर्थ्यमत आह—*अस्य समासस्येति*।

ध्येन हि वनेनाशनिदेशो ज्ञाप्यते। लक्षणत्वन्तु वस्तुसन्निमितं, न तु तेन संबन्धेनान्वयस्तदाह—वनस्य समीपमिति।

यस्य दैर्घ्यमिति। यद्दैर्घ्यसदृशदैर्घ्यमित्यर्थः। अत्रापि लक्षणत्वं वस्तुसदेव निमित्तम्। तद् ध्वनयन्नाह—गङ्गाया अन्विति। तद्द्योत्यसंबन्धेनान्वयाभावान्न द्वितीया। उपलक्षितेति। विशिष्टेत्यर्थः। दैर्घ्यसदृशदैर्घ्यविशिष्टत्वमनयोरर्थः। तथा बोधे च गङ्गायां ज्ञापकत्वस्य, 'गङ्गासमीपे गत' इति बोधे च गङ्गायां ज्ञापकत्वस्य च नियमेन मनसा बोधादन्यलभ्यत्वेन नात्र तद् अनोद्योत्यमिति तात्पर्यम्। तेन संबन्धेनान्वये तु 'वनमनु' 'गङ्गामनु' इति द्वितीयैवेति बोध्यम्। "निवेश्य गङ्गामनु तां महानदीं चमूम्" इति रामायणे प्रयोगात्। वाराणस्याः स्वरूपेण ज्ञातत्वेऽप्यायामवैशिष्ट्येन ज्ञाप्यत्वं बोध्यम्॥

तिष्ठद्गुप्र (पा०सू०२।१।१७)। चेनेषां वृत्यन्तरे प्रवेशो न।
"आतिष्ठद्गु जपेत्सन्ध्यां पश्चिमामायतीगवात्"।

---

*अशनिदेश इति*। अशनिगमनदेश इत्यर्थः। *तेन सम्बन्धेन*। लक्ष्यलक्षणभावसम्बन्धेन। एवञ्चानुगङ्गं वाराणसीत्यत्रानुशब्दद्योत्योऽर्थो दैर्घ्यसदृशदैर्घ्यं तदेकदेशे प्रथमतो भासमाने दैर्घ्ये गङ्गापदार्थस्याधेयतासम्बन्धेनान्वयो न त्वनेन गङ्गापदार्थस्य वाराणस्यामन्वयस्तदभिप्रायेणाह—*तद्द्योत्यसम्बन्धेनान्वयाभावादिति*। एवञ्च गङ्गापदार्थस्य कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वाभावान्न द्वितीयेत्यर्थः।

"यस्य चायाम" इतिसूत्रविषयं आह—*तथा बोध इति*। पूर्वसूत्रविषये आह। *वनस्य समीपङ्गत इतीति*। *तेन सम्बन्धेनान्वये त्विति*। अनुद्योत्यसम्बन्धेनान्वये त्वित्यर्थः। तत्र प्रमाणमाह—*निवेश्येति*। ननु ज्ञाप्यत्वं ज्ञापकत्वाभिमतविषयकज्ञानजन्यज्ञानविषत्वमेव तच्चाज्ञातस्य सम्भवति प्रकृते च वारणस्यास्तत्त्वं तदा भवेत्, यदि वाराणसीपूर्वमज्ञाता स्यात् तत्तु नेत्याशयेनाह—*वाराणस्या इति*।

*वृत्यन्तरे प्रवेशो नेति*। समुच्चेतव्यस्याभावादेतदर्थमेव चकारः। तदुक्तम्भाष्ये। "किमर्थश्चकारः। एवकारार्थः। तिष्ठद्गुप्रभृतीन्येव। क मा भूत। परमन्तिष्ठद्गु"। अत्रैवकारार्थ इत्यनेनैतत्सूचितं तिष्ठद्गुप्रभृतीनि इवैकार्थीभावविषयाणि न त्वेतेषां शब्दान्तरेणैकार्थीभावः। नन्वातिष्ठद्गु

इति भट्टिश्लोके आ तिष्ठद्गु आ आयतीगवादिति भिन्ने पदे । इह—उक्तोदाहरणद्वये । तत्राद्ये शत्रादेशमात्रम् । प्रथमासामानाधिकरण्यात्तदप्राप्तिः । यद्यपि 'पचन् पुरुषः' इतिवत् सिद्ध्यति, तथाऽप्युपायान्तरमिदम् । समासान्ताश्चेति । इदमन्त्ये । चेनान्यपदार्थे ऽव्ययीभाव इति बोद्ध्यम् ।

पक्षे षष्ठीति । अयं भावः । महाविभाषा नैकार्थीभावस्य विकल्पबोधिका, वृत्तिश्चैकार्थीभावे नित्यंति येन नाप्राप्तिन्यायेनाव्ययीभावस्तत्पुरुषं बाधेत, यथैकदेशिसमासः षष्ठीतत्पुरुषम् , इति पक्षे तल्लाभाय पुनर्वाग्रहणमिति ।

संख्येत्यादित्रिसूत्री स्वभावात्समानाधिकरणविषया । वंश इति । एकस्वभावः सन्तानप्रबन्धो वंशः । द्वौ मुनी, पाणिनिकात्यायनौ । त्रिमुनि—भाष्यकृत् तौ च । स्वपदार्थप्राधान्ये एवायं समासः । नन्वेवं 'त्रिमुनि व्याकरणम्' इति सामानाधिकरण्यानुपपत्तिरत आह—विद्येति । अन्ये तु बहुव्रीहौ त्रिमुनि व्याकरणम्, अव्ययीभावे व्याकरणस्येति स्वरभेदश्चेष्ट एवेत्याहुः ।

---

इत्यादौ समासान्तरेण प्रवेशदर्शनादिदमयुक्तमत आह—*आतिष्ठद्गु जपेदिति* । *अन्यपदार्थेऽव्ययीभाव इति* । तिष्ठद्गुकालविशेषे । "तिष्ठद्गुकालविशेषे इति वक्तव्यम् । तिष्ठन्ति गावो यस्मिन् काले" इति भाष्यात् । *इदम्* । निपातनरूपम् । *अन्त्ये* । आयतीगवमित्यत्र । अव्ययीभावविषये अव्ययीभावाभावे तत्पुरुषप्रवृत्त्युपायमाह—*अयम्भाव इति* । *एकस्वभावः* । समानस्वभावः । स्वभावशब्दोऽत्र धर्मवाची । *नन्वेवमिति* । स्वपदार्थप्राधान्यस्वीकारे इत्यर्थः ।

*मूले विद्यातद्वतामिति* । तद्वत्त्वञ्चात्र तत्प्रणेतृत्वसम्बन्धेन । एवञ्च विद्यावत्त्वात्मकधर्मसम्बन्धात्त्रिमुनिशब्दस्य यत्प्रवृत्तिनिमित्तं तदारोपेण व्याकरणे त्रिमुनिशब्दस्य प्रवृत्तिरिति भावः । इमं क्लेशं परिहर्त्तुमुपायान्तरमाह—*अन्ये त्विति* । नन्वेवम्बहुव्रीहौ पूर्वपदप्रकृतिस्वरो, अव्ययीभावे त्वन्तोदात्तत्वमिति स्वरभेदापत्तिरत आह—*स्वरभेदश्चेति* । *इष्ट एवेति* । समासभेदेन स्वरभेदे इष्टापत्तेः सर्वसम्मतत्वादिति भावः ।

परे तु विद्यावंशो नाम गुरुशिष्यपरम्परा । न चैतस्य मुनित्रयस्य तत्त्वे मानमस्ति । 'त्रिमुनि व्याकरणस्य' इति यदिष्यते तदेदं तिष्ठद्गुप्रभृतिषु पाठात्साध्यमित्याहुः । मूलं तु वृत्त्यनुसारेण । किंच "न हि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते" इति न्यायेन द्विमुनीति व्यवहारासङ्गतिर्बोध्या ।

जन्मनोदाहरति-एकविंशतीति । एकविंशतिर्भरद्वाजा वंश्या इति विग्रहः । वृत्तौ "तृतीयासप्तम्योः" (पा०सू०२।४।८४) इति सूत्रस्थभाष्यप्रयोगात्तत्प्रामाण्येनोपकादिष्वनयोः पाठात् "यञञोश्च" (पा०सू०२।४।६४) इति लुगभावो बोध्यः ॥

नदीभिश्च (पा०सू०२।१।२०) । अत्र च बहुवचननिर्देशान्न सञ्ज्ञाया ग्रहणं, नापि शब्दस्वरूपस्य । शब्दसञ्ज्ञात्वाच्च । किन्तु नदीत्यर्थग्रहणम् । तेन तद्वाचके सर्वत्र प्रवृत्तिः । एतच्च संख्यासञ्ज्ञासूत्रे भाष्ये स्पष्टम् । समाहारे चेति । तत्रैवेत्यर्थः । एवञ्च तदविवक्षायां "पूर्वकालैक" (पा०सू०२।१।४९) इति समासे 'एकनदीतरः' सिद्धः । अन्यथा समानाधिकरणतत्पुरुषं बाधित्वाऽव्ययीभावे नपुंसकह्रस्वत्वापत्तिः । "अच्प्रत्यन्वव" (पा०सू०५।४।७५) इति योगविभागसिद्धोऽभियुक्तोक्तः ।

---

लोकप्रसिद्ध्यनुसारेणाह-*परे त्विति* । नन्वेवं "त्रिमुनि व्याकरणस्य" इत्यस्य कथमुपपत्तिरत आह-*यदिष्यत इति* । ननु 'गर्गस्य गोत्रापत्यानाङ्कुलम्' इत्यर्थे गर्गकुलमित्यत्र यथा 'यञञोश्च' इतिसूत्रेण यञो लुग्भवति तथा 'एकविंशतिभारद्वाज' मित्यत्राञो लुक् स्यादित्यतादृशप्रयोगानुपपत्तिरत आह-*वृत्ताविति* । *अनयोरिति* । अनयोः 'एकविंशतिभारद्वाजम्' 'त्रिपञ्चाशद्गौतमम्' इत्यनयोः ।

ननु 'नदीभिश्च' इतिसूत्रं समानाधिकरणसमासमात्रबाधकमथ वा पुरस्तादपवादन्यायेन "पूर्वकालैक"इत्यस्य बाधकमुभयथा 'एकनदीतरा' इतिप्रयोगानुपपत्तिरव्ययीभावनपुंसकह्रस्वत्वापत्तेरत आह—*तत्रैवेत्यर्थ इति* । * । तदविवक्षायाम् * । समाहाराविवक्षायाम् । एतेनैकापूपीवत्समाहारविवक्षायामेकनदितरे इति भवत्येव । समासान्तापत्तिं वारयति—*अच्प्रत्ययेति*

गोदावर्याश्च नद्याश्च सङ्ख्याया उत्तरे यदि।

इत्यच् तु न। योगविभागस्येष्टसिद्ध्यर्थत्वात्, भाष्यकृता तदनुक्तेश्चेति भावः।

अन्यपदा (पा०सू०२।१।२१)। संख्येति निवृत्तम्। नदीग्रहणमनुवर्त्तते। सञ्ज्ञाऽनवगमादिति। सञ्ज्ञेति कर्मण्यङ्। तेन सञ्ज्ञिनो देशविशेषस्यानवगमादित्यर्थः। नित्यसमास इति। तत्सदृश इत्यर्थः। तत्सादृश्यञ्च समाससमानार्थकवाक्याभावेन। समासघटकपदानां विग्रहस्त्वस्त्येव। महाविभाषाया असम्बन्धे मानाभावात्। अत एव "द्वितीयतृतीय" (पा०सू०२।२।३) इति सूत्रेऽन्यतरस्यां ग्रहणेनोत्सर्गापवादयोर्महाविभाषाविषयत्वे ऽपवादाभावे उत्सर्गप्रवृत्तिरित्यर्थे ज्ञापिते 'उन्मत्तगङ्गम्' इत्युदाहृतम्। "अव्ययीभावेन मुक्ते बहुव्रीहिर्न" इति चोक्तं भाष्ये। अस्य नित्यत्वे तेन मुक्ते इत्यसङ्गतिः स्पष्टैव। एवमन्यत्रापि बोद्ध्यम्।

समासान्ताः (पा०सू०५।४।६८)। अत्र समासपदं तत्सम्बन्ध्यलौकिकविग्रहवाक्यपरम्, एवमव्ययीभावादिपदान्यपि तत्पराणि। अत एव 'बहुकुमारीकः' इत्यादौ ह्रस्वो न। "गोस्त्रियोः"

---

*वाक्याभावेन*। लौकिकविग्रहवाक्यसम्बन्धित्वाभावेन। एवञ्च नित्यसमासस्थले विशेष्याभावाद्विशिष्टाभावः। प्रकृते तु लौकिकविग्रहवाक्यसत्त्वेऽपि तस्य संशयबोधकतया विशेषणाभावाद्विशिष्टाभावोऽक्षत एवेति भावः। न चैतावता लौकिकत्व स्वसमानार्थकत्वाभ्यां विशिष्टस्य वाक्यस्याभावेनेति सिद्धम्। लौकिकत्वसमानार्थकत्वोभयाभाववद्वाक्यैकत्वेनेत्यर्थात् तदेतदाह—*समासघटकेति*। *अत एव*। विग्रहसत्वादेव। अथ वा, 'अत एव' एतस्य नित्यसमाससदृशत्वन्न तु नित्यसमासत्वमेवेति स्वीकारादेव।

*अत एव*। समासपदस्य समाससम्बन्ध्यलौकिकविग्रहवाक्ये लक्षणास्वीकारादेव। अन्यथा 'समाससामान्यापेक्षत्वरूपान्तरङ्गेत्यस्य ह्रस्वत्वे सत्त्वेन तत्प्रवृत्त्यापत्तिः स्यात्। समासार्थलौकिकविग्रहे लक्षणायान्त्वन्तरङ्गतरः कबिति न दोषः। *'गोस्त्रियो' रित्यत्र भाष्य इति*। तत्र हि—"कपि ह्रस्वत्वस्य प्रतिषेधो वक्तव्यः। बहुकुमारीकः। न वक्तव्यः। कपि कृतेऽनन्त्यत्वाद्ध्रस्वत्वन्न भविष्यति। इदमिह सम्प्रधार्यम्।

(पा०सू०१।२।४८) इत्यत्र भाष्ये स्पष्टमेतत् । 'अन्तः'(पा०सू०६।२।९२) इति सूत्रे भाष्ये च । एवञ्चालौकिकविग्रहवाक्ये समाससञ्ज्ञासमकालमेव समासान्ता इति सिद्धान्तः । न च पूर्वं समासान्ते तत्संनियोगशिष्टाद्युदात्तत्वे तदेकवाक्यतापन्ने पूर्वस्य निघाते च कृते पूर्वपदस्योदात्तस्वरितयोगित्वाभावेन पूर्वपदप्रकृतिस्वराप्रवृत्तौ टचश्चित्त्वं व्यर्थमिति वाच्यम् । तत्सामर्थ्येन समासान्तविधौ "आद्युदात्तश्च" (पा०सू०३।१।३) इत्यस्यासम्बन्धज्ञापनात् । तेन समृद्धा पूर्व-

---

कप् क्रियताम् । ह्रस्वत्वमिति । परत्वात्कप् । समाससामान्यापेक्षत्वादन्तरङ्गं ह्रस्वत्वम् । अन्तरङ्गतरः कप् । ननु चायं कप्समासान्त इत्युच्यते तादर्थ्यात्ताच्छब्द्यम्भविष्यति" इत्युक्तम् । 'न कपि' इतिनिषेधस्तु "अनन्तरस्य" इतिन्यायेन "केऽण" इत्यस्यैव बाधक इति भावः । *'अन्त' इतिसूत्रे भाष्ये चेति* । तत्र हि—"किं समासस्यान्त उदात्त आहोस्विदुत्तरपदस्य । आद्ये 'इदम्प्रथमका' इत्यादौ कपि पूर्वस्योपसंख्यानङ्कर्तव्यम् । अन्त्येऽनृच इत्यादौ 'नञ्सुभ्याम्' इत्यनेनान्त्याकारस्योदात्तत्वानापत्तिः" इत्युक्तम् । यदि समासे कृते समासान्तः प्रवर्त्तेत तदा 'इदम्प्रथमका' इत्यत्र समासे कृते समासान्तापेक्षया परत्वात् 'इदमेतत्तद्भ्यः' 'प्रथमपूरणयोः' 'क्रियागणने' इत्यनेन स्वरे कृते ततः कपि दोषाभावसिद्धौ भाष्यासङ्गतिः स्फुटैव । पूर्वोक्तव्याख्यानेन यत्सिद्धन्तदाह—*एवञ्चेति* । समाससंज्ञासमकालमेवेत्यत्र समासपदमव्ययीभावादीनामप्युपलक्षणम् । समासार्थालौकिकविग्रहवाक्यस्य अन्ताः समासान्ता इति सिद्धान्ते शङ्कते—*न च पूर्वं समासान्त इति* । अत्र पूर्वमित्यस्य समाससंज्ञाप्रयोज्यकार्यान्तरप्रवृत्तेः पूर्वमित्यर्थः । एतेन पूर्वोक्तसमकालत्वोक्तिविरोध इत्यपास्तम् । *चित्वं व्यर्थमितीति* । प्रत्ययाद्युदत्तत्वेनैवान्तोदात्तत्वसिद्धेः । न च यस्य मते समाससंज्ञोत्तरं समासान्तस्तन्मतेऽपि सति शिष्टत्वेन प्रत्ययस्वरस्य बलवत्त्वादन्तोदात्तत्वं सिद्धमेवेति डचश्चित्त्वं व्यर्थमेव । "बहुव्रीहौ प्रकृत्या"इति सूत्रेण पूर्वपदप्रकृतिस्वरविधानसामर्थ्यात्प्रत्ययस्वरो न भविष्यतीति वक्तुमशक्यम् । कब्विषये चारितार्थ्यादिति वाच्यम् । "अनुदात्तम्पदम्" इति सूत्रे पदग्रहणस्य परिमाणार्थतया समासान्तस्य समासावयवत्त्वबोधनेन च 'पूर्वपदम्बहुव्रीहौ प्रकृत्या' तञ्च वर्जयित्वा यावान्बहुव्रीह्यवयवः सन्निहितो भावो वा सोऽनुदात्त इत्यर्थेन डप्रत्ययस्यानुदात्तत्वं स्यादतश्चित्वं सफलमित्याशयात् । *तत्सामर्थ्येनेति* । डचश्चित्त्वसामर्थ्येनेत्यर्थः । *ते-

स्य समृद्धपुरो राजेत्यादौ पूर्वपदप्रकृतिस्वरसिद्धिः। "द्वित्रिभ्याम्" (पा०सू०५।४।११५) इति सूत्रस्थं समासे कृते समासान्ता इत्येतत्परं भाष्यमेकदेश्युक्तिः, उक्तभाष्यद्वयविरोधादित्यन्यत्र प्रपञ्चितम्। अन्तशब्दश्चरमावयववाची। स च समुदायावयवः। अत एव उपशरदम्' इत्यत्र "नाव्ययीभावात्" (पा०सू०२।४।८३) इत्यम् "अव्ययानाम्' इति टिलोपाभावश्च सिद्धः। पूर्वभागस्याव्ययीभावत्वाभावेनानव्ययत्वात्।

यत्तु कैयटेन "गोस्त्रियोः" (पा०सू०१।२।४८) इति सूत्रे समासपदस्य समासार्थविग्रहवाक्यस्थोत्तरपदलक्षणयोत्तरपदावयवत्वमु-

---

न*। अनुदात्तश्चेत्यस्यासम्बन्धेन। *पूर्वपदप्रकृतिस्वरसिद्धिरिति*। यदि समासान्तविधावनुदात्तश्चेत्यस्य सम्बन्धः स्यात्तदा तदेकवाक्यतापन्नशेषनिघातेन पूर्वपदस्यानुदात्तयोदात्तस्वरितयोगित्वाभावेन पूर्वपदप्रकृतिस्वरो न स्यादिति भावः। तेन समृद्धशब्दस्वरस्यैव श्रवणं परिनिष्ठिते भवति। ननु समाससंज्ञासमकालमेव समासान्तप्रवृत्तिस्वीकारे "द्वित्रिभ्याम्" इतिसूत्रस्थभाष्यविरोधः प्राप्नोति। तत्र हि-कृतसमासान्तपाद्दत्साहचार्यात्कृतमासान्ते मूर्द्धन्शब्देऽस्य प्रवृत्तिस्तदा समासान्ते कृते एव 'द्विमूर्द्धान'मित्यादौ प्रवृत्तौ नान्तत्वं वक्तव्यम्। यदि तु 'मूर्द्धसु' इतिनिर्द्देशात्साहचर्यमनादृत्याकृतसमासान्ते प्रवृत्तिस्तदा कृते समासान्ते 'द्विमूर्द्धः' इत्यत्र स्वरो न प्राप्नोति। एवं वितर्क्याकृतसमासान्तस्यैव मूर्द्धस्विवतिनिर्द्देशाद् ग्रहणम्। समासान्तविषये तु समासान्तापेक्षया परत्वात्स्वरे कृते ततः समासान्ते टिलोपे च कृते उदात्तनिवृत्तिस्वरेण सिद्धिरित्युक्तम्। यदि समाससंज्ञासमकालमेव समासान्तप्रवृत्तिस्तदा समासान्तात्परत्वात्स्वरप्रवृत्तिः स्यादित्येतदसङ्गतं स्यादत आह-*द्वित्रिभ्यामिति सूत्रेति*। *उक्तभाष्यद्वयेति*। "गोस्त्रियोः" इति सूत्रान्त इति सूत्रस्थभाष्येत्यर्थः। समाससंज्ञासमकालं समासान्तवृत्तिपक्षे तु 'द्वित्रिभ्यां' मित्यत्र मूर्द्धस्विति निर्द्देशदर्शनादकृतसमासान्ते ऽस्य प्रवृत्तिः। समासान्तविधिश्चानित्यः। यत्र तु समासान्तस्तत्रापि समासस्य कार्यित्वेनाश्रयणात्समासान्तसङ्घातस्यापि ग्रहणेनानेनैव स्वरस्य सिद्धिरिति कल्पनया निर्वाहो बोध्यस्तदाह—*अन्यत्रेति*। *अत एव*। समुदायावयवत्वादेव। *टिलोपाभाव इति*। अव्ययग्रहणेन समासान्तस्य ग्रहणात्। कैयटोक्तोत्तरपदावयवत्वपक्षस्त्वसङ्गत इत्याह—*यत्त्विति*।

क्तम्। तथा सरूपसूत्रे उक्तम् 'उत्तरपदावयवत्वमित्यपि भाष्यकार-स्य मत' मिति, तन्न। फलाभावात्। 'द्विपुरी' इत्यादौ स्त्रीत्वस्य लोकतः सिद्धेः। "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति भाष्येण लिङ्गप्रकरणस्य नियमार्थत्वाभावबोधनात्। अत एव "परवल्लिङ्गम्" (पा०सू०२।४।२६) इति सूत्रसत्त्वेऽपि 'द्विनावम्' 'अर्धखारम्' इत्यादौ नपुंसकत्वसिद्धिः। 'पञ्चराजम्' इत्यादावपि तत्प्रवृत्त्यापत्तौ "अकारान्तोत्तरपद" इत्यत्रोत्तरपदग्रहणस्य व्यर्थत्वापत्तिश्च।

"अन्तः" (पा०सू०६।२।९२) इत्यादिसूत्रस्थभाष्यविरुद्धम् चोत्तरपदावयवत्वम्। एवं हि तत्र भाष्यम्—'समासस्यान्तोदात्तत्वमुत्तरपदस्य वा' इति विकल्पे आद्ये 'इदं प्रथमकाः' इत्यादौ कपोऽन्तोदात्तत्वापत्तिमुक्त्वा ऽन्से 'अनृचः' इत्यत्रान्तोदात्तत्वासिद्धिरित्युक्त्वा उभयोरपि प्रकरणेन लक्ष्यानुसारात्क्वचिदुत्तरपदान्तस्योदात्तत्व'मिति।

सरूपसूत्रस्थभाष्यं तदनाश्रयणे ऽपि योजयितुं शक्यम्। तथाहि—कृतद्वन्द्वानां विभक्तौ परत एकशेष इति पक्षे "ऋक् च ऋक् च ऋचौ," असारूप्यादेकशेषो न प्राप्नोति" इति भाष्यम्। समासान्तानां समासावयवत्वे ऽपि तत्प्राग्भागस्य विभक्तिपरत्वाभावः' तद्विशिष्टस्य तु न सरूपत्वमिति तद्भावः। न च तस्यानर्थक्येन तद-

---

*फलाभावादिति*। समासपदस्य समासार्थालौकिकविग्रहवाक्यात्मकसमुदायपरत्वम्भाष्यकारोक्तं यत्तादर्थ्यात्ताच्छब्द्यमिति तदनुगृहीतम्भवति। उत्तरपदावयवत्वे तु न तादृशभाष्योपलम्भ इत्यपि बोध्यम्। ननु यदि समासान्तो नोत्तरपदावयवस्तदा 'द्विधुरी' इत्यत्र "अकारान्तोत्तरपदो द्विगुस्त्रियामिष्ट" इत्यस्य कथम्प्रवृत्तिरत आह-*द्विधुरीत्यादाविति*। *अत एव*। लिङ्गस्य लोकाश्रयत्वादेव। *नपुंसकत्वसिद्धिरिति*। उत्तरपदावयवत्ववादिमतेऽपि प्राप्तस्त्रीत्वस्य लोकाश्रयत्वेन वारणं कार्यमिति भावः।

उत्तरपदावयवत्वस्वीकारे भाष्यविरोधमपि दर्शयति-अन्त इत्यादिसूत्रेति। *अन्तोदात्तत्वासिद्धिरिति*। यद्ययमुत्तरपदावयवः स्यात्तदा "नञ्सुभ्याम्" इति सूत्रेणान्तोदात्तत्वमत्र चकारस्य स्यादेवेति भावः। विग्रहवाक्ये समुदायावयवत्वे सरूपसूत्रस्थभाष्याविरोधं वारयति-*सरूपेति*। *तस्यानर्थकत्वेन*। समासान्तरहितस्य 'ऋच' इत्यस्यार्थव-

तुक्त्या भाष्यस्य न्यूनता । द्वन्द्वावयवानामर्थवतामेकशेष इत्यर्थे मानाभावात् । विशिष्टरूपोपादानाभावे न तत्परिभाषाया इहाप्रवृत्तेः । भाष्यान्तरं तु तादृशं नोपलभ्यत एवेति दिक् ।

स च समासान्तो 'बहु जस् गोमत् जस्' इत्यवस्थायामलौकिके वाक्ये सुपः परस्तादेव । ततः पूर्वत्वे तु वाच्यार्थविरोधः । न हि सुब्रहितं समासार्थं किन्तु तद्विशिष्टमेव । न च विशिष्टस्य सुबन्तत्वाभावेन 'ताद्धित' इति सिद्धान्तविरोधः । तेषामर्थाभावेन 'परिपूर्णं पदम्' इति तन्मूलभूतन्यायस्यात्र विषयाभावात् । अत एव "पुंयोगात्" (पा० सू०४।१।४८) इति सूत्रेऽत्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमेवोत्पत्तिर्भाष्ये उक्ता ।

किञ्च समासान्तप्रकरणे "ङ्याप्प्रातिपदिकात्" (पा०सू०४।१।१) इत्यस्याप्यसम्बन्धः । तस्यामवस्थायां वाक्यस्याप्रातिपदिकत्वात् । तत्र कबुत्पत्तिकाले एव तत्पूर्वभागस्य समाससञ्ज्ञा, विरोधाभावात् । समासान्तस्य च तद्वाक्यावयवयत्वेन तद्ग्रहणेन ग्रहणात् 'बहुकुमारीकः' इत्यादावुपसर्जनस्त्रीप्रत्ययान्तप्रातिपादिकाभावान्न ह्रस्वः । कब् ह्रस्वादन्तरङ्गतरः । तादर्थ्यात्ताच्छब्द्यम् । "येषां पदानां समासो, न तावत्तेषामन्यद्भवति कपं तावत्प्रतीक्षते" इति भाष्येण स्पष्टं तथाभिधानात् । तत्राद्यस्य 'तावत्' इत्यस्य कपः प्रथममित्यर्थः । अन्यत्समाससञ्ज्ञारूपं कपा सह स्वभवनाय कपं पश्यतीत्य-

---

स्वाभावेन । *मानाभावादिति* । न च द्वन्द्वापवादत्वव्यवहार एव मानम्
द्वन्द्वसमासस्यार्थवत्वात् प्रातिपदिकसंज्ञायाम्प्रत्येकं सुबुत्पत्तावेव प्राप्तेः ।
कृतद्वन्द्वानामिति पक्षे तु सुतरां तथेत्यत आह—*विशिष्टरूप इति । अ-
र्थबोधकतावच्छेदकानुपूर्वी विशिष्टरूपेत्यर्थः । *तद् विशिष्टमेव* । सुब्वि-
शिष्टमेव । *तन्मूलभूतेति* । 'सुबन्तात्तद्धितः' इति सिद्धान्तमूलभूतेत्यर्थः
अत एव* । 'परिपूर्णम्' इति युक्तेः सार्थकविषयत्वादेव । *तस्यामवस्था
याम्* । वाक्यावस्थायाम् । सामान्यत उक्तमेवार्थं स्पष्टप्रतिपत्तये विशेषत
आह-*तत्रेति* । तद्ग्रहणेन । न च समासान्तस्य भवदुक्तरीत्या वाक्याव-
यवत्वेन वाक्यग्रहणेन ग्रहणं भवतु, न तु समासग्रहणेन ग्रहणम्भविष्यतीति
वाच्यम् । वाक्यस्यैव समाससंज्ञाविधानेन समासशब्दाभिधतयो समास-

र्थः । पूर्वं स्वप्रवृत्तौ हि तदर्थकवाक्याभावेन कप्शास्त्रवैयर्थ्यभिया त-द्वचनकालप्रतीक्षा । अन्यथा तदनपेक्षत्वेन कप्प्रतीक्षोक्तिरत्यन्तास-ङ्गता स्यात् । अत एव "प्रत्ययस्थात्" (पा०सू०७।३।४४) इति सू-त्रभाष्योदाहृते 'बहुचर्मिका' इत्यादावापः सुपः परत्वाभावादित्वासि-द्धिरिति दिक् ।

अथाव्ययीभावेऽसाधारणसमासान्तानाह–

**अव्ययीभावे ।** (पा०सू०६।३।८१) । अव्ययीभावे उत्तरपदत-या वर्त्तमानं यच्छरदादिप्रकृतिकसुबन्तं तदन्तादट्टच् । स च समासा-र्थविग्रहवाक्यस्यान्तावयव इत्यर्थः । "राजाहः" (पा०सू०५।४।९१) इत्यतष्टजनुवर्त्तते । अन्नन्तादव्ययीभावादित्यादि तु फलितार्थपरत-या कथञ्चिन्नेयम् । अत्र गणे ये झयन्तास्तेषां 'झयः' (पा०सू०५।४।१११) इति विकल्पे प्राप्ते नित्यार्थः पाठ इति केचित् । प्रत्यक्षमि-ति । "लक्षणेनाभि" (पा०सू०२।१।१४) इति समासः । परोक्ष-मिति । इन्द्रियाजन्यज्ञानम् । विषये त्वशआद्यजन्तः प्रयोगः । नन्व-त्राव्ययीभावाप्राप्तिरत आह–सामर्थ्यादिति । परस्यौकारेति । पर-

---

शब्देन विशिष्टस्य ग्रहणम्भविष्यतीत्याशयात् । *अन्यथा*—मदुक्तरीत्या तावदित्यस्य व्याख्यानाभावे ।*तदनपेक्षत्वेन*। कबनपेक्षत्वेन । *अत एव*। सुपः परस्तादित्यस्याश्रयणादेव । *दिगिति* । दिगर्थस्तु यदन्यत्रोक्तमलौ-किकविग्रहवाक्ये समासान्ते कृते तद्धितान्तत्वात्प्रातिपदिकत्वे सुब्लुकि प्र-त्ययलक्षणेन प्रत्येकं सुबन्तत्वेन समाससंज्ञेति तत्र युक्तमुक्तभाष्यस्वारस्येन समासान्तस्य समाससंज्ञायाश्चैककालप्रवृत्तिकत्वस्यैव लाभ इत्यादिः ।

सूत्रार्थमाह—*अव्ययीभाव इति* ।

नन्वेवम् 'अनश्च' इत्यस्यापि अन्नन्तं यत्प्रातिपदिकन्तत्प्रकृतिकसुब-न्तोत्तरपदकाव्ययीभावार्थवाक्यादित्येवार्थ उचित इत्यन्नन्तादित्यनुपप-न्नमत आह—*अन्नन्तेति* ।

*केचिदिति* । 'झयः' इति सूत्रस्य वैकल्पिकत्ववादिन इत्यर्थः । व-स्तुतस्तु वक्ष्यमाणरीत्या 'झयः' इति नित्यमेव । *लक्षणेनेति* । अक्ष्णः सन्मुखमिति विग्रहः । *अव्ययीभावाप्राप्तिः* । परमित्यर्थे विधायका-भावादव्ययाघटितत्वाच्चेति भावः । वस्तुतस्त्वस्मिन् गणसूत्रे परस्य

शब्दस्य आकारान्तादेश इत्यर्थः । एङि इतिपूर्वरूपत्वम् । परस्योकरेति पाठे परस्याक्षिशब्दस्यादेरुकार इत्यर्थः । आद्गुणः । अर्शआद्यची-ति । धर्मपरादिति भावः । अत्र गणसूत्र परग्रहणं प्रक्षिप्तमिति "परोक्षे लिट्"(पा०सू०३।२।११५) इति सूत्रस्थभाष्यकैयटस्वरसः । तत्र हि समासान्तोऽपि निपातनात्साधितः ।

पूजार्थमिति । वेति वक्तव्ये तत्पूजार्थमपीत्यर्थः । अन्यतर-स्यांग्रहणस्य तु स्वरितत्वं नास्त्येव । अत एव "नदीपौर्णमासी" (पा०सू०५।४।११०) इति सूत्रे नदीशब्देन विशेषाणामग्रहणे शर-दादिषु विपाट्शब्दपाठस्य ज्ञापकत्वमुक्तं संख्यासञ्ज्ञासूत्र भाष्ये । नदीत्यादेर्वैकल्पिकत्वे नित्यत्वाय पाठस्यावश्यकतया ज्ञापकत्वास-ङ्गतिः स्पष्टैव । तत्र झयन्तपाठस्तु प्रपञ्चार्थः । तत्र नदीसञ्ज्ञकस्य न ग्रहणं, पौर्णमास्यादिग्रहणात् । न च 'अशब्दसञ्ज्ञा' इति निषेधा-त्स्वरूपस्यापि ग्रहणं न स्यादिति वाच्यम् । लक्ष्यानुसारेण साम-

---

पाठ आकरविरुद्ध इत्याह—*अत्रेति* ।

ननु पूजार्थमितिमूलग्रन्थात् 'गिरेश्च'इतिसूत्रेऽन्यतरस्यामित्यस्य स-म्बन्ध इति प्रतीयते तन्न युक्तम्, वक्ष्यमाणयुक्तेरित्याशयेनाह—*वेति व-क्तव्य इति । *अत एव* । 'अन्यतरस्या'मित्यस्य 'स्वरित' इत्यस्य स्व-रितत्वाभावादेव । *भाष्य इति* । तत्र हि 'कृत्रिमाकृत्रिम' न्यायं व्युत्पा-द्योक्तम्—"यदि तर्हि कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति 'नदीपौर्णमास्याग्रहायणीभ्य' इत्यत्रापि प्रसज्येत । पौर्णमास्याग्रहायणीग्र-हणसामर्थ्यान्न भविष्यति तद्विशेषेभ्यस्तर्हि प्राप्नोति" । *गङ्गायमुने इति*। "एवन्तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति न तद्विशेषेभ्यो भवतीति । यदयं विपाश्श-ब्दं शरत्प्रभृतिषु पठति" इति । अत्र पौर्णमास्याग्रहायणीग्रहणसामर्थ्या-दिति । यदि नदीसंज्ञकस्य ग्रहणं तदा ऽनयोरुपादानं व्यर्थं स्यात् । चेदनयोरेवेति चेत् । नन्वनयोरुपादानं नियमार्थम्भविष्यति ईकारान्तस्य एवन्तर्हि 'ऊपौर्णमास्याग्रहायणीभ्यः' इत्येव वदेदिति नदीशब्दोपादा-नं ज्ञापकमेव । साहचर्याच्च ऊपदेन नदीसंज्ञकोकारान्तस्य ग्रहणं भवि-ष्यतीत्यभिप्रायः । ये तु 'नदीपौर्णमासी' इतिसूत्रेऽन्यतरस्यामित्यस्य स-म्बन्धं वदन्ति, अस्य च सूत्रस्य व्यवस्थितविभाषात्वं स्वीकुर्वन्ति, तेषां 'देवत्रातः' इत्याद्युक्तव्यवस्थितविभाषात्वपरिगणनविरोधः स्पष्ट एव ।

थर्येन च तस्यात्र त्यागात्। अत एव तत्सूत्रं भाष्ये प्रत्याख्यातमिति प्रामाणिकाः ॥

॥ इत्यव्ययीभावः ॥

---

*तस्यात्रेति* । 'अशब्दसंज्ञा' इतिनिषेधस्येत्यर्थः । अत एव* । लक्ष्यानुसरणस्य सूत्रसत्त्वेऽप्यावश्यकत्वादेव । *तत्सूत्रम् । 'स्वंरूपम्' इतिसूत्रम् ॥

इत्यव्ययीभावविवरणम् ॥



श्रीगणेशाय नमः ॥

# ॥ अथान्यसंग्रहीतटिप्पणीसङ्ग्रहः संप्रदर्श्यते ॥

## समासग्रहणकृतनियमविचारः ।

पूर्वो भागः पदमिति । कृत्तद्धितेत्यत्र समासग्रहणकृतसङ्कोचेनार्थवत्सूत्रस्येदृशस्थले प्रवृत्तिर्न भवतीत्येतद्बोधकं समासग्रहणकृतनियमव्यवच्छेद्यानुगमकवाक्यभिन्नमेवेति भट्टोजिदीक्षिताशयः-यत्तच्छब्दार्थयोरननुगतत्वेनेत्यादिना । 'यत्र सङ्घात' इत्यस्य ग्रन्थस्य वैयर्थ्यमुपपादितं तन्मतखण्डनायाह—एतेनेति । यत्र संघाते इत्युक्तेर्नियमस्याकारं प्रदर्शयितुमुक्तिरित्यर्थकनियमस्य सजातीयविषयत्वादित्यादिग्रन्थव्याख्यानेनेत्यर्थः । यत्तच्छब्दार्थयोननुगतत्वेनेति । एतेन यत्तच्छब्दार्थघटितो यत्र सङ्घात इत्यादिसमुदायस्याप्यननुगतत्वं सूचितम् । न च नायं यत्र सङ्घात इत्यादिरर्थानुगमो येनैतदर्थस्याननुगतत्वं स्यात् । असिद्धत्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वमिति परिचायकम् । स्वपदघटितव्याप्तिलक्षणसमुदायपदमपि परिचायकपदघटितं यत्र सङ्घात इत्यादि । समासग्रहणकृतनियमव्यवच्छेद्यलक्षणसमुदाये शब्दानुगम इत्यरुचेराह—शब्दानुगमस्याप्रयोजकत्वेनेति । न च शब्दानुगमे मानसिकबोधे लाघवस्य सत्त्वेन शब्दानुगमस्यापि यथाकथञ्चित्प्रयोजकत्वमस्त्येवेत्यत आह—व्यवच्छेद्यानुगमेऽपि क्षत्यभावेनेति । चो हेतौ । व्यवच्छेद्याननुगमेऽपि क्षत्यभावेन हेतुनेत्यर्थः । पूर्वभागपदघटितं संघातातिरिक्तत्वेन समासग्रहणकृतनियमसङ्कोचेनैव निर्वाहस्य सत्त्वादिति भावः । वस्तुतस्त्वयमपि हेतुरुक्त एव । तथा हि-यथा निपातएकाजनाङित्यत्र ङिदङितोरनुगमे प्रसक्ते ङितो न्यूनत्वेन वाक्यस्मरणयोरित्यनेन तन्मात्रानुगमे लाघवमस्ति, तथा प्रकृते समासग्रहणकृतसङ्कोचेनार्थवत्सूत्रे व्यवच्छेद्याव्यवच्छेदयोरनुगमे प्रसक्ते न्यूनपाती यत्र सङ्घात इत्यादिना समासतच्छंकारूपतन्मात्रानुगमेन लाघवस्य सत्त्वेन तस्यानुगमाभावे व्यवच्छेद्याव्यवच्छेद्ययोरप्यननुगतत्वेन गौरवापत्त्या व्यवच्छेद्याननुगमः । ग्रन्थकृता तु व्यवच्छेद्याननुगमक एव तावदयं नास्तीति प्रतिपादितम् ।

पदशब्देनात्रेति । अत्रेत्यस्य पूर्वो भागः पदमित्यत्रेत्यर्थः । ननु पूर्वावयकसमुदायत्वं नियामकशास्त्रीयोद्देश्यतावच्छेदकं भवितुं, नार्हति वृषण्वसुरित्यादौ समासत्वस्यसत्त्वेऽपि वृषण्वस्वश्वयोः, इतिवृषण् इत्यस्य भत्वेन पदपूर्वावयवसमुदायत्वस्याभावादित्याह—स्वातन्त्र्येण प्रयोगार्हार्थवन्तगृह्यन्ते इति । एवं स्वातन्त्र्येण प्रयोगार्हार्थवत् एतत्संज्ञाफलभूतेत्याद्यर्थवत्सूत्रोक्तार्थवत्त्वमेवेति सूचितम् । तत्रैतावान्विशेषः, अर्थवत्सूत्रोक्तार्थवत्त्वलक्षणे ऽर्थविषयकबोधजनकत्वमित्यत्र बोधजनकं च शक्तिलक्षणान्यतरसङ्केतेव गृह्यते ऽत्र तु तथैवेति नाग्रहः । अत एव भेदानुकरणस्थले गवित्ययमाहेत्यादौ गो इत्यस्यैतत्संज्ञाफलभूतेत्याद्यर्थरूपस्वातन्त्र्येण प्रयोगार्हत्वस्य सत्त्वेन पदत्वस्य सुलभत्वाद्गविति समुदायस्य पूर्वभागपदघटितसङ्घातत्वेन "यत्र सङ्घाते इत्यादि समासग्रहणकृतनियमेनार्थवदिति प्रातिपादिकसंज्ञाव्यावृत्तिः सिध्यति । अन्यथा गो इत्यस्य शक्तिलक्षणान्यतरसङ्केताद्यभावेनार्थविषयकबोधजनकत्वाभावादेतत्संज्ञेत्यर्थवत्त्वरूपस्वातन्त्र्येण प्रयोगार्हत्वाभावेन पदत्वासम्भवात् गविति समुदायस्य पूर्वभागपदघटितसङ्घातत्वासम्भवेन यत्र सङ्घात इत्यादि समासग्रहणकृतनियमेनार्थवदिति प्रातिपदिकसंज्ञाप्रवृत्तिर्न स्यादिति बोध्यम् । अत एवेति । अर्थवत्समुदाय इत्यस्यार्थवान्यः समुदायस्तस्येत्याद्यर्थस्वीकारादेवेत्यर्थः । अत एवार्थवत्सूत्रे ऽर्थवद्ग्रहणप्रत्युदाहरणपरं दशदाडिमानीत्यादि भाष्यं संगच्छते । अन्यथा दश दाडिमानीत्यादीनां सर्वेषामपि स्वातन्त्र्येण प्रयोगार्हत्वस्य सत्त्वेनार्थवतां समुदायस्य समासग्रहणकृतनियमेनैव तादृशसमुदायस्यार्थवदितिसूत्रेण प्रातिपादिकसंज्ञाया अप्राप्त्यार्थवद्ग्रहणप्रत्युदाहरणमसङ्गतं स्यात् । अर्थवत्समुदायानामित्यस्यार्थवान्यः समुदायस्तेषामित्यर्थाङ्गीकारे तु तादृशसमुदायस्यार्थवतां समुदायत्वे ऽपि नोक्तबोधजनकत्वाभावेनैतत्संज्ञेत्यादिरूपस्वातन्त्र्येण प्रयोगार्हत्वरूपार्थवत्त्वस्य तादृशसमुदाये ऽभावात्स-

मासग्रहणकृतनियमेनार्थवदिति प्रातिपदिकत्वव्यावृत्त्यप्राप्त्याऽर्थवद्ग्रहणप्रत्युदाहरणपरभाष्यं सङ्गच्छते एवेति बोध्यम्। अर्थवत्समुदायानामिति। अर्थवतां यः समुदायस्तेषामित्यर्थः। नन्वर्थवत्समुदायानां समासग्रहणं नियमार्थमिति भाष्यं सरूपसूत्रस्थभाष्येण विरुद्धम्। तत्र च भाष्ये विभक्त्यन्तानामिति पक्षे रामा इत्यादौ राम आसिति स्थिते सरूपाणामित्यनेनैकशेषेऽवशिष्टस्य राम इत्यस्य प्रातिपदिकत्वाभावेन सुपो धात्विति सुपो लुगप्राप्त्या राम इति रूपसिद्धिर्न स्यादिति दोषदानसमये-ननु राम इत्यवस्थायां समुदायस्य प्रत्ययान्तपर्युदासाभावेन प्रातिपदिकसंज्ञाविधानोत्तरं सरूपाणामित्येकशेषे ऽवशिष्टस्य रामसु इत्यस्यानुमानिकस्थानिवद्भावेन प्रातिपदिकत्वात्सुपो धात्विति लुकः सौ न, न रामा इत्यादि रूपसिद्धिरस्त्येवेत्याशङ्क्य—"सुबन्तानां समासग्रहणं नियमार्थमिति" राम सु इति समुदायस्य प्रातिपदिकसंज्ञैव न प्राप्नोति, यथा—सरूपाणामित्येकशेषेणैव सिद्धस्य राम सु इत्यस्यानुमानिकस्थानिवद्भावेन प्रातिपदिकत्वे सुपोधात्विति लुकि राम इत्यादि रूपासिद्धिः स्यादित्युक्तम्। एवञ्च तत्रत्यसमासग्रहणं नियमार्थमिति भाष्यविरोधः स्पष्ट एव। यतो हि सुबन्तानां समासग्रहणं नियमार्थमिति भाष्येणोक्तरीत्या गवित्ययमाहेत्यादावभेदानुकरणस्थले गोरित्यादेः प्रातिपदिकत्वाभावेन सुबन्तानां सम्भवात्तद्घटितस्य गविति समुदायस्य समासग्रहणकृतनियमेन प्रातिपदिकसंज्ञाव्यावृत्तिर्न प्राप्नोति, अर्थवत्समुदायानां समासग्रहणं नियमार्थमिति भाष्येणोक्तरीत्या तु गो इत्यादेः स्वातन्त्र्येण प्रयोगार्हत्वरूपार्थवत्त्वस्य सत्त्वेन तद्घटितस्य गविति समुदायस्यार्थवत्समुदायत्वसत्त्वात्समासग्रहणकृतनियमेन प्रातिपदिकसंज्ञाव्यावृत्तिः प्राप्नोत्यत आह—भाष्ये सुबन्तानामित्यनेनेति।

**भेदसंसर्गकार्थवन्त उपलक्ष्यन्त इति।**

भिद्यत इति भेदः, कर्मणि घञ्, भिन्न इत्यर्थः। भेदानां भिन्नभिन्नपदप्रतिपाद्यानां संसर्गः परस्परं निरूप्यनिरूपकभावादिरसौ भेदसंसर्गस्तद्द्वारकार्थवन्त उपलक्ष्यन्त इत्यर्थः। अयम्भावः, अर्थवतां भिन्नभिन्नपदानां संसर्गताप्रयोजकतासम्भवेन समासस्थले संसर्गताप्रयोजकतया समासयोग्यपदानामर्थवत्त्वमस्त्येवेति द्वन्द्वसमासस्थले तादृशपदानां परस्परं निरूप्यनिरूपकभावापन्नविषयताकबोधजनकत्वसम्भवात्तादृशपदानामर्थवत्त्वस्य दुर्वारत्वाद्भाष्योक्तसुबन्तानामित्यस्य भेदसंसर्गद्वारकार्थवन्त उपलक्षकत्वसम्भव इति सुबन्तानामिति भाष्येणार्थवत्समुदायानामिति भाष्यस्य न विरोध इति बोध्यम्। तेनेति। भाष्ये सुबन्तानामित्यस्य भेदसंसर्गकार्थवतामुपलक्षकत्वस्वीकारेणेत्यर्थः। अन्यथा गवित्ययमाहेत्यादावभेदानुकरणे गो इत्यादीनां सुबन्तपदभागत्वेन गवित्यादि समुदायस्य यत्र संघाते पूर्वो भागः पदमिति समासग्रहणकृतनियमानाक्रान्तापत्त्यार्थवदिति सूत्रेण प्रातिपदिकसंज्ञा दुर्वारा स्यात्। नन्वेवमपि गवित्ययमाहेत्यादौ समासग्रहणकृतनियमेन गवित्यादि समुदायस्यार्थवदिति प्रातिपदिकसंज्ञा व्यावृत्तिर्न प्राप्नोतीति गो इत्यादीनामितिशब्द परत्वे सत्त्वे वानुकरणस्य सत्त्वेनैतत्संज्ञाफलभूतविभक्तीतरेति शब्दसमभिव्याहारापेक्षयैव लोकेऽर्थविषयकबोधजनकत्वसम्भवादेतत्संज्ञफलभूतेत्याद्यर्थविषयकबोधजनकत्वाभावेन स्वातन्त्र्येण प्रयोगार्हत्वरूपार्थवत्त्वस्य च वाक्यतया यत्र संघाते पूर्वो भागः पदमिति नियमानाक्रान्तत्वादत आह—अनुकरणस्यानीति।

**पदस्यापि प्रयोगसत्त्वेनेति।** इति शब्दपरत्वाभावतो ऽप्यनुकरणस्य प्रयोगसत्त्वेनेत्यर्थः। अत्र मानं त्वनुकरणस्यानिति परमिति सूत्रमेव। तत्रहि-इति शब्दपरस्यैवानुकरणस्य सत्त्वे हि। इति शब्दपरत्वाभाववतो ऽनुकरणस्यासत्त्वात्सूत्रं व्यर्थमेव स्यादिति बोध्यम्। **तावन्मात्रस्यापीति।** गो इत्येतावन्मात्रस्यापीत्यर्थः। **तत्रेति।** यत्र संघाते पूर्वो भागः पदमित्यत्रेत्यर्थः। **पुत्रकाम्येत्यादाविति।** आत्मनः पुत्रमिच्छतीत्यर्थेऽपि पुत्रमिति सुबन्तात्काम्यच्प्रत्यये विशिष्टस्य सनाद्यन्तत्वाद्धातुत्वेन सुपो धात्विति त्यमो लुकि पुत्रकाम्येति समुदायात्प्रत्ययविशिष्टकाम्येति रूपस्य पुत्रादिसमभिव्याहारे सत्येव प्रयोगात्ततः काम्येति समुदायस्य स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वाभावात्तद्घटितस्य काम्येति समुदायस्य समासग्रहणकृतनियमानाक्रान्तत्वात् कृत्तद्धितेति कृदन्तत्वात्प्रातिपदिकत्वस्य सुलभतया ङीबाद्यापत्तिरूपो दोषो नेति भावः। पूर्वे इत्यनेनाचिन्तपरेषां स्वातन्त्र्येणार्थवता ग्रहणाभावे तु पूर्वस्य पुत्रशब्दस्य स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वस्य सत्त्वेन तद्घटितस्य पुत्रकाम्येति समुदायस्य समासग्रहणकृतनियमानाक्रान्तत्वापत्त्या कृद-

द्धितेति कृदन्तत्वप्रयुक्तप्रातिपदिकत्वाप्राप्त्या ङीबाद्यनापत्तिरूपदोषः स्यादेवेति बोध्यम् । अत्रैवेति । पूर्वं इत्यनेनाक्षिप्तपरेषामपि स्वातन्त्र्येण प्रयोगार्हार्थवतामेव ग्रहणस्य स्वीकारादेवेत्यर्थः । अन्यथा देवदत्तो गार्ग्य इत्यादौ देवदत्तो गार्ग्येति समुदायस्य व्यावर्तनीया प्रातिपदिकसंज्ञा तत्फलभूताऽऽगामिनीविभक्तीतरानपेक्षयैव देवदत्तेति सुबन्तस्य पूर्वस्य च वाक्ये अर्थविषयकबोधजनकत्वसत्त्वे स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वरूपार्थवत्त्वसत्त्वात्प्रत्ययग्रहणपरिभाषानङ्गीकारे देवदत्तो गार्ग्येति समुदायस्य तद्धितान्तत्वे ऽपि समासग्रहणकृतनियमाक्रान्तत्वादेव कृत्तद्धितेति तद्धितान्तत्वप्रयुक्तप्रातिपदिकसंज्ञाया अभावस्यान्यथासिध्या प्रत्ययग्रहणपरिभाषाफलत्वेन एतस्योपन्यासः अङ्गसंज्ञासूत्रस्थभाष्योक्तो ऽसंगत एव स्यात् । पूर्वं इत्याक्षिप्तपरेषामपि स्वातन्त्र्येण प्रयोगार्हार्थवतामेव ग्रहणमित्यस्याङ्गीकारात् । एतस्य देवदत्तो गार्ग्येति समुदायस्य व्यावर्तनीया प्रातिपदिकसंज्ञा तत्फलभूतागामिनी विभक्तिस्तदितरो गार्ग्यशब्दस्तत्समभिव्याहारापेक्षयैव गार्ग्येति रूपस्य परस्य लोके ऽर्थविषयकबोधजनकत्वरूपस्वातन्त्र्येण प्रयोगार्हार्थवत्त्वाभावादेतादृशगार्ग्यशब्दघटितदेवदत्तो गार्ग्येति समुदायस्य नियमाक्रान्ततया समासग्रहणकृतनियमेन तद्धितान्तत्वप्रयुक्तप्रातिपदिकसंज्ञाव्यावृत्तेः कर्तुमशक्यतया प्रत्ययग्रहणपरिभाषया देवदत्तो गार्ग्येति समुदायस्य तद्धितान्तत्वसौलभ्येन प्रातिपदिकसंज्ञापत्तेर्दुर्वारत्वेन तदभावः प्रत्ययग्रहणपरिभाषाफलत्वेनाङ्गसंज्ञासूत्रस्थभाष्योक्तः स्पष्ट एव । भाष्योक्तसमर्थनाय प्रकारान्तरमस्त्येव । अत एवेति । अत एवेत्यस्य पूर्वपदघटितसमुदायस्यापि स्वातन्त्र्येण प्रयोगार्हार्थवतो ऽभ्युपगमादेवेत्यर्थः । अन्यथा देवदत्तो गार्ग्य इत्यादौ गार्ग्यपदोत्तरसुविनिर्मुक्तदेवदत्तो गार्ग्येत्येतद्घटकदेवदत्त इति सुबन्तपूर्वमात्रस्य एतत्संज्ञाफलभूतेत्यादि स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वसत्त्वेन तद्घटितदेवदत्तो गार्ग्येति समुदायस्य समासग्रहणकृतनियमादेव तद्धितान्तत्वप्रयुक्तप्रातिपदिकत्वाप्राप्त्या तदभावस्य प्रत्ययग्रहणपरिभाषाफलभूतत्वेनोपन्यासो ऽङ्गसंज्ञासूत्रस्थभाष्योक्तो ऽसंगत एव स्यात् । समुदायस्यापि स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वाभ्युपगमे तु देवदत्तो गार्ग्येति समुदायस्य चिकीर्षिता या प्रातिपदिकसंज्ञा तत्फलभूता या आगामिनी विभक्तिस्तदितरो गार्ग्य शब्दोत्तरः सुप्तत्समभिव्याहारानपेक्षया लोके ऽर्थविषयकबोधजनकत्वाभावेन देवदत्तो गार्ग्येति समुदायस्य स्वातन्त्र्येणेत्याद्यर्थवत्त्वाभावात्समासग्रहणकृतनियमेन तद्धितान्तप्रयुक्तप्रातिपदिकसंज्ञाव्यावृत्तेरप्राप्त्या तदभावस्य प्रत्ययग्रहणपरिभाषाफलत्वेनोपन्यासो ऽङ्गसंज्ञासूत्रस्थः सङ्गच्छत एवेति बोध्यम् ।

ननु मास्तु समासग्रहणकृतनियमेन देवदत्तो गार्ग्येति समुदायस्य प्रातिपदिकसंज्ञायास्तद्धितान्तप्रयुक्ताया व्यावृत्तिस्तस्य तु सुतरामेव प्रातिपदिकसंज्ञा न प्राप्नोति प्रत्ययग्रहणपरिभाषाभावे तद्धितान्तत्वे ऽपि एतत्संज्ञेत्याद्यर्थवत्त्वाभावात् । देवदत्तो गार्ग्येति समुदायस्य चिकीर्षितप्रातिपदिकसंज्ञाफलभूतागामिनी विभक्तीतरगार्ग्यशब्दोत्तरसुविभक्तिसमभिव्याहारापेक्षयैव लोके ऽर्थविषयकबोधजनकत्वादेव देवदत्तो गार्ग्येति समुदायवृत्तितद्धितान्तत्वप्रयुक्तप्रातिपदिकसंज्ञाभावस्य प्रत्ययग्रहणपरिभाषापरत्वेन भाष्योपन्यासस्यासङ्गतत्वं स्यादिति चेन्न । कृत्तद्धितेति सूत्रस्यार्थवदन्तकृत्तद्धितान्तावित्याद्यर्थमभिप्रेत्य तादृशार्थेन प्रातिपदिकसंज्ञाभावस्य परिभाषाफलत्वेन भाष्योपन्यासस्त्वेनादोषात् । कृत्तद्धितेतिसूत्रस्यार्थवदन्तकृत्तद्धितान्तावित्यार्थस्वीकारे हि देवदत्तो गार्ग्येत्यादौ देवदत्तो गार्ग्येति समुदायघटकगार्ग्येत्यस्य या प्रातिपदिकसंज्ञा तत्फलभूता विभक्तिर्गार्ग्यशब्दोत्तरः सुप्तदितरो घटपटादिस्तत्समभिव्याहारानपेक्षया लोके ऽर्थविषयकबोधजनकत्वस्य सत्त्वेन गार्ग्येत्येतन्मात्रस्यैतत्संज्ञाफलभूतेत्याद्यर्थवत्त्वसत्त्वात्तद्धितान्तत्वस्य देवदत्तो गार्ग्येत्यस्य सुलभतया कृत्तद्धितान्तेति तद्धितत्वप्रयुक्तप्रातिपदिकसंज्ञाव्यावृत्तिः स्पष्टैवेति बोध्यम् । समासग्रहणकृतनियमेन हि पूर्वसूत्रप्राप्तप्रातिपदिकसंज्ञाया एव व्यावृत्तिः क्रियते न त्वन्येन प्राप्तस्यापीति तद्धितान्तत्वप्रयुक्त प्रातिपदिकसंज्ञाव्यावृत्तेः स्वतोऽप्राप्त्या निरुक्तशङ्कासमाधाने निष्फले इति न भ्रमितव्यम् । समासग्रहणकृतनियमेन तेन प्राप्त्यस्यापि परत्वाद्बाधसम्भवात् । अथ प्रत्ययग्रहणपरिभाषातः प्राक् पूर्वसूत्रेण राज्ञः पुरुष इत्यादौ विशिष्टस्य प्रत्ययान्तत्वात्प्रत्ययान्तपर्युदासेनाप्राप्तप्रातिपदिकसंज्ञाविधानार्थं समासग्रहणस्य चारितार्थ्यसम्भवेन तत्परिभाषाभावे नियमेन वारणस्य सुतरामेवासम्भवात् । अत एवाङ्गसंज्ञासूत्रभाष्ये प्रत्ययग्रहणपरिभाषाभावे इत्यादिना स एवार्थः स्पष्टतयोक्त इति चेत्सत्यम् । प्रत्ययग्रहणपरिभाषायाः प्रत्ययसामान्यग्रहणे प्रत्ययविशेषग्रहणे ऽपि प्रवृत्तिरिति सिद्धान्तः । एवञ्च प्रत्य-

यसामान्यग्रहणविषयिणी येयं परिभाषा तस्यास्सत्त्वे एव प्रत्ययो विशेषविषयिण्यास्तस्याः फलत्वेन तद्धि-
तान्तत्वात्प्रातिपादिकसंज्ञाभावस्य भाष्ये उपन्याससत्त्वेन तत्प्रागपि पूर्वसूत्रेणाविषयिण्यास्तस्या फलत्वेन
तद्धितान्तत्वात्प्रातिपदिकसंज्ञाभावस्य भाष्ये उपन्याससत्त्वेन तत्प्रागपि पूर्वसूत्रेण प्रत्ययान्तपर्युदासाप्राप्त्या
पूर्वसूत्रेण सर्वेषां समासोक्तानां प्रातिपदिकसंज्ञासिद्धे नियमस्यासौ न स्यात् । ननु देवदत्तो गार्ग्येत्यादौ
यथा देवदत्तो गार्ग्येति समुदायस्य समासग्रहणकृतनियमेन तद्धितान्तत्वप्रयुक्तप्रातिपदिकसंज्ञाया व्यावृ-
त्तिर्न स्यात्तथा देवदत्तेन कृतमित्यादौ देवदत्तेन कृतेत्यस्यापि समासग्रहणकृतनियमेन कृदन्तप्रयुक्तप्रातिप-
दिकसंज्ञाव्यावृत्तेरप्राप्त्या कृत्तद्धितेति कृदन्तप्रयुक्तप्रातिपदिकसंज्ञापत्तिर्दुर्वारा स्यात् । न च देवदत्तो
गार्ग्येति समुदायस्य तद्धितान्तत्वाभावादत्रापि प्रत्ययग्रहणपरिभाषया देवदत्तेन कृतमित्यत्र कृतेति समुदा-
यस्य नास्ति प्रातिपदिकसंज्ञापत्तिर्नित्यत्वादिति चेन्न । एतत्संज्ञाफलभूतविभक्त्यर्थान्वयितावच्छेदकीभूतया-
वद्रूपावच्छिन्नविशेष्यतानिरूपितप्रकारताप्रयोजकीभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबो-
धजनकत्वरूपस्वातन्त्र्येण प्रयोगार्हार्थवत्त्वाङ्गीकारेणादोषात् । तथा हि -नित्यसाकाङ्क्षस्थले नित्यसाकाङ्क्ष-
दार्थस्य तदंशे नित्यसाकाङ्क्षता तदर्थान्विते एव नित्यसाकाङ्क्षपदार्थे नित्यसाकाङ्क्षार्थकपदोत्तरसुविभक्त्यर्थ-
कत्वादेरन्वय इति सर्वसिद्धान्तः । यथा देवदत्तस्य गुरुकुलमित्यादौ किं निरूपितगुरुत्वमिति जिज्ञासायां
देवदत्तादिनिरूपितमित्यर्थे नित्यसाकाङ्क्षगुरुपदार्थगुरुत्वस्य देवदत्तादिपदार्थे नित्यसाकाङ्क्षत्वसत्त्वे तत्र
यदंशे नित्यसाकाङ्क्षता तदंशस्य तस्मिन्नेवान्वय इति व्युत्पत्त्या देवदत्तपदार्थेनान्वितो यो गुरुपदार्थस्तद्विशि-
ष्टगुरुपदार्थोत्तरसुविभक्त्यर्थैकत्वान्वयो भवतीति तद्रीत्या देवदत्तेन कृतमित्यादावपि कृतपदार्थस्य
देवदत्तपदार्थे नित्यसाकाङ्क्षत्वस्य सत्त्वाद्देवदत्तपदान्वित एव कृतपदार्थे कृतपदोत्तरस्वार्थैकत्वान्वय
सम्भव इति । एवञ्च देवदत्तेन कृतमित्यादौ देवदत्तेन कृतमिति समुदायस्य चिकीर्षिता या प्रातिपदिकसंज्ञा
तत्फलभूता विभक्तिरागामिनी तत्पदार्थान्वयितावच्छेदकं यावद्रूपं कृतविशिष्टदेवदत्तेति तद्रूपावच्छिन्नकृ-
न्निष्टविशेष्यतानिरूपितप्रकारताप्रयोजकविभक्तित्वस्य कृतपदोत्तरवर्तमानसुविभक्तेरसत्वेन तादृशविभक्ती-
तरो घञ्पदादिस्तत्समभिव्याहारानपेक्षया लोके ऽर्थविषयकबोधजनकत्वसत्त्वात्कृतेत्येतावन्मात्रस्य देवदत्तेन
कृतेतिसमुदायस्य वैतादृशैतत्संज्ञाफलभूतेत्यार्थवत्त्वस्य दुर्वारत्वम् । देवदत्तेन कृतमिति समुदाय-
स्य समासग्रहणकृतनियमेन कृदन्तत्वप्रयुक्तप्रातिपदिकसंज्ञाया वारणसम्भवात्, देवदत्तो गार्ग्येत्यादौ गार्ग्य-
पदार्थस्य देवदत्तपदार्थे नित्यसाकाङ्क्षत्वाभावात्तत्र गार्ग्यपदोत्तरस्वार्थैकत्वान्विते एव गार्ग्यपदार्थे देवदत्तपदा-
र्थस्याभेदेनान्वयः सम्भवति । एवञ्च देवदत्तो गार्ग्येति समुदायस्य चिकीर्षिता या प्रातिपदिकसंज्ञा तत्फल-
भूता विभक्तिरागामिनी तदर्थान्वयितावच्छेदकयावद्रूपं गार्ग्यत्वदेवदत्तत्वेति तद्रूपावच्छिन्नविशेष्यतानिरूपि-
तप्रकारताप्रयोजकविभक्तिरागामिन्येव न तु गार्ग्यपदोत्तरविद्यमानसुविभक्तिरपि, तस्यास्तु केवलगार्ग्यत्वा-
वच्छिन्नविशेष्यता निरूपितप्रकारताप्रयोजकत्वस्यैव सत्त्वेन गार्ग्यत्वदेवदत्तत्वेतदुभयरूपावच्छिन्नविशेष्यता-
निरूपितप्रकारताप्रयोजकत्वाभावादिति तादृशप्रकारताप्रयोजकागामिनी विभक्तीतरो गार्ग्यपदोत्तरसुरेव स-
म्पन्नस्तत्समभिव्याहारापेक्षयैव गार्ग्येत्येतावन्मात्रस्य देवदत्तो गार्ग्येति समुदायस्य लोकेऽर्थविषयकबोधज-
नकत्वसत्त्वेन तादृशस्वातन्त्र्येण प्रयोगार्हार्थवत्त्वाभावाद्देवदत्तो गार्ग्येति समुदायस्य समासकृतनियमेन तद्धि-
तान्तत्वप्रयुक्तप्रातिपदिकसंज्ञाया व्यावृत्यप्राप्त्या तदभावस्य प्रत्ययग्रहणपरिभाषायाः फलत्वेनोपन्यासोऽङ्ग-
सूत्रभाष्योक्तो ऽपि सङ्गच्छत इति न क्वाप्यनुपपत्तिरिति बोध्यम् । यथाश्रुतसूत्रोक्तनियमस्तु इति ।
यत्र संघाते पूर्वोभागः पदमित्यादिरूपास्त्वित्यर्थः । तत्र तदप्राप्त्येति । देवदत्तो गार्ग्येति समुदायस्य प्राति-
पदिकत्वाप्राप्त्येत्यर्थः । एतेनेति । पूर्वो भागः पदमित्यत्र पदशब्देन स्वातन्त्र्येण प्रयोगार्हार्थवद्गृह्यत इति
मदुक्तव्याख्यानेनेत्यर्थः। इत्यस्तामिति । वृषण्वसुरित्यादौ वृषणशब्दस्यभत्वाद्यविचारेण समासत्वव्यापक-
त्वस्य पदपूर्वावयकसमुदायेऽभावेऽपि स्वातन्त्र्येणप्रयोगार्हार्थवत् पूर्वावयकसमुदायेसत्वादितिभावः ।

---

**इत्याहेति** । वस्तुतस्तु-अङ्गसञ्ज्ञानिमित्तकस्याजन्ततदायव्यवहितोत्तरत्वविशिष्टस्यौङःशी स्यादित्येवार्थः ॥ **प्रतिपदोक्तत्वेनेति** । तदप्राप्तियोग्ये ऽचारितार्थ्यरूपबाधबीजस्य सम्बुद्धौचेत्यत्र सत्वादिति भावः । एतद्ग्रन्थलापनयैवैतद्बाधबीजकथनम् । वस्तुतस्त्वेतद्बाधबीजकल्पनेऽपि "हल्ङ्याब्" इति लोपे (कल्पने) प्रत्ययलक्षणेनैतदप्रवृत्तौ बाधकाभावान्न दोषः ।

**सर्वनाम्नो विहितस्येति** ॥ वस्तुतस्तु अङ्गाभिन्नं यत्सर्वनाम ततः परस्य ङितः स्याडागमश्च ह्रस्व इत्युच्यमाने 'मासपूर्वाय' इत्यादौ दोषाभावात् । विहितविशेषणे गौरवात् । तस्मादितिपरिभाषायां जागरूकायां दिग्योगलक्षणपञ्चम्यन्तं विहायान्यथा कल्पनायां मानाभावात् चिन्त्यमिदम् । **सकृद्गतिन्यायादिति** ॥ निरनुबन्धकपरिभाषाया "आमि सर्वनाम्नः" इत्याम्पदेन अस्यां स्थानिवद्भावेन ङित्वेनाग्रहणात् सुड् न भवतीत्यपि बोध्यम्॥ एवं "रमायां" बहुश्रेयस्याम्" इत्यादौ नुण्न भवतीत्यवध्येयम् । एवं च "आ-ण्या" इत्यत्र आण्नद्या इत्यनेनापि न दोषः । स्थानिवद्भावेन ङित्त्वात् । निरनुबन्धकपरिभषया अस्यामपि स्थानिवद्भावेन ङित्वात्तत्रत्याम्पदेनाग्रहणम् । ननु ये ऽप्राप्त्या अद्विधानसामर्थ्यादेव पररूपं न भवति, किन्तु वृद्धिरेवेत्युक्तलक्ष्यासिद्धेः । **अन्यत्र विस्तरइति** । शब्दरत्ने इत्यर्थः । **विशेष्यत्व इत्यर्थइति** ॥ पुरशब्दार्थनिष्ठविशेष्यताप्रयोजकत्वे इत्यर्थः । **तत्र मानमन्विष्यत इति** । केचित्वपुरीत्यस्मित्राष्टाध्यायीस्थ "अन्तरंबाहियोंग" इति सूत्रे पठनीये गणसूत्रपाठमेवात्र मानमित्याहुः॥ अपुरीत्यपुरीशब्दस्य विशेष्यताप्रयोजकत्वे सर्वनामसञ्ज्ञा न भवतीति लाघवात् इत्यन्तरस्यां नगर्यामित्यादौ स्याड् भवत्येवेति भावः ।

**ह्रस्वो न भवत्येवेति** । नचादन्तत्वादप स्यादिति वाच्यम् । ह्रस्वस्य बाहिरङ्गासिद्धत्वेन टापोऽप्राप्तेः । सन्निपातपरिभाषया टापःप्रातिसंभावाच्च । **फलभेदायेति** । "द्व्यक्षरंयदीति" प्रत्याख्यानपक्षे 'हे अक्क' इत्यादौ ह्रस्वः प्राप्नोति । डलकवतां ह्रस्वो न" इति वार्त्तिकमते ह्रस्वो न प्राप्नोति इति फलभेदवारणाय "असंयुक्त" इति वक्तव्यमिति भावः । **इति भाव इति** । वस्तुतस्तु क्वचित्परत्वात् क्वचित्पूर्वविप्रतिषेधेन 'पूर्वमेव जरस्' इति एत्वशीसुट्याडामां वारणाय "सम्बुद्धौच" "आङि चापः" "हृस्वनद्यापः" "याडाप" "ङेराम्" इत्यादिषु सर्वत्राकारप्रश्लेष आवश्यकः । यथापूर्वं जरस् तथा निर्जरशब्दे एव बोधाय परत्वात्तयोरिति । चिन्त्यमिदम्॥ पूर्वविप्रतिषेधेन जरसेव पूर्वं भवतीति जरसोऽवकाशः जरसौ जरस इति "जरायाः" इति सूत्रभाष्यतो लाभात् ॥ **निर्जरशब्दे उक्तमिति** ॥ यदत्र वक्तव्यं तदस्माभिस्तत्रैवोक्तमिति बोध्यम् । न च जरसि कृते अस्य स्थानिवद्भावेनाबन्तत्वेऽपि निर्दिश्यमानापोऽभावादेत्वं नैव प्राप्नोतीति तत्राकारप्रश्लेषो व्यर्थ इति वाच्यम् , प्राचीनमते निर्दिश्यमानपरिभाषाया वर्णग्रहणेऽप्रवृत्तेरित्यशयात् । वस्तुतस्तु "हे अतिखट्व" इत्यादौ एत्ववारणाय तत्रापि प्रश्लेष आवश्यक इति वाच्यम् । **फलभेदस्यैवाभावाच्चेति** । वस्तुतस्तु "धात्वन्तयकोस्तु नित्यम्" 'सुगायिका' इत्यादौ स्थानिवद्भावमन्तरा धात्वन्तयकारासम्भवेन प्रथमस्थानिवद्भावस्य झलाभावात् द्विवारं तदसंगत्यापत्त्या चिन्त्यमिदम् ॥ **आबन्तं यदङ्गमितीति** । आबन्ततदाद्यभिन्नं यदङ्गमित्यर्थः । **नाबन्तत्वामिति** । नाबन्ततदादित्वमित्यर्थः । **यच्चाबन्तामिति** । यच्चाबन्तं तदाहीत्यर्थः । **लौकिकमेवेति** । शास्त्रीयोपसर्जनत्वसमानाधिकरणालौकिकोपसर्जनमित्यर्थः । तेनैकदेशिसमासतत्प्रत्याख्यानयोर्न फलभेद इति चन्द्रिकायां विस्तरः । **निशायै इत्यादाविति** । इदमुपलक्षण बहुक्षमायै इत्यस्यापि । निश्धातोरिगुपधलक्षणे के टापि खट्वाशब्दतुल्ययोगक्षेमत्वात् । **आबन्तं यदङ्गमितीति** । आबन्ततदाद्यभिन्नं यदङ्गमित्यर्थः ।

**इत्याहुरिति** । परेतु "हे अतिखट्व" अतिखट्वेन 'अतिखट्वाय' 'अतिखट्वयोः' 'अतिखट्वानाम्' इत्यादौ विभक्तिनिमित्तककार्यत्वात्पूर्वमेव जरस् भवतीति निर्जरशब्दे परेत्वित्यादिना सिद्धान्तितत्वेन जरसा, जरसि, जरसोः, जरसाम्, इत्यादौ "सम्बुद्धौ च" "आङ्चियाः" "याडायः" "ङेराम्" इत्यत्रापि तत्तद्विधिवारणायाऽऽकारप्रश्लेष आवश्यकः । 'अतिखट्वाय" इत्यादौ आकारप्रश्लेषेऽपि याट्वारणाय 'स्त्रीप्रत्ययेच' इति परिभाषायाः उपसर्जनवाक्ये तदादिनियमसत्त्वेनाबान्ततदाद्यभिन्नं यदङ्गं ततः परस्य ङितो याडित्यवश्यं "याडापः" इत्यस्यार्थो वक्तव्यः । न चातिखट्वायेत्यादौ आकारस्य लाक्षणिकत्वान्न याडिति वाच्यम् । वर्णग्रहणे फलाभावेनैतत्परिभाषा न प्रवर्तते इतिसिद्धान्तात् । न च "औदिति" सूत्रे भाष्ये 'अगोभवत्" इत्यादौ प्रगृह्यसंज्ञामाशङ्क्य लक्षणप्रतिपदोक्तपरिभाषावारणरूपभाष्यविरोधो वर्णग्रहणे एतत्प्रवृत्तौ इति

वाच्यम् । तस्यैकदेशयुक्तित्वेनादोषात् । अन्यथाऽगोभवदित्यादौ दोषवारणाय एतदग्रे एव गौणामुख्यन्याय- स्य प्रवर्त्तितत्वात्तयैवात्रापि दोषवारणे एतद्भाष्यासंगतिः स्यात् । खट्वार्थे इत्यादौ याडुपपत्तये यस्य रूपस्य लक्षणप्रवृत्तिं विना न सम्भवस्तस्यैव लाक्षणिकस्यैतत्परिभाषाविषयत्वमिति वारणापेक्षया वर्णग्रहणे एत- दप्रवृत्तेरेव युक्तत्वात् ।

ननु पदाङ्गाधिकारपरिभाषया आबन्तं यत्तदादि-तदन्तं पदङ्गं तस्मात्परस्य ङितो याडित्यर्थेन "अति खट्वाय" इत्यादौ पुनरपि दोषो दुरुद्धर इति वाच्यम । यत्र धर्मः सिद्धस्तत्र प्रत्ययग्रहणपरिभाषया अदग्धदहन- न्यायेन तदादित्वरूपधर्ममात्रोपस्थित्या आवन्तं यदङ्गं आप् यस्माद्विहित तदादित्वविशिष्टं तस्मात्परस्यङितो याडित्यर्थेनादोषात् । नचैवमूना खट्वा बहुखट्वा तस्यै बहुखट्वायै इत्यादौ आबन्ततदादित्वाभावात् याट् न स्यादिति वाच्यम । स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारतावच्छेदकताप्रयोज कत्वरूपोपसर्जनत्वस्य प्रकृतेरभावात् अनुपसर्जनवाक्येन स्वान्ततदाद्यवधिकपूर्वत्वपदपर्याप्तप्रयोजकत्वनिरूपि- तप्रयोज्यतावद्विशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारतावच्छेदकताप्रयोजकत्वमुपसर्जनत्वमिति कल्पे वाक्यभेदा- भावेऽपि याड् सिद्धेः । न च द्विवारं स्थानिवत्सूत्रप्रवृत्तौ प्रमाणाभावात् प्रकृते आप्त्वमेव न स्यादिति वाच्यम् "धात्वन्तयकोस्तुनित्यम्" 'सुनयिका' सुपाकिका इत्यादौ द्विवारं स्थानिवत्त्वप्रवृत्तिमन्तरा धात्वन्तयकारास- म्भवेन द्विवारं स्थानिवद्भावदर्शनात् ॥ न चाबन्तं यत्तदादि तदन्तं यदङ्गमित्याभिप्रायेणातिखट्वादौ दो- षवारणाय प्रवृत्तम् "आप्ग्रहणेऽदीर्घः" इतिवार्तिकं व्याख्याय श्रुताकारस्मृतानुबन्धाभ्यां शङ्कां कृत्वा लाक्षणिकत्वेन समाधायाकारप्रश्लेषेण तत्प्रत्याख्यानकल्पे एतत्परिहारायोपायान्तरं भाष्ये नोक्तमिति वर्ण- ग्रहणे एतत्परिभाषाप्रवर्तत इति कल्प्यते इति वाच्यम् ! उपायन्तराकथनमात्रेणैतत्कल्पनायाः कर्तुमशक्य- त्वात् । स्त्रीप्रत्यये चानुपसर्जनेनेति परिभाषया दोषवारणेन तदकथनेन न्यूनत्वाभावाचम् ॥

न च खट्वाया अर्धम् "अर्धखट्वायाम्" इत्यादौ याट् न स्यात् निरुक्तोपसर्जनत्वस्य सत्वेनाबन्ततदा- दित्वाभावादिति वाच्यम् । स्त्रीप्रत्यये चेति परिभाषायां शास्त्रीयोपसर्जनत्वसमानाधिकरणलौकिकोपसर्ज- नत्वं स्वीक्रियत इत्येकविभक्तावाद्यन्तवचनं एकदेशिसमासविषयकोऽयमुपसर्जनसंज्ञानिषेध इतिवचनेन शास्त्रीयोपसर्जनत्वाभावात् तदादिनियमाभावेनादोषात् । अत एव एकदेशिसमासतत्प्रत्याख्यानयोर्न फल- भेदः । न च "स्थानिवत्" सूत्रस्थ-"याडापः" इति सूत्रस्थभाष्याभ्यां हल्ङ्याप् सूत्रस्थ-"याडाप"सूत्रस्थ- भाष्याभ्यां तयोरेवाकारप्रश्लेषो लभ्यते इति कथं सर्वत्राकारप्रश्लेषो लभ्यत इति वाच्यम् । जरसा जरसे जरसो जरसामित्यादौ दोषवारणाय सर्वत्र प्रश्लेषस्यावश्यकत्वेन प्रकृतभाष्ययोरुपलक्षणतया व्याख्येय- त्वात् । केवलं सम्बुद्धौ च" इत्याकारप्रश्लेषस्य मूलं चिन्त्यम् । हेअतिखट्वा इत्यादौ स्त्रीप्रत्ययेचेतिपरिभा- षया आबन्ततदादित्वस्याभावात् निर्दिश्यमानपरिभाषया वा निर्दिश्यमानत्वस्यापोऽभावात् वैतस्याप्रवृत्तेः। न च गङ्गायमुनेत्यादौ "ओङ् आपः" इति न प्राप्नोति, प्रकृते नवीनमते समुदायविशेष्यकबोधेन स्त्रीप्रत्ययस्योपसर्जत्वादाबन्ततदादित्वाभावादिति वाच्यम् । "गोस्त्रियोः" इतिसूत्रेऽत्र ह्रस्ववारणाय कृतस्य द्वन्द्वेनेतिवार्तिकस्येत्यादिनिषेधेऽपि तस्य वार्तिकस्य तात्पर्यमित्यदोषात् । क्वचिद्विशेष्यान्तरासत्वेऽपि अनु त्तरपदस्थस्येति ज्ञापकात् क्वचित्तदादीति धर्म्युपतिष्ठते इति तदन्तविधिद्वयेनादोषात् इतिसुधियो विभाव्यन्त्वित्याहुः ।

**फणादेरेवेति** । अर्थवद्ग्रहणपरिभाषया राजदीतौ इत्यस्यैव ग्रहणे तत्साहचर्य्यात् भ्राजिरपि फणा- दिरेव गृह्यते इति भावः । न च फणादिभ्राजधातुर्नैवास्ति इतिवाच्यम्, अन्यथा फणादेः 'भ्रेजतुः' अफ- णादेः भ्राजतुः । इतिरूपद्वयसिद्धेरफणादेश्च ऋकारानुबन्धकरणेन अभ्राजीत् फणादेश्च ऋत्वेन "नाग्लोऽपि" इति निषेधेन अभ्राजीदितिरूपद्वयसिद्धेः "भ्राजभासे" इति सूत्रे भ्राजिग्रहणमनर्थकं स्यादिति वाच्यम् । पेचु भ्रेजु यस्मिन् कर्मणि "आख्यातमाख्यातेन" इतिसमासे णिचि टिलोपे नङि चा पेचुर्भ्रेज्-णिच् ङिति इति स्थिते ह्रस्वविकल्पाय "भ्राजभास" इति सूत्रे भ्राजिग्रहणस्यावश्यकत्वात् । फणादौ भ्राजृ अन्यत्र भ्राज इति पाठेन "व्रश्च" इतिसूत्रे च राजृ इति पाठे विभ्राक् विभ्राग् इति रूपरूपसिद्धौ भ्राजेः पुनः पाठो अर्थवद्ग्रहणपरिभाषात्मक इति तत्र । विभ्राट् शब्दात्सिणचि टिलोपे विभ्र इतिस्थिते षलार्थे भ्राजिग्रह- णस्य व्रश्चेतिसूत्रे आवश्यकत्वादिति दिक् । **निर्देशेरिति** । "आदिरन्त्येन" इति बाधितसंज्ञासूत्रेषु हल्-

सन्ध्यप्रवृत्तिज्ञापनादिति भावः। **लिङ्गान्तरनिशिष्टार्थाभिधायकत्वेनेति**। स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वं-स्वावच्छिन्नमुख्यविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्व-स्वावच्छिन्नविशेष्यताप्रयोजकस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताप्रयोजकत्वैतत्त्रितयसम्बन्धेन प्रवृत्तिनिमित्ता या शक्तिः पर्याप्त्यधिकरणत्त्व-स्वज्ञानाधीनोपस्थितिप्रयोजक(त्व)शाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्याधिकरणत्त्व—एतदुभयसम्बन्धेन तादृशशक्तिविशिष्टत्वरूपानित्यस्त्रीत्वस्य "कटप्रुवे ब्राह्मण्यै" इत्यादौ अभावादिति भावः॥

**तद्विरुद्धस्वाश्रयकार्येऽप्रवृत्तेरिति**। चिन्त्यमिदम्। तदभाववत्तानिश्चयमुद्रया अतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावस्याधुरित्यादौ अत्वोत्तरं "विभाषा घ्राधेट्" इति लुगर्थं धेट्त्वस्यावश्यकत्वात्। तथाऽभावव्याप्यवत्तानिश्चयमुद्रया स्थानिवद्भावेनातिदिश्यमानधर्मत्वविरुद्धस्वाश्रयादन्तत्वप्रयुक्तं स्यात् इति झेर्जुसोऽदर्शनाच्च।

· **इत्याहुरिति**। परे तु सूत्रकृत्प्रवृत्तिनिमित्तविशिष्टत्त्वम् नित्यस्त्रीत्वम्। वैशिष्ट्यं च स्वविशिष्टशक्तिविशिष्टत्व, स्वावच्छिन्नस्त्रीत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारताकबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्याधिकरणत्व, एतदुभयसम्बन्धेन। शक्तौ वैशिष्ट्यं च-स्वावच्छिन्नविशेष्यताप्रयोजकत्व, स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वानिष्ठप्रकारताप्रयोजकत्व, स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताप्रयोजकत्वैतत्त्रितयसम्बन्धेन। शक्तिवैशिष्ट्यं च। स्वपर्याप्त्यधिकरणत्वं, स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वैतदुभयसम्बन्धेनाभिप्रैति। एतल्लक्षणं 'बहुश्रेयस्यै ब्राह्मणाय' 'कुमार्यै ब्राह्मणाय' इत्यादौ अतिव्याप्तमिति मत्वा प्रथमलिङ्गग्रहणमिति वदन् वार्तिककृत् प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वं नित्यस्त्रीत्वम् इत्याह। वैशिष्ट्यं च, स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वं स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वं स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताप्रयोजकत्वैतत्त्रितयसम्बन्धेन। शक्तिवैशिष्ट्यं स्वपर्याप्त्यधिकरणान्तत्वं स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्याधिकरणत्वैतदुभयसम्बन्धेनेत्यभिप्रैति।

**अवयवस्त्रीविषयत्वात्सिद्धमिति**। वार्तिकं प्रत्याचक्षाणो भाष्यकारश्च प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वं नित्यस्त्रीत्वम्। प्रवृत्तिनिमित्तवैशिष्ट्यं च—स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्व, स्वावच्छिन्नविशेष्यतानिरुपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्व, स्वावच्छिन्नविशेष्यतानिरुपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताप्रयोजकत्वैतत् त्रितयसम्बन्धेन। शक्तिवैशिष्ट्यं च स्वपर्याप्त्यधिकरणत्व, स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वैतदुभयसम्बन्धेनेत्यभिप्रैति।

**ङितिह्रस्वश्चेति**। अत्र "प्रथमलिङ्गग्रहणंच इति यद्बोधितं तदिह द्वेष्यं विजानीयात्" इतिभाष्यप्रामाण्येन सूत्रकृत्संमतं नित्यस्त्रीत्वं तदेवात्र संमतमिति बोध्यम्, अत्रेतिपदस्वारस्यात्। वामीत्यत्र "प्रथमलिङ्गग्रहणं चावयवस्त्रीविषयत्वात्सिद्धम्" इत्यादि 'यूस्त्र्याख्यौ" इत्यादिसूत्र इवात्रापि वर्तत्त इति लाभात् वार्तिककृत्संमतं भाष्यकृत्संमतं वा नित्यस्त्रीत्वामिति बोध्यम्। अत एव श्रीणाम् श्रियां ब्राह्मणानाम्। इत्यादौ वामीतिविकल्पो भवत्येव। अत एवोपक्रमे निषेधपरतया व्याख्यानं भाष्ये सङ्गच्छते। अत एव "ह्रस्वौ च इयङुवङौ च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेव नदीसंज्ञौ भवतो, न तु पुंवाचकादिति वक्तव्यं शकटयै अतिशकटयै ब्राह्मण्यै कुत्र मा भूत् शकटये ब्राह्मणाय, धेन्वै अतिधेन्वै ब्राह्मण्यै क्व मा भूत् धेनवे अतिधेनवे ब्राह्मणाय, श्रियै अतिश्रियै ब्राह्मण्यै, क्व मा भूत् श्रियेऽतिश्रिये ब्राह्मणाय भ्रुवै अतिभ्रुवै ब्राह्मण्यै, क्व मा भूत् भ्रुवे अतिभ्रुवे ब्राह्मणाय" इतिभाष्यं सङ्गच्छते।

अत्र प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेवेत्युत्या पूर्वोक्तं सूत्रकारसंमतं नित्यस्त्रीत्वं "ङितिह्रस्वश्च" इत्यत्र ग्राह्यमिति बोध्यते। अत्र षष्ठीबहुवचनोदाहरणदानेन यूस्त्र्याख्यावित्यत्रेव "वामी" इत्यत्रापि भाष्यादिसंमतं नित्यस्त्रीत्वं ग्राह्यमिति बोध्यम्। यत्तु भाष्ये दृश्यमानं श्रिये ब्राह्मणाय इत्यादि तु क्यजन्तात्क्विपि बोध्यमिति, तन्न। 'शकटये ब्राह्मणाय' 'धेनवे ब्राह्मणाय' इत्यादौ क्यजन्तात्क्विपि तुगापत्तेः। यदपि, यद्यपि पदार्थमात्रे शास्त्रीयं लिङ्गत्रयमस्ति तथापि व्यक्तिवस्तुपदार्थादिबोध्यत्वकाले तल्लिङ्गोपजननेऽपि स्त्रीपदादिबोध्यत्वदशायां मानाभावादिति तदपि न कस्याचित् प्रेयस्य पुष्टिकामदशायां तस्य पुंस्त्वेन बहुवारं बोधे

पुष्ट्यापत्तेः। एवं यस्य द्वेषादिना अपुष्ट्यादिकामना तस्य स्त्रीत्वेन बोधे अपुष्टिप्रसङ्गात्। एवं यस्य साम्यकामना तस्य नपुंसकत्वेन बहुवारं बोधे साम्यप्रसङ्गाच्च। पुंस्त्वादिशास्त्रीयलिङ्गस्य सत्त्वात् उपचयादिरूपत्वात्। न च "चञ्चा ब्राह्मणान्" इत्यादौ युक्तवद्भावेन स्त्रीलिङ्गत्वेऽपि स्वाश्रयप्रयुक्तपुंस्त्वप्रयुक्त-नकारादेशापत्तिरिति वाच्यम्। युक्तवद्भावेन प्रकृतौ यल्लिङ्गं यद्वचनप्रयुक्तकार्यं भवति, पुल्लिङ्गे यद्वचन-प्रयुक्तं च कार्यं न भवति तदुभयोर्भावाभावयोः "अचः परस्मिन्" इत्यनेनैवातिदेशेनादोषात्। न च श्रिये ब्राह्मणायेत्यादौ युक्तवद्भावेन स्त्रियामङ्गस्य वर्तनात् विकल्पापत्तिरिति वाच्यम्। पूर्वोक्तभाष्यकृत्सं-मतनित्यस्त्रीत्वस्य प्रकृतावभावेन युक्तवद्भावेन प्रकृते कनलुवन्ते अतिदेष्टुमशक्यतात्। एतेन तत्र विक-ल्पो भविष्यत्येवेत्यपास्तम्। पूर्वोक्तभाष्यविरोधाच्च। तथाच "ङितिह्रस्वश्च" इत्यत्र पूर्वोक्तसूत्रकृत्संम-तं नित्यस्त्रीत्वमेव ग्राह्यमिति सुधियो विभावयन्त्वित्याहुः।

**वामीत्यत्रापि बोध्यमिति**। चिन्त्यमिदम्। प्रथमलिङ्गग्रहणं चेति यच्चोदितं तदत्र द्रष्ट्यं विज्ञा-नीयादित्यत्र च पदस्वारस्य भंगापत्तेः। "ह्रस्वौ च इयङुवङ्स्थानौ प्राक् च प्रवृत्तौ नदीसंज्ञौ भवतः, न तु पुंवाचकात्'' इति वार्त्तिकावसरे षष्ठीबहुवचनोदाहरणदानाच्च। एतेन "वामि ह्रस्वश्च" इत्येव सिद्धे वामि, ङितिह्रस्वश्च" इति पृथग्योगकरणात सन्निपातपरिभाषा ज्ञाप्यते इत्यपास्तम्। ङितिह्रस्वश्चेत्यत्र प्रथमलि-ङ्गग्रहणं च" इतिवार्त्तिकाभावेन वामीत्यत्र च तद्वार्तिकसत्त्वेन च कथमप्येकयोगस्य कर्तुमशक्यत्वात्। अत एव वामि ह्रस्वश्चेति सूत्रितम्। आबिति टा इत्यारभ्य सुपः पकारेण प्रत्याहार इति दिक्।

**अनित्यत्वादिति**। सोऽचि लोपेचेत्यादिनिर्देशेन सन्धिकार्ये सन्निपातपरिभाषा न प्रवर्त्तत इति भावः। एतेनार्थकृतबहिरङ्गत्वस्य स्वीकारे "तिसृणाम्" इत्यादौ स्त्रीत्वरूपार्थनिमित्तकत्वेन तिस्रादेशस्य सि-द्धत्वात् पूर्वं त्रयादेशे नुटि दीर्घे च लक्ष्येलक्षणस्येतिन्यायेन पुनर्दीर्घप्रवृत्या "न तिसृच"इतिनिषेधवैयर्थ्या-पत्तेरित्यर्थः। **त्रयादेश इति**। इदमुपलक्षणं नुट्दीर्घयोरपि। **ऋकारान्तोत्तरपदत्वाभावादिति**। "त्रिचतस्र" इत्यत्र नदीसाहचर्येणालौकिकप्रक्रियावाक्ये ऋदन्तोत्तरपदकसमासे एव कप्प्रवृत्तेः। अन्तर-ङ्गपरिभाषयाऽन्तरङ्गे कार्ये कर्त्तव्ये विभक्तिनिमित्तकत्वेन बहिरङ्गत्वेन तिस्रादेशस्यासिद्धत्वाच्च। एतेन "कुण्डोध्नी" इत्यत्र कबापादनपरभाष्यविरोधात्समासार्थालौकिकविग्रहवाक्ये समासत्वाभावारोपेण नेदं चिन्त्यमित्यपास्तम्। समासार्थालौकिकविग्रहवाक्ये एव कप्प्रवर्तते इत्युक्त्या "बहुकुमारीका" इत्यादौ "गोस्त्रियोः" इतिह्रस्वो न। न च बहु जस् कुमारी जस् इत्यस्यां दशायां परत्वात्कपि स्त्रीप्रत्ययान्तत्वा-त्प्रातिपदिकत्वाभावाद्ध्रस्वो न भवत्येवेति वाच्यम्। समासान्ते जाते यदागमपरिभाषया विशिष्टे स्त्रीप्रत्यया-न्ततदादित्वस्य प्रातिपदिकत्वस्य च सत्त्वेन निर्दिश्यमानपरिभाषया ह्रस्वस्य प्राप्तेर्दुर्वारत्वात्।

**फलितमिति**। न च प्रधी इत्यत्र धीरूपेऽङ्गे इयसिद्धेः क्वचिद्दृष्टत्त्वेन पुनरपि दोषस्तदवस्थ एवेति चेन्न। अजादिविभक्तिपरत्वप्रकारकसम्भावनाप्रयोज्ये यन्निमित्तेऽङ्गे इयङुवङोः प्रवृत्तिसम्भावना तस्य तदवयवस्य च नदीसंज्ञा नेत्यर्थेनादोषात्। यदङ्गयदवयवयोर्नदीसंज्ञानिषेधः चिकीर्षितः तदुत्तरप्रत्यये अजादित्वं सम्भाव्य यस्मिन्नङ्गे इयङुवङौ सम्भाव्यते तस्य तदवयवस्य च नदीसंज्ञा नेति फलितम्।

**आमीतिच्छेदइति**। नत्वमीति, फलाभावादिति भावः। **ऋकारसाहचर्येणेति**। बहिरङ्गस्य तिस्रादेरसिद्धत्वेन ऋकारस्य कप्विषये तादृशस्यैव सम्भवात्साहचर्येणेत्यर्थः।

**कैयटोक्तनित्यस्त्रीत्वइति**। स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्व, स्वावच्छिन्नविशेष्यताप्रयोजक-स्त्रीत्वनिष्ठप्रकारताप्रयोज्यत्व, स्वावच्छिन्नविशेष्यताप्रयोजकस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताप्रयोजकत्वैतत्त्रितयस-म्बन्धेन प्रवृत्तिनिमित्तविशिष्टा या शक्तिः, पर्याप्त्यधिकरणत्व स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनक-त्वप्रकारकतात्पर्यविशेष्यत्तापर्याप्त्यधिकरणत्वैतदुभयसम्बन्धेन तादृशप्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्ट-त्वरूपनित्यस्त्रीत्वेत्यर्थः।

**नित्यस्त्रीत्वाभावादिति**। निरुक्तनित्यस्त्रीत्वाभावादित्यर्थः। **स्त्रियां यत्प्राप्नोतीति**। "न षट्स्व-स्रादिभ्यः" इत्यत्र "टाबृचि" इत्यतष्टाप्, "ऋन्नेभ्योङीप्" इत्यतो ङीप्, चानुवर्त्य उभयनिषेधेन डाबुभाभ्या-मित्यत्र "नषट्स्वस्रादिभ्यः" इत्यनुवृत्त्या डापो निषेधाच्चेति भावः। **प्रसिद्धत्वाच्चेति**। अवयवशक्तित्र-

हाधीनशक्तिग्रहाधीनोपास्थितिविषयार्थे एव तात्पर्यकल्पनं युक्तमिति, एतन्मूलकावयवप्रसिद्धः समुदायप्रसिद्धिर्बलीयसीति परिभाषया इत्यर्थः ।

इत्यजन्ताः स्त्रीलिङ्गाः ॥

---

**येननाप्राप्तिन्यायादिति** । स्वमोर्नपुंसकादित्येतत्प्राप्तियोग्येऽचारितार्थ्याभावाविशिष्टकृते चारितार्थ्याभावविशिष्टस्वमोर्नपुंसकादित्येतत्प्रवृत्तिप्रयोज्यताऽतोऽमितिशास्त्रवैयर्थ्यसम्भावनारूपबाधबीजस्यातोमितिशास्त्रे सत्त्वादिति भावः । एतन्न्यायाविषये चातोऽमिति एतत्प्रवृत्तियोग्यतातिरिक्तत्वेनातोमितिशास्त्रघटितातिरिक्तत्वेन च स्वमोर्नपुंसकादित्यत्र संकोचो भवतीत्यतोऽमिति एतत्प्रवृत्तेः प्राक् तत्प्रवृत्यन्तरे च ज्ञानमित्यादौ स्वमोर्नपुंसकादिति लुग् न भवतीति बोध्यम् । **न तु मिति इति** । अजहितकेन हल्त्वादेशस्यास्मिन् शास्त्रेऽदर्शनादिति भावः । **वारयोत्विति** । वस्तुतस्तु सुलुनीत्यादौ नुमप्रवृत्तये सन्निपातपरिभाषा अनित्येत्यस्यावश्यकत्वेन सुल्वित्यादौ लुगापत्त्या ह्रस्वो नपुंसकेत्यत्र सामान्यतः सन्निपातपरिभाषाप्रयोज्यः संकोचो नास्तीति वक्तुमशक्यत्वेन सङ्कुचितसंकोचस्यावश्यमङ्गीकर्तव्यत्वेनातोमित्यत्र गुणात्संबुद्धेरित्येव कर्तव्ये "एङ् ह्रस्वात्" इति करणेन, कष्टायेतिनिर्देशेन च सन्निपातपरिभाषाया अनित्यत्वस्यावश्यकत्वेनातोऽमित्यभ्यनुज्ञावाक्ये स्वप्रवृत्युत्तरकालिकप्रवृत्तिमदेङ्ह्रस्वादित्येतदतिरिक्तस्वोपजीव्यविघातकातिरिक्तेन शास्त्रेण यस्य साधुत्वं न बोध्यते तदपि साध्वित्यवश्यं वक्तव्यम् । इतिं । (छेदे) । **ज्ञानमितिम् इति** त्यादौ "सुपि च" इति दीर्घो दुर्वार इति, प्रकृते सन्निपातपरिभाषया दीर्घकरणं भवतीति तु नारुचितः सूचिताम्" ।

अन्ये तु='सुपि च' इत्यत्र विघातकशास्त्रे एव कष्टाय इति निर्देशेन गुणात्संबुद्धेरित्येव वक्तव्ये, एङ् ह्रस्वग्रहणेन च "ङेर्यः" इत्येतदतिरिक्तस्वोपजीव्यविघातकत्वाभावात् दीर्घो भवतीत्यतोमित्येतदतिरिक्तस्वोपजीव्यविघातकत्वाभाववान् लोपो भवतीत्येङ्ह्रस्वादित्यत्र संकोचेन ज्ञानमित्यादौ सन्निपातपरिभाषया न दीर्घः । न वा सन्निपातपरिभाषया ज्ञानेत्यादौ सम्बुद्धिलोपानापत्तिः । तथा च 'म्' इतिछेदे न कोपि दोषः, न वा "एङः ह्रस्वात्" इत्यत्राङ्गाक्षेपवैयाधिकरण्यान्वयविरोधश्चेति ।

**व्याख्यानादिति** । जस् साहचर्यादिति भावः । **बलवत्त्वादिति** । "श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्" इतिपरिभाषया इति भावः । **कैय्यट इति** । अत्रारुचिबीजं तु हलनुबन्धात्प्रागचो श्रच्रूपस्य वाऽनुबन्धस्य सर्वत्र दर्शनेन प्रकृतेऽपि अकारानुबन्धसहितादिति पाठः सम्यगिति ।

**कतरादिभ्योविहितोय इति** ॥ इतरप्रत्ययान्ततदादि—डतमप्रत्ययान्ततदादि —अन्यान्यतर–इतरेत्येतेभ्यो विहितयोः स्वमोरङ्गाभिन्नानि यानि डतरन्ततदादि, डतमान्ततदादि, अन्य-अन्यतर–इत्येतानि, एभ्यः परयोः स्वमोरद्ड् इति वार्थ इति भावः । एतादृशार्थकरणस्य फलमाह—**परमकतरं कुलमित्यादौ नाड् इति** ।

**इत्याहुरिति**। परेतु संज्ञोपसर्जनेति प्रतिषेधकल्पे सर्वस्मै, परमसर्वस्मै, कतरत्, परमकतरत्, इतिरुपाणिभवन्ति। तत्प्रत्याख्यानेऽपि फलैक्याय तथैव रूपाणि भवन्तीति वक्तव्यम्। त्वद्रीत्याऽङ्गाधिकारे यदुच्यते इति प्रत्याख्यानकल्पे च "सर्वादीनीति" सूत्रे यदि तदन्तविधिरस्ति तदा अतिसर्वाय, अतितत्, अतिकतरम्, इत्यादौ दोषो दुरुद्धरः स्यात् । यदि तदन्तविधिर्नास्ति तदा परमसर्वे परमसर्वस्मै परमसर्वस्मात् परमसर्वेषाम् परमसर्वस्मिन् परमकतरत् परमसह परमसर्वत्र इत्यादिरूपाणि भवन्तीति । गृह्यमाणाविभक्तेरित्यस्य गृह्यमाणार्थगतविभक्तौ परतः इत्यस्या गृह्यमाणार्थगतसंख्याभिधायिविभक्तेश्च तत्कार्याणि भवन्तीत्युपलक्षणतया निरुक्तभाष्यस्यावश्यं व्याख्येयत्वेन परमकतरमित्येव भवति, न तु परमकतरदित्युक्तिः साहसमात्रमेव । "अदड्डतरादिभ्यः" इत्यस्य डतरान्ततदादि, डतमान्ततदादि अन्यान्यतर इत्येतदर्थगतसंख्याभिधायिनौ यौ तदव्यवहितोत्तरौ यौ स्वमौ तयोरद्ड् इति, एवं "सप्तम्याश्चल्" इत्यादेः सर्वनामार्थगतसंख्याभिधायिनीयां सप्तमीसर्वनामोत्तराः तदन्ततदादेश्च त्रादिर्भवतीति अतिसर्वं च अतिकतरम्, इत्यादौ कुत्रापि प्रत्याख्यानकल्पे न दोष इतिप्राहुः ॥ । **न दोष इति** ।

**निर्जरशब्दे उक्तमिति** । अत्रयद्वक्तव्यम् तदस्माभिस्तत्रैवोक्तम् इति बोध्य ।

अनन्त्यविकार इति परिभाषास्वीकारेऽपि "सान्तमहतः" इत्यत्र 'सर्वनामस्थाने' इत्यस्य सान्तसंयोग-विशेषणत्वाभावेऽपि च निर्दिश्यमानपरिभाषयैव 'हंसाशिरांसि' इत्यादौ हंसशब्दसम्बन्धिसान्तसंयोगे षष्ठी-प्रकृतिप्रयोज्यशाब्दबोधीयविषयताश्रयसमभिव्याहृतवर्णाघटितत्वरूपानिर्दिश्यमानत्वाभावात् न दोष इत्यपि च बोध्यम् ॥

सत्त्वप्रधानस्येत्यर्थकमिति । न च वारिणीत्यादौ ह्रस्ववारणाय प्रातिपदिकग्रहणं सूत्रे चरितार्थम् । वारिणीत्यादौ श्यादेशे इकारोच्चारणसामर्थ्यादेव न दोष इति यद्यपि वक्तुं शक्यते, तथापि वारिणा, वारिणे, इत्यादौ ह्रस्ववारणाय प्रातिपदिकग्रहणं चरितार्थमिति वाच्यम् । अर्थवत्सूत्रात्प्रातिपदिकग्रहणमनु-वर्त्य षष्ठ्या विपरिणामेनोक्तदोषवारणात् प्रातिपदिकग्रहणवैयर्थ्यस्य सत्त्वात् । "ह्रस्वो नपुंसके" इत्यस्य नपुंसकत्वशक्तिपर्य्याप्त्यधिकरणत्वस्याजन्तस्य ह्रस्वो भवतीत्यर्थेन निरुक्तदोषवारणे प्रातिपदिकग्रहणं व्य-र्थमिति न युक्तम् । वैयाकरणमते सुबन्तपदे शक्तिपर्याप्त्यधिकरणत्वसत्त्वेनोक्तदोषवारणस्य कर्तुमशक्य-त्वात् । न च प्रातिपदिकग्रहणेऽनुवर्तमाने पुनः प्रातिपदिकग्रहणात् अनतिदिष्टप्रातिपदिकस्यैव ग्रहण-मिति कैयटरीत्या "सप्तम्यधिकरणे च" इति निर्देशात् विभक्त्येकादेशो नान्तवदिति दीक्षितरीत्या काण्डे इत्यादौ दोषाभावात् सत्त्वप्रधानस्यैव ह्रस्वो भवतीति निष्फलमिति वाच्यम् । दोषाभूतमह इत्यादौ कैय-टदीक्षितयोर्मते ह्रस्वस्य दुर्वारतया तत्र दोषवारणाय सत्त्वप्रधानस्यैव ह्रस्वो भवतीत्यवश्यं वक्तव्यत्वात् ।

सत्त्वप्रधानस्य इत्यत्र सत्त्वपदेन लिङ्गान्वयितावच्छेदकं यद्रूपं तद्रूपपुरस्कारेण बुध्यमानं विवक्षितम् । प्रधानत्वं च संसर्गविशेषवृत्तिनिरवच्छिन्नविशेषणवृत्तिविशेष्यतासंसर्गताव्यापकीभूतः स्वरूपसम्बन्ध-विशेषः । तत्त्वञ्च यत्किञ्चित्प्रधानतानिरूपिताप्रधानत्वासमानाधिकरणलिङ्गान्वयितावच्छेदकरूपावच्छि-न्नप्रधानताप्रयोजकत्वम् । काण्डे इत्यादौ सप्तम्यन्तसंसर्गनिष्ठप्रधानतानिरूपिताप्रधानत्वसामानाधिकर-ण्यमेव लिङ्गान्वयितावच्छेदकरूपकारणत्वावच्छिन्नप्रधानतायां सत्त्वान्नोक्तसत्त्वप्रधानत्वम् ।

स्यादेतत्—श्रीपत्पुत्र इत्यादौ ह्रस्वो न स्यात् । लिङ्गान्वयितावच्छेदकरूपश्रीकर्मकपालनकर्तृत्वावच्छि-न्नप्रधानतायां जन्यजनकभावसंसर्गनिष्ठप्रकारतानिरूपितप्रधानतासामानाधिकरण्यस्य सत्त्वात् । एवं श्रीपं कुलम् सुलुकुलमित्यादौ ह्रस्वो न स्यात् इति चन्मैवम् । यस्य ह्रस्वश्चिकीर्षितः तत्पर्याप्तप्रयोजकता-निरूपितप्रयोज्यतावती या प्रधानता तादृशप्रधानतानिरूपिताप्रधानत्वासमानाधिकरणा या, यस्य ह्र-स्वश्चिकीर्षितस्तत्पर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावल्लिङ्गान्वयितावच्छेदकरूपावच्छिन्नप्रधानता, ताद-शप्रधानताप्रयोजकतापर्याप्त्यधिकरणत्वम्—सत्त्वप्रधानत्वमिति परिष्कारेणादोषात् । 'श्रीपपुत्रः' 'श्रीपं कुलम्' 'सुलुकुलम्' इत्यादौ संसर्गनिष्ठप्रधानताप्रयोजकतापर्याप्त्यधिकरणत्वस्य विनिगमनाविरहेणोप-स्थापकशक्तेरनुभाविकशक्तेश्च समावेशे वाक्ये च कल्पनेन प्रकृते सत्त्वप्रधानत्वस्याव्याहतत्वात् । न च 'श्रीपपुत्रः' इत्यादौ समासात्प्रागेवान्तरङ्गत्वाद्ध्रस्वः स्यात्, इत्ययं प्रयासो विफलः, ? पदावधिकान्वाख्यानेन च श्रीपकुलमित्यादौ दोषाभावाच्चेति वाच्यम् । श्रीपपुत्र इत्यादौ लुको निरुक्तसत्त्वप्रधानत्वाभावेन लुक्यन्तर-ङ्गनिमित्तकत्वस्य सत्त्वादन्तरङ्गानपीति परिभाषया पूर्वं ह्रस्वाप्राप्त्या समासोत्तरे च पूर्वोक्तसत्त्वप्रधानत्वस्या-भावेनैतादृशपरिष्कारे त्वस्यावश्यकत्वात् ।

ननु यः शिष्यते स लुप्यमानार्थाभिधायीतिन्यायेन सुलु कुलम् , श्रीपं कुलमित्यादौ संसर्गनिष्ठप्रकार-ताप्रयोजकतापर्याप्तेः श्रीपपुत्रः, सुलुकुलमित्यत्र च सत्त्वात् पुनरप्युक्तसत्त्वप्रधानत्वस्याभावात् तद्दोषतादव-स्थ्यमिति वाच्यम् । यस्य ह्रस्वश्चिकीर्षितः तत्पर्याप्तप्रयोजकतानिरुपितप्रयोज्यतावदुपस्थितीयप्रधानतानि-रूपिताप्रधानत्वासामानाधिकरण्यतया यस्य ह्रस्वश्चिकीर्षितस्तत्पर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावल्लिङ्गान्व-यितावच्छेदकरूपावच्छिन्नोपस्थितीयप्रधानता तादृशप्रधानताप्रयोजकत्वम्—सत्त्वप्रधानत्वमिति परिष्कारे-णादोषात् । नन्वेवमपि काण्डावित्यादौ काण्डवृत्तिनिरूक्तसत्त्वप्रधानत्वं पूर्वान्तवद्भावेनैकादेशविशिष्टेऽति-देशाद्ध्रस्वोदुर्वार इति वाच्यम् । प्रातिपदिकग्रहणसामर्थ्येन सत्त्वप्रधानत्वस्य पूर्वान्तवद्भावेनातिदेशो न भव-तीति कल्पनेनादोषात् । एतेनाशब्दात् तस्येदमित्याणि ए कुलेत्यादौ ह्रस्वो दुर्वार इत्यपास्तम् । अपरनिमि-त्तके ह्रस्वे कर्तव्ये बहिरङ्गत्वेनैवादेशस्यासिद्धत्वाच्च ।

अन्येतु—स्वनिष्ठसंसर्गताकशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणघटितत्व, स्वाव-

च्छिन्नप्रकारतानिरूपितविशेष्यताकशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणघटितत्व,, तादृशपर्याप्त्यधिकरणेतराघटितत्व, एतत्त्रितयसम्बन्धावच्छिन्नप्रतियोगिताकसंसर्गाभाववत्वमेव सत्त्वप्रधानत्वम् काण्डे इत्यादौ निरुक्तसम्बन्धत्रयस्य सत्त्वेन तादृशाभाव इति न तत्र दोषः। तत्र प्रथमसम्बन्धानुपादाने 'श्रीपपुत्रः' इत्यादौ ह्रस्वानापत्तिः।

**केचित्तु**—नपुंसके विद्यमानत्वं स्वनिरूपितशक्तिविशिष्टत्वम्। वैशिष्ट्यं च स्वपर्याप्त्यधिकरणत्व, स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्व, एतदुभयसम्बन्धेन काण्डे इत्यादौ च निरुक्तोभयसम्बन्धेन वैशिष्ट्याभावान्न दोषः। अतएवात्रत्यं प्रातिपदिकग्रहणं प्रत्याख्यातमित्याहुः।

**चिन्त्यप्रयोजनमिति**। वारिशब्दादाचारक्विबन्तात् यङ् लुकि च तस्मात्कृजादौ तुमर्थे विभक्तावित्यावश्यकमिति केचित्। वारिशब्दादाचारक्विबन्ताद्भावे विधिलिङि वारि इसि छेति स्थिते तुमर्थे सुपीति विहाय विभक्तावित्युक्तामिति परे। तृतीयादिषु—यस्मिन् प्रवृत्तिनिमित्तपुंस्त्वं स्वान्वयितावच्छेदकं तदेव यत्र नपुंसकस्यान्वयितावच्छेदकं भवति तद्भाषितपुंस्कमित्यर्थः। पीलुशब्दे च वृक्षत्वव्याप्यजातिः पुंस्त्वस्यान्वयितावच्छेदकं फले त्वव्याप्यजातिश्च नपुंसकस्यान्वयितावच्छेदकमिति न तस्य भाषितपुंस्कत्वमिति भावः।

**परेतु**। भाषितः पुमान् यया शक्त्या भाषिपुंस्कं यस्यास्तीति तद्भाषितपुंस्कमिति अर्शाद्यजिति तद्भावः। तत्त्वं च—प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वम्। शक्तौ प्रवृत्तिनिमित्तवैशिष्ट्यं च। स्वावच्छिन्नविशेष्यतानिरूपितपुंस्त्वनिष्ठप्रकारताप्रयोजकत्व, स्वावच्छिन्नविशेष्यतानिरूपितनपुंसकत्वनिष्ठप्रकारताप्रयोजकत्वोभयसम्बन्धेन। शक्तिवैशिष्ट्यं च— स्वपर्याप्त्याधिकरणत्व, स्वज्ञानाधीनोपस्थिति प्रयोज्यशब्दबोधजनकत्व, स्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्याधिकरणत्व एतत्त्रितयसम्बन्धेन। पीलुशब्दे च यदि वृक्षत्वव्याप्यजातिरूपं प्रवृत्तिनिमित्तं ध्रियते तर्हि स्वावच्छिन्नविशेष्यतानिरूपितपुंस्त्वनिष्ठप्रकारताप्रयोजकत्वस्य तदवच्छिन्ननिरूपितशक्तौ सत्त्वेऽपि स्वावच्छिन्नविशेष्यतानिरूपितनपुंसकत्वनिष्ठप्रकारताप्रयोजकत्वस्याभावात्। यदि फलत्वव्याप्यजातिरूपं प्रवृत्तिनिमित्तं ध्रियते तर्हि तदवच्छिन्ननिरूपितशक्तौ स्वावच्छिन्नविशेष्यतानिरूपितपुंस्त्वनिष्ठप्रकारताप्रयोजकत्वस्याभावान्न दोष इत्याहुः।

**ज्ञापनार्थमिति**। स्वरूपमित्यत्र रूपपदेनोदात्तत्वानुदात्तत्वस्वरितत्वानुनासिकत्वनिरनुनासिकत्वातिरिक्तश्रावणप्रत्यक्षविषयतावच्छिन्नविषयतावच्छेदकधर्मावच्छिन्नस्य च ग्रहणमिति ज्ञापनार्थमिति भावः। **विवक्षार्थमिति**। न च हन्धातोरेकाचकत्वे आद्युदात्तो भवत्यन्तोदात्तोऽपि भवतीति स्थान्यनुरूपे गुणे स्वरे उच्चारणीयेत्यसंगतमिति वाच्यम्। "हनोवध" इत्यत्र "फिष्"इत्यनेन शास्त्रानुगुणेऽन्तोदात्ते वधादेशे उच्चारणीये आद्युदात्तोच्चारणस्य विवक्षितत्वात्। स्थानिनो हन आद्युदात्तत्वेऽपि धातोरित्यनेनान्तोदात्तत्वरूपेण साधुत्वबोधनात् तेनैवरूपेणान्तोदात्तत्वे पठनीये आद्युदात्तोच्चारणस्य विवक्षितत्वाच। हन्धातोरनुदात्तोपदेशत्वेन सर्वानुदात्ते वधादेशे पठनीये आद्युदात्तोच्चारणस्याविवक्षितत्वादिति दिक्॥

**गृह्यमाणस्यैव विशेषणमिति**। श्रुतानुमितपरिभाषया इति भावः। **एकप्रवृत्तिनिमित्तत्वादिति**। पुंस्त्वनपुंसकत्वयोः शोभनज्ञानवत्त्वस्यैवान्वयितावच्छेदकत्वादिति भावः। **दिगिति**। दिगर्थस्तु "माध्वीर्गावो भवन्तु नः" इतिमन्त्रे मधुशब्दस्य माधुर्यमेवार्थ इति मधुशब्दस्य पयोवाचित्वे न मानमिति दिक्। इत्यस्याभावे इति। न च "तृज्वत्क्रोष्टुः" इत्यादौ निर्दिश्यमानपरिभाषया अप्रवृत्तौ परमक्रोष्ट्रेत्यादौ परमक्रोष्टुशब्दस्य स्थाने तृजन्ततदादिरूपातिदेशापत्तिरिति बोध्यम्। अनुत्तरपदस्थस्येति ज्ञापनेन क्वचित्तदादिविधेरप्रवृत्त्या परमक्रोष्टु इत्यस्य स्थाने "स्थानेऽन्तरतमः" परिभाषया परमक्रोष्ट्रेति तृजन्तादेशो भवतीति अदोषात्। यद्वा क्रोष्टुरिति षष्ठ्यन्तमेव तृज्वदिति मतुबन्तम्। तथा च क्रोष्टुशब्दस्य स्थाने तृज्वानादेशो भवतीत्यर्थ इति षष्ठ्याः सत्त्वेन निर्दिश्यमानपरिभाषयैव दोषवारणादिति। न च तृजन्तक्रोष्टुशब्दस्य कथं क्रोष्टुरिति षष्ठ्यन्तं रूपं स्यादिति वाच्यम्। प्रकृतिवदनुकरणमिति परिभाषया अनेनैव तृज्वद्भावेन घोर्ङितीतिवन्निरुक्तरूपसिद्धेरिति दिक्॥

**एचइक्**। **निर्धारणे सप्तमीति**। यथा नागेशमते नृणां द्विजः श्रेष्ठः इत्यादौ नृशब्दार्थस्य स्वघट-

कत्व—स्वघटकद्विजेतरयावदवृत्तिश्रिष्टयवृत्तित्व, इत्युभयसम्बन्धेन यथा वाऽस्मन्मते–स्वपदार्थस्य स्वघटकवृत्तित्व स्वघटकद्विजेतरयावदवृत्तित्वोभयसम्बन्धेन श्रेष्टयेऽन्वयस्तथा प्रकृतेऽपि स्वघटकत्व, स्वघटकवृत्तैचस्थानिकत्ववत्त्वोभयसम्बन्धेन ह्रस्वादेशपदार्थस्यैकान्वयः। अस्मन्मते च स्वघटकवृत्तित्व, स्वघटकेतरावृत्तित्वोभयसम्बन्धेनोपदेशपदार्थातिदिश्यमानस्यैचस्थानिकत्वेऽन्वय इति भावः। **आहुरिति**। अभ्यनुज्ञावाक्ये विघातकशास्त्रे वा संकुचितसंकोचमकृत्वा सामान्यतः सन्निपातपरिभाषया अनित्यत्वविषये संकोचाभावे सुलित्यादौ तुगप्रवृत्तिः। सुलुनीत्यादौ नुमर्थं सन्निपातपरिभाषानित्यत्वस्यावश्यकत्वेन "ह्रस्वो नपुंसके" इत्यत्राभ्यनुज्ञावाक्ये। सन्निपातपरिभाषाप्रयोज्यसंकोचाभावे नुम इव तुकोऽप्यभ्यनुज्ञादाने प्रतिबन्धकाभावादत्रारुचिर्बोध्या। संकुचितसंकोचे तु सकलेष्टसिद्धिः।

॥ इत्यजन्ता नपुंसकलिङ्गाः ॥

## ॥ हलन्तपुँल्लिङ्गप्रकरणम् ॥

**पदान्तेविद्यमानस्येति**। हस्य पदविशेषणत्वं स्वीकृत्यहान्तं यत्पदं तदवयवस्यनिर्दिश्यमानस्येति वक्तव्यम्। पदान्तस्येत्यर्थः। यथाश्रुतन्तु न सम्यक्। लिहौ इत्यादौ पदान्तलिहामिति समुदाये विद्यमानस्य हस्य ढत्वापत्तेः। पदान्तेति विशेषणवैयर्थ्यापत्तेश्च। **आसद्धेरिति** झषन्तत्वाभावेन भष्भावाप्राप्त्या धुडित्यादिरूपासिद्धेरिति भावः। ढत्वघत्वाभावादिति। ढत्वं च घत्वाभावश्चेति विग्रहः। **इत्यन्यत्र विस्तर इति**। परेतु–"होढोऽदादेः" इत्यत्रात्यादेरित्यस्य पदिदाद्यवयवभिन्नस्येत्यर्थस्तर्हि दामलेढीति दामलिलेडित्यादौ दाद्यवयवत्वेन दाद्यवयवभिन्नत्वस्याभावात् घत्वापत्तिः। यदि दादिभिन्नावयवस्येत्युच्यते तदा धुगित्यादौ दादिभिन्ना यत् ध् इति तदवयवभिन्नत्वस्य सत्त्वेन धत्वानापत्तिः। अदादेरित्यस्य वैयर्थ्यापत्तिश्च। न च धातोरित्यपकृष्य दादिधात्ववयवभिन्नस्येत्यर्थान्नदोष इति वाच्यम्। अपकर्षे मानाभावात्। अपकृष्ट धातो रित्यस्य "अदादे' रितिसमुदायघटकदादावन्वयासम्भवाच्च। नचोत्तरसूत्रे दादिधातुरेव गृह्यत इत्यर्थाधिकारानुरोधात् पूर्वसूत्रेऽपि दादिधातुरेव गृह्यत इति नोक्तदोष इति वाच्यम्। दादेरित्यनुवृत्तेः पूर्वसूत्रेऽर्थाधिकाराश्रयाद्दादिधातुरेव गृह्यत इति एतदर्थकं सार्थकत्वेन वैयर्थ्याभावाद्दादिपदेनैपदेशिकदादिरेव गृह्यत इति कल्पयितुमशक्यत्वात् ॥ न च "होढोऽदादिधातोर्घः" इत्येव सूत्रयितव्ये होढोऽदोदेर्धातोर्घ इतिसूत्रं कृत्वा दादेरित्यनुवर्तते वेति निवृत्तमिति भाष्येण दादिपदमौपदेशिकदादित्वाद्याचणिकम् इति कल्पयितुं युक्तमिति वाच्यम्। उत्तरसूत्रे दादिर्यो धातुरिति समानाधिकरणेनान्वयो मा भूत्, किंतु धातोरवयवो यो दादिस्तदवयवस्य हस्य घो भवतीत्यर्थलाभाय "होढोऽदादेर्धातोर्घः" इति सूत्रकरणमित्याशयात्। अत एव "अथवा एवं वक्ष्यामि, होढोऽदादेः, हो ढो भवति, ततो "धातोर्घ" "दादे"रिनिवर्तते नेति निवृत्तम्। एवमपि घोदादेरित्युच्येत,, तत्रेदं न सिध्यत्यधोक्,, क्वतर्हि स्यात्? माधोक्,, नैष दोषः,, धातोरिति नैषा धातुसमानाधिकरणा षष्ठी,, दादेर्धातोरिति,, का तर्हि? अवयवयोगे एषा षष्ठी। धातोर्योदादिरवयवइति,, साचावश्यमवयवषष्ठ्यवज्ञयोत्तरार्थम्। किम्प्रयोजनम्? एकाचो बशो भष् झषन्तस्यस्ध्वोः" इतीहैव यथास्यात् गर्दभयतेरप्रत्ययेगर्धबिति। तथाच सूत्रे धातोरित्यवयवषष्ठ्यैव दामलिहामात्मानमिच्छति "दामलिह्यति" इत्यादौ घत्वं भवत्येव। दादिपदस्यौपदेशिकदादित्ववति लक्षणायां मानाभावात्। अर्थाधिकाराश्रयाच्च। होढोऽदादेरित्यत्रापि धात्ववयवदाद्यवयवभिन्नस्येत्यर्थः इति दामलेढीतीति दामलिहित्यादौ च न दोषः। नचोत्तरसूत्रे आवश्यकत्वकथनेनेहानावश्यकत्वं सूच्यत इति वाच्यम्। शब्दाधिकाराश्रयणे गौरवादर्थाधिकाराश्रयणानुसरेण पूर्वसूत्रेऽपि अवयवषष्ठ्येवोचितेति बोधयितुं, सा चावश्यमवयवयोगविज्ञेयोत्तरार्थेति भाष्येऽनभिधानात्। तथा चात्रत्यः शेखरोभाष्यार्थानवधानमूलक इति सुधियो विभावयन्तु।

**तद्वाडिति**। न च जश्त्वस्यासिद्धत्वाद्भष्भावेन ततो जश्त्वे न दोष इति वाच्यम्। तदर्थमादीत्यद्युत्वात्। एवं मृद्गुमाह्वयतीति मृद्वाड् इत्यादौ भष्भाववारणाय धातोरित्यस्यावश्यकत्वात्। ननु प्रधानाप्रधान इतिन्यायेन क्रियात्वावच्छिन्नमुख्यविशेष्यताकबोधतात्पर्येणोच्चरितानामेव "भूवादय" इतिसूत्रेण धातुसञ्ज्ञाविधानाद्धुडित्यादीनां क्रियात्वावच्छिन्नमुख्यविशेष्यताकबोधतात्पर्येणानुच्चरितत्वात्। धातुसञ्ज्ञा न स्यादित्यत आह—**धातोरिति निषेधेनेति**। **धातुत्वादिति**। क्रियावाचकत्वं साध्यविशिष्ट

त्वम् । वैशिष्ट्यं च—स्वावच्छिन्ननिरूपितशक्तिपर्य्याप्त्यधिकरणत्व स्वाघटितरूपावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणकाघटितत्व, स्वावच्छिन्ननिरूपितशक्तिनिरूपकार्थविशेष्यकबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्य्याप्त्यधिकरणत्व, एतत्त्रितयसम्बन्धेन । तथा च निरूक्तक्रियावाचकत्वं म—ह इत्यादीनामव्याहतमिति "अत्वसन्तस्य" इतिसूत्रे अधातोरिति चरितार्थम् । अत्र द्वितीयसम्बन्धोपादानाद्याचकादिपदानां क्रियावाचकत्वं नेति दिक् ।

**निमित्ताभावादिति** । वस्तुतस्तु प्रत्ययलक्षणेन धातुविहितक्विप्प्रत्ययपरकत्वस्य सत्त्वेन धातोः कार्यमुच्यमानमिति परिभाषोपस्थितावपि न क्षतिरिति बोध्यम् । **चरितार्थमिति** । उक्तरीत्या "प्रशान्" इत्यस्य वैयर्थ्यन्नेति बोध्यम् ।

**"इग्यणः"** ॥ **तद्भावितपक्षाश्रयणादिति** । सम्प्रसारणपदप्रयोज्यविधेयताश्रयस्थानिवत्त्वविशिष्ट इक्त्वावच्छिन्ने सम्प्रसारणपदस्य शक्तिस्वीकारादिति भावः । न च "इग्यण" इतिशास्त्रीयबोधाधीनो "वाह ऊठ्" इतिशास्त्रबोधस्तदधीनश्चेग्यण इतिसंज्ञाशास्त्रबोध इत्यन्योन्याश्रय इति वाच्यम् । सम्प्रसारणपदस्य सम्प्रसारणपदप्रयोज्यत्वे विधेयतायां यण्स्थानिकत्वं इक्त्वावच्छिन्ने च खण्डशः शक्तिस्वीकारेणादोषात् । अत एव 'धुभ्याम्' इत्यादौ "हलः" इति दीर्घो न । न च निरुतं दुरुतम् इत्यादौ "हलः" इति दीर्घापत्तिरिति वाच्यम् । प्रत्यासत्त्या सम्प्रसारणनिमित्तकप्रत्ययनिमित्तकाङ्गसंज्ञावयवहलः परस्य दीर्घविधानेनादोषात् । नचैवमपि सुध्युपास्य इत्यादौ यणं बाधित्वा "सम्प्रसारणाच्च" इति पूर्वरूपापत्तिरिति वाच्यम् । "सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणं कर्तव्यम्" इति वार्तिकेनादोषात् । समानाङ्गग्रहणत्वं च सम्प्रसारणाघटिताङ्गाघटितत्वम् । न च 'सुध्युक्तम्' इत्यादौ निरुक्तसमानाङ्गत्वस्य सत्त्वात् पूर्वरूपापत्तिः, "कारीषगन्धीपुत्र" इत्यादौ सम्प्रसारणघटिताचू्निमित्तकाङ्गघटितत्वेन पूर्वरूपापत्तिरिति च वाच्यम् । सम्प्रसारणश्चेत्यस्य स्वघटिताङ्गाघटकत्व, स्वाव्यवहितोत्तरत्वोभयसम्बन्धेन सम्प्रसारणविशिष्टेऽपि पूर्वरूपं भवतीत्यर्थेनादोषात् । न चैवमपि वेञ् धातोः कप्प्रत्यये उवे इत्यादौ निरुक्तोभयसम्बन्धेन सम्प्रसारणवैशिष्ट्यस्य सत्त्वात् । पूर्वरूपापत्तिरिति वाच्यम् । वार्णादाङ्गमिति परिभाषया पूर्वरूपं बाधित्वोवङादेशस्यैव प्रवृत्त्या दोषाभावात् । नचानयैव परिभाषया पूर्वरूपं बाधित्वा अतो लोपे पूर्वस्यैव विधौ स्थानिवद्भाव इति सिद्धान्तेन स्थनिवद्भावाप्त्या पुनरपि कप्रत्ययाकारेण पूर्वरूपापत्तिरिति वाच्यम् । वार्णपरिभाषाया अनित्यत्वेनादोषात् । न च तद्भावितपक्षाश्रयणे परिवीरित्यादौ "हल" इति दीर्घो न स्यात्, सम्प्रसारणस्थानिकस्यातथात्वात् इति वाच्यम् । "हलः" इति ज्ञापकेन साक्षात्सम्प्रसारणस्थानिकस्य सम्प्रसारणतुल्यत्वातिदेशेनादोषात् ।

केचित्तु–तद्भावितपक्षाश्रयणेऽपि न दोषः । न च धुभ्याम्, अदुहितराम्, इत्यादौ "हल" इति दीर्घापत्तिरिति वाच्यम्, निरुतं दुरुतमित्यादौ दोषवारणाय सम्प्रसारणनिमित्तप्रत्ययनिमित्तकाङ्गावयवाद्धलः परस्य दीर्घविधानेन प्रकृते सम्प्रसारणस्य प्रत्ययानिमित्तकत्वेनादोषात् । अत एव तृतीयः इत्यादौ न दोषः । 'अग्रुरुण' इत्यादौ "समानाङ्गग्रहण"मिति वार्तिकेनैव दोषवारणम् बोध्यम् । न च तद्भावितपक्षाश्रयणे समानाङ्गमिति वार्तिकपूरणेन लाघवमिति वाच्यम् । 'सुध्युक्तम्' 'शकहूक्तम्' इत्यादौ दोषवारणाय तद्वार्तिकस्यावश्यकत्वात् । एवं चाक्षद्यूरित्यादि हल इत्यनेनैव सिद्ध्यतीति ऊठि दीर्घोऽपि न कर्तव्य इति लाघवं सम्भवतीति आहुरित्ति दिक् ।

**वाक्यस्य सञ्ज्ञेति** । यत्र सम्प्रसारणपदं तत्र इग्यण इत्युपतिष्ठत इति सूत्रार्थः । तत्र विधिप्रदेशेषु काकाज्जातं काको भवतीतिवत्तक्रकौण्डिन्यन्यायेन च सम्प्रसारणमिति सञ्ज्ञैव भवतीति भाष्ये प्रत्याख्यानमिति "हलः" इति ज्ञापकेन साक्षात् सम्प्रसारणस्थानिककार्यस्यैव सम्प्रसारणतुल्यत्वातिदेशेन दीर्घस्यातथात्वान्न शकहूक्तमिक्तमित्यादौ पूर्वरूपापत्तिरिति भावः ।

**दिवऔत्** । **वृद्ध्यनापत्तेरिति** । ननु "वाह ऊठ्" सूत्रे इव "एत्येधत्यूठ्सु" अत्रापि ह्रस्व एव पठ्यते इति न दोषः । मव्यधातोः क्विपि "च्छ्वोः" इत्यूठि "मौः" इत्यादौ वृध्यनापत्तिस्तु उदितिप्रश्लेषेण । तत्रापि ह्रस्वस्यैवोठो विधानेन वारणीयेति चेन्न । आवयतेः क्विपि 'औः' इतिरूपस्य प्रश्लेषेणोठोविधानकल्पे वार्णादाङ्गमिति परिभाषया लघूपधगुणवृद्ध्योरसिद्ध्यापत्तेः । **विशेषणार्थमिति** । "ऊठ्युपधाग्रहणं कर्तव्यम्" इतिवार्तिके विशेषणार्थमित्यपि बोध्यम् । **असम्भवादिति** । चिन्त्यमिदम् ? अनुत्पत्तेरन्वाख्यानेऽपि

तथैव बोधापत्तेः । वस्तुतस्तु भावादेशेष्विवाभावादेशेष्वपि साधुत्वमात्रं विधीयत इति लोपादिविषयेऽनुपत्याख्यानं चिन्त्यमेवेत्यन्यत्र विस्तरः। हे अनड्वन् इत्यादौ तक्रकौण्डिन्यन्यायानित्यत्वाद् अमा सम्बुद्धिलोपो न बाध्यत इति दिक् ।

**इतिचेन्नेति । परे**तु यद्यप्ययं विचारः काकदन्तपरीक्षासमानस्तथापि रसिकरञ्जनकुतूहलाय विचार्यते । उच्चारणार्थवर्णानामित्सञ्ज्ञालोपाभ्यां विनाऽपहारेऽपि न क्षतिः । न च 'दिव औत्' इत्यादौ तान्तस्य विद्यमानापत्तिरिति वाच्यम् । तपरसूत्रेण तकारावधिकपरत्वविशिष्टस्य तपरकस्य स्वघटकोच्चारणाधिकरणीभूतकालसदृशकालवतः स्वबोध्यस्य च सञ्ज्ञाविधानेन सञ्ज्ञाशब्दानां सञ्ज्ञिसम्बोध्ययित्वान्यत्वनिवृत्तिर्भवतीति सिद्धान्तेनादोषात् । न च "हलन्त्यम्" इतिसूत्रस्थभाष्यविरोध इति वाच्यम् । "अदिति तान्तस्याकारबोधकत्वस्याक्लृप्तत्वेनादिति अनुनासिकोकार" इति भाष्ये उक्तत्वेन तद्विरोधाभावात् । न च हलन्त्यमिति प्रवृत्तिः पूर्वमिति वाच्यम् । "नभ्वाभ्याम्" इति सूत्रेऽत्रिपद इवात्रापि तदप्रवृत्तेः सुलभत्वात् । विधीयमानत्वेन सवर्णग्राहकत्वस्याप्रसक्त्या फलाभावेन हलन्त्यमिति सूत्राप्रवृत्तेश्च । न च "तस्य लोपः" इतिसूत्रभाष्यविरोध इति वाच्यम् । तकारस्येत्सञ्ज्ञामबुध्वा सर्वादेशत्वापादनेन तद्विरोधाभावात् । तपरसूत्रेण विशिष्टस्य सञ्ज्ञेत्येतदेव बुध्वा तस्य भाष्यस्य प्रवृत्तत्वाच्च । एतेन "तित्स्वरितम्" इतिभाष्यविरोधोऽपि परिहृतः । एवं "तितिप्रत्ययग्रहणंकर्तव्यम्" इतिवार्तिकमपि तकारस्येत्सञ्ज्ञां बुध्वा प्रवृत्तमिति न तद्विरोधः । न च "वेरपृक्तस्य" इतिसूत्रस्थभाष्यविरोधो दुर्वार इति वाच्यम् । व इत्यस्य वकारबोधकत्वस्य क्वाप्यदृष्टत्वेन तस्योच्चारणार्थस्य वक्तुमशक्यत्वात् । अत एव वकार इतिवत् दिवाकर इति करान्तप्रयोगो न भवति । एतेन "इदितोनुम्" इति सूत्रस्थभाष्यविरोधोऽपि परिहृतः । सत्वस्य सकारबोधकत्वासम्भवेनेकारस्योच्चारणार्थस्य वक्तुमशक्यत्वात् । अमंत्स्येत्यादौ नकारलोपवारणं तु न विद्यते इदस्मिन्निति बहुव्रीह्याश्रयणेनेद्घटितभिन्नानामिति अर्थेन बोध्यम् । अत एव "हनः सिच्" इतिसूत्रं चरितार्थम् । अन्यथा अहतेत्यादौ "अनिदिताम्" इति लोपेनैवसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव । हनो वधेत्यादावुत्तनोऽपि सुप् "सुपां सुलुग्" इत्यनेन लुप्त इति न दोषः । लक्ष्ये प्रवृत्त्युत्तरं स्थानिवद्भावेन लभ्यमानधातुत्वमादाय प्रातिपदिकसञ्ज्ञानिषेधस्त्वयुक्त एव फलाभावात् । "अस्तेर्भूः" इति निर्विसर्गपाठ इत्युक्तिस्तु साहसमात्रमेव । तथाच क्वचिदुच्चारणार्थत्वेन विनेत्सञ्ज्ञानिवृत्तिरिति न कापि क्षतिरित्याहुः ।

**अन्तोदात्तो निपात्यते इति।** तैत्तिरीयशाखायां त्वाद्युदात्तत्वमपि दृश्यत इति बोध्यम् । **ज्ञापनार्थमिति।** तेन दिविति प्रातिपदिकप्रकृतिकाजन्तात् क्विपि 'अक्षद्युभ्याम्' इत्यादौ आन्तरतम्याद्दीर्घो न भवति ।

**इति दिगिति ।** दिगर्थस्तु "षट्चतुर्भ्यः" इत्यादौ स्वाव्यवहितोत्तरत्व, स्वार्थगतसंख्याभिधायित्वोभयसम्बन्धेन षट्चतुरविशिष्टस्यामो नुड् भवतीत्यर्थ इति गौणे नुण्न भवत्येवेति वाच्यम् । चर्त्वस्यासिद्धत्वात् गौणस्यैव द्वित्वमिति । न च रामशब्दे जश्त्वमितिप्रतीकमुपादय बाधित्वेति शेष इति स्वयमेव व्याख्यातम्, अत्र च जश्त्वोत्तरं चर्त्वमिति वदतीति परस्परग्रन्थविरोध इति वाच्यम् । धर्मयोर्यत्र व्याप्यव्यापकभावस्तत्र माठरपरिवेषन्यायेनैकविनियोगोद्देशेन प्रयुक्तवाक्यकदम्बघटकव्यापकधर्मावच्छिन्नबोधकपदार्थतावच्छेदकावच्छिन्ने तद्वाक्यकदम्बघटकव्याप्यधर्मावच्छिन्नपदार्थतावच्छेदकावच्छिन्नातिरिक्तत्वेन संकोचात् । जश्त्वचर्त्वोद्देशेन प्रयुक्त "झलाञ्जशझशि" इति "अभ्यासे चर्च" "वावसाने" इतिवाक्यकदम्बघटकव्यापकधर्मावच्छिन्नबोधकझल्पदार्थतावच्छेदकावच्छिन्ने व्याप्यधर्मावच्छिन्नबोधकजश्त्वपदार्थतावच्छेदकावच्छिन्नातिरिक्तत्वेन संकोचात्परस्परविरोधाभावात् । अत एव शसि नद्योः प्रतिषेधवचनं सार्थकम् । अत एव रत्नमुट्' 'रत्नमुड्' इतिरूपद्वयं सिद्धमिति । अन्यथा चर्त्वाभावे षान्तरूपं स्यात् । अत एव "ष्णान्ताषट्" इतिनिर्देशः संगच्छते इति दिक् ।

**अन्यथासिद्धिरिति ॥** तच्छास्त्रैकवाक्यतापन्नपूर्वत्रासिद्धमिति शास्त्रीयपूर्वपदार्थे द्वित्वविधायकशास्त्रातिरिक्तत्वेन सङ्कोचात् द्वित्वदृष्ट्या त्रैपादिके सिद्धं भवत्येवेति भावः । वागित्यादौ "झलां जशोऽन्ते" इत्यपेक्षया "अनाचिच" इतिद्वित्वस्य परत्वेनासिद्धत्वात् पूर्वजश्त्वे "वावसाने" इत्येतदपेक्षया

"अनाचि च" इत्यस्य पूर्वत्वेन तदेकवाक्यतापन्नपूर्वत्रपदार्थे द्वित्वविधायकातिरिक्तत्वेन सङ्कोचात् द्वित्वदृष्ट्या "वावसाने" इत्यस्यासिद्धत्वाभावेन पूर्वं चर्त्वे ततो द्वित्वे चर्त्वस्यासिद्धत्वात् "झलां जश् झशि" इति जश्त्वे च (न) गकारश्रवणापत्तिरिति बोध्यम्। ननु झलाञ्जश्झशीति जश्त्वस्यासिद्धत्वात् स्कोरिति कलोपापत्तिः। न च स्कोरिति शास्त्रदृष्ट्या द्वित्वस्यासिद्धत्वात् न कलोपापत्तिरिति वाच्यम्। द्वित्वाश्रयस्य कार्ये कर्तव्ये ऽसिद्धं भवतीति स्वयमेवोक्तत्वेन कलोपे द्वित्वस्यासिद्धत्वादितिचेत्, मैवम्। द्विर्वचनीयविधेयताश्रयस्थानिताश्रयातिरिक्तत्वेन पूर्वत्र कर्तव्ये इदमसिद्धं भवतीति वावसाने इत्येतदेकवाक्यतापन्न 'पूर्वत्रासिद्ध'मित्यस्यार्थेन कलोपस्य द्विर्वचनोद्देश्यताश्रयस्थानिकत्वेन तद्दृष्ट्या च वावसाने इत्यस्यासिद्धत्वेनादोषात्। न च "अ अ" इत्येकवाक्यतापन्नपूर्वत्रासिद्धमित्यत्र "पूर्वत्रासिद्धमद्वित्वे" इतिपरिभाषया द्वित्वविधायकातिरिक्तत्वेन सङ्कोचात्तुकि 'हर्यनुभव' इत्यादौ द्वित्वानापत्तिः। संवृतस्य सिद्धत्वात्तस्य च अच्त्वाभावात्। न च "अअ" इत्यादौ अजादेर्द्वितीयस्य इति द्वित्वानापत्तिः। "अअ" इत्यसिद्धत्वेन तद्विधेयस्याच्त्वाभावात् इति वाच्यम्, अश्नोतेश्च "अत आदेः" इत्यादिज्ञापकेन "अ अ" इत्येतदेकवाक्यतापन्नपूर्वत्रासिद्धमित्यत्र द्वित्वविधायकातिरिक्तत्वेन सङ्कोचो भवतीति कल्पनेनादोषात् इति दिक्।

**न पदान्ताः परेऽण्यः सन्तीति** । हल्रूपा "अणोऽप्रगृह्यस्य" इत्यनुनासिकभाजः परेऽणो न सन्तीत्यर्थः। तेन कर्तृहर्तृशब्दयोश्च नानभिधानप्रसक्तिः। नचैवं कमलित्यनुनासिककार्यभाज एवाभिधानं स्यात् सामान्यतः 'कमल्'शब्दादेरिति वाच्यम्। लघुतात्पर्यस्य हल्रूपपराणोऽनुनासिककार्यभाक् सम्भवतीति तदतिरिक्तत्वेन ङ्याप्प्रातिपदिकादित्यत्र प्रातिपदिकपदार्थे संकोचेन सामान्यतः कमल्शब्दादेरनभिधानस्यैव युक्तत्वात्। एतद्ध्वनयन्नाह—**अनभिधानमेवोचितमिति** । **कैयट इति** । अत्रारुचिबीजं तु स्वघटकाव्यवहितपूर्वत्वं–स्वघटकाव्यवहितोत्तरत्वं–स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वं–एतत्त्रितयसम्बन्धेन स्वविशिष्टरूपतन्मध्यपतितत्वस्य भिन्धकीत्यत्राभावेन निर्दिश्यमानपरिभाषया वारणपरभाष्यविरोधाभावात्, अकज्विशिष्टे निर्दिश्यमानत्वस्वीकारेऽपि क्षतिविरहेण "किमः कः" इत्यस्याप्रवृत्त्यभावेऽपि भकज्विशिष्टस्य कादेशः सिद्ध्यतीति भावः।

**असहाय इति** । मुख्यधर्मवदघटितत्वे सति—मुख्यधर्मवदघटकत्वे सति—मुख्यधर्मवदसमभिव्याहृतत्वमसहायत्वम्। एतादृशासहायत्वस्य फलान्याह—**एकस्मिन्नित्युक्तेरिति** । वस्तुतस्तु—व्यपदेशिवदित्यनेनापि स्वस्मिन् स्वघटितत्वं स्वघटकत्वं चातिदिश्येते इत्यन्यत्र विस्तरः। **इतिभाव इति** । अव्ययसर्वनाम्नामित्यनुवर्तमाने "अज्ञाते" इतिशास्त्रेणेत्यर्थः। एतेनाव्ययसर्वनाम्नामित्यधिकारसूत्रत्वेन तेनाकजितिकथनमपास्तम्। **बोध्यमिति** । अकज्विशिष्टे निर्दिश्यमानत्वाङ्गीकारेऽपि उपलक्षणतया निर्दिश्यमानावयवत्वस्येदकम् शब्देऽपि सत्त्वादिति भावः।

**कृति तुगिति** । कृति किम्? वृत्रहच्छत्रम्। तुकि किम्? राजेवाचरति राजायति "उपमानादाचारे" इतिक्यजन्तात् क्विपि अतोलोप–यलोपयोरशब्देन षष्ठीसमासे तस्मादाचारक्विबन्तात् ण्वुलि स्थानिभूतादचः पूर्वत्वेन दृष्टत्वात् स्थानिवत्त्वाप्राप्त्या यकि 'राजायति इत्यादौ नलोपस्यासिद्धत्वम् (न)। **विस्तरइति** । वस्तुतस्तु सर्वत्र नियमशास्त्राणां विधिमुखेनैव प्रवृत्तिरिति वक्तुमनुचितम्। हन्तेरत्पूर्वस्येत्यस्य निषेधमुखेन प्रवृत्तौ नियम्यनियामकयोः शास्त्रयोरुभयोर्लक्ष्यासम्भवापत्तेः। एवं "सकर्मकाणां प्रतिषेधो वक्तव्यः" इति वार्तिकप्रत्याख्यानाय कृतस्य "तपस्तपः कर्मकस्यैव" इति योगद्वये तपः कर्मकस्यैवेति नियामकशास्त्रस्य निरुक्तदिशा निषेधमुखेन प्रवृत्तिर्न सम्भवति। बहुव्रीहाविवेत्ति वचनप्रत्याख्यानाय कृतस्य डाबुभाभ्यामित्यत्रान्यतरस्यामितियोगविभागस्य सामान्यतो विकल्पेन नियमविधायकत्वं स्वीकृत्य "अनउपधालोपिनः" इतिसूत्रं नियामकमिति कल्पे तस्यापि निषेधमुखेन प्रवृत्तिर्न सम्भवतीति बोध्यम्। "पञ्च पञ्च नखा भक्ष्याः" इत्यादौ विधिमुखेन प्रवृत्तिर्ग्रहणापि कर्तुमशक्या, इच्छाया अनिवार्यत्वेन तत्प्रकरणे सङ्कोचासम्भवात् इति दिक्।

**अपास्तमिति** । वस्तुतस्तु पूर्वत्रासिद्धमित्यधिकारसूत्रत्वेन "नलोपः प्रातिपदिकान्तस्य" इत्येतच्छास्त्रैकवाक्यतापन्नपूर्वत्रासिद्धमित्यत्रत्यपूर्वत्रपदार्थे सुब्विधि—स्वरविधि—सञ्ज्ञाविधि—कृति तुग्विधि—एतद्भिन्नशास्त्रातिरिक्तत्वेन संङ्कोचात्। "आदेशप्रत्यययोः" इतिशास्त्रस्य नलोपापेक्षया परत्वेन नलोपशा-

त्वैकवाक्यतापन्नपूर्वत्रासिद्धमित्येतद्घटकपूर्वत्रपदेन प्रत्यययोरिति शास्त्रं गृहीतुमशक्यत्वात् षत्वदृष्ट्या नलोपासिद्धत्वं नैव प्राप्नोतीति दण्डिषु इत्यादौ दोषाभावेन सुप्त्वव्याप्यधर्मावच्छिन्नत्वादिकथनस्य नोपयोग इति दिक् ।

**प्रयोक्तव्यमिति** । अत एव पतिश्च हरश्च पतिहरौ इत्यादौ पतिशब्दस्य पूर्वनिपातसिद्धिः । अन्यथा "पतिः समासएव" इतिनियमात्प्राग्घित्वाभावेन तदसङ्गतिः स्यात् । एवं ग्रामणीश्च हरश्च ग्रामणिहरौ, यौश्च कामश्च द्युकामौ, इत्यादौ भाविघिसञ्ज्ञा ग्रामणिद्युशब्दयोः पूर्वनिपातः फलमिति बोध्यम् । **तुग्विधाविति** । न च वृत्रहभिरित्यादौ तुक्यपि यदागमन्यायेन सन्निपातपरिभाषाबुद्धेरभावनातिदेशिकसन्निपातविघाताभावमादायैतत्परिभाषाप्रतिबन्धो न भवतीति अत्रातिदेशपदार्थे "स एषाम्" इत्यादिनिर्देशेन यदागमन्यायातिरिक्तत्वेन सङ्कोचादिदं भाष्यमसङ्गतमिति वाच्यम् । "ह्रस्वस्य पिति"इत्यनेन ह्रस्वान्ततदोदरेव तुग्विधानेन ह्रस्वान्ततदादित्वस्य वृत्रहन्नित्यत्राभावेन यदागमपरिभाषाया अप्रवृत्त्या सन्निपातपरिभाषाप्रवृत्तेः सूपपादत्वेन भाष्यसङ्गतेः ।

**उपसर्गादित्यस्य निवृत्तेरिति** । न च वृत्रहननमित्यादौ णत्वार्थमत्पूर्वस्येतिसूत्रमावश्यकमित्यस्य नियामकत्वमसङ्गतमिति वाच्यम् । उपसर्गादसमासे, कुमतिच; प्रातिपदिकान्त, इत्यादिभिरेतद्विषये येन णत्वं प्राप्नोति तत्सर्वस्याप्यनुवृत्तेः स्वीकारेण वृत्रहननमित्यादौ णत्वाप्राप्त्या नियामकत्वोपपत्तेः । मूलं तु उपसर्गादित्यस्य निवृत्त्यनभिधायकत्वं किन्तु सर्वस्य पूर्वोक्तस्यानुवृत्त्या नियामकत्वमिति लापनीयम् ।

अस्या निषेधमुखेनैव प्रवृत्तिः, विधिमुखेन प्रवृत्तेरसम्भवात् । तथाहि—नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रे सङ्कोचो भवतीति विधिमुखेन प्रवृत्तौ प्रकृते च निरुक्तं रूपं केवलहन्धातुत्वं भवति तदवच्छिन्नातिरिक्तत्वेन हन्तेरित्यत्र सङ्कोचो भवतीति हन्धातुभिन्नहन्धातोर्नस्य णत्वं भवति इति वक्तुमशक्यत्वात् । निषेधमुखेन प्रवृत्तौ त्वत्पूर्वस्यात्पूर्वादतिरिक्तो यो हन्धातुस्तस्य नकारस्य णत्वं न भवति इति अत्पूर्वस्येत्यस्यार्थः इति 'वृत्रघ्नः' इत्यादौ णत्वं न भवति, वृत्रघ्न इत्यादौ हन्तेरित्यादिनियम्यशास्त्रैरत्पूर्वे सर्वत्र णत्वं भवतीति सर्वं समञ्जसमिति दिक् ।

**इति चेति** । चकारेण "उपसर्गादसमासेऽपि" इत्यस्य सङ्ग्रहः । **अलैवानर्थकेनेति** । एवात्राप्यर्थे । तथाचानर्थकेनालापि तदन्तविधिर्भवतीत्यर्थः । **इत्याहुरिति** । निर्दिश्यमानपरिभाषया निर्दिश्यमानस्याणोऽभावादतिधीवरीत्यत्र न "अल्लोपोऽनः" इत्यस्य प्रवृत्तिरिति "अल्लोपोऽनः" इत्यत्र न नान्तो योऽलित्यर्थस्य नोपयोगः । मघवतीत्यादौ सम्प्रसारणाभावाय "श्वयुवेति" सूत्रे नान्तो योऽन् तदन्तानां श्वादीनामित्याद्यर्थस्त्वावश्यक एवेति तत्त्वम् । वस्तुतस्तु—'अनिनस्मिन्' इति परिभाषया अनादिषु वर्णबोधकत्वातिदेशेनाल्विधाविति निषेधादेवात्रन्तत्वम् स्थानिवद्भावेन नायातीति मघवती; अतिधीवरी; इत्यादौ दोषाभावेन नकारप्रश्लेषो विफल एवेति दिक् ॥

**निषेधो व्यर्थइति** । चिन्त्यमिदम् । सुन्दोपसुन्दन्यायेन परस्परेण परस्परस्यासाधुत्वबोधनात्, उभयोः सम्प्रसारणयोरप्रवृत्तिप्रसङ्गाच्च । तस्मात्पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वात् पूर्वं पूर्वस्य सम्प्रसारणम्, पश्चात् उत्तरस्य सम्प्रसारणनिषेधो व्यर्थः । सम्प्रसारणस्य निमित्तत्वानुपपत्तिश्चेत्यवतरणं बोध्यम् ।

**कार्याश्रयवर्णभेदेन लक्ष्यभेदादिति** । स्वीयप्राथमिकप्रवृत्तावुद्देश्यत्वावच्छेदकावच्छेदेनाश्रीयमाणो यावान् शब्दसमुदायः तद्घटकः तद्घटकमात्रोद्देश्यविकारागमाघटकातिरिक्तस्तद्घटितत्वे सति, स्वीयप्राथमिकप्रवृत्त्युत्तरकालिकप्राप्तिभिन्नप्राप्तिविषयाघटितत्वम् इति परिष्कारे द्वितीयदलस्य प्रकृतेऽभावेन तल्लक्ष्यत्वस्याभावादित्यर्थः । **अन्यादिति** । अभेदान्वयबोधे विरूपेणोपस्थितेस्तन्त्रत्वेन घटो घट इत्यादाविव "अअ" इत्यादावपि शाब्दबोधानुपपत्तिरिति बोध्यम् । नीलो नीलघट इत्यादिवदेकस्य पदस्य निरनुनासिकत्वविशिष्टत्वावच्छिन्नपरत्वेन निरनुनासिकत्वविशिष्टत्वावच्छिन्नस्य शुद्धात्वावच्छिन्नेऽन्वयसम्भवात् ।

**अनभिधानमेवेति** । नचाल्लोपस्य स्थानिवद्भावाद्विभक्तित्वाभावेन पथीयतेः क्विपि पथीरित्यादावत्वस्य प्राप्तिरेव नेति अनभिधाने न मानमिति वाच्यम् । स्थानिवद्भावे हि यणादेशापत्त्या यणः स्थानिभूतादचः पूर्वत्वेन दृष्टत्वस्याभावेन स्थानिवद्भावस्याप्रवृत्त्याऽनभिधानस्यैवोचितत्वात् । नचैवमपि "तस्य लोपः" इति लोपो-

ब्योः" इति लोपे धकारस्य स्थानिभूतादचः पूर्वत्वेन दृष्टत्वस्य सत्त्वादल्लोपस्य स्थानिवद्भावेन विभक्तिपरत्वाभावेन पुनर्नात्वप्राप्तिरिति अनभिधाने न मानमिति वाच्यम् । आङ्गप्रवृत्तिसम्भावनायां पूर्वं वार्णं न प्रवर्तत इति यणादेश-वेरपृक्तलोपयोरप्रवृत्या ऽनभिधानस्यावश्यकत्वात् ।

भस्य टेर्लोपः । न च लाघवात् "भाड्डित्" इति सूत्रमस्तु —भसंज्ञकात्पथ्यादेः परः प्रत्ययो डित् भवतीति तस्यार्थः । तथाच पथः इत्यादौ टेरित्यनेनैव लोपो भवतीति वाच्यम् । सुपथ इदं 'सौपथम्' इत्यस्यासिद्धयापत्तेः, "इनण्यनपत्ये" इति प्रकृति भावेन टेरित्यस्याप्राप्तेः । सिद्धान्ते तु येन नाप्राप्तिन्यायेन इन इत्यस्यानपत्ये इत्यस्य टेरित्यस्यैवापवादत्वेन भस्यटेर्लोप इति शास्त्रस्य (तिलोपो भवति सुपथसिठ इति) तत्प्रकरणस्थत्वाभावेन प्रकृतिभावस्यैतद्बाधकत्वासम्भवाच, सौपथमित्यादौ भस्यटेरिति लोपो भवति । एवं सुपथिन् शब्दादिठनि पूर्वं "भस्यटेर्लोपः" इतिलोपे पश्चादिठनिमित्तकटेरिति लोपे सुपथिठ इति भवति । भवदुक्तन्यासे तु इठे मे यः सुटेर्लोपः स्यादित्यर्थकटेरित्यस्याभीयत्वेनासिद्धत्वात् पुनः भस्य टेर्लोपः इत्यर्थकटेरित्यस्याप्रवृत्त्या निरुक्तरूपासिद्धेः । एवं सुपथिन् शब्दात्प्रातिपदिकप्रकृतिकणिचि अनेन टिलोपे पुनष्टिवद्भावेन टिलोपे सुप(थ)य इति रूपं स्यादिति बोध्यम् ।

मूले—अष्टभ्य इतिवक्तव्ये इति । न च पर्यायवाचकानां लाघवगौरवचर्चा नाद्रियते इति परिभाषया प्रकृते लाघवप्रयोजकमिति वाच्यम् । अन्त्यहलोऽभावाप्रयोजकशास्त्रस्य प्रकृतिवदनुकरणमित्यतिदेशप्रवृत्तेः कार्यदृष्टत्वेन प्रकृत तदतिदेशेन प्रकृतेर्थत्नसाधुत्वेन किं कृत्वा तात्पर्यानुसरणम् , आहोस्वित , लक्षणसपन्नमात्रमिति; सन्देहानिवृत्तेः अष्ट इति वक्तव्ये "अष्टाभ्यः" इति गुरुनिर्देशस्य ज्ञापनसम्भवात् । यद्वा "अष्टन औश्" इत्येव सिद्धे "अष्टाभ्य" इति गुरुनिर्देशात् प्रकृतार्थज्ञापनसम्भवात् । 'टन्' इति कृतटिलानुकरणमित्यटन्शब्दे न दोष इति दिक् ।

स्वप्रवृत्युत्तरप्राप्तिमच्छास्त्रेण यस्य साधुत्वं बोध्यते तदपि साध्वित्यभ्यनुज्ञानसमये ऽन्तरङ्गपरिभाषया बहिरङ्गासिद्धत्वं वक्तुमशक्यमिति अरुचेराह—अलाभाच्चेति । ननु अभ्यनुज्ञादानं शास्त्रीयमेवेति तत्प्रतिबन्धाय बहिरङ्गासिद्धत्वं वक्तुमशक्यामित्यरुचेराह—दुर्वारत्वादिति । अतिदेशप्रवृत्तिप्राक्कालिकसान्निपातविघातमादाय सान्निपातपरिभाषाप्रवृत्तेर्दुर्वारत्वादिति भावः ।

अन्त्यव्याख्यानमिति । यथा लक्षणमित्यत्र लक्षणामितिछेदं कृत्वा लक्षणपदस्य लक्षणप्रवृत्तौ लक्षणां स्वीकृत्य योग्यतायामव्ययीभावेन लक्षणमित्यस्य लक्षणप्रवृत्त्यभावयोग्यतेति व्याख्यानमित्यर्थः । नञ्प्रश्लेषे लक्षणपदस्य लक्षणप्रवृत्तौ लक्षणायां च मानाभावात् पदार्थानतिवृत्तिवृत्तावव्ययीभावं स्वीकृत्य लक्षणमनतिक्रम्याप्रयुक्ते साधुत्वं बोध्यते इत्यन्त्यव्याख्यानमेव समञ्जसं बोध्यम् । न च प्रयुक्ते लक्षणानतिक्रमादिदमसंगतामिति वाच्यम् , प्रयुक्ते "स्वस्कपितृकः" इत्यादौ लक्षणातिक्रमस्य दृष्टत्वेनाप्रयुक्ते एव लक्षणातिक्रमस्य दृष्टत्वेनाप्रयुक्ते एव लक्षणातिक्रमस्य युक्तत्वात् । तथा चात्राऽऽद्य व्याख्यानमेव लक्षैणकचक्षुभिर्नादर्तव्यमित्याहुः ।

काष्ठशक्स्यातेति । एतस्यैवानाभिधानम् स्थाधातोः काष्ठशगित्यस्यानभिधानं बोध्यम् । पृथग् हिरुगिति गान्तमेव बोध्यम् । वार्धक्यामिति तु ब्राह्मणादिषु वृधनः कश्चेति पठ्यत इति बोध्यम् ।

तदोः सस्सौ । ननु तदोः सस्सौ इत्येव सूत्रमस्तु । नचानेष इत्यादौ नुटोऽपि (न लोपः न) सः स्यादिति वाच्यम् । नुट् (नग्) विधानसामर्थ्येन तस्य सत्वं न भवतीति वक्तुमशक्यत्वात् । नचानश्वः इत्यादौ ङमुडापत्तिरिति वाच्यम् । नुड्विधानसामर्थ्येन लोपदृष्ट्या ङमुडसिद्धो न भवतीति कल्पनेन ङमुटि नलोपे 'अनश्वः' इति रूपासिद्धेरिति; चेन्न । अस्य नः—अनः, ततो णिचि क्विपि अनुनासिकस्येति दीर्घे आन इति जाते ततो जरशब्देन समासे "अनज" इत्यादौ नगागमपक्षे यदागमन्यायेन नगविशिष्टस्य नव्त्वात् "नञो जरमरमित्रमृताः" इतिस्वरापत्तेः । स्थानिवद्भावस्तु न प्रवर्तते; स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधेरभावात्, स्थानिभूतादचः पूर्वत्वेन दृष्टत्वस्याभावाच्च । गुरवस्तु—लक्षणप्रतिपदोक्तपरिभाषया न जरसः अजर इति नाजिति सूत्रविहितसमासस्यैव "नञोजरमर" इति सूत्रे ग्रहणमिति न पूर्वोक्तसमासेन स्वरः प्रवर्तत इत्याहुः । नचानेष इत्यादौ लक्षणप्रतिपदोक्तपरिभाषया सकारो न भवतीति "स सौ" इति न्यासः सुवच एवेति वाच्यम् । तस्य लक्ष्यसंस्कारायोगित्वेनाङ्गीकारात् इति दिक् ।

**ङेप्रथमयोरम्।** प्रथमत्वं च यत्किञ्चित् समुदायविशिष्टत्वम्। वैशिष्ट्यं च स्वघटकत्व; स्वविशिष्ट-भिन्नत्वोभयसम्बन्धेन। सम्बन्धघटकवैशिष्ट्यंच। स्वघटकोत्तरत्व; स्वघटकपूर्वत्वोभयसम्बन्धेन। प्रकृते च प्रथमादिसप्तमीविभाक्तिसमुदाये लक्षणसमन्वयः। तृतीयादिविभाक्तिषु स्वविशिष्टत्वमेवास्तीति न निरुक्तप्रथमत्वं तत्र; किन्तु प्रथमद्वितीययोरेवेति दिक्। **इति चेन्नेत्ति।** वस्तुतस्तु चिन्त्येयं शङ्का, वार्ण-शास्त्रीयस्थानितापर्य्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकस्थानिताकत्वरूपसमानस्थानि-ताकत्वस्य शेष इत्यङ्गशास्त्रीयस्थानितापर्याप्त्यनुयोगितावच्छेदकमाद्वृति तद्व्यक्तित्वं,, वार्यं अतोगुण इति शास्त्रीयस्थानितावच्छेदकपरत्वपर्याप्त्यनुयोगितावच्छेदकमाद्घटकाकार वृत्तितद्व्यक्तित्वमिति निरुक्तस-मानस्थानिकत्वाभावेन वार्णपरिभाषाया अप्रवृत्तेः।

**साम आकम्—साम्येवाम्त्वमिति।** नच 'युष्माकम्' इत्यादौ शेषे लोपो न स्यात्। स्थानिवद्भा-वेन साम्त्वातिरिक्तिधर्मस्यातिदेशेन विभाक्तिपरकत्वात्। एवम् 'अतित्वाकम्' इत्यादौ सुप्त्वानतिदेशेन पद-त्वानापत्तिरिति वाच्यम्। "सामआकम्" इत्यत्र स च, आम् चेतिसमाहारद्वन्द्वेन सामे व्यासज्यवृत्तिस्था-नितेति स्थान्येकदेशवृत्ति आम्त्वस्य स्थानिवद्भावेनातिदेष्टुमशक्यत्वात्, युष्माकमित्यादौ सुडभावोऽतित्वा-कामित्यादौ (नुदन्) सुडभावश्च सिद्धः। न च यदागमन्यायेन साम्वृत्याम्त्वस्य स्थानिवद्भावेनातिदेशात्पुनरपि 'युष्माकम्' 'अतित्वाकम्' इत्यादौ सुडनुडभावौ दुर्वाराविति वाच्यम्। सुटोभावित्वेन प्रकृते सामोऽभावाय यदागमन्यायस्याप्रात्या आम्त्वस्य स्थानिवद्भावेनातिदेष्टुमशक्यत्वात्। नचैवं रीत्या अतित्वाकमि-त्यादौ सुप्तानतिदेशेन तत्त्वानापत्तिरिति वाच्यम्। आनुमानिकस्थान्यादेशभावकल्पे अतियुष्मद्—आम् वृत्तिसुबन्ततदादित्वस्यातित्वाकम् इत्यादौ अतिदेशेन दोषाभावात्। न च विभक्तिपरकत्वाभावाच्छेषे लोपो न स्यात् इति वाच्यम्। ससुट्कनिर्देशसामर्थ्येन सामो ह्यकम् इत्येव सिद्धे "आम आकम्" इतिगुरुसूत्र-करणाच्च स्थानिवद्भावेन केवलमाम्त्वमेव नायातीति अन्ये धर्मा आयान्त्येवेति कल्पनेनादोषान्मूलं चि-न्त्यमेवेति दिक्।

**एकवाक्यलक्षणमिति।** तत्वं च तिङन्तविशिष्टत्वम्। वैशिष्ट्यं च—स्वप्रयोज्यविषयतानिरूपित-त्वाभाववद्विषयताप्रयोजकघाटितत्व,—स्वप्रयोज्याविषयतानिरूपितत्वाभाववती विषयता प्रयोजकाघटितत्व—स्वप्रयोज्यत्वाभाववत्तिङन्तत्वाघटितत्वैतत्त्रितयसम्बन्धेन। अत्र प्रथमसम्बन्धदानेनौदनं पच तव भविष्य तीत्येतत्समुदायघटक 'ओदनं पच तव' इत्यस्य नैकवाक्यत्वम्। द्वितीयसम्बन्धेन च "पश्यमृगो धावति" इत्यस्य नैकवाक्यता। नचेष्टापत्तिः। समानवाक्ये इति स्वीकृत्य "तिङः" इतिसूत्रेऽतिङः इति ग्रहणप्र-त्याख्यानपरभाष्यविरोधात्। अन्यथा मृगो धावति पश्येत्यादौ पश्येत्यस्य स्वरवारणायातिङ् इत्यस्या वश्यकत्वेन तदसङ्गतिः स्पष्टैव। विषयतायां स्वप्रयोज्यत्वाभाववत्त्वविशेषणदानात् देवदत्त ब्रूहीत्यादौ न समानवाक्यत्वभङ्गः।

**स्यादेतत्**—पचतिकल्पमित्यादौ एकवाक्यतानापत्तिः। न च समानवाक्यत्वलक्षणे स्वप्रयोज्यत्वाभाव-वन्मुख्यविशेष्यताप्रयोजकतिङन्ताघटितत्वनिवेशान्न दोष इति वाच्यम्। पश्य मृगो धावतीत्यस्य मुख्य-विशेष्यताप्रयोजकत्वस्याभावेन तत्र समानवाक्यतापत्तेरिति चेन्नैवम्। स्वघटितत्व-स्वप्रयोज्याविषयतानि-रूपितत्वाभाववद्विषयताप्रयोजकाघटितत्व—स्वघटितप्रयोज्यत्वाभाववद्विषयताप्रयोजकस्वसमभिव्याहृतवृत्ति-शक्तिपर्य्याप्त्यधिकरणत्वाभाववत्तिङन्ताघटितत्वैतत्त्रितयसम्बन्धेन तिङन्तविशिष्टत्वम् समानवाक्यत्वम् इति परिष्कारेणादोषात्। पचतिकल्पमित्यत्र च स्वसमभिव्याहृतवृत्तिशक्तिपर्याप्त्यधिकरणत्वं (वर्तत्त) इति पचतीत्यादौ न दोषः। एवं खादतमोदतास्तीत्यादौ न दोषः। शक्तौ स्वसमभिव्याहृतवृत्तित्वविशेषण-दानात् ',देवदत्तः पचतकी" "अनेहा" इत्यादौ नाव्याप्तिः। अकचो मध्यपतितत्वेन स्वसमभिव्याहृतत्वा-भावात्। न च देवदत्त अकैत् पचतकि इत्यस्यैव वाक्यत्वानापत्तिः, 'अकैत्' इत्यस्य स्वसमभिव्याहृतवृत्ति-पर्याप्त्यधिकरणत्वाभाववत्तिङन्ताघटकत्वस्याभावादिति वाच्यम्। इष्टापत्तेः। अतिङ्ग्रहणसत्त्वेऽप्यकैदित्य-स्यातिङन्तत्वात् ततः परस्य स्वरस्येष्टत्वात्। नचैवमपि भवता एधनीयम्, शपनीयम् इत्यादावेकवाक्य-तानापत्तिः, तिङन्ताघटकत्वाभावादिति वाच्यम्। पूर्वोक्तत्रितयसम्बन्धेन मुख्यविशेष्यताप्रयोजकत्वम्, समानवाक्यत्वम् इतिपरिष्कारेणादोषादिति दिक्।

**आमन्त्रिते किं देव करोषीति।** ननु देवेत्यस्याभेदसम्बन्धावच्छिन्ना सम्बन्धानवच्छिन्ना वा या प्रकारता तादृशप्रकारतानिरूपितविशेष्यताश्रयत्वस्य देवेत्यत्राभावेन समानाधिकरणे सामान्यवचनम् इत्यस्याप्राप्त्येदं प्रत्युदाहरणमसंगतमिति वाच्यम्। सामान्यवचनमित्यस्याव्याप्य वचनमित्यर्थः। एवं विशेषवचनमित्यस्याव्यापकवचनम् इत्यर्थः। समानाधिकरणेत्यस्यैकधर्मबोधक इत्यर्थः। तथाच प्रकृते देवेत्यस्याव्यापकवचनत्वं वर्तते। सम्बोधनप्रकृत्यर्थस्य स्वोद्देश्यकप्रवर्तनाविषयत्वसम्बन्धेन क्रियायामेवान्वयात् क्रियाक्रियावतोरभेदोपचारात् एकधर्मबोधकत्वमप्यस्तीत्यदोषादिति केचित्। परेतु—आख्यातार्थस्य सम्बोधनप्रकृत्यर्थेऽप्यभेदान्वयः। तथाच देवदत्त त्वं पश्येत्यादौ युष्मच्छब्दार्थाभिन्नो यः कर्ता तदभिन्नदेवदत्तोद्देश्यकप्रवर्तनाविषयो देवदत्ताभिन्नकर्तृनिष्ठो दर्शनानुकूलो व्यापार इति बोधः। अत एव चैत्रमैत्रोभयकर्तृकं गमनं यत्र तत्रैकस्योद्देश्यकप्रवृत्तिविषयसम्बन्धेन क्रियायामन्वयविवक्षायामपरस्य च तिङर्थाश्रयेऽभेदसम्बन्धेनान्वयविवक्षायां 'चैत्रमैत्रौ गच्छतः' इति न प्रयोगः। मैत्राभिन्नातिङर्थकर्त्रभेदस्य सम्बोधनप्रकृत्यर्थे चैत्रे बाधितत्वात्। अत एव 'व्रजानि देवदत्त' इति न प्रयोगः। अस्मच्छब्दार्थाभिन्नाश्रयाभेदस्य देवदत्ते बाधितत्वात्। अत एव तत्र जानीहि इति अध्याहारः कृतो नागेशभट्टैः। न च सम्बोधनप्रकृत्यर्थस्यैव तिङर्थाश्रये अभेदे अन्वयेनोक्तदोषवारणात्पुनरपीदं प्रत्युदाहरणं संगतमिति वाच्यम्। चैत्रो मैत्रश्च गच्छत इत्यादिवत् हे चैत्रमैत्रौ भवास्विति प्रयोगस्याप्यापत्तेः। तथा चाख्यातार्थनिष्ठाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यताप्रयोजकत्वस्य देवेत्यस्य सत्त्वेन तत्र प्रत्युदाहरणसंगतेरित्याहुः।

**सम्बोधनमात्रद्योतकत्वेनेति।** तत्त्वं च प्रकृतवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छोद्देश्यत्वम्। तस्य प्रकृत्यर्थे स्वरूपसम्बन्धेनान्वयः। अन्यत्सर्वं पूर्ववद्बोध्यम्। **भाष्योक्तं शरणमिति।** वस्तुतस्तु—"घटसेदुषोः" "वैभाजित्वम्" इत्यर्थमकृतव्यूहपरिभाषाया आवश्यकत्वेन "चौ प्रत्यङ्गस्य प्रतिषेध" इति वार्तिकस्य नोपयोग इति बोध्यम्। अन्तरङ्गानपीत्यादिपरिभाषाचतुष्टयाकरणेन लाघवाच॥ **सामर्थ्यादिति।** वस्तुतस्तु—तादृगित्यादौ—स्वपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावत्सर्वार्थनिष्ठप्रकारतानिरूपितविशेष्यताप्रयोजकतापर्याप्त्यधिकरणघटितत्व; स्वपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावत्सर्वार्थनिष्ठप्रकारताप्रयोजकतापर्याप्त्यधिकरणघटितत्वेदुभयसम्बन्धेन सर्वादिविशिष्टत्वरूपसैद्धान्तिकोपसर्जनत्वस्य तत्तदादावभावेन न काप्यनुपपत्तिः। अत एव 'परस्मैपदे' 'सर्वेषाम्' 'प्रत्ययः' इत्यादौ स्मै सुडादिकं सिद्ध्यति। निरुक्तपरिष्कारे विशेष्यतायाः स्वेतरपर्याप्तप्रयोजकानिरूपितप्रयोज्यतावत्त्वस्य निवेशाद् "द्वियतेरप्रत्यये द्व इति प्राप्नोति स्व इति चेष्यते" इतिभाष्यस्यैकदेशयुक्तित्वमपि न कल्पनीयमिति दिक्।

**बोध्यामिति।** वस्तुतस्तु अन्तरङ्गपरिभाषायाः अनित्यत्वाच्छब्दान्तरस्य प्राप्नुवन् विधिरनित्य इति परिभाषायाः शब्दसंस्कारानुपयोगित्वेन समाहारद्वन्द्वेन प्रकृते निर्वाहे भाष्यमाणोप्युकारः सवर्णान् गृह्णाति इतिपरिभाषानाङ्गीकर्त्तव्या। अतएव "वच उम्" "सनाशंसभिक्ष उः" इत्यादौ न सवर्णग्रहणम्। तथाच "दिव उत्" "ऋत उत्" इत्यादौ तपरकरणस्यैतज्ज्ञापकत्वमेकदेशयुक्तिः। अत एव" उदुपधाया गोहः" इति सूत्रे विकृतनिर्देशप्रत्याख्यानमुदितिप्रश्लेषेण कृतमिति दिक्। **अनन्त्यविकार इति लिङ्गमिति।** अन्त्यं विकारयतीति अन्त्यविकारम्। न अन्त्यविकारमनन्त्यविकारम्, अन्त्यवृत्तिविकाराप्रयोजकमित्यर्थः। तत्त्वं च यत्किञ्चिद्रूपविशिष्टत्वम्। वैशिष्ट्यं च—स्वान्त्यवद्वृत्तिविकाराप्रयोजकत्वं, स्वावच्छिन्नसदेशानन्त्यसदेशोभयवृत्तिविकारप्रयोजकत्वं स्वावच्छिन्नानिरूपितावयवत्वावच्छिन्नोद्देश्यताकत्वैतत्त्रितयसम्बन्धेन। अत एव "णो नः" "धात्वादेः षः सः" "इकोयणचि" "सुपोधातुप्रातिपदिकयोः" इत्यादौ नास्याः प्रवृत्तिः। एतेन तत्परिभाषा लिङ्गम् स्वनिरूपितान्त्यवद्वृत्तिविकाराप्रयोजकत्वं, स्वान्त्यसदेशानन्त्यसदेशोभयवृत्तिविकारप्रयोजकत्वं, स्वनिरूपितावयवावच्छिन्नोद्देश्यताकत्वैतत्त्रितयसम्बन्धेन यत्किञ्चित्समुदायविशिष्टत्वम् इत्यपास्तम्। पौर्वशाल इत्यादौ पूर्व ङि शाला ङि अखिति समुदायवैशिष्ट्यस्य निरुक्तसम्बन्धेन त्रयेण सुपोधात्वित्यत्र सत्त्वेन राजपुरुष इत्यादौ अन्त्यसुपो लुगापत्तेः॥ **एकदेशयुक्तिरिति।** परेतु—इयं परिभाषा न लक्ष्यसिध्युपयोगिनी। "अनस्तक्षणः" "हंसशिरांसि" इत्यादौ पूर्वानुशब्दे षष्ठीप्रकृतिजन्यशाब्दबोधीयविषयताश्रयत्वे सति षष्ठीप्रकृतिजन्यशाब्दबोधीयमुख्यविषयताश्रयसमभिव्याहृतवर्णाभावघटितत्वरूपनिर्दिश्यमानत्वाभावात् पूर्वसान्तसंयोगे च सर्वनामस्थानपरकत्वाच 'मिमार्जिषति' इत्यादौ पूर्वोक्तपरिष्कृतलिङ्गाभावाच। एत-

त्परिभाषायाः प्रवृत्तौ निर्दिश्यमानपरिभाषया पूर्वोक्तनिर्दिश्यमानत्वस्याभावात् न दोषः। प्रतिपदोक्तत्वात् "मृजेर्वृद्धिः" इत्यस्य "हलादिश्शेषः" "उरत्" इत्यादि अभ्यासकार्येभ्यः पूर्वमेव प्रवृत्तौ पश्चाद्ध्रस्वे दोषाभावाच्च।

अदद्र्‍यङ् इत्येव भवति न त्वदमुयङिति तदर्थमपि परिभाषा नावश्यकी। अत एव केचिदिति। "अदसोऽद्रेः पृथगिति वाक्यद्वयेऽप्युक्तम्। अत एव "एके मुख्यान्यकेवला" इति मुख्यार्थैक इति नैकेति तृतीय वार्तिकं संगच्छते। अत एव सेर्हि दृश्यते इति अः सः अकारस्य स्थाने यस्य तस्यैव मुत्वमित्यर्थकासेर्हि दृश्यते इति संगच्छते। अत एव हिः प्रयुक्तः। स हि हेतोरसिद्धि द्योतयति। अत एव "ष्यङः सम्प्रसारणम्" इतिसूत्रे भाष्ये "किमेतस्याः प्रयोजनमिति प्रश्ने "न सम्प्रसारणम्" इति सूत्रं न कर्तव्यं भवति" इत्युक्तम्, न तु लक्ष्यासिद्धिरूपं प्रयोजनमुक्तम्। अत एव "न सम्प्रसारणम्" इति सूत्रे नैतान्येतस्याः परिभाषायाः प्रयोजनानि" इति भाष्योक्तं संगच्छत इत्याहुः।

**गौरवापत्तेरिति।** वस्तुतस्तु सम्शब्दादकचि सकमाञ्चिति स्थिते सर्वादेशार्थं सम्यादेश एव कृतो न इगागम इति बोध्यम्।

**तिरसस्तिर्य।** न च तिरसस्तिर्ये इत्येव सूत्रमस्तु–अकाराव्यवहितोत्तरत्वविशिष्टस्य तिरसस्तिर्यदेश इति वाच्यम्। आयुरपदे ऽञ्‍धातोः क्विन्यञ्च इतिजाते "नित्यवीप्सयोः" इति द्वित्वे तस्य तिरःशब्देन समासे श्रासि तिरस अञ्च इतिस्थिते अच्परकत्वेन अकाराद्यञ्चपरकत्वस्य वा सत्त्वेन तिरसस्तिर्यादेशापत्तेः। सिद्धान्ते त्वलुप्ताकाराञ्चति परकत्वाभावान्न जायते इति दिक्। **अलोप इत्यत्रेति।** अस्य लोपः अलोपः, न विद्यते लोपो यस्मिन्निति बहुव्रीहिः। सौत्रत्वान्निषेधकार्थकाशब्देन समासे नुड्भावः। ननु सवर्णदीर्घः स्यादत आह—**शकन्ध्वादीति। धातुभिन्नेतीति।** धात्ववयवभिन्नासन्तस्येत्यर्थः। **अनुवाकमिति।** तत्फलं तु क्वचिदङ्गस्येति अस्य विशेषणमिति। अत एव "जसः शी" "सर्वनाम्नःस्मै" "ङसिङ्योः स्मात्स्मिनौ" "आमिसर्वनाम्नः सुट्" इत्यादावङ्गरूपसर्वनामत्वाभावान्मासपूर्वा मासपूर्वाय मासपूर्वात् मासपूर्वे इत्यादौ स्मायादिकं न भवतीति दिक्।

अधातुग्रहणसामर्थ्याद्धातुभिन्नत्वमुपलक्षणम् न तु विशेषणमिति भावः। तत्र ह्यामो मकारस्य मित्त्वमाशङ्क्य कास्धातोः प्रत्ययान्तेभ्यश्च मिदमिदोर्न विशेष इत्युक्तम्। यदि हलन्तेभ्यः आचारक्विप् स्यात् तर्हि मिदमितोर्विशेषस्य सत्त्वादिदं भाष्यमसंगतं स्यादिति हलन्तेभ्यः आचारक्विपोऽनभिधानमिति भावः। **वाक्यापरिसमाप्तिरिति।** संज्ञाविषये उद्देश्यतावच्छेदकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकत्वस्य नियम इतिसिद्धान्तात् प्रकृते उभेग्रहणसामर्थ्यात् उद्देश्यतावच्छेदकद्वित्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकत्वम्, अभ्यस्तसञ्ज्ञायामपेक्षितामिति समुदितस्यैवाभ्यस्तसंज्ञा। एवं संयोगसमाससंज्ञयोरपि बोध्यम्।

**स्पष्टार्थमिति।** 'द्वे' इत्यनुवृत्तिसामर्थ्यादेव निरुक्तार्थलाभ इति भावः। **प्रत्यैषिषन्नित्यादाविति।** न च जुसि पदचरमावयवे कार्ये कर्तव्ये "न पदान्त" इति निषेधः कर्तव्यः शङ्क्यः। पदे अन्त इति समासे न पदपरकचरमावयवे कर्तव्ये तन्निषेधप्रवृत्तेः! न चैवमपि प्रत्यैषिषन्देवदत्तेत्यादौ "नपदान्त" इति निषेधः पुनः शङ्क्यः, प्रत्यासत्त्या परपदस्थाजादेशस्यैव तत्र ग्रहणादिति दिक्।

**व्रश्चेति ष इति।** न च भ्राजधातोः विभ्राड्" इति, भ्राजधातोः 'विभ्राक्' इति रूपद्वयसिद्धौ व्रश्चेतिसूत्रे भ्राजिग्रहणं व्यर्थमिति वाच्यम्। विभ्राक्शब्दाण्ण्यन्ताक्विपि टिलोपे संयोगान्तलोपे च स्थानिवद्भावेनावशिष्टमेकारमात्रभ्राजधातुत्वसत्त्वेन लिड् विड् विभ्राडित्यादौ षत्वार्थं भ्राजिग्रहणस्यावश्यकत्वात्। **अप्रवृत्तेरिति।** इदं च न परिभाषान्तरं किन्तु "येन विधिः" इतिसिद्धपदाङ्गाधिकार इति परिभाषावत् "पूर्वत्रासिद्धम्" इति परिभाषासिद्धं वचनम् बोध्यम्।

**वस्वन्तस्येति।** वस्वन्तं यत्तददि तदन्तस्य भस्याङ्गस्येत्यर्थः। **पदान्तपदाद्योरिति।** अत एव वेञ्धातोः क्विपि ऊदित्यादौ तुकि कर्तव्ये "संप्रसारणाच्च" इतिपूर्वरूपस्य नासिद्धत्वम्। एवं सेदुषेत्यादौ षत्वे कर्तव्येऽपि न पूर्वरूपस्यासिद्धत्वमिति भावः।

**इति स्थिते इति।** सद्सद् वस् शस् इत्यस्यां दशायां कृतद्वित्वैकाचोऽभावेन इटोऽप्राप्त्या प्रतिपदवि-

धित्वादेवाभ्यासलोपौ बाधित्वा पूर्वं संम्प्रसारणे पश्चादेवाभ्यासलोपयोर्वलादित्वाभावादिदं प्राप्तिरेव नेति सद् वस् शस् इति स्थितिरेव न सम्भवति एतस्यां स्थितौ इड्।

**पूर्वं सम्प्रसारणमिति।** एत्वाभ्यासलोपाभ्यामिति शेषः। **इत्याहुरिति।** अकृतव्यूहपरिभाषावश्यमङ्गीकर्तव्या। "चौ प्रत्यङ्गस्य प्रतिषेधो वक्तव्यः" प्रतीचः वार्णादाङ्गं बलीयो भवति अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते इत्यादिवचनचतुष्टयाकरणेन लाघवात्। अतएव 'वैभाजित्रम्' इत्यादावन्तरङ्गत्वाण्णेरयादेशे "विभाजयितु र्लोपश्चाञ्च वाच्यः" इत्यलोऽन्त्यपरिभाषया यकारस्य लोपो न भवति। न च विभाजयितुर्य लोप इति वक्तव्ये णिलोप इति कथनं सर्वलोपार्थं भविष्यतीति नेदं फलमिति वाच्यम्। 'घटसेदुषोः' इत्यादौ पदावधिकेऽन्वाख्याने प्रथमान्तानामेव द्वन्द्वे इति सिद्धान्ताद् घट स् सेदि वस् स् इति स्थिते इट् सम्प्रसारणयोः प्राप्तयोरुभयोरपि प्रतिपदविधित्वादिति परिनिष्ठिते श्रवणाभावायाकृतव्यूहपरिभाषाया आवश्यकत्वात्। 'अतिस्थाता' इत्यादौ अन्तरङ्गमपि ष्टुत्वं धातुसंज्ञाप्रवृत्तेः प्राक् सत्वाप्राप्त्या न भवतीत्याहुः।

**असिद्धेरिति।** वस्तुतस्तु अदस् औ इति स्थिते पदात्यत्वयलोपयोः प्राप्तयोः प्रतिपदविधित्वात्परत्वाच प्राप्तं त्यदाद्यत्वं बाधित्वा पूर्वं परत्वात्सत्वे पश्चादुक्तयुक्त्या त्यदाद्यत्वे असाविति रूपे सोऽडाविति न्यासः सुवच एव। न चादस् शब्दाण्ण्यन्तात् क्विपि टिलोपे "तदोः सः सौ" इति सूत्रे अनन्त्ययोरितिभाष्ये प्रत्याख्यानत्वेन यथोत्तरं मुनीनामिति परिभाषया परत्वात्सत्वे असाविति रूपसंपत्त्यर्थं तथान्यासः कर्तुं न शक्यत इति वाच्यम्। णिलोपस्य स्थानिवद्भावेन त्यदाद्यत्वसत्वादेस्तत्राप्रवृत्तेः। सत्वोत्तरं त्यदाद्यत्वे भवदुक्तदिशाऽपि आवित्येव रूपापत्तेश्च। **कृतेचेति।** "आङोनास्त्रियाम्" इति शास्त्रप्रतिबन्धके असिद्धत्वं न भवतीत्यर्थः। तथाचादसोऽसेरित्येकवाक्यतापन्नपूर्वत्रासिद्धमितिशास्त्रे "अकः सवर्णेदीर्घः" "आद्गुण" "टाङसि" "आङोना "सुपिच" इत्येतदतिरिक्तपूर्वत्र कर्तव्ये मुत्वमसिद्धं भवतीति मुत्वस्यासिद्धत्वाद् गुणसवर्णदीर्घतादिकम् अमुनेत्यादौ बोध्यम्।

इति हलन्ताः पुँल्लिङ्गाः।

---

**पदान्तेविद्यमानस्येति।** पदान्तस्येत्यर्थः। यथाश्रुतं तु न सम्यक्। 'न हौ' इत्यादौ स्वघटकत्व, स्वघटकावधिकोत्तरत्वं, स्वघटकावधिकपूर्वत्वाभाववत्त्वैतत्त्रितयसम्बन्धेन स्वविशिष्टत्वरूपपदान्तत्वस्य नहाविति समुदाये सत्त्वेन तत्र विद्यमानत्वाद्धत्वापत्तेः। **हल्ङ्याबादिलोपइति।** न च येन नाप्राप्तिन्यायेन हल्ङ्यादिलोपेन पदान्तत्वनिमित्तकधत्वजश्त्वादेर्बाधात् पुनर्धत्वजश्त्वे न स्यातामिति वाच्यम्। तक्रकौण्डिन्यन्यायस्यानित्यत्वेनादोषात्। अत एव 'स' इत्यादौ त्यदाद्यत्वोत्तरं सत्वं भवतीति दिक्। **सर्वाशब्दवदिति।** नचैकशब्दाट्टापि पश्चात्त्यदाद्यत्वे एकेतिरूपं न स्यात्। तथा या सा इत्यादौ त्यदाद्यत्वे टापि सवर्णदीर्घे पुनरपि त्यदाद्यत्वं स्यादिति कथं सर्वाशब्दवद्रूपाणि भवन्ति। या सेत्यादौ लक्ष्येलक्षणन्यायेन पुनस्त्यदाद्यत्वं न भवतीति वक्तुमशक्यम्। काण्डे कुडचे इत्यादाविव स्वीयप्राथमिकप्रवृत्तावुद्देश्यतावच्छेदकावच्छिन्नत्वेनाश्रीयमाणो यावान् शब्दसमुदायस्तदघटको यस्तद्घटकमात्रोद्देश्यकविकारागमातिरिक्तस्तदघटितत्वे सति स्वीयप्राथमिकप्रवृत्त्युत्तरकालिकप्राप्तिभिन्नप्राप्तिविषयाघटितत्वरूपतल्लक्ष्यत्वस्य टापः त्यादादीनामित्येतच्छास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नत्वेनाश्रीयमाणशब्दसमुदायघटकत्वेन टापः प्रत्ययत्वेन तद्घटकमात्रोद्देश्यकविकारागमाघटकत्वेन च तत्स्थानिकसवर्णदीर्घस्य च निरुक्तसमुदायघटकमात्रोद्देश्यकविकाराघटकत्वाच्च निरुक्ततल्लक्ष्यत्वस्याभावात्। स्वीयप्राथमिकप्रवृत्त्युत्तरकालिकप्राप्तिभिन्नत्वस्य विशेषणदानात् 'षट्त्सु' इत्यादौ षट् ध इति स्थिते "खरि च" इत्यादौ वैयधिकरण्येनान्वये पदस्येत्यधिकारसत्त्वेऽपि धुटश्चर्त्वोत्तरं (घ) अस्य पुनश्चुत्वं (सिद्ध्यतीति भावः) स्यादिति वाच्यम्। त्यदादीनामित्यत्र (स्य) तन्त्रेण निर्देशं स्वीकृत्यावृत्या प्रकारार्थकादिशब्देन बहुव्रीहिणा त्यदादिसदृशानां त्यदादीनामित्यर्थेन तदन्तान्तत्वेन सादृश्यस्वीकाराद् (अ) तदन्तत्वेन त्यदादिसदृशानामेवात्वाप्राप्त्या टाबुत्तरयदन्तत्वाभावादेव त्यदाद्यत्वाप्राप्तेः। अङ्गकार्यप्रवृत्त्यसम्भावनायां पूर्वं वार्णोद्देश्यकं कार्य्यं न भवतीति टापः वर्णोद्देश्यकत्वेन पूर्वं त्यदाद्यत्वे पश्चात् टाप्येकेति रूपसिद्धेश्च। न च पूर्वोक्तदि-

शा निरुक्तत ल्लक्ष्यत्वाभावेन पुनस्त्यदाद्यत्वं दुर्वारमिति वाच्यम्। भवतीत्यादौ निरुक्तदिशा तल्लक्ष्यत्वस्याभावात् पुनश्च प्राप्त्या पारिनिष्ठितत्वापत्त्या तद्वारणाय तल्लक्ष्यत्वपरिष्कारे पूर्वोक्तसमुदायघटकोद्देश्यकप्रत्ययाघटकत्वस्यापि निवेशेन तल्लक्ष्यत्वस्य सत्त्वादिति दिक्।

इतिहलन्ताः स्त्रीलिङ्गाः॥

---

**समासचरमावयवइति**। चिन्त्यमिदम्। 'अत्रयो' 'भृगव' इत्यादौ समासचरमावयवत्वाभावेन "उत्तरपदत्वे च" इति निषेधाप्रवृत्तौ सुबन्तात्तद्धितोत्पत्तिरिति सिद्धान्तेन "अत्रिभृगु" इतितद्धितलुकि प्रत्ययलक्षणेन सुबन्तत्वेन पदत्वाद् "एङः पदान्तादिति" पूर्वरूपापत्तेः। तस्मादुत्तरपदं यद्वृत्त्यारम्भकसुब्निमित्तकपदसञ्ज्ञाचिकीर्षिता—स्वघटकत्व—स्वघटकार्थवदव्यवहितपूर्वत्वाभाववत्त्वोभयसम्बन्धेन तादृशवृत्तिविशिष्टत्वरूपमुत्तरपदत्वं बोध्यम्। अत एव बहुच्घटिते "बहुसेचौ" इत्यादौ समासचरमावयवत्वाभावेऽपि परिष्कृतोत्तरपदत्वसत्त्वान्न कुत्वादिकम्। एतेन बहुच्पूर्वस्य प्रत्ययलक्षणं न भवत्येतदर्थकम् "बहुच्पूर्वस्यापदादिविधौ" इति वचनान्तरं कल्पनीयमित्यपास्तम्। यद्वृत्त्यारम्भकेत्याद्युक्त्या 'परमलोम्निशयः' 'परमलोम्निचरः' इत्यादौ परम स् लोम स् इत्येतद्वृत्त्यारम्भकसुब्निमित्तकपदसञ्ज्ञायाश्चिकीर्षितत्वेन निरुक्तोभयसम्बन्धेन तद्वृत्तिविशिष्टत्वरूपोत्तरपदत्वस्य लोमन् इत्यत्र सत्त्वेन न भवति। निरुपरिष्कारे स्वघटकार्थवदव्यवहितपूर्वत्वाभाववत्त्वस्य निवेशात् 'पञ्चगवधन' इत्यादौ पञ्चन् जस् गो जस् धन सु इत्येतद्वृत्त्यारम्भकसुब्निमित्तकपदसञ्ज्ञायां चिकीर्षितायामपि तद्घटकार्थवद्धनाव्यवहितपूर्वत्वस्याकिञ्चित्करत्वाच्च। निरुक्तोत्तरपदत्वस्य गो इत्यत्र सत्त्वात् प्रत्ययलोपो न सुबन्तत्वमादाय नपूर्वरूपादिकम्। 'पूर्वदण्डिप्रिय' इत्यादौ पूर्वसु दण्डिसु इत्यत्र तत्पुरुषप्रवृत्तेः सत्त्वेन तद्वृत्तिविशिष्टत्वरूपनिरुक्तोत्तरपदत्वस्य विशिष्टवृत्तेरपि तयोरेव सुपोः प्रयोजकत्वेन सामान्यतो निरुक्ततादृशवृत्तिविशिष्टरूपोत्तरपदत्वस्यासत्त्वात् प्रत्ययलक्षणेन नलोपः सिद्धः। 'परमदण्डिप्रिय' इत्यादौ तु परमण्डिप्रकृतिकसुपः प्रत्ययलक्षणेन न लोपः सिद्ध्यतीति दिक्।

**तत्प्रयुक्तकार्यइति**। अत एव अटतीत्यटः परमश्चासौ अटश्च परमाटः तस्मादाचारक्विबन्ताद्। "क्विप्चौ च" इति क्विपि "तितुत्र" इति इडभावे अतो लोपे परमाट्तिरित्यादौ उत्तरपदत्वस्य चिकीर्षितत्त्वाभावात् "उत्तरपदत्वे च" इति निषेधाप्रवृत्तौ प्रत्ययलक्षणेन पदत्वेन "न पदान्ताट्टोः" इति। ष्टुत्वनिषेधः सिद्ध्यति इति दिक्। एतदेव स्पष्टं प्रतिपादयन्नाह—**उत्तरपदस्य कार्यित्वे एवेति**। **ङसुट्सूत्रे उक्तमिति**। अस्माभिरपि यदत्र वक्तव्यं तत्तत्रैवोक्तम्। **वचनान्तरादिति**। इदं वचनं कल्पनीयामिति अनुपदमेव वक्ष्यामः। **मध्यमपदानाक्रान्तेति**। मध्यमत्वं च यद्वृत्त्यारम्भकपदसञ्ज्ञाचिकीर्षिता तद्वृत्तिविशिष्टत्वम्। वैशिष्ट्यं च स्वघटकत्वं, स्वघटकार्थवदव्यवहितपूर्वत्व, स्वघटकार्थवदव्यवहितोत्तरत्वैतत्त्रितयसम्बन्धेन। अत्र यद्वृत्त्यारम्भक इत्याद्युक्त्या 'परमलोम्निशयः' 'परमलोम्निचरः' इत्यादौ लोमन्नित्यस्य न निरुक्तमध्यमपदत्वम्। एवं माषकुम्भवापेनेत्यादौ माषेत्यस्य न मध्यमत्वम्। अत्रार्थवदिति निवेशात् 'पञ्चगवधन' इत्यादौ गो इत्यस्य न निरुक्तमध्यमपदत्वम्। एवम् 'अत्रयो' 'भृगव' इत्यादावपि न मध्यमत्वम्। किन्तु 'पूर्वदण्डिप्रिय' इत्यादौ दण्डिन्नित्यस्यैव मध्यमत्वम्। 'परमदण्डिप्रियः' इत्यादौ दण्डी इत्यस्य निरुक्तमध्यमत्वाक्रान्तत्वे ऽपि परमदण्डिप्रकृतिकसुपमादायैव प्रत्ययलक्षणं भवतीति न कुत्रापि दोषलेश इत्यन्यत्र विस्तरः। **नपुंसकैकवचने एनदिति**। "नपुंसकैकववचने वक्तव्यः" इदं कुण्डमानय प्रक्षालैयनदित्यादि "यद्येनत्क्रियते एनो न वक्तव्यः। का रूपसिद्धिः? अथो एनं अथो एने अथो एनानि इति त्यदाद्यत्वेन सिद्धमिति, यद्येवमेनच्छ्रिन्तक्को न सिद्ध्यति? एतच्छ्रितक इतिप्राप्नोति, यथालक्षणमप्रयुक्ते" इति भाष्येण सामान्यतो द्वितीया……त्वेन…… एनदिशो न प्राप्नोति इति भाष्यादायाति। न च त्यदाद्यत्वस्य येन नाप्राप्तिन्यायेनैनादेशेन बाधनाद् एनं एनौ एनानि इति रूपाणि न सिद्ध्यन्तीति वाच्यम्। इदमो म इति ज्ञापकेन विभक्तिनिमित्तककार्ये तत्र न्यायो न प्रवर्तते इति कल्पनेनैनादेशोत्तरं त्यदाद्यत्वेन रूपसिद्धेः। अत एव "नयासयोः" इति-

निर्देशः सङ्गच्छते। अन्यथा "तदोः सः सौ" इति सत्त्वेन येन नाप्राप्तिन्यायेन त्यदाद्यत्वाभावे तदसङ्गतिः स्पष्टैव। अत एव 'अनड्वान्' 'हेऽनड्वन्' अयम् उशना। इयम् स इत्यादौ आममयमनड्यादेश-सत्वैर्हल्ङ्याद्दिलोपत्यदाद्यत्वादीनां तक्रन्यायेन बाधो नेति दिक्।

**यथालक्षणमप्रयुक्ते इति।** अप्रयुक्ते काव्यकोशपुराणादावप्रयुक्ते लक्षणमनतिक्रम्य प्रयोगः कर्तव्य इत्यर्थः। यथालक्षणमित्यत्र पदार्थानतिक्रमवृत्तौ अव्ययीभावः। यथालक्षणमित्यत्र यथाअलक्षणमिति च्छेदः। लक्षणपदं लक्षणप्रवृत्तिपरम्। योग्यतायामव्ययीभावः। तथाचाप्रयुक्ते लक्षणाभावयोग्यतेति एतादृशानामनभिधानमिति। तन्न। अप्रयुक्ते 'त्वकत्पितृक' इत्यादौ "न बहुव्रीहौ" इति लक्षणातिक्रमस्य दृष्टत्वात्। लक्षणपदस्य लक्षणप्रवृत्तौ मानाभावात्। यथा अलक्षणमिति छेदे मानाभावात्। तस्माद-प्रयुक्तस्य प्रयोगो यथाशास्त्रं कर्तव्यमित्येवार्थ इति दिक्॥

**सम्बुद्धाववृत्तिरिति।** एतेन परमाहन् शब्दाण्ण्यन्तात् क्विपि टिलोपे तत्र नलोपाप्राप्त्या तत्र परमाह्नां रूपमिति स्थिते सूत्वसम्पादनार्थं रूपरात्रिरथन्तरमिति वार्तिकं चारितार्थमिति अपास्तम्। भाष्य-प्रामाण्येन तादृशानामनभिधानस्यावश्यकत्वात्। इत्यलमिति। वस्तुतस्तु—तक्रकौण्डिन्यन्यायस्या-नित्यत्वेन रुत्वरत्वाभ्यां नलोपस्य बाधसम्भवाद् अहन्नित्यस्यावृत्त्या नलोपाभावो निपातनीय एव। रुत्व रत्वयोरसिद्धत्वेन पूर्ववन्नलोपे बाधाभावाच्च। येन नाप्राप्तिन्यायेन रुत्वरत्वाभ्यां नलोपस्य बाधेऽपि पूर्वत्रासिद्धमिति असिद्धत्वबाधे मानाभावाच्चेति दिक्। **तदुक्तमिति।** अत्पूर्वस्येति विभक्तसूत्रस्य इस्थानिककवर्गाभाववद्धन्तेरुपलक्षणस्योक्तत्वादिति भावः। **नदोषइति।** यादृशवर्णत्वव्याप्यजातिनिमि-त्तकं यत् कार्यं तत्र तादृशवर्णत्वव्याप्यजातिरातिदिश्यत इति एतदर्थकवर्णग्रहणे जातिग्रहणमिति परि-भाषया इति भावः॥ उभयत आश्रयणे इति परिभाषाऽनङ्गीकर्तृस्वमतेऽप्याह—व्यपवर्गालभिनचेति। **लुप्तप्रत्ययनिमित्तकाङ्गस्येति।** लुप्तप्रत्ययनिमित्तकाङ्गसञ्ज्ञावत्पर्याप्तधर्मेण साक्षात् परम्परया वाऽ-वच्छिन्नेत्यर्थः। **कार्यइति।** लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवछिन्नोद्देश्यके कार्ये कर्तव्ये इत्यर्थः। **अधातुत्वादिति।** धनुः शब्दस्य "धनेरुरस्" इत्यादौ उरसि प्रत्ययान्तत्वादव्युत्पन्नत्वाच्चेति भावः। **झल्ग्रहणेन ग्रहणादिति।** अनुस्वारस्य शर्षुपाठादिति भावः। **द्वयोरनुस्वारइति।** वस्तुतस्तु—द्वयो-र्नकारयोर्वर्णग्रहणे जातिग्रहणमिति परिभाषया एक एवानुस्वार इति सकलेष्टसिद्धिरिति दिक्।

इति हलन्तानपुंसकलिङ्गाः॥

---

## अव्ययप्रकरणम् ।

"स्वरादि" । **प्रयोजनं सर्वनामाऽव्ययसंज्ञायामिति** । "येनविधिः" इतिसूत्रस्थवार्तिकात् सर्वाद्यन्ताने निपातानि शब्दस्वरूपाणि अव्ययसंज्ञानि भवन्तीत्यर्थः । नन्वेवमत्युच्चैरित्यादिशब्दानामव्ययसंज्ञापत्तिरितिचेन्न । सर्वादिसूत्रस्थस्य "संज्ञोपसर्जनप्रतिषेध" इति वार्तिकस्यानुवृत्त्या सर्वनामसंज्ञासाहचर्याच्च प्राधान्येनप्रसिद्धासत्त्ववाचिनामेवाव्ययसंज्ञाविधानेनादोषात् । **इत्यापत्तिरिति** । "तत्पुरुषे तुल्य" इतिस्वरापत्तिस्तु न दोषः । तत्र "अव्यये नञ्कुनिपातानाम्" इतिपरिगणनेनाव्यये नञ्चादीनामितीदृशीं परिगणनेनादोषात् । न च "निपाता आद्युदात्ता" इत्यत्र चादय आद्युदात्ता इतिपाठेनायं दोषो नेति वाच्यम् । "ऊर्यादिच्विडाचश्च" इतिसूत्रविहितनिपातसंज्ञकानामाद्युदात्तत्वानापत्तेः । **अनुकरणाच्चेति** । तथा च कार्यानुकरणयोरभेदाविवक्षायामर्थवत्सूत्रोक्तार्थवत्त्वस्याभावान्न स्वाद्युत्पत्तिरिति भावः । सादृश्यज्ञानाधीनार्थवत्त्वस्यैव तत्र सत्त्वात् । **अनेकशक्तिप्रधानतेति** । अपादानत्वाद्यनेकशक्तिप्रधानतेत्यर्थः । **मत्वापत्तेरिति** । वस्तुतस्तु मान्तानुकरणेऽपि प्रकृतिवदनुकरणमिति परिभाषया मत्वस्य सुलभत्वात् । **एकवचनमेवेति** । विनिगमनाविरहेण यथायोग्यं सर्वमेवैकवचनमिति बोध्यम् । **सर्वविभक्त्यैकवचनमिति** । अत एव "नाव्ययीभावात्" इतिसूत्रे "अपञ्चम्याः" इतिपर्युदासः संगच्छते । **तदन्तविधिरिति** । 'असर्वविभक्तिः" इति विशेष्यत्वेन संज्ञानिष्ठविधेयतानिरूपितसाक्षादुद्देश्यताप्रयोजकत्वस्य तद्भिन्नपदेऽभावेन "संज्ञाविधौ" इति निषेधाप्रवृत्तेरिति भावः ।

**सुधियो विभावयन्त्वित्ति** । भट्टीग्रन्थस्येत्थं विभावना, निपातसंज्ञाभावे "ओत्" "निपाता आद्युदात्ताः" "निपातैर्यद्यदि" हन्तेत्यादौ विशिष्टरूपोपादानाभावेन गौणमुख्यन्यायप्रवृत्तौ "अगोभवत्" इत्यादौ च्विप्रत्ययस्यापि निपातत्वापत्तिः । न च "चादयोऽसत्त्वे" इत्यत्रापि चकारनिष्ठादितानिरूपकसमुदायघटकत्वोपलक्षितधर्म्मावच्छिन्ने लक्षणा स्वीक्रियत इति विशिष्टरूपोपादानत्वं वर्तत इति वाच्यम् । एवं रीत्या सूत्रखण्डने इक्पदस्याऽजव्यवहितपूर्वत्वविशिष्टे लक्षणां स्वीकृत्य अजित्यस्यापि खण्डनप्रसङ्गः स्यादित्यलम् । **अधिकरण शक्तिप्रधानाविति** । इदं न समञ्जसम् । "उच्चैः कुलं चात्मनः" "मारीचमुच्चैर्वचनं जगाद" "उच्चैर्गतिर्जगति" इत्यादौ तथात्वाभावात् । **णयन्तानामेवेतीति** । तेन द्वावङ्गावित्यादौ "कृष्मेजन्तः" । इति न । **उत्सर्ग इति** । अयम्भावः एकवचनप्रवृत्तावेकत्वबोधकत्वं न कारणं किन्त्वेकत्वतरसंख्याबोधकत्वाभाव इति नोक्तानुपपत्तिः । एवं "स्वमोर्नपुंसकात्" "अतोऽम्" "वर्त्तमाने लट्" इत्यादावपीति दिक् ।

**अविनिगमकत्वादिति** । इदम् न रमणीयम्, नियामकशास्त्रे द्वितीयायाः प्रथमतो विधानेऽपि तस्याः प्रथमेति व्यवहाराभावेन सुऔजसामेव प्रथमत्वात् । कैय्यटोक्तखण्डनमपि कैय्यटाशयापर्य्यालोचनया । तेषां पुनरयमाशयः—अव्ययेभ्यः सप्ताप्येकवचनानि भवन्ति, किन्तु व्यवस्थया द्वावित्यादौ द्विवचनस्येव त्रय इत्यादौ बहुवचनस्यैवानुवादकविभक्तेन्यांय्यत्वात् । यादृशार्थबोधकमव्ययं तादृशार्थबोधकमेकवचनम्, यथोच्चैरित्यादावधिकरणशक्तिप्रधानत्वात्सप्तम्येकवचनमेव । एवं "अधिहरि" इत्यादावपि । तत इत्यादौ पञ्चम्येकवचनमेव । स्वयमित्यौ तृतीयैकवचनमेव । यत्र किमपि नियामकं नास्ति तत्र प्रथमोपस्थितत्वात्प्रथमैकवचनमेवेति । **ज्ञापनाच्चेति** । वस्तुत इदं ज्ञापकं न सम्यक् । व्यासिन्यायेन सर्वेषां ग्रहणप्रसङ्गात्, तद्वारणार्थं त्रयाणामित्यादेरावश्यकत्वात् । **प्रकरणाच्चेति** । एकवचनप्रवृत्तावेकत्वेतरसंख्याबोधकत्वाभावस्य निमित्तत्वादेकत्वबोधेऽपि क्षतिविरहादयं प्रयासो व्यर्थ एव । **विशेष्य इति** । तेन "तद्धित" इत्यस्य विशेष्यत्वाभावेन संज्ञाविधावित्यस्य न प्रवृत्तिः । असर्वविभक्तिरित्यस्य विशेष्यत्वे प्रमाणमाह—**फलाभावादिति** ।

**संज्ञापत्तिरिति** । न च "अव्ययादाप्सुपः" इत्यादौ विहितविशेषणादत्र लुकोऽप्राप्त्या नैव दोष इति वाच्यम् । अव्ययाद्विहित इत्यस्याव्ययनिष्ठोद्देश्यतानिरूपितविधेयस्य सुपो लुगित्यर्थवर्णनेनादोषात् । "अव्ययकृतो भावे" इत्यादौ अव्यय इत्युपादानात् । ततश्चात्र सुप्तन्निमित्तककार्योत्तरमेव तत्संज्ञाप्राप्तिरिति शङ्कासङ्गतिः । **अत्राप्यापत्तेरिति** । अयम्भावः, अव्ययस्य लिङ्गसंख्याद्यनन्वयित्वेऽव्ययसंज्ञैव मानम् ।

तिः । **साक्षात्परम्परया वेति** । अत्र परम्परा च गुणशास्त्रघटितैव ग्राह्या । अत एवोखतुरीयतुरित्यादिद्वित्वं सवर्णदीर्घस्य निमित्तं भवत्येव । अन्यथा सवर्णदीर्घस्य इजादित्वसम्पादनद्वारा स्वनिमित्तविज्विघातकत्वात् तं प्रत्यनिमित्तमेव स्यात् । एवं संज्ञाघटितपरम्परापि स्वप्रयोज्यकार्यमात्रघटितैव बोध्या। अन्यथा ऊखतुरीयतुरित्यादावभ्याससंज्ञैव न स्यात्, परम्परया स्वनिमित्तविघातकत्वादभ्याससंज्ञाप्राप्ति द्वित्वस्यानिमित्तकत्वादिति दिक् । **अधिकरणप्रधानस्यापीति** । अधिकरणत्वे उच्चैस्त्वे च खण्डशः शक्तिरिति, "उच्चैः स्थलम्"इत्यादौ अधिकरणत्वरूपखण्डविमोकोऽपीति न कार्य्यानुपपत्तिः। **लिङ्गाद्यनन्वयित्वविशिष्टेति** । अत्र प्राप्ताप्राप्तविवेकन्यायेन निरुक्त (स) वैशिष्ट्यस्य सिद्धत्वादव्ययपदे एव शक्तिरिति भावः । **अनुपसर्जनीभूतस्येति** । अत्रानुपसर्जनत्वं च लिङ्गाद्यनन्वयनिष्ठोपस्थितीयमुख्यविशेष्यता समानाधिकरणा या अन्वयपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावद्विशेष्यतानिरूपितप्रकारतासमानाधिकरणा शाब्दबोधीया विशेष्यता तादृशविशेष्यताप्रयोजकत्वेन तात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वम् । इदमेवानुपसर्जनत्वं सर्वनामसंज्ञायामपीति दिक् ।

ननु देवविशामित्यस्य हलन्तत्वाभ्युपगमेऽपि द्वितीयैकवचने हलन्तयो रूपेविशेषाभावात् तत्कथमस्य प्रयोगस्यानृतत्वबोधकत्वमित्यरुचेराह–**अन्त्ये इति** । स्वरे विशेषस्य सत्वादिति भावः । तथाहि–अदन्तत्वे हि कप्रत्ययान्तत्वेन देवविशशब्दस्य थाथादिस्वरेणान्तोदात्तत्वे अम् विभक्तेरनुदात्तत्वेऽपि "एकादेश उदात्तेनोदात्तः" इत्युदात्तत्वेन देवविशामित्युदात्तं श्रूयते । हलन्तत्वे तु क्विबन्तत्वात् "गतिकारकोपपदात् कृत्" इति कृदुत्तपदप्रकृतिस्वरेणान्तोदात्तत्वे विभक्तेरनुदात्तत्वे "उदात्तादनुदात्तस्य स्वरित" इति स्वरितत्वं प्रसज्येत इति विशेषमुपपाद्य "तस्मात् क एष एवं विषय" इति भाष्ये उक्तम् । तस्मात् -स्वरविशेषस्य सत्त्वात् । एवं विषयः— स्वरविशेषविषयः । एष- देवविशामित्यत्र श्रूयमाणोऽकारकः कप्रत्ययः इति भाष्यार्थः । तस्मात् देवविशमित्यस्यादन्तत्वादेव टाप् । ततश्च अ.बूग्रहणं व्यर्थमित्यस्य बहुराजेति डाबन्तार्थत्वमिति समाहितम् । निशा इत्यादौ हलन्तेभ्यष्टाप्स्वीकारे तु तदर्थमेवाप्ग्रहणस्य सार्थक्यात् डाबन्तपर्यन्तानुधावनं व्यर्थमिति दिक् ।

---

## स्त्रीप्रत्ययप्रकरणम् ।

**उपचयापचयरूपमिति** । सत्वस्योपचये रजस्तमसोः परस्परं न्यूनाधिक्ये एव वा पुंस्त्वम् । रजस उपचये सत्त्वतमसोः परस्परं न्यूनाधिक्ये वा स्त्रीत्वम् । तमस उपचये रजःसत्त्वयोः परस्परं न्यूनाधिक्ये वा नपुंसकत्वमिति भावः । लोके पुरुषस्य प्रायः सत्त्वाधिक्यस्य, स्त्रियाश्च रजस आधिक्यस्य च दर्शनात् । अत एव पुरुषस्य स्थैर्यादिकमधिकम् शुक्रं च । स्त्रियश्च चांचल्यादिकमधिकं शोणिताधिक्यं च नपुंसकस्य मोहाधिक्यं च ।

अन्ये तु सत्त्वादिगुणत्रयोपचयः पुंस्त्वम् । सत्त्वादिगुणापचयः स्त्रीत्वम् । सत्त्वादिगुणसाम्यं नपुंसकत्वमित्याहुः । **केशवदिति** । केशोऽत्र भगः । "कामिन्यकेशी जैमिन्य"इत्यादौ तथा दर्शनात् । **लोमश इति** । लोमाऽत्र पुरुषलिङ्गम् । इत्यन्यत्र **विस्तर इति** । न च ब्रह्म पुरुषश्च स्त्री चेत्यादौ पुंस्त्वाद्यनुपपन्नम् । ब्रह्मणो निर्गुणत्वादिति वाच्यम् । परमात्मनो निर्धर्मकत्वेन तस्य शब्देन बोधयितुमशक्यत्वेनारोपितपुंस्त्वादिना तद्बोधनेनादोषात् । **इत्यर्थ इति** । स्त्रीत्ववाचकतापर्याप्त्यधिकरणं यदजादिपदं तदन्तादन्ताच्च टाप् भवतीति भावः । **विशेष्यत्वापत्तिरिति** । प्रत्ययाश्चाङ्गस्य प्रकारतया भासन्त इति नियमादिति भावः । **अजादिष्वकारान्तपाठ इति** । एतेनाजादिष्वनकारान्तपाठोऽप्यस्तीत्यवगम्यते । अत एव "क्त्वायामादेशः" इति प्रयोगात् क्त्वाऽदन्तस्याजादौ पाठ इत्यभियुक्ताः । **स्त्रीत्व इति** । तथा च पञ्चाजीत्यादौ स्त्रीत्ववाचकतापर्याप्त्यधिकरणं समासे एव नत्वजशब्दे इति न टाबिति बोध्यम् । **इति भाव इति** । स्त्रीत्वानिमित्तकत्वे सति विभक्त्यनिमित्तकत्वरूपपदकार्यस्याभावादिति भावः । अत्र सत्यन्ते प्रमाणं जातीत्येव । अन्यथा शूद्रीत्यादौ गौणमुख्यन्यायेन टापो वारणे तद्वैयर्थ्यं स्पष्टमेव ।

ततः **स्त्रीत्वविवक्षायामिति** । चिन्त्यमिदम् । पूर्वं स्त्रीत्वस्याविवक्षायां पश्चाद्विवक्षाया असम्भवात् । तस्मादुपसंजनिष्यमाणन्यायेन 'जातिलक्षणङीषोऽभावे टाप्प्रवृत्तयेऽमहत्पूर्वेति बोध्यम् । **अमहत्पूर्वेति**

पदाभावे यदि पूर्वं ङीप् स्यात्तर्हि टाप् स्यादित्यपवादप्रवृत्तिसम्भावनाया: सत्त्वेन पूर्वमुत्सर्गस्याप्रवृत्तेरि-ति दिक्। अजादिष्वनकारान्तपाठोऽप्यस्तीत्यत्र प्रमाणमाह—टायामादेश इति । केचिदिति। चिन्त्य-मिदम् । श्रीमच्छङ्करभगवत्पादैः श्रीमन्महामहोपाध्यायवाचस्पतिमिश्रैश्च "छागा" इति टाबन्तस्य प्रयुक्तत्वेन तस्याजादित्वकल्पने संशयग्रहाभावात्। इति भाव इति। अनुदात्तादेराजित्यादावेतत्परिभाषाया अप्रवृत्तये प्रातिपदिकत्वव्याप्यधर्मावच्छिन्नग्रहणे एवेयं परिभाषा प्रवर्तत इति स्वीकाराच्चेत्यापि बोध्यम्।

तदन्ताच्चेतीति। वन्नन्तं यत्तदादि तदन्ताच्चेत्यर्थ. । असिध्यापत्तेरिति । न च सूत्रकृन्मते विभाषेत्यनुवृत्तावपि द्विपदा द्विपादित्येव सिध्यति, न तु द्विपदीति वाच्यम् । टाबृचीत्यत्र ङीषोऽप्यनुवर्त्य-ङीप्टापोर्विकल्पेन रूपत्रयस्य सिद्धेः। अत एव "न षट्स्वस्रादिभ्यः"इत्यनेन ङीपोऽपि निषेधः सिध्यति। न चैवमपि "प्रियपञ्चा द्रौपदी"इत्यत्र डाप् दुर्वार इति वाच्यम् । डाबुभाभ्यामिति सूत्रे षडित्यनुवर्त्य वाक्यभेदेन डापो निषेधेनादोषादिति दिक् ।

भूतपूर्वगत्येत्ति । नलोपे स्थानिवद्भावेन पूर्वं भूतस्य पदत्वस्यातिदेशेन अदोषादिति भाव:। नियमार्थमिति । अनो बहुव्रीहेः, अन्यतरस्याम, अन्नानोबहुव्रीहेरिति सम्पूर्णसूत्रं ङीप् चानुवर्तते । ततश्च बहुधीवरी बहुधीवेति सिध्यति। बहुव्रीहौ वेति वार्तिकं न कर्तव्यम् । ननु बहुराज्ञी इत्यादौ "ऋन्नेभ्यः" इति ङीपि सिद्धेः "अन उपधेति"सूत्रं व्यर्थं स्यादिति चेदाह—नियमार्थमिति । अन्नन्ताद्यदि-ङीबुपधालोपिन एवेति। तेन सुपर्वा बहुयज्वेत्यादौ न ङीप् नापि रादेश:। अस्य नियमस्य निषेधमुखेनैव प्रवृत्तिः—उपधालोपिभिन्नान्नन्तबहुव्रीहेर्ङीप् न भवतीति। विधिमुखेन प्रवृत्तावपिति। चिन्त्यामिदम्, विधिमुखेन प्रवृत्तौ नियम्यनियामकशास्त्रयोरुभयोरुदाहरणासम्भवेन दोषात् । न सम्बन्धोऽत इति। अयं ग्रन्थच्छब्दरत्नग्रन्थेन साकं विरुणद्धि। नातिप्रसङ्ग इति । अनेकव्यवधानादिति भावः । एतिकेत्यसिद्धिरिति । वस्तुनस्तु ककाराकारसहितसंघातोच्चारणेऽपि नानुपपत्तिः । ऐतिकेत्यादावेकादेशविशि-ष्टस्यापि क इत्यस्यानुकरणसम्भवात्। सकृदेव प्रवृत्तिरिति। स्यादेतत् । स्थानिवद्भावविषये सुनायिके-त्यादौ आयादेशघटिते धातुत्वानापत्तिः, द्विवारं स्थानिवद्भावमन्तरा तत्र धातुत्वस्य दुर्लभत्वात्। एवं तण्डुलानित्यादौ पदत्वानापत्तिः । एवमियायेत्यादौ स्थानिवद्भावद्वयादिकारे वर्णाश्रयत्वाभावेन "अभ्या-सस्यासवर्णे"इत्यस्य वैयर्थ्याभावे तद्वैयर्थ्येनाभ्यासकार्ये तदुत्तरखण्डाजादेशस्य स्थानिवत्त्वं नेत्यादि स्वग्रन्थ-विरोधश्चेति चेन्मैवम, आदेशभेदात् स्थानिवत्सूत्रं भिन्नं भिन्नम् । तथा चैकस्मिन्नादेशे एकवारमेव स्थानिवद्भावो न द्विवारमित्यदोषात्। तथा च तत्तदादेशव्यक्तेस्तत्तत्स्थानिवद्भवतीत्यस्योपसङ्ग्राहकं स्था-निवत्सूत्रम् । न च सूत्रे येन रूपेण स्थानिता येन रूपेण चादेशता तत्तद्रूपावच्छिन्नादेशतत्तद्रूपावछिन्न-स्थानिवद्भवतीत्यस्मिन्नेव सङ्ग्राहकं स्थानिवत्सूत्रं स्वीक्रियतामिति वाच्यम् । जजागरतुरित्यादौ परस्मिन्निति सूत्रे परस्मैपदत्वेन तस्य स्थानिवद्भावात्। अतुस्त्वेनातुस आदेशत्वात् । परस्मैपदस्याहतुरित्यादौ ङितो ऽपि सत्त्वात् स्थानिवद्भावविषये विशेषातिदेशस्यापि स्वीकारेण परस्मैपदवृत्तिङित्वस्यातुस्यानयनेनाचि ण्णलित्युक्तेर्गुणानापत्तेरिति दिक्। न च "जाग्रोऽविचिण्णल्" इति सूत्रं व्यर्थमिति वाच्यम्। जजागरिवे-त्यादौ चारितार्थात्। लिट्स्थानिकपरस्मैपदवत् ङितोऽभावात् । एतिकेत्यादौ तु प्रथमतष्टाबादेशस्य स्थानिवद्भावस्ततो गुणे इत्येकादेशस्य। तथा च टाबेकादेशस्य स्थानिवद्भावे कर्तव्ये यो धर्मी स एव द्वितीयस्थानिवद्भावे ऽपि धर्मीत्यादेशभेदाभावेन स्थानिवत्सूत्रभेदाभावे लक्ष्येलक्षणन्यायप्रवृत्तेः सुलभ-त्वात्। पूर्वमाकारं धर्मीकृत्य आ–आ–इति बुद्धिः, तमेवाकारमत्वेन वा रूपेण धर्मीकृत्य द्वितीयस्थानिव-द्भावप्रवृत्तिरिति नादेशभेद इति सूक्ष्मदृशा विचारणीयम्। केवलप्रत्ययस्य ककाराभावादिति। वस्तुतस्तु केवलककाररूपेण प्रत्ययस्य न सम्भव इति दिक्।

कडुकेतीति। न च सर्विकेत्येव गत्युदाहरणसम्भवे एतावत्पर्यन्तानुधावनं किमर्थमिति वाच्यम्। अङ्गकार्यसम्पा-दनार्थेत्त्वशास्त्रशून्यकलक्षदानमेव युक्तमिति तात्पर्यात्। न चात इति तपरकरणं व्यर्थम्? अङ्गकार्यसम्पा-... यस्यां भवक अ यस्यां वनायां पूर्वं वार्णशास्त्रं न प्रवर्तत इति परिभाषाया सर्वत्रैव ह्रस्वाकारसम्भवादिति वाच्यम्। भवक अ यस्यां क्रियायां भवक इत्यादौ वार्णपरिभाषयैकादेशाप्रवृत्तौ कात्परत्वस्य द्विमात्रिकेऽपि लाभात्। एवं घट-क्रियायां भवक इत्यादौ वार्णपरिभाषयैकादेशाप्रवृत्तौ कात्परत्वस्य द्विमात्रिकेऽपि लाभात्। टापि च घटिकेत्यादावपि शब्दस्य अशब्देन समासे तत आचारक्विपि तस्मादप्रत्ययादित्यनेन अ प्रत्यये टापि च घटिकेत्यादावपि

कात्परत्वस्य द्विमात्रिकस्य सुलभत्वात्। अतः किमितीति। क्षिपधातोरिगुपधेति के क्षिप इति जाते ततः स्वार्थिके के पूर्वं स्त्रीत्वस्याविवक्षायां विशिष्टाच्च तद्विवक्षायां टापि स्त्रीत्वबोधकोकारस्य सुलभत्वात् क्षिपकेत्यादौ दोषो बोध्यः। एवं वृकधातोर्वृकधातेर्वेगुपधकप्रत्यये पूर्वं स्त्रीत्वाविवक्षायां स्वार्थिके के विशिष्टात्तद्विवक्षायां च टापि वृकका वृककेत्यादावपि स्त्रीत्वबोधकाकारस्य सुलभत्वमिति दिक्।

**अनुपसर्जनात्**। परे तु सर्वादिसूत्रे भाष्ये अनुपसर्जनादित्येष योगः प्रत्याख्यातस्तेनास्य योगस्य नोपयोगः। न च बहुकुरुचरेत्यादौ ङीबभावायानुपसर्जनाधिकारोऽपेक्ष्यते इति वाच्यम्। स्त्रियामित्यस्य गृह्यमाणविशेषणत्वेन टिदन्तर्गतस्त्रीत्वविवक्षायां टिदन्तान्ङीप्भवतीत्यर्थेन प्रकृते टिदर्थगतसमवेतस्त्रीत्वाभावेन ङीपोऽप्राप्तेः। न च 'उगितश्च' 'वनोरच'इत्यादावपि स्त्रियामिति गृह्यमाणविशेषणं स्यादिति, अतिधीवरी अतिभवतीत्यादौ ङीब् स्यात्, गृह्यमाणोगिदर्थगतस्त्रीत्वाभावादिति वाच्यम्। बहुव्रीहौ वेति ज्ञापकेनोगितश्च वनोरचेत्यादौ स्त्रियामिति तदन्तविशेषणत्वेनादोषात्। 'वनोरच'इत्यस्य 'ऋन्नेभ्य' इति ङीबनुवादेन रेफादेशमात्रविधायकत्वेन "ऋन्नेभ्यः" इत्यत्र गृह्यमाणनान्तार्थगतसमवेतस्त्रीत्वस्य सत्त्वेनातिधीवरीत्यादौ दोषाभावाच्च। तथा चोगितश्च वनोरचेत्येतद्विहाय स्त्रियामिति सति सम्भवे सर्वत्र गृह्यमाणविशेषणमेवेति मन्तव्यम्। न च काशकृत्स्नेन प्रोक्तां मीमांसामधीते काशकृत्स्ना ब्राह्मणीत्यादावणो यो ऽकारस्तदन्तत्वस्याणुसमवेतस्त्रीत्वस्य च सत्त्वात्तदधिकाराभावे ङीप् दुर्वार इति वाच्यम्। प्रत्यासत्त्या यादृशाणन्तत्वप्रयुक्तमादाय ङीप् चिकीर्षितस्तदर्थगतस्त्रीत्वविवक्षायां तादृशाण्सम्बन्धाकारान्तात् ङीप्भवतीत्यर्थेन प्रोक्ताण्युक्तङीपो जातत्वेन लक्ष्ये लक्षणन्यायेन पुनस्तत्प्रयुक्तङीपोऽप्राप्त्या अध्येत्रणो लुप्तत्वेन निरुक्तप्रत्यासत्त्या तत्सम्बन्ध्यकारान्तत्वस्याभावेन तत्प्रयुक्तङीपोऽप्राप्तेश्च। नच "कुम्भकारः" इत्याद्यापत्तिरिति वाच्यम्।अमहत्पूर्वग्रहणेन स्त्रीप्रत्ययप्रकरणे सामान्यतस्तदन्तविधिर्भवतीति ज्ञापनेनाणर्थसमवेतस्त्रीत्वविवक्षायामण्णन्तं यत्तदादि तदन्तं यत्प्रातिपदिकं तस्मान्ङीबित्यर्थेन विशिष्टादेव ङीपि दोषाभावात्। पूर्वोक्तदिशा अण्सम्बन्धी योऽकारस्तदन्तात्प्रातिपदिकान्ङीबित्यर्थे विशिष्टादेव ङीपि सुतरां दोषाभावाच्चेति प्राहुः।

**अनभिधानमेवेति**। वस्तुतस्तु पदान्तरार्थनिष्ठविशेष्यतानिरूपितोपस्थितोपस्थितीयप्रकारताप्रयोजकत्वमुपसर्जनत्वमिति परिष्कारेण द्वितीयादिशब्दात्, पञ्चत्यादिशब्दाच्चाचारक्विबन्तात्कर्तरि क्विपि निरुक्तोपसर्जनाभावादनुपसर्जनाधिकारसत्त्वेऽसत्त्वे वा टिड्ढेत्यनेन बह्वादिभ्यश्चेत्यनेन च ङीप् भवत्येवेति फलभेदाभावादनभिधानस्य नोपयोग इति दिक्।

**अण्णन्तान्त इति**। अण्णन्तं यत्तदादि तदन्तेत्यर्थः। कौम्भकारेयसिद्धिरिति। न च "स्त्रीभ्यो ढग्" इति शेखरे स्त्रीत्वबोधकाड्ढक्प्रत्ययो भवतीत्यर्थस्योक्तत्वेन प्रकृते कारशब्दान्ङीप्यपि विशिष्टस्य स्त्रीत्वबोधकत्वेन विशिष्टादेव ढग्भविष्यतीति नेदं फलमिति वाच्यम्। 'स्त्रीभ्यो ढक्'इति सूत्रे स्त्रीप्रत्ययान्तं स्त्रीप्रत्ययो यस्माद्विहितस्तदादिविशिष्टं प्रातिपदिकं तस्माड्ढगित्यर्थस्य सिद्धान्तितत्वेन विशिष्टान्ङीबभावे विशिष्टाड्ढको दुर्लभत्वात्। ननु स्त्रीभ्यो ढगिति सूत्रस्थशेखरासङ्गतिरिति चेदिष्टापत्तेः। नच "सेनान्तलक्षण कारिभ्यश्च" इत्यनेन ण्यप्रत्ययेन ढको बाधादेतत्फलमसङ्गतमिति वाच्यम्। सेनान्तेति सूत्रे कारिपदेन शिल्पिवाचकस्यैव ग्रहणात्प्रकृते च कुम्भं करोतीति शुद्धयौगिकार्थस्यैव विवक्षणेन ण्यप्रत्ययस्याप्राप्तेः। न चैवमपि तदन्तविध्युत्तरमण्यग्णन्ततदायन्तत्वस्य व्यपदेशिवद्भावेन कारशब्दे सत्त्वात्कदाचित्ततो ङीपि कुम्भकारेय इति पाक्षिक दोषो दुर्वार एवेति वाच्यम्। वृक्षप्रचलनन्यायेन विशिष्टादेव ङीपि दोषाभावात्। न चैवमपि कृद्ग्रहणपरिभाषया तदन्तविध्यभावेऽपि विशिष्टादेव ङीब्भविष्यतीति नेदं फलमिति वाच्यम्। कृत्त्वव्याप्यधर्मावच्छिन्नग्रहणे एव सा परिभाषा प्रवर्तत इति सिद्धान्तेनाण्त्वे कृत्त्वव्याप्यत्वस्याभावेनास्याः परिभाषाया अप्रवृत्तेः। न चैवमपि कारशब्दान्ङीप्यपि तावन्मात्रे एकार्थीभावादेव केवलाड्ढग् न प्राप्नोतीति एतत्फलकथनमसङ्गतमिति वाच्यम्। प्रत्ययग्रहणपरिभाषायाः फलत्वेन "परमगार्ग्यायण" इति कथनपरभाष्यप्रामाण्येन प्रत्ययत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकं कार्यं तावन्मात्रे एकार्थीभावाभावेऽपि भवतीति कल्पनेन प्रकृते दोषदानस्य सङ्गतत्वात्। लिङ्गबोधकप्रत्ययनिष्ठचरमावयवतानिरूपकसमुदाये लिङ्गबोधकप्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयत्वं निप्रातिपदिकत्व-

पर्याप्तानुयोगिताच्वच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकधर्माणामतिदेशो भवतीति प्रातिपदिकपरिभाषाया अर्थस्वीकारेण प्रकृते लिङ्गबोधकचरमावयवे कारीतिसमुदाये लिङ्गबोधकङीप्प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयकारवृत्तिसमासत्वप्रयुक्तप्रातिपदिकत्वं पर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकैकार्थीभावस्यातिदेशेन दोषदानस्य सङ्गतत्वात्। न च वृक्षप्रचलनन्यायेन विशिष्टादेव प्रत्ययो भवति न केवलादिति कदाचित्ततो ढगिति ग्रन्थासङ्गतिरिति वाच्यम्। यत्र समुदायस्य कार्ये ऽवयवः कार्यभाग्भवति, अवयवस्य च कार्ये यत्र समुदायो न कार्यभाग्भवति तत्रैव वृक्षप्रचलनन्यायस्य लोके दर्शनेन शास्त्रेऽपि तथैवोचितत्वात्। प्रकृते च समुदायात् प्रत्ययेऽपि अवयवात्प्रत्ययेऽपि वा समुदायादवयवयोरव्यवहितपरत्वस्य प्रत्यये ऽपि सत्त्वेन प्रत्ययाव्यवहितपूर्वत्वस्य तत्प्रयुक्तकार्यभाक्त्वस्यावयवस्य कार्येऽपि समुदायस्य कार्यभाक्त्वेन तस्य न्यायस्य विषयत्वस्यैवाभावात्। न च "राजपौरुषिः" "सूत्रनाडायनः" इत्याद्यापत्तिः ? प्रत्ययविधौ वृक्षप्रचलनन्यायाप्रवृत्ताविति वाच्यम्। तावन्मात्रे एकार्थीभावाभावादेव प्रत्ययानुत्पत्त्यादोषाभावात्।

वस्तुतस्तु वृक्षस्य इत्वरी वृक्षेत्वरी, तस्मादपत्यत्वविवक्षायाम् इत्वरी इत्येतस्माड्ढगभावस्तदन्तविधेः प्रयोजनमिति बोद्धव्यमिति। न च "गतिकारक"इति परिभाषायां सुबिति स्त्रीप्रत्ययस्याप्युपलक्षणत्वेन ङीपः पूर्वमेव समासेनेदं फलमिति वाच्यम्। पूर्वं समासेऽप्यण्णन्ततदादित्वस्य विशिष्टे ऽभावेन केवलादेव ङीपि दोषाभावस्योचितत्वात्। न च "स्त्रीप्रत्यये" इति परिभाषया तदादिनियमाभावेन विशिष्टादेव ङीप्विष्यतीति पुनरपि दोषदानमसंङ्गतमिति वाच्यम्। स्त्रीप्रत्ययेति परिभाषा स्त्रीप्रत्ययमात्रग्रहणे एषा, न तु स्त्रीप्रत्ययास्त्रीप्रत्ययग्रहणे इत्युक्तत्वेनाण्प्रत्ययस्य स्त्रीप्रत्ययास्त्रीप्रत्ययग्रहणत्वेन तस्या अप्रवृत्तेरिति कृतं पल्लवितेन।

**शक्तियष्ट्योरीकक्विति**। न च इकगितिह्रस्व एव पठ्यताम्, इकारोच्चारणसामर्थ्यादेव "यस्येति" लोपो न भविष्यतीति "तार्तीयिकः" इत्यादौ सवर्णदीर्घेण न दोष इति वाच्यम्। इगित्युच्यमाने "पराहादिभ्यः ठक्" इति ककोऽपि ग्रहणापत्त्या तद्वारणाय इकारोच्चारणस्य सार्थक्येन परस्येति लोपस्य दुर्वारत्वात्।

**बाधाभावादिति**। वयोवाचाकानां वैकल्पिकजातिकार्यत्वस्य "जातेश्च" इति सूत्रे भाष्ये उक्तत्वेन ङीषा बाधा मा भूदित्यपि बोध्यम्।

**प्राचां ष्फतद्धितः**। स्यादेतत् "प्राचां ष्फः" इत्येवं न्यासः क्रियताम्, किं तद्धितग्रहणेन। न च तद्धितग्रहणमन्यतोऽपि विधानार्थम्, तेनासुरेरुपसंख्यानमासुरायणीति सिद्धिमिति वाच्यम्। "यस्येति" लोपेन सिद्धे षित्करणसामर्थ्येन तन्नाभात्। न च गार्ग्यशब्दादाचारक्विबन्तात्कर्तरि क्विपि अतोलोपयलोपयो गार्ग्यायणेति रूपसंप्रत्यर्थं तद्धितग्रहणमावश्यकमिति वाच्यम्। यञो यो ऽकारस्तदन्तात ष्फो भवतीति प्राचां ष्फ तद्धित इत्यस्यार्थेन वर्णाश्रये प्रत्ययलक्षणाभावेन कस्याप्राप्तेरिति चेन्नैवम्। स्त्रीप्रत्ययप्रकरणे लिङ्गविशिष्टपरिभाषाया अप्रवृत्तेस्तद्धितग्रहणस्य सार्थक्यात्। स्पष्टं चेदमत्रशब्दरत्ने भाष्ये च। अत एव अजादित्वप्रयुक्तटाप्ङीपौ निरवकाशत्वादेव बाधेते। अत एव लौहित्यायनी कात्यायनीत्यादौ प्राचां ष्फो भवतीति दिक्।

**प्रत्ययस्येति किमिति**। प्रत्ययबोधकेत्यर्थकप्रत्ययस्येति किमर्थमिति प्रश्नः।

**षोडशेति**। न च षित्त्वस्य फलाभावादेवेत्संज्ञा न भविष्यतीति वाच्यम्। इष्णुचि षकारस्येत्संज्ञायां ङीषः स्त्रीत्वादौ "षिद्गौरादिभ्यः" इति ङीषापत्तेः। एवं जिष्णुशब्दादाचारक्विबन्तात "षिद्भिदादिभ्योऽङ्" इत्यङापत्तेः।

**ष्फ एवेति**। न च ष्फान्तादेव लिङ्गविशिष्टपरिभाषया चाबापत्तिरिति वाच्यम। "प्राचां ष्फ तद्धितः" इत्यत्र तद्धितग्रहणेन स्त्रीप्रत्ययप्रकरणे लिङ्गविशिष्टपरिभाषा न प्रवर्तत इति पूर्वमेवोक्तत्वेनादोषात्।

**पारिभाषिकमेव गृह्यत इति**। परे तु प्रकृतसूत्रस्थभाष्यप्रामाण्यात "कम्बोजाच्च" इति सूत्रस्थभाष्यप्रामाण्यात् "संख्यायाः संवत्सरस्य" इति सूत्रस्थभाष्यप्रामाण्याच्चास्मिन् शास्त्रे परिमाणपदेन कालसंख्यातिरिक्तपरिच्छेदकमात्रस्य ग्रहणम्। तथाहि प्रकृतसूत्रे भाष्ये–"इमौ द्वौ प्रतिषेधावुच्येते तत्रैकः शक्योऽवक्तुम्, कथम्? परिमाणान्तात्तद्धितलुकि ङीप्भवतीति? तन्नियमार्थं भविष्यति परिमाणान्तादेव तद्धि-

तल्लुकि नान्यतः" इति । ततो बिस्ताचितकम्बलेभ्यो नेति तद्धितलुकीत्येव । यदि परिमाणपदेन "परिमाणं तु सर्वतः" इति पारिभाषिकं गृह्यते तदा बिस्ताचितयोरपरिमाणत्वान्ङीपोऽप्राप्त्या ताभ्यां ङीप्निषेधकथनमसङ्गतं स्यात्। एवं "कम्बलाच्च संज्ञायाम्" इति सूत्रे भाष्ये—"अयं योगः शक्योऽवक्तुम्, कथमशीतिशतं कम्बल्यमिति । निपातनात्सिद्धम् । किं निपातनम्? अपरिमाणबिस्ताचितकम्बलेभ्यो न तद्धितलुकि इति । इदं तर्हि प्रयोजनम्। परिमाणपर्युदासेन पर्युदासे प्राप्ते इत्यादिभाष्यमसङ्गतं स्यात्। एवं संख्यायाः संवत्सरेति सूत्रस्थं भाष्यम्—"संवत्सरग्रहणमनर्थकम्, परिमाणान्तस्येति कृतत्वात्, परिमाणान्तस्यासंज्ञाशाणयोरित्येव सिद्धम् । ज्ञापकं तु कालपरिमाणानां वृद्धिप्रतिषेधस्य । एवं तर्हि ज्ञापयत्याचार्यः कालपरिमाणानां वृद्धिर्भवतीति । किमेतस्य ज्ञापने प्रयोजनम्, द्वैरात्रिकस्त्रैरात्रिकः, अत्र वृद्धिर्न भवति । नैतदस्ति प्रयोजनम्, नाप्यत्र विशेषः सत्यां वोत्तरपदवृद्धावसत्यां वा, इदं तर्हि द्वैतमिकस्त्रैतमिकः, इदं चापि प्रयोजनं द्वैरात्रिकस्त्रैरात्रिकः, ननु चोक्तं नास्त्यत्र विशेषः सत्यां वोत्तरपदवृद्धावसत्यां वेति। अयमस्ति विशेषः, यदि तर्ह्युत्तरपदवृद्धिः स्यादचामादेरेव वृद्धिः स्यात् । अपर आह—ज्ञापकं तु कालपरिमाणानां परिमाणग्रहणस्य। एवं तर्हि ज्ञापयत्याचार्यः कालपरिमाणानां परिमाणग्रहणेन ग्रहणं भवतीति । किमेतस्य ज्ञापने प्रयोजनम्। अपरिमाणलुकि द्विवर्षा त्रिवर्षा, परिमाणपर्युदासेन पर्युदासो न भवति" इति। यदि परिमाणपदेन सर्वतो मानं गृह्येत तर्हि परिमाणपदेन पर्युदासो न भवतीति भाष्यमसङ्गतं स्यात् । तथाचात्र शास्त्रे एतद्भाष्यत्रयप्रमाण्यात्कालपरिमाणातिरिक्तस्य "संख्यायाः संवत्सरस्य" इति सूत्रे परिमाणान्तस्येत्येव सिद्धे संख्याग्रहणसामर्थ्यात्संख्यातिरिक्तस्य परिच्छेदकमात्रस्य च ग्रहणम् । अत एव द्विनिष्कीत्यादौ ङीप् सिध्यति। एतेन बिस्तकम्बल्यग्रहणं तून्मानस्य चेद्बिस्तकम्बलयोरेवेति नियमार्थमित्यपास्तम्। अत एव "काण्डान्तात् क्षेत्रे" इति ङीप्निषेधः सङ्गच्छते । न च द्विहस्ता भित्तिरित्यादौ ङीप् दुर्वार इति वाच्यम्। हस्तशब्दस्य परिमाणवाचित्वे इष्टापत्तेः । वस्तुतस्तु हस्तशब्दस्य परिमाणवाचित्वे प्रमाणाभावात् "अपरिमाण" इति ङीप्निषेध इत्याहुः ।

**नियमार्थमिति** । चिन्त्यमिदम्, उक्तयुक्तेः ।

**नित्यं ङीपि प्राप्ते इति** । इदमपि चिन्त्यमेवोक्तयुक्तेः ।

**परे इति** । एवं नीलस्य स्त्री नीलेत्येवेत्यपि बोध्यम् ।

**अप्राप्तेरिति** । चिन्त्यमिदम् । उपसर्जनिष्यमाणन्यायेन टापोऽप्राप्त्या अदन्तत्वाक्षतेः सुशिखेति समुदायप्रत्युदाहरणस्य सङ्गतत्वात् । भाष्ये अशिखेति दृश्यमानप्रत्युदाहरणमिति निषेधार्थम् ।

केचित्तु—इदमेव युक्तम् । कल्याणपाणिपादेत्यादौ ङीष् व्यावृत्तये अस्वाङ्गपूर्वपदादित्यनुवर्त्य अस्वाङ्गपूर्वपदात्परं यत् स्वाङ्गम् तदन्तात्प्रातिपदिकादिति भाष्यसम्मतार्थस्य स्वेनैव पूर्वसूत्रे करणात् शिखेत्यादौ अस्वाङ्गपूर्वपदत्वाभावेन ङीषोऽप्राप्तेः । अत एव भाष्ये अशिखेत्येव प्रत्युदाहृतम् । सहनञ्लक्षणनिषेधस्त्वत्र न शङ्क्यः । अस्य शिखा अशिखा इत्यर्थाभ्युपगमे नञोऽभावात् । नच तत्र समासात्प्रागेव टाप्येवादन्तत्वाभावान्नङीष् इति वाच्यम् । उपसर्जनिष्यमाणन्यायेन स्त्रीत्वाविवक्षया पूर्वं वा टापोऽप्राप्तेः । शिखाशब्दस्य "शीङो ह्रस्वश्च" इत्युणादिनिष्पन्नत्वेन सुबुत्पत्तेः प्रागेव समासेनास्यैव प्रवृत्तेरित्याहुः । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

**स्पर्शवदिति** । स्पर्शवन्ति द्रव्याणि पृथिव्यप्तेजो वायवः तत्परिमाणमित्यर्थः ।

**शेष इति—तस्यचेत्तत् तथा युतम्** । इत्यादिलक्षणस्य अप्राणिसंबद्धविषयकत्वं स्पष्टयितुम् अप्राणिनोऽपि स्वाङ्गमिति शेषो भाष्ये दर्शित इत्यर्थः। तत्रतस्येति करणस्यैव शेषत्वविवक्षया षष्ठी बोध्या। तदिति अप्राणिबोधकम् तथेतिसम्बन्धप्रकारबोधकम् । तथाप्राणी यथाप्राण्यङ्गेन सम्बद्धो भवति तथा अप्राणी प्राण्यङ्गजातीयेन वस्तुना सम्बद्धश्चेत् अप्राणिनोऽपि अवयवः स्वाङ्गस्वाङ्गपदव्यवहार्यो भवतीत्यर्थः। मूले यदिशब्दघटितोऽपपाठः । अग्रेचेच्छब्दोपादानादिति दिक् ।

**पुरुषात्प्रमाणे । उर्ध्वाधरदिगवस्थतेति** । चिन्त्यमिदम्, सर्वस्याप्यूर्ध्वाधरदिगवस्थितवस्तुपरिच्छेदकत्वात् । किन्तु गुरुत्वप्रयोज्योन्नमनोन्नानवत्परिमाणे तुलादिना मानस्थले पुरुषशब्दप्रवृत्तिः ॥

**जातिवचनस्यापीति ।** चिन्त्यमिदम्, पुरुषत्वस्य सत्त्वादेरुपचयत्वस्वरूपत्वेन गुणवाचित्वात् ॥

**"विभाषासपूर्वस्य ।** अत्र पूर्वशब्दोऽवयवत्वावच्छिन्नपूर्वत्वविशिष्टवाची । तत्र पूर्वत्वेऽवधितया पतिशब्दस्यान्वयः । अवयवत्वे च निरूपितत्वसम्बन्धेन पतिशब्दस्यान्वयः । अवध्यवधिमतोः साजात्ये पतिशब्दाव्यवहितपूर्वविशिष्टोऽपि अर्थ एवापेक्षित इत्यभिप्रेत्याह—**कर्मधारयोत्तरपदबहुव्रीहौ वारणायेति ।** बहुवृषलपतिरित्यादौ बहुवृषल इत्यस्यार्थवत्त्वाभावादिति भावः ।

**"नित्यं संज्ञाछन्दसोः" । नियतानुपूर्वीका अनादय इति ।** चिन्त्यमिदम्, णिचापि संज्ञासंज्ञिसम्बन्धवन्नियतानुपूर्वीकत्वाभावात् । किन्त्वेकानुपूर्वीका एव । किं च वेदेऽपि संदेहनिवारणाय सूत्रस्यावश्यकत्वादित्यलम् ।

**पुंयोगादाख्यायाम् । मूले—न तु स्त्रियामिति ।** प्रकृते स्त्रीबोधकतात्पर्येणानुच्चारितादित्यर्थः । अयम्भावः, पुरुषनिष्ठगोकर्मकपालनकर्तृत्वस्यारोपेण तत्र ङीप् न तु गोकर्मकपालनकर्तृत्वविशिष्टवाचकात् । अवास्तवगोकर्मकपालनकर्तृत्वबोधकादिति यावत् ।

**पुंस्येवेति ।** प्रकृतपुंस्येवेत्यर्थः । **स्त्रियां वर्तमानादिति ।** प्रकृते स्त्रियां वर्तमानादित्यर्थः । **केचिदिति ।** अत्र सर्वनाम—देवकस्यापत्यमित्यर्थे ङीप्सिद्धिः । तत्र देवकाद्विहित इति पाठ्यमिति **परे ।**

**इन्द्रवरुण । सूत्रे त्वैन्द्रीत्यादिव्यावृत्त्यर्थमिति ।** चिन्त्यमिदम्, इन्द्रस्य स्त्री इत्यर्थे इन्द्राणीति रूपसंपादनार्थमेव सूत्रस्य चारितार्थ्यात् ।

**"स्वाङ्गाच्चोपसर्जनात्" । इदमेव प्रत्युदाहरणमिति ।** नन्वस्वाङ्गपूर्वपदाद्वेत्यनुवर्त्य स्वाङ्गेतरपूर्वपदे एव ङीषिति कथं प्रत्युदाहरणमिति वाच्यम् । अस्वाङ्गपूर्वपदादित्यत्र प्रसज्यप्रतिषेधस्वीकोरणादोषात् । केचित्तु गतिकारकोपपदानामिति सुशिखेत्यादौ टाबुत्पत्तेः पूर्वमेव समासे इदमेव प्रत्युदाहरणम् । भाष्येऽपि विशिखेत्येव पाठ इत्याहुः ॥

**जानपद । वर्णाश्चेदिति ।** वर्णश्चेत्प्रवृतिनिमित्तमित्यर्थः । न चान्यतो ङीषित्यनन्तरं नीलादिति सूत्रं कार्यम्, अत्र सूत्रे नीलग्रहणं वर्णग्रहणं च न कार्यमिति वाच्यम् । नीलस्त्रीति विवक्षायां "पुंयोगे" इति ङीषापत्तेः । सिद्धान्ते तु नीलशब्दाद्ङीप् चेद्वर्णत्वविशिष्टवाचकादेवेति नियमान्न दोषः। **अर्शाद्यजन्त इति ।** इदं व्यर्थं वर्णश्चेत्प्रवृत्तिनिमित्तमिति व्याख्यानेनापि सामञ्जस्यात् । एवं मैथुनीशब्दोऽपि व्याख्येय इति दिक् ॥

**वोतो गुणवचनात् ।** उच्यते ऽनेनेति वचम् । गुणेन वचनं गुणवचनम् । प्रकारित्वं तृतीयार्थः । ततश्च गुणनिरूपितप्रकारिताशालिबोधप्रयोजकादित्यर्थः । एवं "त्वतलोर्गुणवचनस्य" इत्यादौ वचनपदघटिते सर्वत्र बोध्यम् । एवं चातिवचनशब्देऽपि ।

**शुक्लेति प्रत्युदाहरणमुचितामिति ।** इदमुष्ट्रारूढन्यायायितम् । "खरूसंयोगोपधात्" इति वचनेन ङीषोऽप्राप्तेः । शिखिनि प्रत्युदाहरणमुचितम् । अत इत्यनुवृत्या पट्वीत्यादावव्याप्तिश्च बोध्येति दिक् ॥

**जातेरस्त्री विषयेति । अणन्तादनुपसर्जनादिति ।** अयं ग्रन्थः शक्तिग्रहान्तरानधीनशक्तिग्रहीयविशेष्यतासमानाधिकरणार्थान्तरानिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वाभाववत्त्वमुपसर्जनत्वमित्यत्र तात्पर्यग्राहकः । न च "गोत्रम् च चरणैः सह" इत्यनेनापत्यप्रत्ययस्यैव जातित्वमतिदिश्यते, तथा च न भाष्यविरोधः, औपगवीभार्य इत्यादौ योऽप्युपसर्जनः अण् स लुप्त इति जात्यन्तप्रातिपदिकाभावान्न ङीष्, यो हि न लुप्तो गोत्राण् स उपसर्जनः, जातिश्चेत्यादौ च जातेर्विहितो यः प्रत्यय इत्यर्थकरणान्न तद्भाष्यविरोधोऽपि । "श्राद्धो जातौ" इत्यादौ तु पुनर्जातिग्रहणसामर्थ्यादनतिदिष्टैव जातिर्गृह्यत इत्यनपत्ये जाताविति भाष्यविरोधोऽपि नेति वाच्यम् । अवन्तीत्यादौ "इतो मनुष्यजातेः" इति ङीनाऽनापत्तेः । स्त्रियामवन्तीत्येनेनाणो लुप्तत्वाज्जात्यन्तरत्वाभावात् । **परे तु** अपत्येतराबोधको यदपत्यबोधकः प्रत्ययः स जातिकार्यं लभते । अपत्येतराबोधकेत्युक्त्या युवप्रत्ययान्तस्य न संज्ञा । तत्र यौवत्वस्यापि बोधकत्वात् । एवं जातेश्चेति सूत्रस्थभाष्यविरोधोऽपि न, निरुक्तरीत्या जातित्वातिदेशस्याप्राप्तेः । "श्राद्धो जातौ" इत्यत्रापत्ये जाताविंत्युक्तेरनतिदिष्टजातिग्रहणायेति न दोष इति प्राचीनमतमेव सम्यगित्याहुः ।

**तद्बोधकोत्तरपदादिति ।** तद्बोधक उरूत्तरपदो यः समासस्तस्मादित्यर्थः । सादृश्यस्य समासजन्यशाब्दबोधविषयत्वात् ।

इति स्त्रीप्रत्ययाः ।

# कारकप्रकरणम् ।

## अथ कारकचन्द्रिकाप्रारभ्यते ।

आरोहणक्रमेण प्रथमतः सन्धिसंस्कारमुक्त्वा पदसंस्कारं चोक्त्वा तादृशपदप्रयोजकसुपामर्थविशेषमाह—**प्रातिपदिकार्थ इति ।**

**क्रियायोग एवेति ।** न च "त्रयः कालाः" इत्यादौ कस्याः क्रियाया अध्याहारः ? त्रिषु कालेषु वर्तमानकालिकसत्ताया भूतकालिकसत्ताया भविष्यत्कालिकसत्तायाश्च बाधितत्वादिति वाच्यम् । ज्ञायन्ते इत्यध्याहारेण वर्तमानकालिकज्ञानविषयताश्रयत्वस्य तत्र बोधादिति दिक् । **अभेदान्वयेनेति** । अभेदस्य संसर्गतास्वीकारे सम्बन्धानवच्छिन्नविशेषणतैव कर्त्रादिनिष्ठविशेष्यतानिरूपितेति बोध्यम् । मूले—**नियतोपस्थितिक इति** । नियता उपस्थितिर्यस्य स नियतोपस्थितिकः । निपूर्वकयम्धातोर्व्यापकत्वमर्थः । विषयताश्रयश्चान्यपदार्थः । तथा च व्यापकोपस्थितीयविषताश्रयत्वं प्रातिपदिकार्थत्वमिति पर्यवसन्नम् । ननु व्यापकत्वस्य यत्किञ्चिन्निष्ठव्याप्यतानिरूपितत्वेन किं निष्ठव्याप्यतानिरूपितोपस्थितिनिष्ठव्यापकतेत्याकाङ्क्षायामाह—**यस्मिन्प्रातिपदिक इति** । तथा च प्रातिपदिकोच्चारणनिष्ठव्याप्यतानिरूपितव्यापकतावदुपस्थितिविषयताश्रयत्वं—प्रातिपदिकार्थत्वमिति पर्यवसन्नम् । व्याप्यतावच्छेदकः सम्बन्धः, स्वजन्यश्रावणप्रत्यक्षसमवायित्वम् । व्यापकतावच्छेदकश्च सम्बन्धः समवायः । तथा च स्वजन्यश्रावणप्रत्यक्षसमवायित्वसम्बन्धावच्छिन्नप्रातिपदिकोच्चारणनिष्ठव्याप्यतानिरूपितसमवायसम्बन्धावच्छिन्नव्यापकतावदुपस्थितिविषयत्वं प्रातिपदिकार्थत्वमिति फलितम् । वस्तुतस्तु प्रातिपदिकोच्चारणे व्याप्यता स्वीकारे स्वजन्यश्रावणप्रत्यक्षसमवायित्वस्य च व्याप्यतावच्छेदकसम्बन्धस्य च स्वीकारे गौरवात् । स्वविषयकश्रावणप्रत्यक्षसमवायित्वसम्बन्धावच्छिन्नप्रातिपदिकनिष्ठव्याप्यतानिरूपितसमवायसम्बन्धावच्छिन्नव्यापकतावदुपस्थितिविषयत्वं प्रातिपदिकार्थत्वमिति युक्तम् । एतेन नियतलिङ्गघटादिपदस्य बधिरनिकटे उच्चारणेऽपि उपस्थितेरभावान्निरुक्तप्रातिपदिकार्थत्वं तादृशस्थले न स्यादित्यपास्तम् । स्वविषयकश्रावणप्रत्यक्षसमवायित्वसम्बन्धेन बधिरान्प्रति प्रातिपदिकत्वस्याभावेन तत्रोपस्थितेरभावात् ।

**स्यादेतत् ।** यस्य घटादिपदशक्तिज्ञानं नास्ति तस्य नियतोपस्थितेरभावात्तादृशस्थले निरुक्तप्रातिपदिकार्थत्वमव्याप्तम् । न च स्वनिष्ठशक्तिज्ञानसमवायित्व, स्वविषयकश्राणप्रत्यक्षसमवायित्वैतदुभयसम्बन्धावच्छिन्नप्रातिपदिकनिष्ठव्याप्यतानिरूपितसमवायसम्बन्धावच्छिन्नव्यापकतावदुपस्थितिविषयत्वं प्रातिपदिकार्थत्वमिति परिष्कारेणादोषः । शक्तिज्ञानाभाववदात्मनि स्वविषयकश्रावणप्रत्यक्षसमवायित्वसम्बन्धेन प्रातिपदिकत्वसत्त्वे ऽपि स्वनिष्ठशक्तिज्ञाने समवायित्वसम्बन्धेन प्रातिपदिकस्य तत्राभावेनोपस्थितेरभावे ऽपि क्षतिविरहादिति वाच्यम् ? यस्य पुरुषस्य शक्तिज्ञानं जातं तज्जनितः संस्कारश्च लुप्तः तत्रोपस्थितेरभावेन निरुक्तप्रातिपदिकार्थत्वस्याव्याप्तत्वात् । न च स्वविषयकश्रावणप्रत्यक्षसमवायित्वं-स्वनिष्ठशक्तिज्ञानजन्यसंस्कारसमवायित्वैतदुभयसम्बन्धावच्छिन्नप्रातिपादिकनिष्ठव्याप्यतानिरूपितसमयसम्बन्धावच्छिन्नव्यापकतावदुपस्थितिविषयत्वं प्रातिपदिकार्थत्वमिति परिष्कारेणादोषः । लुप्तसंस्कारकात्मनि स्वनिष्ठशक्तिज्ञानजन्यसंस्कारसमवायित्वसम्बन्धेन प्रातिपदिकस्याभावेनोपस्थितेरभावेऽपि क्षतिविरहादिति वाच्यम् । यस्यात्मनि शक्तिज्ञानजन्यः संस्कारो वर्तते परं तु संस्कारो नोद्बुद्धस्तत्र निरुक्तप्रातिपदिकार्थत्वस्य पुनरप्यव्याप्तत्वात् । न च स्वनिष्ठशक्तिज्ञानजन्योद्बुद्धसंस्कारसमवायित्व-स्वविषयकश्रवणप्रत्यक्षसमवायित्वैतदुभयसम्बन्धावच्छिन्नप्रातिपदिकनिष्ठव्याप्यतानिरूपितसमवायसम्बन्धावच्छिन्नव्याकतावदुपस्थितिविषयत्वं प्रातिपदिकार्थत्वमिति परिष्कारेणादोषः । अनुद्बुद्धसंस्कारकात्मनि स्वनिष्ठशक्तिज्ञानजन्योद्बुद्धसंस्कारसमवायित्वसम्बन्धेन प्रातिपदिकस्याभावेन तत्रोपस्थितेरभावे ऽपि क्षतिविरहादितिवाच्यम् ? एवं तर्हि तटं त्रिषु लिङ्गेषु शक्तमिति यस्य शक्तिज्ञानं वर्तते तज्जनितश्च संस्कारो यत्रोद्बुद्धस्तत्र लिङ्गत्रयोपस्थितिर्न भवतीति वक्तुमशक्यत्वेन सूत्रे लिङ्गग्रहणवैयर्थ्यस्य तदवस्थत्वेनैतत्परिष्कारस्याप्रयोजकत्वादिति चेत्—

**मैवम् ।** स्वजन्यबोधविषयत्वप्रकारकतात्पर्यविषयतापर्याप्त्यधिकरणत्व-स्वाभाववत्त्वैतदुभयसम्बन्धेन स्वविशिष्टत्वं प्रातिपदिकार्थत्वमिति परिष्कारेणादोषात् । अभावश्च स्वप्रयोज्यधर्मितानिरूपितप्रकारताश्रयत्व-

स्वनिष्ठशक्तिविशिष्टावच्छेदकतावद्विषयतावत्त्वैतदुभयसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः । शक्तिवैशिष्ट्यं च स्वविषयविषयतानिरूपकत्वसम्बन्धावच्छिन्नत्व–स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानिरूपितत्वैतदुभयसम्बन्धेन । प्रवृत्तिनिमित्ते तदाश्रये च स्वप्रयोज्यधर्मितानिरूपितप्रकारताश्रयत्वरूपसम्बन्धाभावादेकसत्त्वेऽपि द्वयं नास्तीति प्रतीत्या निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकाभावः सुलभ इति सर्वत्र लक्षणसमन्वयः । नियतलिङ्गस्थले पुंस्त्वादौ स्वप्रयोज्यधर्मितानिरूपितप्रकारतावत्त्वस्य सत्त्वेऽपि स्वनिष्ठशक्तिविशिष्टावच्छेदकतावद्विषयत्वस्वरूपसम्बन्धाभावात्तत्रापि निरुक्तदिशोभयसम्बन्धावच्छिन्नप्रतियोगिताकः स्वाभावः सुलभ इति तत्रापि लक्षणसमन्वयः । अनियतलिङ्गस्थले च तटीत्यादौ स्वप्रयोज्यधर्मितानिरूपितप्रकारतावत्त्वस्य पुंस्त्वविषयकबोधे स्त्रीत्वेन स्त्रीत्वविषयको नेति भेदमादाय चालनीन्यायेन स्वनिष्ठशक्तिविशिष्टावच्छेदकतावद्विषयतावत्त्वस्य च सत्त्वात्तत्र निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावः सुलभ इति लिङ्गग्रहणं सार्थकम् । अत्र प्रथमसम्बन्धोपादानेन स्वविषयकबोधतात्पर्येणोच्चारिताद्धरिशब्दादिन्द्ररूपप्रातिपदिकार्थे प्रथमा न भवति । अन्यथा अश्वारूढः इन्द्र इति प्रकृत्यर्थप्रत्ययार्थयोराधाराधेयभावसम्बन्धेनान्वयाद्बाधापत्तिः । अभावीयप्रतियोगितावच्छेदकप्रथमसम्बन्धदानात्तटादिपदस्थले तत्पदार्थस्य प्रातिपदिकत्वं सिध्यति । तत्रैव द्वितीयसम्बन्धदानात्सूत्रे लिङ्गग्रहणं सार्थकम् । तत्रैव द्वितीयसम्बन्धघटके स्वविषयतानिरूपकत्वसम्बन्धावच्छिन्नत्वसम्बन्धदानान्नियतलिङ्गस्थले प्रमेयत्वेन पुंस्त्वविषयको नेति भेदमादाय पुंस्त्वादौ नाव्याप्तिः ।

यत्तु प्रातिपदिकविशिष्टत्वं प्रातिपदिकार्थत्वम् । वैशिष्ट्यं च स्वनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानवच्छेदकविषयतावत्त्वसम्बन्धेनेति । तन्न । हर्यादिनानार्थस्थले विष्णुत्वविष्ण्वादीनां प्रातिपदिकार्थत्वानापत्तेः । यदपि प्रातिपदिकनिष्ठशक्तिविशिष्टविषयतावत्त्वं प्रातिपदिकार्थत्वम् । वैशिष्ट्यं च स्वज्ञानाधीनोपस्थितिप्रयोज्यत्व—स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानवच्छेदकत्वोभयसम्बन्धेन । अत्र प्रथमसम्बन्धदानात्साध्यत्वाविषयकबोधस्य कुत्राप्यजननात्तत्र द्वितीयसम्बन्धसत्त्वेऽपि नातिव्याप्तिः । तथा च नानार्थस्थले न दोष इति तदपि न, तत्पदस्थले तत्पदार्थे प्रातिपदिकार्थत्वानापत्तेः । एतेन, प्रातिपदिकनिष्ठशक्तिविशिष्टविषयतावत्त्वं प्रातिपदिकार्थत्वम् । वैशिष्ट्यं च स्वज्ञानाधीनोपस्थितिप्रयोज्यत्व––स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधीयविषयतात्वावच्छिन्ननिरूपितव्यापकतावत्त्वोभयसम्बन्धेनेत्यपि **परास्तम्** । तत्पदस्थले दोषस्य दुरुद्धरत्वापत्तेः । तत्पदेन च कस्यापि बोधस्य नियमेनानुदयान्निरुक्तविषयतात्वावच्छिन्नव्यापकत्वस्य दुर्लभत्वात् । न च भवत्परिष्कारेऽपि तत्पुरुष इत्यादौ तत्पदार्थस्य प्रातिपदिकार्थत्वानापत्तिः । स्वप्रयोज्यपुरुषत्वावच्छिन्नधर्मितानिरूपितप्रकारतावत्त्वस्य चालनीन्यायेन पूर्वोक्तदिशा स्वनिष्ठशक्तिविशिष्टावच्छेदकतावद्विषयवत्त्वस्य च सत्त्वेन स्वाभावस्याभावादिति वाच्यम् । स्वप्रयोज्यधर्मितानिरूपितप्रकारतायामपदार्थसम्बन्धानवच्छिन्नत्वविशेषणदानेनादोषात् । अपदार्थसम्बन्धानवच्छिन्नेत्यस्य शक्तिभास्यसम्बन्धानवच्छिन्नेत्यर्थः । आकाङ्क्षाभास्यसम्बन्धावच्छिन्नेति यावत् । तथा च तत्पुरुष इत्यादौ पुरुषत्वावच्छिन्नधर्मितानिरूपिततत्पदार्थनिष्ठप्रकारता ? एकार्थीभावाङ्गीकारेण शक्तिसम्बन्धावच्छिन्नैवेति न दोष इति दिक् ।

**अन्ये तु**—शाब्दबोधविशिष्टविषयतावत्त्वं प्रातिपदिकार्थत्वम् । वैशिष्ट्यं च स्वजनकशक्तिज्ञानजन्यशाब्दबोधीयविषयतात्वावच्छिन्नव्यापकत्व—स्वजनकशक्तिज्ञानप्रयोज्यत्वोभयसम्बन्धेन । तत्पदस्थले च बुद्धिस्थस्तत्पदवाच्य इति ज्ञानं न शाब्दबोधजनकं किन्तु घटत्वावच्छिन्नस्तत्पदवाच्य इति विशिष्टज्ञानमेव शाब्दबोधजनकमिति तज्जन्यशाब्दबोधीयविषयतात्वावच्छिन्नव्यापकत्वं तत्पदार्थे ऽव्याहतमिति तत्र न दोषः । तटं त्रिषु शक्तमिति ज्ञानमेवानियतलिङ्गकस्थले शाब्दबोधजनकमिति तत्र कस्यापि लिङ्गस्य नियमेनाभानात्स्वजन्यशाब्दबोधीयविषयतात्वावच्छिन्नव्यापकत्वं लिङ्गविषयतायां नास्तीति लिङ्गग्रहणं सार्थकम् । पूर्ववत्साध्यत्वेऽतिव्याप्तिवारणाय द्वितीयसम्बन्धोपादानमित्याहुः ।

**अधिको भासत इति** । यथा मीमांसकमते ऽहमस्मि न वेति संशयस्य, इदं ज्ञानं न वेति संशयस्य चानुदयान्मितिमात्रभासकत्वं ज्ञानमात्रस्येति नियमः । एवमस्मिन्मते ऽपि नीलो घट इति ज्ञानानन्तरमिदं ज्ञानं नीलनिष्ठविशेषणताकं न वा, घटनिष्ठविशेष्यताकं न वेति संशयस्यानुदयात् ज्ञानमात्रे विशेषण-

विशेष्यभावोऽपि भासत इति मतेनेदमुक्तम् । एतेन विषयताविषयकशाब्दबोधस्यानुभवसिद्धत्वादिदमसङ्गतमित्यपास्तम् । न च लिङ्गमात्रस्यैवाधिक्ये प्रथमा इत्युक्तत्वेन घट इत्यादौ पुंस्त्वातिरिक्तपुंस्त्वत्वस्याधिकस्य भानात्कथं प्रथमेति वाच्यम् ? पुंस्त्वादिलिङ्ग—तद्वृत्तिपुंस्त्वत्वादि-तदनुयोगिकसम्बन्धैतन्मात्राधिक्ये प्रथमेत्यर्थकरणेनादोषात् । एतदर्थमेव लिङ्गमात्राधिक्ये इत्यादिपदोपादानम् । आदिपदेन पुंस्त्वत्वादेस्तत्प्रतियोगिकसम्बन्धस्य च ग्रहणम् । न चैवमपि मात्रशब्दः प्रत्येकं सम्बध्यत इत्युक्त्या पदार्थपदात्प्रथमानुपपत्तिः, पदार्थे ऽस्याप्रसिद्धत्वादिति वाच्यम् ? प्रातिपदिकार्थमात्रे प्रथमेत्यस्य प्रातिपदिकार्थत्वसम्पादकविषयतेतरविषयत्वाप्रयोजकत्वं प्रातिपदिकार्थमात्रवृत्तित्वामिति विवक्षितत्वेनादोषात् ।

**लिङ्गस्यैवाधिक्य इति** । लिङ्ग—तदनुयोगिकसम्बन्ध-तद्वृत्तिपुंस्त्वत्वादेरेवाधिक्ये इत्यर्थः । **इतरसम्बन्धेति** । इतरेत्यसङ्गतम्, अभेदस्य सम्बन्धत्वानङ्गीकारेणाभेदसम्बन्धेतरसम्बन्धेत्यर्थस्य वक्तुमशक्यत्वात् । नन्वेको द्वौ बहव इत्यादावुक्तार्थानामिति न्यायेनैकवचन-द्विवचन-बहुवचनानि मा भूवन्नितरविभक्तयः कस्मान्न भवन्तीत्याह—**संख्यान्तराभावाच्चेति** ।

**प्रवृत्तिनिमित्तमिति** । तत्त्वं च वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारताश्रयत्वम् । न च पुंस्त्वत्वादाविदमतिव्याप्तमिति वाच्यम् ? प्रकारतायां प्रवृत्तिनिमित्तावच्छिन्नधर्मितानिरूपितलिङ्गनिष्ठप्रकारतानिरूपितावच्छेदकत्वासामानाधिकरण्यनिवेशेनादोषात् । वाच्यत्वनिवेशादाकाशपदात् प्रवृत्तिनिमित्ते आकाशपदजन्योपस्थितीयप्रकारतावति शब्दाश्रयत्वे नातिव्याप्तिः । वाच्यवृत्तित्वनिवेशाद्वृत्तित्वस्य साक्षात्सम्बन्धेन विवक्षितत्वाच्च गवादिपदवाच्ये ऽवयवसंयोगविशेषरूपाकृतौ नातिव्याप्तिः । वाच्योपस्थितीयप्रकारतावत्त्वनिवेशादाधाराधेयभावसम्बन्धेन हर्यादिपदवाच्याश्ववृत्तौ हर्यादिपदवाच्येन्द्रादौ घटादिपदवाच्यसमवाये घटादिपदवाच्यवृत्तौ च नातिव्याप्तिः ।

**अत्रेदं तत्त्वम्** । प्रातिपदिकविशिष्टत्वं प्रवृत्तिनिमित्तत्वम् । वैशिष्ट्यं च स्ववाच्यत्व-स्ववाच्यवृत्तित्व-स्वजन्यशाब्दबोधीयमुख्यविशेष्यतासमानाधिकरणोपस्थितीयविशेष्यतानिरूपितप्रकारताश्रयत्वैतत्त्रितयसम्बन्धेन । अत्र विशेष्यतानिरूपितत्वं प्रकारतायां साक्षात्परम्परासाधारणं विवक्षितमिति पशुपदार्थप्रवृत्तिनिमित्तलोमत्वादौ नाव्याप्तिः । एवमेव पदार्थतावच्छेदकभेदत्वादावपि नाव्याप्तिः । न च निरूपितत्वं साक्षात्परम्परासाधारणं वक्तुं दुर्वचमित्ययं परिष्कारोऽसङ्गत इति वाच्यम् ? प्रातिपदिकविशिष्टप्रकारताश्रयत्वं प्रवृत्तिनिमित्तत्वमिति परिष्कारेणादोषात् । प्रकारतायां प्रातिपदिकवैशिष्ट्यं च स्वजन्यशाब्दबोधीयमुख्यविशेष्यतानिरूपितत्व-स्वप्रयोज्यधर्मितानिरूपितप्रकारत्वाभाववत्त्वैतदुभयसम्बन्धेन । अभावश्च आश्रयत्व-अवच्छेदकत्वैतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः । पुंस्त्वादौ चाश्रयत्वावच्छेदकत्वैतदन्यतरसम्बन्धेन स्वप्रयोज्यधर्मितानिरूपितप्रकारत्वमेवास्ति, नैतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताकाभाव इति न तत्रातिव्याप्तिः । अत्र स्वप्रयोज्यधर्मितानिरूपितप्रकारता अपदार्थसम्बन्धावच्छिन्ना विवक्षितेति लोमवल्लाङ्गूलावच्छिन्नवाचकपशुपदप्रवृत्तिनिमित्तलोमत्वादौ नाव्याप्तिः । न चैवं पदार्थप्रवृत्तिनिमित्तभेदत्वादावव्याप्तिः । एवं पदप्रयोज्याभावत्वावच्छिन्नधर्मितानिरूपिता पदार्थसम्बन्धावच्छिन्नप्रकारता या ऽवच्छेदकत्वाश्रयत्व-तदन्यतरसम्बन्धेन सत्त्वेन तदभावस्याभावादिति वाच्यम् । प्रातिपदिकविशिष्टप्रकारताश्रयत्वं प्रवृत्तिनिमित्तत्वमिति परिष्कारेणादोषात् । प्रकारतायां वैशिष्ट्यं च स्वपर्याप्तशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिरूपितत्व-स्वप्रयोज्यधर्मितानिरूपितापदार्थसम्बन्धावच्छिन्ना या प्रकारता, पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यत्वाभाववती च या प्रकारता, अवच्छेदकत्वाश्रयत्वैतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताक-तादृशप्रकारत्वाभाववत्त्वैतदुभयसम्बन्धेन । विशेष्यत्वाभावश्च स्वतादात्म्य-स्वनिरूपितत्वैतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताको विवक्षितः । पार्थ एव धनुर्धर इत्यादौ पार्थत्वावच्छिन्नप्रतियोगिताकभेदवत्सम्बन्धाभावस्य धनुर्धरत्वे बोधनात्प्रतियोगित्वसम्बन्धावच्छिन्न-पार्थत्वावच्छिन्नप्रकारतानिरूपितविशेष्यता-अभावत्वावच्छिन्नविशेष्यतानिरूपिता पदार्थसम्बन्धावच्छिन्नभेदनिष्ठप्रकारतायां तादात्म्ये भेदत्वे ऽवच्छेदकत्वे च विद्यमानत्वात्तादृशप्रकारत्वाभाववतीयं प्रकारता न जातेति तत्र नाव्याप्तिः । पुंस्त्वादौ च कस्यापि पदार्थस्यानन्वयात्प्रातिपदिकपदप्रयोज्यधर्मितानिरूपितापदार्थसम्बन्धावच्छिन्नपुंस्त्वादिनिष्ठप्रकारता अवच्छेदकत्वतादात्म्यैतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताकपदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यत्वाभाववती जातेति

तादृशप्रकारताश्रयत्वावच्छेदकत्वैतदन्यतरसम्बन्धेन पुंस्त्वे पुंस्त्ववत्वादौ च वर्तत एवेति न तादृशप्रकारत्वाभाव इति न तत्रातिव्याप्तिरिति सुधियो विभावयन्तु ।

**इत्यस्यापत्तेरिति** । अपिना प्रमेयो व्रीहीरित्यादौ प्रमेयाभिन्नं यत्परिमाणं तत्परिच्छेद्यो व्रीहिरिति बोधापत्ते र्ग्रहणम् । प्रत्ययार्थपरिमाणस्य स्वबोधकविभक्तिसजातीयविभक्तिप्रकृतिक एवान्वयः । स्वेनान्वबोधश्च परिच्छेदकविशिष्टस्यैवेति स्वीकारेण निरुक्तदोषवारणं तु न सम्भवति । तादृशव्युत्पत्तिकल्पने मानाभावात् । अस्यैव शास्त्रस्याकाङ्क्षानियामकत्वेन तादृशव्युत्पत्तेः कल्पयितुमशक्यत्वाच । **असिद्धयापत्तेरिति** । वस्तुतस्तु–असम्भवदोष एवात्र बोध्यः । घट इत्यादावपि तत्तद्घटव्यक्तीनां भाने नियमाभावात् । कदाचित्काचिद्व्यक्तिः कदाचित्सर्वा व्यक्तयो भासन्त इत्यनुभवसिद्धत्वात् । एतत्कल्पेऽपि प्रमेयादिपदात्प्रथमाविभक्त्युत्पत्तिः प्रातिपदिकार्थमात्रवृत्तित्वं प्रातिपदिकार्थत्वसम्पादकविषयताभिन्नविषयताप्रयोजकत्वाभाववत्त्वमिति परिष्कारेण बोद्धव्या । वैयाकरणमते प्रतियोग्यप्रसिद्धेर्गुणत्वाच्च ॥

**अभिमुखीकरणमिति** । तत्त्वं च प्रकृतिजन्यशाब्दबोधाश्रयत्वप्रकारकेच्छोद्देश्यत्वबोधनम् । **सम्बोध्यतावच्छेदकमिति** । येन रूपेण सम्बोधनपदार्थघटकेच्छायां विषयो भवति तद्रूपं सम्बोध्यतावच्छेदकम् । **इति बोध इति** । प्रवृत्तिनिवृत्त्यन्यतरप्रयोजकप्रकृतवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छोद्देश्यत्वरूपसम्बोधनविभक्त्यर्थस्याश्रयत्वसम्बन्धेन प्रकृत्यर्थे ऽन्वयः । एवमभेदेन प्रथमार्थान्विताख्यातार्थकर्त्रादेरपि । अभेदसम्बन्धेन विभक्तिप्रकृत्यर्थे ऽन्वयः । तस्य चोद्देश्यकप्रवर्तनाविषयत्वसम्बन्धेन क्रियायामन्वयः । तथा च राम मां पाहीत्यादितः प्रकृतवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छोद्देश्यताश्रययुष्मदर्थाभिन्नकर्त्रभिन्नरामोद्देश्यकप्रवर्तनाविषयं रक्षणमिति बोधः । **प्राचीनमते च** सम्बोधनप्रकृत्यर्थस्य स्वनिष्ठोद्देश्यतानिरूपकेच्छाप्रकारीभूताश्रयत्वनिरूपकबोधविषयं रक्षणमिति बोधः । तथा च तुल्यवित्तिवेद्यन्यायेन प्रकृतवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छोद्देश्यत्वलाभ इति दिक् । **शेषोबोध्य इति** । व्रजानि देवदत्तेत्यादावस्मच्छब्दार्थाभिन्नकर्त्रभेदस्य सम्बोधनप्रकृत्यर्थे देवदत्ते बाधादित्यन्यत्र विस्तरः ।

इति प्रथमा ।



**क्रियाजनकत्वमिति** । क्रियाकारकभावसम्बन्धेन क्रियान्वयित्वं कारकत्वमिति यावत् । **तत्त्वाभावादिति** । ब्राह्मणस्य पितरं पन्थानं पृच्छतीत्यादौ ब्राह्मणस्यान्वयव्यतिरेकाभावात्कारकत्वमेव नास्तीति मन्तव्यम् । ब्राह्मणपितरं पन्थानं पृच्छतीत्यादौ ब्राह्मणस्यान्वयव्यतिरेकाभ्यां नियतपूर्ववृत्तित्वसत्त्वे ऽपि दण्डत्वादेरिवान्यथासिद्धिर्बोद्धव्या । **औचित्यादिति** । अयम्भावः, क्रियायाः साध्यत्वरूपत्वेन साध्यतायाश्च जन्यताविशेषत्वात्तस्या जनकांशे नित्यसाकाङ्क्षत्वेन तस्य तत्रैवान्वयस्यौचित्यादिति । **बौद्धमिति** । बोद्धव्यमित्यत्रान्वयः । अस्मन्मते ज्ञानमात्रं प्रति विषयस्य कारणत्वेन घटोत्पत्तेः पूर्वं घटस्याभावेन तद्विषयकज्ञानानुत्पत्त्या बौद्धघटो ऽवश्यं वर्तत इति कल्पनीयत्वादिति वक्तुमशक्यम् अव्यभिचाराद्बौद्धघटस्यानुत्पादनीयत्वाचेति दिक् ।

**कर्तरि षष्ठीति** । न च प्रकृत्यर्थो ऽपि कर्ता प्रत्ययार्थोऽपि कर्त्तेति घटोघट इत्यादाविव विरूपेणोपस्थितेरभावात्कथं सामानाधिकरण्येनान्वयबोध इति वाच्यम् ? । प्राचीनवैय्याकरणमते शब्दस्यापि शाब्दबोधे भानात्कर्त्रपदवाच्यकर्त्रभिन्नो यो ऽस्पदवाच्यकर्त्तेति घटपदवाच्यघटवाच्यघटत्वावच्छिन्नलाक्षणिकघटपदार्थस्य कलशपदवाच्यघटत्वावच्छिन्नपरककलशपदार्थ इव सामानाधिकरण्येनान्वयबोधे बाधकाभावात् विभक्तिवाच्यं कर्तृत्वं विलक्षणं कर्तृपदवाच्यम् कर्तृत्वं विलक्षणमिति तन्मते बाधकाभावाच्च । वस्तुतस्तु कर्तृपदं स्वतन्त्रोपलक्षणमित्यग्रे वक्ष्यमाणत्वेन सुतरांदोषाभावः । अत एव "शताद्धीयते" इत्यादौ "अपादाने चाहीयरुहोः" इत्यत्राहीयरुहोरिति पर्युदासेन शतस्यापादानसंज्ञायामपि कर्मणि लकारः सिध्यति । तथा च कर्तुरीप्सिततममित्यस्य कर्तृवृत्तिव्यापारवाचकधातुवाच्यं यत्कर्तृवृत्तिव्यापार प्रयोज्यं फलं तदाश्रयत्वप्रकारकेच्छोद्देश्यं कारकं कर्मसंज्ञं स्यादिति सूत्रार्थः । अत्र फलाश्रयत्वं फलतावच्छेदकसम्बन्धेन विवक्षितम् । फलतावच्छेदकश्च सम्बन्धस्तत्तद्धातुभेदाद्भिन्नः । यथा ग्रामं गच्छतीत्यादावनुयोगित्व-

विशिष्टसमवायः फलतावच्छेदकः सम्बन्धः । अत एव संयोगस्य द्विनिष्ठत्वेन समवायेन ग्राम इव देवदत्ते ऽपि सत्त्वे ऽपि देवदत्तो ग्रामं गच्छतीतिवद्देवदत्त आत्मानं गच्छतीति न प्रयोगः । एवं ग्रामं त्यजतीत्यादौ प्रतियोगित्वविशिष्टसमवायः फलतावच्छेकः । "ग्रामाद्विभजते" इत्यादौ चानुयोगित्वविशिष्टसमवायः फलतावच्छेदकः । अत एवोभयोर्विभागावच्छिन्नव्यापारवत्त्वे ऽपि ग्रामं त्यजतीतिवत् ग्रामं विभजतीति न प्रयोगः । एवमन्यदप्यूह्यम् फले कर्तृनिष्ठव्यापारवाचकधातुवाच्यत्वनिवेशात्प्रयागात्काशीं गच्छतीत्यादौ प्रयोगे कर्तृनिष्ठव्यारप्रयोज्यविभागरूपफलाश्रयत्वस्य सत्त्वेऽपि न प्रयागस्य कर्मत्वम् । न च चैत्रमैत्रकर्मकविभागस्थले प्रतियोगित्वविशिष्टसमवायसम्बन्धेन चैत्रे विभागरूपफलसत्त्वे ऽपि मैत्रश्चैत्रं विभजतीति प्रयोगापत्तिरिति वाच्यम् अकर्मकधातुस्थले फलसामानाधिकरण्यस्य व्यापारे सत्वेन तत्र फलाधिकरणतायाः समवायेन विवक्षितत्वेन मैत्रवृत्तित्वविशिष्टसमवायेन फलस्य चैत्रे ऽभावेन दोषात् । परत्वात्कर्तृसंज्ञया बाधाच्च।

**व्यपदेशिवद्भावो नेति** । प्रकृते घटकघटितसम्बन्धस्य विवक्षणादिति भावः । वस्तुतस्तु सर्वत्र धातोः फलावच्छिन्ने व्यापारे फलोत्पत्त्यनुकूले व्यापारे च पृथक् शक्तिः स्वीक्रियते । तथा च स्तोकं पचतीत्यादौ क्रियाविशेषणस्य विक्लित्त्युत्पत्तिरूपफलाश्रयस्य सत्त्वात् क्रियाविशेषणानां कर्मत्वं सिध्यति । केचित्तु क्रियाविशेषणानां कर्मसंज्ञा भवतीति स्तोकं पचतीत्यादौ द्वितीयां साधयन्ति ।

**परे तु** सर्वत्र धातोः फलविशिष्टे व्यापारे शक्तिः । फलवैशिष्ट्यं च स्वसामानाधिकरण्य—स्वानुकूलत्वैतदुभयसम्बधेन । तथा च व्यापारनिष्ठविशेष्यतानिरूपितफलनिष्ठप्रकारतावच्छेदकसमानाधिकरणो घटकाधिकरणता यत्सम्बन्धावच्छिन्ना स सम्बन्धस्तादात्म्यं च फलतावच्छदकः सम्बन्धः । सामानाधिकरण्यघटकाधिकरणतानियामकश्च सम्बन्धस्तत्तद्धातुभेदादनुयोगित्वविशिष्टः समवायः, क्वचित्प्रतियोगित्वविशिष्टः समवाय इत्यादिरीत्या भिन्नोभिन्नः स्वीक्रीयत इति न क्वाप्यनुपपत्तिः । तादात्म्यस्यापि फलतावच्छेदकसम्बन्धत्वस्वीकारात् स्तोकं पचतीत्यादौ न दोष इति प्राहुः ।

**वर्तमानत्वं न विवक्षितमिति** । वर्तमानत्वं धातुविशिष्टत्वम् । वैशिष्ट्यं च स्वप्रयोगाधिकरणत्व—स्वजन्यशाब्दबोधविषयत्वेन तात्पर्यविषयीभूतक्रियाकदम्बविशिष्टत्वैतदुभयसम्बन्धेन । क्रियाकदम्बवैशिष्ट्यं च स्वघटकक्रियाप्रागभावानधिकरणध्वंसासमानाधिकरणत्व —स्वघटकक्रियाध्वंसानधिकरणप्रागभावानधिकरणत्वैतदुभयसम्बधेन अत्र स्वप्रयोगाधिकरणनिवेशात् पूर्वेद्युस्तनवर्तमानकालिकक्रियातात्पर्येणोत्तरदिने पचतीति प्रयोगो न । द्वितीयसम्बन्धदानेन काश्चन क्रिया जाताः काश्चन भविष्यन्ति काचन वर्तमानकालिकी क्रिया, तावत्क्रियातात्पर्येण पचतीति प्रयोगः सिध्यति । क्रियाकदम्बवैशिष्ट्ये प्रथमसम्बन्धदानात्पाकोत्तरकालस्य न वर्तमानत्वम् । द्वितीयसम्बन्धदानेन पाकपूर्वकालस्य न वर्तमानत्वम् । अविवक्षितमित्यस्य शक्तावविक्षितमित्यर्थः । शक्तावविवक्षा च कर्मपदशक्तावुपलक्षणम्, तत्पदवाच्यबुद्धिस्थत्ववत् । **एतेन** क्तप्रत्यये ऽन्यबोधविषयत्वेन वर्तमानकालस्याविवक्षणाद्वर्तमाने क्तो दुर्लभ **इत्ययास्तम्** ' । कर्मपदात्कर्तृनिष्ठव्यापारवाचककर्तृविषयव्यापारप्रयोज्यफलाश्रयत्वप्रकारिकेच्छोद्देश्यं कर्मपदाब्दोद्धव्यामिति । "कर्तुरीप्सिततमं कर्म" इति सूत्रबोधितशक्तौ तव्यप्रत्ययार्थविषयतायां धर्मिपारतन्त्र्येण वर्तमानकालस्य न विशेषणत्वमिति वर्तमानकालः शक्तावुपलक्षणम् । यद्यपि पूर्वं सामान्यतो वर्तमानकालपुरस्कारेण कर्तुरीप्सिततममिति शास्त्रेण शक्तिग्रहे वृत्तेऽपि पुनर्वर्तमानकालविषयकशक्तिग्रहस्य बुद्धिस्थस्तत्पदवाच्य इति शक्तिग्रहानन्तरं घटस्तत्पदवाच्य इति शक्तिग्रहवद्वर्तमानविषयकशक्तिग्रहान्तरस्यानुमानादितोपगमात्र शाब्दबोधानुपपत्तिरिति दिक् ।

**कृतवान्करिष्यतितीत्यादिसिद्धिरिति** । इदं करोतीत्यस्याप्युपलक्षणम् । प्रकृते च वर्तमानकालस्य विवक्षायां पाणिनिप्रयोगाधिकरणकालस्यैव वर्तमानत्वेन, पाणिनिपूर्वकालिकानां करिष्यतीति प्रयोगस्य, पाणिनिसमानकालिकानां पुरुषाणां करोतीति प्रयोगस्य पाणिन्युत्तरकालिकानां कृतवानिति प्रयोगस्य सिद्धत्वेऽपि पाणिनिपूर्वकाले पाणिनिसमानकाले पाणिन्युत्तरकाले च करिष्यति करोति कृतवानिति प्रयोगाणामसिध्यापत्तेः । **विषयत्वं सप्तम्यर्थ इति** । निरूपितत्वं सप्तम्यर्थ इति बोध्यम् । क्रियानिष्ठजन्यतानिरूपितजनकतावदिति यावत् ।

**अन्यत्र बध्नातीति।** अयम्भावः अत्र कर्मवृत्तिगलबिलाधःसंयोगरूपं फलं नेच्छाविषयः, किन्तु माषनाशेन द्वेष एव। न च पुष्ट्यर्थं यत्र माषेष्वश्वं बध्नाति तत्र कर्मवृत्तिगलबिलाधःसंयोगरूपफलस्य कर्तुरिच्छाविषयत्वात्कर्मसंज्ञा माषाणां दुर्वारेति वाच्यम्? कर्तृग्रहणसत्त्वेऽपि माषभक्षणेनाश्वपुष्टिर्भवतीतिच्छायाः कर्तृवृत्तित्वेनैतद्दोषवारणस्याकर्तृपदोपादानेन कर्तुमशक्यत्वात्। किं तु प्रत्यासत्तिन्यायेन कर्तृनिष्ठव्यापारवाचकधातूपात्तं यत्कर्तृनिष्ठव्यापारप्रयोज्यं फलं तदिच्छोद्देश्यस्यैव कर्मसंज्ञा भवतीति वक्तव्यत्वेन गलबिलाधःसंयोगरूपफलस्य बध्नात्यर्थत्वाभावेनैव तद्दोषस्य वारणीयत्वादिति दिक्।

**कर्मेत्येवास्त्विति।** प्रधानव्यापारवाचकधातूपात्तफलाश्रयत्वप्रकारकेच्छोद्देश्यं कर्मेत्यर्थकं कर्तुरुद्देश्यकं कर्मेत्येवं सूत्रमस्त्वित्यर्थः। पय उद्देश्यत्वं, स्वविषयकेच्छाप्रयोजकेच्छाविषयत्वम्। पयो भुनजानीतीच्छाया ओदनभोजनेच्छा जायत इति भोजनेच्छाप्रयोजकत्वं पयोविषयकेच्छायां वर्तते इति लक्षणसमन्वयः।

**अपवादः स्यादिति।** तमब्ग्रहणाभावे कर्तृवृत्तिव्यापारवाचकधातूपात्तफलाश्रयत्वप्रकारकेच्छोद्देश्यं कर्मेत्येव सूत्रतो लाभादिति स्वीक्रियते। अग्नेर्माणवकं वारयतीत्यदावग्नेः कर्तृनिष्ठव्यापारप्रयोज्यफलाश्रयत्वस्याभावात्कर्मसंज्ञा न प्राप्नोतीति तत्र वारणार्थानामिति सूत्रं सावकाशं स्यादिति वाच्यम्? कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयत्वस्य प्रयागात्काशीङ्गच्छतीत्यादौ प्रयागे सत्त्वेन तस्य कर्मसंज्ञावारणाय फले कर्तृनिष्ठव्यापारप्रयोज्यत्वनिवेशेऽपि कर्तृनिष्ठव्यापारवाचकधातूपात्तत्वनिवेशस्यावश्यकत्वेनोभयानिवेशे गौरवात्कर्तृनिष्ठव्यापारवाचकधातूपात्तफलाश्रयत्वप्रकारकेच्छोद्देश्यस्यैव कर्मसंज्ञाया वक्तव्यत्वेनाग्नेरपिकर्मसंज्ञाप्राप्तिवेति वारणार्थानामिति सूत्रानवकाशत्वस्य स्पष्टत्वात्। तथा च तमप्फलङ्कर्तृनिष्ठव्यापारप्रयोज्यत्वलाभ एव। न चाग्नेर्माणवकं वारयतीत्यादावग्निसंयोगो वारयितुरभिप्रेतो माणवकस्याप्यभिप्रेतः, स्वामिभयादिनाऽग्निसंयोगानुकूलव्यापाराभावानुकूलव्यापारोऽप्यभिप्रेतः, तदाग्निसंयोगाश्रयत्वप्रकारकेच्छोद्देश्यत्वादग्नेः कर्मत्वमग्निसंयोगानुकूलव्यापाराभावाश्रयत्वप्रकारकेच्छोद्देश्यत्वान्माणवकस्य कर्मत्वमित्येव रीत्यैव कर्मत्वमुपपादनीयम्। तच्च न संभवति यदा माणवको ऽग्निसंयोगाश्रयो भवत्वितीच्छा नास्ति तदाग्नेः कर्मसंज्ञाया अप्राप्त्या तादृशस्थले वारणार्थानामिति सूत्रं सावकाशमिति वाच्यम्? माणवकोऽग्निसंयोगाश्रयो भवत्वितीच्छाया अभावेऽपि "तथायुक्तञ्च" इत्यनेन तत्र कर्मसंज्ञायाः प्राप्तेः सत्त्वान्निरवकाशत्वस्य स्पष्टत्वात्।

तथाहि—"तथायुक्तञ्च" इति सूत्रस्यापि कर्तृवृत्तिव्यापारवाचकधातूपात्तफलाश्रयः कर्मेत्येव सूत्रार्थ इति कर्मसञ्ज्ञाप्राप्तिस्तत्र स्पष्टैवेति। तमप्सत्त्वे तु कर्तृवृत्तिव्यापारप्रयोज्यत्वस्य फले ऽभावान्न दोषः।

**व्यापारानुकूलो व्यापाराभाव इति।** स्यादेतत्? व्यापानुकूलत्वं व्यापारे बाधितम्। अत्यन्ताभावस्यान्योन्याभावस्य च नित्यत्वात्। प्रागभावस्याप्युत्पत्त्यभावात्तदनुकूलत्वं बाधितम्। व्यापारे प्रध्वंसाभावानुकूलत्वसम्भवे ऽपि सोऽभावः प्रकृते गृहीतुं न शक्यते, उत्पन्नस्यैव ध्वंसात्पूर्वमग्निसंयोगस्य माणवकेऽवश्यमपेक्षितत्वादिति चेन्नैवम्। अभावानुकूलत्वं प्रकृते नाभावजनकत्वं किंत्वभावप्रयोजकत्वम्। तच्च तादृशाभावप्रयोजकत्वाच्च तत्प्रयोजकमित्युच्यते। यथा घटाभावप्रयोजकत्वं दण्डाभावे। केचित्त्वत्राभावपदेन प्रागभाव एव गृह्यते। तत्प्रयोजकत्वं च प्रागभावजन्यकार्योत्पत्त्या प्रागभावनाशसामग्रीविघटनद्वारा प्रागभावसत्ताप्रयोजकत्वमित्याहुः॥

**गेहमित्यादीति।** न च धात्वर्थः फलं-व्यापारश्च। तत्र फलाश्रयस्य कर्मसंज्ञायां व्यापाराश्रयस्य कर्तृसंज्ञया बाधादगत्या कर्तृकर्मद्वारा धात्वर्थाधिकरणस्यैवाधिकरणसंज्ञा भवतीति कर्मपदानुवृत्त्यैव सिद्धे कर्मग्रहणं व्यर्थमिति वाच्यम्? कालिकादिसम्बन्धेन फलाश्रयस्य, कर्मसञ्ज्ञाया, एवं कालिकादिसम्बन्धेन व्यापाराश्रयस्य कर्तृसंज्ञाया वारणाय च फलतावच्छेदकसम्बन्धेन फलाश्रयस्य कर्मसंज्ञा, व्यापारतावच्छेदकसम्बन्धेन व्यापाराश्रयस्य कर्तृसंज्ञा भवतीत्यवश्यं वक्तव्यत्वेनैवमधिकरणसंज्ञाया अपि फलतावच्छेदकसम्बन्धेन व्यापारतावच्छेदकसम्बन्धेन च धात्वर्थाधारस्यैवाधिकरणसंज्ञा भवतीति कालिकादिसम्बन्धेन धात्वर्थाधारस्याधिकरणसंज्ञा वारणायावश्यं वक्तव्यत्वेन कर्मपदानुवृत्तौ गेहं प्रविशतीत्यादौ गेहरूपाधारस्यैवाधिकरणसञ्ज्ञा भवतीति सूत्रे कर्मपदस्यावश्यकत्वात्। न च "धातोः कर्मणः" इति सूत्रारम्भसामर्थ्येनैव कर्तृकर्मद्वारा क्रियाधारस्य कर्मसञ्ज्ञा भवतीति पुनरपि तमप्ग्रहणं व्यर्थमिति वाच्यम्? आत्मानं बुध्

त्सतीत्यादौ साक्षात् क्रियाधारस्य गेहं प्रविशतीत्यादौ गेहस्यैवात्मनः सत्त्वात्तत्र "धातोः कर्मण" इति सूत्रस्य चारितार्थ्येनैतत्सूत्रस्य वैय्यर्थ्याभावात् ॥

**क्रियाकारकभाव इति** । अयम्भावः, एकत्वविशिष्टकर्मणि बुबोधयिषिते द्वितीया भवतीति "कर्मणि-द्वितीया" इति सूत्रार्थः । तथा च तत्र कर्मरूपार्थस्य प्रधानत्वात्तस्यान्येनाभिधाने तद्बोधिका द्वितीया न भवत्यर्थनिबन्धनकार्यविषयप्रधानाप्रधानन्यायेन प्रधानार्थस्योक्तत्वे उक्तार्थानामिति न्यायः प्रवर्तते इत्यप्रधानसंख्यारूपस्यान्येनाभिधाने ऽपि तद्बोधिका विभक्तिर्न भवतीत्यनभिहितसूत्रं व्यर्थमित्युक्तार्थानामिति न्यायस्याप्यर्थनिबन्धनकार्यविधायकत्वेन तत्र प्रधानाप्रधानन्यायप्रवृत्तौ बाधकाभावात् ।

**विशेषणात्सोति** । अस्मिन्पक्षे कर्मणि द्वितीयेत्यस्य क्रियाकर्मभावेतरसम्बन्धाघटितसम्बन्धेन फले परम्परयान्वयविवक्षायां द्वितीयेति सूत्रार्थः । अभेदस्य संसर्गत्वाभावात् । क्रियाकर्मभावेतरसम्बन्धाघटितपरम्परया "कटं भीष्मं कुरु"इत्यादौ भीष्मादेरप्यन्वयात्कर्मसंज्ञा सिध्यतीति ।

**विशेषणविशेष्यभावेनेति** । अयं भावः । कटं भीष्म कुर्वित्यादावभीष्मस्यापि कटस्य सम्भवादकटस्य च भीष्मस्य सम्भवादुभयोरुत्पत्तिर्बोध्यते । तत्र भीष्मपदार्थस्य धर्मिपारतन्त्र्येण कटे चाभेदान्वयः ।

**भावनान्वयव्युत्पत्तिरिति** । तत्त्वं च स्वान्वयित्वे सति स्वानन्वय्यनन्वयित्वम् । **कृतः सुन्दरः कट" इति** । नन्वेवमजा ग्रामं नीयत इत्यादौ ग्रामपदोत्तरद्वितीयानुपपत्तिः । स्वप्रकृत्यर्थंप्रति यस्य यस्य कर्मत्वं तस्य सर्वस्यापि कर्मतामाहुरित्युक्तत्वादिति वाच्यम् । स्वप्रकृत्यर्थेत्युक्त्या यादृशव्यापारप्रयोज्यफलाश्रयरूप कर्मत्वं यस्य यस्य तत्सर्वमाहुतुरित्यर्थेनादोषात् । तथा च प्रकृते अजाग्रामयोरेकफलाश्रयत्वरूपकर्मत्वस्याभावेनाजारूपकर्मण उक्तत्वेऽपि ग्रामकर्मण अनुक्तत्वान्नीधातोः संयोगानुकूलव्यापारानुकूलव्यापारार्थकत्वादभीष्मः कटः क्रियते इत्यादौ तु कटभीष्मयोरुभयोरप्युत्पत्तिरूपफलाश्रयत्वेनैव कर्मत्वमित्युभयोरप्यभिहितत्वम् ।

**षष्ठींवारयितुमिति** । अयम्भावः, संसर्गतया भासमानस्यापि प्रकारतया भासमानत्वे प्रातिपदिकार्थत्वसम्भवात्सर्वत्रैव प्रथमायाः प्राप्त्या षष्ठी निरवकाशा, तस्यास्त्वषष्ठ्यर्थैकशतसम्बन्धघटकसम्बन्धाविवक्षायां षष्ठी भवति, अन्यस्य प्रथमेत्यस्य प्रथमेत्यवश्यं व्यवस्थाऽऽदर्तव्या । तथा चौपगव इत्यादौ निरूप्यनिरूपकभावस्य षष्ठ्यर्थत्वात्षष्ठी प्राप्ता तां बाधितुमनभिहिताधिकार ।

**इति बोध्यमिति** । अयमर्थः, प्रातिपदिकार्थपदेन च प्रकारतया भासमानपदार्थ एव गृह्यते । षष्ठी शेष इत्यत्र शेषपदार्थश्चोपयुक्तादन्यः । ततश्चौपगव इत्यादौ निरूप्यनिरूपकभावस्य प्रकारतया भानेन प्रथमाविभक्त्युपयोगित्वाभावाच्छेषत्वाभावेन षष्ठ्याः प्राप्तिरेव नेति ॥

**सामानाधिकरण्यस्याभावादिति** । अत एव सुन्दरीप्रमेयः पुत्र इत्यादौ न पुंवत्त्वम् । अन्यथा सुन्दर्यामपि प्रमेयत्वादिसामानाधिकरण्यस्य सत्त्वात्पुंवद्भावो दुर्वारः स्यात् । **प्राप्तिकर्मानन्दकर्तेति बोध इति** । अत्र प्राप्तानन्द इत्येव विग्रहवाक्यम् । प्राप्तानन्द इति समासस्येति विग्रहवाक्ययोः समानाकारक एव बोधः । यामित्यन्यपदार्थ इतिवक्तस्य विग्रहघटकत्वम् । एतेन प्राप्तानन्दो ऽयमित्यत्र द्वितीया न स्यादिति शङ्काभासो निरस्तः । **तिङाभिधान्न द्वितीयेति** । परे तु इष्यते इत्यत्रान्वयविवक्षायां न द्वितीया । वर्धनादावन्वयविवक्षायां तु द्वितीया भवत्येव । उभयत्रान्वयविवक्षायां तु प्रधानक्रियानुरोधिनी प्रथमैव । एवमोदनं पक्त्वा भुज्यत इत्यत्राप्यूह्यम् । अयमेवार्थः "प्रधानमनुरुध्यत" इति कारिकायामप्याहुः ।

**न द्वितीयेति** । वस्तुतस्त्वय प्रयासो निष्फलः । इति शब्दस्य बुद्धिस्थत्वेपलक्षितत्वात्तत्तधर्मावच्छिन्ने शक्तत्वेन प्रकृते नारद इत्यस्य तात्पर्यग्राहकत्वेनेति शब्दार्थनारदस्य कर्मसंज्ञायामपि तस्याव्ययत्वेन तदुत्तरोत्पन्नद्वितीयाया लुप्तत्वात् । **फलाश्रयत्वरूप इति** । न च यादृशतृणकर्मकस्पर्शः प्रसिद्धो न भवति तत्तात्पर्येण योग्यताश्रयादिना ग्रामं गच्छति तृणं तृणं स्पृशतीति प्रयोगो जायेत, स इदानीं न स्यात्तृणे फलाश्रयत्वस्याभावादिति वाच्यम् । फलान्वयित्वेन विवक्षायां कर्मसंज्ञा भवतीत्यर्थेनादोषात् । अत एव ग्रामं न गच्छतीत्यादौ ग्रामफलाश्रयत्वस्याभावेऽपि फलान्वयित्वेन विवक्षायाः सत्त्वात्कर्मसंज्ञा सिध्यति । एवं सर्वत्र कारकप्रकरणे बोध्यम् । **अनवकाशं स्यादिति** । अग्नेर्माणवकं वारयतीत्यादावग्नेरपि माणवक वृत्तिव्यापारप्रयोज्यफलाश्रयत्वात् तथा युक्तमिति सत्त्वे च प्रकृतधात्वर्थव्यापारप्रयोज्यप्रकृतधात्वर्थफला-

न्वयिन एवानेन कर्मसंज्ञाविधानान्न वारणार्थानामित्यस्य निरवकाशत्वमिति भावः।

**तथा युक्तं किमिति**। अयम्भावः, अनीप्सितमित्येव सूत्र्यताम्। यद्यनीप्सितमित्यस्येप्सितभिन्नमित्यर्थः क्रियेत, तर्हि करणादिसंज्ञाभिरस्या संज्ञाया बाधः स्यात्। करणमात्रविवक्षायामित्यग्रिमग्रन्थासङ्गतिश्च। तस्मादनीप्सितमिति पर्युदासान्नञिव युक्तन्यायेनेप्सितत्वव्यापकद्वेषविषयत्वाभावेनैव सादृश्यं ग्राह्यम्। तथा च विषेणौदनं भुङ्क्ते इत्यादौ विषस्य कर्मसंज्ञा, विषस्य द्वेषविषयत्वात्। **केचित्तु**। चोरान्पश्यतीत्यादौ चोराणामपि द्वेषविषयत्वेन कर्मसंज्ञाया अप्राप्त्या अयं ग्रन्थो ऽरुचिग्रस्त इति वदन्ति। परे तु प्रकृतधातूपात्तकर्तृवृत्तिव्यापारप्रयोज्यफलसम्बन्धित्वप्रकारकज्ञानविषयताश्रयत्वेन विवक्षायां कर्मसंज्ञा भवतीति सूत्रार्थः। तथाऽऽप्तुमिष्टतमं कर्मेत्येव सूत्रमस्तु। तथा च न कुत्रापि दोष इत्यरुचेराह—**प्रयागत्काशीमिति** लापयन्ति। वैय्यकरणमते चोद्देश्यत्वमपि शाब्दबोधे भासते। अत एव "कर्तुरीप्सिततमं कर्म" "तथा युक्तं चानीप्सितम्" इति सूत्रद्वयकरणं सङ्गच्छते। अत एवागच्छन् काशीं गतः प्रयागं गच्छन् काशीं गत इत्यादौ च काश्यास्तथा युक्तमिति कर्मसंज्ञा, प्रयागस्य कर्तुरिति कर्मसंज्ञेति सर्वेष्टासिद्धिरिति दिक्। **तत्तद्रूपेणाभासमानमिति**। तत्तद्रूपपुरस्कारेणाभासमानमित्यर्थः। **पञ्चम्यायेवेति**। न चापादानत्वेन विवक्षायां यदि पञ्चम्येव तदा "अपादानमुत्तराणि कारकाणि बाधन्ते, गां दोग्धि पय" इति भाष्यविरोध इति वाच्यम्? अपादानत्वेन कर्मत्वेन चेत्युभयविवक्षायां परत्वात्कर्मसंज्ञेति भाष्यतात्पर्येणापादानत्वमात्रविवक्षायां कर्मसंज्ञाया अप्राप्त्या पञ्चम्येवेति ग्रन्थसङ्गतेः। **पृच्छत्यर्थ इति**। वस्तुतस्तु ज्ञानानुकूलशब्दप्रयोगानुकूलकृतिविषयेच्छाज्ञानानुकूलो व्यापारः। प्रथमज्ञाने धर्मविषयकत्वान्वयः। कृतौ गुरुवृत्तित्वान्वयः। एतेनोदासीनस्यापि जिज्ञासाविषयार्थज्ञानं जातं तत्रोदासीनं पृच्छतीत्यादि न प्रयोगः, जिज्ञासाज्ञानानुकूलः पृच्छतेरर्थ इति गदाधरोक्तमपि प्रत्युक्तम्। सिद्धेरिच्छाम् प्रति प्रतिबन्धकत्वेन तादृशस्थलेपृच्छतीति प्रयोगानापत्तेः। **ज्ञानानुकूलशब्दप्रयोग इति**। ज्ञानानुकूलशब्दप्रयोगानुकूलकृतिरर्थ इति बोध्यम्। **गत्यर्थानामेवेति**। न च नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं च यद्रूपं तद्रूपावच्छिन्नस्यैव नियमशरीरकल्पनमिति सिद्धान्तात्प्रकृते नियामकशास्त्रीयोद्देश्यतावच्छेदकगत्यर्थकधातुत्वव्यापकं सकर्मकधातुत्वं न भवति, अविवक्षितकर्मकधातौ गत्याद्यर्थकत्वस्य सत्त्वेन सकर्मकत्वस्याभावादिदमसङ्गतमिति वाच्यम्। कर्मान्वययोग्यार्थकधातूनां चेद् गत्याद्यर्थकानामेवेति नियमशरीरकल्पनेनादोषात्।

**सकर्मकाणां चेदिति**। कर्मान्वययोग्यधातूनां चेदित्यर्थः। इति वदन्तीति।

**परे तु** "गतिबुद्धीति" सूत्रे अकर्मकपदसामर्थ्यादत्रापि सूत्रे अकर्मकपदेनाविवक्षितकर्मकाणां ग्रहणं न भवति, तेनाविवक्षितकर्मकेभ्यो भावे नकारककृतपूर्वीकटमित्यादिभाष्यकैय्यटाभ्याम् "अधीगर्थेति" सूत्रस्थकर्मणः शेषत्वविवक्षया अकर्मकत्वेन "मातुः स्मर्यते इत्यत्र भावे ल" इति भाष्येणाकर्मकाधिकारे शृदृश्यादिभ्य आत्मनेपदविधानेन न विरोधः। अत एव प्रकृतसूत्रे भाष्ये "कालकर्मणामुपसख्यानं कर्तव्यं, न कर्तव्यं, न च केचित्कालभावाध्वभिरकर्मकाः, तत एव विज्ञास्यामः क्वचिद्येऽकर्मका" इति भाष्यं सङ्गच्छते। लुनातेर्निवृत्तप्रेषणाण्णिचि लावयति केदारं देवदत्त इति णेरणाविति सूत्रे कैय्यटोदाहरणं चिन्त्यमेवेत्याहुः। **भाष्यप्रयोगादिति**। वस्तुत 'अभिनिविश' एतदानुपूर्वी यत्र तत्रैवेदं सूत्रं प्रवर्तेत इति कल्पनेनादोषात्।

**सम्बन्धविशेषं द्योतयतीति**। तत्त्वं च क्रियानुयोगिकसम्बन्धद्योतकत्वम्। **इतिबोध इति**। वस्तुतस्तु जपोत्तरकालिकवर्षणमिति बोधः। वर्षणे जपोत्तरकालिकत्वज्ञाने जपज्ञाप्यत्वमनुमीयते। **वृक्षोलक्षणमिति**। वस्तुतस्तु वृक्षं प्रति विद्योतते विद्युदित्यादौ वृक्षसमानदेशिकं विद्युद्विद्योतनमिति बोधः। अत एव क्व विद्योतते विद्युदिति प्रश्नानन्तरं वृक्षं प्रति विद्योतते विद्युदित्युत्तरवाक्यं सङ्गच्छते। तथा च यत्र यत्र लक्ष्यलक्षणभावस्तत्र कालघटितसम्बन्धेन देशघटितसम्बन्धेन वाऽन्वयो बोध्यः। **फलान्तरमपीति**। वस्तुतस्तु कर्मप्रवचनीयसंज्ञाया द्वितीया न फलम्। न च कर्मत्वेनाविवक्षायां द्वितीयाफलं भवितुमर्हतीति वाच्यम्? यस्य पदस्य द्विर्वचनं चिकीर्षितं तदर्थतावच्छेदकावच्छिन्नयद्रूपावच्छिन्नसंसर्गेण तद्रूपावच्छिन्नान्वययद्रूपावच्छिन्ने अन्वयो भवति तद्रूपावच्छिन्नस्य तत्सम्बन्धावच्छिन्नव्यापकतासम्बन्धेन

विवक्षायामेव नित्यवीप्सयोरित्यनेन द्विर्वचनविधानात्कर्मत्वेनाविवक्षायां द्विवचनस्यैवाप्राप्तेः। अत एव वृक्षो वृक्षः प्रति सिच्यत इत्यादौ कर्मप्रवचनीययुक्तद्वितीया न भवति। न च प्रतिवृक्षमित्यादौ सामर्थ्याभावात्समासो न स्यादिति वाच्यम्? प्रतेर्वीप्सावाचकत्वेन सामर्थ्यस्य सत्त्वात्। न च "किमर्थं पुनरिदमुच्यते? न चोपसर्गसंज्ञा बाधनार्थं, क्रियायोगाभावादित्युक्तम्, द्वितीयाविभक्तिसंपत्त्यर्थमिदं सूत्रम्" इति भाष्यविरोध इति वाच्यम्? तस्य भाष्यस्य लक्षणाद्यर्थविषयकत्वेन विरोधाभावात्। **उचितादधिकानुष्ठानमिति**। सम्भाविताधिकानुष्ठानमित्यर्थः। **उत्कटकोटीति**। उत्कटत्वं च विषयतागतो धर्मविशेष इत्यर्थः।

॥ इति द्वितीया॥

---

**कर्तृप्रत्ययसमभिव्याहार इति**। न च स्वतन्त्रलक्षणे कर्तृत्वं पतितं कर्तृत्वलक्षणे च स्वातन्त्र्यमित्यन्योन्याश्रय इति वाच्यम्। तृच्प्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वे सति स्वातन्त्र्यमिति परिष्कारेणादोषात्। अनुकूलत्वसम्बन्धानच्छिन्नप्रकारतानिरूपितविशेष्यताश्रयत्वं वा तत्त्वमित्यदोषाच्च। **जटाभिस्तापसो ज्ञाप्यत इति**। वस्तुतस्तु वैशिष्ट्यमेव तृतीयार्थः। जटावैशिष्ट्यज्ञानेन तापसत्वमनुमीयत इति जटातापसत्वयोर्ज्ञाप्यज्ञापकभावोऽपि ध्वन्यते। **इत्याहुरिति**। वस्तुतश्चिन्त्यमिदम्, कमण्डलुपाणिशब्दात्तृतीयां बाधित्वोपपदविभक्तेरिति द्वितीयाया एव प्रवृत्तेः। तस्मात्कैय्यटोक्तमेव युक्तम्।

न चानुर्लक्षण इति सूत्रस्थभाष्यविरोधस्तत्र हि—"सकृदसौ कमण्डलपाणिश्छात्रो दृष्टस्तस्य तदेव लक्षणम्" इत्युक्तम्। भवदुक्तरीत्या तु स एव लक्षणं स्यादिति वाच्यम्? सर्वनाम्नामुद्देश्यप्रतिनिर्देश्यलिङ्गबोधकत्वेन प्रकृते लक्षणशब्दस्य नपुंसकत्वेन तदेवेति कथनस्य युक्तत्वात्। न च कमण्डलुपदादुत्पन्नविभक्तेस्तन्मध्यपतितन्यायेन तृतीयाविशिष्टस्य समासग्रहणेन ग्रहणाल्लुकि न दोष इति वाच्यम्? स्वघटकाव्यवहितपूर्वत्व—स्वघटकाव्यवहितोत्तरत्व-स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वैतत्त्रितयसम्बन्धेन यत्किञ्चित्समुदायविशिष्टत्वरूपतन्मध्यपतितत्वस्याभावेन तृतीयाविशिष्टस्य समासग्रहणेन ग्रहणाल्लुको ऽप्राप्तेः। न च नरम्मन्य इत्यादौ त्वदुक्ततन्मध्यपतितत्वस्याभावेन "लुग्विधानसामर्थ्यादमोलुङ्न भवति" इति भाष्यविरोध इति वाच्यम्? स्वघटकाव्यवहितपूर्वत्व—स्वघटकाव्यवहितोत्तरत्व—स्वनिष्ठोद्देश्यदलीयविषयतानिरूपितविधेयताश्रयत्वैतत्त्रियसम्बन्धेन स्वविशिष्टत्वं तन्मध्यपतितत्वमिति परिष्कारेण तद्विरोधाभावात्। तथा हि—"इच एकाच" इति सूत्रे "उत्तरपदे" इत्यधिकारसत्त्वेनोत्तरपदशब्दस्य समासचरमावयवे रूढत्वात्समासवैशिष्ट्यं चाभिवर्तत इति तन्मध्यपतितन्यायेन लुक् प्राप्नोतीति सामर्थ्यात् लुङ्न भवतीति भाष्यसङ्गतेः।

इति तृतीया॥

---

**अभिलषते रुच्यर्थत्वाभावादिति**। अयम्भावः, यद्यप्यभिलषते रोचतेश्च प्रीत्यनुकूलव्यापार एवार्थस्तथाप्यभिपूर्वकलषधातुस्थले विषयता फलतावच्छेदकः सम्बन्धः इति फलताच्छेदकविषयतासम्बन्धेन प्रीतिरूपफलाश्रयत्वाद्भक्तेः कर्मत्वम्। रुच्धातुस्थले च समवायः फलतावच्छेदकः सम्बन्ध इति फलतावच्छेदकसमवायसम्बन्धेन प्रीतिरूपफलस्य भक्तावभावात्। हरये रोचते इत्यादौ भक्तेर्न कर्मत्वम्। **फलाश्रयत्वेन विवक्षायामिति**। स्पृहधातोरिच्छानुकूलव्यापारे इच्छाप्रयोजकव्यापारे च शक्तिः। यदा प्रयोजकव्यापारः स्पृहयतेरर्थस्तदा पुष्पेभ्यः स्पृहयतीति अनुकूलत्वसम्बन्धावच्छिन्नप्रकारताश्रयत्वरूपफलत्वस्येच्छायामभावेन कर्मसंज्ञाया अप्रवृत्तेः। यदा चेच्छानुकूलव्यापारः स्पृहेरर्थस्तदा पुष्पाणि स्पृहतीति। **यद्वा** विषयताख्येच्छानुकूलोव्यापारः स्पृहेरर्थस्तथा च विषयतायां पुष्पवृत्तित्वान्वयविवक्षा यदा तदा पुष्पेभ्यः स्पृहयतीति यदेच्छारूपफले ऽन्वयविवक्षा तदा पुष्पाणि स्पृहयतीति। **यद्वा** इच्छानुकूलव्यापार एव स्पृहेरर्थः। विषयता च फलतावच्छेदकः सम्बन्धः। तथा च विषयतासम्बन्धेन फलाश्रयत्वं यदा विषयतासम्बन्धेन फलाश्रयत्वं यदा विवक्षितं तदा पुष्पाणि स्पृहयतीति, फलताच्छेदकसमवायसम्बन्धेन फलाश्रयत्वं यदा विवक्षितं तदा कर्मसंज्ञाया अप्राप्त्याऽनेन सम्प्रदानसंज्ञायां पुष्पेभ्यः स्पृहयतीति।

**इति चतुर्थी॥**

---

**वृक्षं त्यजतीति ।** त्यजधातोर्विपूर्वकभजधातोश्च विभागानुकूलव्यापारार्थकत्वेऽपि त्यजधातुविषये प्रतियोगित्वविशिष्टसमवायः फलतावच्छेदक इति वृक्षस्य फलतावच्छेदकसम्बन्धेन फलानाश्रयत्वात्कर्मसंज्ञाया अप्राप्त्या ऽपादानसंज्ञायां वृक्षाद्विभजत इति ।

**इति पञ्चमी ॥**

---

**षष्ठी शेषे ।** न चानेन प्रतियोगिवाचकादिवानुयोगिवाचकादपि षष्ठी स्यात् "राज्ञः पुरुषः" इत्यादौ स्वस्वामिभावसम्बन्धस्योभयनिष्ठत्वेन पुरुषपदादपि षष्ठ्या दुर्वारत्वादिति वाच्यम् ? उपपदविभक्तेरिति न्यायेन प्रथमया षष्ठ्या बाधात् । प्रथमाया अपि कारकविभक्तित्वस्वीकारेणादोषात् । कारकविभक्तित्वं च प्रधानीभूतार्थनिमित्तकविभक्तित्वमिति राज्ञः पुरुषस्य धनमित्यादौ पुरुषपदाद्धनानुयोगिकसम्बन्धबोधिकैव षष्ठी न तु पुरुषानुयोगिकसम्बन्धप्रतियोगिका । अत एव "सहयुक्ते ऽप्रधाने" इत्यत्राप्रधानग्रहणप्रत्याख्यानं सङ्गच्छते । अन्यथा पुत्रेण सहागतस्य पितुर्धनमित्यादौ पितृपदोत्तरतृतीयावारणाय षष्ठ्याः कारकविभक्तित्वाभावात्तृतीयावारणायाप्रधानग्रहणस्यावश्यकत्वेन तदसङ्गतिस्पष्टैवेति दिक् । **दारुणाध्यायक इति ।** "तृजकाभ्यां कर्तरि" इति । निषेधात्कथं षष्ठीसमास इति न च वाच्यम् ? कर्तृसाहचर्येण सामानाधिकरण्येनान्वयिकर्मषष्ठ्या एव तेन निषेधात् । प्रकृते च दारुणं यथा भवति तथा ऽध्यापक इति षष्ठ्या भेदसम्बन्धान्वयबोधकत्वाभावात् । एवं कर्तृकर्मणोरित्यत्रापि कर्तृसाहचर्याद्भेदसम्बन्धेनान्वयविवक्षायामेव तेनापि षष्ठी भवतीति प्रकृते तेन षष्ठ्यपि न । **वाक्ये मलोपश्चेति ।** चिन्त्यमिदम्, तवापि मते वाक्ये एव मलोपप्रवृत्त्या दोषस्य दुरुद्धरत्वात् । **वैय्यधिकरण्यादिति ।** एकार्थीभावादित्यर्थः । **तद्धितान्तशक्तिविषयक्रियाया इति ।** अत्र शक्तिपदेनानुभविकी शक्तिर्गृह्यते, उपस्थितिपदेन च शाब्दबोधः । तथा च तद्धितान्तपर्याप्तानुभविकशक्तिग्रहमात्रप्रयोज्यशाब्दबोधक्रियायाः कर्तरि कर्मणि च मा भूदित्यर्थः । **कृदन्तशक्तिरिति ।** कृदन्तपर्याप्तानुभविकी शक्तिरित्यर्थः । **उपस्थितिविषय इति ।** शाब्दबोधविषय इत्यर्थः । तथा च "कर्तृकर्मणोः कृति" इत्यस्य कर्मबोधकपदकृदन्तोभयपर्याप्तकर्मान्वयबोधोपयिकाऽऽकाङ्क्षाप्रयोज्यशाब्दविषयीभूतक्रियाकर्तृकर्मणोः षष्ठीति सूत्रार्थः । कृतपूर्वीकटमित्यादावन्वयबोधोपयिकाकाङ्क्षापर्याप्तिः कृतपूर्वीत्येतत्समभिव्याहृतकटमित्यन्त इति न तत्रानेन षष्ठीति । न च कृतपूर्वीकटमित्यादौ "न लोकेति" निषेधादेव षष्ठ्या अप्राप्तौ कृतीति व्यर्थमिति वाच्यम् ? कर्मबोधकपदनिष्ठान्तोभयपर्याप्ताकाङ्क्षाप्रयोज्यशाब्दबोधविषयीभूतक्रियाकर्तृकर्मणोः षष्ठी न भवतीति तस्याप्यर्थेन तन्निषेधस्यात्राप्राप्तेः । **उभयोः प्रयोग एवेति ।** अकर्मकाणां कर्तरि कृति कर्मणि चेत्येव सिद्धे द्विवारं कर्मग्रहणात्प्रयोगग्रहणाच्चायमर्थो लभ्यत इति बोध्यम् ॥

**इति षष्ठी ॥**

---

**अनुभावादिति ।** फलतावच्छेदकसम्बन्धेन फलाधारस्य व्यापारतावच्छेदकसम्बन्धेन व्यापाराश्रयस्य चाधिकरणत्वस्यानुभवसिद्धत्वात्कालिकादिसम्बन्धेन क्रियाधारस्याधिकरणसंज्ञा न भवतीति । **ज्ञापकत्वं च सप्तम्यर्थ इति ।** वस्तुतस्तु गोषु दुह्यमानासु गत इत्यादौ गोदोहनसमानकालिकं गमनं, गोषु धोक्ष्यमाणासु गत इत्यादौ गोदोहपूर्वकालिकं गमनं, गोषु दुग्धासु गत इत्यादौ गोदोहनोत्तरकालिकं गमनमित्येव बोधः । ज्ञाप्यज्ञापकभावस्त्वार्थः । अत एव कदा गत इति प्रश्नस्य इमान्युत्तरभूतानि वाक्यानि । **इति बोध इति ।** वस्तुतस्तु नृणां नृषु वा द्विजः श्रेष्ठ इत्यादौ श्रेष्ठपदार्थतावच्छेदकश्रैष्ठ्ये नृपदार्थनृसमुदायस्य स्वघटकवृत्तित्व—स्वघटकद्विजेतरयावद्वृत्तित्वैतदुभयसम्बन्धेनान्वयः । अत एव द्विजमुद्दिश्य निरुक्तोभयसम्बन्धेन न समुदायविशिष्टं श्रैष्ठ्यं विधीयत इत्युद्देश्यविधेयभावोऽपि सङ्गच्छते । मूलोक्तं तु न युक्तम् । उद्देश्यविधेयभावानुपपत्तेः । श्रैष्ठ्यमित्यस्य वैयर्थ्यापत्तेश्च । पुरुषोत्तम इत्यादौ "न निर्धारणे" इति निषेधशङ्कापरकैयटग्रन्थस्य स्वग्रन्थस्य चासङ्गत्यापत्तेश्च । एतन्मते उभयत्वे ऽन्वयाभावेनासामर्थ्यादेव समासाप्राप्त्या निषेधशङ्कायां असङ्गतत्वात् । **अभेद एवेतीति ।** यस्मात्पञ्चमीविभक्ते इत्यनेन पञ्चमी विभक्तिः कर्तव्या तत्प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकभेदे पञ्चमी भवतीत्यर्थः । **नक्षत्रे च लुपि ।** अत्र नक्षत्रपदं नक्षत्रयुक्तचन्द्रमसः परम् ॥

**इति सप्तमी ॥**

---

